# अथर्ववेदः (शौनकीयः)

स च

पदपाठेन च श्रीसायणाचार्यकृतभाष्येण च पाठविमर्शोपयिकेन
पाठभेदादिटिप्पणेन च संयोज्य
भीमदेव-विद्यानिधि-मुनीश्वरदेव-सायुज्यभाजा

**विश्वबन्धुना**

**संपादितः**

तत्र चाऽयम् ६–१० काण्डात्मकः

**२यो भागः**

होशिआरपुरम्

**विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्**

२०१८ वि.



# ATHARVAVEDA (ŚAUNAKA)

*With*

**The Pada-pāṭha and SĀYAṆĀCĀRYA'S Commentary**

**EDITED**

**And annotated with text-comparative data from original manuscripts and other Vedic works**

*By*

**VISHVA BANDHU**

*In collaboration with*

BHIMDEV, VIDYĀNIDHI AND MUNISHVARDEV

PART II (Kāṇḍas VI—X)

H O S H I A R P U R

**Vishveshvaranand Vedic Research Institute**

1961

# शोधपत्रम्

## The Corrigenda

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६४३ | | पञ्चमं | षष्ठं |
| " | १८ | सुतोत्थितस्य | सुतोत्थितः |
| ६५४ | ३ | उपगच्छसि | उपागच्छसि |
| ७३५ | १ | वान् अस्मि | अस्मि |
| ७४२ | १८ | श्रूष्टणु° | श्रुष्टणु° |
| ७६१ | ७ | °आयिनं: | °आयिनंः |
| ८२२ | ४ | ययम् | यूयम् |
| ८४६ | २५ | वृहामो | वृंहामो |
| ८७८ | ३० | न्यायम् | न्याय्यम् |
| १०४० | १९ | ईपद्रु:° | ईषद्रुः° |
| १०४९ | २६ | मुको. | मूको. |
| १०५३ | १४ | परिवृक्ता | परिंवृक्ता |
| ११०० | ९ | यतः | यतंः |
| १११३ | ७ | °पृथिवी | °पृथिवी |
| १११४ | २४ | अस्म | अस्मै |
| " | २५ | प्रजाऽपातः | प्रजाऽपतिः |
| ११३१ | १३ | क्रावः | क्रविः |
| ११३८ | ५ | अंवसे | अवसे |
| " | ९ | तुभ्यम् | तुभ्यंम् |
| ११४६ | १३ | प्रच्यवन्त | प्रच्यवन्त |
| ११७२ | ७ | अन्तारक्षम् | अन्तरिक्षम् |
| ११७६ | ११ | रूपाणाम् | रूपाणाम् |
| ११८१ | १६ | °तत्तां° | °तत्ता° |
| ११८२ | १५ | ब्रह्मणे° | ब्रह्मणे° |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२१४ | १५ | आहूः | आहुः |
| १२२१ | ६ | °इवं | °इव |
| १२२२ | १० | स्कन्धान् पु° | स्कन्धान् कर्ति पु° |
| १२२७ | १४ | अयोध्या | अयोध्या |
| १२२८ | १७ | अयम् | अयम् |
| १२३६ | १० | °जेन्याऽ | °जेन्या |
| १२३८ | २१ | प्रकामति | प्रकामति |
| १२५१ | १२ | खदिरम् | खदिरम् |
| १२५२ | १० | स्वं: | स्वःऽ |
| " | १९ | बृहस्पतिं° | बृहस्पति° |
| १२५३ | २१ | °घृसः | °सृप्रः |
| १२५७ | १२ | अस्य | अस्य |
| १२५८ | ३ | का र्ध° | कार्ध° |
| १२६६ | १८ | अपिऽत्वम् | अपिऽत्वम् |
| १२६७ | ८ | पञ्चऽवाही | पञ्चऽवाही |
| " | १५ | प्राङ् | प्राङ् |
| १२६८ | २१ | अर्वाङ्¹² | अर्वाङ् |
| १२७० | १२ | कल्याण्यं१° | कल्याण्यं१° |
| १२७२ | १३ | सूत्रं | सूत्रं |
| १२७७ | ८ | तें | तें |
| १२७८ | ५ | जङ्घाः | जङ्घा |
| १२८२ | ५ | ऊँ | ॐ |
| " | १३ | इति | इतिं |



प्रथमं संस्करणम्, २०१८ वि.

प्रकाशकृत् —विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्,
साधु-आश्रमः (पत्रगृहम्), होशिआरपुरम्, (पं, भारतम्)।



FIRST EDITION, 1961

*Publishers:* Vishveshvaranand Vedic Research Institute,
Sadhu-Ashram (P. O.), Hoshiarpur (Pb., India).





Prepared and published under the patronage of the Government of India in the Ministry of Scietific Research and Cultural Affairs, the Government of Panjab, the University Grants Commission, the University of Panjab, the Dayanand Anglo-Vedic College Management, New Delhi, and the Trusts and Charities of Shri Vishva Bandhu, Shri Moolchand Khairaitiram and other donors.

# शोधपत्रम्

## The Corrigenda

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६४३ | | पञ्चमं | पष्ठं |
| ,, | १८ | सुप्तोत्थितस्य | सुप्तोत्थितः |
| ६५४ | ३ | उपगच्छसि | उपागच्छसि |
| ७३५ | १ | वान् अस्मि | अस्मि |
| ७४२ | १८ | श्रृश्णु° | श्रुश्णु° |
| ७६१ | ७ | °आयिर्नः | °आयिर्नः |
| ८२२ | ४ | ययम् | यूयम् |
| ८४६ | २५ | वृहामो | वृंहामो |
| ८७८ | ३० | न्यायम् | न्याय्यम् |
| १०४० | १९ | ईपद्रुः° | ईपद्रुः° |
| १०४९ | २६ | मुको. | मूको. |
| १०५३ | १४ | परिंवृक्ता | परिंवृक्ता |
| ११०० | ९ | यतः | यतः |
| १११३ | ७ | °पृथिवी | °पृथिवी |
| १११४ | २४ | अस्म | अस्मै |
| ,, | २५ | प्रजाऽपातः | प्रजाऽपतिः |
| ११३१ | १३ | क्रावः | क्रविः |
| ११३८ | ५ | अंवसे | अवंसे |
| ,, | ९ | तुभ्यम् | तुभ्यंम् |
| ११४६ | १३ | प्रच्यवन्त | प्रच्यवन्त |
| ११७२ | ७ | अन्तारक्षमिं | अन्तरिक्षम् |
| ११७६ | ११ | रूपाणाम् | रूपाणाम् |
| ११८१ | १६ | °तृता° | °तृता° |
| ११८२ | १५ | ब्रह्मणे° | ब्रह्मणे° |
| १२१४ | १५ | आह्रुः | आहुः |
| १२२१ | ६ | °इव | °इव |
| १२२२ | १० | स्कन्धान् पु° | स्कन्धान् कर्ति पु° |
| १२२७ | १४ | अयोध्या | अयोध्या |
| १२२८ | १७ | अयम् | अयम् |
| १२३६ | १० | °जेन्याऽ | °जेन्या |
| १२३८ | २१ | प्रकामति | प्रकामति |
| १२५१ | १२ | खदिरम् | खदिरम् |
| १२५२ | १० | स्वंः | स्वऽः |
| ,, | १९ | वृहस्पतिं° | वृहस्पति° |
| १२५३ | २१ | °घृष्टः | °सृष्टः |
| १२५७ | १२ | अस्य | अस्य |
| १२५८ | ३ | का र्धे° | कार्ऽधि° |
| १२६६ | १८ | अपिऽत्वम् | अपिऽत्वम् |
| १२६७ | ८ | पञ्चऽवाही | पञ्चऽवाही |
| ,, | १५ | प्राङ् | प्राङ् |
| १२६८ | २१ | अर्वाङ्[१२] | अर्वाङ् |
| १२७० | १२ | कल्याण्यं१° | कल्याण्यं१° |
| १२७२ | १३ | सूत्रं | सूत्रं |
| १२७७ | ८ | तें | तें |
| १२७८ | ५ | जङ्घाः | जङ्घा |
| १२८२ | ५ | ॐ | ॐ |
| ,, | १३ | इति | इतिं |



अथ

# अथर्ववेदे (शौनकीये)

श्रीसायणाचार्यकृतभाष्यसहिते

६–१० काण्डात्मकः

द्वितीयो भागः

अथ

# षष्ठं काण्डम्

श्रीगणेशाय नमः

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे समहं वन्दे विद्यातीर्थमहेश्वरम्॥ १॥

षष्ठे[1] काण्डे त्रयोदशानुवाकाः। तत्र प्रथमेऽनुवाके पञ्च सूक्तानि। तत्र 'दोषो गाय' इति प्रथमं सूक्तम्। तत्र आद्येन तृचेन नवशालायां पुष्टिकामो घृतं मधुमिश्रं जुहुयात्। तथा च सूत्रम् — "'यजूंषि यज्ञे' (अ ५,२६) इति नवशालायां सर्पिर्मधुमिश्रं जुहोति। 'दोषो गाय' (अ ६,१) इति द्वितीयाम्। युक्ताभ्यां तृतीयाम्"। (कौसू २३,१-३) इति।

तथा तेनैव तृचेन स्वस्त्ययनकामः आज्यसमित्पुरोडाशादिशष्कुल्यन्तानि त्रयोदश द्रव्याणि जुहुयात्। तथा च सूत्रम्— "'दोषो गाय' (अ ६,१), 'पातं नः' (अ ६,३) इति पञ्च" इत्यादि "'भवाशर्वौ' (अ ११,२) इत्युपदधीत"; (कौ ५०,१३) इत्यन्तम्।

तथा अनेन तृचेन सर्वलोकाधिपत्यकामः अथर्वाणं यजत उपतिष्ठते वा।

तथा अनेनैव समावर्तनानन्तरं भक्तं संपात्य अभिमन्त्र्य अश्नीयात्। सूत्रितं हि— "'दोषो गाय' (अ ६,१) इत्यथर्वाणं समाक्न्याश्नाति" (कौसू ५९,२५) इति।

तथा सोमयागे प्रातःसवने बहिष्पवमानस्तोत्रसमये ब्रह्मा 'दोषो गाय' इत्येतज्जपन् उद्गातारम् ईक्षेत। तद् उक्तं वैताने —"चात्वालाद् दक्षिणत उपविशन्ति[2]। 'दोषो गाय' (अ ६,१) इति जपन्नुद्गातारम् ईक्षते" (वैताश्रौ १७,१-२) इति। 'इन्द्राय सोममृत्विजः' (अ ६,२) इति तृचेन सोमयागे द्रोणकलशस्थं सोमं ब्रह्मा अनुमन्त्रयेत। "'इन्द्राय सोममृत्विजः' (अ ६,२) इति द्रोणकलशस्थम् अनुमन्त्रयते" (वैताश्रौ १६,१३) इति वैतानसूत्रात्।

अत्र 'आ यं विशन्ति' (अ ६,२,२) इत्यनया ऋचा राक्षसकृतपीडापरिहारार्थं पक्षिनीडकाष्ठपक्वं क्षीरौदनं संपात्य अभिमन्त्र्य अश्नीयात्। सूत्रितं हि — "'आ यं विशन्ति' (अ ६,२,२) इति वयोनिवेशनश्रृतं क्षीरौदनम्[3] अश्नाति" (कौसू २९,२७) इति।

यद्यपि अस्मिन् काण्डे प्रायेण सर्वाणि सूक्तानि तृचात्मकान्येव तथापि अध्यापकसंप्रदायानुरोधेन तृचद्वयम् एकीकृत्य सूक्तत्वेन व्यवह्रियते।

दो॒षो गा॑य[4] बृ॒हद् गा॑य द्यु॒मद्धे॑हि।
आथ॑र्वण[5] स्तु॒हि दे॒वं स॑वि॒तार॑म्॥ १॥

---

१. षळ° S'. २. °विश्यति S'. ३. क्षीरोद° S'. ४. आ गौंद् कौ १, १७७ आश्री ८,१,१८. ५. द्युमद्धेह्याथर्वण। आश्री. RW.; द्युमद्वायाथर्वण। पै १९,१,१; द्युमद्वामन्नाथर्वण। कौ.; °गामाथर्वण जै १,१९,३. तु. वै १,१५८०].

दो॒षो इति॑ । गा॒य॒ । बृ॒हत् । गा॒य॒ । द्यु॒ऽमत् । धे॒हि॒ ।
आथ॑र्वण । स्तु॒हि । दे॒वम् । स॒वि॒तार॑म् ॥ १ ॥

हे आथर्वण अथर्वणः पुत्र । 'तस्यापत्यम्' (पा ४,१,९२) इति अणि 'अन्' (पा ६,४,१६७) इति प्रकृतिभावात् टिलोपाभावः । स च अथर्वणः पुत्रो दध्यङ् नाम महर्षिः । तथा च तैत्तिरीयकम् — 'प्रजापतिर्वा अथर्वाऽग्निरेव दध्यङ्ङाथर्वणः' (तै ५,६,६,३) इति । निगमश्च भवति — 'तमु त्वा दध्यङ् ऋषिः पुत्र ईधे अथर्वणः' (ऋ ६,१६,१४) इति । हे तादृश आथर्वण महर्षे दोषो । दोषाशब्दो रात्रिवाची । स च अधिकरणप्रधानः । उशब्दः अप्यर्थे । दोषा रात्रौ । अपिशब्दाद् अहनि । अहोरात्रोपलक्षिते सर्वस्मिन्नपि काले गाय स्तुत्युपयोगीनि सामानि उच्चारय । 'बृहत्साम तथा साम्नाम्' (भगी १०,३५) इति यद् भगवतोक्तं बृहत्साम्नः प्राधान्यं तत् ख्यापयितुं विशेषतो निर्दिशति बृहद्गाय इति । 'त्वामिद्धि हवामहे' (ऋ ६,४६,१) इत्यस्याम् ऋचि उत्पन्नं साम बृहत् । तद्धि सर्वसोमयागानां प्रकृतिभूते प्रथमप्रयोज्येऽग्निष्टोमे माध्यंदिनसवने पृष्ठस्तोत्रेषु विकल्पेन प्रथमं प्रयुज्यते । तद् उक्तम् — 'रथन्तरसाम्ना बृहत्साम्नोभयसाम्ना वा प्रथमं यजेत' (आश्रौ १०,२,६) इति । तद् बृहत् साम हे स्तोतः गाय । कै गै शब्दे इति धातुः । तेन च गानेन द्युमत् दीप्तिमद्धनं धेहि अस्मासु धारय । डुधाञ् धारणपोषणयोः । 'घ्वसोरेद्धौ°' (पा ६,४,११९) इति एत्वाभ्यासलोपौ । तस्य च गीयमानस्य साम्नः उक्तफलसाधनत्वं स्तोत्रनिष्पादनद्वारेत्याह-स्तुहि इति । देवम् दानादिगुणयुक्तं सवितारम् अन्तर्यामितया सर्वस्य प्रेरकं सूर्यं स्तुहि प्रशंस । गुणिनिष्ठगुणाभिधानं हि स्तुतिः । सा च यज्ञे द्विविधा प्रगीताप्रगीतमन्त्रभेदात् । तत्र प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम् । तच्च 'आज्यैः स्तुवते' 'पृष्ठैः स्तुवते' इत्यादिवाक्यैर्विहितम् । अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रम् । तदपि 'आज्यं शंसति' 'प्रउगं शंसति' इत्यादिशंसतिचोदनाविहितम् । तयोश्च याज्यानुवाक्ययोरिव संस्कारकर्मत्वम् आशङ्क्य प्रधानकर्मत्वं राद्धान्तितं 'स्तुतशस्त्रयोस्तु संस्कारो याज्यावद् देवताभिधानत्वात्' (जै २,१,१३) इत्यधिकरणे । एतद् उक्तं भवति — गीयमानेन बृहता साम्ना फलसाधनपरमापूर्वजननार्थं पृष्ठस्तोत्राख्यं प्रधानकर्म निष्पादयेद् इति । आथर्वण इत्यामन्त्रितस्य 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा ८,१,७२) इति अविद्यमानवद्भावात् स्तुहि इत्यस्य पादादित्वाद् 'अपादादौ' (पा ८,१,१८) इति पर्युदस्तत्वात् 'तिङ्ङतिङः' (पा ८,१,२८) इति निघाताभावः ।

तमु॑ ष्टुहि॒ यो अ॒न्तः सिन्धौ॑ सू॒नुः ।
स॒त्यस्य॒ युवा॑नमद्रोघवाचं सु॒शेव॑म् ॥ २ ॥

---

तम् । ऊं इर्ति । स्तुहि । यः । अन्तः । सिन्धौ । सूनुः ।
सत्यस्य । युवानम् । अद्रोघऽवाचम् । सुऽशेवम् ॥ २ ॥

हे स्तोतः तमु तमेव देवं स्तुहि स्तुत्या प्रीणय । यो देवः सविता सत्यस्य परब्रह्मणः सूनुः प्रथमजः पुत्रः । तथा च जगत्कारणं परमात्मानं प्रकृत्य वाजसनेयकम्— "स त्रेधात्मानं व्यकुरुत आग्निं तृतीयं वायुं तृतीयम् आदित्यं तृतीयम्[1]" (बृउ १,२,३) इति । एतेन इतरदेवेभ्यः प्राशस्त्यम् अस्योक्तं भवति । ईदृशो यः सविता सिन्धौ स्यन्दनशीले समुद्रे अन्तः मध्ये । उद्यन् दृश्यत इति शेषः । तं युवानम् नित्यतरुणं नैशस्य तमसो यावयितारं पृथक्कर्तारं वा अद्रोघवाचम् अहिंसकवाक्ययुक्तम् शोभनवाचम् इत्यर्थः । सुशेवम् सुसुखम् । स्तुहीत्यन्वयः ।

स घा नो देवः सविता [2]साविषदमृतानि भूरि[2] ।
उभे सुष्टुती[3] सुगातवे[4] ॥ ३ ॥

सः । घ । नः । देवः । सविता । साविषत् । अमृतानि । भूरि ।
उभे इति । सुस्तुती इति सुऽस्तुती । सुऽगातवे ॥ ३ ॥

स घ स एव देवः सविता नः अस्माकम् अमृतानि अमृतत्वसाधनानि भूरि भूरीणि बहूनि हविःप्रदानादीनि कर्माणि साविषत् प्रेरयतु देवान् प्रापयतु । यद्वा अमृतानि अमरणहेतुभूतानि बलानि भूरि बहुलं नः अस्मभ्यं साविषत् प्रेरयतु । षू प्रेरणे । अस्मात् लेटि अडागमः । 'सिब्बहुलं णिद् वक्तव्यः' (पावा ३,१,३४) इति वचनाद् वृद्ध्यावादेशौ । घशब्दस्य 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' (पा ६,३,१३३) इति सांहितिको दीर्घः । किमर्थम् इत्यत आह—उभे इति । उभयविधे सुष्टुती शोभनस्तुतिसाधने बृहद्रथन्तरे सामनी सुगातवे सुष्ठु गातुम् । यद्वा उभे सुष्टुती स्तुतशस्त्रात्मिके शोभने स्तुती सुगातवे सुष्ठु प्रयोक्तुम् । गायतेस्तुमर्थे तवेप्रत्ययः ।

इन्द्राय सोममृत्विजः [5]सुनोता च[5] धावत ।
[6]स्तोतुर्यो वचः[6] शृणवद्धवं [7]च मे[7] ॥ १ ॥

इन्द्राय । सोमम् । ऋत्विजः । सुनोत । आ । च । धावत ।
स्तोतुः । यः । वचः । शृणवत् । हवम् । च । मे ॥ १ ॥

---

१. °स्तादित्यं तृतीयं वायुं तृतीयम् इत्युपलभ्यमानः पाठः.　२. सावि° इति W; °ताऽऽसावि° इति शोधः इति? (तु. ऋ.); °षद्वसुपतिर्वसूनि पै १९,१,३; वसुपतिः आश्री ८,१,१८; आ सांविषद् वसुपतिर्वसूनि ऋ ७,४५,३.　३. सुक्षिती आश्री.　४. सुगातुम् पै.; सुधातुः आश्री.　५. सुनोतना तु पै १९,१,४.　६. स्तोत्रियं हवं पै.　७. नु नः पै.

हे ऋत्विजः अध्वर्युप्रमुखाः इन्द्राय इन्द्रार्थं सोमं सुनोत अभिषुणुत । 'तप्तनप्तनथनाश्च' (पा ७,१,४५) इति तशब्दस्य तबादेशः । तस्य पित्त्वेन ङित्त्वाभावात् 'सार्वधातुकार्धधातुकयोः' (पा ७,३,८४) इति गुणः । तथा तं सोमम् आधावत च । आधावनं नाम अदाभ्यग्रहार्थं गृहीतस्य वसतीवरीजलस्य 'वसवस्त्वा' (तै ३,३,३,१) इत्यादिमन्त्रगृहीतैस्त्रिभिः सोमांशुभिः 'मान्दासु ते' (तै ३,३,३,१) इत्यादिभिर्मन्त्रैश्चालनम् । यद् आह आपस्तम्बः – 'अग्रम् अदाभ्यं वा प्रथमं गृह्णाति ।' (आपश्रौ १२,७,१७) इति प्रक्रम्य 'उपनद्धस्य राजस्त्रीन् अंशून् प्रगृह्णाति । (आपश्रौ १२,७,१९) वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसेत्येतैः प्रतिमन्त्रम् । (आपश्रौ १२,८,१) तैरेनं चतुराधूनोति । पञ्चकृत्वः सप्तकृत्वो वा । मान्दासु त इत्येतान् प्रतिविमुच्य' (आपश्रौ १२,८,२) इति । धूञ् कम्पने इत्यस्मात् ण्यन्तात् लोटि 'छन्दस्युभयथा' (पा ३,४,११७) इति शप आर्धधातुकत्वात् 'णेरनिटि' (पा ६,४,५१) इति णिलोपः । यद्वा धावु गतिशुद्ध्योः । तम् अभिषुतं सोमम् आधावत दशापवित्रेण सर्वतः शोधयत । य इन्द्रः स्तोतुः मे मम वचः स्तुतिलक्षणं वाक्यं हवम् आह्वानं च शृणवत् शृणुयात् आदरेण जानीयात् । तस्मा इन्द्रायेति संबन्धः । शृणवत् इति । श्रु श्रवणे । अस्मात् लेटि अडागमः । 'श्रुवः शृ च' (पा ३,१,७४) इति श्नुप्रत्ययः शृभावश्च । हवम् इति । 'भावेऽनुपसर्गस्य' (पा ३,३,७५) इति अप् संप्रसारणं च ।

आ यं विशन्तीन्दवो वयो न वृक्षमन्धसः ।
विरप्शिन् वि मृधो जहि रक्षस्विनीः ॥ २ ॥

आ । यम् । विशन्ति । इन्दवः । वयः । न । वृक्षम् । अन्धसः ।
विऽरप्शिन् । वि । मृधः । जहि । रक्षस्विनीः ॥ २ ॥

इन्दवः सोमाः अन्धसः । अन्ननामैतत् । 'अदेर्नुम् धश्च' (पाउ ४,२०६) इति असुनि व्युत्पादितम् । अन्नभूताः सन्तः यम् इन्द्रम् आ विशन्ति प्रविशन्ति । तत्र दृष्टान्तः वय इति । नशब्दः उपमार्थे । वयः पक्षिणो यथा निलयभूतं वृक्षं शीघ्रं स्वेच्छया प्राप्नुवन्ति तथा इन्द्रार्थम् अभिषुताः सोमाः तत्प्राशनाय[2] तच्छरीरं स्वयमेव प्रविशन्तीत्यर्थः । [स त्वं] हे विरप्शिन् महन्नामैतत् । हे महन्निन्द्र सोमपानेन दृप्तः सन् रक्षस्विनीः रक्षोभिर्बाधकैरुपेता मृधः युध्यमानाः शत्रुसेना वि जहि विबाधस्व । 'हन्तेर्जः' (पा ६,४,३६) इति जादेशः । तस्य 'असिद्धवदत्राभात्' (पा ६,४,२२) इति असिद्धत्वाद् 'अतो हेः' (पा ६,४,१०५) इति लुगभावः ।

---

१. रवा विशन्त्व' पै १९,१,६. २. तन्मीशानाय S', Kd

सुनोता॑ सोम॒पाव्ने॑ सोम॒मिन्द्रा॑य व॒ज्रिणे॑ ।
युवा॒ जेतेशा॑नः॒ स पु॑रुष्टु॒तः ॥ ३ ॥

सुनोत॑ । सो॒म॒ऽपाव्ने॑ । सोम॑म् । इन्द्रा॑य । व॒ज्रिणे॑ ।
युवा॑ । जेता॑ । ईशा॑नः । सः । पु॒रु॒ऽस्तु॒तः ॥ ३ ॥

हे अध्वर्यवः सोमपाव्ने सोमस्य पात्रे सोमपानोत्सुकाय। 'आतो मनिन्क्वनिब्वनिपश्च' (पा ३,२,७४) इति वनिप्। वज्रिणे वज्रहस्ताय शत्रुनिरसनक्षमाय इन्द्राय सोमं सुनोत अभिषुणुत। स खलु इन्द्रो युवा नित्यतरुणः शत्रूणां यावयिता वा अत एव जेता जयशीलः ईशानः सर्वस्य जगत ईशिता स्वामी। ईश ऐश्वर्ये इत्यस्मात् लटः शानच्। अदादित्वात् शपो लुक्। अनुदात्तेत्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरेण आद्युदात्तः। पुरुष्टुतः पुरुभिर्बहुभिर्यजमानैः स्वस्वाभिलषितसिद्धये स्तुतः प्रशंसितः। य इत्थं सर्वोत्कृष्टः इन्द्रः तत्प्रीत्यर्थं सोमम् अभिषुणुतेति संबन्धः।

इति षष्ठे[3] काण्डे प्रथमं सूक्तम्।

'पातं नः' इति तृचेन विजयस्वस्त्ययनकर्मणि आज्यं हुत्वा खड्गादिशस्त्रं संपात्य अभिमन्त्र्य योधकाय प्रयच्छेत्।

तथैव स्वस्त्ययनकामो रात्रौ शयनकाले एतं तृचं जपन् प्रादेशेन मुखं प्रमाय स्वप्यात्।

तथैव सुप्तोत्थितस्य अनेन तृचेन स्वस्त्ययनार्थं त्रीणि पदानि तिस्रो दिष्टीर्वा प्रमाय उत्तिष्ठेत्।

सूत्रितं हि—"'पातं नः' (अ ६,३) 'य एनं परिषीदन्ति' (अ ६,६७) यदायुधं दण्डेन व्याख्यातम्। दिष्टया मुखं विमाय संविशति। त्रीणि पदानि प्रमायोत्तिष्ठति। तिस्रो दिष्टीः।" (कौसू ५०,४-७) इति।

तथा 'पातं नः' इति पञ्चभिर्ऋग्भिः स्वस्त्ययनकामः आज्यसमित्पुरोडाशादिशष्कुल्यन्तानि त्रयोदश द्रव्याणि जुहुयात्। "'पातं नः' (अ ६,३) इति पञ्च 'अनड्वद्भ्यः'" (अ ६,५९) इत्यादि "'भवाशर्वौ' (अ ११,२) इत्युपदधीत" (कौसू ५०,१३) इत्यन्तं सूत्रम्।

'त्वष्टा मे' इति तृचेन दायादविभागकर्मणि पुष्ट्यर्थं सरूपवत्साया[4] गोर्दुग्धे पक्वम् ओदनं संपात्य अभिमन्त्र्य अश्नीयात्।

---

१. °पावने पै १९,१,५. २. ?जयन्तो ईशानः पै. ३. पञ्च° S'. ४. सारुप° S'.

तथा तत्रैव कर्मणि अनेन तृचेन धनुर्ज्यां संपात्य अभिमन्त्र्य बध्नीयात्। तथा तत्रैव कर्मणि दण्डं संपात्य अभिमन्त्र्य विमृज्य धारयेत्।

आह च कौशिकः—"'त्वष्टा मे' (अ ६,४) इति प्रातर्विभक्ष्यमाणोऽश्नाति[1]। ज्यां[2] बध्नाति। दण्डं संपातवन्तं विमृज्य धारयति" (कौसू २३,९-११) इति।

तथा पुण्यर्थचित्राकर्मणि अनेन तृचेन वृक्षशाखादिसंभारान् संपातयेत्। 'त्वष्टा म इति प्रातर्विभक्ष्यमाणः' इति प्रक्रम्य (कौसू २३,९) 'युक्तयोश्चित्राकर्म निशायां[3] संभारान् संपातवतः करोति' (कौसू २३,१२) इति हि कौशिकं सूत्रम्।

तथा च कुमारस्य कुमार्या वा मूर्ध्नि आवर्तद्वयजनने तच्छान्त्यर्थम् अनेन तृचेन आज्यं जुहुयात्। सूत्रितं हि—'कुमारस्य कुमार्या वा द्वावावर्तौ मूर्धन्यौ भवतः' इति प्रक्रम्य होमार्थं कांश्चन मन्त्रान् पठित्वा सूत्रितम् 'त्वष्टा मे दैव्यं वचः' (कौसू १२४,१६) इति।

पा॒तं न॒ इन्द्रा॑पूष॒णादि॑तिः॒ पान्तु॑ म॒रुतः॑ ।
अ॒पां नपा॑त् सिन्धवः स॒प्त पा॑तन॒ पातु॑ नो॒ विष्णु॑रु॒त द्यौः ॥ १ ॥

पा॒तम् । नः॒ । इन्द्रा॑पूषणा । अदि॑तिः । पान्तु॑ । म॒रुतः॑ ।
अ॒पाम् । न॒पात् । सिन्ध॑वः । स॒प्त । पा॒तन॒ । पातु॑ । नः॒ । विष्णुः॑ । उ॒त । द्यौः ॥ १ ॥

हे इन्द्रापूषणा। इन्द्रश्च पूषा च इन्द्रापूषणौ। 'देवताद्वन्द्वे च' (पा ६,३,२६) इति पूर्वपदस्य आनङ् आदेशः। 'सुपां सुलुक्' (पा ७,१,३९) इति विभक्तेराकारः। इन्हन्पूषार्यम्णां शावेव सर्वनामस्थाने इति नियमाद् उपधादीर्घाभावः। हे इन्द्रापूषणौ नः अस्मान् पातं रक्षतम्। अदितिः अदीना देवमाता। सा अस्मान् पातु इति विपरिणामेन संबन्धः। मरुतः एकोनपञ्चाशत्संख्याकाः सप्तगणात्मकास्तत्पुत्रा देवाः। ते च अस्मान् पान्तु रक्षन्तु। अपां नपात्[4] एतत्संज्ञः अबिन्धनोऽग्निः और्ववैद्युतलक्षणः। सप्त[5] सिन्धवः सप्त समुद्राश्च यूयम् अस्मान् पातन पात रक्षत। उत अपि च विष्णुर्व्यापनशीलो देवः द्यौः द्युलोकश्च नः अस्मान् पातु रक्षतु।

पा॒तां नो॒ द्यावा॑पृथि॒वी अ॒भिष्ट॑ये॒ पातु॒ ग्रावा॒ पातु॒ सोमो॑ नो॒ अंह॑सः ।
पातु॑ नो दे॒वी सु॒भगा॒ सर॑स्वती॒ पात्व॒ग्निः शि॒वा ये अ॑स्य पा॒यवः॑ ॥२॥

पा॒ताम् । नः॒ । द्यावा॑पृथि॒वी इति॑ । अ॒भिष्ट॑ये । पातु॑ । ग्रावा॑ । पातु॑ । सोमः॑ । नः॒ । अंह॑सः ।
पातु॑ । नः॒ । दे॒वी । सु॒ऽभगा॑ । सर॑स्वती । पातु॑ । अ॒ग्निः । शि॒वाः । ये । अ॒स्य । पा॒यवः॑ ॥

1. °श्नुदश्य° Bl. 2. ज्यायुं Bl. 3. कर्मनिशायां Bl.; °कर्माणिशालायां S'.
4. °पां नपात् ऋ १९,१,१४. 5. यजु. मंत्र. द्र. 6. सुहवा पै १९,१,१५.

द्यावापृथिवी। द्यौश्च पृथिवी च द्यावापृथिव्यौ। 'दिवो द्यावा' (पा ६,३,२९) इति द्यावादेशः। 'सुपां सुलुक्' (पा ७,१,३९) इति पूर्वसवर्णदीर्घः। ते नः अस्मान् पाताम् रक्षताम्। किमर्थम्। अभिष्टये अभ्येषणाय अभिमतफलप्राप्तये। तथा ग्रावा अभिषवहेतुरश्मा पातु रक्षतु। अभिषुतश्च सोमो नः अस्मान् अंहसः पापात् पातु रक्षतु। सुभगा सौभाग्ययुक्ता देवी दानादिगुणयुक्ता सरस्वती च मन्त्रात्मिका नः अस्मान् पातु रक्षतु। अग्निः आहवनीयादिरूपेण अवस्थितश्च पातु रक्षतु। अस्य अग्नेः शिवाः कल्याणाः सुखकराः पायवः राक्षसादिकृताद्[१] दुःखात् पातारो ये रश्मयः सन्ति तेऽपि अस्मान् रक्षन्त्विति शेषः। 'ये पायवो मामतेयं ते अग्ने' (ऋ १,१४७,३) इत्यादि मन्त्रान्तरम्। पा रक्षणे इत्यस्मात् 'कृवापाजि' (पाउ १,१) इति उण्प्रत्ययः। 'आतो युक् चिण्कृतोः' (पा ७,३,३३) इति युक्।

पा॒तां नो॑ दे॒वाश्वि॑ना शु॒भस्पती॑[२] उ॒षासा॒नक्तो॒त न॑ उरु॒ष्यता॑म्।
अपां॑ न॒पाद॒भिह्रु॑ती[३] गय॑स्य[४] चि॒द् देव॑ त्वष्टर्व॒र्धय॑ स॒र्वता॑तये ॥३॥

पा॒ता॒म्। नः॒। दे॒वा। अ॒श्विना॑[५]। शु॒भः। पती॒ इति॑। उ॒षसा॒नक्ता॑। उ॒त। नः॒। उ॒रु॒ष्य॒ता॒म्। अ॒पाम्। न॒पा॒त्। अ॒भिह्रु॑ती इत्य॒भिऽह्रु॑ती। गय॑स्य। चि॒त्। दे॒व॒। त्व॒ष्टः॒। व॒र्धय॑। स॒र्वऽता॑तये ॥ ३ ॥

हे देवा[६] देवौ दानादिगुणयुक्तौ शुभस्पती शोभमानस्य दीप्यमानस्य तेजसः अलंकारस्य वा स्वामिनौ। शुभ शुम्भ दीप्तौ। अस्मात् क्विबन्तात् षष्ठी। 'षष्ठ्याः पतिपुत्र' (पा ८,३,५३) इति विसर्जनीयस्य सत्वम्। यद्वा शुभः शोभमानायाः सूर्यायाः पती भर्तारौ ईदृशौ हे अश्विना[७] अश्विनौ नः अस्मान् पातम्[६] रक्षतम्। उत अपि च उषासानक्ता। उषाश्च नक्तं च उषासानक्ता 'उषासोषसः' (पा ६,३,३१) इति उषासा आदेशः। एतच्छब्दवाच्ये अहोरात्रदेवते नः अस्मान् उरुष्यताम् रक्षताम्। 'उरुष्यती रक्षाकर्मा' (नि० ५,२३) इति यास्कः। अपां नपात्[३] मेघस्थानाम् अपां न पातयिता संवर्धकः एतत्संज्ञोऽग्निः कयस्य[४] चित्। वर्णोपजनश्छान्दसः। कस्य चिदपि राक्षसादेः अभिह्रुती[३] अभिह्रुतौ अभिहरणे अभितः सर्वतो हिंसने प्राप्ते। अस्मान् रक्षतु इति शेषः। ह्वृ कौटिल्ये इत्यस्मात् क्तिन्नन्तात् सप्तम्या ईकारः। 'ईदूतौ च सप्तम्यर्थे' (पा १,१,१९) इति प्रगृह्यत्वम्। हे त्वष्टर्देव सर्वतातये सर्वस्मै फलाय अस्मान् वर्धय। 'सर्वदेवात्तातिल्' (पा ४,४,१४२) इति स्वार्थिकस्तातिल्प्रत्ययः।

---

१. रक्षसा' S'. २. सुदंससा पै १९,१,१६. ३. °पाद् विह्रुती पै.
४. कयस्य पै. [मूको]. ५. द्वेयाश्विनां। P,P²,J,K,Cp. ६. पेतु- मेघा. दृ.

त्वष्टा मे[1] दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः ।
पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रायमाणं[2] सहः[3] ॥ १ ॥

त्वष्टा । मे । दैव्यम् । वचः । पर्जन्यः । ब्रह्मणः । पतिः ।
पुत्रैः । भ्रातृऽभिः । अदितिः । नु । पातु । नः । दुस्तरम् । त्रायमाणम् । सहः ॥ १ ॥

त्वष्टा देवः मे मदीयं दैव्यम् देवार्हं स्तुतिलक्षणं वचः शृणोतु । 'देवाद् यञञौ' (पावा ४,१,८५) इति देवशब्दात् प्राग्दीव्यतीयो यञ् । तथा पर्जन्यः वृष्टिकरो देवः । ब्रह्मणस्पतिः मन्त्रस्याधिपतिर्देवः । तावुभौ मदीयं स्तुतिवचनं शृणुताम् इत्यर्थः । तथा अदितिः स्वकीयैः पुत्रैः भ्रातृभिश्च सह नः अस्माकं त्रायमाणम् रक्षकं दुष्टरम् अन्यैस्तरीतुम् अशक्यम् अनतिक्रमणीयं सहः बलं नु क्षिप्रं पातु नियमेन रक्षतु ।

अंशो भगो वरुणो मित्रो अर्यमादितिः [4]पान्तु मरुतः[4] ।
अप तस्य द्वेषो [5]गमेदभिह्रुतो[5] यावयच्छत्रुमन्तितम्[6] ॥ २ ॥

अंशः । भगः । वरुणः । मित्रः । अर्यमा । अदितिः । पान्तु । मरुतः ।
अप । तस्य । द्वेषः । गमेत् । अभिऽह्रुतः । यवयत् । शत्रुम् । अन्तितम्[7] ॥२॥

अंशादयः अदितेः पुत्राः । 'तस्या अंशश्च भगश्चाजायेताम्' (तैब्रा १,१,९,२) इति श्रुत्यन्तरप्रसिद्धाः । ते च अदितिः च मरुतः मरुद्गणाश्च पान्तु अस्मान् रक्षन्तु । यस्माच्छत्रुजाताद् रक्षणं प्रार्थ्यते तस्य द्वेषः तत्कर्तृकम् अनिष्टाचरणम् अप गमेत् अस्मत्तः अपगच्छतु । 'लिङ्याशिष्यङ्' (पा ३,१,८६) इति गमेर्लिङि अङ्प्रत्ययः । कीदृशो द्वेष इति विशिनष्टि — अभिह्रुतः[8] अभितो हिंसकः । ह्वृ कौटिल्ये इत्यस्मात् कर्तरि निष्ठा । स च अस्मत्तः अपगतो द्वेषः तम्[9] एव शत्रुम् अन्तितः[9] अन्तिकात् । 'कादिलोपो बहुलम्' (पावा ६,४,१४९) इति वचनात् कादेर्लोपः । अस्मत्समीपाद् यवयत् पृथक्करोतु । यु मिश्रणामिश्रणयोः । अस्मात् ण्यन्तात् लेटि अडागमः ।

धिये [10]समञ्चिना प्रावतं न[10] उरुष्या ण[11] उरुज्मन्नप्रयुच्छन् ।
[12]द्यौ३ष्पितर्यावय[12] [13]दुच्छुना या[13] ॥ ३ ॥

---

१. नो[3] कौ १,२९९. २. त्रामणं[3] कौ.; त्रामणे पै १९,२,१ ३. वेचं: कौ.; नमा पै. ४. पान्त्वंहसः पै १९,२,२. ५. गमयेदाहुतो पै. ६. °मन्ति तम् RW. सा.; °मन्तितम् पै [मूको.] पाठः? वैप १,२४१ J द्र. ७. अर्तितम् । P,P[2]. ८. भाग° S'. ९. वैप्र. मंपा. द्र. १०. °मभु धिये प्राह्याहु: पै १९,२,३. ११. नं B K १२. द्यौष्पि° V,B[k]; कण्ठाभावः A,D,R,S[m],Cs; द्यौ३:पितं° P[3],M,I,H १३. °नामितः पै.

धिये । सम् । अश्विना । प्र । अवतम् । नः । उरुष्य । नः ।
उरुऽज्मन् । अप्रऽयुच्छन् । द्यौः[१] । पितः । यवयं । दुच्छुनां । या ॥ २ ॥

हे अश्विना अश्विनौ व्यापनशीलौ देवौ नः अस्मान् धिये । धीरिति कर्मनाम । अग्निहोत्रादिलक्षणाय सत्कर्मणे सद्बुद्धये वा *[सम्] सम्यक् प्रावतम् प्रकर्षेण रक्षतम् । यथा अस्माकं सत्कर्मविषया बुद्धिर्भवति तथा कुरुतम् इत्यर्थः । हे उरुज्मन् विस्तीर्णगमन वायो अप्रयुच्छन् अप्रमाद्यन् त्वं नः अस्मान् उरुष्य रक्ष । हे द्यौः हे पितः वृष्टिद्वारा सर्वस्य प्राणिजातस्य जनक द्युलोक या दुच्छुना दुष्टं शुनं सुखम् अस्याम् इति वा, श्वेव दुष्टेति वा दुच्छुना अनिष्टकारिणी पापदेवता । पृषोदरादित्वाद् रूपसिद्धिः । तां यवय अस्मत्तः अपगमय ।

इति द्वितीयं सूक्तम् ।

'उदेनम् उत्तरं नय' 'योऽस्मान् ब्रह्मणस्पते' इति तृचाभ्यां ग्रामकामः इन्द्रं यजते उपतिष्ठते वा ।

तथा आभ्यां तृचाभ्याम् उदुम्बरपलाशकर्कन्धूतक्षणाधानं सभोपस्तरणतृणाधानम् अभिमन्त्रितान्नासवप्रदानं वा कुर्यात् ।

सूत्रितं हि—"'उदेनमुत्तरं नय' (अ ६,५), 'योऽस्मान्' (अ ६,६), 'इन्द्रः सुत्रामा' (अ ७,९६) इति ग्रामकामः । ग्रामसांपदानाम् अप्ययः" (कौसू ५९,८;८) इति ।

तथा दर्शपूर्णमासयोः आग्नेयचरुम् 'उदेनमुत्तरं नय' इत्याद्याभिस्तिसृभिर्ऋग्भिर्जुहुयात् । सूत्रितं हि—"'उदेनमुत्तरं नय' इति पुरस्ताद्धोमसंहतां[२] पूर्वाम् । एवं पूर्वांपूर्वां संहतां[२] जुहोति । स्वाहान्ताभिः प्रत्यृचं होमाः' (कौसू ४,९-११) इति ।

तथा अग्निचयने षोडशगृहीतवैश्वकर्मणहोमानन्तरम् 'उदेनमुत्तरं नय' इत्यनेन आधीयमानाः समिधो ब्रह्मा अनुमन्त्रयेत । "'उदेनमुत्तरं नय' इति समिध आधीयमानाः" (वैताश्रौ २९,१५) इति वैतानसूत्रात् ।

*दर्शपूर्णमासयोः 'इन्द्रेमं प्रतरं कृधि' (अ ६,५,२) इत्यनया ऐन्द्रम् आघारं* ब्रह्मा अनुमन्त्रयेत ।

तथा अनयेव ऐन्द्रं सांनाय्ययागम् अनुमन्त्रयेत ।

"'इन्द्रेमम्' (अ ६,५,२) इत्यैन्द्रम् आघारम्" (वैताश्रौ २,१४) इति "सांनाय्यमैन्द्रं माहेन्द्रं वा 'इन्द्रेमम्' (अ ६,५,२) 'त्वमिन्द्रस्त्वं महेन्द्रः' (अ १७,१८)" (वैताश्रौ ३,३) इति च वैतानं सूत्रम् ।

अद्भुतमहाशान्तौ इन्द्रयजने 'इन्द्रेमं प्रतरं कृधि' इत्येषा ऋग् विनियुक्ता । तद् उक्तं शान्तिकल्पे—"अथातोद्भुतमहाशान्तौ दिशो यजते" इति प्रक्रम्य "'इन्द्रेमं प्रतरं कृधि' इतीन्द्रस्य" (शांक १४,१;२) इति ।

---

१. द्यौः P,J. २. °हितां S'.

धिये । सम् । अश्विना । प्र । अवतम् । नः । उरुष्य । नः ।
उरुऽज्मन् । अप्रऽयुच्छन् । द्यौः[1] । पितः । यवय । दुच्छुना । या ॥ २ ॥

हे अश्विना अश्विनौ व्यापनशीलौ देवौ नः अस्मान् धिये । धीरिति कर्मनाम । अग्निहोत्रादिलक्षणाय सत्कर्मणे सद्बुद्धये वा [सम्] सम्यक् प्रावतम् प्रकर्षेण रक्षतम् । यथा अस्माकं सत्कर्मविषया बुद्धिर्भवति तथा कुरुतम् इत्यर्थः । हे उरुज्मन् विस्तीर्णगमन वायो अप्रयुच्छन् अप्रमाद्यन् त्वं नः अस्मान् उरुष्य रक्ष । हे द्यौः हे पितः वृष्टिद्वारा सर्वस्य प्राणिजातस्य जनक द्युलोक या दुच्छुना दुष्टं शुनं सुखम् अस्याम् इति वा, श्वेव दुष्टेति वा दुच्छुना अनिष्टकारिणी पापदेवता । पृषोदरादित्वाद् रूपसिद्धिः । तां यवय अस्मत्तः अपगमय ।

इति द्वितीयं सूक्तम् ।

'उदेनम् उत्तरं नय' 'योऽस्मान् ब्रह्मणस्पते' इति तृचाभ्यां ग्रामकामः इन्द्रं यजते उपतिष्ठते वा ।

तथा आभ्यां तृचाभ्याम् उदुम्बरपलाशकर्कन्धूतक्षणाधानं सभोपस्तरणतृणाधानम् अभिमन्त्रितान्नासवप्रदानं वा कुर्यात् ।

सूत्रितं हि—" 'उदेनमुत्तरं नय' (अ ६,५), 'योऽस्मान्' (अ ६,६), 'इन्द्रः सुत्रामा' (अ ७,९६) इति ग्रामकामः । ग्रामसापदानाम् अन्वयः" (कौसू ५९,५;८) इति ।

तथा दर्शपूर्णमासयोः आग्नेयचरुम् 'उदेनमुत्तरं नय' इत्याद्याभिस्तिसृभिर्ऋग्भिर्जुहुयात् । सूत्रितं हि—" 'उदेनमुत्तरं नय' इति पुरस्ताद्धोमसंहता[2] पूर्वाम् । एवं पूर्वांपूर्वां संहतां[2] जुहोति । स्वाहान्ताभिः प्रत्यृचं होमाः" (कौसू ४,९-११) इति ।

तथा अग्निचयने षोडशगृहीतवैश्वकर्मणहोमानन्तरम् 'उदेनमुत्तरं नय' इत्यनेन आधीयमानाः समिधो ब्रह्मा अनुमन्त्रयेत । " 'उदेनमुत्तरं नय' इति समिध आधीयमानाः" (वैताश्रौ २९,१५) इति वैतानसूत्रात् ।

दर्शपूर्णमासयोः 'इन्द्रेमं प्रतरं कृधि' (अ ६,५,२) इत्यनया ऐन्द्रम् आघारं ब्रह्मा अनुमन्त्रयेत ।

तथा अनयैव ऐन्द्रं सांनाय्ययागम् अनुमन्त्रयेत ।

" 'इन्द्रेमम्' (अ ६,५,२) इत्यैन्द्रम् आघारम्" (वैताश्रौ २,१४) इति "सांनाय्यस्यैन्द्रं माहेन्द्रं वा 'इन्द्रेमम्' (अ ६,५,२) 'त्वमिन्द्रस्त्वं महेन्द्रः' (अ १७,१८)" (वैताश्रौ ३,३) इति च वैतानं सूत्रम् ।

अद्भुतमहाशान्तौ इन्द्रयजने 'इन्द्रेमं प्रतरं कृधि' इत्येषा ऋग् विनियुक्ता । तद् उक्तं शान्तिकल्पे—"अथातोद्भुतमहाशान्तौ दिशो यजते" इति प्रक्रम्य " 'इन्द्रेमं प्रतरं कृधि' इतीन्द्रस्य" (शांक १४,१;२) इति ।

---

१. द्यौः P,J.    २. °हितां S'.

उदे॑नमुत्त॒रं न॑याग्ने घृ॒तेना॑हुत ।
समे॑नं॒ वर्च॑सा सृज प्र॒जया॑ च ब॒हुं कृ॑धि ॥ १ ॥

उत् । ए॒न॒म् । उ॒त्ऽत॒रम् । न॒य॒ । अग्ने॑ । घृ॒तेन॑ । आ॒ऽहु॒त॒ ।
सम् । ए॒न॒म् । वर्च॑सा । सृ॒ज॒ । प्र॒ऽजया॑ । च॒ । ब॒हुम् । कृ॒धि॒ ॥ १ ॥

हे घृतेनाहुत आज्येन आहूयमान । 'सुबामन्त्रिते' (पा २,१,२) इति तृतीयान्तस्य पराङ्गवद्भावात् पदद्वयस्य आष्टमिकम् आमन्त्रितानुदात्तत्वम् । ईदृश हे अग्ने एनं यजमानम् उत्तरम् उत्कृष्टतरं स्थानम् उन्नय उत्कर्षेण ऊर्ध्वं वा प्रापय । यद्वा उत्तरम् इति उत्कर्षार्थवृत्तिन उच्छब्दात् तरप् । 'अमु च च्छन्दसि' (पा ५,४,१२) इति अमुप्रत्ययः । अनेन च उन्नयनक्रियायाः प्रकर्षो द्योत्यते । एक उच्छब्दः अनुवादः । उत्कर्षप्रापणानन्तरम् एनं यजमानं वर्चसा तेजसा शरीरकान्त्या संसृज संयोजय । प्रजया पुत्रपौत्रादिलक्षणया च बहुम् बहुलं कृधि कुरु । 'श्रुशृणुपृकृवृभ्यः' (पा ६,४,१०२) इति हेर्धिरादेशः ।

इन्द्रे॒मं प्र॑त॒रं कृ॑धि सजा॒ताना॑मसद् व॒शी ।
रा॒यस्पोषे॑ण॒ सं सृ॑ज जी॒वात॑वे ज॒रसे॑ नय ॥ २ ॥

इन्द्र॑ । इ॒मम् । प्र॒ऽत॒रम् । कृ॒धि॒ । स॒ऽजा॒ताना॑म् । अ॒स॒त् । व॒शी ।
रा॒यः । पोषे॑ण । सम् । सृ॒ज॒ । जी॒वात॑वे । ज॒रसे॑ । न॒य॒ ॥ २ ॥

हे इन्द्र इमं यजमानं प्रतरम् प्रवृद्धतरं कृधि कुरु । सजातानाम् समानजन्मनां भ्रातॄणां मध्ये वशी वशयिता स्वतन्त्रः अधिष्ठाता असत् त्वत्प्रसादाद् भवतु । अपि च एनं रायस्पोषेण धनसमूहेन संसृज संयोजय । 'ऊडिदंपदादि' (पा ६,१,१७१) इति रायो विभक्तिरुदात्ता । 'षष्ठ्याः पतिपुत्र' (पा ८,३,५३) इति विसर्जनीयस्य सत्वम् । तद् एतत् सर्वं सति जीवने इत्याशयेनाह — जीवातवे इति । जीवातुर्जीवनौषधम् । जीव प्राणधारणे इत्यस्मात् 'जीवेरातुः' (पाउ १,७८) इति आतुप्रत्ययः । चिरजीवननिमित्ताय जरसे जरायै इमं यजमानं नय प्रापय । 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वाच्चतुर्थी । जरापर्यन्तम् अखण्डितम् आयुषो दैर्घ्यं प्रापयेत्यर्थः ।

---

१. 'मुत्तरां मा १७,५० तै ४,६,३,१ काठ १८,३. २. घृतेनाहुत मा. तै. मै २,१०,४ गा. Wh.; घृतेनाहुतः काठ.; घृतैभिराहुतः पै १९,३,१३. ३. धनेन च तै. ४. तैद्रु. मंगा. द. ५. प्रतरां मा१७,५१ तै. ६. नेय मा. मै.

यस्यं कृण्मो[१] हविर्गृहे तमंग्ने वर्धया त्वम् ।
तस्मैं सोमो[२] अधिं ब्रवदयं[३] च ब्रह्मणस्पतिः ॥ ३ ॥

यस्यं । कृण्मः । हविः । गृहे । तम् । अग्ने । वर्धय । त्वम् ।
तस्मैं । सोमः । अधिं । ब्रवत् । अयम् । च । ब्रह्मणः । पतिः ॥ ३ ॥

यस्य यजमानस्य गृहे चरुपुरोडाशादिलक्षणं हविः देवार्थं कृण्मः कुर्मः । कृवि हिंसाकरणयोश्च । 'धिन्विकृण्व्योर च' (पा ३,१,८०) इति उप्रत्ययः । 'लोपश्चास्यान्यतरस्यां म्वोः' (पा ६,४,१०७) इति उकारलोपः । हे अग्ने त्वं तं यजमानं वर्धय समृद्धं कुरु । तस्मै यजमानाय सोमो देवः अधि ब्रवत् अधिब्रवीतु । अधिवचनं पक्षपातेन वचनम् । अस्मदीयोऽयम् इत्यनुगृह्णातु इत्यर्थः । अयं च ब्रह्मणस्पतिः वेदस्याधिष्ठाता[४] एतत्संज्ञो देवः अधिब्रवीतु ।

योई३स्मान्[५] ब्रह्मणस्पतेदेंवो अभिमन्यंते[६] ।
सर्वं तं रन्धयासि मे[७] यजमानाय सुन्वते ॥ १ ॥

यः । अस्मान् । ब्रह्मणः । पते । अदेवः । अभिऽमन्यते ।
सर्वम् । तम् । रन्धयासि । मे । यजमानाय । सुन्वते[८] ॥ १ ॥

हे ब्रह्मणस्पते अदेवः निर्देवो यः शत्रुः अस्मान् अभिमन्यते अभिहन्तव्यान् जानाति । अभिपूर्वो मन्यतिर्हिंसार्थे । यथा — 'न तत्र रुद्रः पशून् अभिमन्यते' (तैसं ३,१,९,६) इति । तं सर्वं शत्रुं सुन्वते सोमाभिषवं कुर्वते मे मह्यं यजमानाय मदीयाय वा रन्धयासि रन्धय वशीकुरु 'रध्यतिर्वशगमने' (नि १०,४०) इति यास्कः । रध हिंसासंराद्धयोः । अस्मात् ण्यन्तात् लेटि आडागमः । 'रधिजभोरचि' (पा ७,१,६१) इति नुम् । 'शतुरनुमः' (पा ६,१,१७३) इति सुन्वच्छब्दात् परा विभक्तिरुदात्ता ।

यो नः सोम सुशंसिनों[९] दुःशंस आदिदेंशति[१०] ।
वज्रेणास्य मुखें जहि स संपिंष्टो अपायति ॥ २ ॥

यः । नः । सोम । सुऽशंसिनः । दुःऽशंसः । आऽदिदेशति ।
वज्रेण । अस्य । मुखे । जहि । सः । सम्ऽपिंष्टः । अपं । अयति ॥ २ ॥

---

१. कुर्मो मा १७,५२ तै ४,६,३,१ मै २,१०,४ काठ १८,३. २. देवा मा. तै. मै. काठ. ३. ब्रवन्नयं तै.; ब्रुवन्नयं मा. मै. काठ.; ब्रुवदयं पै १९,३,१५. ४. देवस्याधि° S'. ५. योऽस्मान् B.V. ६. अभिदासति पै १९,३,१०. ७. रीरिसि? नः पै. ८. सुन्वते P[२]. ९. सुमंशिनों मूको. (तु. सांस. Wh.). १०. अभिदासति पै १९,२,८.

हे सोम यो दुःशंसः दुष्टाभिशंसनः दुष्टाभिप्रायः शत्रुः सुशंसिनः शोभनाशंसान् नः अस्मान् आदिदेशति आदिशति निष्ठुरभाषणेन न्यक्करोति । आङ्पूर्वाद् दिशेः परस्य विकरणस्य व्यत्ययेन श्लुः । पुनश्च शप् । अस्य शत्रोर्मुखे वज्रेण वर्जकेन आयुधेन जहि ताडय । स शत्रुः संपिष्टः वज्राघातेन चूर्णीभूतः सन् अपायति अपगच्छतु ।

यो नः सोमाभिदासति[1] सनाभिर्यश्च[2] निष्ट्यः[3] ।
अप[4] तस्य बलं तिर महीव द्यौर्वधत्मना[5] ॥ ३ ॥

यः । नः । सोम । अभिऽदासति । सऽनाभिः । यः । च । निष्ट्यः ।
अप । तस्य । बलम् । तिर । महीऽइव । द्यौः । वधत्मना ॥ ३ ॥

हे सोम यः शत्रुः सनाभिः समानजन्मा दायादः नः अस्मान् अभिदासति उपक्षपयति । यश्च निष्ट्यः निकृष्टः शत्रुः अस्मान् बाधते । तस्य बलम् अप तिर अपजहि । तत्र दृष्टान्तः — महीवेति । यथा मही महती द्यौः वधत्मना वधः[6] हन्यन्ते अनेन जना इति । अशनिर्वधः । 'हनश्च वधः' (पा ३,३,७६) इति अप् तत्संनियोगेन वधादेशश्च । 'मन्त्रेष्वाङ्यादेरात्मनः' ( पा ६,४,१४१ ) इति आत्मन आकारलोपः । वधात्मना अशनिरूपेण आयुधेन निहन्ति । तथा वज्रेण तस्य बलं वृश्चेत्यर्थः ।

इति तृतीयं सूक्तम् ।

'येन सोम' इति तृचेन यागविघ्नशमनार्थं सरूपवत्सायाः[7] गोः क्षीरे पक्वं पायसं संपात्य अभिमन्त्र्य अश्नीयात् ।

तथा अयाज्ययाजनदोषशमनार्थं च यागसमाप्त्यनन्तरं चरुणा सोमं यजेत । सूत्रितं हि—" 'येन सोम' (अ ६,७) इति याजयिष्यन् सारूपवत्सम् अश्नाति । निधने यजते ।" (कौसू ४६,४;५) इति ।

'यथा वृक्षं लिबुजा' इति तृचेन स्त्रीवशीकरणकर्मणि वृक्षत्वक्शरखण्डतगराञ्जनकुष्ठादिद्रव्याणि पेषयित्वा आज्येन आलोड्य स्त्रिया अङ्गम् अनुलिम्पेत् । सूत्रितं हि—" 'यथा वृक्षम्' ( अ ६,८ ), 'वाञ्छ मे' (अ ६,९), 'यथायं वाहः' (अ ६,१०२) इति गंगृष्टयोः शलिबुजयोः "शकल्यावन्तेरेषुर्तगराञ्जनकुष्ठमधुघरेष्ममथिततृणम् आज्येन संनीय संस्पृशति" ( कौसू ३५,२१ ) इति ।

येन सोमादितिः पथा मित्रा वा यन्त्यद्रुहः ।
तेना[10] नोऽवसा[11] गहि[12] ॥ १ ॥

---

१. इन्द्राग्नि° ऋ १०,१३३,५. २. यश्च निष्ट्याः पै १९,२,९. ३. अव ऋ. ४. °धेव त्मना RW.; °व त्मना ऋ. ५. यथा S'. ६. सारूप° S'. ७. °रेणेषु° शंत. ८. °पुष्पकरा° Bl. ९. °मद्रुघ° Bl. १०. तेना K,Km,Bb,V. ११. नो ऽरिष्या पै १९,२,७. १२. भुवः पै.

येन॑ । सो॒म॒ । अदि॑तिः । प॒था । मि॒त्राः । वा॒ । यन्ति॑ । अ॒द्रुहः॑ ।
तेन॑ । नः॒ । अव॑सा । आ । ग॒हि॒ ॥ १ ॥

हे सोम येन पथा मार्गेण देवयानाख्येन अदितिः अखण्डनीया एतत्संज्ञा देवमाता मित्रा वा । वाशब्दः चार्थे । बहुवचनाद् आद्यर्थलाभः। मित्राद्याश्च तत्पुत्रा द्वादशादित्याः यन्ति संचरन्ति । कुतो हेतोः संचरन्ति तत्राह — यतस्ते अद्रुहः अद्रोग्धारः अनुग्रहशीलाः । तस्माज्जगदनुग्रहार्थं तेषां पर्यटनं युक्तम् इत्यर्थः। तेन मार्गेण नः अस्मान् अवसा रक्षणेन सह आ गहि आगच्छ । गमेर्लोटि शपो लुक् । 'अनुदात्तोपदेश' (पा ६,४,३७) इत्यादिना अनुनासिकलोपः । तस्य 'असिद्धवदत्राभात्' (पा ६,४,२२) इति असिद्धत्वात् 'अतो हेः' (पा ६,४,१०५) इति लुक् न भवति।

येन॑[1] सोम साह॒न्त्यासु॑रान् र॒न्धया॑सि नः ।
तेना॑ नो॒ 'अधि॑ वोचत[2] ॥ २ ॥

येन॑ । सो॒म॒ । सा॒ह॒न्त्य॒ । असु॑रान् । र॒न्धया॑सि । नः॒ ।
तेन॑ । नः॒ । अधि॑ । वो॒च॒त॒ ॥ २ ॥

हे सोम साहन्त्य । षह अभिभवे इत्यस्माद् औणादिको झिच्प्रत्ययः (उ. पाउ ३,५०)। सहन्तिः सोढा अभिभविता । तत्र भवः साहन्त्यः । 'पाथोनदीभ्यां ड्यण्' (पा ४,४,१११) इति बाहुलकाद् अस्मादपि द्रष्टव्यः । ईदृश हे सोम येन बलेन नः अस्मदर्थम् असुरान् रन्धयासि वशीकरोषि । अभिभवसीत्यर्थः । तेन बलेन नः अस्मभ्यम् अधि वोचत। अधिवचनं पक्षपातेन वचनम् । 'अस्यतिवक्ति' (पा ३,१,५२) इत्यादिना च्लेः अङ् आदेशः। 'वच उम्' (पा ७,४,२०) इति उम् आगमः।

येन॑ दे॒वा असु॑राणा॒मोजां॒स्यवृ॑णीध्वम् ।
तेना॑ नः॒ शर्म॑ यच्छत ॥ ३ ॥

येन॑ । दे॒वाः॒ । असु॑राणाम् । ओजां॑सि । अवृ॑णीध्वम् ।
तेन॑ । नः॒ । शर्म॑ । य॒च्छ॒त॒ ॥ ३ ॥

हे देवाः येन आत्मीयेन बलेन असुराणाम् सुरविरोधिनां क्षेपणशीलानां वा शत्रूणाम् ओजांसि बलानि अवृणीध्वम् ततः पृथक्कृत्य यूयं संभक्तवन्तः तेन बलेन नः अस्मभ्यं शर्म सुखं यच्छत प्रयच्छत । दाण् दाने । शपि 'पाघ्रा' (पा ७,३,७८) इत्यादिना यच्छादेशः।

---

१. येभिस् पै १९,३,११.	२. अविता भुवः पै.

यथा वृक्षं लिबुजा समन्तं परिषस्वजे ।
एवा परि ष्वजस्व मां यथा मां कामिन्यसो यथा मन्नापगा असः ॥ १ ॥

यथा । वृक्षम् । लिबुजा । समन्तम् । परिऽसस्वजे । एव । परि । स्वजस्व । माम् । यथा । माम् । कामिनी । असः । यथा । मत् । न । अपऽगाः[1] । असः ॥ १ ॥

लिबुजा । 'लिबुजा व्रततिर्भवति' (नि ६,२८) इति यास्कः । यथा ताम्बूलादिवल्ली स्वाश्रयं वृक्षं समन्तम् सर्वतः परिषस्वजे आश्लिष्यति । ष्वञ्ज परिष्वङ्गे । अस्मात् छान्दसो लिट् । 'श्रन्थिग्रन्थिदन्भिस्वञ्जीनामिति वक्तव्यम्' (पावा १,२,६) इति लिटः कित्वाद् अनुनासिकलोपः । हे जाये एव एवं मां परि ष्वजस्व आश्लिष्य । यथा येन प्रकारेण मा कामिनी कामयमाना असः भवेः यथा च मत् मम सकाशाद् अपगाः अपगन्त्री च नासः न भवसि । तथाहं त्वाम् अनेन प्रयोगेण वशीकरोमीत्यर्थः ।

यथा सुपर्णः प्रपतन् पक्षौ निहन्ति भूम्याम् ।
एवा नि हन्मि ते मनो यथा मां कामिन्यसो यथा मन्नापगा असः ॥ २ ॥

यथा । सुऽपर्णः । प्रऽपतन् । पक्षौ[2] । निऽहन्ति । भूम्याम् ।
एव । नि । हन्मि । ते । मनः । यथा । माम् । कामिनी । असः । यथा ।
मत् । न । अपऽगाः[1] । असः ॥२॥

यथा सुपर्णः गरुत्मान् प्रपतन् स्वावासस्थानाद् उत्तिष्ठन् भूम्यां स्वकीयौ पक्षौ निहन्ति वीजनवेगेन ताडयति हे योषित् एव एवमेव ते त्वदीयं मनः हृदयं निहन्मि नितरां पीडयामि । अस्मद्वशं करोमीत्यर्थः । यथा माम् इत्यादि पूर्ववद् वाक्यशेषस्य योजना ।

यथेमे द्यावापृथिवी सद्यः पर्येति[3] सूर्यः ।
एवा पर्येमि ते मनो यथा मां कामिन्यसो यथा मन्नापगा असः ॥ ३ ॥

यथा । इमे इति । द्यावापृथिवी इति । सद्यः । परिऽएति । सूर्यः ।
एव । परि । एमि । ते । मनः । यथा । माम् । कामिनी । असः ।
यथा । मत् । न । अपऽगाः[1] । असः ॥ ३ ॥

---

१. °गा P,P³,J,Cp. तु. पृ १६५, टि १; पृ २५४, टि ९ च. २. पक्ष्यौ P; पक्षौ J; पक्षो P². ३. पर्यैति K,Kᵐ,Bᵇ,V.

इमे परिदृश्यमाने द्यावापृथिवी दिवं च पृथिवीं च यथा सूर्यः सर्वस्य प्रेरको भास्करः सद्यः शीघ्रं पर्येति परितो व्याप्नोति एव एवं हे योषित् ते त्वदीयं मनः अहं पर्येमि परितः प्राप्नोमि। यथा माम् इत्यादि व्याख्यातम्।

इति चतुर्थं सूक्तम्।

'वाञ्छ मे' इति तृचस्य 'यथा वृक्षं लिबुजा' (अ ६,८) इति तृचवद् विनियोगो द्रष्टव्यः। सूत्रं च तत्रैवोदाहृतम्।

'पृथिव्यै श्रोत्राय' इति तृचेन सर्वसंपत्कर्मसु आज्यं जुहुयात्। "'पृथिव्यै श्रोत्राय' (अ ६,१०) इति जुहोति" (कौसू १२,३) इति सूत्रितत्वात्।

वाञ्छं मे तन्वं[1] पादौ वाञ्छाक्ष्यौ[2] वाञ्छं सक्थ्यौ।
अक्ष्यौ वृषण्यन्त्याः केशा मां ते कामेन शुष्यन्तु[3] ॥१॥

वाञ्छं। मे। तन्वम्। पादौ। वाञ्छं। अक्ष्यौ। वाञ्छं। सक्थ्यौ।
अक्ष्यौ। वृषण्यन्त्याः। केशाः। माम्। ते। कामेन। शुष्यन्तु[4] ॥ १ ॥

हे कामिनि मे मम तन्वम् शरीरं वाञ्छ कामयस्व। वाछि इच्छायाम् इति धातुः। तथा मदीयौ पादौ वाञ्छ इच्छ। अक्ष्यौ मदीये अक्षिणी सक्थ्यौ सक्थिनी च वाञ्छ कामयस्व। मत्परतन्त्रा भवेत्यर्थः। 'ई च द्विवचने' (पा ७,१,७७) इति ईकारः। तत्पारतन्त्र्यम् आत्मनः आविष्करोति — अक्ष्यौ इति। वृषण्यन्त्याः वृषाणं सेचनसमर्थं युवानम् आत्मन इच्छन्त्याः कामिन्यास्ते तव अक्ष्यौ अक्षिणी केशाः च लावण्यातिशयेन कामेन चित्तविकारेण मां शुष्यन्तु शोषयन्ति। परितापयन्तीत्यर्थः। अतो वाञ्छेति संबन्धः।

मम[5] त्वा दोषणिश्रिषं[6] कृणोमि हृदयश्रिषम्[7]।
यथा मम क्रतावसो मम चित्तमुपायसि ॥ २ ॥

मम। त्वा। दोषणिऽश्रिषम्। कृणोमि। हृदयऽश्रिषम्[8]।
यथा। मम। क्रतौ। असः। मम। चित्तम्। उपऽआयसि ॥ २ ॥

हे कामिनि त्वा त्वां मम दोषणिश्रिषम् बाहौ आसक्तां हृदयश्रिषम् हृदयासक्तां च कृणोमि करोमि। श्रिष[श्लिष?]आलिङ्गने इत्यस्मात् कर्तरि क्विप्। 'पद्दन्'

---

१. तन्वं३ A,B,B^h. २. °क्ष्यौ२ A,R,S^m. ३. शुष्येताम् पै २,९०,२.
४. शुष्यतु P. ५. मयि पै २,९०,३. ६. दोषणिस्पृशं पै. ७. हृदयस्पृशम् पै.
८. °श्रियम् P.

( पा ६,१,६३ ) इत्यादिना दोःशब्दस्य दोषन्नादेशः । 'तत्पुरुषे कृति बहुलम्' ( पा ६,३,१४ ) इति सप्तम्या अलुक् । यथा येन प्रकारेण मम क्रतौ मदीये संकल्पे असः तत्परतन्त्रा भवसि यथा च मम मदीयं चित्तम् उपायसि उपगच्छसि । मदधीना भवसीत्यर्थः ।

यासां नाभिरारेहणं हृदि संवननं कृतम् ।
गावो घृतस्य मातरोऽमूं सं वानयन्तु मे ॥ ३ ॥

यासाम् । नाभिः । आऽरेहणम् । हृदि । सम्ऽवननम् । कृतम् ।
गावः । घृतस्य । मातरः अमूम् । सम् । वनयन्तु । मे ॥ ३ ॥

यासां स्त्रीणां नाभिः नाभ्युपलक्षितम् अङ्गम् आरेहणम् आलेहनम् आस्वादनीयं भवति यासां च हृदि हृदये संवननम् संभजननिमित्तं वशीकरणं कृतम् विधात्रा निर्मितं ता अमूः[1] परिदृश्यमानाः स्त्रीः घृतस्य घृतोपलक्षितस्नेहद्रव्यस्य मातरः निर्मात्र्यो गावः मे मह्यं सं वनयन्तु वशीकुर्वन्तु ।

पृथिव्यै श्रोत्राय वनस्पतिभ्योऽग्नयेऽधिपतये स्वाहा ॥१॥

पृथिव्यै । श्रोत्राय । वनस्पतिऽभ्यः । अग्नये । अधिऽपतये । स्वाहा ॥ १ ॥

पृथिव्यै पृथिवीदेवतायै श्रोत्राय शब्दग्रहणसाधनभूताय इन्द्रियाय । 'दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्' ( ऐआ २,४,२ ) इति श्रुतेस्तस्य दिगात्मकत्वाद् दिशां च पृथिव्येकदेशसंयोगित्वात् पृथिवीश्रोत्रयोर्मिथः संबन्धः । वनस्पतिभ्यः पृथिव्याम् अवस्थितेभ्यो वृक्षेभ्यः तदधिष्ठातृदेवताभ्यः ईदृश्याः पृथिव्या योऽग्निरधिपतिः तस्मै च स्वाहा इदं हविः स्वाहुतम् अस्तु ।

प्राणायान्तरिक्षाय वयोभ्यो वायवेऽधिपतये स्वाहा ॥ २ ॥

प्राणाय । अन्तरिक्षाय । वयःऽभ्यः । वायवे । अधिऽपतये । स्वाहा ॥ २ ॥

मुखनासिकाभ्यां संचरन् वायुः प्राणः । तत्सहचरं गन्धग्राहकम् इन्द्रियं तदाश्रयभूता नासिका च प्राणशब्देन विवक्ष्यते । 'वायुः प्राणो भूत्वा नासिके प्राविशत्' ( ऐआ २,४,२ ) इति हि श्रुतम् । तस्मै प्राणाय तत्संबन्धिने अन्तरिक्षाय तत्र ये संचरन्ति वयांसि पक्षिणस्तेभ्यो वयोभ्यः तस्यान्तरिक्षस्य अधिपतये अधिष्ठात्रे वायवे च इदं हविः स्वाहा स्वाहुतम् अस्तु ।

दिवे चक्षुषे नक्षत्रेभ्यः सूर्यायाऽधिपतये स्वाहा ॥ ३ ॥

---

[1] पैप्पु मन. इ.

दिवे । चक्षुषे । नक्षत्रेभ्यः । सूर्याय । अधिऽपतये । स्वाहा ॥ ३ ॥

दिवे द्युलोकाय चक्षुषे । रूपग्रहणसाधनम् इन्द्रियं चक्षुः तद्गोलकं च तस्मै । 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' (ऐआ २,४,२) इति श्रुतेः । तस्य आदित्यात्मकत्वात् द्युलोकस्य च तत्संचारस्थानत्वात् अनयोः संबन्धः । नक्षत्रेभ्यः द्युलोकस्थेभ्यः ईदृश्या दिवः अधिपतये स्वामिने सूर्याय प्राणात्मना सर्वप्राणिनां प्रेरकाय दिवाकराय स्वाहा इदं हविः स्वाहुतम् अस्तु । 'राजसूयसूर्य' (पा ३,१,११४) इत्यादिना सुवतेः क्यपि निपातनाद् रूपसिद्धिः । तस्य च जगत्प्राणरूपता अन्यत्र श्रूयते — 'योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति' (तैआ १,१४,१) इति ।

इति पञ्चमं सूक्तम् ।

इति सायणार्यविरचिते अथर्ववेदार्थप्रकाशे षष्ठकाण्डे प्रथमोऽनुवाकः ।

द्वितीयेऽनुवाके पञ्च सूक्तानि । तत्र 'शमीमश्वत्थः' इति प्रथमं सूक्तम् । तत्र आद्येन तृचेन पुंसवनकर्मणि शमीगर्भाश्वत्थाग्निं मधुमन्थे प्रक्षिप्य अभिमन्त्र्य स्त्रियं पाययेत् ।

तथा तस्मिन्नेव कर्मणि तथाविधमेवाग्निं कृष्णोर्णया[1] वेष्टयित्वा अनेन तृचेन संपात्य अभिमन्त्र्य स्त्रिया बध्नीयात् ।

आह च कौशिकः । "'शमीमश्वत्थः' (अ ६,११,१) इति मन्त्रोक्ते अग्निं मथित्वा पुंस्याः सर्पिषि पैज्वमिव[2] । मधुमन्थे पाययति । कृष्णोर्णाभिः परिवेष्टच[3] बध्नाति" (कौसू ३५,८-१०) इति ।

'परि द्यामिव' (अ ६,१२) इति तृचेन सर्पविषभैषज्यकर्मणि मधुक्रीडम् अभिमन्त्र्य विषावृतं पाययेत् ।

तथा तस्मिन्नेव कर्मणि अनेन तृचेन 'ब्राह्मणो जज्ञे' (अ ४,६) इति सूक्तोक्तजपाचमनादीनि कर्माणि कुर्यात् ।

"'परि द्यामिव' (अ ६,२१) इति मधु शीभं[4] पाययति । जपादींश्च[5]" (कौसू २९, २८;२९) इति कौशिकसूत्रम् ।

शमीमश्वत्थ आरूढस्तत्र पुंसुवनं[6] कृतम् ।
[7]तद् वै पुत्रस्य वेदनं तत् स्त्रीष्वा भरामसि[7] ॥ १ ॥

शमीम् । अश्वत्थः । आऽरूढः । तत्र । पुम्ऽसुवनम्[6] । कृतम् ।
तत् । वै । पुत्रस्य । वेदनम् । तत् । स्त्रीषु । आ । भरामसि ॥ १ ॥

---

१. कृष्णो° S'. २. पैद्वमि° Bl. ३. °वेष्ट्य S'. ४. °शीबं S'. ५. जपंश्च Bl. ६. °सुवनं > °सवनं B^b; °सवन K,K^m,V, सा. पं १९,१२,१. ७. तदेव तस्य भेषजं यत् स्त्रीष्वाहरन्ति तत् पै.

शमीम् एतत्संज्ञं वृक्षम् अश्वत्थ. अश्वत्थाख्यो वृक्ष आरूढः अधिरूढः। अग्निदाहशमनहेतुर्वृक्षः शमी। 'प्रजापतिरग्निमसृजत। सोऽबिभेत् प्र मा धक्ष्यतीति। तं शम्यागमयत्। तच्छम्यै शमित्वम्' (तैब्रा १,१,३,११;१२) इति। स च अग्निः अश्वो भूत्वा यस्मिन् वृक्षे पुरा[1] संवत्सरम् अवात्सीत् स वृक्षः अश्वत्थः। 'सुपि स्थः' (पा ३,२,४) इति अश्वशब्दोपपदात् तिष्ठतेः कप्रत्ययः। पृषोदरादिः। श्रूयते हि— 'अग्निर्देवेभ्यो निलायत। अश्वो रूपं कृत्वा। सोऽश्वत्थे संवत्सरम् अतिष्ठत्। तद् अश्वत्थस्याश्वत्थत्वम्' (तैब्रा १,१,३,९) इति। तद् अयमर्थः। शमी स्त्री। अश्वत्थः पुमान्। स च अग्निलक्षणं पुत्रम् उत्पादयितुं ताम् अधिरूढः। तस्या उपरि उत्पन्न इत्यर्थः। ईदृशाद् अश्वत्थाद् अग्निमन्थनार्थम् अरण्योराहरणम्। तथा च श्रुतम्— 'शमीगर्भाद् अग्निं मन्थति। एषा वा अग्नेर्यज्ञिया तनूः। तामेवास्मै जनयति' (तैब्रा १,१,९,१) इति। तत्र तादृशे अश्वत्थे पुंसवनम्[2] पुमान् सूयते येन कर्मणा तत् पुंसवनम् तत् कृतम् अनुष्ठितम्। तद् वै तत्. खलु पुत्रस्य वेदनम् लम्भकं तत् पुत्रजननिमित्तं कर्म स्त्रीषु आ भरामसि आहरामः संपादयामः। 'इदन्तो मसि' (पा ७,१,४६) इति।

पुंसि[3] वै रेतो भवति तत् स्त्रियामनु पिच्यते[4]।
तद् वै पुत्रस्य वेदनं तत् प्रजापतिरब्रवीत् ॥ २ ॥

पुंसि। वै। रेतः। भवति। तत्। स्त्रियाम्। अनु। सिच्यते।
तत्। वै। पुत्रस्य। वेदनम्। तत्। प्रजाऽपतिः। अब्रवीत् ॥ २ ॥

पुंसि वै पुरुषे खलु प्रथमं बीजभूतं रेतः आश्रितं भवति। तत् गर्भाधानकर्मणा स्त्रियाम् अनु सिच्यते गर्भाशये प्रक्षिप्यते। तत् वै खलु निषिक्तं रेतः पुत्रस्य वेदनम् उत्पत्स्यमानस्य पुत्रस्य लम्भकम्। 'पुरुषे ह वा अयमादितो गर्भो भवति' (ऐब्रा २,५,१) इत्यादिकमैतरेयकमत्र द्रष्टव्यम्। तद् एतत् पुंसवनं कर्म प्रजापतिः प्रजानां स्रष्टा अब्रवीत्। पुत्रजननोपायत्वेन लोके प्रकाशितवान् इत्यर्थः।

प्रजापतिरनुमतिः[5] सिनीवाल्य चीक्लृपत्।
स्त्रैषूयमन्यत्र[6] दधत्पुमांसमु[7] दधदिह ॥ ३ ॥

प्रजाऽपतिः। अनुऽमतिः। सिनीवाली। अचीक्लृपत्।
स्त्रैऽसूयम्। अन्यत्र। दधत्। पुमांसम्। ऊं इति। दधत्। इह ॥ ३ ॥

---

१. पुराग्निः S'. २. वैदु. मंत्रा. इ. ३. पुंसि Bp[2],P[3],M,W,E[2],H. ४. सिञ्च शौपू १.१६,८ ५. °रन्वमंस्त पै १९,१२ ३. ६. स्त्रीषू° पै.शौपृ; °न्यत्र D. °सम्यात्स्त्वा° (सम्यात्स्वा?) शौपृ. ७ °रमा दधदिह शौपृ.

प्रजापतिः संवत्सरात्मकः अनुमतिः पौर्णमासीदेवता सिनीवाली अमावास्यादेवता च निषिक्तं गर्भाशयस्थं रेतः अचीक्लृपत् हस्तपादाद्यवयवकल्पनया समर्थम् अकार्षीत्। कृपू सामर्थ्ये इत्यस्मात् लुङि रूपम्। किं कुर्वन्। स्त्रैषूयम् स्त्रीप्रसवसंबन्धि निमित्तम् अन्यत्र अस्मत्तो व्यतिरिक्ते स्थाने दधत्[1] स्थापयन् इह अस्मासु पुमांसम् पुमपत्यमेव दधत्[1] कुर्वन्। संवत्सरकालावसाने समर्थम् अकार्षीद् इत्यर्थः।

परि॒ द्यामि॑व॒ सूर्यो॒ऽही॑नां॒ जनि॑मागमम्।
रात्री॑[2] जग॑दिवा॒न्यद्धं॒सात्तेना॑ ते वारये वि॒षम्॥ १॥

परि॑। द्याम्ऽइ॑व। सूर्यः॑। अही॑नाम्। जनि॑म। अ॒ग॒म॒म्।
रात्री॑। जग॑त्ऽइव। अ॒न्यत्। हं॒सात्। तेन॑। ते॒। वा॒र॒ये॒। वि॒षम्॥ १॥

सूर्यो द्यामिव अन्तरिक्षमिव अहीनाम् सर्पाणां जनिम्[1] कृत्स्नं जन्म सर्पकुलम् अहं पर्यागमम्[1] परिप्राप्तवान् अस्मि रात्री जगदिव। 'रात्रेश्चाजसौ' (पा ४,१,३१) इति ङीप्। यथा रात्रिः स्वकीयेन तमसा कृत्स्नं जगद् व्याप्नोति एवम् हंसात् हन्ति गच्छति व्याप्नोतीति हंस आत्मा तस्माद् अन्यत् कृत्स्नं शरीरं यद् विषं व्याप्नोति हे विषग्रस्त ते त्वदीयं तद् विषं तेन प्रसिद्धेन भैषज्येन वारये निवारयामि।

यद् ब्र॒ह्मभि॒र्यदृषि॑भि॒र्यद् दे॒वैर्वि॑दि॒तं पु॒रा[3]।
यद् भू॒तं भव्य॑मास॒न्वत् तेना॑[4] ते वारये वि॒षम्॥ २॥

यत्। ब्र॒ह्मऽभिः॑। यत्। ऋषि॑ऽभिः। यत्। दे॒वैः। वि॒दि॒तम्। पु॒रा।
यत्। भू॒तम्। भव्य॑म्। आ॒स॒न्ऽव॒त्। तेन॑। ते॒। वा॒र॒ये॒। वि॒षम्॥ २॥

यद् भैषज्यं ब्रह्मभिः मन्त्रैर्ब्राह्मणैर्वा साध्यं यत् च ऋषिभिः अतीन्द्रियार्थदर्शिभिः अगस्त्यवसिष्ठप्रमुखैः परिज्ञातं यत् च भैषज्यं पुरा पुरातनकाले देवैः इन्द्रादिभिः विदितम् ज्ञातं यत् च भूतम् भूतकालावच्छिन्नं भव्यम् भावि भविष्यत्कालावच्छिन्नम् आसन्वत् आस्ययुक्तम्। तेनोच्चार्यमाणमन्त्रसहितम् इत्यर्थः। 'पद्दन्' (पा ६,१,६३) इत्यादिना आस्यशब्दस्य मतौ आसन् आदेशः। तेन सर्वेण भैषज्येन ते त्वच्छरीरस्थं विषं वारये निवारयामि।

[5]मध्वा॑ पृञ्चे॒[6] न॒द्य१ः॑[6] पर्व॑ता गि॒रयो॒ मधु॑।
मधु॒ परु॑ष्णी॒[7] शीपा॑ला॒ शमा॒स्ने॑[8] अ॑स्तु॒ शं हृ॒दे॥ ३॥

१. वैतु. मंरा. द्र.　　२. रात्री पै १९,४,४.　　३. देवैरदितं पुरा पै १९,४,५.
४. तेन पै.　　५. अभि न मावृश्चि पै १९,४,६.　　६. नद्य३ः K,S^m; नद्यौ१ K.
७. पृष्टीन् पै १९,४,६.　　८. °स्ते B,K,K^m,R,P,P^2,J

मध्वा । पृञ्चे । नद्यः । पर्वताः । गिरयः । मधु ।
मधु । परुष्णी । शीपाला । शम् । आस्ने । अस्तु । शम् । हृदे ॥ ३ ॥

मधु[1] मधुरं विषहरम् अमृतम् आ[1] पृञ्चे आ समन्तात् त्वच्छरीरे संपृक्तं करोमि । पृची संपर्के । नद्यः गङ्गाद्याः पर्वताः हिमवदाद्या महाशैलाः गिरयः पर्यन्तपर्वताश्च विषहरं मधु त्वच्छरीरे आसिञ्चन्तु इति विशेषतो विषहरत्वात् प्रार्थ्यते । परुष्णी नाम नदी शीपाला[2] शीपालः शैवालं तद्युक्ता । मत्वर्थीयः अकारः । ईदृशी परुष्णी नाम नदी मधु आसिञ्चतु । ईदृशं मधु विषहरम् अमृतम् आस्ने आस्याय शम् सुखकरम् अस्तु । पूर्ववद् आस्यशब्दस्य आसन् आदेशः । हृदे हृदयाय च शम् सुखकरम् अस्तु ।

इति षष्ठकाण्डे द्वितीयानुवाके प्रथमं सूक्तम् ।

'नमो देववधेभ्यः' (अ ६,१३) इति तृचेन जयकामः स्वसेनां परितः प्रतिदिशम् उपस्थानं कुर्यात् । "'नमो देववधेभ्यः' इत्युपतिष्ठते" (कौसू. १४,२५) इति हि सूत्रम् ।

तथा वैद्यस्य संग्रामजयार्थं प्रहरणोद्यतान् शत्रून् पश्यन् एनं तृचं जपेत् ।

तथा अनेनैव तृचेन आज्यहोमं सक्तुहोमं धनुरिध्मेऽग्नौ धनुःसमिदाधानं शरध्मे शरसमिदाधानं संपातिताभिमन्त्रितधनुःप्रदानं च कुर्यात् ।

"'नमो देववधेभ्यः' (अ ६,१३) इत्यन्वाह । वैश्याय प्रदानान्तानि" (कौसू. १५,६;७) इति हि सूत्रम् ।

तथा अनेनैव तृचेन सर्पवृश्चिकादिभयनिवृत्तिकामः 'येऽस्यां स्थ' (अ ३,२६) इत्यत्रोक्तानि अभिमन्त्रितसिकताप्रक्षेपणादीनि गुडूचीहोमान्तानि कर्माणि कुर्यात् । सूक्तं च तत्रैव उदाहृतम् ।

तथा आवसथ्याधाने क्रव्यादच्छमनानन्तरं गृहम् आगत्य अनेन तृचेन आज्यं जुहुयात् । सूत्रितं हि— 'ये अग्नयः' (अ ३,२१), 'नमो देववधेभ्यः' (अ ६,१३), 'अग्नेऽभ्यावर्तिन्' (मा १२,७) इत्यादि (कौसू. ७२,१३) ।

तथा अनेन तृचेन ब्राह्मणायुधधारणदेवताप्रतिमानर्तनहसनाद्यद्भुतेषु तच्छान्त्यर्थम् आज्यहोमं कुर्यात् । सूत्रितं हि— 'अथ यत्रैतद् ब्राह्मणा आयुधिनो भवन्ति' इति प्रक्रम्य 'मा नो विदन्' (अ १,१९), 'नमो देववधेभ्यः' (कौसू. १०४,१-२) इति ।

तथा यज्ञे वपापुरोडाशादिहविःषु काकोलूकश्वादिभिर्दूषितेषु सत्सु तत्प्रायश्चित्तार्थम् अनेन तृचेन आज्यं जुहुयात् । सूत्रितं हि— "अथ यत्रैतद् वपां वा हवींषि वा वयांसि श्वानो वा अभिमृश्य गच्छेयुः[3] 'ये अग्नयः', 'नमो देववधेभ्यः' इत्येताभ्यां सूक्ताभ्यां जुहुयात् । सा तत्र प्रायश्चित्तिः" (कौसू. १२३,१;२) इति ।

---

१. पैप्पु. मंग. ह. २. शापाला S'. ३. भवगच्छेयुः Bl.

'अस्थिस्रंसम्' (अ ६,१४) इति तृचेन श्लेष्मभैषज्यकर्मणि संपातिताभिमन्त्रितवृक्षशकलेन सह व्याधितम् अवसिञ्चेद् मार्जयेद् आचामयेच्च । "'अस्थिस्रंसम्' इति शकलेन अप्सु[1] संपातवतावसिञ्चति" (कौसू. २९,३०) इति।

नमो॑ देवव॒धेभ्यो॒ नमो॑ राजव॒धेभ्यः॑ ।
अथो॒ ये विश्या॑नां[2] व॒धास्तेभ्यो॑ मृत्यो॒ नमो॑ऽस्तु ते ॥ १ ॥

नमः॑ । दे॒व॒ऽव॒धेभ्यः॑ । नमः॑ । रा॒ज॒ऽव॒धेभ्यः॑ ।
अथो॒ इति॑ । ये । विश्या॑नाम् । व॒धाः । तेभ्यः॑ । मृ॒त्यो॒ इति॑[3] । नमः॑ । अ॒स्तु॒ । ते॒ ॥ १ ॥

देववधेभ्यः देवानाम् इन्द्रादीनां वधाः हननसाधनानि आयुधानि । तेभ्यो नमोऽस्तु । यथा तेऽस्मान् परिहरन्ति तथा तांस्तोषयाम इत्यर्थः । 'नमःस्वस्ति'' (पा २,३,१६) इति चतुर्थी । यद्वा हे मृत्यो तुभ्यं नमोस्तु । कस्माद्धेतोः। देववधेभ्यः देवकृतहननेभ्यो रक्षणात् । 'भीत्रार्थानाम्'' (पा १,४,२५) इति पञ्चमी । 'हनश्च वधः' (पा ३,३,७६) इति करणे भावे वा अप्प्रत्ययः तत्संनियोगेन वधादेशश्च । तस्य च अन्तोदात्तत्वाद् उदात्तनिवृत्तिस्वरेण अप उदात्तत्वम् । तथा राजवधेभ्यः राज्ञः संबन्धिभ्य आयुधेभ्यो नमोऽस्तु । अथो अपि च विश्यानां वैश्यजातीयानां ये वधास्तेभ्यश्च हे मृत्यो ते तुभ्यं च नमोऽस्तु । देववधादीन् अस्मत्तः परिहरेत्यर्थः ।

नम॑स्ते अधिवा॒काय॑ परावा॒काय॑ ते॒ नमः॑ ।
सु॒म॒त्यै मृ॑त्यो ते॒ नमो॑ दुर्म॒त्यै त॑ इ॒दं नमः॑ ॥ २ ॥

नमः॑ । ते॒ । अ॒धि॒ऽवा॒काय॑ । प॒रा॒ऽवा॒काय॑ । ते॒ । नमः॑ ।
सु॒ऽम॒त्यै । मृ॒त्यो॒ इति॑ । ते॒ । नमः॑ । दुः॒ऽम॒त्यै । ते॒ । इ॒दम् । नमः॑ ॥ २॥

हे मृत्यो ते तव संबन्धिने अधिवाकाय अधिवचनं पक्षपातेन वचनम् तत् कुर्वते शोभनाय दूताय नमः । तथा ते त्वदीयाय परावाकाय पराभवस्य वक्त्रे पराभववचनायैव वा नमोऽस्तु । हे मृत्यो ते तव सुमत्यै शोभनायै अनुग्रहात्मिकायै बुद्ध्यै नमोऽस्तु । ते तव संबन्धिन्यै दुर्मत्यै निग्रहबुद्ध्यै इदं क्रियमाणं नमोऽस्तु ।

नम॑स्ते यातु॒धाने॑भ्यो॒ नम॑स्ते भेष॒जेभ्यः॑ ।
नम॑स्ते मृत्यो॒ मूले॑भ्यो[4] ब्राह्म॒णेभ्य॑ इ॒दं नमः॑ ॥३॥

---

१. अप्स्विटे Bl. २. विष्यांणां A,B; विश्यानां पै १९,५,१ [मूको.]. ३. मृत्यो इति P. ४. मूले॑भ्यो सान॰.

नमः । ते । यातुऽधानेभ्यः । नमः । ते । भेषजेभ्यः ।
नमः । ते । मृत्यो इति । मूलेभ्यः । ब्राह्मणेभ्यः । इदम् । नमः ॥ ३ ॥

हे मृत्यो ते तव संबन्धिभ्यो यातुधानेभ्यः पीडाकरेभ्यो नमोस्तु । ते तव संबन्धिभ्यो भेषजेभ्यः रक्षाकरेभ्यश्च नमः । हे मृत्यो ते तव संबन्धिभ्यो मूलेभ्यः मूलवत्प्रभूतेभ्यः पुरुषेभ्यो नमोस्तु । तथा ब्राह्मणेभ्यः शापानुग्रहसमर्थेभ्यो वेदविद्भ्यः इदं नमोस्तु ।

अस्थिस्रंसं परुस्रंसमास्थितं हृदयामयम् ।
बलासं सर्वं नाशयाङ्गेष्ठा यश्च पर्वसु ॥ १ ॥

अस्थिऽस्रंसम् । परुःऽस्रंसम् । आऽस्थितम् । हृदयऽआमयम् ।
बलासम् । सर्वम् । नाशय । अङ्गेऽस्थाः । यः । च । पर्वऽसु ॥ १ ॥

अस्थिस्रंसम् श्लेष्मरोगेण अस्थ्नां स्रंसनम् । परुस्रंसम् परुषां पर्वणां शरीरावयवसंधीनां स्रंसनम् । आस्थितम् समन्तात् शरीरं व्याप्य स्थितं हृदयामयम् श्लेष्मकृतं हृद्रोगम् । ईदृशं सर्वम् बलासम् बलम् अस्यति क्षिपतीति बलासः कासश्वासात्मकश्लेष्मरोगः तं नाशय । अनुष्टेयार्थः संबोध्यते । यश्च बलासः अङ्गेष्ठाः हस्तपादाद्यङ्गेष्ववस्थितः । यश्च पर्वसु तत्संधिषु आश्रितः । तं बलासम् इति संबन्धः ।

निर्बलासं बलासिनः क्षिणोमि मुष्करं यथा ।
छिनद्म्यस्य बन्धनं मूलमुर्वार्वा इव ॥ २ ॥

निः । बलासम् । बलासिनः । क्षिणोमि । मुष्करम् । यथा ।
छिनद्मि । अस्य । बन्धनम् । मूलम् । उर्वार्वाःऽइव ॥ २ ॥

बलासिनः श्लेष्मरोगिणः पुरुषस्य बलासम् श्लेष्मरोगं निः निःशेषेण क्षिणोमि क्षयं प्रापयामि । तत्र दृष्टान्तः— पुष्करम्[६] इति । महाह्रदे प्ररूढं पुष्करं यथा समूलम् उच्छिद्यते[७] तथा व्याधितशरीरात् तं रोगं समूलम् उन्मूलयामीत्यर्थः । एतदेव विवियते— अस्य रोगस्य बन्धनम् शरीरसंश्लेषनिमित्तं मूलं छिनद्मि । यथा[९] उर्वार्वाः कर्कट्याः[८] फलस्य परिपक्वस्य वृन्तं स्वयमेव विश्लिष्टं भवति तद्वत् । रोगनिदानम् अनायासेन विश्लेषयामीत्यर्थः । 'उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय' ( ऋ ७,५९,१२ ) इति हि मन्त्रान्तरम् ।

---

१. परुःस्रंस॰ A,E[३],O,R,W. परिस्रंसमास्थिदम् पै १९,१३,७ [गृहो.]. २. निःकृष्यङ्गेष्ठा पै. ३. इणोमि पै १९,१३,८. ४. पुष्करं पै. ५. मूलमुर्वार्वो यथा पै. ६. बेंद्र. मंपा. द्र. ७. उच्छिद्य॰ S'. ८. कर्कर्याः S'.

निर्बलासेतः प्र 'पताशुंगः शिशुको यथा' ।
अथो[1] इर्ट इव हायनोप द्राह्यवीरहा[3] ॥ ३ ॥

निः । बलास । इतः । प्र । पत । आशुंगः । शिशुकः । यथा ।
अथो इर्ति । इर्टःऽइव । हायनः । अर्प । द्राहि । अवीरऽहा ॥ ३ ॥

हे बलास इतः अस्मात् शरीराद् निष्पत निष्क्रम्य प्रकर्षेण दूरं गच्छ। यथा येन प्रकारेण आशुंगः आशुगामी शुशुकः[4] पतत्संज्ञो मृगो दूरं धावति तद्वद् गच्छ । अथो अपि च इत[4] इव हायनः गतः संवत्सरो यथा न पुनरावर्तते तथा अवीरहा अस्मदीयानां वीराणाम् अहन्ता सन् अप द्राहि अपक्रम्य कुत्सितां गतिं गच्छ। द्रा कुत्सितायां गताविति धातुः।

इति षष्ठकाण्डे द्वितीयेऽनुवाके द्वितीयं सूक्तम्।

'उत्तमो असि' इति तृचेन पुष्टिकामः पालाशमणिं वासितं कृत्वा संपात्य अभिमन्त्र्य बध्नीयात्। " 'उत्तमो असि' (अ ६,१५,१) इति मन्त्रोक्तम्। 'अक्षितास्ते' (अ ६,१४२,३) इति यवमणिम् " ( कौसू १९,२६;२७ ) इति कौशिकसूत्रम्।

'आवयो अनावयो[5]' (अ ६,१६) इति चतुर्ऋचेन अक्षिरोगभैषज्ये सार्षपतैलेन संपातितं सर्षपकाण्डमणिम् अभिमन्त्र्य रोगार्तस्य बध्नीयात्।

तथा अनेन चतुर्ऋचेन आज्यं हुत्वा सर्षपकाण्डं संपात्य सार्षपतैलेन अभ्यज्य अभिमन्त्र्य बध्नीयात्।

तथा अनेन चतुर्ऋचेन सार्षपतैलेन भृष्टं सर्षपपत्रशाकं चक्षूरोगग्रस्ताय प्रयच्छेत्।

तथा चत्वारि शाकवृक्षफलानि अभिमन्त्र्य व्याधिताय प्रयच्छेत्।

तथा मूलक्षीरम् अभिमन्त्र्य व्याधितस्य अक्षिणी अञ्ज्यात्।

तथा अनेन चतुर्ऋचेन मूलक्षीरं संपात्य अभिमन्त्र्य भक्षयेत्।

सूत्रितं हि— " 'आवयो' (अ ६,१६) इति [6]सार्षपतैलसंपातं बध्नाति। काण्डं प्रलिप्य। भृष्टं शाकं प्रयच्छति। चत्वारि शाकफलानि प्रयच्छति। क्षीरलेपमङ्क्ते[7]। अश्नाति" (कौसू ३०,१-६) इति।

अत्र 'अलसाला' (अ ६,१६,४) इत्यनया ऋचा अन्नस्वस्त्ययनकामः तिस्रः सस्यवल्लीरभिमन्त्र्य क्षेत्रमध्ये निखनेत्। सूत्रितं हि— " 'अलसाला' इत्यन्नभेषजम्[8]। त्रीणि [9]शालाञ्जालमाण्युर्वरामध्ये निखनति" ( कौसू ५१,१५;१६ ) इति।

---

१. पत सुपर्णो वसतेरिव पै १९,१३,९. २. अथो पै. ३. °वीरहन् पै.
४. वैतु. मरा. द्र. ५. आवयोरनावयो S'. ६. सार्षपं तै° Bl. ७. °लेहमाङ्क्ते Bl.
८. इत्याऽऽरभे° Bl. ९. सिला° Bl.

'उत्तमो अस्योषधीनां' तव वृक्षा उपस्तयः ।
'उपस्तिरस्तु सोऽस्माकं' यो अस्माँ अभिदासति ॥१॥

उत्ऽतमः । असि । ओषधीनाम् । तव । वृक्षाः । उपऽस्तयः ।
उपऽस्तिः । अस्तु । सः । अस्माकम् । यः । अस्मान् । अभिऽदासति ॥ १ ॥

हे पलाशवृक्ष मण्युपादानभूत त्वम् ओषधीनाम् । ओषः पाकः एषु धीयते इति ओषधिशब्देन स्थावरमात्रं विवक्षितम् । स्थावराणाम् ओषधिवनस्पतीनाम् उत्तमः उत्कृष्टः असि सोमपर्णोद्भवत्वात् । 'तृतीयस्याम् इतो दिवि सोम आसीत्' इति प्रक्रम्य तैत्तिरीयके समाम्नातम् — 'तस्य पर्णम् अच्छिद्यत । तत् पर्णोऽभवत् । तत् पर्णस्य पर्णत्वम्' ( तैब्रा १,१,३,१० )। हे पलाशवृक्ष अन्ये वृक्षास्तव उपस्तयः उपासकाः । न्यग्भूता इत्यर्थः । त्वत्प्रसादाद् अस्माकं स तादृशः शत्रुः उपस्तिरस्तु उपासकः उपक्षीणो भवतु । यः शत्रुः अस्मान् अभिदासति उपक्षपयति ।

सबन्धुश्चासबन्धुश्च यो अस्माँ अभिदासति ।
तेषां सा वृक्षाणामिवाहं भूयासमुत्तमः ॥ २ ॥

सऽबन्धुः । च । असबन्धुः । च । यः । अस्मान् । अभिऽदासति ।
तेषाम् । सा । वृक्षाणाम्ऽइव । अहम् । भूयासम् । उत्ऽतमः ॥ २ ॥

सबन्धुः समानबन्धनः समानजन्मा दायादः । असबन्धुः असमानजन्मा असगोत्रजः । य एवमात्मक उभयविधः शत्रुः अस्मान् अभिदासति उपक्षपयति तेषां शत्रूणां मध्ये अहम् उत्तमः उत्कृष्टतमः भूयासम् । तत्र दृष्टान्तः — यथा सा पलाशात्मिका ओषधिः वृक्षाणाम् उत्तमा भवति तद्वद् अहम् उत्तमो भूयासम् इति ।

यथा सोम ओषधीनामुत्तमो हविषां कृतः' ।
तलाशा वृक्षाणामिवाहं भूयासमुत्तमः ॥ ३ ॥

यथा । सोमः । ओषधीनाम् । उत्ऽतमः । हविषाम् । कृतः ।
तलाशा । वृक्षाणाम्ऽइव । अहम् । भूयासम् । उत्ऽतमः ॥ ३ ॥

यथा येन प्रकारेण ओषधीनाम् अन्यासां लतानां मध्ये लतात्मकः सोमः उत्तमः

---

१. त्वमुत्तमास्योषधे ऋ १०,९७,२३ मा १२,१०१. २. उपस्तयः ऋ. मा.
३. उपस्तिरस्माकं भूयाद् पै १९,५,१४. † उपस्तिरस्तु गान³; उपस्तिरस्तु ऋ. मा. ‡ सोऽस्माकं D.K.Km,Sm,V,Cs; सम्पाभावः A.R. ४. °मुत्तमं हविरुच्यते पै १९,५,१६.

उत्कृष्टः हविषाम् चरुपुरोडाशादीनां मध्ये कृतः विधात्रा निर्मितः तथा वृक्षाणां मध्ये पलाश[1] इव च अहं सजातानाम् उत्तमो भूयासम् ।

आबयो[2] अनाबयो[2] रसस्त उग्र आबयो[2] ।
आ ते[3]करम्भमद्मसि[3] ॥ १ ॥

आबयो इति । अनाबयो इति । रसः । ते । उग्रः । आबयो इति ।
आ । ते । करम्भम् । अद्मसि ॥ १ ॥

आबयतिः अत्तिकर्मा । तस्माद् औणादिकः कर्मणि उप्रत्ययः । हे आबयो[1] रोगनिवृत्त्यर्थम् अद्यमान सर्षप अनाबयो[1] अभक्ष्यमाण सर्षपकाण्ड ते तव रसः तैलात्मकः उग्रः उद्गूर्णबलः व्याधिनिवर्तनक्षम इत्यर्थः । हे आबयो[1] ते त्वदीयं करम्भम् सार्षपतैलमिश्रभृष्टं तत्पत्रशाकम् आ अद्मसि मन्त्राभिमन्त्रितम् आदाय भक्षयामः । 'इदन्तो मसि' ( पा ७,१,४६ ) इति ।

विहल्हो[4] नाम ते पिता मदावती नाम ते माता ।
[5]स हिन त्वमसि[5] यस्त्वमात्मानमावयः ॥ २ ॥

विऽहल्हः । नाम । ते । पिता । मदऽवती । नाम । ते । माता ।
सः । हिन । त्वम् । असि । यः । त्वम् । आत्मानम् । आवयः ॥ २ ॥

हे सर्षपशाक ते तव [4]विहल्हाख्यः कश्चित् पिता जनकः । नामशब्दः प्रसिद्धौ । मदावती नाम ते तव माता जननी । स हि[5] स खलु त्वं [5]नासि न भवसि । यस्त्वम् आत्मानम् आत्मीयं स्वरूपं पत्रादिकम् आवयः पुरुषेण भक्षितमकरोः । प्रशस्तमातापितृजन्यत्वाद् आत्मनो हानिं प्राप्यापि परोपकारपरो भवसीत्यर्थः ।

तौविलिकेऽवेलयावायमैलब ऐलयीत् ।
बभ्रुश्च बभ्रुकर्णश्चापेहि निराल[6] ॥ ३ ॥

तौविलिके । अव । इलय[7] । अव । अयम् । ऐलबः[8] । ऐलयीत् ।
बभ्रुः । च । बभ्रुऽकर्णः । च । अप । इहि । निः । आल ॥ ३ ॥

हे तौविलिके एतन्नामिके रोगनिदानभूते पिशाचि अवेलय अवाङ्मुखम्[9] अस्मद्रोगं प्रेरय । इल प्रेरणे इति धातुः । अयम् ऐलबः एतत्संज्ञः तत्कृतश्चक्षुर्गतो रोगविशेषः अवैलयीत् अवस्ताद् गच्छतु । तस्मादेव धातोश्छान्दसो लुङ् । 'णेरनिटि' (पा ३,१,

१. वैतु. मंग. द्र. २. °वयो पै १९,५,७ सा. ३. करम्भमशीमहि पै. ४. विहल्हो RW.; विह्लो पै १९,५,८. ५. साहिंनुस्त्वमसि K; स हि न त्वमसि RW. ६. निराशल R[1]; निशांशल T. ७. तु. W; वैतु. शंपा. D[2] ईलय. ८. एलबः P[3]. ९. °मुखो° S'.

५१) इत्यादिना चङः प्रतिषेधः । ह्यन्तक्षण' (पा ७,२,५) इत्यादिना सिचि वृद्धिनिषेधः । बभ्रुश्च बभ्रुकर्णश्च एतत्संज्ञावुभावपि रोगहेतू तस्माद् रोगिणः पुंसो निर्गच्छताम् । निराल[1] एतत्संज्ञ रोग त्वमपि अवेहि[1] अपगच्छ ।

अलसालासि पूर्वा सिलाञ्जालास्युत्तरा । नीलागलसाला ॥ ४ ॥

अलसाला । असि । पूर्वा । सिलाञ्जाला । असि । उत्तरा । नीलागलसाला[3] ॥ ४ ॥

अलसालेत्याद्यास्तिस्रः संज्ञास्तिसृणां सस्यवल्लीनाम् । तत्र अलसाला नाम काचित् सस्यविशेषस्य मञ्जरी । सा प्रथममुपादीयमानत्वात् पूर्वा । शिलाञ्जालाख्या तु सस्यमञ्जरी उत्तरा अपरा पश्चादुपादीयमानत्वात् । नीलागलसालाख्या तु तृतीया तयोर्मध्यवर्तिनी ।

इति द्वितीयेऽनुवाके तृतीयं सूक्तम् ।

'यथेयं पृथिवी मही' (अ ६,१७) इति तृचेन गर्भदृंहणकर्मणि धनुर्ज्यां त्रिरुद्ग्रथ्य स्त्रियं बध्नीयात्[4] ।

तथा अनेन तृचेन क्षेत्रमृत्तिकाम् अभिमन्त्र्य प्रत्यृचं गर्भिणीं प्राशयेत् । कृष्णसिकता अभिमन्त्र्य गर्भिण्याः शयनं परिकिरेद् वा ।

तथा जन्मग्रहणेऽपि तच्छान्त्यर्थम् अनेन तृचेन धनुर्ज्याबन्धनादीनि कर्माणि कुर्यात् ।

यद् आह कौशिकः — " 'ऋधङ्मन्त्रः' (अ ५,१,१) इत्येका 'यथेयं पृथिवी' (अ ६,१७), 'अच्युता'[5] इति गर्भदृंहणानि । जम्भगृहीताय प्रथमावर्जं[6] ज्यां त्रिरुद्ग्रथ्य बध्नाति । लोष्टान् अनृचं प्राशयति । श्यामसिकताभिः शयनं परिकिरति" (कौसू ३५,१२-१५) इति ।

'ईर्ष्याया ध्राजिम्' (अ ६,१८) इति तृचेन स्त्रीविषयेर्ष्यानिवृत्त्यर्थम् ईर्ष्यापेतं दृष्ट्वा जपेत् । तस्यैव भिक्षां वा प्रयच्छेत् स्पृष्ट्वा वा जपेत् । सूत्रितं हि — " 'ईर्ष्याया ध्राजिम्' (अ ६,१८), 'जनाद् विश्वजनीनात्' (अ ७,४६), 'त्वाष्ट्रेणाहम्' (अ ७,७८,२) इति [7]प्रतिजापप्रदानाभिमर्शनानि" (कौसू ३६,२५) इति ।

यथेयं पृथिवी मही भूतानां गर्भमादधे ।
एवा ते ध्रियतां गर्भो अनु सूतुं सवितवे ॥१ ॥

यथा । इयम् । पृथिवी । मही । भूतानाम् । गर्भम् । आऽदधे ।
एव । ते । ध्रियताम् । गर्भः । अनु । सूतुम् । सवितवे ॥ १ ॥

---

१. बभ्रु. मरा. द्र.
२. नला° S, सा.
३. नीलागलसालेति नीलागलसाला P,Bp[2].
४. त्रियमी° S'.
५. 'अच्युता' इति शाखान्तरीयसूक्तम् दा.; 'अच्युता द्यौः' (कौसू १८,२) इति सूक्तम् के.
६. प्रथमावर्जं S'.
७. °पः प्र° Bl.

यथा मही **महती** इयं **परिदृश्यमाना** पृथिवी भूतानां **भूतजातानां प्राणिनां** गर्भम् आदधे **धारयति । पार्थिवशरीरोपादानभूतं गर्भं दशमासावधि विभर्तीत्यर्थः । हे नारि** ते **तव** गर्भः एव **एवं** ध्रियताम् **गर्भाशये धृतः स्थिरो भवतु । कियत्पर्यन्तम् इत्याह—** अनुसूत्रम्[1] **इति । दशमासभरणेन** अनुसूत्रम्[1] **अनुप्राप्तप्रसवं तं गर्भं** सवितवे **प्रसवितुं प्रजनयितुम् । पूङ् प्राणिगर्भविमोचने । अस्मात् तुमर्थे तवेन्प्रत्ययः ।**

**'यथेयं पृथिवी मही दाधारेमान् वनस्पतीन् । एवा० ॥२॥**

यथा । इयम् । पृथिवी । मही । दाधार । इमान् । वनस्पतीन् । एव ।०॥२॥

**'यथेयं पृथिवी मही दाधार पर्वतान् गिरीन् । एवा ० ॥ ३ ॥**

यथा । इयम् । पृथिवी । मही । दाधार । पर्वतान् । गिरीन् । एव ।०॥३॥

मही **महती** पृथिवी इमान् **परिदृश्यमानान्** वनस्पतीन् **वृक्षान्** दाधार **स्थिरं धारयति । तथा** पर्वतान् **महाशैलान्** गिरीन् । **गिरयस्तत्पर्यन्तवर्तिनः शिलोच्चयाः । तान् सर्वान्** दाधार **स्थिरं धारयति ।** यथा **एतद् उक्तं सर्वं पृथिव्या स्थिरं धार्यते** एव **एवम् हे नारि** ते **त्वदीयो** गर्भः ध्रियताम् **इत्यादि पूर्ववद् योजना ।**

**यथेयं पृथिवी मही दाधार विष्ठितं जगत् । एवा ० ॥ ४ ॥**

यथा । इयम् । पृथिवी । मही । दाधार । विऽस्थितम् । जगत् । एव ।० ॥ ४ ॥

मही **महती** इयं पृथिवी विष्ठितम् **विविधम् अवस्थितं चराचरात्मकं** जगत् यथा **येन प्रकारेण** दाधार **स्वात्मनि धारयति । तुजादित्वाद् अभ्यासदीर्घत्वम् । अन्यद् व्याख्यातम् ।**

**ईर्ष्याया ध्राजिं प्रथमां 'प्रथमस्या उतापराम्[2] ।**
**अग्निं[4] हृदय्यं[5] शोकं तं ते निर्वापयामसि[6] ॥ १ ॥**

ईर्ष्यायाः । ध्राजिम् । प्रथमाम् । प्रथमस्याः । उत । अपराम् ।
अग्निम् । हृदय्यम् । शोकम् । तम् । ते । निः । वापयामसि ॥ १ ॥

ईर्ष्यायाः । **स्त्रीविषया अक्षमा अत्र ईर्ष्या *मैनामन्यो द्राक्षीत्* इत्येवंरूपा । तस्या ईर्ष्यायाः** ध्राजिम् । **ध्रज गतौ इत्यस्माद् 'वसिवपि' (पाउ ४,१२५) इत्यादिना भावे इञ्प्रत्ययः । वेगयुक्तां गतिं** प्रथमाम् **प्रथमोत्पन्नाम्** निर्वापयामसीत्युत्तरत्र **संबन्धः । उत तस्याः** प्रथमस्याः ***प्रथमभाविन्या*** अपराम् ***अनन्तरोत्पन्नामपि*** **तां**

---

१. वैतु. मंपा. द्र. २. सा. द्वितीयां तृतीयां च ऋचं द्वितीयेति, चतुर्थी च तृतीयेति मत्वा व्याख्याति. ३. अथमां मध्यमामुत पै १९,७,१४. ४. सत्यं पै. ५. हृद्दंयं A; हृदयं Km; हृदय्यं B,Bb,Sm. ६. निर्मन्त्रयामहे पै.

निर्वापयामः शमयामः। हृदय्यम् हृदयदाहकं तत्र भवं कोपाग्निं शोकं च तज्जनितम् ईदृशं तम् हे ईर्ष्यायुक्त पुरुष ते तव सकाशाद् निर्वापयामसि निर्वापयामः शमयामः। 'इदन्तो मसि' (पा ७,१,४६) इति।

यथा भूमिर्मृतमना मृतान्मृतमनस्तरा[1]।
यथोत मम्रुषो मन एवेर्ष्योर्मृतं मनः ॥ २ ॥

यथा। भूमिः। मृतऽमनाः। मृतात्। मृतमनःऽतरा[1]।
यथा। उत। मम्रुषः। मनः। एव। ईर्ष्योः। मृतम्। मनः ॥ २ ॥

भूमिः सर्वप्राणिभिरधिष्ठिता पृथिवी मृतमनाः अपगतमनस्का सती यथा ईर्ष्यां न करोति। यथा च मृतात् त्यक्तप्राणात् शवशरीरादपि मृतमनस्तरा अतिशयेन मृतमनाः पृथिवी भवति। एतेन सर्वक्लेशसहत्वमस्या आविष्कृतं भवति। उत अपि च मम्रुषः मृतवतः पुरुषस्य मनः तच्छरीराद् अपगतं सत् यथा नेर्ष्याजनकम् एव एवमेव ईर्ष्योः ईर्ष्यायुक्तस्य स्त्रीविषयकोपयुक्तस्य पुरुषस्य मनः मृतम् विनष्टमस्तु। ईर्ष्याग्रस्तं न भवत्वित्यर्थः।

अदो यत् ते[2] हृदि श्रितं मनस्कं पतयिष्णुकम्।
ततस्त[3] ईर्ष्यां मुञ्चामि निरूष्माणं दृतेरिव[4] ॥ ३ ॥

अदः। यत्। ते। हृदि। श्रितम्। मनःऽस्कम्। पतयिष्णुकम्।
ततः। ते। ईर्ष्याम्। मुञ्चामि। निः। ऊष्माणम्। दृतेःऽइव[4] ॥ ३ ॥

हे ईर्ष्याग्रस्त पुरुष ते तव हृदि हृदये श्रितम् अवस्थितम् अदः प्रसिद्धं यत् मनः[5] पतयिष्णु[5] अक्षिण्णु इतस्ततः पतनशीलम्। कम्[5] इति पदद्वयं पदपूरणार्थम्। ततः तस्माद् मनसः ते तव ईर्ष्याम् स्त्रीविषयं कोपं निः निःशेषेण मुञ्चामि अपगमयामि। तत्र दृष्टान्तः— ऊष्माणम् इति। यथा दृतेः चर्ममय्या भस्त्रिकायाः सकाशात् तन्मध्यवर्तिनमूष्माणं श्वासवद् अन्तःपूरितं वायुं तन्मुखान्निःसारयति कर्मकरस्तद्वद् इत्यर्थः।

इति द्वितीयेऽनुवाके चतुर्थं सूक्तम्।

'पुनन्तु मा' इत्यस्य तृचस्य बृहद्गणे पाठात् शान्त्युदकादौ विनियोगो द्रष्टव्यः।

---

1. °स्तरा A,B,S^m; °तराम् Cp; °स्तर K,K^m,V. 2. यद् यन्मे पै १९,७,१५. 3. ता न पै. 4. द्रु. गा.; वैतु. मूको. वं. च (द्रु. शंपा.) दृतें°. 5. वैतु. मंगा. द्र.

तथा अर्थोत्थापनविघ्नशमनकामः मरुद्भ्यो मान्त्रवर्णिकीभ्यो वा देवताभ्यः क्षीरौदनहोमः आज्यहोमः काशदिविधुवकवेतसाख्या ओषधीरेकस्मिन् पात्रे कृत्वा संपात्य अभिमन्त्र्य जलमध्ये अधोमुखं निनयनम् तासामेव काशादीनां संपातिताभिमन्त्रितानामप्सु प्लावनम् श्वशिरसो मेषशिरसश्च अभिमन्त्रितस्य अप्सु प्रक्षेपणम् मानुषकेशजरदुपानहां वंशाग्रे बन्धनम्[1] तुषसहितम् आमपात्रमभिमन्त्रितोदकेन संप्रोक्ष्य त्रिपदे शिक्ये निधाय अप्सु प्रक्षेपणं च इत्येतानि अभिवर्षणकर्माणि संपातिताभिमन्त्रितघटोदकेन आप्लावनमवसेचनं च अनेन तृचेन कुर्यात्। 'अर्थमुत्थास्यन्' इति प्रक्रम्य 'अम्बयो यन्ति' (अ १,४), शंभुमयोभू (अ १,५;६), 'हिरण्यवर्णाः' (अ १,३३) 'यददः' (अ ३,१३) 'पुनन्तु मा' (अ ६,१९) इत्यादि 'अभिवर्षणावसेचनानाम्' (कौसू ४१,८-१४) इत्येतदन्तं सूत्रमत्र द्रष्टव्यम्।

तथा सवयज्ञेषु अनेन तृचेन यजमानपत्नी पुत्रान् प्रोक्षेत्। 'पवित्रैः संप्रोक्षति[2]' (कौसू ६१,५) इति हि सूत्रम्। अत्र पवित्रशब्देन[3] 'पुनन्तु मा', 'वायोः पूतः[4]' (अ ६,५१), 'वैश्वानरो रश्मिभिः' (अ ६,६२) इति सूक्तानि विवक्षितानि।

तथा पवित्रसवे अनेन तृचेन निरुप्तहविरभिमर्शनसंपातादीनि कर्माणि कुर्यात्। "'पुनन्तु मा देवजनाः' इति [5]पवित्रं कृसरम्[5]" (कौसू ६६,१६) इति हि सूत्रम्।

तथा दीक्षायाः दर्भपिञ्जूलैः पूयमानो यजमानः एतं तृचं जपेत्। "'पुनन्तु मा' (अ ६,१९) इति पाव्यमानः" (वैताश्रौ ११,१०) इति हि वैतानं सूत्रम्।

सौत्रामण्यां 'पुनन्तु मा' इत्ययं तृचः आसिच्यमानशतातृण्णानुमन्त्रणे विनियुक्तः। "'पुनन्तु मा', 'गिरावरगराटेषु' (अ ६,६९), 'यद्गिरिषु' (अ ९,१,१८) इति शतातृण्णाम्[7] आसिच्यमानाम्" (वैताश्रौ ३०,१३) इति हि वैतानं सूत्रम्।

'अग्नेरिवास्य दहतः' (अ ६,२०) इति तृचेन पित्तज्वरभैषज्ये दावाग्नौ ताम्रस्रुवेण आज्यं हुत्वा व्याधितस्य मूर्ध्नि संपातान् आनयेत्। "'अग्नेः' इत्युक्तं दावे' (कौसू ३०,७) इति हि सूत्रम्।

पुनन्तु मा[8] देवजनाः पुनन्तु मनवो[9] धिया[10]।
पुनन्तु [11]विश्वा †भूतानि[11] [12]पवमानः पुनातु ‡मा[12] ॥ १ ॥

---

१. बन्धनं कृत्वाभिमन्त्र्याधोधनुं S'. २. संप्रोक्षन्ते Bl. ३. °शब्दे S'. ४. पूतोति S'. ५ पवित्रकृसरम्° S'.; °कृशरम्° Bl. ६. °तृणा° S'. ७. °तृणाम् RG. ८. मां ऋ ९,६७,२७. ९. वसवो ऋ.; मनसा मा १९,३९. १०. धियः मा. ११. विश्व आयवः तैब्रा १,४,८,१. † भूता मा मै ३,११,१०. १२. जातवेदः पुनीहि (पुनाहि मै.) मां ऋ. मा. मै. ‡ माम् पै १९,७,११.

पुनन्तु । मा । देवऽजनाः । पुनन्तु । मनवः । धिया ।
पुनन्तु । विश्वा । भूतानि । पवमानः । पुनातु । मा ॥ १ ॥

देवजनाः देवजातीया मा मां पुनन्तु शोधयन्तु । तथा मनवः मनुष्यजातीयाः धिया बुद्धया कर्मणा वा मां पुनन्तु । विश्वा विश्वानि सर्वाणि भूतानि मां पुनन्तु । यश्च अन्तरिक्षे पवमानः गच्छन् वायुः सोऽपि मा[1] पुनातु । यद्वा दशापवित्रेण शोध्यमानः सोमः पवमानः । स च स्वात्मानमिव अस्मान् शोधयतु ।

पवमानः पुनातु मा क्रत्वे दक्षाय जीवसे ।
[2]अथो अरिष्टतातये[2] ॥ २ ॥

पवमानः । पुनातु । मा । क्रत्वे । दक्षाय । जीवसे ।
अथो इति । अरिष्टऽतातये ॥ २ ॥

पवमानः सोमः मा मां पुनातु शोधयतु पापविनिर्मुक्तं करोतु । किमर्थम् । क्रत्वे क्रतवे कर्मणे दक्षाय बलाय । यद्वा क्रतुदक्षशब्दाभ्यां प्राणापानौ विवक्षितौ । 'प्राणो वै दक्षोऽपानः क्रतुः' (तै २,५,२,४) इति श्रुतेः । तयोः प्राणापानयोः शरीरे अवस्थानार्थं जीवसे तद्धेतुकजीवनार्थं च पुनात्विति संबन्धः । अथो अपि च अरिष्टतातये । रिष्टं हिंसा तदभावः अरिष्टं तस्य करणाय । 'शिवशमरिष्टस्य करे' (पा ४,४,१४३) इति करणेऽर्थे तातिल्प्रत्ययः ।

उभाभ्यां देव सवितः पवित्रेण सवेन च ।
[3]अस्मान् पुनीहि चक्षसे[3] ॥ ३ ॥

उभाभ्याम् । देव । सवितः । पवित्रेण । सवेन । च ।
अस्मान् । पुनीहि । चक्षसे ॥ ३ ॥

हे सवितः सर्वस्य प्रेरक हे देव पवित्रेण पवनसाधनेन त्वदीयेन तेजसा सवेन प्रसवेन त्वत्प्रेरणेन च आभ्याम् उभाभ्याम् अस्मान् पुनीहि शुद्धान् कुरु । किमर्थम् । चक्षसे । चष्टिः पश्यतिकर्मा । दर्शनाय । ऐहिकामुष्मिकसकलसुखसाक्षात्कारार्थमित्यर्थः ।

[4]अग्नेरिवास्य दहत एति शुष्मिणः[4] उतेव मत्तो विलपन्नपायति ।
अन्यमस्मदिच्छतु कं चिदव्रतस्तपुर्वधाय[5] नमो अस्तु तक्मने ॥ १ ॥

---

१. मैत्रु. संरा. द्र. २. ज्योक् च सूर्यं दृशे पै १९,७,१२. ३. मां पुनीहि (मै. पुनाहि) विश्वतः ऋ ९,६७,२५ मा १९,४३ मै ३,११,१०; इदं ब्रह्म पुनीमहे तैब्रा १,४,८,२. ४. अग्निरिव प्रसर्गोऽस्य शुष्मिणः पै १९,१२,१०. ५. °पुर्वधाय पै.

अग्नेः॒ऽइव। अस्य। दह॑नः। एति। शुष्मिणः। उतऽइ॑व। मत्तः। विऽलप॑न्। अप॑। अयति। अन्यम्। अस्मत्। इच्छतु। कम्। चित्। अव्रतः। तपुःऽवधाय। नमः। अस्तु। तक्मने॑॥ १ ॥

**आर्द्रम् अनार्द्रं च सर्वं** दहतः **दावात्मकस्य** अग्नेरिव **कृत्स्नम् अङ्गं दहतः** शुष्मिणः **शोषकबलयुक्तस्य** अस्य **ज्वरस्य दाहः** एति **कृत्स्नम् अङ्गं व्याप्नोति।** उत **अपि च** मत्त इव **उन्मत्त इव आत्मानं विस्मृत्य** विलपन् **विविधं प्रलापं कुर्वन् तेन ज्वरेण** अपायति **अपगच्छति अस्माल्लोकात् प्रैति। ईदृशः प्रबलः पित्तज्वरः** अस्मत् **अस्मत्तः** अन्यं कंचित् **कमपि** अव्रतः **अव्रतं** *[विभक्तिव्यत्ययः] **सदाचारहीनं पुरुषम्** इच्छतु **प्राप्नोतु। उक्तं हि—**

'व्रतोपवासैर्यैर्विष्णुर्नान्यजन्मनि तोषितः।
ते नरा मुनिशार्दूल ग्रहरोगादिभागिनः॥' **इति।**

तपुर्वधाय **तपुस्ताप एव वधः**[1] **हननसाधनम् आयुधं यस्य स तथोक्तः तस्मै** तक्मने **कृच्छ्रजीवननिमित्ताय ज्वराभिमानिदेवाय** नमोऽस्तु **नमस्कारो भवतु। अनेन नमस्कारेण तुष्टः सन् अन्यत्र अपसर्पत्वित्यर्थः। तकि कृच्छ्रजीवने। अस्माद् औणादिको मनिन्।**

नमो॑ रुद्राय॑[2] नमो॑ अस्तु तक्मने॑[3] नमो॒ राज्ञे॒ वरु॑णाय त्विषी॑मते।
नमो॑ दिवे नमः॑ पृथिव्यै॑ नम॒ ओष॑धीभ्यः॥ २॥

नमः॑। रुद्राय॑। नमः॑। अस्तु। तक्मने॑। नमः॑। राज्ञे॑। वरु॑णाय। त्विषि॑ऽमते।
नमः॑। दिवे। नमः॑। पृथिव्यै॑। नमः॑। ओष॑धीभ्यः॥ २॥

रुद्राय **रोदयति उपतापेन अश्रूणि मोचयतीति रुद्रो ज्वराभिमानी देवः।** 'रोदेर्णिलुक् च' (पाउ २,२२) **इति रक्प्रत्ययः। तस्मै रुद्राय प्रथमं** नमोऽस्तु तक्मने **ज्वराय च** नमोऽस्तु। त्विषीमते **दीप्तिमते** राज्ञे **स्वामिने तत्तत्प्राणिकृतपापानुरोधेन निग्रहकारिणे** वरुणाय **नमोऽस्तु। तथा** दिवे **द्युलोकाय** नमः **पृथिव्यै च** नमः। **द्यावापृथिव्यौ हि कृत्स्नस्य भूतजातस्य मातापितरौ तस्मात् तयोर्नमस्कारः कृतः।** ओषधीभ्यः **पृथिव्याम् उत्पन्नाभ्यो व्रीह्यादिभ्यो** नमोऽस्तु। **औषधसेवया पथ्यक्रमेण च आरोग्यम् उपजायत इत्योषधीनां नमस्कारः।**

अ॒यं यो अ॑भिशोचयि॒ष्णुर्विश्वा॑ रू॒पाणि॒ हरि॑ता[5] कृ॒णोषि॑[6]।
तस्मै॑ तेऽरु॒णाय॑ ब॒भ्रवे॒ नमः॑ कृणोमि॒ वन्या॑य त॒क्मने॑॥ ३॥

---

१. धधाय S'. २. यमाय पै १९,१२,११. ३. सूरयवे पै. ४. °पथ° नास्ति S'. ५. हरितान् पै. ६. कृणोति पै.

अयम् । यः । अभिऽशोचयिष्णुः । विश्वा । रूपाणि । हरिता । कृणोषि ।
तस्मै । ते । अरुणाय । बभ्रवे । नमः । कृणोमि । वन्याय । तक्मने ॥ ३ ॥

अयम् आपरोक्ष्येण अनुभूयमानः अभिशोचयिष्णुः अभितः सर्वतः कृत्स्नम् अङ्गं सर्वेषु अङ्गेषु शोचयन् शोकम् उत्पादयन् । शुच शोके । 'णेश्छन्दसि' (पा ३,२,१३७) इति इष्णुच्प्रत्ययः । ईदृशो यः पित्तज्वरः विश्वा विश्वानि सर्वाणि रूपाणि हरिता हरितानि रक्तदूषणेन हरिद्रावर्णानि कृणोषि करोति । पुरुषव्यत्ययः । तस्मै अरुणाय अरुणवर्णाय बभ्रवे पीतवर्णाय च वन्याय[1] संसेव्याय तक्मने ते तुभ्यं ज्वराय नमः कृणोमि करोमि ।

इति सायणार्यविरचिते अथर्ववेदार्थप्रकाशे षष्ठकाण्डे द्वितीयोऽनुवाकः ।

तृतीयेऽनुवाके पञ्च सूक्तानि । तत्र 'इमा यास्तिस्रः' (अ ६,२१) इति आद्यं सूक्तम् । तत्र आद्येन तृचेन केशवृद्धिकामं वृक्षभूमिजातौषधिभिः अवज्वालितोदकेन वा विभीतककाथोदकेन वा हरिद्राकाथोदकेन वा अभिमन्त्रितेन उषःकाले अवसिञ्चेत् । सूत्रितं हि—"'इमा यास्तिस्रः' इति वृक्षभूमौ जाताज्वालेनावनक्षत्रेवसिञ्चति" (कौसू ३०,८) इत्यादि ।

'कृणं नियानम्' इति तृचेन उदरतुन्दादिभैषज्यार्थं चित्तिप्रायश्चित्त्याद्योषधिसहितम् उदकम् अभिमन्त्र्य तेनोदकेन व्याधितमवसिञ्चेत् ।

तथा तस्मिन्नेव भैषज्यकर्मणि मरुद्भ्यो मान्त्रवर्णिकीभ्यो वा देवताभ्यः क्षीरौदनहोमम् आज्यहोमम् चित्याद्योषधीरेकस्मिन् पात्रे कृत्वा संपात्य अभिमन्त्र्य जलमध्ये अधोमुखं निनयनम् चित्यादीनां संपातिताभिमन्त्रितानाम् अप्सु प्लावनम् श्वशिरसो मेषशिरसश्चाभिमन्त्रितस्य उदके प्रक्षेपणम् मानुषकेशजरदुपानहौ वंशाग्रे बन्धनम्[4] तुषसहितम् आमपात्रम् अभिमन्त्रितोदकेन संप्रोक्ष्य त्रिपदे शिक्ये निधाय अप्सु प्रक्षेपणं च इत्येतान्यभिवर्षणकर्माणि[5] कुर्यात् । सूत्रितं हि—"'कृणं नियानम्' (अ ६,२२), 'सस्रुषीः[6]' (अ ६,२३) इत्योषध्याभिश्च्योतयति । मारुतानाम् अयन." (कौसू ३०,११;१२) इति । अस्य तृचस्य अपां सूक्तेषु पाठाद् आप्लावनादौ विनियोगः ।

इमा यास्तिस्रः पृथिवीस्तासां ह भूमिरुत्तमा ।
तासामधि त्वचो अहं भेषजं समु जग्रभम् ॥ १ ॥

---

१. विजाय S'. २. 'लेनावसिञ्च' Bl. ३. 'चौष' S'. ४. बन्धनं तृणाभिमन्त्र्य मोचनं S'. ५. 'णाभिवर्षण' S'. ६. नास्ति Bl.

इ॒माः । याः । ति॒स्रः । पृ॒थि॒वीः । तासा॑म् । ह॒ । भूमिः॑ । उ॒त्ऽत॒मा ।
तासा॑म् । अधि॑ । त्व॒चः । अ॒हम् । भे॒ष॒जम् । सम् । ऊं॒ इति॑ । ज॒ग्र॒भ॒म् ॥ १ ॥

इमाः परिदृश्यमानाः तिस्रः त्रित्वसंख्योपेता याः पृथिवीः पृथिव्यः । उपलक्षणमेतत् । पृथिव्याद्यास्त्रयो लोकाः सन्ति । यद्वा पृथिव्यादयस्त्रयो लोकाः प्रत्येकं त्रिधा भिन्नाः । 'तिस्रो भूमीर्धारयन्' (ऋ २,२७,८), 'त्रयो वा इमे त्रिवृतो लोकाः' ( ऐब्रा २,१७ ) इत्यादिश्रुतेः । तासां पृथिव्युपलक्षितानां लोकानां मध्ये इयम् अस्माभिरधिष्ठिता भूमिः खलु उत्तमा उत्कृष्टतमा ऐहिकफलभोगनिमित्तत्वात् स्वर्गादिफलसाधनयागहोमाद्यनुष्ठानहेतुत्वाच्च । तासां पृथिवीनां त्वचः त्वगिव उपरि वर्तमाना या भूमिः तस्याः अधि उपरि प्ररूढं भेषजम् व्याधिनिवर्तकम् औषधम् अहं समु जग्रभम् संगृह्णामि । ग्रहेः स्वार्थण्यन्तात् छान्दसे लुङि चङि रूपम् ।

श्रेष्ठ॑मसि भेष॒जानां॒[1] वसि॑ष्ठं॒ वीरु॑धानाम्[2] ।
सोमो॒[3] भग॑ इव॒ यामे॑षु दे॒वेषु॒ वरु॑णो॒ यथा॑ ॥ २ ॥

श्रेष्ठ॑म् । अ॒सि॒ । भे॒ष॒जाना॑म् । वसि॑ष्ठम् । वीरु॑धानाम् ।
सोम॑ः । भग॑ःऽइव । यामे॑षु । दे॒वेषु॑ । वरु॑णः । यथा॑ ॥ २ ॥

हे हरिद्रादिरूप भेषज अन्येषां भेषजानां श्रेष्ठम् प्रशस्यतमम् असि अमोघवीर्यत्वात् । तथा वीरुधानाम् अन्यासां वीरुधां वसिष्ठम् वसुमत्तमं मुख्यम् असि । वीरुच्छब्दात् टाप् । 'टापं चापि हलन्तानाम्' इति स्मरणात् । तत्र श्रैष्ठ्ये दृष्टान्तः— सोमः इति । यामेषु अहोरात्रभागेषु साध्येषु यथा सोमः चन्द्रमाः भगः सूर्यश्च कालावच्छेदहेतुत्वेन प्रशस्तौ तद्वत् श्रेष्ठम् असीत्यर्थः । वसिष्ठत्वे दृष्टान्तः— देवेषु इति । यथा देवेषु मध्ये वरुणः वसुमत्तमो मुख्यः तद्वद् इत्यर्थः ।

[4]रेव॑तीरना॑धृषः सिषासवः॑ सिषासथ ।
उ॒त स्थ के॑शदृंह॑णीरथो॑ ह केशवर्ध॑नीः[4] ॥ ३ ॥

रेव॑तीः । अना॑धृषः । सि॒सा॒स॒वः॑ । सि॒सा॒स॒थ॒ ।
उ॒त । स्थ[5] । के॒श॒ऽदृंह॑णीः । अ॒थो॒ इति॑ । ह॒ । के॒श॒ऽव॒र्धनीः ॥ ३ ॥

हे रेवतीः रेवत्यः रयिमत्यो धनवत्य[6] उक्ता ओषधयः । 'रयेर्मतौ बहुलम्' (पावा ६,१,३७) इति संप्रसारणम् । अनाधृषः अनाधृषाः केनचिदपि अहिंसिताः सिषासवः

---

१. वीरुधानां पै १,३८,२. २. भेषजानाम् पै. ३. यज्ञो पै. ४. रेवती° B; रेवतीरनाधृषाः सिषासन्तीः सिषासत । एताः स्थ केशवर्धनीरथो स्थ केशदृंहणीः ॥ पै १,३८,३. ५. स्थ P. ६. °वत्य नास्ति S'.

सनितुम् आरोग्यं दातुम् इच्छन्त्यः यूयं सिपासथ आरोग्यं दातुम् इच्छथ[1]। षणु दाने। अस्मात् सनि "°भरज्ञपिसनाम् ( पा ७,२,४९ ) इति इटो विकल्पनाद् अभावपक्षे 'जनसनखनां सञ्झलोः' ( पा ६,४,४२ ) इति आत्त्वम्। उत अपि च केशदृंहणीः[2] केशानां दार्ढ्यकारिण्यः स्थ भवथ। अथो ह अपि च खलु केशवर्धनीः केशसमृद्धिकारिण्यो भवथ। दृंहणीर्वर्धनीरिति दृंहेर्वृधेश्च करणे ल्युडन्तात् ङीपि रूपम्।

कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत् पतन्ति[3]।
त आववृत्रन्त्सदनादृतस्यादिद्[4] घृतेन[5] पृथिवीं[6] व्यू[7] दुः[8] ॥ १ ॥

कृष्णम्। निऽयानम्। हरयः। सुऽपर्णाः। अपः। वसानाः। दिवम्। उत्। पतन्ति। ते। आ। अववृत्रन्। सदनात्। ऋतस्य। आत्। इत्। घृतेन। पृथिवीम्। वि। ऊदुः।

कृष्णम् कृष्णवर्णं नियानम्। नियमेन याति गच्छति अत्र ज्योतिश्चक्रम् इति नियानम् अन्तरिक्षम्। तत् प्राप्य हरयः हरणशीलाः पार्थिवं कृत्स्नं रसं हरन्तः सुपर्णाः शोभनपतना आदित्यरश्मयः अपो वसानाः उदकम् आच्छादयन्तः उदकेन आत्मानम् आवृण्वन्तः दिवम् द्योतमानम् आदित्यमण्डलम् उत् पतन्ति उद्गमनेन प्राप्नुवन्ति। यद्वा कृष्णं नियानम् इति दक्षिणायनाभिप्रायम्। तद्धि—'धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्' ( भगी ८,२५ ) इति कृष्णपक्षसंबन्धात् कृष्णं नियानं यागहोमादिनियमयुक्तैः पुरुषैः प्राप्तव्यम्। ईदृशं दक्षिणायनं प्रति उत्तरायणे समाहृतरसाः ते सूर्यरश्मयः ऋतस्य उदकस्य सदनात् आदित्यमण्डलाद् आववृत्रन् आवर्तन्ते वृष्ट्यर्थम् आगच्छन्ति। वृतेर्लुङि 'द्युद्भ्यो लुङि' (पा १,३,९१) इति परस्मैपदम्। छान्दसश्च्लेश्चङ् आदेशः। 'बहुलं छन्दसि' ( पा ७,१,८ ) इति रुडागमः। आदित् अनन्तरमेव घृतेन उदकेन ते सूर्यरश्मयः पृथिवीं व्यूदुः विशेषेण उन्दन्ति[9] आर्द्रीकुर्वन्ति। श्रूयते हि—'यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षति' ( तै २,४,१०,२ ) इति। उन्दी क्लेदने इत्यस्मात् छान्दसे लिटि छान्दस उपधालोपः।

पयस्वतीः कृणुथाप[10] ओषधीः शिवा[11] यदेजथा मरुतो रुक्मवक्षसः।
ऊर्जं च तत्र सुमतिं च पिन्वत[12] यत्रा नरो मरुतः सिञ्चथा[13] मधु ॥ २ ॥

---

1. इच्छतः S'. 2. °दृंहिणीः S'. 3. अमितवर्णा तै ३,१,११,४. 4. मिहो तै. 5. 'सदनानि कृत्यादिद् तै.; सदनानि शश्वी काठ ११,९. 6. घृतैर् तै. 7. पृथिवी ऋ १,१६४,४७ तै. मै ४,१२,५ काठ ११,१३ पै १९,२२,१०; द्यावापृथिवी काठ ११,९. 8. व्युंधते ऋ. तै. मै. काठ. पै.; उन्दन् काठ ११,९. 9. उन्दंति S'. 10. कृणुताप तै ३,१,११,८ पै १९,२२,१. 11. इमा पै. 12. दिन्वथ तै. मा. 13. सिञ्चता A, पै.

पर्यस्वतीः। कृणुथ। अपः। ओषधीः। शिवाः। यत्। एजथ। मरुतः। रुक्मऽवक्षसः। ऊर्जम्। च। तत्र। सुऽमतिम्। च। पिन्वत। यत्र। नरः। मरुतः। सिञ्चथ। मधु॥

हे मरुतः रुक्मवक्षसः रुक्मः स्वर्णमयम् आभरणं वक्षःस्थले येषां तादृशाः सन्तो यूयं यत् यदा एजथ प्रचलथ। एजृ कम्पने। तदानीं पयस्वतीः रसवतीः अपः उदकानि ओषधीः च शिवाः सुखकरीः कृणुथ कुरुथ। नरः नेतारः हे मरुतः यूयं यत्र मधु मधुररसं वृष्ट्युदकं सिञ्चथ वर्षयथ तत्र तस्मिन् देशे ऊर्जं च बलकरम् अन्नं सुमतिं च शोभनबुद्धियुक्तां प्रजां पिन्वथ[1] उदकसेचनेन पोषयथ।

उदप्रुतो[2] मरुतस्ताँ[3] इयर्त[4] वृष्टिर्या विश्वा निवतस्पृणाति[4]।
एजाति[5] ग्लहा[6] कन्येव[7] तुन्नैरुं[8] तुन्दाना[8] पत्येव जाया॥ ३॥

उदऽप्रुतः[9]। मरुतः। तान्। इयर्त। वृष्टिः। या[10]। विश्वाः। निऽवतः। पृणाति। एजाति। ग्लहा[11]। कन्याऽइव[12]। तुन्ना। एरुम्। तुन्दाना[13]। पत्याऽइव। जाया॥३॥

हे मरुतः[1] उदप्रुतः उदकस्य प्रेरकान् तान् मेघान् इयर्त प्रेरयत। च्युङ् प्रुङ् गतौ। अस्मात् कर्तरि क्विप्। 'उदकस्योदः संज्ञायाम्' (पा ६,३,५७) इति उदकशब्दस्य उदभावः। इयर्तेति। ऋ गतौ इत्यस्मात् लोट्। 'तप्तनप्तनथनाश्च' (पा ७,१,४५) इति तस्य तबादेशः। जुहोत्यादित्वात् शपः श्लुः। 'अर्तिपिपर्त्योश्च' (पा ७,४,७७) इति अभ्यासस्य इत्वम्। के पुनस्ते मेघा इति विशिनष्टि— या यदीया येषां मेघानां संबन्धिनी वृष्टिः विश्वा[14] विश्वानि व्रीहियवादिसस्यानि निवतः निम्नगामिनीर्नदीश्च पृणाति पूरयति। आप्याययतीत्यर्थः। 'उपसर्गाच्छन्दसि धात्वर्थे' (पा ५,१,११८) इति गमेरर्थे वतिः। यद्वा तान्। वर्णव्यत्ययः। या वृष्टिः उक्तविधा तां वृष्टिं प्रेरयतेत्यर्थः। अपि च गहा[1] गर्ह गल्ह कुत्सायाम्। गल्हयति कुत्सयति भीतिम् उत्पादयतीति गल्हा स्तनयित्नुरूपा माध्यमिका वाक्। सा एजाति एजतु वृष्ट्यर्थं मेघान् कम्पयतु। एजृ कम्पने। अस्मात् लेटि आडागमः। तत्र दृष्टान्तः— कन्येव इति। यथा तुन्ना दारिद्र्यादिभिः पीडिता कन्या मातापित्रादीन् कम्पयति तद्वद् इत्यर्थः। सा वाग् विशेष्यते— एरुम् गन्तारं मेघं प्राप्य तुञ्जाना[1] आभाषमाणा ध्वनन्ती। तुजि आभाषणे। चौरादिकः। यद्वा तुञ्जतिर्दानकर्मा। 'तुञ्जेतुञ्जे य उत्तरे' (ऋ १,७,७) इति हि निगमः। एरुम् गमनशीलम् उदकं तुञ्जाना प्रयच्छन्ती। तत्र दृष्टान्तः— पत्येवेति। पत्या सहिता जाया इव सा यथा आभाषते यथा वा दित्सितम् अन्नादिकं प्रयच्छति तद्वद् वृष्ट्युदकस्य प्रदात्रीत्यर्थः।

इति तृतीयेऽनुवाके प्रथमं सूक्तम्।

---

१. वैतु. मंपा. द्र. २. उदप्लुतो A,B[b],D,K,P,V,Cs,Cp,P[3],M, पं १९,२२,१२. ३. मरुत्° तै ३,१,११,८. ४. वृष्ट्या यद् विश्वा निवतस्पृणाय पै.; °ष्टिं ये विश्वे मरुतो जुनन्ति तै. ५. क्रोशाति तै. ६. गल्हा W, कुह्ना? पै., गर्दो तै. ७. °भा पेरुं तै. ८. तुञ्जाना तै.; तुदाना K[m],P[2],O,D[2],R[2]. ९. °प्लु° K,Cp; °प्तु° P. १०. तु. सा.; वैतु. P,P[2],J,K,Cp याः. ११. गल्हा P,P[2],J. १२. कन्याऽइव P,K. १३. तुदाना P[2], १४. वैतु. पपा. द्र.

'ससुषीः', 'हिमवतः प्र स्रवन्ति' इति तृचयोः 'पुनन्तु मा' ( अ ६,१९ ), 'ससुषीः' ( अ ६,२३ ), 'हिमवत' प्र स्रवन्ति' ( अ ६,२४ ), 'वायोः पूतः पवित्रेण' ( अ ६,५१) इति बृहद्गणे ( कौसू ९,२ ) पाठात् शान्त्युदकादौ विनियोगः ।

अनयोः अपां सूक्तेषु पाठात् आप्लावनादौ विनियोगः । सूत्रितं हि—'अवभृथाय व्रजन्ति । अपां सूक्तैराप्लुत्य' ( कौसू ६८,३८;३९ ) इति ।

तथा अर्थोत्थापनविघ्नशमनकामः आभ्यां तृचाभ्याम् 'पुनन्तु मा' इत्यत्रोक्तानि क्षीरौदनहवनादीनि कर्माणि कुर्यात् । 'अर्थम् उत्थास्यन्' इति प्रक्रम्य 'पुनन्तु मा' 'ससुषी.', 'हिमवतः', 'प्र स्रवन्ति', 'वायोः पूतः पवित्रेण' इत्यादि 'अभिवर्षणावसेचनानाम्' ( कौसू ४१,१४ ) इत्येतदन्तं सूत्रमत्र द्रष्टव्यम् ।

तथा 'ससुषीः' इत्येकेन तृचेन उदरतुन्दादिभैषज्ये 'कृष्णं नियानम्' ( अ ६,२२ ) इति तृचोक्तानि कर्माणि कुर्यात् । सूत्रं च तत्रैवोदाहृतम् ।

तथा दर्शपूर्णमासयोः प्रणीताः प्रमुच्यमाना अनेन तृचेन ब्रह्मा अनुमन्त्रयेत । "'प्रणीता विमुच्यमानाः 'ससुषीः' इत्यनुमन्त्रयते" ( वैताश्री ४,१४ ) इति हि वैतानं सूत्रम् ।

'हिमवतः प्र स्रवन्ति' इति तृचस्य शान्त्युदकाभिमन्त्रणादौ आप्लावनादौ अर्थोत्थापनकर्मसु च पूर्वतृचेन सह उक्तो विनियोगः ।

तथा 'हृदयदोषजलोदरकामलरोगशान्त्यर्थं[1] नद्युदकं प्रवाहानुगुणम् आहृत्य तत्र वल्मीकतृणानि प्रक्षिप्य अनेन तृचेन अवसिच्य[2] व्याधितम् अवलिप्तेत् मार्जयेत् आचामयेद् वा । सूत्रितं हि—"'हिमवतः' इति स्यन्दमाना[3] अन्वीपम् आहार्य वल्मीकं' ( कौसू ३०,१३ ) इति ।

ससुषीस्तदपसो[4] दिवा नक्तं च ससुषीः ।
वरेण्यक्रतुरहमपो[5] देवीरुप[6] ह्वये[7] ॥ १ ॥

ससुषीः । तत् । अपसः । दिवा । नक्तम् । च । ससुषीः ।
वरेण्यऽक्रतुः । अहम् । अपः । देवीः । उप । ह्वये ॥ १ ॥

नन्ु प्रसिद्धं सर्वप्राणिजीवनात्मकं रूपं ससुषीः प्रातवतीः अस्मः अपस्वतीः । मन्त्रार्थीयस्य तुरः । अपसा जगद्रक्षणकर्मणा युक्ताः दिवा नक्तं च अहोरात्रोपलक्षितं कृत्स्नं कालम् अविच्छेदेन[8] ससुषीः सरणशीलाः प्रवहणशीलाः । सृ गतौ । अस्माच्छान्दसस्य लिटः क्वसुः । 'उगितश्च' ( पा ४,१,६ ) इति ङीप् । वसोः संप्रसारणे यण् ।

१. हृदयदोष ज° S'.  २. अवसिच्य S'.  ३. शुंभमाना S'; °नाद् Bl.
४. पाठः! नदरसो W, ऋ १०,९ उदकाथभाव्यं च.  ५. वरेण्यक्रतु° गान°.  ६. °हमा
नि ३,११,१.  ७. दुर्वारवसा नि.  ८. हुवे नि.; मुवे मै १९,४,१०.  ९. अवच्छे° S'.

ईदृशीः देवीरपः वरेण्यक्रतुः प्रशस्तकर्मा अहम् उप ह्वये समीपे आह्वयामि । यद्वा उपह्वः अनुज्ञा । तां याचामहे इत्यर्थः ।

ओता आपः कर्मण्या मुञ्चन्त्वितः प्रणीतये । सद्यः 'कृण्वन्त्वेतवे' ॥ २ ॥

आऽउंताः । आपः । कर्मण्याः । मुञ्चन्तु । इतः । प्रऽनीतये । सद्यः । कृण्वन्तु । एतवे ॥

ऊताः[2] संतताः अविच्छेदेन प्रवहन्त्यः । ऊयी तन्तुसंताने । 'श्वीदितो निष्ठायाम्' (पा ७,२,१४) इति इट्प्रतिषेधः । कर्मण्याः लौकिकेषु वैदिकेषु च कर्मसु साधवः । 'तत्र साधुः' (पा ४,४,९८) इति यत् । 'ये चाभावकर्मणोः' (पा ६,४,१६८) इति प्रकृतिभावः । ईदृश्य आपः इतः अस्मात् सर्वानर्थनिदानात् पापाद् अस्मान् मुञ्चन्तु । किमर्थम् । प्रणीतये प्रकर्षेण प्राप्याय फलाय । 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वाच्चतुर्थी । तादृक् फलं सद्यः शीघ्रम् एतवे प्राप्तुं कृण्वन्तु उदीरितलक्षणा अब्देवता अस्मांस्तदर्हान् कुर्वन्तु । प्रणीतये इति । प्रपूर्वान्नयतेः कर्मणि क्तिन् । एतवे इति । इण् गतौ । 'तुमर्थे सेसेन्°' (पा ३,४,९) इति तवेन्प्रत्ययः ।

देवस्य सवितुः सवे कर्म कृण्वन्तु[3] मानुषाः ।
शं नो भवन्त्वप[4] ओषधीः शिवाः ॥ ३ ॥

देवस्य । सवितुः । सवे । कर्म । कृण्वन्तु । मानुषाः ।
शम् । नः । भवन्तु । अपः । ओषधीः । शिवाः ॥ ३ ॥

देवस्य द्योतमानस्य सवितुः सर्वप्रेरकस्य सूर्यस्य सवे प्रेरणे सति मानुषाः मनोरपत्यभूता जनाः कर्म कृण्वन्तु लौकिकं वैदिकं च कृत्स्नं कर्मजातम् अनुतिष्ठन्तु । 'मनोर्जातावञ्यतौ षुक् च' (पा ४,१,१६१) इति मनुशब्दाद् अञ् षुगागमश्च । 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इति आद्युदात्तत्वम् । शिवाः कल्याणकारिण्यः ओषधीः ओषधयः अपः तद्वृद्धिहेतव आपश्च नः अस्माकं शं भवन्तु दुरितशमनहेतवो भवन्तु ।

हिमवतः प्र [5]स्रवन्ति सिन्धौ समह सङ्गमः[5] ।
आपो ह[6] मह्यं तद् देवीर्ददन् हृद्द्योतभेषजम् ॥ ४ ॥

हिमऽवतः । प्र । स्रवन्ति । सिन्धौ । समह । सम्ऽगमः ।
आपः । ह । मह्यम् । तत् । देवीः । ददन् । हृद्द्योतऽभेषजम् ॥ ४ ॥

---

१. भवन्त्वेतवे पै १९,४,११.　　२. वैतु. मंग. द्र.　　३. °न्ति पै १९,४,१२.
४. °धीरिमाः पै.　　५. स्रवत ताः सिन्धुमुप गच्छत पै १९,७,८.　　६. घ पै.

गङ्गादिनदीरूपाः पापक्षयहेतव आपः हिमवतः हिमवत्पर्वतात् प्र स्रवन्ति प्रवहन्ति। तासां सर्वासां सिन्धौ समुद्रे समह समानं संगमः संसर्गो भवति। ईदृश्यो देवीः देव्यः आपः तत् प्रसिद्धं हृद्द्योतभेषजम् हृदयदाहनिवर्तकम् औषधं मह्यं ददत् प्रयच्छन्तु।

[1]यन्मे अक्ष्योरादिद्योत[1] [2]पार्ष्ण्योः प्रपदोश्च यत्[2]।
आपस्तत् सर्वं [3]निष्करन् [4]भिषजां सुभिषक्तमाः[4] ॥ २ ॥

यत्। मे। अक्ष्योः[5]। आऽदिद्योत। पार्ष्ण्योः। प्रऽपदोः। च। यत्।
आपः। तत्। सर्वम्। निः। [6]करन्। भिषजाम्। सुभिषक्ऽतमाः ॥ २ ॥

यद् रोगजातं मे मम अक्ष्योः अक्ष्णोः आदिद्योत आदीपयति व्यथयति। 'ई च द्विवचने' (पा ७,१,७७) इति अक्षिशब्दस्य ईकारान्तादेशः। आदिद्योत इति। द्युत दीप्तौ इत्यस्माच्छान्दसो वर्तमाने लिट्। 'द्युतिस्वाप्योः संप्रसारणम्' (पा ७,४,६७) इति अभ्यासस्य संप्रसारणम्। तथा पार्ष्ण्योः प्रपदोश्च। पादयोरपरभागौ पार्ष्णी। पुरोभागौ प्रपदौ। उभयविधयोस्तयोश्च यद् रोगजातम् आश्रित्य वर्तते तत् सर्वम् आपः देवतारूपाः निष्करन् निष्कुर्वन्तु निर्गतं कुर्वन्तु। करोतेश्छान्दसो लुङ्। 'कृमृदृरुहिभ्यः' (पा ३,१,५९) इति च्लेः अङ् आदेशः। कीदृश्यस्ताः। भिषजाम् व्याधिनिवर्तकानां मध्ये सुभिषक्तमाः अतिशयेन चिकित्साकुशलाः।

सिन्धुपत्नीः सिन्धुराज्ञीः सर्वा या नद्य[7]स्थन।
दत्त नस्तस्य भेषजं तेना[8] वो भुनजामहै ॥ ३ ॥

सिन्धुऽपत्नीः। सिन्धुऽराज्ञीः। सर्वाः। याः। नद्यः। स्थन।
दत्त। नः। तस्य। भेषजम्। तेन। वः। भुनजामहै ॥ ३ ॥

सिन्धुपत्नीः सिन्धुपत्न्यः सिन्धुः समुद्रः पतिर्यासां तास्तथोक्ताः। 'विभाषा सपूर्वस्य' (पा ४,१,३४) इति ङीब्नकारौ। सिन्धुराज्ञीः सिन्धोः समुद्रराजस्य दाराः। उभयत्र 'वा छन्दसि' (पा ६,१,१०६) इति जसि पूर्वसवर्णदीर्घः। एवंभूताः सर्वा या यूयं नद्यः स्थन[9] नदीरूपा भवत। अस्तेर्लोटि 'तप्तनप्तनथनाश्च' (पा ७,१,४५)

---

१. अक्षिभ्यामादिद्योत पै १९,७,९. २. पार्ष्णिभ्यां हृदयेन च पै. ३. निः कं° पै. A,B; °करद् B[b],K,S[m],P,V,P[3],H; °कराद् सान[3]. ४. त्वष्टा रिष्टमिवानशत् पै. ५. अक्ष्योः P. ६. कुरन् P. ७. नद्य३ B,B[b],D,S[m],Cs; नद्य१ः Wh. ८. तेन पै. ९ पै३. मंग. ह्र.

इति तस्य तनादेशः। ईदृश्यो यूयं नः अस्माकं तस्य [1]रोगस्य भेषजम् निवर्तकम् औषधं दत्त प्रयच्छत। तेन औषधेन [2]वः युष्माकं संबन्धिनो वयं भुनजामहै। निवृत्तरोगाः सन्तः अन्नपानादि बलकरं वस्तु उपजीवाम। भुज पालनाभ्यवहारयोः। 'भुजोऽनवने' (पा १,३,६६) इति आत्मनेपदम्।

इति तृतीयेऽनुवाके द्वितीयं सूक्तम्।

'पञ्च च याः' इति तृचेन गण्डमालानिवृत्त्यर्थं पञ्चाधिकपञ्चाशत्संख्याकैः सूत्रोक्तकाष्ठैः प्रज्वालनम् इत्येवमादीनि कर्माणि कुर्यात्। सूत्रितं हि— "'पञ्च च याः' इति पञ्चपञ्चाशतं [3]परशुपर्णान् [4]काष्ठैरादीपयति। कपाले[5] प्रसृतं[6] काष्ठेनालिम्पयति[7]" (कौसू ३०,१४;१५) इत्यादि।

'अव मा पाप्मन्' इति तृचेन सर्वरोगभैषज्यकर्मणि सूत्रोक्तप्रकारेण तन्त्रं कृत्वा अपरेद्युस्त्रींस्त्रीन् पुरोडाशसंवर्तांश्चतुष्पथे अवचरेत्। सूत्रितं हि— "'अव मा पाप्मन्' इति तितउनि [8]पूल्यान्यवसिच्य अपविध्यापरेद्युस्त्रींस्त्रीन् पुरोडाशसंवर्तांश्चतुष्पथेष्ववचरति' (कौसू ३०, १८) इति।

महाशान्त्यादौ क्रियमाणे नैर्ऋतकर्मणि एतं तृचं जपन् नदीतीरं गच्छेत्। "'अव मा पाप्मन्' इति जपन्नुदकम् अभिगच्छेत्' (शांक १५,६) इति हि शान्तिकल्पः।

पञ्च॑ च॒ याः प॑ञ्चा॒शच्च॑[9] सं॒यन्ति॒ [†]मन्या॑ अ॒भि ।
इ॒तस्ताः[10] सर्वा॑ नश्यन्तु वा॒का अ॑प॒चिता॑मिव ॥ १ ॥

पञ्च॑ । च॒ । याः । प॒ञ्चा॒शत् । च॒ । स॒म्ऽयन्ति॑ । [11]मन्याः॑ । अ॒भि ।
इ॒तः । ताः । सर्वाः॑ । न॒श्य॒न्तु॒ । वा॒काः । अ॒प॒चिता॑म्ऽइव ॥ १ ॥

पञ्च च पञ्चाशच्च पञ्चाधिकपञ्चाशत्संख्याका या गण्डमालाः मन्याः गलस्योर्ध्वभागे स्थिता [12]धमनीर्मन्याशब्दवाच्या अभि संयन्ति सर्वतो व्याप्नुवन्ति इतः अस्मात् प्रयोगात् ताः तत्संख्याकाः सर्वा गण्डमाला नश्यन्तु विनष्टा भवन्तु। वाकाः वचनीया दोषाः [13]अपचितामिव पूजितां पतिव्रतां स्त्रियं प्राप्य यथा पराहता नश्यन्ति तथेत्यर्थः।

स॒प्त[14] च॒ याः स॑प्त॒तिश्च॑ सं॒यन्ति॒ ग्रैव्या॑ अ॒भि ।
इ॒तस्ताः[15] सर्वा॑ नश्यन्तु वा॒का अ॑प॒चिता॑मिव ॥ २ ॥

स॒प्त[15] । च॒ । याः । स॒प्त॒तिः । च॒ । स॒म्ऽयन्ति॑ । ग्रैव्याः॑ । अ॒भि ।
इ॒तः । ताः । सर्वाः॑ । न॒श्य॒न्तु॒ । वा॒काः । अ॒प॒चिता॑म्ऽइव ॥ २ ॥

---

१. ध्वरोगस्य S'. २. नवो S'. ३. कर्पूपर्णान् S'; परशुप° Bl. ४. काष्टैनादी° S'. ५. कांपीलैः S'. ६. प्रसृति S'. ७. °लिम्पति Bl. ८. पल्युन्यव° S'. ९. °चारूढा वक्षणा भनु पै ८,१६,२. †. स्कन्ध्या पै १९,५,६. १०. अदस्ताः पै. ११. मन्याः १२. धमनीम° S'. १३. वैतु. मंग. द्र. १४. सप्त A,D R,S^m,P,J,Cs, Cr. १५ सप्त P,J.

सप्ताधिकसप्ततिसंख्याका या गण्डमालाः ग्रैव्याः ग्रीवासु भवा नाडीः अभि संयन्ति अभितो व्याप्नुवन्ति। अन्यद् व्याख्यातम्।

नवं च या नवतिश्चं संयन्ति स्कन्ध्यां अभि।
इतस्ताः सर्वां नश्यन्तु वाका अपचितांमिव ॥ ३ ॥

नवं। च। याः। नवतिः। च। सम्ऽयन्ति। स्कन्ध्याः। अभि।
इतः। ताः। सर्वाः। नश्यन्तु। वाकाः। अपचिताम्ऽइव ॥ ३ ॥

नवोत्तरनवतिसंख्याका या गण्डमालाः स्कन्ध्याः। ग्रीवाभ्योऽधःप्रदेशः स्कन्धः। तत्र भवा धमनीः अभिसंयन्ति अभितो व्याप्नुवन्ति। शेषम् उक्तार्थम्।

अवं मा पाप्मन्त्सृज वशी सन् मृडयासि नः।
आ मां भद्रस्यं लोके पाप्मन् धेह्यविंह्रुतम् ॥ १ ॥

अवं। मा। पाप्मन्। सृज। वशी। सन्। मृडयासि। नः।
आ। मा। भद्रस्यं। लोके। पाप्मन्। धेहि। अविंऽह्रुतम् ॥ १ ॥

हे पाप्मन् पापाभिमानिदेव मा माम् अव सृज त्वत्सकाशाद् विमोचय। वशी सर्वस्य वशयिता त्वं नः अस्मान् सं मृडयासि सम्यङ् मृडय सुखय। मृड सुखने। अस्मात् लेटि आडागमः। हे पाप्मन् अविह्रुतम् अपीडितं मा मां भद्रस्य भन्दनीयस्य सुकृतस्य फलभूते लोके स्वर्गादौ आ धेहि स्थापय। अविह्रुतम इति। ह्वृ कौटिल्ये। 'ह्रु ह्वरेश्छन्दसि' (पा ७,२,३१) इति निष्ठायां ह्रुभावः।

यो नः पाप्मन् न जहांसि तमुं त्वा जहिमो वयम्।
पथामनुं व्यावर्तनेऽन्यं पाप्मानुं पद्यताम् ॥ २ ॥

यः। नः। पाप्मन्। न। जहांसि। तम्। ऊं इतिं। त्वा। जहिमः। वयम्।
पथाम्। अनुं। विऽआवर्तने। अन्यम्। पाप्मा। अनुं। पद्यताम् ॥ २ ॥

हे पाप्मन् यस्त्वं नः अस्मान् न जहासि न परित्यजसि। ओहाक् त्यागे इति धातुः। तमु तमेव त्वा त्वां पथाम् चतसृभ्यो दिग्भ्य आगतानां मार्गाणाम् अनुव्यावर्तने यस्मिन्

---

१. मन्या पै १९,५,४. २. अदस्ताः पै. ३. भद्रेषु धामस्वा त्वं पै १९,१९,१. † सा. RW.; वैतु. मूको. (सु. शंपा. Wh.) शंपा. पाप्मन्; पाप्मन्; P² पाप्मन्. ४. तु. मंपा.; वैतु. P,J,Cp ५. वैतु. मंपा. द्र. ६. भजनीयस्य S'. ७. मा पै १९, १५,२. ८. पथोऽभि पै १९,१५,३. ९. पाप्मन् P,J.

**प्रदेशे चतुष्पथलक्षणे अनुप्राप्ताः परस्परं व्यावर्तन्ते तत्र देशे** वयं जहिमः । **अनेन अनुष्ठितेन कर्मणा बलात् परित्यजामः।** 'जहातेश्च' (पा ६,४,११६) **इति इत्वम्। पथाम् इति।** 'भस्य टेर्लोपः' (पा ७,१,८८) **इति टिलोपे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। अनुव्यावर्तन्तेऽस्मिन्निति अनुव्यावर्तनो देशः। अधिकरणे ल्युट् । तत्र त्यक्तः** पाप्मा अन्यम् **अस्मद्द्वेष्यम्** अनु पश्यताम् **अनुप्रविशतु।**

अन्यत्रास्मन्न्युच्यतु सहस्राक्षो अमर्त्यः[1] ।
[2]यं द्वेषाम तमृच्छतु[3] यमु द्विष्मस्तमिज्जहि ॥ ३॥

अन्यत्र । अस्मत् । नि । उच्यतु । सहस्रऽअक्षः । अमर्त्यः ।
यम् । द्वेषाम[3] । तम् । ऋच्छतु । यम् । ऊं इति । द्विष्मः । तम् । इत् । जहि ॥ ३ ॥

अस्मत् **अस्मत्तः** अन्यत्र सहस्राक्षः **इन्द्रवत् प्रसह्यकारी** अमर्त्यः **अमरणधर्मा देवरूपः पाप्मा** न्युच्यतु **नितरां गच्छतु। उच समवाये। एतदेव विव्रियते — यं शत्रुं वयं** द्वेषाम **द्विष्मः** तम् ऋच्छतु **पापं गच्छतु। ऋ गतौ। शपि** 'पाघ्रा' ( पा ७,३,७८ ) **इत्यादिना ऋच्छादेशः। पुनरपि** यम् **एव वयं** द्विष्मः तमित् **तमेव** जहि **नाशय। द्वेषामेति। द्विषेर्लोटि** 'आडुत्तमस्य पिच्च' ( पा ३,४,९२ ) **इति आडागमः। पिद्वद्भावेन ङित्त्वाभावात् लघूपधगुणः।**

इति तृतीयेऽनुवाके तृतीयं सूक्तम्।

**गृहादिषु कपोतोलूकप्रवेशशान्त्यर्थं शान्त्युदकाभिमन्त्रणे विनियुक्तमहाशान्तिगणे** 'देवाः कपोतः' ( अ ६,२७ ) 'ऋचा कपोतम्' ( अ ६,२८ ) 'अमून् हेतिः' ( अ ६,२९ ) **इति त्रयस्तृचा आवपनीयाः। तद् उक्तं कौशिकेन** — "पतत्रिभ्यो 'देवाः कपोतः', 'ऋचा कपोतम्', 'अमून् हेतिः' इति महाशान्तिम् आवपते" ( कौसू ४६,७ ) **इति।**

'ऋचा कपोतम्' **इति तृचस्य पूर्वतृचेन सह उक्तो विनियोगः।**

**अत्र** 'परीमे [4]अग्निम्'(अ ६,२८,२) **इत्यनया ऋचा कपोतोलूकप्रवेशशान्त्यर्थमेव गाम् अग्निम् आनीय शालां कपोतप्रवेशस्थलं वा त्रिः परिभ्रामयेत् । सूत्रितं हि** — "'परीमे [4]अग्निम्' इत्यग्निं गाम् आदाय निशि कारयमाणस्त्रिः शालां परिणयति" ( कौसू ४६,८ ) **इति।**

देवाः कपोत इषितो यदिच्छन् दूतो निर्ऋत्या इदमाजगाम ।
तस्मा अर्चाम कृणवाम [5]निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे ॥ १ ॥

---

१. 'सहस्राक्षम' पै १९,१९,२. २. यो नो द्वेष्टि तं गच्छ पै. ३. द्वेषाम् P.
४. वैतु. मंग. द्र. ५. निःकृ° A,D,S[m],P[2],M,W,T; निकृ° Cs.

देवाः । कपोतः । इषितः । यत् । इच्छन् । दूतः । निःऽऋत्याः । इदम् । आऽजगाम ।
तस्मै । अर्चाम । कृणवाम । निःऽकृतिम् । शम् । नः । अस्तु । द्विऽपदे । शम् । चतुःऽपदे ॥ १ ॥

हे देवाः निर्ऋत्याः पापदेवतायाः दूतः कर्मकरः इषितः प्रेषितः कपोतः कपोताख्यः पक्षी यद् बाधनम् इच्छन् इदम् अस्मदीयं गृहम् आजगाम आगतवान् तस्मै तन्निवृत्त्यर्थम् अर्चाम युष्मान् हविषा पूजयाम । निष्कृतिम् तद्दोषशान्तिं कृणवाम करवाम । नः अस्माकं द्विपदे पादद्वयोपेताय पुत्रभृत्यादये शम् चतुष्पदे पादचतुष्टयोपेताय गवाश्वादये च शम् रोगादीनां शमनं कपोतप्रवेशजनितदोषशान्तिश्च अस्तु भवतु ।

शिवः कपोत इषितो नो अस्त्वनागा देवाः शकुनो गृहं नः[1] ।
अग्निर्हि विप्रो जुषतां हविर्नः परि हेतिः पक्षिणी नो वृणक्तु ॥ २ ॥

शिवः । कपोतः । इषितः । नः । अस्तु । अनागाः । देवाः[2] । शकुनः । गृहम् । नः ।
अग्निः । हि । विप्रः । जुषताम् । हविः । नः । परि । हेतिः । पक्षिणी । नः । वृणक्तु ॥ २ ॥

हे देवाः इषितः निर्ऋतिदेवतया प्रेषितः कपोतः नः शिवः सुखकरः अस्तु भवतु । अनागाः अनपराधकः शकुनः पक्षी नः अस्माकं गृहं न पीडयतु । हि यस्माद् एवं तस्माद् विप्रो मेधावी अग्निः नः अस्मदीयं हविर्जुषताम् सेवताम् । तत्प्रसादात् पक्षिणी पक्षोपेता कपोताख्या हेतिः हननसाधनम् आयुधं नः अस्मान् परि वृणक्तु परिवर्जयतु ।

हेतिः पक्षिणी न दभात्यस्मानाष्ट्री[3] पदं कृणुते अग्निधाने ।
शिवो[4] गोभ्य उत पुरुषेभ्यो नो[5] अस्तु मा नो देवा इह हिंसीत् कपोतः ॥३॥

हेतिः । पक्षिणी । न । दभाति । अस्मान् । आष्ट्री इति । पदम् । कृणुते । अग्निऽधाने ।
शिवः । गोभ्यः । उत । पुरुषेभ्यः । नः । अस्तु । मा । नः । देवाः । इह । हिंसीत् । कपोतः ॥३॥

पक्षिणी पक्षाभ्यां युक्ता हेतिः हननसाधनम् अस्मान् न दभाति न हिनस्तु । सा[6] च आष्ट्री आष्ट्र्यां व्याप्तायाम् "अरण्यान्याम् अग्निधाने दावाग्निसंचारस्थाने पदं कृणुते पादप्रसारं करोतु । अस्मत्तो विनिर्गच्छत्वित्यर्थः । यद्वा अश्नन्ति

---

1. गृहे ऋ १०,१६५,२ पै १९,१२,१४. 2. देवाः P. 3. °नाष्ट्रां ऋ १०, १६५,३. 4. शं नो ऋ. पै १९,१२,१५. 5. °र्म्यश्च पुरुषेभ्यश्च ऋ. 6. स S'. 7. अरण्यानाम् S'.

अस्यां[1] जना इति आप्त्री पचनशाला तस्याम् अग्निधाने अग्निनिधानस्थाने इति योज्यम्। तथा गोभ्यः पुरुषेभ्यश्च नः अस्माकं संबन्धिभ्यः शिवः सुखकरः अस्तु भवतु। हे देवाः इह अस्मिन् गृहे युष्मदनुग्रहाद् अयं कपोतः पक्षी नः अस्मान् मा हिंसीत् मा बाधिष्ट।

ऋचा कपोतं नुदत प्रणोदमिषं मदन्तः परि गां नयामः[2]।
संलोभयन्तो[3] दुरिता[4] पदानि[5] हित्वा न ऊर्जं प्र पदात्[6] पथिष्ठः[7] ॥ १ ॥

ऋचा। कपोतम्। नुदत। प्रऽनोदम्। इषम्। मदन्तः। परि। गाम्। नयामः।
सम्ऽलोभयन्तः। दुःऽइता। पदानि। हित्वा। नः। ऊर्जम्। प्र। पदात्। पथिष्ठः॥ १ ॥

हे देवाः ऋचा अनेन मन्त्रेण कपोतम् कपोताख्यं पक्षिणं प्रनोदम् प्रकर्षेण नोदनीयं प्रेरणीयं यथा स्यात् तथा नुदत अस्मद्गृहात् प्रेरयत। वयं च इषम् अन्नं प्राप्य मदन्तः तृप्ताः सन्तः गां परि नयामः परितः सर्वतः संचारयामः। गोसंचारणेन शान्तिं कुर्म इत्यर्थः। किं कुर्वन्तः। दुरिता दुरितानि दुर्गतिनिमित्तानि पदानि कपोतस्य पादनिधानस्थानानि संलोभयन्तः सम्यक् प्रमार्जयन्तः। स च नः अस्माकम् ऊर्जम् बलकरं पचनशालास्थम् अन्नं हित्वा त्यक्त्वा पथिष्ठः[8] पततां पक्षिणां श्रेष्ठः सन् प्र पतात्[8] प्रपतेत् प्रगच्छतु। पत्लृ गतौ। अस्मात् लेटि आडागमः। पथिष्ठ इति अस्मादेव तृजन्ताद् आतिशायनिक इष्ठन्। 'तुरिष्ठेमेयस्सु' (पा ६,४,१५४) इति तृलोपः।

परीमे३ग्निमर्षत[9] परीमे गामनेषत।
देवेष्वक्रत श्रवः क इमाँ आ दधर्षति ॥ २ ॥

परि। इमे। अग्निम्। [10]अर्षत। परि। इमे। गाम्। अनेषत।
देवेषु। अक्रत। श्रवः। कः। इमान्। आ। दधर्षति ॥ २ ॥

इमे ऋत्विजः कपोतप्रवेशशान्त्यर्थम् अग्निं पर्यर्षत। परितो होमार्थं गृहे प्रापयन्नित्यर्थः। तथा इमे गां पर्यनेषत परितो गृहम् अगमयन्। तथा देवेषु अग्न्यादिषु श्रवः हविर्लक्षणम् अन्नम् अक्रत अकुर्वत। एवं शान्तौ कृतायाम् इमान् अस्मदीयान् पुरुषान् को नाम हिंसकः आ दधर्षति आधृष्टान् बाधितान् करोति।

---

१. अस्मिन् S'. २. नयध्वम् ऋ १०,१६५,५. ३. संयोपयन्तो ऋ. पै १९,१३,१६. ४. दुरितानि ऋ. ५. विश्वा ऋ. ६. पताद् ऋ. पै. सा. ७. प्रथिष्ठः Cs; पतिष्ठः सात'. ऋ. पै. सा. ८. वैदु. मंपा. द्र. ९. °मे३ग्नि° D,K,S[m],V; °मरिपत A,D,R,S[m],Cs,P[3],M,W,I; रिपतु K[2]; पर्यग्निमहृपत ऋ १०,१५५,५ मा ३५,१८ पै १०,१,१३. १०. अरिपत Cp.

यः प्र॑थ॒मः प्र॒वत॑मास॒साद॑ ब॒हुभ्यः॒ पन्था॑मनुपस्प॒शा॒नः[1] ।
यो॒३॑ऽस्येशे॑[2] द्वि॒पदो॒ यश्चतु॑ष्पद॒स्तस्मै॑ य॒माय॒ नमो॑ अस्तु मृ॒त्यवे॑ ॥ ३ ॥

यः । प्र॒थ॒मः । प्र॒ऽवत॑म् । आ॒ऽस॒साद॑ । ब॒हुऽभ्यः॑ । पन्था॑म् । अ॒नु॒ऽप॒स्प॒शा॒नः ।
यः । अ॒स्य । ईशे॑ । [3]द्वि॒ऽपदः॑ । यः । चतुः॑ऽपदः । तस्मै॑ । य॒माय॑ । नमः॑ । अ॒स्तु । मृ॒त्यवे॑ ॥ ३ ॥

यो यमो बहुभ्यः अन्येभ्यो देवेभ्यः प्रथमः प्रथमभावी मुख्यः सन् प्रवतम् प्रवणवन्तं पन्थाम् पन्थानं मार्गम् आससाद प्राप । किं कुर्वन् । अनुपस्पशानः अनुक्रमेण सर्वान् प्राणिनः स्पृशन् परिगणयन् । अयम् अद्य मारयितव्यः अयं श्वः अयं परश्वः इत्येवम् आकलयन्नित्यर्थः । यो यमः अस्य द्विपदः पादद्वयोपेतस्य मनुष्यादेः प्राणिजातस्य ईशे ईष्टे यश्चास्य चतुष्पदः गवादेरीष्टे तस्मै यमाय मृत्यवे मृतिकारिणे देवाय नमो अस्तु नमस्कारो भवतु ।

इति तृतीयेऽनुवाके चतुर्थं सूक्तम् ।

'अमून् हेति.' इति तृचस्य पूर्वसूक्तेन सह उक्तो विनियोगः । सूत्रं च तत्रैवोदाहृतम् ।

'देवा इमम्' (अ ६,३०,१) इत्यृचा यौनसिरसवे मन्थाभिमर्शनादीनि कर्माणि कुर्यात् । सूत्रितं हि - " 'देवा इमं मधुना संयुतं[4] यवम्' इति [5]यौनसिलं मधुमन्थं सहिरण्यं संपातवन्तम्" ( कौसू ६६,१५ ) इति ।

'यस्ते मदः' (अ ६,३०,२;३) इति द्वाभ्याम् ऋग्भ्यां शमीलूनपापलक्षणशान्त्यर्थं शमीचूर्णेन शिरस्युद्वापयेत् । सूत्रितं हि —" 'यस्ते मदः' इति शमीलूनपापलक्षणयोः [6]शमीशमके नाभ्युप वापयति । अधिशिर.[7]" (कौसू ३१,१;२) इति ।

'आयं गौः' इति तृचेन पृश्निसवे गोरभिमर्शनसंपातादीनि कर्माणि कुर्यात् । " 'आयं गौः पृश्निः' (अ ६,३१), 'अयं सहस्रम्' ( अ ७,२३ ) इति पृश्नि गाम्" ( कौसू ६६,१४ ) इति कौशिकसूत्रात् ।

तथा आधाने आहितस्य आहवनीयाग्नेः अनेन तृचेन उपस्थानं कुर्यात् । "आहितम् आहवनीयम् 'आयं गौः' इत्युपतिष्ठते" (वैताश्री ६,२) इति हि वैतानं सूत्रम् । द्वादशाहे अविवाक्येऽहनि मानसस्तोत्रम् अनेन तृचेन अनुमन्त्रयेत । " 'आयं गौः' इति चानुमन्त्रयते' ( वैताश्री ३३,२८) इति वैतानं सूत्रम् ।

---

१. °शानम् ऋ १०,१४,१.
२. यो॑ऽ३स्य° D,K,S[m],V.
३. द्विपदः P.
४. संयुतं S'.
५. °नःसिलं Bl
६. °नाभ्युपवापयत्यधि° S'; शमीशम्याकेनाभ्यु° Bl.
७. °शिरः° S'.

अमून् हेतिः पतत्रिणी न्येतु यदुलूको वदति मोघमेतत् ।
यद् वा कपोतः पदमग्नौ कृणोति ॥ १ ॥

अमून् । हेतिः । पतत्रिणी । नि । एतु । यत् । उलूकः । वदति । मोघम् । एतत् ।
यत् । वा । कपोतः । पदम् । अग्नौ । कृणोति ॥ १ ॥

अमून् दूरे दृश्यमानान् अस्मदीयान् शत्रून् पतत्रिणी पक्ष्यात्मिका हेतिः नि एतु नितरां गच्छतु । उलूकः घूको यत् अशोभनं वदति एतद् मोघम् निर्वीर्यं भवतु । वाशब्दः अप्यर्थे । कपोतः कपोताख्यः पक्षी अशुभसूचनाय यत् पदम् अग्नौ पचनाग्निसमीपे कृणोति करोति । तदपि निर्वीर्यं भवत्वित्यर्थः ।

यौ[1] ते[1] दूतौ[1] निर्ऋत इदमेतोऽप्रहितौ[1] प्रहितौ[1] वा गृहं नः ।
कपोतोलूकाभ्यामपदं[2] तदस्तु[3] ॥ २ ॥

यौ । ते । दूतौ । निःऽऋते । इदम् । आऽइतः । अप्रऽहितौ । प्रऽहितौ । वा । गृहम् । नः ।
कपोतऽउलूकाभ्याम् । अपदम् । तत् । अस्तु ॥ २ ॥

हे निर्ऋते पापदेवते ते त्वदीयौ कपोतोलूकात्मकौ यौ दूतौ अप्रहितौ त्वया अप्रेषितौ प्रहितौ वा प्रेषितौ वा नः अस्माकम् इदं गृहम् एतौ[4] आगतौ तद् गृहं ताभ्यां कपोतोलूकाभ्याम् अपदम् अनाश्रयभूतम् अस्तु भवतु ।

अवैरहत्यायेदमा पपत्यात्[5] सुवीरताया इदमा ससद्यात् ।
पराङेव परा वद[6] पराचीमनु संवतम् ।
यथा[7] यमस्य त्वा गृहेऽरसं प्रतिचाकशानाभूकं[8] प्रतिचाकशान् ॥ ३ ॥

अवैरऽहत्याय । इदम् । आ । पपत्यात् । सुऽवीरतायै । इदम् । आ । ससद्यात् ।
पराङ् । एव । परा । वद । पराचीम् । अनु । सम्ऽवतम् ।
यथा । यमस्य । त्वा । गृहे । अरसम् । प्रतिऽचाकशान् । आभूकम् । प्रतिऽचाकशान् ॥३॥

इदं कपोतोलूकजनितं दुर्निमित्तम् अवीरहत्यायै[9] अवीरहननाय अस्मदीयानां वीराणाम् अहिंसनाय आ पपात्[5] आपद्यताम् । अवकल्पताम् इत्यर्थः । तथा अस्माकं

१. सर्वत्र द्विवचनस्थान एकवचनम् पै १९,२७,१२. २. आजगामाप्र° पै. ३. °लूकाव-पदं पै. ४. वैतु. मंगा. द्र. ५. जगम्यात् पै १९,२७,१२. ६. परावतं पै २०,२७,८ सा. ७. मुधा? पै. ८. गृहे K,Km,V. ९. °शान् निरस्तं पै.

सुवीरताय शोभनवीरसद्भावाय इदं दुर्निमित्तं परामेव[1] परावतम्[1]। परावत् इति दूरनाम। अत्यन्तदूरदेशम् परावीम् पराङ्मुखम् अपरावृत्तं संवतम् संप्राप्तम् अनुलक्ष्य आ सस्थात् आसीदतु प्राप्नोतु । हे कपोतात्मक दूत यमस्य स्वामिनो गृहे त्वा त्वां यथा येन प्रकारेण अरमम् निःसारं प्रतिचाकशान् प्रतिपश्येयुः तत्रत्या जनाः तथा आभूकम् आगतचन्तमेव केवलं त्वां प्रतिचाकशान् प्रतिपश्येयुः ।

देवा इमं[1] मधुना संयुतं[2] यवं[3] सरस्वत्यामधि[4] मणावचर्कृषुः[5] ।
इन्द्र आसीत् सीरपतिः शतक्रतुः कीनाशा आसन् मरुतः सुदानवः ॥१॥

देवाः । इमम् । मधुना । सम्ऽयुतम् । यवम् । सरस्वत्याम् । अधि । मणौ । अचर्कृषुः ।
इन्द्रः । आसीत् । सीरऽपतिः । शतऽक्रतुः । कीनाशाः । आसन् । मरुतः । सुऽदानवः ॥ १ ॥

मधुना मधुररसेन क्षौद्रेण वा संजितम्[1] संप्राप्तं यवम् दीर्घशूकम् इमं धान्यविशेषं सरस्वत्याम् अधि सरस्वत्याख्याया नद्याः समीपे मणौ मनुष्यजातौ देवा अचर्कृषुः कृतवन्तः। तदानीं कर्षणेन भूमौ तद् धान्यम् उत्पादयितुं शतक्रतुः इन्द्रः सीरपतिः हलस्याधिष्ठाता स्वामी आसीत् । सुदानवः शोभनदाना मरुतः कीनाशाः कर्षका आसन् ।

यस्ते मदोऽवकेशो विकेशो येनाभिहस्यं पुरुषं कृणोषि ।
आरात् त्वदन्या वनानि वृक्षि त्वं शमि शतवल्शा[7] वि रोह ॥ २ ॥

यः । ते । मदः । अवऽकेशः । विऽकेशः । येन । अभिऽहस्यम् । पुरुषम् । कृणोषि ।
आरात् । त्वत् । अन्या । वनानि । वृक्षि । त्वम् । शमि । शतऽवल्शा[7] । वि । रोह ॥२॥

हे शमि ते तव संबन्धी यो मदः हर्षः अवकेशः अवमतकेशोत्पादकः विकेशः केशविगमनहेतुश्च भवति । येन मदेन अभिहस्यम् अभितो हसनीयं पुरुषं कृणोषि करोषि। अहमपि त्वत्तः अन्या अन्यानि त्वद्व्यतिरिक्तानि आरात् दूरवर्तीनि वनानि वृक्षि वृश्चामि। हे शमि त्वं शतवल्शा शतशाखा सती वि रोह विविधं प्ररूढा भव ।

बृहत्पलाशे सुभगे वर्षवृद्ध ऋतावरि । मातेव पुत्रेभ्यो मृड केशेभ्यः शमि ॥ ३ ॥

बृहत्ऽपलाशे । सुऽभगे । वर्षऽवृद्धे । ऋतऽवरि ।
माताऽइव । पुत्रेभ्यः । मृड । केशेभ्यः । शमि ॥ ३ ॥

---

1. वैसू. मंत्रा. ८.  2. घृतमु त्यं काठ १३,१५ तैत्रा २,४,८,७ मत्रा २,१,१६ आपश्रौ १,१०,२० पारगृ १,१,९; देवा एनं वै १,८,२.  3. मंयुक्तं पै.  4. सरस्वत्या अधि काठ. तैत्रा. आपश्रौ. पारगृ.  5. मणा अचर्कृषुः काठ.; मणावं° तैत्रा. आपश्रौ. पारगृ.; वनावचर्कृषधि मंत्रा.
6. °वल्शा A,D,S[m],P[x],P[1],M,K[1],Kp; °वल्शा RW. °शाम्° J.  7. ऊर्ध्वस्वप्न पै १९,२४,५.

हे बृहत्पलाशे। बृहन्ति महान्ति समधिकानि पलाशानि पर्णानि यस्याः सा बृहत्पलाशा। हे सुभगे सौभाग्यकारिणि हे वर्षवृद्धे वर्षेणैव वृद्धे। अपुरुषप्रयत्नसिद्धे इत्यर्थः। हे ऋतावरि। ऋतम् उदकं सत्यं यज्ञो वा तद्वति। ऋतशब्दात् 'छन्दसीवनिपौ' (पा ५,२,१०९) इति मत्वर्थीयो वनिप्। 'वनो र च'(पा ४,१,७) इति ङीब्रेफौ। एवंभूते हे शमि पुत्रेभ्यो मातेव केशेभ्यो मृल[1] मृडय। यथा माता पुत्रान् अभिवर्धयति तथा केशान् वर्धयेत्यर्थः।

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः[3]। पितरं च प्रयन्त्स्वः[4] ॥ १ ॥

आ। अयम्। गौः। पृश्निः। अक्रमीत्। असदत्। मातरम्। पुरः।
पितरम्। च। प्रऽयन्। स्वः ॥ १ ॥

गौः गमनशीलः पृश्निः प्राष्ठवर्णो व्याप्ततेजा अयं सूर्यः आ अक्रमीत् आक्रान्तवान्। उदयाद्रिशिखरम् इति शेषः। आक्रम्य च पुरः पुरस्तात् पूर्वस्यां दिशि परिदृश्यमानः मातरम् सर्वस्य भूतजातस्य जननीं भूमिम् असदत् स्वरश्मिभिर्व्याप्नोत्। षद्लृ विशरणगत्यवसादनेषु। अस्मात् लुङि लृदित्त्वात् च्लेः अङ् आदेशः। ततः पितरम् वृष्टिलक्षस्य रेतसो निषेकेण सर्वस्य जगत उत्पादकं स्वः स्वर्लोकम् चकाराद् अन्तरिक्षं च प्रयन् प्रगच्छन्। पश्चाद् व्याप्नोतीत्यर्थः। स एव वृष्ट्युदकलक्षणस्य अमृतस्य दोहनाद् गौरित्युच्यते।

अन्तश्चरति रोचना[5] अस्य प्राणादपानतः[6]। व्यख्यन्[7]महिषः स्वः[8] ॥२॥

अन्तः। चरति। रोचना। अस्य। प्राणात्। अपानतः। वि। अख्यत्। महिषः। स्वः ॥

प्राणात् प्राणनव्यापाराद् अनन्तरम् अपानतः अपाननव्यापारं कुर्वतः अस्य प्राणिजातस्य शरीरमध्ये मुख्यप्राणात्मना रोचना रोचमाना सूर्यप्रभा अन्तः मध्ये चरति वर्तते। महिषः। महन्नामैतत्। महान् अधिभूतं वर्तमानः स्वः स्वर्गोपलक्षितम् उपरितनं समस्तं लोकं व्यख्यत् विचष्टे प्रकाशयति। चष्टिः पश्यतिकर्मा। छान्दसो लुङ्। 'अस्यतिवक्ति' (पा ३,१,५२) इति च्लेः अङ् आदेशः।

---

१. वेत्तु. मंपा. द्र.    २. °दसंनन् तै १,५,३,१.    ३. पुनः तै. पै. १९,४५,११ [मूको.].
४. सुवः तै.    ५. अर्णवे अ° मै १,६,१; रोचनास्य RW. ऋ १०,१८९,२ मा ३,७ कौ २,७२६; °ना यस्य पै १९,४१,१२.    ६. °पानती ऋ. मा. कौ. तै. पं. (पपा. अपऽअनती).
७. व्याख्यन् पै [मूको].    ८. सुवः Km, तै.; दिवम् ऋ. मा. मं. पै.

त्रिंशद्धामा[1] वि राजति[2] वाक् पतङ्गो[3] अशिश्रियत्[4] ।
[5]प्रति [†]वस्तोरहर्द्युभिः[6] ॥ ३ ॥

त्रिंशत् । धाम॑ । वि । राजति । वाक् । पतङ्गः । अशिश्रियत् ।
प्रति॑ । वस्तो॑: । अहं॑: । द्युऽभिः ॥ ३ ॥

वस्तोः वासरस्य अहोरात्रस्य अवयवभूतानि त्रिंशन्मुहूर्तात्मकानि धाम धामानि स्थानानि । [7]अहशब्दः अवधारणे । [8]तस्यैव सूर्यस्य द्युभिः दीप्तिभिः प्रति विराजति विराजन्ते प्रतिक्षणं विशेषेण दीप्यन्ते । व्यत्ययेन एकवचनम् । तथा [9]वाक् त्रयीरूपा पतङ्गः । विभक्तिव्यत्ययः । पतङ्गं पतनशीलं पक्षिवच्छीघ्रगामिनं सूर्यम् अशिश्रियत् आश्रित्य वर्तते । 'णिश्रिद्रुस्रुभ्यः०' (पा ३,१,४८) इति च्लेश्चङ् आदेशः । 'ऋग्भिः पूर्वाह्ने दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते' (तैब्रा ३,१२,९,१) इति तैत्तिरीयकम् ।

इति सायणार्यविरचिते अथर्ववेदार्थप्रकाशे षष्ठकाण्डे तृतीयोऽनुवाकः ।

चतुर्थेऽनुवाके पञ्च सूक्तानि । तत्र 'अन्तर्दावे' इति प्रथमं सूक्तम् । तत्र आद्येन तृचेन पिशाचरक्षोजनितभयनिवृत्तये सूत्रोक्तप्रकारेण अग्निं त्रिः प्रदक्षिणं कृत्वा पुरोडाशं जुहुयात् । सूत्रितं हि—"'अन्तर्दावे' इति समन्तम् [1]अग्नेर्जपंस्त्रिः परिक्रम्य पुरोडाशं जुहोति" (कौसू ३१,३) इति ।

'यस्येदमा रजः' इति तृचेन कृषिकर्मणि क्षेत्रं गत्वा युगलाङ्गलं बध्नाति । अनेनैव तृचेन दक्षिणम् अनड्वाहं युगे युनक्ति । ततः कर्ता इमं तृचं जपन् प्राचीनं कृषन् तृचसमाप्त्यनन्तरं हालिकाय हलं प्रयच्छेत् । तेन तिसृषु सीतासु कृष्टासु उत्तरसीतान्ते अग्निम् उपसमाधाय पुरोडाशेन इन्द्रं स्थालीपाकेन अश्विनौ च अनेन तृचेन यजन् तन्त्यामेव सीतायां संपातान् आनयेत् । सूत्रितं हि—"'यस्येदमा रजः' [10]इत्यायोजनानाम् अप्ययः' (कौसू २३,१७) इति ।

तथा सर्वफलकामः अनेन तृचेन इन्द्रं यजते उपतिष्ठते वा । 'यस्येदमा रजः' (अ ६,३३), 'अथर्वाणम्' (अ ७,२), अदितिर्द्यौरदितिः[11] (अ ७,६) इत्यादि सूत्रम् (कौसू ५९,१८) ।

तथा भूमिकर्षणे लाङ्गलसंश्लेषलक्षणोत्पाते तच्छान्त्यर्थं क्रियमाणे शान्त्युदके

---

1. °धाम् K,K[m],V, पै १९,४५,१२ ऋ १०,१८९,३ मा ३,८ काठ ७,१३ कौ १,६३२. 2. राजद् पै. 3. पतङ्गाय पै. ऋ. मा. कौ. तै १,५,३,१ मै १,६,१; पतङ्गो काठ. 4. शि-श्रियत् पै.; शिश्रिये तै.; अशिश्रयुः काठ.; धीयते ऋ. मा. कौ.; हूयते मै. 5. प्रत्यस्य वह द्युभिः तै., प्रति वा॰ सूरो अहभिः मै. † °रह द्यु° ऋ. मा काठ. मा.; °रहर्दिवि पै. 6. द्युभिः ऋ. 7. अहर्व S'. 8. यस्य S'. 9. अग्नेः कल्यामुरुस्पूर्णायां जप° Bl. 10. इत्यायोजना S'. 11. °द्यौर्दिति Bl.

एतं तृचम् आवपेत्। 'अथ यत्रैतल्लाङ्गले संसृजतः' इति प्रक्रम्य 'अत्र शुनासीराण्यनुयोजयेद्' (कौसू १०६,१;८) इति सूत्रितम्।

अन्तर्दावे जुहुता[1] स्वे३तद्[2] यातुधानक्षयणं घृतेन[3]।
आराद्रक्षांसि [4]प्रति दह त्वमग्ने न नो गृहाणामुप तीतपासि[4] ॥ १ ॥

अन्तःऽदावे। जुहुत[5]। सु। एतत्। यातुधानऽक्षयणम्। घृतेन।
आरात्। रक्षांसि। प्रति। दह। त्वम्। अग्ने। न। नः। गृहाणाम्। उप। तीतपासि ॥ १ ॥

हे ऋत्विजः यातुधानक्षयणम् रक्षोनिबर्हणम् एतत् हविः घृतेन सह दावे[6] दावाग्नौ अन्तः[6] मध्ये सु सुष्ठु जुहुत। हे अग्ने आहुत्याधारभूतस्त्वं रक्षांसि अस्मदुपद्रवकारिणो राक्षसान् आरात् दूरे प्रति दह भस्मसात् कुरु। नः अस्माकं गृहाणां नोप तीतपासि उपतापकरो मा भूः।

रुद्रो[7] वो ग्रीवा अशरैत्[8] पिशाचाः[9] पृष्टीर्वोऽपि [10]शृणातु †यातुधानाः[10]।
वीरुद् वो विश्वतोवीर्या[11] यमेन[12] समजीगमत् ॥ २ ॥

रुद्रः। वः। ग्रीवाः। अशरैत्[8]। पिशाचाः। पृष्टीः[13]। वः। अपि। शृणातु। यातुऽधानाः[14]।
वीरुत्। वः। विश्वतःऽवीर्या[15]। यमेन। सम्। अजीगमत् ॥ २ ॥

हे पिशाचाः पिशिताशनाः वः युष्माकं ग्रीवाः गलावयवान् रुद्रः संहर्ता देवः अशरैत् छिनत्तु। हे यातुधानाः वः युष्माकं पृष्टीः पार्श्वास्थीनि स एव रुद्रः अपि शृणातु हिनस्तु। विश्वतोवीर्या सर्वतःप्राप्तवीर्या वीरुत् ओषधिश्च वः युष्मान् यातुधानान् यमेन मृत्युना सम् अजीगमत् संगमयतु।

अभयं [16]मित्रावरुणाविहास्तु ‡नोऽर्चिषात्रिणो नुदतं‡ प्रतीचः[16]।
मा ज्ञातारं मा प्रतिष्ठां विदन्त[17] मिथो विघ्नाना[18] उप यन्तु मृत्युम् ॥३॥

*अभयम्। मित्रावरुणौ। इह। अस्तु। नः। अर्चिषा। अत्रिणः। नुदतम्। प्रतीचः।*
मा। ज्ञातारम्। मा। प्रतिऽस्थाम्। विदन्त। मिथः। विऽघ्नानाः। उप। यन्तु। मृत्युम् ॥ ३ ॥

---

१. जुहुता A,B,B^h,D,K,K^m,R,S^m,P^2,J,V,Wh.; जुहुत्व पै १९,११,६. २. स्वे३-तद् D,K,K^m,R,V. ३. घृतं नः पै. ४. प्र तिरा ह्यग्ने मास्माकं वसूप तीतपन्त पै. ५. जुहुत P^2,J; जुहूत Cp. ६. वैतु. मंपा. द्र. ७. शर्वो पै १९,११,७. ८. अशरीत् B^h,K,K^m,V. ९. पिशाचाः P^3,M,I. १०. शृणात्वग्निः पै. †यातुधानाः P^3,M,I. ११. विश्वधा वीर्या पै. १२. मृत्युना पै. १३. पृष्टीः J,K. १४. °ऽधानाः P. १५. तु. सा.; वैतु. P,P^2,J,Cp °वीर्याः. १६. °णा मह्यमस्त्वर्चिषा शत्रून् दहतं प्रतीत्य आग्र ३,१०,११. † द्यावापृथिवी इहा° अ ६,४०,१ पै १,२७,२. ‡ नोग्निनामित्रान् प्रत्योषतां पै. १७. विन्दन्तु आग्र. १८. भिन्दाना आग्र.

हे मित्रावरुणौ नः अस्माकम् इह अस्मिन् देशे अभयम् भयराहित्यम् अस्तु। अर्चिषा तेजसा अत्रिणः अदनशीलान् राक्षसान् प्रतीचः प्रत्यङ्मुखान् अस्मत्तः पराङ्मुखान् नुदतम् निरस्यतम्। ते च निरस्ताः ज्ञातारम् अभिज्ञं स्वामिनं मा विदन्त मा लभन्ताम्। तथा प्रतिष्ठाम् आवासभूमिं मा लभन्ताम्। निराश्रया भवन्त्वित्यर्थः। ते च मिथः परस्परं विघ्नानाः विहन्यमानाः मृत्युम् मरणम् उप यन्तु उपगच्छन्तु।

'यस्येदमा रजो युजस्तुजे [1]जना वनं स्वः[1]। इन्द्रस्य [2]रन्त्यं बृहत्[2] ॥१॥

यस्य। इदम्। आ। रजः। युजः। तुजे। जनाः। वनम्। स्वः। इन्द्रस्य। रन्त्यम्। बृहत्॥ १॥

यस्येन्द्रस्य इदं रजः रञ्जकं ज्योतिः तुजे तोजनाय शत्रूणां हिंसनाय आयुजः[3] आयोजयति आयुक्तं संनद्धं करोति तस्य इन्द्रस्य रन्त्यम् रमणीयं बृहत् परिवृढं वनम् वननीयं स्वः सुष्ठु प्राप्तव्यं निरतिशयसुखसाधनं वा तेजः हे जनाः[3]। यूयं भजध्वम् इति शेषः। रज इति। रञ्ज रागे इत्यस्मात् असुनि 'रजकरजनरजःसूपसंख्यानम्' (पावा ६,४,२४) इति उपधालोपः। युज इति। युजिर् योगे। अस्माच्छान्दसे लुङि च्लेः अङ् आदेशः। तुजे इति। तुज हिंसायाम्। अस्मात् संपदादिलक्षणो भावे क्विप्। स्वरिति। सुपूर्वाद् अर्तेर्विच्। रन्त्यम् इति। रमु क्रीडायाम्। अस्मात् 'क्तिच्क्तौ च संज्ञायाम्' (पा ३,३,१७४) इति क्तिच्। 'न क्तिचि दीर्घश्च' (पा ६,४,३९) इति अनुनासिकलोपदीर्घयोरभावः। अत एव अन्यत्रा-म्नानम्—'रन्तिर्नामासि दिव्यो गन्धर्वः' (तैआ ४,११,५) इति। तत्र भवं ज्योतिः रन्त्यम्।

नाधृ॑ष [4]आ दधृषते धृषाणो[4] धृषितः[5] शर्वः।
पुरा [6]यथा व्यथिः[6] श्रव इन्द्रस्य [7]नाधृ॑षे शर्वः[7] ॥ २ ॥

न। [8]आऽधृषे। आ। दधृषते। धृषाणः। धृषितः। शर्वः।
पुरा। यथा। व्यथिः। श्रवः। इन्द्रस्य। न। [8]आऽधृषे। शर्वः॥ २॥

---

1. [1]इमोत्र आरजस्तुजो युजो बलं सहः शाश्री १८,३,२; [1]मारजस्तुजो युजो वनं सहः ऐआ ५,२,१. † वनं पै १९,२८,१; वने[2] की ३,१,२ जै २,४,८. २. नानिके शवः पै.
३. वेङ्क. मंत्र. द्र. ४. आ दधर्ष दाधृषाणं ऐआ.; आदधर्षया। धृषाणं शाश्री.
५. धृषित ऐआ. शाश्री.; धृषतः पै १९,२८,२. ६. यदीमतिव्यथिः ऐआ.; यथाधिष्ठितः? पै.
७. धृषित महः ऐआ.; रम्यं महत् पै. ८. पदा. [आ]धृषे इति W [तु. ऋ १,३९,४ प्रभृ.].

स च इन्द्रः नाधृषे नाधृष्यते अन्यैर्नाभिभूयते । स च धृषाणः धृष्टः सन् धृषितः । धृषित इति कर्तरि निष्ठा लिङ्गव्यत्ययः । धर्षकं शवः बलम् आदधृषते आधर्षयति[1] अभिभवति । पुरा वृत्रासुरवधकाले व्यथि[2] व्यथाकारि श्रवः[3] श्रूयमाणम् इन्द्रस्य शवः बलं यथा नाधृषे अन्यैर्नाधृष्यत[4] । तथेदानीमपीति संबन्धः ।

स नो ददातु[5] तां[6] र॒यिमु॒रुं[7] पि॒शङ्ग॑संदृशम् ।
इन्द्रः॒ पति॑स्तु॒विष्ट॑मो[8] जने॒ष्वा[9] ॥ ३ ॥

सः । नः॒ । द॒दा॒तु॒ । ताम् । र॒यिम् । उ॒रुम् । पि॒शङ्ग॑ऽसंदृशम् ।
इन्द्रः॑ । पतिः॑ । तु॒विऽत॑मः[10] । जने॑षु । आ ॥ ३ ॥

स इन्द्रः नः अस्मभ्यं तं[2] रयिम् धनं दधातु[2] प्रयच्छतु । कीदृशम् । उरुम् प्रभूतं [2]पिशङ्गसंदृशम् पीतवर्णाभं वर्णप्रकर्षयुक्तम् । उत्कृष्टं काञ्चनम् इत्यर्थः । कस्माद् एवम् उच्यते इति तत्राह—इन्द्रः पतिरिति । स इन्द्रो जनेष्वा आकारः समुच्चये । सर्वेषु च जनेषु देवमनुष्यादिषु पतिः अधिपतिः इष्टप्राप्त्यनिष्टपरिहारयोःकर्ता । [2]तुविष्टमः बहुतमः प्रभूततमः सर्वप्रकारोत्कर्षवान् इत्यर्थः ।

इति षष्ठकाण्डे चतुर्थेऽनुवाके प्रथमं सूक्तम् ।

'प्राग्नये वाचम्' इति पञ्चर्चेन रक्षोग्रहजनितपीडानिवृत्तये समिदाज्यशष्कुल्यन्तानि त्रयोदश द्रव्याणि जुहुयात् । सूत्रितं हि—"'प्राग्नये', 'प्रेतः' (अ ७,११४,२) इत्युपदधीत" (कौसू ३१,४) इति ।

'वैश्वानरो न ऊतये' (अ ६,३५), 'ऋतावानं वैश्वानरम्' (अ ६,३६) इति तृचाभ्यां सर्वभैषज्यकर्मणि उदकहरिद्रासर्पिरादिकपायनद्रव्याणि अभिमन्त्र्य पाययेत् । 'वैश्वानरीयाभ्यां पायनम्[11]' (कौसू ३१,५) इति हि सूत्रम् ।

अग्निचयने 'वैश्वानरो न ऊतये' इति तृचेन पुरीषाच्छन्नां[12] चितिं ब्रह्मा अनुमन्त्रयेत । "'वैश्वानरो न ऊतये' इति चितिंचितिं पुरीषाच्छन्नाम्[12]" (वैताश्रौ २९,५) इति हि वैतानं सूत्रम् ।

प्राग्नये॒ वाच॑मीरय वृष॒भाय॑ क्षिती॒नाम्[13] । स नः॑ पर्ष॒दति॒ द्विषः॑ ॥ १ ॥

---

१. आदधर्षयति S'. २. वैतु. मंपा. द्र. ३. श्रवं S'. ४. °धृष्यते S'. ५. दधातु H, पै १९,२८,३. ६. तं ऐआ ५,२,१ शांश्रौ १८,३.२; नो पै. ७. रयिं पुरु शांश्रौ.; रु॒यिं रु॒यिं ऐआ. ८. °तुवित्तमो B,S, सा.; °तवस्तमो शांश्रौ. ऐआ. ९. जनेषु शांश्रौ. १०. तुविऽत्तमः Cp; पपा? (तु. ऋपपा १,१८६,६ तुविःऽतमः) ११. °नानि BI, १२. पुरीषछिन्ना° S'. १३. क्षतीनाम् S; सा.

प्र । अग्नये । वाचम् । ईरय । वृषभाय । क्षितीनाम् ।
सः । नः । पर्षत् । अति । द्विषः ॥ १ ॥

हे स्तोतः अग्नये रक्षसां हन्त्रे देवाय स्तुतिलक्षणां वाचं प्रेरय प्रकर्षेण उच्चारय । कीदृशाय । क्षितीनां[1] मनुष्याणां वृषभाय कामाभिवर्षकाय । सः अग्निः नः अस्मान् द्विषः शत्रून् रक्षःपिशाचादीन् अति पर्षत् अतिपारयतु । पॄ पालनपूरणयोः । अस्मात् लेटि अडागमः । 'सिब्बहुलं लेटि' (पा ३,१,३४) इति सिप् ।

यो रक्षांसि [2]निजूर्वत्यग्निस्तिग्मेन[2] शोचिषा । स नः पर्षदति द्विषः ॥२॥

यः । रक्षांसि । निऽजूर्वति । अग्निः । तिग्मेन । शोचिषा । सः । नः ।०॥ २ ॥

योऽग्निः तिग्मेन तीक्ष्णेन शोचिषा तेजसा रक्षांसि निजूर्वति निहिनस्ति । स नः इत्यादि गतम् ।

यः परस्याः परावतस्तिरो [3]धन्वातिरोचते[3] । स नः पर्षदति द्विषः ॥३॥

यः । परस्याः । पराऽवतः । तिरः । धन्व । अतिऽरोचते । सः । नः ।०॥ ३ ॥

योऽग्निः परस्याः परावतः अत्यन्तदूरदेशाद् धन्व मरुभूमिं जलवर्जितं देशं तिरः अन्तर्धाय अतिरोचते अतिशयेन दीप्यते । स न. इत्यादि गतम् ।

यो विश्वाभि विपश्यति भुवना सं च पश्यति । स नः पर्षदति द्विषः ॥ ४ ॥

यः । विश्वा । अभि । विऽपश्यति । भुवना । सम् । च । पश्यति । सः । नः ।०॥ ४ ॥

योऽग्निः विश्वा भुवना विश्वानि भुवनानि अभि विपश्यति अभितः सर्वतो विविधं पश्यति सं पश्यति च ऐकरूप्येण सूर्यात्मना जाठररूपेण प्रदीपादिरूपेण वा प्रकाशयति । स न. इत्यादि गतम् ।

---

1. क्षमीनाम् S'; वैतु. मंत्रा. द्र. °ति पृषां सुक्षेणे ऋ १०,१८७,१. [मुक्षो.].

2. निर्जूर्व° R; °त्यग्निस्तुक्षेण पै १९,४५,४;

3. विद्यातिरो° पै १९,४५,२; विद्याधिरो° पै

योऽ[1] अस्य पारे रजसः[2] [3]शुक्रो अग्निरजायत†[4] । [5]स नः पर्षदति द्विषः ॥५॥

यः । अस्य । पारे । रजसः । शुक्रः । अग्निः । अजायत[5] । सः । नः ।०॥५॥

अस्य रजसः पार्थिवस्य लोकस्य पारे अवसाने पर्यवसानभूमौ अन्तरिक्षे यः शुक्रः निर्मलः सूर्यात्मकः अग्निरजायत उदपद्यत । स नः इत्यादि गतम् ।

वैश्वानरो न [6]ऊतय आ प्र यातु[7] परावतः । [8]अग्निर्नः सुष्टुतीरुप[9] ॥ १ ॥

वैश्वानरः । नः । ऊतये । आ । प्र । यातु । पराऽवतः ।
अग्निः । नः । सुऽस्तुतीः । उप ॥ १ ॥

वैश्वानरः विश्वनरहितः अग्निः नः अस्माकम् ऊतये रक्षणाय परावतः दूरदेशाद् आ प्र यातु अभिमुखं प्रगच्छतु । गत्वा[8] च सोऽग्निः नः अस्माकं सुष्टुतीः शोभनस्तुतीः उप यातु उपगच्छतु ।

वैश्वानरो न आगमदिमं यज्ञं सजूरुप । [7]अग्निरुक्थेष्वंहसु[7] ॥ २ ॥

वैश्वानरः । नः । आ । अगमत् । इमम् । यज्ञम् । सऽजूः । उप ।
अग्निः । उक्थेषु । अंहऽसु ॥ २ ॥

वैश्वानरोऽग्निः नः अस्मान् आगमत् आगच्छतु । आगत्य च अंहसु अभिगन्तव्येषु उक्थेषु अस्माभिः क्रियमाणेषु स्तुतशस्त्रेषु सजूः समानप्रीतिः सन् अस्मदीयम् इमं यज्ञम् उप गच्छतु ।

वैश्वानरोऽङ्गिरसां[10] स्तोममुक्थं[11] च[12] चाक्लृपत्[13] ।
ऐषु[14] द्युम्नं स्व१र्यमत् ॥ ३ ॥

वैश्वानरः । अङ्गिरसाम् । स्तोमम् । उक्थम् । च । चक्लृपत् ।
आ । एषु । द्युम्नम् । स्वः । यमत् ॥ ३ ॥

---

१. यत् मै २,७,१२ तै ४,२,५,२ तैब्रा ३,७,८,९ पै ५,२७,८.   २. तमसः पै.   ३. महश्चित्रं ज्योतिर्° मै.; चित्रं ज्योतिर्° काठ १६,१२; शुक्रं ज्योतिर्° तै. पै. तैब्रा.   †. °रजा° A,B, Km,R,Sm,P,J,Cs.   ४. तन् तै. मै. काठ. तैब्रा.   ५. अजायत P,J; अजायत>अजायत Cp.   ६. ऊत्यां प्र° मै ३,१६,४.   ७. अग्निरुक्थेन वाहसा मा २६,८ मै. आश्रौ ८,१९,४ शांश्रौ १०,९,१७; अग्निरुपतीर्णे? अंहसः पै १९,९,४.   ८. दत्वा S'.   ९. एमं सुष्टुतिं मम पै १९,९,५.   १०. °ङ्गिरोभिस् पै १९,९,६; °ङ्गिरोभ्यस् आश्रौ.   ११. स्तोमं यज्ञं पै.; शांश्रौ.; °म उ° आश्रौ.   १२. तु. पै.   १३. जीजनत् शांश्रौ.; चाकनत् आश्रौ.   १४. प्र पै.

वैश्वानरोऽग्निः अङ्गिरसाम् महर्षीणां तत्कर्तृकं स्तोमम् स्तोत्रम् उक्थम् शस्त्रं च चक्लृपत् क्लृप्तं समर्थम् अकार्षीत्। एषु अङ्गिरःसु द्युम्नम् द्योतमानं यशः अन्नं वा स्वः सुष्ठु अरणीयं प्राप्तव्यम् आ यमत् आगमयत्। यद्वा द्युम्नम् द्योतमानं स्वः कर्मफलभूतं स्वर्गसुखं प्रापयत् इत्यर्थः।

इति द्वितीयं सूक्तम्।

'ऋतावानं वैश्वानरम्' इति तृचस्य सर्वरोगभैषज्यकर्मणि पूर्वतृचेन सह उक्तो विनियोगः। सूत्रं च तत्रैवोदाहृतम्।

'उप प्रागात् सहस्राक्षः' ( अ ६,३७ ) इति तृचेन अभिचारजनितदोषनिवृत्तये अभिमन्त्रितायाः श्वेतमृत्तिकायाः शुने प्रदानम् संपातिताभिमन्त्रितपालाशमणिप्रदानम् इङ्गिडहोमं समिदाधानं वा कुर्यात् ( तु कौसू ४८,२३ )।

'यो नः शपात्' (अ ६,३७,३) इत्यनया अभिचारकर्मणि विद्युद्धतवृक्षजा एकादश समिध आदध्यात् ( तु. कौसू ४८,३७ )।

ऋतावा॑नं वैश्वान॒रमृ॒तस्य॒ ज्योति॑ष॒स्पति॑म्। अज॑स्रं घ॒र्ममी॑महे ॥ १ ॥

ऋ॒त॒ऽवा॑नम्। वै॒श्वा॒न॒रम्। ऋ॒तस्य॑। ज्योति॑षः। पति॑म्। अज॑स्रम्। घ॒र्मम्। ई॒म॒हे ॥१॥

ऋतावानम् ऋतम् इति सत्यस्य उदकस्य यज्ञस्य वा नामधेयम्। तद्वन्तम्। 'छन्दसीवनिपौ' ( पावा ५,२,१०९ ) इति मत्वर्थीयो वनिप्। तथा ऋतस्य यज्ञात्मकस्य ज्योतिषः तेजसः पतिम् स्वामिनम् अजस्रम् अनुपरतं संततं घर्मम् दीप्यमानम् एवंभूतं वैश्वानरम् अग्निम् ईमहे ईयामहे उपसीदामः। उपास्महे इत्यर्थः। ईङ् गतौ। दैवादिकः। व्यत्ययेन श्यनो लुक्। यद्वा। ईमहे इति याञ्चाकर्मसु पठितम्। अभिलषितं फलं याचामहे इत्यर्थः।

स विश्वा॒[1] प्रति॑ चाक्लृप[2] ऋ॒तूँरुत्सृ॑जते व॒शी। य॒ज्ञस्य॒ वय॑ उ॒त्तिर॑न्[3] ॥ २॥

सः। विश्वा॑[4]। प्रति॑। चा॒क्लृ॒पे। ऋ॒तून्। उत्। सृ॒ज॒ते। व॒शी। य॒ज्ञस्य॑। वयः॑। उ॒त्ऽतिर॑न् ॥ २ ॥

सः वैश्वानरोऽग्निः विश्वाः[5] सर्वाः प्रजाः प्रति चक्लृपे तत्तत् फलं प्रापयितुं समर्थो भवति। क्लृपू सामर्थ्ये। अस्माच्छान्दसो लिट्। स च वशी वशयिता

1. वैपु. मंरा. द्र. 2. मानुमी' शांश्री ३,३,५. 3. विश्वाः Bh,D,K,Km,R, Sm,V,Cs,Cp,P',I,K'; वै ईर्द' कौ २,१०५९. 4. प्रतिचक्रे' कौ. 5. ईरर्त्ति' कौ.
शौ १९,४,२.

स्वतन्त्रः सूर्यात्मना ऋतून् वसन्ताद्यान् कालावयवान् उत सृजते उद्वतान् निर्मिमीते। किं कुर्वन्। यज्ञस्य संबन्धि वयः अन्नं हविर्लक्षणम् उत्तिरन् ऊर्ध्वं देवान् प्रापयन्।

'अ॒ग्निः परे॑षु॒ धाम॑सु॒' कामो॑ भू॒तस्य॒ भव्य॑स्य ।
स॒म्राडेको॒ वि रा॑जति ॥ ३ ॥

अ॒ग्निः । परे॑षु । धाम॑ऽसु । काम॑ः । भू॒तस्य॑ । भव्य॑स्य ।
स॒म्ऽराट् । एक॑ः । वि । रा॒ज॒ति॒ ॥ ३ ॥

परेषु उत्कृष्टेषु धामसु स्थानेषु अग्निः एकः एव सम्राट् सम्यग् राजमानः भूतस्य उत्पन्नस्य भव्यस्य उत्पत्स्यमानस्य च कामः कामयिता कामप्रदो वा भूत्वा वि राजति विशेषेण दीप्यते।

उप॒ प्रागा॑त् स॒हस्रा॒क्षो यु॒क्त्वा श॒पथो॒ रथ॑म् ।
श॒प्तार॑मन्वि॒च्छन् मम॒ वृक॑ इ॒वावि॑मतो गृ॒हम् ॥ १ ॥

उप॑ । प्र । अ॒गा॒त् । स॒ह॒स्र॒ऽअ॒क्षः । यु॒क्त्वा । श॒पथ॑ः । रथ॑म् ।
श॒प्तार॑म् । अ॒नु॒ऽइ॒च्छन् । मम॑ । वृक॑ःऽइव । अवि॑ऽमतः । गृ॒हम् ॥ १ ॥

सहस्राक्षः इन्द्रः शपथः शापक्रियायाः कर्ता सन् रथं युक्त्वा अश्वाभ्यां संयोज्य उप अस्मत्समीपं प्रागात्। आगत्य च मम मदीयं शप्तारम् शापकारिणं शत्रुम् अन्विच्छन्[4] जिघांसतु। तत्र दृष्टान्तः— अविमतः अवीनां स्वामिनः पुरुषस्य गृहं वृक इव। यथा वृकः आगत्य तदीयान् अवीन् हन्ति तद्वद् इत्यर्थः।

परि॑ णो वृङ्धि शपथ ह्र॒दम॒ग्निरि॑वा॒ दह॑न् ।
श॒प्तार॒मत्र॑ नो॑ जहि दि॒वो॑ वृ॒क्षमि॑वा॒शनि॑ः ॥ २ ॥

परि॑ । नः॒ । वृ॒ङ्ग्धि॒ । श॒प॒थ॒ । ह्र॒दम् । अ॒ग्निःऽइ॑व । दह॑न् ।
श॒प्तार॑म् । अत्र॑ । नः॒ । ज॒हि॒ । दि॒वः । वृ॒क्षम्ऽइ॑व । अ॒शनि॑ः ॥ २ ॥

हे शपथ नः अस्मान् परि वृङ्ग्धि परिहर मा बाधिष्ठाः इदम्[5] शत्रुकुलम् अग्निरिव दहन्। भस्मसात् कुर्वन्नित्यर्थः। एवं च अत्र अस्मिन् देशे नः अस्माकं

---

१. अग्निं पीयूषधामसु पै १९,४,३. † प्रियेषु मा १२,११७ कौ २,१०६०; प्रत्नेषु आश्रौ ८,१०,३. २. अभि पै २०,१७,१. ३. याति पै. ४. अन्विच्छ S', सांपा. नास्ति. ५. ह्रद°>हृद° Cs; हृदम् A,K, Km,R,Sm,P,P², J,V,Cp; इदम् सा. ६. स्वं पै. ७. दिव्या पै. ८. वैतु. मंपा. द्र.

शप्तारम् शापकारिणं शत्रुमेव जहि नाशय। दिवः सकाशात् [1]पतितोऽशनिः यथा वृक्षं निहन्ति तद्वद् इत्यर्थः।

यो नः॒ शपा॒दश॑पतः॒ शप॑तो॒ यश्च॑ नः॒ शपा॑त् ।
शुने॒ पेष्ट्र॑मि॒वाव॑क्षामं॒ तं प्रत्य॑स्यामि मृ॒त्यवे॑ ॥ ३ ॥

यः । नः॒ । शपा॑त् । अशपतः । शप॑तः । यः । च॒ । नः॒ । शपा॑त् ।
शुने॑ । पेष्ट्र॑म्ऽइव । अव॑ऽक्षामम् । तम् । प्रति॑ । अ॒स्या॒मि॒ । मृ॒त्यवे॑ ॥ ३ ॥

यः शत्रुः अशपतः अशापकारिणो नः अस्मान् शपात् परुषभाषणेन शपेत्। यश्च शपतः शापकारिणो नः अस्मान् शपात् शपेत्। तम् उभयविधं शत्रुं शुने कौलेयकाय [2]पेष्टम् पिष्टमयं खाद्यमिव अवक्षामम् अवदग्धं कृत्वा मृत्यवे यमाय प्रत्यस्यामि प्रतिक्षिपामि। अवपूर्वात् क्षायतेः 'क्षायो मः' (पा ८,२,५३) इति निष्ठातकारस्य मकारः।

इति तृतीयं सूक्तम्।

'सिंहे व्याघ्रे', 'यशो हविः' (अ ६,३९) इति तृचाभ्यां वर्चस्कामः स्नातकसिंहव्याघ्रादीनां सूत्रोक्तानां सप्तानामन्यतमस्य नाभिलोममणिं लाक्षाहिरण्याभ्यां वेष्टयित्वा संपात्य अभिमन्त्र्य बध्नीयात्।

तथा आभ्यामेव तृचाभ्यां पालाशादिदशशान्तवृक्षशकलनिर्मितमणिं लाक्षाहिरण्यवेष्टितं संपात्य अभिमन्त्र्य वर्चस्कामो बध्नीयात्।

सूत्रितं हि — "लोमानि जतुना संनह्य[3] जातरूपेणापिधाय। 'सिंहे व्याघ्रे', 'यशो हविः' इति स्नातकसिंहव्याघ्रवस्तवृष्णिवृषभराज्ञां[4] नाभिलोमानि। दशाना शान्तवृक्षाणा शकलान्[5]। एतयोः" (कौसू १३,२-५) इति।

तथा उत्सर्जनाख्ये कर्मणि आभ्यां तृचाभ्याम् आज्यं हुत्वा रसेषु संपातान् आनयेत्। सूत्रितं हि—'फल्गुनीषु[6] द्वयान् रसान् उपसादयति' इति प्रक्रम्य 'सिंहे व्याघ्रे', 'यशो हविः', 'यशसं मेन्द्रः' (अ ६,५८) इत्यादि 'अग्नौ हुत्वा। रसेषु संपातान् आनीय' (कौसू १३९,१४-१६) इत्यन्तम्।

सिं॒हे व्या॒घ्र उ॒त या पृदा॑कौ॒ त्विषि॑र॒ग्नौ ब्रा॑ह्म॒णे सूर्ये॒ या ।
इन्द्रं॒ या दे॒वी सु॒भगा॑ ज॒जान॑[7] 'सा न॒ ऐतु॑'[8] वर्च॑सा संविदा॒ना ॥ १ ॥

---

१. पतितो S'. २. पैष्टु. मंपा. द्र. ३. संदिह्य Bl. ४. °स्तकृष्णवृष° Bl.
५. °क्तानि Bl. ६. फल्गुनेषु S. ७. यजुर्वे पै २,१८,१. ८. सा न आगन् मैत्रा १,५,५,१; मेंपंमांगार् काठ ११,१५.

सिंहे । व्याघ्रे । उत । या । पृदाकौ । त्विषिः । अग्नौ । ब्राह्मणे । सूर्ये । या ।
इन्द्रम् । या । देवी । सुऽभगा । जजान । सा । नः । आ । एतु । वर्चसा । सम्ऽविदाना ॥ १ ॥

सिंहे सहनशीले मृगेन्द्रे व्याघ्रे शार्दूले च या त्विषिः दीप्तिरस्ति उत अपि च पृदाकौ सर्पे अग्नौ ब्राह्मणे सूर्ये च या दीप्तिरस्ति । त्विष्यात्मिका सुभगा सौभाग्ययुक्ता या देवी इन्द्रं जजान जनयामास । अत्र सिंहादिषु त्रिषु आक्रमणशक्तिरूपा त्विषिर्विवक्षिता अग्न्यादिषु त्रिषु दाहशापतापात्मिका । सा त्विष्यात्मिका देवी वर्चसा अस्मदभीप्सितेन तेजसा संविदाना संजानाना ऐकमत्यं गता नः अस्मान् ऐतु आगच्छतु ।

या हस्तिनि द्वीपिनि या हिरण्ये त्विषिरप्सु[1] गोषु या पुरुषेषु[†] ।
इन्द्रं या देवी सुभगा जजान[2] सा न ऐतु[3] वर्चसा संविदाना ॥ २ ॥

या । हस्तिनि । द्वीपिनि । या । हिरण्ये[4] । त्विषिः । अप्ऽसु । गोषु । या । पुरुषेषु ।
इन्द्रम् । या । देवी । सुऽभगा । जजान । सा । नः । आ । एतु । वर्चसा । सम्ऽविदाना ॥

या त्विषिः हस्तिनि गजेन्द्रे द्वीपिनि तरक्षौ हिरण्ये च या त्विषिरस्ति । गजेन्द्रे तावद् बलोत्कर्षरूपा त्विषिः द्वीपिनि हिंसनरूपा हिरण्ये आह्लादविषयको वर्णोत्कर्षः । अप्सु उदकेषु गोषु पुरुषेषु मनुष्येषु च या तत्तदसाधारणरूपा त्विषिरस्ति । या च सुभगा सौभाग्ययुक्ता त्विष्यात्मिका देवी इन्द्रं जजानेत्यादि पूर्ववद् योजना । अप्स्विति । 'ऊडिदम्°' (पा ६,१,१७१) इति विभक्त्युदात्तत्वम् । गोष्विति । 'सावेकाचः°' (पा ६,१,१६८) इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'न गोश्वन्साववर्ण°' (पा ६,१,१८२) इति प्रतिषेधः ।

रथे अक्षेष्वृषभस्य[5] वाजे वाते पर्जन्ये वरुणस्य शुष्मे ।
इन्द्रं या देवी सुभगा जजान[2] सा न ऐतु[3] वर्चसा संविदाना ॥ ३ ॥

रथे । अक्षेषु । ऋषभस्य । वाजे । वाते । पर्जन्ये । वरुणस्य । शुष्मे ।
इन्द्रम् । या । देवी । सुऽभगा । जजान । सा । नः । आ । एतु । वर्चसा । सम्ऽविदाना ॥३॥

गमनसाधने रथे अक्षेषु च तदीयेषु [6]वृषभस्य सेचनसमर्थस्य पुंगवस्य वाजे वेगगमने वाते वायौ पर्जन्ये वृष्टिप्रदे मेघे वरुणस्य तदधिष्ठातुर्देवस्य शुष्मे शोषके बले च या प्रतिनियतस्वभावा त्विषिरस्ति । अन्यत् पूर्ववत् ।

---

१. गोष्वश्वेषु पुरुषेष्वन्तः काठ ३६,१५. † °षिरश्वेषु पै २,१८,२ तैब्रा २,७,७,१. २. ववर्ध पै २,१८,१;४. ३. नु आगन् तैब्रा.; इयमागात् काठ. ४. हिरण्ये P.P².J. ५. °क्षेषु वृष° पै २,१८,४ काठ. तैब्रा २,७,७,२. ६. वैतु. मंपा. द्र.

राजन्ये दुन्दुभावायतायामश्वस्य [1]वाजे पुरुषस्य मायौ ।
इन्द्रं या देवी सुभगा जजान [2]सा [3]न ऐतु वर्चसा संविदाना ॥ ४ ॥

राजन्ये । दुन्दुभौ । आऽयतायाम् । अश्वस्य । वाजे । पुरुषस्य । मायौ ।
इन्द्रम् । या । देवी । सुऽभगा । जजान । सा । नः । आ । एतु । वर्चसा । सम्ऽविदाना ॥

राजन्ये राज्ञोऽभिषिक्तस्य पुत्रो राजन्यः । 'राजश्वशुराद्यत्' (पा ४,१,१३७) 'ये चाभावकर्मणोः' (पा ६,४,१६८) इति प्रकृतिभावः । 'तित् स्वरितम्' (पा ६,१,१८५) इति स्वरितत्वम् । तस्मिन् राजकुमारे आयतायाम् आयम्यमानायाम् आताड्यमानायां दुन्दुभौ च या त्विषिरस्ति । अश्वस्य वाजे शीघ्रगमने पुरुषस्य मायौ शब्दे उच्चैर्घोषलक्षणे या त्विषिरस्ति । या च त्विष्यात्मिका देवी सुभगा सौभाग्ययुक्ता इन्द्रं देवं जजान जनयामास सा नः अस्मान् वर्चसा तेजसा संविदाना संजानाना ऐतु आगच्छतु । संविदानेति । 'समो गमादिषु विदिप्रच्छि॰' (पावा १,३,२९) इति आत्मनेपदम् ।

यशो हविर्वर्धतामिन्द्रजूतं [4]सहस्रवीर्यं सुभृतं सहस्कृतम् [4] ।
प्रसर्स्राणमनु दीर्घाय [5]चक्षसे हविष्मन्तं मा वर्धय [6]ज्येष्ठतातये ॥ १ ॥

यशः । हविः । वर्धताम् । इन्द्रऽजूतम् । सहस्रऽवीर्यम् । सुऽभृतम् । सहःऽकृतम् ।
प्रऽसर्स्राणम् । अनु । दीर्घाय । चक्षसे । हविष्मन्तम् । मा । वर्धय । ज्येष्ठऽतातये ॥ १ ॥

यशः व्यापकम् । अशू व्याप्तौ इत्यस्माद् 'अशेर्देवने युट् च' (पाउ ४,१९१) इति असुनि युडागमः । यद्वा फलभूतस्य यशसो हेतुत्वात् तत्कारणं हविरपि यशः । तद् वर्धताम् समृध्यताम् । कथंभूतम् । इन्द्रजूतम् इन्द्रम् उद्दिश्य अस्माभिः प्रेरितं दत्तं सहस्रवीर्यम् अपरिमितसामर्थ्ययुक्तं [7]सुभृतम् सुष्ठु वर्तमानं परिवर्तमानं सहस्कृतम् सहसः पराभिभवनक्षमस्य बलस्य कारकं प्रसर्स्राणम् प्रसरणशीलम् । सृ गतौ इत्यस्माद् यङ्लुगन्तात् ताच्छीलिकश्चानश् । उद्दिश्यमाना देवता यादृक्परिमाणयुक्तं हविः कामयते तावत्पर्यन्तं मन्त्रसामर्थ्येन अभिवर्धमानम् इत्यर्थः । तथा च तैत्तिरीयकम् 'धान्यमसि धिनुहि देवान् इत्याह । एतस्य यजुषो वीर्येण यावदेका देवता कामयते यावदेका । तावदाहुतिः प्रथते' (तैब्रा ३,२,६,४) इति । अनु ईदृशस्य हविषो वर्धनानन्तरं हविष्मन्तम् तेन हविषा युक्तं मा मां यजमानं दीर्घाय चक्षसे चिरकालभाविने दर्शनाय ज्येष्ठतातये सर्वश्रैष्ठ्याय च हे इन्द्र वर्धय समृद्धं कुरु । 'वृकज्येष्ठाभ्यां तिल्तातिलौ

---

१. क्वचित् तैब्रा २,७,७,१; क्वचित् काठ ३६,१५. तैब्रा.; दुर्मर्षाणाम् काठ. २. सवर्ध पै २,१८,३. ३. नु आगन् ४. सहस्रमृष्टि सुहृतं सहस्वत् पै १९,८,७. ५. जीवसे पै. ६. सर्वज्यायसे तै. ७. सेतु. मंस. द.

च च्छन्दसि' ( पा ५,४,४१ ) इति तातिल्प्रत्ययः । दीर्घाय चक्षसे प्रसर्प्राणम् इति वा संबन्धः ।

अच्छा न इन्द्रं यशसं यशोभिर्यशस्विनं[1] नमसाना[2] विधेम ।
स नो रास्व राष्ट्रमिन्द्रजूतं तस्य ते रातौ यशसः[3] स्याम ॥ २ ॥

अच्छ । नः । इन्द्रम् । यशसम् । यशःऽभिः । यशस्विनम् । नमसानाः । विधेम ।
सः । नः । रास्व । राष्ट्रम् । इन्द्रऽजूतम् । तस्य । ते । रातौ । यशसः । स्याम ॥ २ ॥

नः अस्माकम् अच्छ आभिमुख्येन वर्तमानम् इन्द्रं यशसम् यशोरूपं यशसः प्रदातारम् । यशःशब्दात् क्यजन्तात् क्विपि अतोलोपयलोपौ । 'चितः' ( पा ६,१, १६३ ) इति अन्तोदात्तत्वम् । यशोभिः कीर्तिभिः यशस्विनम् प्रभूतयशस्कम् एवंभूतम् इन्द्रं नमसानाः नमस्यन्तः नमस्कारादिभिः पूजयन्तो वयं विधेम परिचरेम । हे इन्द्र स त्वं नः अस्मभ्यम् इन्द्रजूतम् इन्द्रेण त्वया प्रेरितं राष्ट्रम् राज्यं रास्व देहि । 'रा दाने । तस्य ते तव रातौ दाने यशसः यशस्विनो वयं स्याम भवेम ।

यशा इन्द्रो यशा अग्निर्यशाः सोमो अजायत ।
यशा विश्वस्य भूतस्याहमस्मि यशस्तमः ॥ ३ ॥

यशाः । इन्द्रः । यशाः । अग्निः । यशाः । सोमः । अजायत ।
यशाः । विश्वस्य । भूतस्य । अहम् । अस्मि । यशःऽतमः ॥ ३ ॥

इन्द्रो देवो यशाः यश आत्मन इच्छन् वर्तते । पूर्ववद् यशस्यतेः क्विपि रूपम् । तथा अग्निरपि यशाः यशस्कामो भवति । तथा सोमश्च यशाः यश इच्छन् अजायत । यथैवम् इन्द्रादयो यशस्विनो जाताः एवं यशाः यशस्कामः अहमपि विश्वस्य भूतस्य सर्वस्य भूतजातस्य देवमनुष्यादेः सकाशाद् यशस्तमः अतिशयेन यशस्वी अस्मि भवामि ।

इति चतुर्थं सूक्तम् ।

'अभयं द्यावापृथिवी' इति तृचेन ग्रामाद्यभयकामः तस्यैव प्रतिदिशं सप्तर्षीन् यजते उपतिष्ठते वा । सूत्रितं हि—" 'अभयं द्यावापृथिवी' (अ ६,४०), 'श्येनोसि' (अ ६,४८) इति प्रतिदिशं सप्तर्षीन् अभयकामः" ( कौसू ५९,२६ ) इति ।

तथा सेनाभयनिवृत्त्यर्थं तस्याः प्रतिदिशं सप्तर्षीणां यागम् उपस्थानं वा कुर्यात् । 'अभयानामप्ययः' ( कौसू १६,८ ) इति सूत्रात् ।

---

१. वयं पै १९,१०,८.   २. °स्विनो पै.   ३. हविर्पैन पै.   ४. दधत् पै.
५. रात्रौ अधिवाके पै.   ६. द्र. सा. अ ६,७९,३; वैदु, शंपा, रास.

तथा अनेन तृचेन उपाकर्मणि आज्यं जुहुयात् । 'अभिजिति शिष्यान् उपनीय' इति प्रक्रम्य सूत्रितम्—'अभयैरपराजितैः XXX आज्यं जुहुयात्' ( कौसू २९,१;७ ) इति ।

'मनसे चेतसे धिये' इति तृचेन गोदानाख्ये संस्कारकर्मणि महाव्रीहिमयं[1] स्थालीपाकं शान्त्युदकेन अभ्युक्ष्य अभिमन्त्र्य आयुष्कामं माणवकं प्राशयेत् । सूत्रितं हि—"'यथा द्यौः' ( अ २,१५ ), 'मनसे चेतसे धिये' ( अ ६,४१ ) इति महाव्रीहीणां स्थालीपाकं श्रपयित्वा शान्त्युदकेन 'उपसिच्याभिमन्त्र्य प्राशयति'" ( कौसू ५४,११ ) इति ।

**अभयं द्यावापृथिवी इहास्तु नोऽभयं सोमः सविता नः कृणोतु ।**
**अभयं नोऽस्तूर्व१न्तरिक्षं [2]सप्तऋषीणां च हविषाभयं नो अस्तु ॥ १ ॥**

अभयम् । द्यावापृथिवी इति । इह । अस्तु । नः । अभयम् । सोमः । सविता । नः । कृणोतु । अभयम् । नः । अस्तु । उरु । अन्तरिक्षम् । सप्तऽऋषीणाम्[3] । च । हविषा । अभयम् । नः । अस्तु ॥ १ ॥

हे द्यावापृथिवी द्यावापृथिव्यौ युवयोः प्रसादाद् इह अस्मिन् देशे नः अस्माकम् अभयम् भयराहित्यम् अस्तु । चोरव्याघ्रादिजनितस्य भयस्य निवृत्तिर्भूयाद् इत्यर्थः । तथा सोमश्चन्द्रः सविता सूर्यश्च नः अस्माकम् अभयं कृणोतु करोतु । तथा द्यावापृथिव्योर्मध्ये वर्तमानम् उरु विस्तीर्णम् अन्तरिक्षं नः अस्माकम् अभयम् अस्तु । तत्रत्याद् निमित्ताद् भयं मा भूद् इत्यर्थः । सप्तर्षीणाम्[4] ।

'विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः ।
अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः ॥' (आश्रौप १)

इत्येवं प्रसिद्धा ये सप्त ऋषयः सन्ति तेषां संबन्धिना हविषा[5] अस्माभिर्दीयमानेन नः अस्माकम् अभयम् अस्तु । 'सप्तर्षीणाम्' इति । सप्त च ते ऋषय इति विगृह्य 'दिक्संख्ये संज्ञायाम्' ( पा २,१,५० ) इति समासः ।

**अस्मै ग्रामाय प्रदिशश्चतस्र ऊर्जं सुभूतं स्वस्ति सविता नः [6]कृणोतु ।**
**[7]अशत्रुरिन्द्रो अभयं नः कृणोत्वन्यत्र राज्ञामभि यातु मन्युः ॥ २ ॥**

अस्मै । ग्रामाय । प्रऽदिशः । चतस्रः । ऊर्जम् । सुऽभूतम् । स्वस्ति । सविता । नः । कृणोतु । अशत्रुः । इन्द्रः । अभयम् । नः । कृणोतु । अन्यत्र । राज्ञाम् । अभि । यातु । मन्युः ॥

१. °व्रीहियवं S'. २. °ऋ॒षी॒णां° B,B^b. ३. सप्तर्षी° B^b, पै १,२७,१. ४. °ऋषीणाम् P. ५. हविषानः S'. ६. कृ॒. मंग. द्र. ७. दधातु पै १,२७,४. ८. अशत्रुरिन्द्रो B,D,K^m, अशत्रुरिन्द्रो K; अनमुमिन्द्रो पै १,२७,४.

अपानाय व्यानाय प्राणाय भूरिधायसे ।
सरस्वत्या उरुव्यचे विधेम हविषा वयम् ॥ २ ॥

अपानाय । विऽआनाय । प्राणाय । भूरिऽधायसे ।
सरस्वत्यै । उरुऽव्यचे । विधेम । हविषा । वयम् ॥ २ ॥

अपानाय अपानवायवे । मुखनासिकाभ्यां बहिर्विनिर्गतस्य समीरणस्य पुनरन्तः प्रवेशः अपाननव्यापारोऽपानः । व्यानाय । विविधम् अननम् ऊर्ध्वाधोवृत्तिपरित्यागेन तस्य समीरणस्य अवस्थानं व्यानः । 'अथ यः प्राणापानयोः संधिः स व्यानः' ( छाउ १,३,३ ) इति हि श्रुतिः । तस्मै । प्राणाय । शरीरस्थस्य प्राणवायोर्मुखनासिकाभ्यां बहिर्विनिर्गमनं प्राणनव्यापारः प्राणः । तस्मै । एवं प्राणापानव्यानवृत्तिभेदेन त्रैधम् 'अवस्थिताय मुख्यप्राणाय भूरिधायसे भूरि बहुलं धारयित्रे । 'बहिहाधाञ्भ्यश्छन्दसि' (पाउ ४,२२१) इति असुन् । तस्य णिद्वद्भावाद् 'आतो युक् चिण्कृतोः' (पा ७,३,३३) इति युगागमः । तथा उरुव्यचे । व्यचतिर्व्याप्तिकर्मा । अस्मात् कर्तरि विच् । उरु बहुलं व्याप्नुवत्यै सरस्वत्यै वाग्देवतायै । 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वाच्चतुर्थी । उदीरितलक्षणं प्राणं सरस्वतीं च हविषा आज्यादिना वयं विधेम परिचरेम ।

मा नो हासिषुर्ऋषयो दैव्या ये तनूपा ये नस्तन्वस्तनूजाः[1] ।
अमर्त्या मर्त्यां अभि नः सचध्वमायुर्धत्त प्रतरं जीवसे नः ॥ ३ ॥

मा । नः । हासिषुः । ऋषयः । दैव्याः । ये । तनूऽपाः । ये । नः । तन्वः । तनूऽजाः ।
अमर्त्याः । मर्त्यान् । अभि । नः । सचध्वम् । आयुः । धत्त । प्रऽतरम् । जीवसे । नः ॥ ३ ॥

दैव्याः देवेषु भवा ऋषयः अतीन्द्रियार्थदर्शिनः प्राणाधिदेवताः सप्त ऋषयः नः अस्मान् मा हासिषुः मा परित्यजन्तु । ये ऋषयस्तनूपाः तन्वाः शरीरस्य पातारः ये 'च नः' अस्माकं तन्वः शरीरात् तनूजाः शरीरसंबन्धितयैव इन्द्रियात्मना उत्पन्नाः । ते ऋषयः मा हासिषुरिति संबन्धः । हे अमर्त्याः अमरणधर्माणो देवाः मर्त्यान् मरणधर्मकान् नः अस्मान् अभि सचध्वम् अभितः प्राप्नुत । नः अस्माकं जीवसे जीवनाय प्रतरम् प्रकृष्टतरम् आयुः जीवनं धत्त प्रयच्छत । डुधाञ् दानधारणयोः ।

इति सायणार्यविरचिते अथर्ववेदार्थप्रकाशे षष्ठकाण्डे चतुर्थोऽनुवाकः ।

---

१. भवधिरियताय S'. २. 'ऋषयो दैव्यामस्तनूपावानस्तन्वस् (वै. शुचयस्) तपोजाः वै १९,१०,२ ऐमा २,२७,७. ३. मर्त्यं S[m]; मर्त्या> मर्त्यं Cs. ४. धुः पै. ५. प्रतिरं पै. ६. च अस्मार्कं न. S'.

पञ्चमेऽनुवाके पञ्च सूक्तानि । तत्र 'अव ज्यामिव' इति आद्यं सूक्तम् । तत्र आद्येन तृचेन स्त्रीपुरुषयोः स्त्रीविषये पुरुषस्य मन्युविनाशार्थं कुपितं पुरुषं पश्यन् अश्मानम् अभिमन्त्र्य हस्तेन गृहीत्वा 'सखायाविव' इति द्वितीयाम् ऋचं जपन् अश्मानं भूमौ प्रक्षिप्य 'अभि तिष्ठामि' इति तृतीयाम् ऋचं जपन् तस्याश्मन उपरि निष्ठीवेत् ।

तथा तस्मिन्नेव कर्मणि कुपितस्य पुरुषस्य च्छायायाम् अनेन तृचेन धनुरभिमन्त्र्य सज्यं कुर्यात् । एवं पुरुषविषये स्त्रिया मन्युविनाशार्थम् उक्तं कर्म कुर्यात् ।

सूत्रितं हि—"'अव ज्यामिव' इति दृष्ट्वाश्मानम् आदत्ते । द्वितीययाभिनिदधाति । तृतीययाभिनिष्ठीवति । छायायां सज्यं करोति" ( कौसू ३६,२८-३१ ) इति ।

तथा दीक्षायां यजमानः क्रोधे प्राप्ते एतं तृचं जपेत् । 'अव ज्यामिव' (वैताश्रौ १२,१३ ) इति वैतानं सूत्रम् ।

सर्वविषयमन्युविनाशार्थम् 'अयं दर्भः' (अ ६,४३) इति तृचेन दर्भमूलम् ओषधिवत् खात्वा संपात्य अभिमन्त्र्य बध्नीयात् । "'अयं दर्भः' इत्योषधिवत्" ( कौसू ३६,३२ ) इति सूत्रात् ।

अव[1] ज्यामिव[2] धन्वनो[3] मन्युं तनोमि ते हृदः ।
यथा[4] संमनसौ[5] भूत्वा सखायाविव[6] सचावहै ॥ १ ॥

अव । ज्याम्ऽइव । धन्वनः । मन्युम् । तनोमि । ते । हृदः ।
यथा । सम्ऽमनसौ । भूत्वा । सखायौऽइव । सचावहै ॥ १ ॥

धन्वनः धनुर्दण्डात् ज्यामिव यथा आरोपितां ज्यां धानुष्कोऽवरोपयति तथा हे पुरुष ते तव हृदः हृदयाद् मन्युम् क्रोधम् अव तनोमि अवरोपयामि । अपनयामीत्यर्थः । यथा येन प्रकारेण आवां संमनसौ समानमनस्कौ परस्परानुरागयुक्तौ भूत्वा सखायाविव समानख्यानौ सुहृदाविव सचावहै समवेतौ संगतौ एककार्यकारिणौ भवाव । तथा त्वदीयं क्रोधम् अपनयामीत्यर्थः । षच समवाये इति धातुः ।

सखायाविव[6] सचावहा[7] अव मन्युं तनोमि ते ।
अधस्ते[8] अश्मनो मन्युमुपास्यामसि यो गुरुः ॥ २ ॥

---

१. ध्यामिव हिग्र १,१५,३. २. धन्वि' पै १९,८,१० [मूको.] हिग्र. ३. शुष्मं पै. ४. मिथः पै. ५. सौमनसौ $K^m$. ६. सखीकेव (सखिकेव मूको.) पै. ७. वि ते मन्युं नयामसि पै १९,८,११. ८. अश्मना मन्युं गुरुणापि नि दध्मसि पै.

सखायौऽइव । सुचावहै । अवं । मुन्युम् । तुनोमि । ते ।
अुधः । ते । अश्मनः । मुन्युम् । उपं । अस्यामसि । यः । गुरुः ॥ २ ॥

सखायाविवेत्यादि उक्तार्थम् । हे क्रुद्ध पुरुष ते त्वदीयं मन्युम् क्रोधं यो गुरुः गौरवोपेतश्चालयितुमशक्यः अश्मास्ति तस्य अश्मनः अधः अधस्ताद् उपास्यामसि उपक्षिपामः । 'इदन्तो मसि' ( पा ७,१,४६ ) ।

अभि तिष्ठामि ते मुन्युं [1]पाष्र्ण्या प्रपदेन च[1] ।
यथांवुशो न वादिषो मम चित्तमुपायसि ॥ ३ ॥

अुभि । तिष्ठामि । ते । मुन्युम् । पाष्र्ण्या । प्रऽपदेन । च ।
यथां । अवुशः । न । वादिषः । मम । चित्तम् । उपऽआयसि ॥ ३ ॥

हे क्रुद्ध पुरुष ते तव मन्युम् क्रोधं पाष्र्ण्या पादापरभागेन प्रपदेन पादाग्रेण च अभि तिष्ठामि उपरि तिष्ठामि । [2]पादस्य पूर्वापरभागाभ्यां निष्पीडयामीत्यर्थः । यथा येन प्रकारेण अवशः परवशः सन् न वादिषः न ब्रूयाः प्रतिवचनसमर्थो[3] न भवेः । येन च प्रकारेण मम चित्तम् मदीयं मनः उपायसि उपागच्छसि । तथा अभितिष्ठामीति संबन्धः । वादिष इति । वदेर्लेटि अडागमः । 'सिब्बहुलं लेटि' ( पा ३,१,३४ ) इति सिप् । 'सिब्बहुलं छन्दसि णिद् वक्तव्यः' ( पावा ३,१,३४ ) इति स्मरणाद् उपधावृद्धिः ।

[4]यं दुर्भो [5]विमन्युकः स्वाय चारंणाय च ।
[4]मुन्योर्विमन्युकस्यायं मन्युशमन [4]उच्यते ॥ १ ॥

अयम् । दुर्भः । विऽमन्युकः । स्वाय । चु । अरंणाय । चु ।
मुन्योः । विऽमन्युकस्य । अयम् । मुन्युऽशमनः । उच्यते ॥ १ ॥

अयं पुरोवस्थितो दर्भः स्वाय ज्ञातये आत्मसंबन्धिने अरणाय अरातये च विमन्युकः मन्युविगमनस्य क्रोधापनयनस्य हेतुः । इष्टजनविषयम् अनिष्टजनविषयं तत्कर्तृकं वा क्रोधं शमयतीत्यर्थः । स्वाय चारणाय चेति परस्परसमुच्चयार्थौ चकारौ । 'स्वमज्ञातिधनाख्यायाम्' ( पाग १,१,३५ ) इति गणसूत्रेण ज्ञातिवाचिनः स्वशब्दस्य सर्वनामसंज्ञायाः पर्युदासात् तत्कार्याभावः । 'यो नः स्वो अरणो यश्च निष्ट्यो जिघांसति' (ऋ ६,७५,१९) इति हि निगमः । उक्त पदार्थौ विवियते — मन्योरिति । लुप्तनिर्दिष्टोऽत्र मत्वर्थप्रत्ययो द्रष्टव्यः । मन्योः मन्युमतः पुरुषस्य शत्रोः विमन्युकस्य परमार्थतो

---

1. पार्ष्णिभ्यां प्रपदाभ्याम् पै १९,८,१२.   2. पदस्य S'.   3. 'समर्था S'.
4. 'मन्यक' पै १९,११,७ [मुतो.].   5. ऽस्तु मे पै.

मन्युरहितस्य आपाततः क्रोधाविष्टस्य आत्मीयस्य च अयं प्रयोगो मन्युशमनः क्रोधनिवारणोपाय उच्यते विधानशेरभिधीयते।

अयं यो भूरिमूलः 'समुद्रमवतिष्ठति'।
दर्भः 'पृथिव्या उत्थितो मन्युशमन उच्यते'॥ २॥

अयम्। यः। भूरिऽमूलः। समुद्रम्। अवऽतिष्ठति।
दर्भः। पृथिव्याः। उत्ऽथितः। मन्युऽशमनः। उच्यते॥ २॥

योऽयं पुरोवर्ती भूरिमूलः बहुभिर्मूलैरुपेतः दर्भः समुद्रम्। समुद्द्रवन्त्यस्माद् आप इति उदकभूयिष्ठो देशः समुद्रः। तम् अवतिष्ठति अवक्रम्य स्थितो भवति। यद्वा समुद्रम् इति अन्तरिक्षनाम। सैव व्युत्पत्तिः। अन्तरिक्षम् आक्रम्य अवस्थित इत्यर्थः। पृथिव्याः सकाशाद् उत्थितः उत्पन्नः स दर्भः काशकुशाद्यात्मकः मन्युशमन उच्यते। क्रोधविनाशनस्य हेतुरभिधीयते इत्यर्थः।

वि ते हनव्यां शरणिं वि ते 'मुख्यां नयामसि'।
यथावशो न वादिषो मम चित्तमुपायसि॥ ३॥

वि। ते। हनव्याम्। शरणिम्। वि। ते। 'मुख्याम्। नयामसि'।
यथा। अवशः। न। वादिषः। मम। चित्तम्। उपऽआयसि॥ ३॥

हे क्रोधाविष्ट पुरुष ते तव हनव्याम् हनुसंबन्धिनीं शरणिम् हिंसाहेतुभूतां क्रोधाभिव्यञ्जिकां धमनिं वि नयामसि विनयामः। तथा ते तव मुख्याम् मुखे भवां क्रोधवशोत्पन्नाम् अन्याम् अपि धमनिं विनयामः क्रोधशमनेन अपगमयामः। उत्तरोर्धर्चो व्याख्यातः (अ ६,४२,३)। हनव्याम् इति। हनुशब्दात् 'शरीरावयवाच्च' (पा ४ ३,५५) इति यत्। ओर्गुणे 'वान्तो यि प्रत्यये' (पा ६,१,७९) इति अव् आदेशः। मुख्याम् इति। पूर्ववद् यत्।

इति पञ्चमेऽनुवाके प्रथमं सूक्तम्।

'अस्थाद् द्यौः' इति तृचेन 'अपवातभैषज्यकर्मणि स्वयंपतितं गोशृङ्गं संपात्य तद् उदके[५] निधाय अभिमन्त्र्य तद् उदकम् आचामयेत् प्रोक्षेच्च[६]। सूत्रितं हि— "'अस्थाद् द्यौः' इत्यपवातायाः स्वयंस्रस्तेन गोशृङ्गेण संपातवता जपन्" (कौसू ३१,६) इति।

'परोपेहि'[७] इति तृचेन दुःस्वप्नदर्शननिमित्तदोषनिर्हरणार्थम् उत्थाय मुखं प्रक्षालयेत्।

---

१. पृथिव्यामानिष्ठितः पै १९,३३,८. २. पृथिव्यां निष्ठितस्स मेऽस्तु विमन्युकः (मूको. विमन्यकः) पै. ३. तु. सा.; वैतु. A,B[b],D,K,R,S[m],Cs, मुख्यांन्नया°; P,P[2],Cp मुख्यांन्। नया°; V मुख्यांत्। नया°. ४. °वाद° इति शंपा. ५. उदकं S'. ६. च नास्ति S'. ७. परोपीहि S'.

तथा अतिघोरदुःस्वप्नदोषनिर्हरणकर्मणि व्रीहियवगोधूमादिमिश्रधान्यमयं पुरोडाशद्वयं कृत्वा एकम् अनेन तृचेन अग्नौ जुहुयात्। अपरं शत्रुक्षेत्रे निदध्यात्।

तद् उक्तं कौशिकेन "'परोपेहि'" (अ ६,४५), 'यो न जीवः' (अ ६,४६) इति स्वप्नं दृष्ट्वा मुखं निमार्ष्टि[2]। अतिघोरं दृष्ट्वा मैश्रधान्यं पुरोडाशम् अन्याशायां वा निदधाति" (कौसू ४६,९;१०) इति।

अस्थाद्[3] द्यौरस्थात्[4] पृथिव्यस्थाद्[5] विश्वमिदं जगत्।
[5]अस्थुर्वृक्षा ऊर्ध्वस्वप्नास्तिष्ठाद् रोगो[6] अयं तव ॥ १ ॥

अस्थात्। द्यौः। अस्थात्। पृथिवी। अस्थात्। विश्वम्। इदम्। जगत्।
अस्थुः। वृक्षाः। ऊर्ध्वऽस्वप्नाः। तिष्ठात्। रोगः। अयम्। तव ॥ १ ॥

द्यौः द्युलोको ग्रहनक्षत्रमण्डलोपेतः यथा अस्थात् तिष्ठति नाधः पतति। तिष्ठतेश्छान्दसो लुङ्। "गातिस्था" (पा २,४,७७) इति सिचो लुक्। यथा च पृथिवी अस्थात् सर्वाधारभूता तिष्ठति। यथा च तत्राश्रितं विश्वम् सर्वम् इदं परिदृश्यमानं जगत् जङ्गमप्राणिजातम् अस्थात् तिष्ठति। यथा च वृक्षाः पादपाः ऊर्ध्वस्वप्नाः। ऊर्ध्वम् अवस्थिता एव स्वापम् अनुभवन्ति न तु शयाना इति ऊर्ध्वस्वप्नाः। एवंभूताः सन्तः अस्थुः तिष्ठन्ति। हे व्याधित तव त्वदीयः अयं रोगः रुधिरस्रावात्मकस्तथा तिष्ठात् तिष्ठतु न स्रवतु। निवर्तताम् इत्यर्थः।

शतं या भेषजानि ते सहस्रं संगतानि[7] च।
श्रेष्ठमास्रावभेषजं वसिष्ठं रोगनाशनम् ॥ २ ॥

शतम्। या। भेषजानि। ते। सहस्रम्। सम्ऽगतानि। च।
श्रेष्ठम्। आस्रावऽभेषजम्। वसिष्ठम्। रोगऽनाशनम् ॥ २ ॥

हे व्याधित ते तव या यानि शतम् शतसंख्याकानि भेषजानि रोगशमनहेतुभूतान्यौषधानि सन्ति तथा संगतानि संप्राप्तानि सहस्रम् सहस्रसंख्याकानि च औषधानि सन्ति तेषां मध्ये श्रेष्ठम् प्रशस्ततमम् आस्रावभेषजम् रक्तस्रावस्य निवर्तकम् एतत् क्रियमाणं कर्म अत एव वसिष्ठम् वासयितृतमं रोगनाशनम्। रोगो नश्यत्यनेनेति करणे ल्युट्।

रुद्रस्य मूत्रमस्यमृतस्य नाभिः।
विषाणका[9] नाम वा असि पितृणां मूलादुत्थिता वातीकृतनाशनी[8] ॥ ३ ॥

१. परोपेहि S'. २. विमार्ष्टि Bl. ३. आस्थात् पै १९,२३,९. ४. °थी स्थास्थाद् पै. ५. आस्थाद् विद्वांस एव तिष्ठान् कामो पै ३,४०,५. ६. संभृतानि पै २०,११,७. ७. विषाणा पै १९,११,१२. ८. वार्तीकृतभेषजी पै.

रुद्रस्य । मूत्रम् । असि । अमृतस्य । नाभिः ।
विऽसानका । नाम । वै । असि । पितृणाम् । मूलात् । उत्थिता । वातीकृतऽनाशनी ॥ ३ ॥

रुद्रस्य । रोदयति सर्वम् अन्तकाले इति रुद्रः जगत्संहर्ता ईश्वरः । हे गोशृङ्गोदक तस्य संहर्तुरीश्वरस्य मूत्रम् तदीयाल्लिङ्गाद् विनिर्गतं जलम् असि । अतो रोगं संहरेत्यर्थः । तथा अमृतस्य अमरणस्य चिरकालजीवनस्य नाभिः बन्धकं स्थापकम् असि । 'नहो भश्च' (पाउ ४,१२६) इति इञ्प्रत्ययः । रसशास्त्रोक्तप्रकारेण ईश्वरवीर्यस्य रसस्य आसेवनेन हि सिद्धा अजरामरत्वं लभन्त इति तदभिप्रायेणोक्तं रुद्रस्य मूत्रम् असीति । हे गोशृङ्ग त्वं विषाणका नाम वै विशेषेण रोगनिवर्तनस्य संभक्त्री एतत्संज्ञा खलु असि भवसि । पुनः सा विशेष्यते — पितृणाम् पितृदेवतानां मूलात् उपादानकारणाद् उत्थिता उत्पन्ना वाती[1] आस्रावस्य रोगस्य शोषयित्री कृतनाशनी[1] कृतं रोगस्य निदानभूतं दुष्कर्म । तस्य नाशयित्री भवेत्यर्थः ।

परोऽपेहि मनस्पाप[2] किमशस्तानि शंससि[3] ।
परेहि न त्वा कामये[4] वृक्षां[5] वनानि सं चर[6] गृहेषु गोषु मे मनः ॥ १ ॥

परः । अप । इहि । मनःऽपाप । किम् । अशस्तानि । शंससि । परा । इहि । न । त्वा । कामये । वृक्षान् । वनानि । सम् । चर । गृहेषु । गोषु । मे । मनः ॥ १ ॥

हे पाप[1] पापासक्त हे मनः[1] स्वप्ननिमित्तभूत परः परस्ताद् अस्मत्तो दूरदेशे अपेहि अपगच्छ । दुःस्वप्नान् न दर्शयेत्यर्थः । तददर्शने किं कारणम् । अशस्तानि अशोभनानि शंससि[1] प्रकाशयसि । अतो हेतोः परेहि परागच्छ । त्वा त्वाम् अहं न कामये अभिलष्यामि । 'कमेर्णिङ्' (पा ३,१,३०) । परागत्य च वृक्षवनानि[1] वृक्षभूयिष्ठानि वनानि प्रविश्य तत्रैव संचर वर्तस्व । मास्मान् बाधिष्ठा इत्यर्थः । एवं दुःस्वप्ननिमित्तस्य पापस्य मनसोऽपगमनं प्रार्थितम् । शोभनस्य मनसोऽवस्थानम् आशास्ते — मे मदीयं शोभनं मनः गृहेषु स्त्रीपुत्रादिषु गृहावस्थितेषु अनुकूलजनेषु गोषु च । अवतिष्ठताम् इत्यर्थः । गोष्विति । 'सावेकाचः°' (पा ६,१,१६८) इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'न गोश्वन्त्साववर्ण°' (पा ६,१,१८२) इति प्रतिषेधः ।

[7]अवशसा निःशसा यत् पराशसोपारिम[8] जाग्रतो[8] यत् स्वपन्तः ।
अग्निर्विश्वान्यप दुष्कृतान्यजुष्टान्यारे अस्मद् दधातु ॥ २ ॥

---

१. वैतु. संपा द्र.　२. मनसस्पते ऋ १०,१६४,१ पै १९,३६,४.　३. शंसतु पै.
४. कामये K^m,R.　५. वृक्षं B; वृक्षान् D,S,Cs, पै.　६. चरः पै.　७. यदाशसा निःशसाभिश° ऋ १०,१६४,३; यदाशसा निशसा यत्पराश° तैब्रा ३,७,१२,४.　† निशसा पै १९,३६,५.　८. यज्जाग्रतो पै.

अवऽशसा । निःऽशसा । यत् । पराऽशसा । उपऽआरिम । जाग्रतः । यत् । स्वपन्तः ।
अग्निः । विश्वानि । अप । दुःऽकृतानि । अजुष्टानि । आरे । अस्मत् । दधातु ॥ २ ॥

अवशसा अवाङ्पूर्वात् शसु हिंसायाम् इत्यस्मात् क्विप्। अवशसा अवशसनेन अवस्तात् हिंसनेन निःशसा निःशेषेण नितरां वा हिंसनेन पराशसा पराशसनेन पराङ्मुखहिंसनेन च जाग्रतः जाग्रदवस्थापन्ना वयं यत् येन दुःस्वप्नेन उपारिम उपार्ताः पीडिता भवेम । अर्तेश्छान्दसो लिट् । जागृ निद्राक्षये इत्यस्मात् लटः शत्रादेशः। 'जक्षित्यादयः षट्' (पा ६,१,६) इति अभ्यस्तसंज्ञाविधानाद् 'नाभ्यस्ताच्छतुः' (पा ७,१,७८) इति नुम्प्रतिषेधः । तथा स्वपन्तः निद्रावस्थां प्राप्ता वयं यत् येन दुःस्वप्नदर्शनेन हेतुना अवशसनादिभिः पीडिताः तानि विश्वानि सर्वाणि अजुष्टानि अशोभनानि दुष्कृतानि दुःस्वप्ननिमित्तानि पापानि अग्निर्देवः अस्मत् अस्मत्तः आरे दूरे अप दधातु अपनिदधातु अपकृष्य स्थापयतु ।

यदिन्द्र [1]ब्रह्मणस्पतेऽपि मृषा[2] चरामसि ।
प्रचेता न आङ्गिरसो [3]दुरितात् [3]पात्वंहसः ॥ ३ ॥

यत् । इन्द्र । ब्रह्मणः । पते । अपि । मृषा । चरामसि ।
प्रऽचेताः । नः । आङ्गिरसः । दुःऽइतात् । पातु । अंहसः ॥ ३ ॥

हे ब्रह्मणस्पते मन्त्रस्याधिपते हे इन्द्र यत् येन दुःस्वप्ननिमित्तेन पापेन अपि मृषा चरामसि । अपिशब्दः कस्यचित्पदस्यार्थे गर्हायां वा वर्तते । 'अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु' (पा १,४,९६) इति कर्मप्रवचनीयसंज्ञा । अपि बहुलं गर्हितं वा स्वप्ने मिथ्या चरामः । 'इदन्तो मसि' (पा ७,१,४६)। तस्माद् दुरिताद् दुःस्वप्नापकाद् अंहसः पापाद् आङ्गिरसः अङ्गिरसां मन्त्राणां संबन्धी प्रचेताः प्रकृष्टज्ञानोपेतः एतत्संज्ञो वरुणः नः अस्मान् पातु रक्षतु ।

इति पञ्चमेऽनुवाके द्वितीयं सूक्तम्।

'यो न जीवः' इति तृचेन दुःस्वप्नजनितदोषनिवृत्तिकामः [4]"परोपेहि' (अ ६,४५) इति तृचोक्तानि कर्माणि कुर्यात्। सूत्रं च तत्रैवोदाहृतम्।

'विद्म ते स्वप्न' इति द्वाभ्यां (२,३) ऋग्भ्यां घोरदुःस्वप्नदर्शने मुखविमार्जनम् मंत्रधान्यपुरोडाशस्य होमम् शत्रुक्षेत्रे प्रक्षेपणम् पार्श्वयोः पर्यावर्तनम् अन्नभक्षणस्वप्न-

---

१. °पते यद्वीर्ध्या वै १९,३६,६; °पतेऽभिद्रोहं ऋ १०,१६४,४. २. द्विषतः पै.; द्विषतो भ्र. ३. पातु तेभ्य. पै. ४. परोनीहीति S'.

दर्शने अन्ननिरीक्षणं च कुर्यात्। "'विद्म' ते स्वप्न' इति सर्वेषाम् अप्ययः" (कौसू ४६,११) इति हि सूत्रम्।

'अग्निः प्रातःसवने' इति तिसृभिर्ऋग्भिर्यथाक्रमं प्रातरादिषु त्रिषु सवनेषु सवनसमाप्तिहोमान् जुहुयात्। उक्तं वैताने— " 'अग्निः प्रातःसवने' (अ ६,४७), 'श्येनोसि' (अ ६,४८), 'यथा सोमः प्रातःसवने' (अ ९,१,११) इति यथासवनम् आज्यं जुहोति। संस्थितहोमान्" (वैताश्री २१,७;८) इति।

यो न जीवोसि न मृतो देवानाममृतगर्भोसि[2] स्वप्न।
वरुणानी ते माता यमः [3]पितारुर्नामासि ॥ १ ॥

यः। न। जीवः। असि। न। मृतः। देवानाम्। अमृतऽगर्भः। असि[4]। स्वप्न।
वरुणानी। ते। माता। यमः। पिता। अररुः[5]। नाम। असि ॥१॥

हे स्वप्न यः त्वं जीवः प्राणधारको नासि न भवसि। किं तर्हि मृतः, नेत्याह। मृतः त्यक्तप्राणोऽपि न भवसि। मिथ्यापरिकल्पितस्वभावत्वात् स्वप्नस्य जीवनमरणयोः प्राणिधर्मयोरसंभव इत्यर्थः। किंरूपस्तर्हि स्वप्न इति तत्राह— देवानाम् अग्न्यादीनाम् इन्द्रियाधिष्ठातॄणाम् अमृतगर्भः अमृतमयगर्भस्त्वम् असि। स्वप्नस्य जाग्रदनुभवजनितवासनामयत्वात् वासनायाश्च स्थायित्वाद् इति भावः। देवगर्भत्वम् एव प्रतिपादयति—हे स्वप्न ते तव वरुणानी वरुणस्य पत्नी माता। 'इन्द्रवरुण°' (पा ४,१,४९) इति ङीपानुकौ। यमः यच्छति नियच्छति प्राणिनो दुष्कृतिनो निगृह्णातीति यमो वरुणः। स पिता जनयिता उत्पादयिता। हे स्वप्न त्वम् अररुर्नाम[6]। अररुः आर्तिकरोऽसुरः। स एव असि भवसि। नामशब्दः श्रुत्यन्तरप्रसिद्धिं द्योतयति। श्रूयते हि तैत्तिरीयके—'अररुर्वै नामासुर आसीत्' (तैब्रा ३,२,९,४) इति।

विद्म ते स्वप्न जनित्रं देवजामीनां पुत्रोसि यमस्य करणः। अन्तकोऽसि मृत्युरसि।
तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात्[7] पाहि[8] ॥ २ ॥

विद्म। ते। स्वप्न। जनित्रम्। देवऽजामीनाम्। पुत्रः। असि। यमस्य। करणः।
अन्तकः। असि। मृत्युः। असि। तम्। त्वा। स्वप्न। तथा। सम्। विद्म। सः। नः।
स्वप्न। दुःऽस्वप्न्यात्। पाहि ॥ २ ॥

हे स्वप्न स्वप्नाभिमानिन् देव ते तव जनित्रम् जन्म विद्म जानीमः। जनेः औणादिक इत्रप्रत्ययः। उक्त एवार्थो विव्रियते—देवजामीनाम् देवस्त्रीणां वरुणानी-

---

१. विद्मा Bl.　२. गर्भोऽसि K,$K^m$,R,V; गर्भोऽसि सात².　३. तु. $B^h$,$K^m$, $Bp^2$,$E^2$,T,$K^2$ मै ४,१,१० तैब्रा ३,२,९,४; वैतु. शंपा. °रंरु°, S °ररुर्णामा°; °ता हुडुन्ना° पै १९, ४६,१२.　४. असि $P^2$,J; असि>असि P.　५. अररुः शंपा.　६. °र्णाम S.
७. सुष्वप्नान् देहि पै.　८. दुष्वप्न्यात् इति W.

प्रभूनीनां पुत्रः तनयः असि । ताभिरुत्पाद्यमानत्वात् । देवस्त्रियो हि मायारूपाः पुरुषस्य शुभाशुभात्मकं भावि फलं सूचयितुं स्वप्नम् उत्पादयन्तीति प्रसिद्धिः । स्वप्नस्य शुभाशुभफलसूचकत्वं श्रुतिर्दर्शयति—'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्' (छांउ ५,२,९) इति, 'अथ स्वप्नाः । पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' (ऐआ ३,२,४) इत्यादि च । अतो यमस्य करणः । यमशब्दः प्राणापहरणलक्षणं तद्व्यापारं लक्षयति । तस्य कर्ता भवसि । अत एव अन्तकः अन्तकरः जीवनावसानस्य कर्ता असि भवसि । मृत्युरसि प्राणत्यागस्य कारयिता भवसि । हे स्वप्न तं तादृशं त्वा त्वां तथा प्रागुक्तप्रकारेण सं विद्म सम्यग् जानीमः । हे स्वप्न स त्वं नः अस्मान् दुःस्वप्न्यात् दुःस्वप्नजनिताद् भयात् पाहि रक्ष ।

यथा॑ क॒लां यथा॑ श॒फं [1]यथ॒र्णं॑ सं॒नय॑न्ति[2] ।
ए॒वा [3]दु॒ष्वप्न्यं॒ सर्वं॑ [4]द्वि॑ष॒ते सं न॑यामसि ॥ ३ ॥

यथा॑ । क॒लाम् । यथा॑ । श॒फम् । यथा॑ । ऋ॒णम् । स॒म्ऽनय॑न्ति ।
ए॒व । दुः॒ऽस्वप्न्य॑म् । सर्व॑म् । द्वि॒ष॒ते । सम् । न॒याम॒सि ॥ ३ ॥

गोरवयवैकदेशः कला । शफः खुरः । दोषदूषितं कलादिकम् अङ्गं यथा छेदनादिना अपगमयन्ति । यथा वा ऋणम् अधमर्णाः पुरुषाः संनयन्ति संप्रदानेन गमयन्ति । एव एवं सर्वं दुष्वप्न्यम् दुःस्वप्नजनितं भयं द्विषते द्वेष्ट्रे जनाय सं नयामसि सम्यक् प्रापयामः ।

अ॒ग्निः प्रा॒तःस॒व॒ने[5] पा॑त्व॒स्मान् वै॑श्वान॒रो [6]वि॑श्व॒कृद् वि॒श्वशं॑भूः[7] ।
स नः॑ पाव॒को द्र॑वि॑णे[8] द॑धा॒त्वायु॑ष्मन्तः स॒हभ॑क्षाः स्याम ॥ १ ॥

अ॒ग्निः । प्रा॒तः॒ऽस॒व॒ने । पा॒तु॒ । अ॒स्मान् । वै॒श्वा॒न॒रः । वि॒श्व॒ऽकृ॒त् । वि॒श्व॒ऽशं॑भूः ।
सः । नः॒ । पा॒व॒कः । द्र॒वि॑णे । द॒धा॒तु॒ । आयु॑ष्मन्तः । स॒ह॒ऽभ॑क्षाः । स्या॒म॒ ॥ १ ॥

अग्निः । सवनत्रयात्मको हि सोमयागः । तानि च सवनानि गायत्रं त्रैष्टुभं जागतम् इति क्रमेण नियतच्छन्दस्कानि । 'अग्नेर्गायत्र्यभवत् सयुग्वा' (ऋ १०,१३०,४) इति श्रुतेः अग्निर्गायत्र्या अधिदेवनेति तन्निर्वर्त्यस्य प्रातःसवनाख्यस्य कर्मणः स एवाधिदेवता । प्रातःसवने प्रातःसवनाख्ये कर्मणि अस्मान् ऋत्विग्यजमानान् पातु संभव-

1. यर्थ कृणं ऋ ८,४७,१७.   2. सुंनर्यामसि ऋ.   3. दु:ष्व° A,B; दुष्व° ऋ.
4. अग्निर्नु वै २,१३०,३ (तु. अ १९,५७,१), आप्ये ऋ.   5. सवनात् मै १,३,३६.   6. वि-स्वर्थ्यां मं.; पथिकृद् वै १९,४३,१०; मंहिना ऋ १,५९,७; मंहिना तै ३,१,९,१; महीनां काश्री ९,१,२१.   7. शिवशंभिः ऋ. वै.   8. द्रविणं तै. मै. वै [मूको.].

कल्पपरिहारेण सवनसंपूर्त्या रक्षतु। कीदृशः सोऽग्निः। वैश्वानरः विश्वनरात्मको विराड्रूपः सर्वप्राणिहितकरो वा। अत एव विश्वकृत् विश्वस्य कृत्स्नस्य जगतः कर्ता। विश्वशंभूः विश्वस्मिन् सर्वस्मिन् जगति दुःखशमनेन सुखस्य भावयिता। स तादृग्गुणविशिष्टः पावकः शोधकोऽग्निः नः अस्मान् द्रविणे यागफलात्मके धने दधातु स्थापयतु। वयमपि तत्प्रसादाद् आयुष्मन्तः दीर्घायुषा युक्ताः सहभक्षाः समानसोमपानाः पुत्रपौत्रादिभिः सहभोजनाः स्याम भवेम।

विश्वे॑ दे॒वा म॒रुत॒ इन्द्रो॑ अ॒स्मान॒स्मिन् द्वि॒तीये॒ सव॑ने॒ न ज॑ह्युः।
आयु॑ष्मन्तः प्रि॒यमे॑षां॒ वद॑न्तो व॒यं दे॒वानां॑ सुम॒तौ स्या॑म ॥ २ ॥

विश्वे॑। दे॒वाः। म॒रुत॑ः। इन्द्रः॑। अ॒स्मान्। अ॒स्मिन्। द्वि॒तीये॑। सव॑ने। न। ज॒ह्युः।
आयु॑ष्मन्तः। प्रि॒यम्। ए॒षा॒म्। वद॑न्तः। व॒यम्। दे॒वाना॑म्। सु॒ऽम॒तौ। स्या॒म॒ ॥ २ ॥

विश्वे सर्वे देवाः दानादिगुणयुक्ता मरुतः एतत्संज्ञकाः एकोनपञ्चाशत्संख्याकाः सप्तगणात्मका देवाः इन्द्रश्च तेषाम् अधिपतिः। एते हि माध्यन्दिनसवनस्य अधिपतयः। 'इन्द्रो मरुत्वान्सोमस्य पिबतु। मरुत्स्तोत्रो मरुद्गणः' ( शांश्रौ ८,१६,१ ) इत्येवमादिनिविन्मन्त्रैः प्रतिपाद्याः। 'एते अस्मिन्' परिसमाप्यमाने द्वितीये सवने अस्मान् ऋत्विग्यजमानान् न जह्युः न जहतु न परित्यजन्तु। अस्माभिर्दत्तं हविः स्वीकृत्य अस्मदीया इमे अभिमतफलप्रदानेन रक्षणीया इत्येवमनुग्रहबुद्ध्या युक्ता भवन्त्वित्यर्थः। एषां देवानाम् मरुताम् इन्द्रस्य च प्रियम् प्रीतिकरं स्तुतशस्त्रात्मकं वाक्यं वदन्तः उच्चारयन्तो वयं तत्प्रसादाद् आयुष्मन्तः शतसंवत्सरपरिमितेन आयुषा युक्ताः सन्तः तेषां देवानां सुमतौ शोभनायाम् अनुग्रहात्मिकायां बुद्धौ स्याम भवेम।

इ॒दं [2]तृ॒तीयं॒ सव॑नं[3] क॒वीना॑मृ॒तेन॒ ये [4]च॑म॒समैर॑यन्त।
ते सौ॑धन्व॒नाः [5]स्व॑रानशा॒नाः स्वि॑ष्टिं नो अ॒भि [6]वसी॑यो नयन्तु[7] ॥ ३ ॥

इ॒दम्। तृ॒तीय॑म्। सव॑नम्। क॒वीना॑म्। ऋ॒तेन॑। ये। च॒म॒सम्। ऐर॑यन्त।
ते। सौ॒ध॒न्व॒नाः। स्वः॑। आ॒न॒शा॒नाः। सु॒ऽइ॑ष्टिम्[7]। नः॒। अ॒भि। वसी॑यः। न॒य॒न्तु॒ ॥

इदं परिसमाप्यमानं तृतीयम् त्रित्वसंख्यापूरकं सवनम् सोमाभिषवोपलक्षितं तृतीयसवनाख्यं कर्म कवीनाम् कान्तदर्शिनानाम् ऋभूणां स्वभूतम्। त एव हि इन्द्रादिभिः सहितास्तस्य सवनस्य अधिदेवताः। तथा च तत्रत्यो मन्त्रवर्णः—'इन्द्र

---

१. चेतास्मिन् S'.　२. तृतीयसवनं काश्रौ १०,३,२१.　३. चमसं समैरयन् पै १९,४३,१२..　४. सुवरान° तै ३,१,९,२; अमृतमान° पै.　५. वसीयो तै.　६. नयाथ पै.　७. °इष्टम् P.

ऋभुभिर्वाजवद्भिः समुक्षितम्' (ऋ ३,६०,५), 'समृभुभिः पिबस्व रत्नधेभिः' ( ऋ४,३५,७ ), 'ऋभवो देवाः सोमस्य मत्सन्' (शाश्रौ ८,२०,१) इति च। ये ऋभवो देवाः ऋतेन सत्येन अवितथेन आत्मीयेन शिल्पकर्मणा चमसम् सोमभक्षणपात्रम् एकम् ऐरयन्त प्रेरयन्त । चतुर्धा विभागेन चतुरश्चमसान् अकुर्वन् । 'प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्य' (आपश्रौ १२,२३,१३) इत्येवं निर्दिष्टा मध्यतःकारिणां ये प्रधानभूताश्चमसास्तदभिप्रायम् एतत् । ननु मैत्रावरुणादीनामपि षण्णां होत्रकाणां पृथक्पृथक् चमसाः सन्ति । अत एव 'होतृचमसमनुदशान् दश[1] चमसान् उन्नयति' (आपश्रौ १२,२१,१४) इति सूत्रकारा आहुः । मैवम् । मैत्रावरुणादीनां वषट्कर्तृत्वेन होतृकार्यापन्नत्वाद् 'वषट्कर्तुः प्रथमभक्षः' (तु. बौश्रौ १७,४) इति वषट्कारनिमित्तभक्षणसाधनचमसपात्रम् एकम् एवेति न चतुष्ट्वभङ्गः । तथा च दाशतय्याम् आर्भवसूक्तेषु देवत्वप्राप्तये चमसचतुष्टयनिर्माणं तत्रतत्र आम्नातम्— 'एकं चमसं चतुरः कृणोतन' (ऋ १,१६१,२), 'व्यकृणोत चमसं चतुर्धा' ( ऋ ४,३५,३ ), 'यदावाख्यच्चमसान् चतुरः कृतान्' ( ऋ १,१६१,४ ) इत्यादि । ते महानुभावाः सौधन्वनाः सुधन्वन आङ्गिरसस्य पुत्राः । तद् उक्तं यास्केन— 'ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः । तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन' (नि ११,१६) इति । ते च मनुष्या एव सन्तो रथनिर्माणादिशिल्पकरणेन देवांस्तोषयित्वा तत्प्रसादेन देवत्वं प्राप्ताः । श्रूयते हि— 'तक्षन् रथं सुवृतं विद्मनापसस्तक्षन् हरी इन्द्रवाहा वृषण्वसू' ( ऋ १,१११,१ ) इत्यादि । तद् इदम् उच्यते— स्वरानशाना इति । रथचमसादिनिर्माणेन स्वर्गवासोपलक्षितं देवत्वं प्राप्नुवन्तस्तृतीयसवनस्य अधिपतय ऋभवः वस्यः वसीयः । ईयस आदिवर्णलोपश्छान्दसः । वसीय इत्येव तैत्तिरीयका अधीयते[2] । वसीयः वसुमत्तमं वासयितृतमं वा प्रशस्तं फलम् अभिलक्ष्य नः अस्मान् स्विष्टिम् शोभनाम् इष्टिं यजनं नयन्तु अविकलं प्रापयन्तु ।

इति पञ्चमेऽनुवाके तृतीयं सूक्तम् ।

'श्येनोसि' इति तृचेन उपनीतस्य माणवकस्य आचार्यो दण्डम् अभिमन्त्र्य दद्यात् । सोऽपि माणवकः एनं तृचं जपन् प्रतिगृह्णीयात् । 'उपनयनम्' (कौसू ५५,१) इति प्रक्रम्य सूत्रितम्— 'पालाशदण्डं[3] प्रयच्छति' ( कौसू ५६,२) इति । " 'अवकोऽविधुरो'[4] भूयासम् इति प्रतिगृह्णाति । 'श्येनोऽसि' इति च" ( कौसू ५६,३;४ ) इति ।

तथा अभयकामः अनेन तृचेन सर्पान् यजते उपतिष्ठते वा । " 'श्येनोसि इति' प्रतिदिशं सर्पान् अभयकामः" ( कौसू ५९,२६ ) इति हि सूत्रम् ।

'श्येनोसि' 'गायसि' 'ऋभुरसि' इति तिस्र ऋचः सवनत्रये क्रियमाणेषु बहिष्पवमानमाध्यन्दिनार्भवपवमानेषु स्तुतेषु यजमानं ब्रह्मा यथाक्रमं वाचयेत् ।

---

१. मत्र दयुदशन्समानः पाठः.	२. पृ. ७०९ टि ५ द्र.	३. °दां द° Bl
४. °विधुरोऽहं Bl.

उक्तं वैताने — "स्तुते बहिष्पवमाने वाचयति 'श्येनोऽसि' इति, 'ग्रुशासि' इति माध्यन्दिने, 'ऋभुरसि' इत्यार्भवे" ( वैताश्रौ १७,१० ) इति।

तथा 'श्येनोऽसि' इत्याद्याभिर्ऋग्भिर्यथाक्रमं सवनसमाप्तिहोमान् जुहुयात्। उक्तं वैताने — "'श्येनोसि', 'यथा सोमः प्रातःसवने' ( अ ९,१,११ ) इति यथासवनम् आज्यं जुहोति। संस्थितहोमान्" ( वैताश्रौ २१,७;८ ) इति।

'नहि ते अग्ने' (अ ६,४९) इति तृचेन मृताचार्यदहनाग्नौ श्रेयस्कामो ब्रह्मचारी सूत्रोक्तप्रकारेण पुरोडाशं जुहुयात्। सूत्रितं हि — "'नहि ते अग्ने तन्वः' इति [1]ब्रह्मचार्याचार्यस्यादहन उपसमाधाय[1] त्रिः परिक्रम्य पुरोडाशं जुहोति" ( कौसू ४६,१४ ) इति।

श्येनो॑ऽसि गाय॒त्रच्छ॑न्दा[2] अनु॒ त्वाऽऽर॑भे।
स्व॒स्ति मा॒ [3]सं व॑हास्य[3] य॒ज्ञस्यो॒दृचि॒[4] स्वाहा॑ ॥ १ ॥

श्ये॒नः। अ॒सि। गा॒य॒त्रऽछ॑न्दाः। अनु॑। त्वा॒। आ। र॒भे।
स्व॒स्ति। मा॒। सम्। व॒ह॒। अ॒स्य। य॒ज्ञस्य॑। उ॒त्ऽऋचि॑। स्वाहा॑ ॥ १ ॥

हे प्रातःसवनात्मक यज्ञ त्वं श्येनः शंसनीयगतिः पक्षिविशेषः तद्वत् शीघ्रगमनः असि। कीदृशस्त्वम्। गायत्रच्छन्दाः। गायत्र्येव गायत्रम्। 'छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसंख्यानम्' ( पावा ४,२,५५ ) इति स्वार्थिकः अण्प्रत्ययः। स्तुतशस्त्रादिषु गायत्रम् एव छन्दो यस्मिन् सवने स तथोक्तः। अल्पाक्षराया अपि गायत्र्याः प्रथमं यज्ञसंबन्धः सोमाहरणनिमित्तकः। तथा च तैत्तिरीयकम्—'ब्रह्मवादिनो वदन्ति। कस्मात् सत्याद् गायत्री कनिष्ठा छन्दसां सती यज्ञमुखं परीयायेति। यदेवादः सोममाहरत् तस्माद् यज्ञमुखं पर्यैत्' ( तै ६,१,६,३;४ ) इति। यद्वा श्येनाकारेण चीयमानोऽग्निः श्येनः। श्रूयते हि — 'श्येनचितं चिन्वीत सुवर्गकामः। श्येनो वै वयसां पतिष्ठः' ( तै ५,४,११,१ ) इति। स चाग्निः गायत्रच्छन्दाः। गायत्र्यास्तस्य च प्रजापतिमुखात् सहोत्पत्तेः। ईदृशं त्वा त्वाम् अन्वारभे दण्डवद् आधारत्वेन परिगृह्णामि। अतः अस्य अनुष्ठीयमानस्य यज्ञस्य उदृचि। उत्तमा अवसानवर्तिनी ऋक् उदृक्। तद्वाचिना अनेन शब्देन यागसमाप्तिर्लक्ष्यते। समाप्तौ स्वस्ति क्षेमेण मा मां सं वह सम्यक् प्रापय। स्वाहा इदं हविः स्वाहुतम् अस्तु। यद्वा स्वैव वाक् एवमाहेति स्वाहाशब्दस्यार्थः। तथा च यास्कः—'स्वा वाग् आहेति वा स्वं प्राहेति वा' ( नि ८,२० ) इति। तन्मूलभूता श्रुतिरेवम् आम्नायते—'स्वैव ते वाग् इत्यब्रवीद्। सोऽजुहोत् स्वाहेति' ( तैब्रा २,१,२,३ ) इति।

---

१. °स्य दहनमुप° S.   २. गायत्रीछन्दा पै १९,४४,४.   ३. संपारय तै ३,२,१,१ पै. माश्रा १२,३,४,३ गोब्रा १,५,१२ तांब्रा १,३,८ काश्रौ १३,१,११; संपारयास्य शांश्रौ ६,८,१७.
४. °दृचम् शांश्रौ.

ऋभुर॑सि[1] जग॑च्छन्दा[2] अनु॑ त्वाऽऽर॑भे ।
स्व॒स्ति मा॒ [3]सं व॑हास्य[4] य॒ज्ञस्यो॒दृचि॒ स्वाहा॑ ॥ २ ॥

ऋभुः । अ॒सि॒ । जग॑त्ऽछन्दाः । अनु॑ । त्वा॒ । आ । र॒भे॒ ।
स्व॒स्ति । मा॒ । सम् । व॒ह॒ । अ॒स्य । य॒ज्ञस्य॑ । उ॒त्ऽऋचि॑ । स्वाहा॑ ॥ २ ॥

हे तृतीयसवनात्मक यज्ञ जगच्छन्दाः जगच्छन्दो जगतीपर्यायः 'जागतं तृतीयसवनम्' ( तैब्रा ३,८,१२,२ ) इति श्रुतेः । तृतीयसवनगतस्तुतशस्त्रादिषु[4] जगतीच्छन्दस्का एव मन्त्राः प्रायेण भवन्ति । अतो जगच्छन्दस्त्वम् । ऋभुरसि । ऋभुर्नाम सौधन्वन आङ्गिरसः क्रियाविशेषेण लब्धदेवभाव इत्युक्तम् । तत्प्रीतिकरत्वात् तदात्मकोऽसीत्यर्थः । अनुत्वाऽऽरभे इत्यादि पूर्ववत् ।

[5]वृषा॑सि त्रि॒ष्टुप्छ॑न्दा॒ अनु॑ त्वाऽऽर॑भे ।
स्व॒स्ति मा॒ [3]सं व॑हास्य[4] य॒ज्ञस्यो॒दृचि॒ स्वाहा॑ ॥ ३ ॥

वृषा॑ । अ॒सि॒ । त्रि॒स्तुप्ऽछ॑न्दाः । अनु॑ । त्वा॒ । आ । र॒भे॒ ।
स्व॒स्ति । मा॒ । सम् । व॒ह॒ । अ॒स्य । य॒ज्ञस्य॑ । उ॒त्ऽऋचि॑ । स्वाहा॑ ॥ ३ ॥

हे माध्यन्दिनसवन त्वं वृषा सेचनसमर्थ इन्द्रः स एव असि भवसि तत्प्रीतिकरत्वात् । स खलु माध्यन्दिनसवनस्याधिपतिः । श्रूयते हि—'प्रातः सुतमपिबो हर्यश्व माध्यन्दिनं सवनं केवलं ते' ( ऋ ४,३५,७ ) इति । स त्वं त्रिष्टुप्छन्दाः त्रिष्टुप्छन्दस्कमन्त्रसाध्यस्तुतशस्त्रोपेतत्वात् । 'त्रैष्टुभं माध्यन्दिनं सवनम्' ( तैब्रा ३,८,१२,१ ) इति हि ब्राह्मणम् । अन्यद् व्याख्यातम् ।

न॒हि ते॑ अग्ने [6]त॒न्व॒: क्रू॒रमा॒नंश॒[7] मर्त्यः॑[8] ।
[9]क॒पिर्ब॑भस्ति[10] तेज॑नं॒ स्वं॑[11] ज॒रायु॒[12] गौरि॑व ॥ १ ॥

न॒हि । ते॒ । अ॒ग्ने॒ । त॒न्वः॑ । क्रू॒रम् । आ॒नंश॑ । मर्त्यः॑ ।
क॒पिः । ब॒भस्ति॑ । तेज॑नम् । स्वम् । ज॒रायु॑ । [11]गौःऽइ॑व ॥ १ ॥

1. मर्वोऽसि तै ३,२,१,१; सम्राासि शांश्री ६,८,१०; स्वरोऽसि गयोऽसि पै १९,४४,६ गोब्रा १,५,१४ ताब्रा १,५,१५. 2. जगतीछन्दा तै. 3. संपारय तै. पै. माश १२,३, माश १२,३,४,४ शांश्री ६,८,११ काश्री १३,१,११; वृषकोऽसि ताब्रा १,५,१२; सम्राडसि पै १९,४४,५ गोब्रा १,५,१४;११ ताब्रा १,५,१०;१५. 4. °शाखा° S'. 5. सुपर्णोऽसि तै. १९,४८,५ गोब्रा १,०,१३. 6. तनुवं तैआ ६,१०,१ आपश्री १४,२९,३. 7. आनांश तै. 8. मर्त्यम् पै १९,३३,१४; मर्त काठ. 9. कपुर॰ 10. बिभर्ति S' पै. [मूको.] 11. पुनर् तैआ. 12. °रायुर् तैआ.

13. गो.° J.

हे अग्ने ते तव तन्वः शरीरस्य ज्वालात्मकस्य क्रूरम् तैक्ष्ण्यं मर्त्यः मरणधर्मा पुरुषः नहि आनंश न खलु प्राप्तुं शक्नोति। अश्नोतेर्व्यत्ययेन परस्मैपदम्। अपि च कपिः कम् उदकं शरीरगतं रसं पिबतीति कपिः। यद्वा कपिवद् इतस्ततश्च- ङ्क्रमणशीलस्त्वदीयो ज्वालासमूहः तेजनम् अन्तर्निःसारं वेणुमिव स्थितं शरीरं [1]विभस्ति दीपयति भस्मीकरोति। भस भर्त्सनदीप्त्योः। जुहोत्यादित्वात् शपः श्लुः। यद्वा 'बभस्तिरत्तिकर्मा' (नि ५,१२) इति यास्कः। भक्षयतीत्यर्थः। तत्र दृष्टान्तः— स्वम् इत्यादि। गौरिव यथा प्रसूता गौः स्वम् स्वकीयं जरायु गर्भवेष्टनं प्रस- वानन्तरं भूमौ पतितं भक्षयति तद्वत् पुरुषशरीरं भक्षयतीत्यर्थः।

मे॒ष[2] इ॑व॒ [3]वै सं च॒ वि †चो॒र्व॑च्यसे॒[3] [4]यदु॑त्तर॒द्रावुप॑रश्च॒ खाद॑तः[4]।
शी॒र्ष्णा [5]शिरो॒ऽप्सस॒ाप्सो॑ अ॒र्दय॑न्न॒ंशून् ‡ब॑भस्ति॒[6] हरि॑तेभिरा॒सभि॑ः ॥ २ ॥

मे॒षःऽइ॑व। वै। सम्। च॒। वि। च॒। उ॒रु। अ॒च्य॒से॒। यत्। उ॒त्त॒र॒ऽद्रौ। उप॑रः। च॒। खाद॑तः।
शी॒र्ष्णा। [5]शिरः॑। अप्स॑सा। अप्स॑ः। अ॒र्दय॑न्। अ॒ंशून्। ब॒भ॒स्ति॒। हरि॑तेभिः। आ॒सऽभि॑ः ॥२॥

हे अग्ने त्वं पुरुषशरीरं दाह्यं प्राप्य उरु बहुलं सम् उच्यसे[1]। प्रथमं तावत् तत्तदवयवेन समवैषि संगच्छसे। उच समवाये इति धातुः। पश्चाद् वि उच्यसे[1] च कृत्स्नशरीरं विविधं व्याप्नोषि। दग्धम् अङ्गं विसृज्य अन्यत्र गच्छसि। तत्र दृष्टान्तः—मेष इव वै इति। मेषो यथा भक्षणार्थं तृणभूयिष्ठं देशं प्राप्य भक्ष्येण तृणादिना प्रथमं संयुज्यते ततो भक्षणेन तत्रत्यं तृणजातं सर्वं व्याप्नोति तद्वद् इत्यर्थः। यत् यदा उत्तरद्रौ उपर्यवस्थितकाष्ठयुक्ते दाह्यशरीरे अपरः[1]। चकारात् पूर्वश्च। उभावग्नी खादतः भक्षयतः। यद्वा उत्तरद्रौ उत्कृष्टतरद्रुमे महावृक्षभूयिष्ठे वने संचरन् अपरः दावाग्निः शावाग्निश्च उभौ खादतः भक्ष- यतः। दाह्यं दहत इत्यर्थः। तदा शीर्ष्णा शिरसा ज्वालाग्रेण तत्रत्यस्य शरीर- स्य वृक्षादेर्वा शिरः अर्दयन् हिंसन् तथा अप्ससा। रूपनामैतत्। स्वकीयेन भास्वररूपेण कृत्स्नशरीरेण अप्सः दाह्यशरीरस्य यद्वा महीरुहादेः स्वरूपम् अर्दयन् हिंसन् अयम् अग्निः हरितेभिः हरितैर्बभ्रुवर्णैः आसभिः आस्यैः अंशून् सोमलता- दिकान् [1]विभस्ति भक्षयति।

सु॒प॒र्णा वाच॑मक्रतोप॒ द्यव्या॑खरे॒ कृष्णा॑ इषि॒रा अ॑नर्तिषुः।
[7]नि यन्नि॒यन्त्युप॑रस्य॒[7] निष्कृ॑तिं[8] पु॒रू[9] रेतो॑[10] दधिरे सूर्य॒श्रित॑ः[11]॥ ३ ॥

---

१. वैतु. मंपा. द्र. २. त्वेष पै १९,३१,१५. ३. यदुप च वि च चर्वति काठ ३५,१४. †. चोर्व्यच्यसे D,Km,R; °च्यते पै. ४. उनौ उत्तरद्रावुपरस्य खादति पै १९,३१, १६; यदप्सरद्रूपरस्य खादति काठ.; यदप्सररूपरस्य खादति आपश्रौ १४,२९,३. ५. °रो यंक्षसा वक्ष एजयन्नंशुं बभस्ति काठ. ‡. बिभस्ति S'. ६. शिरः P. ७. न्यङ्ङ् नि य° ऋ १०,९४,५. ८. निःकृतिं A; निष्कृतं ऋ. ९. पुरु Km,V. १० वाचः पै १९, ३१,१६. ११. सूर्यश्वितः ऋ. काठ.; सूर्यस्य पै.

सुऽपर्णाः । वाचम् । अक्रत । उप । द्यवि । आऽखरे । कृष्णाः । इषिराः । अनर्तिषुः ।
नि । यत् । निऽयन्ति । उपरस्य । निःऽकृतिम् । पुरु । रेतः । दधिरे । सूर्यऽश्रितः ॥ ३ ॥

हे अग्ने सुपर्णाः शोभनपतनाः श्येनवत् शीघ्रव्यापनशीलास्त्वदीया ज्वालाः वाचम् अक्रत दाहजन्यं ध्वनिविशेषम् अकुर्वत । करोतेर्लुङि 'मन्त्रे घस°' (पा २,४,८०) इति च्लेर्लुक् । आखरे । आखरः आवासस्थानम् । 'डरो वक्तव्यः' ( पावा ३,३,१२५ ) इति आङ्पूर्वात् खनेर्डरप्रत्ययः । आखरे आवासस्थाने कृष्णाः । लुप्तोपमम् एतत् । कृष्णमृगा इव दिवि[1] आकाशे इषिराः गमनशीला दीप्तयः उप उपेत्य अनर्तिषुः नृत्यन्ति स्म । नृती गात्रविनामे । ताश्च ज्वाला बहलधूमोत्पादनेन उपरस्य मेघस्य । 'उपर उपलो मेघो भवति' ( नि २,२१ ) इति निरुक्तम् । निष्कृतिम् निर्माणं नि नितरां यत् यस्माद् नियन्ति निर्गच्छन्ति तस्मात् हे अग्ने त्वदीया एव दीप्तयः सूर्यश्रितः आदित्यमण्डलं प्राप्ताः सत्यः पुरु[2] बहुलं रेतः सर्वप्राण्युपादानभूतं वृष्ट्युदकं दधिरे जगदुत्पादनार्थं धारयन्ति ।

इति चतुर्थं सूक्तम् ।

'हतं तर्दम्' इति तृचेन मूषकपतङ्गशलभटिट्टिभकीटहरिणशल्यकगोधादीनां सस्यभक्षकाणां[3] निवृत्तये लोहमयं सीसं धर्पन् एतं तृचं जपन् मूषकादियुक्तं क्षेत्रम् अभिक्रामेत् ।

तथा अनेन तृचेन शर्करा अभिमन्त्र्य मूषकादिस्थाने परिकिरेत् ।

तथा मूषकादिमुखं केशेन बद्ध्वा अनेन तृचेन क्षेत्रमध्ये निखनेत् ।

तथा 'सरूपवत्सायाः गोर्दुग्धे शृतं चरुम् अनेन तृचेन अश्विभ्यां जुहुयात् ।

तद् उक्तं संहिताविधौ—" 'हतं तर्दम्' इत्ययः[4] सीसं धर्पन्[5] उर्वरां परिक्रामति । "नस्मिन्नवकिरति" ( कौसू ५१,१७;१८ ) इत्यादि ।

'वायोः पूतः' इति तृचस्य बृहद्गणे पाठात् शान्त्युदकादौ विनियोगोऽनुसंधेयः ( द्र. कौसू ९,२ ) ।

तथा सर्वरोगभैषज्ये अनेन तृचेन आज्यहोमं पलाशादिशान्तवृक्षसमिदाधानं च कुर्यात् ।

तथा सोमवमनपानादिनिमित्तव्याधिशमनार्थं सोमरसमिश्रिताः पलाशादिसमिध आदध्यात् ।

सूत्रितं हि—" 'अम्बयो यन्ति' ( अ १,४ ), 'वायोः पूतः' ( अ ६,५१ ) इति च शान्ताः । उपरस्य समोमाः[8]" ( कौसू २५,२०;२१ ) इति ।

1. पद्. मेरा. द्र. 2. दरु S'. 3. 'कानां S'. 4. सारूप° S'. 5. 'सगा Bl. 6. कर्षन् Bl 7. अश्मनोऽय° Bl. 8. च सोमाः S'.

तथा अर्थोत्थापनविघ्नशमनकामः अनेन तृचेन 'पुनन्तु मा' (अ ६,१९) इत्यत्रोक्तानि क्षीरौदनहवनादिकर्माणि कुर्यात्। 'अर्थम् उत्थास्यन्' इति प्रक्रम्य 'पुनन्तु मा', 'सस्रुषीः' (अ ६,२३), 'हिमवतः प्र स्रवन्ति' (अ ६,२४), वायोः पूतः पवित्रेण' (अ ६,५१) इत्यादि 'अभिवर्षणावसेचनानाम्' (कौसू ४१,८:१४) इत्येतदन्तं सूत्रमत्र द्रष्टव्यम्।

तथा [1]अस्य तृचस्य अपां सूक्तेषु पाठाद् [2]आप्लावनादौ विनियोगः। 'अवभृथाय व्रजन्ति। अपां सूक्तैराप्लुत्य' (कौसू ६८,३८;३९) इति सूत्रितम्।

सोमातिपूतकर्तृकायां सौत्रामण्यां 'वायोः पूतः' इति तृचेन दशापवित्रेण पाव्यमानां सुराम् अनुमन्त्रयेत। 'अग्निचित् सोमातिपूतः सोमवामी सौत्रामण्याऽभिषिच्यते' इति प्रक्रम्य "'या बभ्रवः' (अ ८,७) इत्योषधिभिः सुरां संधीयमानाम्। 'वायोः पूतः' (अ ६,५१) इति सोमातिपूतस्य पाव्यमानाम्" (वैताश्रौ ३०,१;६;७) इति हि वैतानसूत्रम्।

हृतं [3]तर्दं समङ्कमाखुमश्विना[3] छिन्तं[4] शिरो अपि पृष्टीः शृणीतम्।
यवान्नेददानपि नह्यतं मुखमथाभयं कृणुतं धान्याय ॥ १ ॥

हृतम्। तर्दम्। सम्ऽअङ्कम्। आखुम्। अश्विना†। [5]छिन्तम्। शिरः। अपि। पृष्टीः[6]। शृणीतम्। यवान्। न। इत्। अदान्। अपि। नह्यतम्। [7]मुखम्। अथ। अभयम्। कृणुतम्। धान्याय ॥१॥

हे अश्विना अश्विनौ पतत्संज्ञौ देवौ तर्दम् हिंसकम्। तर्द हिंसायाम् इत्यस्मात् पचाद्यच्। समङ्कम् समञ्चनं बिलं संप्रविश्य गच्छन्तम्। संपूर्वाद् अञ्चतेः 'पुंसि संज्ञायाम्°' (पा ३,३,११८) इति घः। 'चजोः कु घिण्यतोः' (पा ७,३,५२) इति कुत्वम्। एवंभूतम् आखुं हतम् नाशयतम्। हन्तेर्लोटि अदादित्वात् शपो लुकि 'अनुदात्तोपदेश°' (पा ६,४,३७) इत्यादिना अनुनासिकलोपः। आ समन्तात् खनतीति आखुः। खनु अवदारणे। आङ्पूर्वाद् अस्माद् 'आङ्परयोः खनिशृभ्यां डिच्च' (पाउ १,३३) इति उप्रत्ययः टिलोपश्च। हननप्रकारः प्रतिपाद्यते—छिन्तम् इत्यादिना। तस्याखोः शिरः छिन्तम् द्विधा कुरुतम्। छिदिर् द्वैधीकरणे। लोण्मध्यमपुरुषद्विवचने 'श्नसोरल्लोपः' (पा ६,४,१११) इति अकारलोपः। पृष्टीः पार्श्वास्थीन्यपि तत्संबन्धीनि [8]शृणीतम् हिंस्तं चूर्णीकुरुतम्। शॄ हिंसायाम्। प्वादित्वाद् ह्रस्वः। स च आखुः नेत् अदात्[8] नैव भक्षयेत् अस्मदीयं व्रीह्यादिकम् इत्यभिप्रेत्य हे अश्विनौ युवां[8] तदीयं मुखम् आस्यम् अपि नह्यतम् अपिनद्धं पिहितं कुरुतम्। एवं कृत्वा अथ अनन्तरम् अस्मदीयाय धान्याय व्रीहियवादिरूपाय अभयम् तत्कृतभयराहित्यं कृणुतम् कुरुतम्।

---

१. तस्य S'. २. आप्लव° S'. ३. पतङ्गमुत तर्दमाखुमश्विना पै १९,२०,५. † तु. सा. RW. वैदु. शंपा. °मश्विना (पपा. अश्विना). ४. भिन्तं पै.; छिन्तं K,V; छिन्नं K,P. ५. छिन्नम् P,K. ६. पृष्ठीः K,Cp. ७. मुखम् P. ८. वैदु. मंपा. द्र.

तर्द् है पतंङ्ग है 'जभ्य हा उपंक्वस' ।
ब्रह्मेवासंस्थितं हविरनंदन्त इमान् यवानहिंसन्तो अपोदित ॥ २ ॥

तर्द । है । पतंङ्ग । है । जभ्यं । हे । उपंऽक्वस । ब्रह्माऽइव । असंम्ऽस्थितम् । हविः । अनंदन्तः । इमान् । यवान् । अहिंसन्तः । अपऽउदित ॥ २ ॥

हैशब्दः हेशब्दवद् आभिमुख्यकरणे । हे तर्द हिंसक आखो हे पतङ्ग शलभ हे जभ्य उपद्रवकारित्वाद् अस्माभिर्हिंस्य युष्माकं हननाय इदम् अस्मदीयम् अश्विभ्यां होतव्यं हविः ब्रह्मेव असंस्थितम् । 'महद् भयं वज्रमुद्यतम्' ( कठ ६,२ ) इत्याद्युपनिषत्प्रसिद्धं जगत्कारणं ब्रह्म[6] अपरिसमाप्तं दुष्प्रधर्षं भवति एवम् इदं हविर्वर्तत इत्यर्थः । अतः अस्य हविषो होमात् प्रागेव अपक्वसः[7] अदग्धाः सन्तः इमान् अस्मदीयान् यवान् सस्यविशेषान् [7]अनुदन्तः अप्रेरयन्तः अहिंसन्तः अविनाशयन्तो यूयम् अपोदित अस्मात् स्थानाद् अपगता भवत ।

तर्दापते वघापते तृष्टजम्भा आ शृणोत मे ।
य आरण्या व्यद्वरा ये के च स्थ व्यद्वरास्तान्त्सर्वान् जम्भयामसि ॥३॥

तर्दऽपते । वघाऽपते । तृष्टऽजम्भाः । आ । शृणोत । मे । ये । आरण्याः । विऽअद्वराः[11] । ये । के । च । स्थ । विऽअद्वराः[11] । तान् । सर्वान् । जम्भयामसि ॥ ३ ॥

हे तर्दपते तर्दानां हिंसकानाम् आखूनां स्वामिन् हे वघापते । अवघ्नन्ति अववाधन्त इति वघाः पतङ्गादयः । अवपूर्वात् हन्तेः 'डोऽन्यत्रापि दृश्यते' ( पावा ३,२,४८ ) इति डप्रत्ययः । 'वष्टि भागुरिरल्लोपम्' इति अवशब्दस्य आदिलोपः । पृषोदरादित्वाद् घत्वम् । वघानां पतङ्गादीनाम् अधिपते तृष्टजम्भाः तीक्ष्णदंष्ट्रा यूयं मे मदीयम् इदं वचनम् आशृणोत आभिमुख्येन शृणुत । 'तप्तनप्तनथनाश्च' ( पा ७,१,४५ ) इति तशब्दस्य तवादेशः । ये यूयम् आरण्याः अरण्ये भवा व्यद्वराः विविधम् अदनशीलाः स्थ भवथ । अन्येऽपि ये के च ग्रामवर्तिनो यूयं व्यद्वराः विविधम् अदनशीला भवथ तान् सर्वान् युष्मान् जम्भयामसि जम्भयामः । अनेन कर्मणा नाशयामः । जभि नाशने इति धातुः ।

वायोः पूतः पवित्रेण प्रत्यङ्[14] सोमो अति द्रुतः[15] । इन्द्रस्य युज्यः सखा ॥१॥

---

१. जंभ्यु C॰. २. उपंक्वसु B; अपक्वसः सा. ३. होत्रेव प्राशितं पै १९,२०,७. ४. इदं धान्यमहिं॰ पै १९,२०,६. ५. जम्भं Cp॰ ६. वैतु. पपा. द्र. ७. वैतु. मंग. द्र. ८. तृष्टदंष्ट्रमा पै. ९. न. पै. १०. व्यंद्वरा॰, व्यंध्वरा Wh ११. सर्वा D.K॰. १२. ॰अध्वराः Cp॰ १३. वायुः पै १९,४३,४ तैमा २,६,१,२ मै ३,११,७. १४. प्रत्यङ् B, मै.; प्राङ् मै.; प्राङ् मा १९,३ तैब्रा.; प्रत्यङ् मा १०,३१. १५. पाठः?, अतिद्रुतः मा १९,१ मै. प्रभृ.; अतिस्रुतः मै. मा. १०,३१; अतिद्रुतः RW.; अधिस्रुतः पै.

वायोः । पूतः । पवित्रेण । प्रत्यङ् । सोमः । अति । द्रुतः । इन्द्रस्य । युज्यः । सखा ॥१॥

वायोः संबन्धिना पवित्रेण पवनसाधनेन दशापवित्रेण पूतः शोधितः । यद्वा वायोः सकाशात् पूतः शोधनेन रसवत्तां प्रापितः । सोमरसं प्रस्तुत्य तैत्तिरीयके समाम्नातम्—'तम् एभ्यो वायुरेवास्वदयत् । तस्माद् यत् पूयति तत् प्रवाते विषजन्ति । वायुर्हि तस्य पवयिता स्वदयिता' ( तै ६,४,७,२ ) इति। ईदृशः सोमः प्रत्यङ् प्रतिमुखम् अञ्चन् अतिद्रुतः नाभिदेशम् अतिक्रम्य गतः । तदतिक्रमणं हि सम्यग्जरणपर्यन्तम् अनभिमतम् । तथा च मन्त्रवर्णः— 'शिवो मे सप्तऋषीन् उपतिष्ठस्व मा मेवाङ् नाभिमति गाः' ( तै ३, २,५,३ ) इति । स च इन्द्रस्य युज्यः योग्यः सखा मित्रभूतः ।

आपो अस्मान् मातरः सूदयन्तु घृतेन नो घृतप्वः पुनन्तु ।
विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि ॥२॥

आपः । अस्मान् । मातरः । सूदयन्तु । घृतेन । नः । घृतऽप्वः । पुनन्तु । विश्वम् । हि । रिप्रम् । प्रऽवहन्ति । देवीः । उत् । इत् । आभ्यः । शुचिः । आ । पूतः । एमि ॥ २ ॥

मातरः विश्वस्य जगतो जनन्यः आपः अब्देवता अस्मान् सूदयन्तु क्षालयन्तु पापरहितान् शुद्धान् कुर्वन्तु । सूद क्षरणे । तथा घृतप्वः क्षरणस्वभाव आत्मीयो रसो घृतम्, तेन कृत्स्नं जगत् पुनन्तीति घृतप्वः । तादृश्य आपः घृतेन क्षरणशीलेन सारेण नः अस्मान् पुनन्तु शुद्धान् कुर्वन्तु । पूञ् पवने 'प्वादीनां ह्रस्वः' ( पा ७,३,८० ) इति ह्रस्वत्वम् । कस्मादेवं प्रार्थ्यत इति तत्राह—विश्वं हि इति । हि यस्माद् देवीः देव्यः देवतारूपा आपः विश्वं सर्वं रिप्रम् । पापनामैतत् । 'रपो रिप्रम् इति पापनामनी भवतः' (नि ४,२१) इति यास्कवचनात् । स्नानाचमनप्रोक्षणादिकारिणां जनानां कृत्स्नं पापं प्रवहन्ति प्रक्षालयन्ति । प्रकर्षेण अपगमयन्तीत्यर्थः। ईदृशीषु अप्सु स्नातोऽहं शुचिः शुद्धो भूत्वा आभ्यः अद्भ्यः सकाशात् पूतः कर्मयोग्यः सन् उदेमि उदागच्छामि । इत् इति अवधारणे ।

यत् किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरन्ति ।
अचित्त्या चेत् तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥३॥

यत् । किम् । च । इदम् । वरुण । दैव्ये । जने । अभिऽद्रोहम् । मनुष्याः । चरन्ति । अचित्त्या । च । इत् । तव । धर्म । युयोपिम । मा । नः । तस्मात् । एनसः । देव । रीरिषः ॥

---

१. पृ ७१६ टि १५ द्र. २. मा मै १,२,१. ३. शुन्धयन्तु ऋ १०,१७,१० मा ४,२; शुन्धन्तु तै १,२,१,१ आपश्रौ १०,६,१. ४. मा मै. काठ २,१. ५. घृतप्वः सात.; घृतपुवः तै. पै ६,३,३. ६. विश्वमस्मत् प्र वहन्तु रिप्रमुदाभ्यः तै. † प्रवहन्तु मै. पै. ७. चरामसि ऋ ७,८९,५, तै ३,४,११,६ मै ४,१२,६. ८. अचित्ती यत् ऋ. तै. मै.; यदचित्या पै १९,४३,५.

हे वरुण [1]स्वभवानाम् अपाम् अधिपते दैव्ये देवसंबन्धिनि जने प्राणिजाते विषये यत्किञ्च इदम् अभिद्रोहम् अपराधजनितम् एनः मनुष्याश्चरन्ति अनुतिष्ठन्ति । तस्माद् एनस इत्युत्तरत्र संबन्धः । वयमपि मनुष्यान्तःपातित्वाद् अचित्त्या अज्ञानेन चेत् हे वरुण तव धर्मा त्वत्संबन्धीनि धर्माणि कर्माणि युयोपिम व्यामोहयामः । विपर्यस्तानि कुर्म इत्यर्थः । युप विमोहने । तस्मात् अज्ञानजनिताद् एनसः पापात् हेतोः हे देव स्वामिन् वरुण नः अस्मान् मा रीरिषः मा हिंसीः । रिष रुष हिंसायाम् । अस्मात् ण्यन्ताद् माङि लुङि चङि रूपम् ।

इति सायणार्यविरचिते अथर्ववेदार्थप्रकाशे षष्ठकाण्डे पञ्चमोऽनुवाकः ।

षष्ठेऽनुवाके पञ्च सूक्तानि । तत्र 'उत् सूर्यः' इति प्रथमं सूक्तम् । तत्र आद्येन तृचेन रक्षोग्रहभैषज्यार्थं चित्याद्योषधिसहितं पूर्णघटम् अभिमन्त्र्य व्याधितम् अवसिञ्चेत् ।

तथा शमीसहितोदकेन वा शमीबिम्बसहितोदकेन वा शीर्णपर्णसहितोदकेन वा अनेन तृचेन अभिमन्त्रितेन व्याधितम् अवसिञ्चेत् ।

सूत्रितं हि—" 'उत् सूर्य' इति शमीबिम्बशीर्णपर्णावधि[2]" ( कौसू ३१,८ ) इति ।

'ग्रीवा मे' इति तृचेन दुष्टगण्डव्रणभैषज्यार्थं तैलम् अभिमन्त्र्य तेन व्रणम् अवमृज्यात्[3] ।

तथा एतं तृचं जपन् व्रणदेशं हस्तेन अवमृज्यात् ।

तथा अनेन तृचेन स्थूणायां व्रणदेशं घर्षयेत् ।

सूत्रितं हि—" 'ग्रीवा मे' इत्यभ्यज्य अवमार्ष्टि । स्थूणायां निकषति[4]" (कौ ३१,९;१०) इति ।

तथा द्रव्यादिविनाशे प्राप्ते तन्निवृत्त्यर्थम् अनेन तृचेन द्यावापृथिव्यौ यजत उपतिष्ठते वा । सूत्रितं हि—" 'ग्रीवा मे' इति द्यावापृथिव्यौ [5]वरिव्यन्' (कौसू ५९,२८) इति ।

तथा सवयज्ञेषु 'ग्रीवा मे' इति तृचेन मन्त्रोक्तानि इन्द्रियाण्यनुमन्त्रयेत । सूत्रितं हि—" 'बृहता मनः[6]' (अ ५,१०,८), 'ग्रीवा मे' (अ ६,५३) 'पुनर्मैत्विन्द्रियम् (अ ७,६९) इति प्रतिमन्त्रयेत" ( कौसू ६६,२ ) इति ।

तथा मेधाजननकर्मणि 'ग्रीवा मे' इत्यनया ऋचा क्षीरौदनं पुरोडाशं रसान् वा संपात्य अभिमन्त्र्य अश्नीयात् ।

तथा अनयैव ऋचा मेधाकाम आदित्यम् उपतिष्ठेत । सूत्रितं हि—'पूर्वस्य मेधाजननानि' इति प्रक्रम्य " 'त्वं नो मेधे' ( अ ६,१०८ ), 'ग्रीवा मे' इति भक्षयति । आदित्यम् उपतिष्ठते' (कौसू १०,२०;२१) इति ।

---

१. °स्वभाषा' S'. २. °र्णावे' Bl. ३. °मृज्यात् S'. ४. °कर्षति Bl.
५. रिङ्क्ष्यति S'; विरिप्यति Bl. ६. नास्ति दीपा.

गोदानकर्मणि 'पुनः प्राणः' इत्यनया क्षुरं मार्जयित्वा नापिताय प्रयच्छेत्। "'पुनः प्राणः (अ ६,५३,२), 'पुनर्मैत्विन्द्रियम्' (अ ७,६९,२) इति त्रिर्निमृज्य[1]। त्वयि महिमानं सादयामि" ( कौसू ५४,२;३ ) इति कौशिकसूत्रात्।

उपनयनकर्मणि 'सं वर्चसा' इत्यनया उदपात्रम् अभिमन्त्र्य ब्रह्मचारिणम् अवेक्षयेत्। सूत्रितं हि—"उदपात्रे[2] समवेक्षयेत्। 'समिन्द्र णः[3]' (अ ७,१०२,२), 'सं वर्चसा' (अ ६,५३,३) इति द्वाभ्याम्" ( कौसू ५५,१९;२० ) इति।

'उत् सूर्यो दिव एति पुरो रक्षांसि †निजूर्वन्[4]।
आदित्यः पर्वतेभ्यो[5] विश्वदृष्टो अदृष्टहा ॥ १ ॥

उत्। सूर्यः। दिवः। एति। पुरः। रक्षांसि। निऽजूर्वन्।
आदित्यः। पर्वतेभ्यः। विश्वऽदृष्टः। अदृष्टऽहा ॥ १ ॥

सूर्यः सर्वस्य प्रेरक आदित्यः पुरः पुरस्तात् पूर्वस्यां दिशि रक्षांसि। 'रक्षो रक्षितव्यम् अस्मात्' (नि ४,१८) इति यास्कः। अस्मदुपद्रवकारिणो रक्षःपिशाचादीन् निजूर्वन् नितरां हिंसन्। 'जुर्वी हिंसायाम्। हेतौ शतृप्रत्ययः। हिंसितुमित्यर्थः। दिवः अन्तरिक्षप्रदेशाद् उदेति उद्गच्छति। रात्रौ हि रक्षसां संचारः, इदानीं तु उद्यन्नेव सूर्यस्तानि विनाशयतीति भावः। स च आदित्यः विश्वदृष्टः सर्वप्राणिभिः साक्षात्क्रियमाणः अदृष्टहा अदृष्टानाम् अस्माभिरदृश्यमानानामपि रक्षःपिशाचादीनां हन्ता पर्वतेभ्यः उदयाचलप्रदेशेभ्यः। उदेतीति संबन्धः। आदित्यः अदितेः पुत्रः। 'दित्यदित्यादित्य[6]' (पा ४,१,८५) इति ण्यप्रत्ययः।

नि गावो गोष्ठे असदन् नि मृगासो अविक्षत।
न्यू३र्मयो[7] नदीनां[8] न्य१दृष्टा अलिप्सत ॥ २ ॥

नि। गावः। गोऽस्थे। असदन्। नि। मृगासः। अविक्षत।
नि। ऊर्मयः। नदीनाम्। नि। अदृष्टाः। अलिप्सत ॥ २ ॥

उद्यता सूर्येण रक्षसां हननाद् इदानीं गावो गोष्ठे गोशालां न्यसदन् भयराहित्येन अस्मदीया गावो निषण्णा अभूवन्। षद्लृ विशरणगत्यवसादनेषु। लृदित्त्वात् च्लेः अङ् आदेशः। तथा मृगासः मृगाः आरण्याः पशवः न्यविक्षत स्वस्वस्थाने निर्भयं निविष्टा

---

[1] °निर्मृज्य Bh. [2] पात्रे Bl. [3] नः Bl [4] उदपसदुसौ सूर्यः पुरु विश्वानि जूर्वन् ऋ १,१९१,९. † विश्वा पै १९,७,५. ‡ तु. M, सा.; वेतु. मूको. पै. °जूर्वत्. [5] पर्वतॉं अभि पै. [6] धातुपाठे नोपलभ्यते. [7] न्यू १र्मयो R कम्पाभावः A,K^m,S^m; नि कुतवो ऋ १,१९१,४ पै १९,७,७. [8] जनानां ऋ. पै.

अभूवन् । 'नेर्विशः' ( पा १,३,१७ ) इति आत्मनेपदम् । 'शल इगुपधादनिटः क्सः' ( पा ३, १,४५ ) इति क्सः प्रत्ययः । तथा नदीनाम् सरिताम् ऊर्मयः तरङ्गाः सुखेन नि निविष्टाः । अदृष्टाः रात्रौ अनुपलब्धाः प्रजाः सूर्यप्रकाशेन न्यलिप्सत नितरां लब्धुम्[1] ऐच्छन्[2] । लभेः सनि 'सनि मीमाघुरभलभ°' (पा ७,४,५४) इति अचः स्थाने इस् आदेशः । यद्वा अनुक्रान्तान् गवादीन् सर्वे जनाः सूर्यप्रकाशात् लब्धवन्तः । लभेर्लुङि च्लेः सिच् । वर्णव्यत्ययः ।

आयुर्ददं[3] विपश्चितं श्रुतां कण्वस्य वीरुधम् ।
आभारिषं[4] विश्वभेषजीमस्यादृष्टान् नि शमयत् ॥ ३ ॥

आयुःऽददम् । विपःऽचितम् । श्रुताम् । कण्वस्य । वीरुधम् ।
आ । अभारिषम् । विश्वऽभेषजीम् । अस्य । अदृष्टान् । नि । शमयत् ॥ ३ ॥

आयुर्ददम् आयुषः शतसंवत्सरपरिमितस्य जीवनस्य दात्रीम् । दद दाने । 'क्विप् च' ( पा ३,२,७६ ) इति क्विप् । विपश्चितम् रोगशमनोपायं विदुषीं श्रुताम् विश्रुतां प्रसिद्धां कण्वस्य महर्षेः संबन्धिनीं विश्वभेषजीम् सर्वस्य रोगजातस्य शमनीम् । '°मुमङ्गलभेषजाच्च'( पा ४,१,३०) इति ङीप् । ईदृशीम् एवंगुणविशिष्टां वीरुधम् चित्तिः प्रायश्चित्तिरित्येवं कौशिकेनोक्तां (कौसू ८,१६) शान्तोषधीं[5] शमीं वा अस्य व्याधितस्य रोगनिवृत्तये 'आभार्षम् आहार्षम् आहरामि । 'हग्रहोर्भः°' (पावा ८,२,३२) इति भत्वम् । सा च आहृत्य प्रयुज्यमाना अस्य रोगिणः अदृष्टान् द्रष्टुम् अशक्यान् शरीरमध्यवर्तिनो रोगान् रक्षःपिशाचादिकृतान् नि शमयत् निशमयतु । शम उपशमने । अस्मात् ण्यन्तात् लेटि अडागमः । 'इतश्च लोपः°' ( पा ३,४,९७ ) इति इकारलोपः ।

द्यौश्च म[6] इदं पृथिवी च प्रचेतसौ[7] शुक्रो[8] बृहन्[9] दक्षिणया[10] पिपर्तु ।
अनु स्वधा चिकितां[11] सोमो [12]अग्निर्वायुर्नः पातु[12] सविता [13]भगश्च[13] ॥ १ ॥

द्यौः । च । मे । इदम् । पृथिवी । च । प्रऽचेतसौ । शुक्रः । बृहन् । दक्षिणया । पिपर्तु ।
अनु । स्वधा । चिकिताम् । सोमः । अग्निः । वायुः । नः । पातु । सविता । भगः । च ॥

द्यौश्च पृथिवी च एते देवते मे मह्यं प्रचेतसौ प्रकृष्टज्ञाने अनुग्रहबुद्धियुक्ते इदम् अभिलषितफलम् । प्रयच्छताम् इति शेषः । तथा बृहन् महान् शुक्रः शोचमानो दीप्यमानः सूर्यः दक्षिणया दिशा पिपर्तु पालयतु । यमाधिष्ठिताया दक्षिणस्या दिशो

---

1. वेत्तु मंत्रा. द्र. 2. ऐच्छन् S'. 3 आयुर्विदं पै १९,७,६. 4 °भार्षं K,V, मा. RW.; °हार्षं पै. 5. °पर्धं S'. 6. मा पै १९,८,१; स्वा तैत्रा २,७,८,२ काठ. तैत्रा. 7. °तसा पै ४,३,७ तैत्रा. 8. यज्ञो काठ ३७,९. 9. बृहद् पै ४,३,७ 10. दक्षिणा रक्ष (मा पै १९,८,१) काठ. पै ४,३,७ तैत्रा. 11. चिकिते काठ. 12. °ग्निः पूषा स्वावतु पै ४,३,७; °मिरनु स्वावतु काठ.; °युर्मा पातु पै १९,८,१. 13. सवेन काठ. पै ४,३,७.

रक्षत्वित्यर्थः। यद्वा दक्षयति पुरुषं वर्धयतीति दक्षिणा । दक्ष वृद्धौ । 'द्रुदक्षिभ्यामिनन्' ( पाउ २,५० ) । तथा वासोहिरण्यादिरूपया दक्षिणया पिपर्तु पूरयतु। पॄ पालनपूरणयोः । जुहोत्यादित्वात् शपः श्लुः । 'अर्तिपिपर्त्योश्च' ( पा ७,४,७७ ) इति अभ्यासस्य इत्त्वम् । स्वधा पितृणां संबन्धिनी स्वधाकाराभिमानिनी देवता अनु चिकिताम् अनुजानातु । कित ज्ञाने । जुहोत्यादित्वात् शपः श्लुः। यद्वा स्वधेत्यन्ननाम । यथा अस्माकम् अन्नं भवति तथा सोमः अग्निश्च अनु चिकिताम्। नः अस्मान् वायुः पातु रक्षतु । निगदसिद्धम् अन्यत् ।

[1]पुनः प्राणः पुनरात्मा †न ऐतु[1] पुनश्चक्षुः[2] [3]पुनरसुर्न ऐतु[3] ।
वैश्वानरो नो अदब्धस्तनूपा [4]अन्तस्तिष्ठाति[4] दुरितानि[5] विश्वा[6] ॥ २ ॥

पुनः। प्राणः। पुनः। आत्मा। नः। आ। एतु। पुनः। चक्षुः। पुनः। असुः। नः। आ। एतु। वैश्वानरः। नः। अदब्धः। तनूऽपाः। अन्तः। तिष्ठाति। दुःऽइतानि। विश्वा ॥ २ ॥

प्राणः मुखनासिकाभ्यां संचरन् प्राणवायुः जीवावस्थितिहेतुः नः अस्मान् पुनः ऐतु आगच्छतु । तथा आत्मा जीवः पुनरागच्छतु। चक्षुः दर्शनसाधनम् इन्द्रियं पुनरागच्छतु । असुः प्राणः नः पुनरैतु। प्राधान्यख्यापनाय पुनरभिधानम् । यद्वा पुनः प्राणः इति पूर्वं प्राणापानादिवृत्तिमतोऽभिधानम्[7] असुरिति वृत्तिविशेषस्य इति अपौनरुक्त्यम् । व्रणरोगेण गतप्रायत्वात् प्राणादीनां पुनरागमनं प्रार्थ्यत इति बोद्धव्यम्। अपि च वैश्वानरः विश्वनरहितः अदब्धः रोगादिभिः अहिंसितः तनूपाः शरीरस्य पालकः सन् नः अस्माकम् अन्तः शरीरमध्ये तिष्ठाति तिष्ठतु । लेटि आडागमः। विश्वा विश्वानि सर्वाणि दुरितानि रोगनिदानभूतानि पापानि। विनाशयन् इति शेषः।

सं वर्चसा पयसा सं [8]तनूभिरगन्महि मनसा सं शिवेन[9] ।
त्वष्टा [10]नो अत्र[10] [11]वरीयः कृणोत्वनु[11] नो मार्ष्टु [12]तन्वो३ यद् [12]विरिष्टम् ॥३॥

सम्। वर्चसा। पयसा। सम्। तनूभिः। अगन्महि। मनसा। सम्। शिवेन। त्वष्टा। नः। अत्र। वरीयः। कृणोतु। अनु। नः। मार्ष्टु। तन्वः। यत्। विऽरिष्टम् ॥ ३ ॥

वर्चसा दीप्त्या शरीरगतया पयसा देहावस्थितिनिमित्तेन पयोवत् सारभूतेन रसेन सम् अगन्महि संगता भवेम। 'समो गमादिषु विदिप्रच्छि°' (पावा १,३,२९) इति आत्मने-

---

१. पुनर्मनः पुनरायुर्न आगात् ( °युर्न आगन् पै. ) मै १,२,३ पै १९,८,२ आपश्रौ १०, १८,३. †. म आगन् मा ४,१५. २. पुनः प्राणः मै. आपश्रौ. ३. पुनराकूतमागात् मै. आपश्रौ.; पुनराकूतिरागन् पै.; पुनः श्रोत्रं म आगन् मा. ४. अपबाधताम् मै.; अवबाधताम् आपश्रौ.; °ष्ठासि पै.; अग्नि नः पातु मा ५. दुरिताद् मा. पै. ६. अवद्यात् मा. पै. ७. 'मताभिमानम् S'. ८. तपोभि° तांब्रा १,३,९. ९. सुद॒त्रो मा २,२४ पै १९,८,३ मै १,३,३८. काठ ४,१२. १०. वरिवः कृणोत्वनु तै १,४,४४,१ पै.; विदधातु रायेऽनु मा. मै. काठ. तैआ २,४,१. ११. तनुवो तै. १२. विलिष्टम् मा. तै. तैआ.

पदम्। छान्दसे लुङि 'मन्त्रे घस°' इति (पा २,४,८०) च्लेर्लुक्। 'म्वोश्च' (पा ८,२,६५) इति मकारस्य नकारः। तनूभिः शरीरावयवैर्हस्तपादादिभिः सम् संगता भवेम। तथा शिवेन शोभनेन मनसा अन्तःकरणेन सम् संगता भवेम। त्वष्टा देवः नः अस्माकं वरीयः उरुतमम् अतिप्रभूतम् अत्र अस्मिन् शरीरे कृणोतु करोतु। उरुशब्दाद् ईयसुनि 'प्रियस्थिर°' (पा ६,४,१५७) इत्यादिना वर् आदेशः। कृवि हिंसाकरणयोश्च। 'धिन्विकृण्व्योर च' (पा ३,१,८०) इति उप्रत्ययः। नः अस्माकं तन्वः शरीरस्य यद् विरिष्टम् रोगार्तम् अङ्गं तद् अनु मार्ष्टु हस्तेन शोधयतु। मृजू[1] शुद्धौ। अदादित्वात् शपो लुक्। 'मृजेर्वृद्धिः' (पा ७,२,११४) इति वृद्धिः।

इति षष्ठेऽनुवाके प्रथमं सूक्तम्।

'इदं तद् युजे' इति तृचेन अभिचारकर्मणि पलाशमध्यमपर्णेन फलीकरणान् जुहुयात् (तु. कौसू ४८,२७;२८)।

'अग्मै क्षत्रम्' (२) इत्यनया पौर्णमासयागे अग्नीषोमीयं चरुं जुहुयात्। सूत्रितं हि—"'अग्मै 'क्षत्रमग्नीषोमौ' इति अग्नीषोमीयस्य" (कौसू ४,१९) इति।

'ये पन्थानः' (अ ६,५५) इति तृचेन देशान्तरं गच्छतः पुरुषस्य स्वस्त्ययनकामः समिदाज्यपुरोडाशादित्रयोदशद्रव्याणि जुहुयात्।

तथा अनेन तृचेन स्वस्त्ययनार्थं मन्थौदनौ दद्यात्।

सूत्रितं हि—"'ये पन्थानः' इति परीत्योपदधीत। प्रयच्छति" (कौसू ५२,१;२) इति।

'ग्रीष्मो हेमन्तः' इत्यनया ब्रह्मा प्रयाजान् अनुमन्त्रयेत। "'ग्रीष्मो हेमन्तः' (अ ६,५५,२) इति प्रयाजान्" (वैताश्रौ २,१६) इति हि वैतानं सूत्रम्।

आभिचारिके[3] कर्मणि व्रतविसर्जनार्थम् 'इदावत्सराय' (अ ६,५५,३) इत्यनया आज्यं जुहुयात् समिधश्च आदध्यात्।

इदं तद् युज उत्तरमिन्द्रं शुम्भाम्यष्टये।
अस्य क्षत्रं श्रियं महीं वृष्टिरिव वर्धया तृणम् ॥ १ ॥

इदम्। तत्। युजे। उत्ऽतरम्। इन्द्रम्। शुम्भामि। अष्टये।
अस्य। क्षत्रम्। श्रियम्। महीम्। वृष्टिःऽइव। वर्धय। तृणम् ॥ १ ॥

यत् कर्म अभिचारदोषनिर्हरणक्षमं तद् इदम् उत्तरम् उत्कृष्टतरं कर्म युजे योजयामि[4]। कर्म किं पुनस्तद् इत्याह। यद्वा उत्तरम् इत्येतद् इन्द्रविशेषणम्। उत्तरम् उत्कृष्टतरं सर्वेषु देवेषु श्रेष्ठम् इन्द्रं शुम्भामि अलंकरोमि। स्तुत्यादिभिः

1. मृगर् सा.
2. क्षत्रमिति मग्नी' सा.
4. पञ्. मं॥. इ.
5. P. दा. के. (कौसू ४२,१५;१६).

प्रीणयामीत्यर्थः । शुभ शुम्भ शोभार्थे । किमर्थम् । अष्टये अभिमतफलप्राप्तये। अशू व्याप्तौ इत्यस्माद् भावे क्तिन्। परोऽर्धर्चः प्रत्यक्षकृतः । हे इन्द्र त्वम् अस्य अभिचर्यमाणस्य पुरुषस्य क्षत्रम् बलं महीम् महतीं श्रियम् पुत्रपौत्रधनादिसंपदं वर्धय समृद्धां कुरु। तत्र दृष्टान्तः—वृष्टिरिवेति । यथा महती वृष्टिः तृणम् सस्यजातं वर्धयति तद्वद् इत्यर्थः । वर्धयेत्यस्य 'अन्येषामपि दृश्यते' (पा ६,३,१३६) इति सांहितिको दीर्घः।

अस्मै[१] क्षत्रमग्नीषोमावस्मै[१] धारयतं[२] रयिम् ।
इमं[३] राष्ट्रस्याभीवर्गे[४] कृणुतं युज उत्तरम् ॥ २ ॥

अस्मै । क्षत्रम् । अग्नीषोमौ । अस्मै । धारयतम् । रयिम् ।
इमम् । राष्ट्रस्य । अभिऽवर्गे । कृणुतम् । युजे । उत्ऽतरम् ॥ २ ॥

हे अग्नीषोमौ । 'ईदग्नेः सोमवरुणयोः' (पा ६,३,२७) इति पूर्वपदस्य दीर्घ ईकारः। अस्मै यजमानाय क्षत्रम् बलं धारयतम् स्थापयतम् । प्रयच्छतम् इति यावत्। तथा रयिम् धनम् अस्मै प्रयच्छतम्। तथा इमं यजमानं राष्ट्रस्य जनपदस्य अभीवर्गे आभिमुख्येनावर्जने कृणुतम् कुरुतम् । अभिपूर्वाद् वृजेर्भावे घञ् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (पा ६,३,१२१) इति दीर्घः। कृणुतम् इति । कृवि हिंसाकरणयोश्च। 'धिन्विकृण्व्योर च' (पा ३,१,८०) इति उप्रत्ययः तत्संनियोगेन अकारान्तादेशश्च । तस्य 'अतो लोपः' (पा ६,४,४८) इति लोपे स्थानिवद्भावात् लघूपधगुणाभावः। अहमपि अस्य यजमानस्य उक्तफलसिद्धये उत्तरम् उत्कृष्टतरं कर्म युजे योजयामि[५]। करोमीत्यर्थः।

सबन्धुश्चासबन्धुश्च यो अस्माँ अभिदासति[६] ।
सर्वं तं रन्धयासि[७] मे[८] यजमानाय सुन्वते ॥ ३ ॥

सऽबन्धुः । च । असबन्धुः । च । यः । अस्मान् । अभिऽदासति ।
सर्वम् । तम् । रन्धयासि । मे । यजमानाय । सुन्वते ॥ ३ ॥

सबन्धुः समानबन्धुः । समानजन्मगोत्रज इत्यर्थः । असबन्धुः तद्विपरीतः। अन्य इत्यर्थः । परस्परसमुच्चयार्थौ चकारौ । उभयविधो यः शत्रुः अस्मान् अभिदासति उपक्षपयति । दसु उपक्षये । अस्मात् ण्यन्तात् लटि 'छन्दस्युभयथा' (पा ३,४,११७) इति शप आर्धधातुकत्वात् 'णेरनिटि' (पा ६,४,५१) इति णिलोपः[९]।

---

१. °स्य पै १९,८,५. २. °यतां Wh.; वर्धयतो पै. ३. अथो पै. ४. °वर्गे Wh. ५. वैतु. मंपा. द्र. ६. जातो यश्च निष्ट्यः पै. ७. रीरधासि पै १९,८,६. ८. नः पै. ९. एवं स्वरो न सिध्यति, उदात्तनिवृत्तिस्वरप्राप्तेः।

सर्वं तम् उभयविधं शत्रुं सुन्वते सोमाभिषवं कुर्वते मे मह्यं यजमानाय हे इन्द्र त्वं रन्धयासि रन्धय वशीकुरु। 'रध्यतिर्वशगमने' (नि ६,३२) इति हि यास्कः। 'रधिजभोरचि' (पा ७,१,६१) इति नुम्। लेटि आडागमः। 'शतुरनुमः°' (पा ६,१,१७३) इति सुन्वच्छब्दाद् विभक्तिरुदात्ता।

[१]ये पन्थानो बहवो देवयाना[२] अन्तरा द्यावापृथिवी [३]संचरन्ति।
[४]तेषामज्यानिं यतमो [५]वहाति[६] तस्मै [७]मा देवाः परि [८]धत्तेह सर्वे ॥ १ ॥

ये। पन्थानः। बहवः। देवऽयानाः। अन्तरा। द्यावापृथिवी इति। सम्ऽचरन्ति।
तेषाम्। अज्यानिम्। यतमः। वहाति। तस्मै। मा। देवाः। परि। धत्त। इह। सर्वे ॥१॥

देवयानाः देवा एव यैः पथिभिर्गच्छन्ति ते तथोक्ताः। यातेः करणे ल्युट्। कृदुत्तरपदप्रकृतिस्वरत्वम्। ईदृशा ये पन्थानः मार्गा बहवः कर्मणां वैचित्र्यात् तत्तल्लोकप्राप्त्युपायतया नानाविधाः सन्तः द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्ये संचरन्ति वर्तन्ते। संचरणसाधनत्वात् तद्व्यपदेशः। तेषां मध्ये यतमः यज्जातीयः पन्था: अज्यानिम् ज्यानिर्हानिः तद्विपरीतां समृद्धिं वहाति वहेत् प्रापयेत्। यतम इति। 'वा बहूनां जातिपरिप्रश्ने°' (पा ५,३,९२) इति यच्छब्दात् डतमच्। वहातीति। वहेर्लेटि आडागमः। तस्मै मार्गाय हे देवाः सर्वे यूयम् इह अस्मिन् देशे मा मां परि दत्त[९]। रक्षणार्थं दानं परिदानम्। रक्षणाय प्रयच्छतेत्यर्थः।

ग्रीष्मो हेमन्तः शिशिरो[१] वसन्तः [२]शरद् वर्षाः [३]स्विते नो [४]दधात[५]।
आ नो गोषु [६]भजता प्रजायां[७] निवात [८]इद् वः शरणे[९] स्याम[१०] ॥ २ ॥

ग्रीष्मः। हेमन्तः। शिशिरः। वसन्तः। शरत्। वर्षाः। सुऽइते। नः। दधात।
आ। नः। गोषु। भजत। आ। प्रऽजायाम्। निऽवाते। इत्। वः। शरणे। स्याम ॥२॥

ग्रीष्माद्याः षड्ऋतवः प्रसिद्धाः। तदभिमानिनो देवाः स्विते सुष्ठु प्राप्तव्ये धने नः अस्मान् दधात दधतु स्थापयन्तु। हे ऋतवः यूयं नः अस्मान् गोषु आ भजत आभक्तान् भागयुक्तान् कुरुत। प्रजायाम् पुत्रपौत्रादिरूपायामपि आ भजत। किं बहुना। निवाते वायुसंस्पर्शेनापि रहिते। इच्छब्दः अवधारणे। वायूपलक्षितसमस्तदुःखकारणरहिते एव वः युष्माकं संबन्धिनि शरणे गृहे स्थाने स्याम भवेम।

'इ॒दा॒व॒त्स॒राय॑ परिवत्स॒राय॑ संवत्स॒राय॑' कृणुता बृ॒हन्नमः॑ ।
तेषां॑' व॒यं सु॑म॒तौ 'य॒ज्ञिया॑नाम॒पि॑ भ॒द्रे सौ॑मन॒से॑' स्याम ॥ ३ ॥

इ॒दा॒व॒त्स॒राय॑ । प॒रि॒ऽव॒त्स॒राय॑ । स॒म्ऽव॒त्स॒राय॑ । कृ॒णु॒त । बृ॒हत् । नमः॑ ।
तेषा॑म् । व॒यम् । सु॒ऽम॒तौ । य॒ज्ञिया॑नाम् । अपि॑ । भ॒द्रे । सौ॒म॒न॒से । स्या॒म ॥ ३ ॥

प्रभवादिषु पञ्चके पञ्चके क्रमेण एताः संज्ञा भवन्ति । तत्र प्रथमस्य संवत्सर इति संज्ञा । द्वितीयादीनां परिवत्सरः इदावत्सरः अनुवत्सरः इद्वत्सरः इति यथाक्रमं संज्ञा भवति । तद् उक्तम् आचार्यैः—

'चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे ।
संपरीदान्विदित्येतच्छब्दपूर्वास्तु वत्सराः ॥' इति ।

तदभिमानिदेवाश्च तैत्तिरीये समाम्नाताः— 'अग्निर्वाव संवत्सरः । आदित्यः परिवत्सरः । चन्द्रमा इदावत्सरः । वायुरनुवत्सरः' ( तैब्रा १,४,१०,१ ) इति । हे जनाः तस्मै इदावत्सराय परिवत्सराय संवत्सराय च बृहत् प्रभूतं नमः कृणुत कुरुत नमस्कारेण तान् प्रीणयत । 'नमः स्वस्ति॰' ( पा २,३,१६ ) इति चतुर्थी । तेषाम् इदावत्सरादीनां यज्ञियानाम् यज्ञार्हाणाम् । 'यज्ञर्त्विग्भ्यां घखञौ' ( पा ५,१,७१ ) इति घप्रत्ययः । सुमतौ शोभनायाम् अनुग्रहात्मिकायां बुद्धौ वयं स्याम भवेम । अनन्तरं भद्रे शोभने सौमनसे सौमनस्ये शोभनबुद्धिजन्ये फलेऽपि स्याम भवेम । अपिशब्दः संभावनायाम् ।

इति षष्ठेऽनुवाके द्वितीयं सूक्तम् ।

'मा नो देवाः' इति तृचेन सर्पवृश्चिकादिभयनिवृत्तये गृहक्षेत्रादिषु सिकता अभिमन्त्र्य परितः परिकिरेत् ।

तथा अनेन तृणमालां संपात्य गृहनगरादिद्वारे बध्नीयात् ।

तथा अनेन तृचेन गोमयम् अभिमन्त्र्य गृहे विसर्जनं द्वारि निखननम् अग्नौ होमं वा कुर्यात् ।

तथा अनेन अपामार्गमञ्जरीं गुडूचीं वा अभिमन्त्र्य पूर्ववद् गृहादिषु विसर्जनादिकं कुर्यात् ।

सूत्रितं हि— "'युक्तयोः' (अ ३,२६;२७), 'मा नो देवाः' (अ ६,५६), 'यस्ते सर्पः' (अ १२,१,४६ ) इति शयनशालोर्वराः परिकिरति[४]" ( कौसू ५०,१७ ) ।

तथा उपाकर्मणि अनेन तृचेन आज्यं हुत्वा दधिसक्तुषु संपातान् आनयेत् । सूत्रितं हि—'अभिजिति शिष्यान् उपनीय' इति प्रक्रम्य "आज्यं जुहुयात् । 'मा नो देवा अहिर्वधीत्' " (कौसू १३९,१;७;८) इत्यादि ।

---

१. इ॒दु॒व॰ तै ५,७,२,४; संवत्सराय परिवत्सरायेदावत्सरायानुवत्सरायोद्वत्सराय काठ १३,१५ पाग्र. २. तस्यं ऋ ३,१,२१. ३. °नां॑ ज्योगजी॑ता अहंताः तै. काठ.; °नां निवात एषामभये काठ.; य॒ज्ञि॒यस्यापि॑ भ॒द्रे॰ ऋ. ४. °लिखति Bl.

'इदमिद् वा उ भेषजम्' इति तृचेन मुखरहितव्रणभैषज्यार्थं गोमूत्रेण व्रणं मर्दयेत् तथा अनेन दन्तमलम् अभिमन्त्र्य प्रलिम्पेत् ।

तथा अनेन फेनम् अभिमन्त्र्य व्रणं प्रलिम्पेत् ।

सूत्रितं हि—"'इदमिद् वा' ( अ ६,५७ ) 'इत्यच्छिन्नम् । मूत्रफेनेनोद्रिय प्रलिम्पति । प्रक्षालयति । दन्तरजसा" ( कौसू ३१,११-१४ ) इति ।

'शं च नो मयश्च नः' (अ ६,५७,३) इत्येषा बृहद्गणे पठिता (कौसू. ९,२) शान्त्युदकादौ विनियुक्ता।

तथा अर्थोत्थापनविघ्नशमनार्थम् अनया क्षीरौदनहोमादीनि 'वायोः पूतः' ( अ ६,५१ ) इत्यत्रोक्तानि कर्माणि कुर्यात् । सूत्रं च तत्रैव द्रष्टव्यम् ।

मा नो॑ दे॒वा अहि॑र्वधी॒त् सतो॑का॒न्त्सह॑पूरुषान्[१] ।
संय॑तं॒ न वि [२]ष्प॑र॒द् व्यात्तं॒ न सं य॑म॒न्नमो॑ देवज॒नेभ्यः॑ ॥ १ ॥

मा । नः॒ । दे॒वाः॒ । अहिः॑ । व॒धी॒त् । सऽतो॑कान् । [४]स॒हऽपू॑रुषान् ।
सम्ऽय॑तम् । न । वि । स्प॒र॒त्[१] । वि॒ऽआत्त॑म् । न । सम् । य॒म॒त् । नमः॑ । दे॒व॒ऽज॒नेभ्यः॑ ॥ १ ॥

हे देवाः विषप्रतीकारकुशला अहिः सर्पः नः अस्मान् मा वधीत् मा हिंसीत् । हन्तेर्माङि लुङि 'हनो वध लिङि', 'लुङि च' ( पा २,४,४२;४३ ) इति वधादेशः । तस्य च अदन्तत्वाद् अतो लोपे स्थानिवद्भावाद् 'अतो हलादेर्लघोः' ( पा ७,२,७ ) इति वृद्ध्यभावः । कीदृशान् । सतोकान् । तोकम् इति अपत्यनाम । पुत्रपौत्राद्यपत्यसहितान् । 'वोपसर्जनस्य' ( पा ६,३,८२ ) इति सहशब्दस्य सभावः । सहपुरुषान् भृत्यादिपुरुषसहितान् । अपि च संयतम् संश्लिष्टम् अहेरास्यं न विस्फुरत्[१] दशनार्थं विस्फारितं विश्लिष्टं न भवतु । स्फुर संचलने इत्यस्माद् विपूर्वात् लेटि अडागमः । तथा व्यात्तम् विवृतं तद् आस्यं न सं यमत् संयतं संश्लिष्टं न भवतु । मन्त्रसामर्थ्येन प्रतिबद्धं सत् वर्तताम् इत्यर्थः । व्यात्तम् इति । व्याङ्पूर्वाद् दाञो निष्ठायाम् 'अच उपसर्गात् तः' ( पा ७,४,४७ ) इति तकारः । देवजनेभ्यः ये सर्पादिविषनिर्हरणसमर्था देवजनास्तेभ्यो नमोऽस्तु ।

नमो॑ऽस्त्वसि॒ताय॑[५] नम॒स्तिर॑श्चिराजये ।
स्व॒जाय॑ ब॒भ्रवे॒ नमो॒ नमो॑ देवज॒नेभ्यः॑ ॥ २ ॥

नमः । अस्तु । असिताय । नमः । तिरश्चिऽराजये ।
स्वजाय । बभ्रवे । नमः । नमः । देवऽजनेभ्यः ॥ २ ॥

असिताय कृष्णवर्णाय एतन्नाम्ने सर्पाधिपतये नमोऽस्तु । तथा तिरश्चिराजये तिरश्चीनास्तिर्यग् अवस्थिता राजयः वलयो यस्य स तिरश्चिराजिः । एतत्संज्ञाय सर्पमुख्याय नमोऽस्तु । बभ्रवे बभ्रुवर्णाय स्वजाय स्वयमेव जायते कारणान्तरनैरपेक्ष्येण उत्पद्यते इति स्वजः । तस्मै एतन्नाम्ने सर्पाय नमोऽस्तु । एतेषां सर्पाणां नियन्तृभ्यो देवजनेभ्यः च नमोऽस्तु । असितादिशब्दानां सर्पविशेषनामत्वं तैत्तिरीयके 'समीची नामासि' ( तै ५,५,१०,१ ) इत्यादिसर्पाहुतिमन्त्रेषु प्रसिद्धं द्रष्टव्यम् ।

सं ते हन्मि दता[1] दतः समु ते हन्वा हनू ।
सं ते जिह्वया जिह्वां [2]सम्वास्नाह आस्यम्[3] ॥ ३ ॥

सम् । ते । हन्मि । दता । दतः । सम् । ऊं इति । ते । [3]हन्वा । हनू इति ।
सम् । ते । जिह्वया । जिह्वाम् । सम् । ऊं इति । आस्ना । अहे । आस्यम् ॥ ३ ॥

हे अहे सर्प ते तव दता उपरिपङ्क्तिवर्तिदन्तेन दतः अधःपङ्क्तिस्थान् दन्तान् सं हन्मि संहतान् संश्लिष्टान् करोमि । तथा ते तव हन्वा हनू सं हन्मि । हनुद्वयमपि परस्परसंश्लिष्टं करोमीत्यर्थः । ते त्वदीयया जिह्वया जिह्वामपि संहतां करोमि । सर्पस्य हि द्वे जिह्वे । ते अपि परस्परप्रतिबद्धे करोमीत्यर्थः । तथा आस्ना आस्येन आसम् त्वदीयं मुखं संहतं करोमि । आस्यस्य उत्तराधरभागावपि संश्लिष्टौ करोमीत्यर्थः । यद्वा सर्पाधिपानां बहुशिरस्कत्वात् तदास्यानि अन्योन्यप्रतिबद्धानि करोमीत्यर्थः । 'पद्दन्' ( पा ६,१,६३ ) इत्यादिना दन्तशब्दस्य दद्भावः आस्यशब्दस्य च आसन् आदेशः । उशब्दः पूरणः ।

इदमिद् वा उ भेषजमिदं रुद्रस्य भेषजम् ।
येनेषुमेकतेजनां शतशल्यामपब्रवत्[4] ॥ १ ॥

इदम् । इत् । वै । ऊं इति । भेषजम् । इदम् । रुद्रस्य । भेषजम् ।
येन । इषुम् । एकऽतेजनाम् । शतऽशल्याम् । अपऽब्रवत् ॥ १ ॥

इदम् इद् वै इदमेव खलु करिष्यमाणं भेषजम् अस्य व्रणरोगस्य नियर्तकम् औषधम् । इदम् एव रुद्रस्य भेषजम् । रोदयति सर्वम् अन्तकाले इति रुद्रः । तस्य

1. ददामि दद्भिः पै १९,९,१४.  2. मस्त्व,स्नाहास्यम् पै.  3. हन्वा P.
4. अपमुचत् पै १९,१०,३.

देवस्य संवन्धि औषधम् । 'रोदेर्णिलुक् च' (पाउ २,२२) इति रक्प्रत्ययः । किं पुनरिदन्तया निर्दिष्टम् इति तद् आह—येनेति । येन भेषजेन महादेवस्त्रिपुरसंहृतिसमये एकतेजनाम् एकस्तेजनो[1] वेणुकाण्डो यस्याः सा तथोक्ता ताम् शतशल्याम् शतसंख्याकानि शल्यानि अयोमयानि तीक्ष्णानि प्रोतानि[2] यस्याम् ईदृशीम् इषुम् [3]उपयुवन् वेध्यसमीपं प्राप्य प्रायुङ्क्त । तद् इदम् इति पूर्वत्र संवन्धः ।

जा॒ला॒षेणा॒भि षि॑ञ्चत जाला॒षेणोप॑ सिञ्चत[4] ।
[5]जा॒ला॒षमु॒ग्रं[6] भे॑ष॒जं तेन॑[7] नो मृड[8] जी॒वसे॑ ॥ २ ॥

जा॒ला॒षेण॑ । अ॒भि । सि॒ञ्च॒त॒ । जा॒ला॒षेण॑ । उप॑ । सि॒ञ्च॒त॒ ।
जा॒ला॒षम् । उ॒ग्रम् । भे॒ष॒जम् । तेन॑ । नः॒ । मृ॒ड॒ । जी॒वसे॑ ॥ २ ॥

जलाषम् इति उदकनामसु पठितम् । अत्र च विनियोगानुसारेण गोमूत्रफेनलक्षणम् । हे परिचारकाः तेन [3]जलाषेण अभि षिञ्चत व्रणम् अभितः प्रक्षालयत । षिच क्षरणे । 'तुदादिभ्यः शः' (पा ३,१,७७) । 'शे मुचादीनाम्' (पा ७,१,५९) इति नुम् । 'उपसर्गात्सुनोति'[9] (पा ८,३,६५) इति षत्वम् । तथा तेनैव जलाषेण[3] उप सिञ्चत व्रणसमीपं प्रक्षालयत । तद्धि [3]जलाषम् उग्रम् तीक्ष्णं भेषजम् रोगनिवर्तकम् । हे रुद्र तेन जलाषेण नः अस्मान् [3]मृळ सुखय जीवसे जीवनार्थम् । जलाषस्य रुद्रसंबन्धिभेषजत्वं दाशतय्यामपि आम्नातम्—'गाथपतिं मेधपतिं रुद्रं जलाषभेषजम्' (ऋ १,४३,४) इति ।

शं च॑ नो॒ मय॑श्च नो॒ [8]मा च॑ नः॒[9] किं च॒नाम॑मत्[8] ।
क्ष॒मा रपो॒[10] विश्वं॑ नो अस्तु भेष॒जं सर्वं॑ नो अस्तु भेष॒जम् ॥ ३ ॥

शम् । च॒ । नः॒ । मयः॑ । च॒ । नः॒ । मा । च॒ । नः॒ । किम् । च॒न । आ॒म॒म॒त् ।
क्ष॒मा । रपः॑ । वि॒श्व॑म् । नः॒ । अ॒स्तु॒ । भे॒ष॒जम् । स॒र्व॑म् । नः॒ । अ॒स्तु॒ । भे॒ष॒जम् ॥ ३ ॥

हे देव नः अस्माकम् शं च रोगस्य शमनं च भवतु । रोगजनितं दुःखं निवर्तताम् इत्यर्थः । मयश्च । मय इति सुखनाम । सुखं च नः अस्माकं भवतु । अपि च नः अस्माकं संवन्धि किं चन किमपि प्रजापश्वादिकं मा आममत् रोगग्रस्तं मा भूत् । अम रोगे । अस्मात् ण्यन्तात् लुङि चङि रूपम् । रप इति पापनाम । 'रपो रिप्रम् इति पापनामनी भवतः' (नि ४,२१) इति हि यास्कः । 'सुपां सुलुक्' (पा ७,१,३९) इति षष्ठ्या लुक् । रपः रपसो रोगनिदानभूतस्य पापस्य क्षमा

1. °जना S'. 2. प्रोता° S'. 3. वैतु. मंरा. द्र. 4 सिञ्चतम् K; सिञ्चन पै १९,१०,४; सिञ्चनाम् पै [मूको.]. 5. जालाषे भद्रं पै. 6. तस्य पै. 7. देहि पै. 8. मो षु तु ऋ १०,५९,८; मो च न मा १६,४७ मै २,९,९; मो एषां तै ४,५,१०,१. 9. °मयत् पै १९,१०,५. 10. धमो पै.

क्षान्तिः उपशमो भवतु । क्षमूष् सहने । 'षिद्भिदादिभ्यः'' (पा ३,३,१०४) इति भावे अङ् । विश्वम् समस्तं स्थावरजङ्गमात्मकं नः अस्माकं भेषजम् औषधम् अस्तु । एतदेव आदरार्थं पुनरुच्यते—सर्वं नः इति । सर्वम् कृत्स्नं कर्म नः अस्माकं भेषजम् अस्तु ।

इति षष्ठेऽनुवाके तृतीयं सूक्तम् ।

'यशसं मेन्द्रः' इति तृचेन यशस्कामः इन्द्रं यजते उपतिष्ठते वा । '' 'यशसं मेन्द्रः' इति यशस्कामः'' (कौसू ५९,९) इति हि सूत्रम् ।

तथा उत्सर्जनकर्मणि अनेन तृचेन आज्यं हुत्वा रसेषु संपातान् आनयेत् । उत्सर्जनं प्रकम्य सूत्रितम्—'यशसं मेन्द्रः', 'गिरावरगराटेषु' (अ ६, ६९) इत्यादि 'अग्नौ हुत्वा । रसेषु संपातान् आनीय' (कौसू १३९,१५;१६) इति ।

'अनडुद्भ्यस्त्वं प्रथमम्' इति तृचस्य बृहद्गणे (कौसू ९,२) पाठात् शान्त्युदकादौ विनियोगः ।

तथा अर्थोत्थापनविघ्नशमनकर्मणि 'वायोः पूतः' (अ ६,५१) इति तृचोक्तानि क्षीरौदनहवनादीनि कर्माणि कुर्यात् । सूत्रितं हि—'' 'शं च नो मयश्च नः' (अ ६,५७,३), 'अनडुद्भ्यस्त्वं प्रथमम्' (अ ६,५९), 'मह्यमापः' (अ ६,६१), 'वैश्वानरो रश्मिभिः' (अ ६,६२) इत्यभिवर्षणावसेचनानाम्'' (कौसू ४१,१४) इति ।

तथा स्वस्त्ययनकर्मणि अनेन तृचेन आज्यसमित्पुरोडाशादीनि शष्कुल्यन्तानि त्रयोदशद्रव्याणि जुहुयात् । सूत्रितं हि—'' 'पातं नः' इति पञ्च (अ ६,३-७), 'अनडुद्भ्यः' (अ ६,५९), 'यमो मृत्युः' (अ ६,९३), 'विश्वजित्' (अ ६,१०७), 'शकधूमम्' (अ ६,१२८), 'भवाशर्वौ' (अ ११,२) इत्युपदधीत'' (कौसू ५०,१३) इति ।

यशसं मेन्द्रो मघवान् कृणोतु यशसं 'द्यावापृथिवी उभे इमे' ।
यशसं मा देवः सविता कृणोतु प्रियो 'दातुर्दक्षिणाया †इह स्याम्' ॥ १ ॥

यशसम् । मा । इन्द्रः । मघऽवान् । कृणोतु । यशसम् । द्यावापृथिवी इति । उभे इति । इमे इति । यशसम् । मा । देवः । सविता । कृणोतु । प्रियः । दातुः । दक्षिणायाः । इह । स्याम् ॥ १ ॥

मघवान् । मघम् इति धननाम । तद्वान् इन्द्रः मा मां यशसम् यशस्विनं कीर्तियुक्तं कृणोतु करोतु । यशःशब्दाद् मत्वर्थीयस्य 'लुगकारेकाररेफाश्च वक्तव्याः' (पावा ४,४,१२८) इति लुक्[3] । तद्धितान्तत्वेन प्रातिपदिकसंज्ञायाम् 'फिषोऽन्त उदात्तः' (फि १,१) इति अन्तोदात्तत्वम् । इमे परिदृश्यमाने उभे द्यावापृथिवी द्यावापृथिव्यौ

---

१. सोमो वरुणो वायुरग्निः पै १९,१०,६.　　२. देवानां दक्षिणायं दातुरिह भूयासम् मा २६,२　　†. स्यामहम् पै.　　३. इदं नित्यं मागार्थे एव मत्वर्थीयस्य लुग्विधानात्.

मा मां यशसम् यशस्विनं कृणुताम् । देवः दानादिगुणयुक्तः सविता सर्वप्रेरको देवः मा मां यशसम् यशस्विनं कृणोतु करोतु । एवम् उदीरितरीत्या यशस्वी भूत्वा दक्षिणायाः वासोहिरण्यादिरूपाया इह अस्मिन् ग्रामनगरादौ धातुः[1] दातुः प्रियः स्याम् भवेयम् ।

यथेन्द्रो द्यावापृथिव्योर्यशस्वान् यथाप ओषधीषु यशस्वतीः ।
एवा[2] विश्वेषु देवेषु वयं[3] सर्वेषु[4] यशसः स्याम ॥ २ ॥

यथा । इन्द्रः । द्यावापृथिव्योः । यशस्वान् । यथा । आपः । ओषधीषु । यशस्वतीः ।
एव । विश्वेषु । देवेषु । वयम् । सर्वेषु । यशसः । स्याम ॥ २ ॥

यथा येन प्रकारेण द्यावापृथिव्योः द्यौश्च पृथिवी च द्यावापृथिव्यौ तयोः । 'दिवो द्यावा', 'दिवसश्च पृथिव्याम्' ( पा ६,३,२९;३० ) इति द्यावा आदेशः । 'देवताद्वन्द्वे च' ( पा ६,२,१४१ ) इति उभयपदप्रकृतिस्वरत्वम् । 'उदात्तयणो हल्पूर्वात्' ( पा ६,१,१७४ ) इति विभक्तेरुदात्तत्वम् । अनयोर्लोकयोर्मध्ये इन्द्रो यशस्वान् वृष्टिप्रदानादिकर्मभिः कीर्तिमान् । यथा च आपः ओषधीषु यशस्वतीः यशस्वत्यः । 'वा छन्दसि' ( पा ६,१,१०६ ) इति पूर्वसवर्णदीर्घः । 'तसौ मत्वर्थे' ( पा १,४,१९ ) इति भसंज्ञया पदसंज्ञाया निवर्तनात् रुत्वाभावः । व्रीहियवादिसस्यवृद्धिहेतुत्वेन लोके प्रख्याता इत्यर्थः । एव एवं विश्वेषु सर्वेषु देवेषु तदुपलक्षितेषु सर्वेषु मनुष्येषु च वयं यशसः यशस्विनः स्याम भवेम ।

यशा इन्द्रो यशा अग्निर्यशाः सोमो अजायत ।
यशा विश्वस्य भूतस्याहमस्मि यशस्तमः ॥ ३ ॥

यशाः । इन्द्रः । यशाः । अग्निः । यशाः । सोमः । अजायत ।
यशाः । विश्वस्य । भूतस्य । अहम् । अस्मि । यशःऽतमः ॥ ३ ॥

'यशा इन्द्र॰' इत्येषा तृतीया पूर्ववद् ( ६,३९,३ ) अत्र व्याख्येया ।

अनडुद्भ्यस्त्वं[5] प्रथमं धेनुभ्यस्त्वमरुन्धति ।
अधेनवे वयसे शर्म यच्छ चतुष्पदे ॥ १ ॥

[6]अनडुत्ऽभ्यः । त्वम् । प्रथमम् । धेनुऽभ्यः । त्वम् । अरुन्धति ।
अधेनवे । वयसे । शर्म । यच्छ । चतुःऽपदे ॥ १ ॥

---

१. वेतु. संरा. द्र. २. यथा पै १९,१०,७. ३. एवा पै. ४. देवेषु पै.
५. °भ्यो मः पै १९,१४,१०. ६. अनडुतऽभ्यः P.

हे अरुन्धति अरोधनशीले सहदेव्याख्यौषधे[1] शान्त्युदकादौ प्रयुज्यमाना त्वं प्रथमम् पूर्वम् अनड्वद्भ्यः अनसः शकटस्य वाहकेभ्यो बलीवर्देभ्यः शर्म सुखं प्रयच्छ। 'वसुस्रंसुध्वंस्वनडुहां दः' (पा ८,२,७२) इति दत्वम्। तथा त्वम् धेनुभ्यः दोग्ध्रीभ्यो गोभ्यः शर्म यच्छ। अधेनवे धेनुव्यतिरिक्ताय वयसे पञ्चवर्षाद् अर्वाचीनाय[2] गवाश्वादिजातीयाय[3] चतुष्पदे चतुष्पान्मात्राय[4] शर्म सुखं प्रयच्छ। वयःशब्दस्य उक्तार्थपरता भगवता आपस्तम्बेन दर्शिता—'एकहायनप्रभृत्या पञ्चहायनेभ्यो वयांसि (आपश्रौ १८,३,९) इति। चतुष्पद इति। चत्वारः पादा अस्य। 'संख्यासुपूर्वस्य' (पा ५,४,१४०) इति पादशब्दस्य अन्त्यलोपः। 'पादः पत्' (पा ६,४,१३०) इति पद्भावः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्।

शर्म॑ यच्छ॒त्वोष॑धिः स॒ह दे॒वीर॑रुन्ध॒ती[5]।
कर॑त् पय॑स्वन्तं गो॒ष्ठम॑य॒क्ष्माँ[6] उ॒त पूरु॑षान्[7] ॥ २ ॥

शर्म॑। य॒च्छ॒तु॒। ओष॑धिः। स॒ह। दे॒वीः। अ॒रुन्ध॒ती।
कर॑त्। पय॑स्वन्तम्। गो॒ऽस्थम्। अ॒य॒क्ष्मान्। उ॒त। पुरु॑षान् ॥ २ ॥

[8]सहदेवी सहदेव्याख्या अरुन्धती अभिलषितफलस्य अवारयित्री ओषधिः शर्म सुखं यच्छतु प्रयच्छतु। अस्मदीयं गोष्ठम् गोनिवासदेशं पयस्वन्तम् प्रभूतपयसा युक्तं करत् करोतु। उत अपि च पूरुषान् पुरुषान् पुत्रभृत्यादीन्[9] अस्मदीयान् अयक्ष्मान् अरोगान् करोतु।

वि॒श्वरू॑पां[10] सु॒भगा॑म॒च्छाव॑दामि जीव॒लाम्।
सा नो॑ रु॒द्रस्या॒स्तां हे॒तिं दू॒रं न॑यतु॒ गोभ्यः॑ ॥ ३ ॥

वि॒श्वऽरू॑पाम्। सु॒ऽभगा॑म्। अ॒च्छ॒ऽआव॑दामि। जी॒व॒लाम्।
सा। नः॑। रु॒द्रस्य॑। अ॒स्ताम्। हे॒तिम्। दू॒रम्। न॒य॒तु॒। गोभ्यः॑ ॥ ३ ॥

विश्वरूपाम् नानारूपां विश्वस्य कृत्स्नस्य फलस्य निरूपयित्रीं वा सुभगाम् सौभाग्यवतीं जीवलाम् जीवो जीवनं प्राणधारणं तद्धेतुत्वेन तद्वतीम्। 'सिध्मादिभ्यश्च' (पा ५,२,९७) इति मत्वर्थीयो लः। यद्वा। ला दाने। जीवं जीवनं लाति ददातीति जीवला। 'आतोऽनुपसर्गे कः' (पा ३,२,३)। ईदृशीं सहदेव्याख्याम् ओषधिम् अच्छ[8] आभिमुख्येन वदामि[8] इष्टफलं प्रार्थये। सा तादृशी ओषधिः रुद्रस्य हिंसकस्य देवस्य अस्ताम् अस्मदभिमुखं क्षितां हेतिम् आयुधं नः अस्माकं

---

१. °ख्योषधे S'. २. अर्वाचीने S'. ३. °जातीये S'. ४. °न्मात्रे S'.
५. सहदेवी अरु° S. ६. °यक्ष्मां B,B^b,D,K^m,Cs; °यक्ष्मान् पै १९,१४,११.
७. पौरुषान् पै. ८. वेङ्क. मैरा. ह. ९. पुत्रप्रभृत्यादीन् S'. १०. °रूपं A.

संबन्धिभ्यो गोभ्यः सकाशाद् दूरं दूरदेशं नयतु प्रापयतु । अस्ताम् इति । असु क्षेपणे । निष्ठायां 'यस्य विभाषा' (पा ७,२,१५) इति इट्प्रतिषेधः । हेतिम् इति । हन्तेः करणे क्तिनि 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (पा ३,३,९७) इति निपातितः । गोभ्य इति । 'सावेकाचः॰' (पा ६,१,१६८) इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'न गोश्वन्साववर्ण॰' (पा ६,१,१८२) इति प्रतिषेधः ।

इति षष्ठेऽनुवाके चतुर्थं सूक्तम् ।

'अयमा याति' इति तृचेन पतिलाभकर्मणि काकसंचारात् पूर्वम् आज्यं जुहुयात् । सूत्रितं हि—"'अयमा याति' इति पुरा काकसंपातात्" (कौसू ३४,२२) इति ।

'मह्यमापः' इति तृचस्य बृहद्गणे (कौसू ९,२) पाठात् शान्त्युदकादौ विनियोगोऽनुसंधेयः ।

तथा अर्थोत्थापनविघ्नशमनकर्मणि क्षीरौदनहवनादीनि कर्माणि कुर्यात् । सूत्रितं हि—"'अनडुद्भ्यस्त्वं प्रथमम्' (अ ६,५९), 'मह्यमापः' (अ ६,६१), 'वैश्वानरो रश्मिभिः' (अ ६,६२) इत्यभिवर्षणावसेचनानाम्" (कौसू ४१,१४) इति ।

तथा वापीकूपतटाकादिषु जलागमनकामः अनेन तृचेन इन्द्रं यजते उपतिष्ठते वा । सूत्रितं हि—"'यशसं मेन्द्रः' (अ ६,५८) इति यशस्कामः । 'मह्यमापः' इति वर्चस्कामः" (कौसू ५९,९;१०) इति ।

अयमा यात्यर्यमा पुरस्ताद् विषितस्तुपः[1] ।
अस्या इच्छन्नग्रुवै[2] पतिमुत[3] जायामजानये ॥ १ ॥

अयम् । आ । याति । अर्यमा । पुरस्तात् । विषितऽस्तुपः ।
अस्यै[4] । इच्छन् । अग्रुवै । पतिम् । उत । जायाम् । अजानये ॥ १ ॥

पुरस्तात् पूर्वस्यां दिशि विषितस्तुपः विशेषेण सितो बद्धः स्तुपो रश्मीनां समुच्छ्रायो यस्य स तथोक्तः । ईदृशोऽयम् अर्यमा आदित्यः आ याति आगच्छति । किं कुर्वन् । अस्यै अग्रुवै कन्यायै पतिम् इच्छन् । 'लक्षणहेत्वोः क्रियायाः' (पा ३,२,१२६) इति हेतौ शतृप्रत्ययः । पत्यन्वेषणहेतोरित्यर्थः । 'इषुगमियमां छः' (पा ७,३,७७) इति छत्वम् । उत अपि च अजानये जायारहिताय जायाम् भार्याम् । दातुम् इच्छन् इत्यर्थः । न विद्यते जाया यस्येति विगृह्य 'जायाया निङ्' (पा ५,४,१३४) इति निङ् आदेशः । अर्यम्णो विवाहाधिदेवतात्वम् 'अर्यमणं नु देवं कन्या अग्निम् अयक्षत' (आप २,७,१३) इति मन्त्रलिङ्गाद् अवगन्तव्यम् ।

---

1. °भिमरं S'. 2. °स्यषस्कामः S', Bl. 3. °स्तुपः S[m]; °स्थुपः A; °स्तुपः D,R,P[a]; °स्तुपः पै १९,१४,४. 4. म वा इच्छेरग्रुवै पै. 5. °मयो पै. 6. अस्मै P.

अश्रमदियमर्यमन्नन्यासां समनं यती ।
अङ्गो न्वर्यमन्नस्या अन्याः समनमायति ॥ २ ॥

अश्रमत् । इयम् । अर्यमन् । अन्यासाम् । समनम् । यती ।
अङ्गो इति । नु । अर्यमन् । अस्याः । अन्याः । समनम् । आऽअयति ॥ २ ॥

हे अर्यमन् देव इयम् पतिलाभार्थिनी कन्या अश्रमत् श्रान्ता अभिलषितस्य पत्युरलाभेन खिन्ना । श्रमु तपसि खेदे च । किं कुर्वती । अन्यासां पतिव्रतानां स्त्रीणां [1]शमनम् पत्युरावर्जनोपायभूतां शान्तिं यती प्राप्नुवती । अङ्ग उ अङ्गो । उशब्दः चार्थे । अङ्गेत्याभिमुख्यकरणे । अङ्ग हे अर्यमन् अन्याश्च स्त्रियः अस्याः पतिकामाया अनु[1] पश्चात् [1]शमनम् पतिविषयां शान्तिम् आयति प्राप्नुवन्ति । व्यत्ययेन एकवचनम् ।

धाता दाधार पृथिवीं धाता द्यामुत सूर्यम् ।
धातास्या[2] अग्रुवै पतिं दधातु[3] प्रतिकाम्यम् ॥ ३ ॥

धाता । दाधार । पृथिवीम् । धाता । द्याम् । उत । सूर्यम् ।
धाता । अस्यै । अग्रुवै । पतिम् । दधातु । प्रतिऽकाम्यम् ॥ ३ ॥

धाता सर्वस्य जगतो धारयिता विधाता देवः पृथिवीम् भूमिं दाधार धृतवान् । स्वस्थाने स्थापितवान् इत्यर्थः । तुजादित्वाद् अभ्यासदीर्घः । तथा स एव धाता द्याम् द्युलोकम् । उतशब्दः चार्थे । सूर्यम् सर्वप्रेरकम् आदित्यं च स्वकीये स्थाने धारितवान् । एवं सर्वस्य जगतो नियन्तृत्वात् धाता एव अस्या अग्रुवै पतिकामायै कन्यायै प्रतिकाम्यम् आभिमुख्येन कामयितव्यं पतिम् भर्तारं दधातु विदधातु करोतु प्रयच्छतु वा । डुधाञ् दानधारणयोः ।

मह्यमापो मधुमदेरयन्ताम्[4] मह्यं सूरो[5] अभरज्ज्योतिषे[6] कम्[7] ।
मह्यं[8] देवा उत[9] विश्वे तपोजा[10] मह्यं देवः सविता व्यचो धात् ॥१॥

मह्यम् । आपः । मधुऽमत् । आ । ईरयन्ताम् । मह्यम् । सूरः । अभरत् । ज्योतिषे । कम् ।
मह्यम् । देवाः । उत । विश्वे । तपःऽजाः । मह्यम् । देवः । सविता । व्यचः । धात् ॥१॥

आपः उदकानि तदभिमानिदेवताः[11] मधुमत् माधुर्योपेतम् आत्मीयं रसं मह्यं ..दर्थे एरयन्ताम् आगमयन्तु । तथा सूरः सर्वस्य प्रेरक आदित्यः मह्यं मदर्थं कम् सुखकरम्

---

१. वेङ्. मेपा. द्र. २. धातास्यां R ३. ददातु पै १९,१४,६ [मूको.].
४. °यन्त पै १९,१४,७; °मदेरयन्त काठ ४०,९. ५. सूर्यः पै. काठ. ६. °तिषां पै.; ज्योतिः काठ. ७. तद् काठ. ८. मां काठ. ९. अनु काठ. १०. समोता पै. ११. तदभिमानो देवाः S'.

आत्मीयं तेजः ज्योतिषे विषयप्रकाशनाय अभरत् अहरत् । उत्पादितवान् इत्यर्थः । यद्वा 'क्रियाग्रहणं कर्तव्यम्' ( पावा १,४,३२ ) इति कर्मणः संप्रदानत्वात् ज्योतिषे इति कर्मणि चतुर्थी । ज्योतिः आत्मीयं प्रकाशम् अहरत् । प्रापयतीत्यर्थः । अस्मिन् पक्षे कम् इति पदपूरणः । तद् उक्तं यास्केन — 'पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति' ( नि १,९) इति । उत अपि च तपोजाः ब्रह्मणस्तपसो जाताः विश्वे सर्वे देवाः मह्यम् । इष्टफलं प्रयच्छन्तु इति शेषः । तपसो जायन्ते इति तपोजाः । 'जनसनखनक्रमगमो विट्' ( पा ३,२,६७ ) । 'विड्वनोरनुनासिकस्यात्' ( पा ६,४,४१ ) इति आत्वम् । सविता सर्वस्य प्रेरको देव व्यचः व्यापनम् इष्टफलप्रापणं मह्यं धात् दधातु विदधातु करोतु प्रयच्छतु वा । दधातेश्छान्दसे लुङि 'गातिस्था०' ( पा २,४,७७ ) इति सिचो लुक् ।

अ॒हं वि॑वे॒च[1] पृ॑थि॒वीमु॒त [2]द्याम॒हमृ॒तूँर॑जनयं[4] स॒प्त सा॒कम् ।
अ॒हं स॒त्यमनृ॑तं॒ यद् वदा॑म्य॒हं [3]दैवीं॒ परि॑ वाचं॒ विश॑श्च[5] ॥ २ ॥

अ॒हम् । वि॒वे॒च । पृ॒थि॒वीम् । उ॒त । द्याम् । अ॒हम् । ऋ॒तून् । अ॒ज॒न॒य॒म्[4] । स॒प्त । सा॒कम् ।
अ॒हम् । स॒त्यम् । अनृ॑तम् । यत् । वदा॑मि । अ॒हम् । दैवी॑म् । परि॑ । वाच॑म् । विशः॑ । च॒ ॥

मन्त्रद्रष्टा स्वात्मनः सर्वगतब्रह्मात्मभावम् अनुसंदधानः सर्वकर्तृत्वम् आविष्करोति । पृथिवीं द्यां च अहं विवेच । परस्परविविक्ते असंकीर्णरूपे कृतवान् अस्मि । तथा अहम् एव सप्त सप्तसंख्याकान् । वसन्ताद्याः षड् संसर्पांहस्पतिसंज्ञकाधिमासाख्यः सप्तमः एतान् सप्तसंख्याकान् ऋतून् साकं सह परस्परसंहतान् अजनयम् उत्पादितवान् अस्मि । सत्यम् यथार्थम् । अनृतम् अयथार्थम् । सत्यानृतभेदेन यत् लोके प्रसिद्धं वाक्यजातं तद् अहम् एव वदामि उच्चारयामि । तथा दैवीम् देवसंबन्धिनीं वाचम् अहम् एव परि विशम्[5] परिप्राप्तवान् अस्मि ।

अ॒हं [1]ज॑जान पृथि॒वीमु॒त द्याम॒हमृ॒तूँर॑जनयं‡ स॒प्त ×सिन्धू॑न्[2] ।
अ॒हं स॒त्यमनृ॑तं॒ यद् वदा॑मि [7]यो †अ॒ग्नीषोमा॑वजु॑षे स॒खा॑या ॥३॥

अ॒हम् । ज॒जा॒न । पृ॒थि॒वीम् । उ॒त । द्याम् । अ॒हम् । ऋ॒तून् । अ॒ज॒न॒य॒म् । स॒प्त । सिन्धू॑न् ।
अ॒हम् । स॒त्यम् । अनृ॑तम् । यत् । वदा॑मि । यः । अ॒ग्नी॒षोमौ॑ । अजु॑षे । स॒खा॑या ॥ ३ ॥

पूर्ववद् योजना । इयांस्तु विशेषः । जजान उत्पादितवान् अस्मि । सिन्धून् । सिन्धवः स्यन्दनशीला गङ्गाद्याः सप्त नद्यः सप्त समुद्रा वा । तानपि अहम् उत्पादितवान्

---

१. दाधार पै १९,१४,८; अस्तभ्नाम् काठ ४०,९. २. °हं सिन्धून् ससृजे पै.; °हमृतूँरजनै काठ. ३. वाचं परि सर्गां बभूव काठ. ४. अजनयत् P,P[1],J. ५. चेतु. मंगा. ६. द्यावापृथिवी आवमृ दाहं विश्वा ओषधीः सप्त सिन्धून् काठ. † विवेजिम पै १९,१४,९. ‡ °मृतून् ससृजे पै. × साकम् पै. ७. य इन्द्राग्नी असनं सख्यायी काठ. † अग्नीषोमाव° PW.

वान् अस्मि । स्वात्मनस्तादृक्सामर्थ्यप्राप्तिम् उपपादयति — यो अग्नीषोमौ इति । अग्नीषोमात्मकं हीदं सर्वं जगत् । श्रूयते हि — 'एतावद् वा इदं सर्वम् अन्नं चैवान्नादश्च सोम एवान्नम् अग्निरन्नादः' ( बृआ १,४,६ ) इति । एवं भोक्तृभोग्यात्मकस्य अखिलजगतः कारणभूतौ अग्नीषोमौ योऽहं ब्रह्मात्मभावेन सखाया सखायौ समानख्यानौ जगन्निर्माणे सहायभूतौ अजुषे सेवितवान् अस्मि । तादृशस्य मम द्यावापृथिव्यादिसर्जनम् उपपन्नम् इत्यर्थः । अजुषे इति । जुषी प्रीतिसेवनयोः । अस्मात् लङि उत्तमैकवचने रूपम् । सखाया । 'सुपां सुलुक्°' ( पा ७,१,३९ ) इति विभक्तेराकारः ।

इति सायणार्यविरचिते अथर्ववेदार्थप्रकाशे षष्ठकाण्डे षष्ठोऽनुवाकः ।

सप्तमेऽनुवाके पञ्च सूक्तानि । तत्र 'वैश्वानरो रश्मिभिः' इति प्रथमं सूक्तम् । तत्र आद्यस्य तृचस्य बृहद्गणे ( कौसू ९,२ ) पाठात् शान्त्युदकाभिमन्त्रणे विनियोगः ।

तथा अर्थोत्थापनविघ्नशमनकर्मणि अनेन तृचेन क्षीरौदनहवनादीनि कर्माणि कुर्यात् । सूत्रितं हि — "'मह्यमापः' ( अ ६,६१ ), 'वैश्वानरो रश्मिभिः' इत्यभिवर्णावसेचनानाम्" ( कौसू ४१,१४ ) इति ।

तथा अस्य तृचस्य पवित्रगणे पाठात् सवयज्ञेषु प्रोक्षणे विनियोगः । 'पवित्रैः संप्रोक्षन्ते' ( कौसू ६१,५ ) इति सूत्रात् ।

अवकीर्णिप्रायश्चित्तार्थं तमेव ब्रह्मचारिणं दर्भरज्ज्वा कण्ठे बद्ध्वा 'यत् ते देवी' इत्यनेन तृचेन व्रीहीन् यवान् तिलान् वा जुहुयात् ।

तथा अनेन तृचेन उदपात्रं संपात्य दर्भरज्ज्वा अवकीर्णिनं संप्रोक्ष्य दर्भरज्जुं विसृजेत् ।

ब्रह्मचारिणं प्रक्रम्य सूत्रितम् —" 'यत् ते देवी' (अ ६,६३) इत्यावपति । एवं संपातवतोदपात्रेणावसिच्य । मन्त्रोक्तं शान्त्युदकेन संप्रोक्ष्य" ( कौसू ४६,१९-२१ ) इति ।

तथा अग्निचयने 'यत् ते देवी' इति नैर्ऋतेष्टकोपधानानन्तरं रुक्मपाशसहितां प्रास्ताम् आसन्दीम् अनुमन्त्रयेत । तद् उक्तं वैताने — " 'यत् ते [1]देवी' इत्यासन्दीं रुक्मपाशां नैर्ऋत्यां प्रास्ताम्[2]" ( वैताश्रौ २८,२७ ) इति ।

तथा 'नमोऽस्तु ते' ( अ ६,६३,२ ) इति नैर्ऋतीम् इष्टकाम् उपधीयमानाम्[3] अनुमन्त्रयेत । 'नमोऽस्तु ते निर्ऋते' ( वैताश्रौ २८,२६ ) इति हि वैतानम् ।

तत्रैव अग्निचयने 'संसमित्' (अ ६,६३,४) इत्यनया आनुष्टुभीरिष्टका उपधीयमाना ब्रह्मा अनुमन्त्रयते ।

---

१. तु. Bl.; वैतु. शंपा. संप्रोक्षति २. देवीति शिक्यासन्दीरुक्मपाशान्नैर्ऋत्यां प्रासने

३. °माना S'.

वैश्वानरो रश्मिभिर्नः[1] पुनातु वातः प्राणेनेषिरो नभोभिः[2] ।
द्यावापृथिवी[3] पयसा पयस्वती[4] ऋतावरी यज्ञिये नः[5] पुनीताम् ॥ १ ॥

वैश्वानरः । रश्मिऽभिः । नः । पुनातु । वातः । प्राणेन । इषिरः । नभःऽभिः । द्यावापृथिवी[6] इति । पयसा । पयस्वती इति । ऋतवरी इत्यृतऽवरी । यज्ञिये इति । नः । पुनीताम् ॥ १ ॥

वैश्वानरः विश्वनरसंबन्धी सर्वप्राणिषु जाठरात्मना वर्तमानोऽग्निः रश्मिभिः स्वकीयैः किरणैः नः अस्मान् पुनातु शोधयतु । यद्वा 'वैश्वानरो यतते सूर्येण' (ऋ १,९८,१) इति लिङ्गात् सूर्योऽपि वैश्वानर इत्युच्यते । सोऽपि स्वरश्मिभिः अस्मान् पुनात्वित्यर्थः । तथा वातः वायुः देहमध्ये संचरन् प्राणेन प्राणनव्यापारेण श्वासोच्छ्वासादिरूपेण अस्मान् पुनातु । तथा इषिरः गमनशीलः अन्तरिक्षे संचरन् स एव नभोभिः नभःप्रदेशै रन्तरिक्षप्रदेशैः अस्मान् शोधयतु । इषिर इति । इष गतौ इत्यस्माद् औणादिकः किरच् प्रत्ययः (पाउ १,५१) । द्यावापृथिवी द्यावापृथिव्यौ द्यौश्च पृथिवी च । 'दिवो द्यावा', 'दिवसश्च पृथिव्याम्' (पा ६,३,२९;३०) इति द्यावा आदेशः । 'वा च्छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः । 'देवताद्वन्द्वे च' ( पा ६,२,१४१ ) इति उभयपदप्रकृतिस्वरत्वम् । "अपृथिवीरुद्रपूषमन्थिषु' (पा ६,२,१४२) इति पर्युदस्तत्वाद् 'नोत्तरपदेऽनुदात्तादौ" (पा ६,२,१४२) इति निषेधाभावः । कीदृश्यौ द्यावापृथिव्यौ । पयसा सारभूतेन रसेन पयस्वती पयस्वत्यौ सारवत्यौ । ऋतावरी ऋतम् इत्युदकस्य सत्यस्य यज्ञस्य वा नामधेयम् तद्वत्यौ । 'छन्दसीवनिपौ' ( पावा ५,२,१०९ ) इति मत्वर्थीयो वनिप् । 'वनो र च' ( पा ४,१,७ ) इति ङीब्रेफौ । पूर्ववत् पूर्वसवर्णदीर्घः । यज्ञिये यज्ञार्हे यज्ञनिष्पादनसमर्थे । 'यज्ञर्त्विग्भ्यां घखञौ' ( पा ५,१,७१ ) इति घप्रत्ययः । एवंगुणविशिष्टे द्यावापृथिव्यौ नः अस्मान् पुनीताम् शोधयताम् । पूञ् पवने । क्र्यादित्वात् श्नाप्रत्ययः । 'ई हल्यघोः' ( पा ६,४,११३ ) इति ईत्वम् ।

वैश्वानरीं[7] सूनृतामा रभध्वं[8] यस्या आशास्तन्वो[9] वीतपृष्ठाः[10] ।
तया गृणन्तः[11] सधमादेषु[12] वयं स्याम पतयो रयीणाम् ॥ २ ॥

वैश्वानरीम् । सूनृताम् । आ । रभध्वम् । यस्याः । आशाः । तन्वः । वीतऽपृष्ठाः । तया । गृणन्तः । सधऽमादेषु । वयम् । स्याम । पतयः । रयीणाम् ॥ २ ॥

---

१. °र्मा मे ३,११,१० तैब्रा १,४,८,३. २. मयोभूः मै. तैब्रा. ३. °पृथिवी A,B, B[1],D,K,K[m],R,S[m],P[1],J,V,Cs. ४. पयोभिर् मै. तैब्रा. ५. मा पै १०,९,५ मै. तैब्रा. ६. °पृथिवी P,J,K; °पृथिवी > °पृथिवी Cp. ७ वैश्वदेवीं पै १९,३०,६; वैश्वदेवी मा १९,४४ मै. तैब्रा १,४,८,२. ८. पुनर्मा देव्याशाद् मा. मै. तैब्रा. ९. शुद्धा भवन्तः शुचयः पै.; यस्यामिमा (येन्या मै.) बह्व्यस्तन्वो मा. मै.; यस्यै बह्वीस्तनुवो तैब्रा. १०. पावकाः पै. ११. मदन्तः मा. मै. तैब्रा. १२. सधमाद्येषु मै. तैब्रा.

वैश्वानरीम् वैश्वानराग्निसंबन्धिनीं सूनृताम् प्रियसत्यात्मिकां वाचं स्तुतिरूपाम् हे जनाः आ रभध्वम् उपक्रमध्वम्। वीतपृष्ठाः विस्तीर्णपरिभागा आशाः दिशो यस्याः वैश्वानर्या वाचः तन्वः शरीरभूताः। तथा वाचा गृणन्तः तं वैश्वानरम् अग्निं स्तुवन्तो वयम्। गॄ शब्दे। प्वादित्वात् ह्रस्वः। सधमादेषु। सह माद्यन्ति हृष्यन्ति एषु इति सधमादाः संग्रामाः। अधिकरणे घञ्। 'सध मादस्थयोश्छन्दसि' (पा ६,३,९६) इति सहस्य सधादेशः। तेषु सधमादेषु रयीणाम् धनानां पतयः स्याम वैश्वानरप्रसादात् स्वामिनो भवेम।

वैश्वानरीं वर्चस आ[1] रभध्वं शुद्धा भवन्तः शुचयः पावकाः[2]।
इहेडया सधमादं मदन्तो ज्योक् पश्येम सूर्यमुच्चरन्तम् ॥ ३ ॥

वैश्वानरीम्। वर्चसे। आ। रभध्वम्। शुद्धाः। भवन्तः। शुचयः। पावकाः।
इह। इडया। सधऽमादम्। मदन्तः। ज्योक्। पश्येम। सूर्यम्। उत्ऽचरन्तम् ॥ ३ ॥

वैश्वानरीम् वैश्वानराग्निसंबन्धिनीं स्तुतिरूपां वाचम् हे जनाः आ रभध्वम्। किमर्थम्। वर्चसे तेजसे। ब्रह्मवर्चसादितेजःप्राप्तय इत्यर्थः। ततो वैश्वानराग्निप्रसादाद् वयं शुद्धा भवन्तः निष्कल्मषाः सन्तः शुचयः ब्रह्मवर्चसेन दीप्यमानाः कर्मार्हाः पावकाः अन्यस्यापि शुद्धिहेतवः। इळया[3]। अन्ननामैतत्। अन्नेन सधमादं मदन्तः परस्परसाहित्येन मदन्तः माद्यन्तः इह अस्मिन् भूलोके अवस्थाय उच्चरन्तम् उद्गच्छन्तं सूर्यं ज्योक् चिरकालं पश्येम। दीर्घायुषो भवेमेत्यर्थः। अत्र सधमादम् इति णमुलन्तः। तस्यैव धातोरनुप्रयोगश्च।

यत्[4] ते देवी निर्ऋतिराबबन्ध दाम[5] ग्रीवास्वविमोक्यं[6] यत्।
तत्[7] ते वि ष्याम्यायुषे[8] वर्चसे बलायादोमदमन्नमद्धि[9] प्रसूतः[10] ॥ १ ॥

यत्। ते। देवी। निःऽऋतिः। आऽबबन्ध। दाम। ग्रीवासु। अविऽमोक्यम्। यत्।
तत्। ते। वि। स्यामि। आयुषे। वर्चसे। बलाय। अदोमदम्। अन्नम्। अद्धि। प्रऽसूतः ॥ १ ॥

देवी द्योतमाना निर्ऋतिः अनिष्टकारिणी देवता हे पुरुष ते तव यद् दाम सर्वेषु अङ्गेषु आबबन्ध पापरूपं पाशम् आबद्धवती तथा ग्रीवासु कण्ठगतासु धमनीषु अविमोक्यम् विमोक्तुं विस्रष्टुम् अशक्यं यद् दाम आबद्धम् ते तव

---

१. वैश्वानर्यं वर्चसा पै १९,३०,७ [मूको.]. २. यस्या आशास्तन्वो वीतपृष्ठाः पै.
३. वैतु. मंत्रा. द्र. ४. यं मा १२,६५ मै २,७,१२. ५. पाशं मा. मै. काठ. १६,१२.
६. °मोक्यंम् P; °विचृत्यम् मा. पै १९,११,४; °विचृत्यंम् तै ४,२,५,३ मै. काठ. ७. तं मा. मै.; इदं तै. ८. °ष्यायुषो मा. तै. मै. काठ ९. न (नु मै. काठ.) मध्याद ('ध्येऽ मै.) धृतं (थो जीवः तै. मै. धा विपितः काठ. क २५,३.) पितुमद्धि मा. तै. मै. काठ; °लायानमीवं पितुमद्धि पै. १०. प्रमुक्तः तै. मै. काठ.

सर्वस्मात् शरीरात् तत् तादृशं दाम पापरूपं निर्ऋतिपाशं वि ष्यामि विमुञ्चामि। षो अन्तकर्मणि। अत्र उपसर्गवशाद् विमोचनमर्थः। 'स्यतिरुपसृष्टो विमोचने' (नि १,१७) इति हि यास्कः। 'ओतः श्यनि' (पा ७,३,७१) इति ओकारलोपः। किमर्थम्। आयुषे चिरकालजीवनाय वर्चसे तेजसे बलाय च। एवं निर्ऋतिपाशाद् विमुक्तः प्रसूतः असाभिरनुज्ञातः सन् अदः विप्रकृष्टकालव्यापि मदम् मदकरं अन्नम् अद्धि भुङ्क्ष्व। अद भक्षणे। 'हुझल्भ्यो हेर्धिः' (पा ६,४,१०१)।

नमो॑ऽस्तु ते निर्ऋते तिग्मतेजोऽयस्मयान्[३] वि चृ॑ता[४] बन्धपाशान्[५]।
यमो मह्यं पुनरित् त्वां ददाति[६] तस्मै यमाय नमो॑ अस्तु मृत्यवे ॥ २ ॥

नमः। अस्तु। ते। निःऽऋते। तिग्मऽतेजः। अयस्मयान्। वि। चृत। बन्धऽपाशान्। यमः। मह्यम्। पुनः। इत्। त्वाम्। ददाति। तस्मै। यमाय। नमः। अस्तु। मृत्यवे॥ २ ॥

हे तिग्मतेजः तीक्ष्णदीप्ते निर्ऋते अनिष्टकारिणि देवते ते तुभ्यं नमोऽस्तु असाभिः कृतो नमस्कारो भवतु। तेन प्रीता त्वम् अयस्मयान् अयोमयान् अतिदृढान् बन्धपाशान् बन्धनरज्जुविशेषान् वि चृत विमुञ्च। चृती हिंसाग्रन्थनयोः। तुदादित्वात् शः। हे साधक पुरुष त्वा निर्ऋतिपाशविमोके सति मह्यं यमः पुनः इत् एव ददाति। निर्ऋतिपाशेन पूर्वं मृतप्रायोऽभूः इदानीं तद्विमोकेन लब्धजीवनत्वाद् यम एव त्वां पुनर्दत्तवान् इत्यर्थः। तस्मै यमाय मृत्यवे प्राणापहारिणे नमोऽस्तु।

अयस्मये द्रुपदे बेधिष[७] इहाभिहितो[८] मृत्युभिर्ये सहस्रम्।
यमेन त्वं पितृभिः[९] संविदान उत्तमं नाकमधि[१०] रोहयेमम्[११] ॥ ३ ॥

अयस्मये। द्रुऽपदे। बेधिषे। इह। अभिऽहितः। मृत्युऽभिः। ये। सहस्रम्। यमेन। त्वम्। पितृऽभिः। सम्ऽविदानः। उत्ऽतमम्। नाकम्। अधि। रोहय। इमम्॥ ३ ॥

अयस्मये अयोविकारे शृङ्खलादौ द्रुपदे दारुनिर्मिते पादबन्धने हे निर्ऋते त्वं यदा बेधिषे पुरुषं यदा बध्नासि तदा इह अस्मिन् लोके स पुरुषः मृत्युभिः मृत्युपाशैः अभिहितः बद्धो भवति। अभिपूर्वो दधातिर्बन्धने वर्तते। मृत्यवो

---

१. पैप्पु मंत्रा. द्र. २. नमः सु ते मा १२,६३ तै ४,२,५,३ मै २,७,१२ काठ १६,१२. ३. तिग्मतेजोऽयस्मयं तै ४,२,५,२ विदधामि[?] मय॰ पै १९,११,५. † ॰स्मयं मा. मै. ४. वि चृता A,S^m,p^m; वि सृता काठ.; प्रमुमुग्धि पै. ५. बन्धमेतम् मा. तै. मै.; पाशान् पै. ६. ददानु तस्मै देवाय हविषा विधेम पै १९,११,२. ७. इदमि॰ पै. ८. यम्या मा. तै. मै. ९. संविदानोत्तमे मा. मै. पै १९,११,५ [सुको.]; ॰दान उत्तमे पै.; ॰दानोत्त॰ तै. १०. नाके अधि मा. मै. पै. ११. रोहयेमम् मा. मै. पै.

विशेष्यन्ते—ये 'प्रसिद्धाः ज्वरादिरोगाः[1] रक्षःपिशाचादयश्च[2] सहस्रम् सहस्रसंख्याका मरणहेतुभूताः सन्ति । तैर्मृत्युभिरिति संबन्धः । हे निर्ऋते त्वं यमेन त्वदधिष्ठात्रा पितृभिः पितृदेवताभिश्च संविदाना[3] ऐकमत्यं गता उत्तमम् उत्कृष्टतमं नाकम् दुःखसंस्पर्शशून्यं सुखम् इमं पुरुषम् अधि रोहय प्रापय । संविदान इति । सपूर्वाद् विदेः 'समो गमादिषु विदिप्रच्छि॰' (पावा १,३,२९) इति आत्मनेपदम् ।

संसमिद् युवसे वृषन्नग्ने विश्वान्यर्य आ ।
इडस्पदे[4] समिध्यसे स नो वसून्या भर ॥ ४ ॥

सम्ऽसम् । इत् । युवसे । वृषन् । अग्ने । विश्वानि । अर्यः । आ ।
इडः । पदे । सम् । इध्यसे । सः । नः । वसूनि । आ । भर ॥ ४ ॥

हे वृषन् कामानां वर्षितः अग्ने अर्यः स्वामी त्वम् आ समन्ताद् विश्वानि सर्वाणि धनानि संसम् इद् युवसे संयुवस एव सर्वथा सम्यक् प्रापयसि । 'प्रसमुपोदः पादपूरणे' (पा ८,१,६) इति समो द्विर्वचनम् । यु मिश्रणे इति धातुः । 'अर्यः स्वामिवैश्ययोः' (पा ३,१,१०३) इति निपातितः अर्यशब्दः । 'अर्यस्य[5] स्वाम्याख्या चेत्' (फि १,१७) इति अन्तोदात्तत्वम् । स त्वम् इडस्पदे इलाया भूम्याः पदं स्थानं उत्तरवेदिलक्षणम् 'एतद् वा इळायास्पदं यद् उत्तरवेदीनाभिः' (ऐब्रा १,२८) इति ऐतरेयकम् । तत्र समिध्यसे संदीप्यसे । 'आतो धातोः' (पा ६,४,१४०) इत्यत्र आत इति योगविभागाद् इडाशब्दस्य आल्लोपः । 'इडाया वा' (पा ८,३,५४) इति विसर्जनीयस्य सत्वम् । स तादृशस्त्वम् नः अस्मभ्यं वसूनि धनानि आ भर आहर प्रयच्छ ।

इति सप्तमेऽनुवाके प्रथमं सूक्तम् ।

'सं जानीध्वम्' इति तृचेन सांमनस्यकर्मणि उदकुम्भं सुराकुम्भं वा संपात्य अभिमन्त्र्य सूत्रोक्तप्रकारेण ग्राममध्ये निनयेत् ।

तथा तत्रैव कर्मणि त्रिवर्षदेशीयाया वत्सतर्या मांसविशेषम् अनेन तृचेन संपात्य अभिमन्त्र्य आशयेत् ।

तथा भक्तम् अनेन संपात्य अभिमन्त्र्य प्राशयेत् ।

तथा सुरां प्रपोदकं वा अनेन संपात्य अभिमन्त्र्य पाययेत् ।

सूत्रितं हि—'सहृदयम्' (अ ३,३०), 'तद् इ' (अ ५,१,५), 'सं जानीध्वम्' 'एह यातु' (अ ६,७३), 'सं वः पृच्यन्ताम्' (अ ६,७४) इति प्रक्रम्य

---

१. 'द्वा अध्यात्मादिषु ज्व' S'. २. च नास्ति S'. ३. वैतु. मंपा. द्र.
४. इळस्पदे ऋ १०,१९१,१. ५. अर्यः S'.

'उदकुलिजं संपातवन्तं ग्रामं परिहृत्य मध्ये निनयति । एवं सुराकुलिजम् त्रिहायण्या वत्सतर्याः[1] शुक्तानि[2] पिशितानि आशयति' ( कौसू १२,५-८ ) इत्यादि ।

'अव मन्युः' इति तृचेन संग्रामजयकर्माणि कुर्यात् । तानि च आज्यहोमः सक्तुहोमः धनुरिध्मेऽग्नौ धनुःसमिदाधानम् शरेध्मेऽग्नौ शरसमिदाधानम् संपातिताभिमन्त्रितधनुःप्रदानं च प्रत्येतव्यानि । एतेषु कर्मसु अनुष्ठितेषु संग्रामे दृष्टमात्रेण शत्रवः पलायन्ते । तद् उक्तं संहिताविधौ — 'अदारसृत्' ( अ १,२० ), 'स्वस्तिदा.' ( अ १,२१ ), 'अव मन्यु.' ( अ ६,६५ ) इति प्रक्रम्य 'आज्यसक्तून् जुहोति' ( कौसू १४,७;८ ) इत्यादि ।

तथा अस्य तृचस्य अपराजितगणे पाठाद् [3]'अभयैरपराजितैर्गणकर्मभिर्विश्वकर्मभिरायुर्ध्यैः स्वस्त्ययनैराज्यं[3] जुहुयात्' ( कौसू १३९,७ ) इत्यादिषु गणप्रयुक्तो विनियोग उन्नेयः ।

[4]सं जा॑नीध्वं॒ सं पृ॑च्यध्वं॒[5] सं वो॒ मनां॑सि जानताम् ।
दे॒वा भा॒गं य॑था॒ पूर्वे॑ संजाना॒ना उ॒पास॑ते[6] ॥ १ ॥

सम् । जा॒नी॒ध्व॒म् । सम् । पृ॒च्य॒ध्व॒म् । सम् । वः॒ । मनां॑सि । जा॒न॒ता॒म् ।
दे॒वाः । भा॒गम् । यथा॑ । पूर्वे॑ । स॒म्ऽजा॒ना॒नाः । उ॒प॒ऽआस॑ते ॥ १ ॥

हे सांमनस्यकामा जनाः यूयं सं जानीध्वम् समानज्ञानयुक्ता भवत । ज्ञानस्य सर्वव्यवहारमूलत्वात् तद्विगानाभावः प्रथमं प्रार्थ्यते । ज्ञा अवबोधने । 'संप्रतिभ्यामनाध्याने' ( पा १,३,४६ ) इति आत्मनेपदम् । 'ज्ञाजनोर्जा' ( पा ७,३,७९ ) इति जा आदेशः । एवं समानज्ञानाः सन्तस्ततः सं पृच्यध्वम् संपृक्ताः संसृष्टकार्या भवत । पृची संपर्के । समानज्ञानत्वसिद्धये तत्करणस्यापि एकविषयतां प्रार्थयते । वः युष्माकं मनांसि ज्ञानोत्पत्तिनिमित्तानि अन्तःकरणानि सं जानताम् समानम् एकविधम् अर्थं जानन्तु[1] । परस्परविरुद्धज्ञानजनकानि मा भूवन्नित्यर्थः । उक्तमर्थं दृष्टान्तेन द्रढयति — देवा भागम् इति । यथा खलु पुरा देवाः इन्द्रादयः संजानानाः समानकार्यज्ञानाः सन्तः पूर्वे असुरेभ्यः पूर्वभाविनः भागम् यजमानैः परिकल्पितं हविर्भागम् उपासते प्राप्नुवन्ति । अतो यूयमपि तद्वत् परस्परविद्वेषपरिहारेण संजानाना इष्टफलं भजतेति भावः । तथ देवानां सांमनस्यं तैत्तिरीयके 'देवासुराः संयत्ता आसन् । ते देवा मिथो विप्रिया आसन्' ( तै ६,२,२,१ ) इत्यादिप्रतिपादितास्याख्यायिकया अवगन्तव्यम् ।

---

1. °तर्याः S'. 2. शुक्तानि Bl. 3. वेतु. सपा. °राजितैराज्यं. 4. सं गच्छध्वं सं वदध्वं ऋ १०,१९१,२ तेब्रा २,४,४,४; सं गच्छध्वं सं जानीध्वं मै १,२,६. 5. उपासते मैब्रा २,४,४,५. 6. जानन्तु S'.

सुमानो मन्त्रः समितिः समानी समानं व्रतं सह चित्तमेषाम्[1] ।
समानेन[2] वो हविषा जुहोमि समानं चेतो अभिसंविशध्वम्[3] ॥ २ ॥

सुमानः । मन्त्रः । सम्ऽइतिः । सुमानी । सुमानम् । व्रतम् । सुह । चित्तम् । एषाम् ।
सुमानेन । वः । हुविषा । जुहोमि । सुमानम् । चेतः । अभिऽसंविशध्वम् ॥ २ ॥

मन्त्रः गुप्तभाषणं कार्याकार्यपर्यालोचनात्मकम् तदपि समानः एकरूपो भवतु । मत्रि गुप्तभाषणे । अस्माद् भावे घञ् । 'ञ्नित्यादिर्नित्यम्' ( पा ६,१,१९७ ) इति आद्युदात्तः । तथा समितिः संगतिः कार्येषु प्रवृत्तिः । सापि समानी एकरूपा भवतु । 'केवलमामकभागधेयपापापरसमानार्य°' ( पा ४,१,३० ) इति ङीप् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । तथा व्रतम् । कर्मनामैतत् । कर्मापि समानम् एकरूपं भवतु । चित्तम् अन्तःकरणम् तदपि एषां सह एकविधं भवतु । उक्तस्य फलस्य सिद्ध्यै समानेन साधारणेन ऐक्यजनकेन वः युष्माकं संबन्धिना हविषा आज्यादिना जुहोमि । आज्यम् अग्नौ मन्त्रेण प्रक्षिपामीत्यर्थः । 'तृतीया च होश्छन्दसि' ( पा २,३,३ ) इति कर्मणि तृतीया । यस्माद् एवं तस्मात् समानम् एकरूपं चेतः चित्तम् अभिसंविशध्वम् आभिमुख्येन संप्राप्नुत ।

'सुमानी व आकूतिः[4] सुमाना हृदयानि वः ।
सुमानमस्तु वो मनो यथा वः सुसहासति ॥ ३ ॥

सुमानी । वः । आऽकूतिः । सुमाना । हृदयानि । वः ।
सुमानम् । अस्तु । वः । मनः । यथा । वः । सुऽसह । असति ॥ ३ ॥

हे सांमनस्यकामाः वः युष्माकम् आकूतिः संकल्पः समानी एकरूपा भवतु । तथा वः युष्मदीयानि हृदयानि संकल्पजनकानि हृत्पुण्डरीकमध्यवर्तीनि अन्तःकरणानि समाना समानानि एकरूपाणि भवन्तु । 'शेश्छन्दसि बहुलम्' ( पा ६,१,७० ) इति शेर्लोपः । तथा वः युष्माकं मनः एतत्संज्ञकं सुखाद्यापरोक्ष्यजनकम्[9] इन्द्रियं समानम् एकरूपम् अस्तु । यथा येन प्रकारेण वः युष्माकं सर्वं कार्यं सु[10] सुष्ठु सह[10] असति भवति तथा सांमनस्यं करोमीत्यर्थः । 'बहुलं छन्दसि' ( पा २,४,७३ ) इति अस्तेः परस्य शपो लुगभावः ।

---

१. मनः ऋ १०,१९१,३ तैत्रा २,४,४,५ पै १,५३,५; चित्तं पै १९,७,३. २. वा मनांसि पै. ३. समानम् पै १९,७,४; संज्ञानेन तैत्रा. ४. एषां पै. ५. यजामः तैत्रा. ६. मन्त्रम् ऋ. पै १,५३,५; केतो तैत्रा.; क्रतुम् मं २,२,६. ७. अभिसंविशध्वं ऋ. पै १,५३,७; अभि संरभध्वम् तैत्रा.; अभिमन्त्रयध्वम् मं. ८. समाना वा (व काठ.) आकूतानि मं. काठ १०,१२ ९. सुख्याद्यापरो° S'. १०. वैतु. मंत्रा. द्र.

अवं मन्युरवायतावं बाहू मनोयुजा ।
पराशर त्वं तेषां पराञ्चं 'शुष्मंमर्दयाधा' नो रयिमा कृधि ॥ १ ॥

अवं । मन्युः । अवं । आऽयंता । अवं । बाहू इतिं । मनःऽयुजां । पराऽशर ।
त्वम् । तेषाम् । पराञ्चम् । शुष्मंम् । अर्दय । अधं । नः । रयिम् । आ । कृधि ॥ १ ॥

शत्रुसंबन्धी मन्युः क्रोधः । 'अव मन्युं तनोमि ते' ( अ ६,४२,२ ) इति अन्यत्राम्नानात् तत इति संबध्यते । अवततः[2] शत्रुपातितस्तिरस्कृतो विनष्टो भवतु । तथा आयता आयतानि आयम्यमानानि धनुःप्रभृतीनि आयुधानि अवततानि[3] स्वस्वकार्यासमर्थानि भवन्तु । आङ्पूर्वाद् यमेः कर्मणि निष्ठा । 'अनुदात्तोपदेश°' ( पा ६,४,३७ ) इति अनुनासिकलोपः । 'शेश्छन्दसि बहुलम्' ( पा ६,१,७० ) इति शेर्लोपः । तथा बाहू शत्रुसंबन्धिनौ मनोयुजा मनोयुजौ मनःसहितौ अव अवाचीनौ आयुधोद्यमनाशकौ । भवताम् इत्यर्थः । हे पराशर परागत्य शृणाति[4] हिनस्ति शत्रून् इति पराशर इन्द्रः । 'इन्द्रो बोध पराशरान्' ( अ ६,६६,२ ) इत्यत्र समाम्नानात् । [5][''इन्द्रोऽपि पराशर उच्यते । पराशातयिता यातूनाम् 'इन्द्रो यातूनामभवत् ] परा शरः' (ऋ ७,१०४,२१) इत्यपि निगमो भवति'' (नि ६,३०) इति यास्कवचनाच्च । शॄ हिंसायाम् । अस्मात् पचाद्यच् । हे तादृश इन्द्र । त्वं तेषां शत्रूणां शुष्मम् । बलनामैतत् । शोषकं बलं पराञ्चम् पराङ्मुखम् अस्मदनभिमुखं यथा भवति तथा अर्दय बाधस्व । अर्द हिंसायाम् । अध[5] अनन्तरं रयिम् धनं शत्रूणां स्वभूतं नः अस्माकम् आ कृधि आभिमुख्येन कुरु । प्रयच्छेत्यर्थः । करोतेरुत्तरस्य विकरणस्य 'बहुलं छन्दसि' ( पा २,४,७३ ) इति लुक् । 'श्रुशृणुपृकृवृभ्यः°' ( पा ६,४,१०२ ) इति हेर्धिरादेशः ।

निर्हस्तेभ्यो नैर्हस्तं यं देवाः शरुमस्यथ ।
वृश्चामि शत्रूणां बाहूननेन हविषाऽहम् ॥ २ ॥

निःऽहस्तेभ्यः । नैःऽहस्तम् । यम् । देवाः । शरुम् । अस्यथ ।
वृश्चामि । शत्रूणाम् । बाहून् । अनेन । हविषा । अहम् ॥ २ ॥

हे देवाः निर्हस्तेभ्यः निर्गता हस्ता येभ्यस्ते निर्हस्ताः । निर्गतहस्तसामर्थ्या इत्यर्थः । तादर्थ्ये चतुर्थी । असुराणां निर्हस्तत्वप्राप्तय इत्यर्थः । नैर्हस्तम् निर्हस्तत्वप्रापकं यं शरुम् हिंसकं बाणाद्यायुधम् अस्यथ क्षिपथ । शॄ हिंसायाम् । 'शॄस्वृस्निहि' (पाउ १,१० ) इत्यादिना उप्रत्ययः । अनेन शरादिरूपेण हविषा हूयमानेन देवसंबन्धिनैव आयुधेन शत्रूणां बाहून् आयुधग्रहणार्थान् अहं वृश्चामि छिनद्मि । ओव्रश्चू छेदने । 'ग्रहिज्या' ( पा ६,१,१६ ) इत्यादिना संप्रसारणम् ।

---

1. 'मर्दयाशंध' वै १९,११,९.. S. 2. अवतः S'. 3. अवमतानि S'. 4. शृणोति S. 5. कंसु. मेरा. इ.

इन्द्रश्चकार प्रथमं[1] नैर्हस्तमसुरेभ्यः ।
जयन्तु सत्वानो मम स्थिरेणेन्द्रेण मेदिना ॥ ३ ॥

इन्द्रः । चकार । प्रथमम् । नैःऽहस्तम्[2] । असुरेभ्यः ।
जयन्तु । सत्वानः । मम । स्थिरेण । इन्द्रेण । मेदिना ॥ ३ ॥

इन्द्रः देवानाम् अधिपतिः प्रथमम् पूर्वम् असुरेभ्यः शत्रुभ्यो नैर्हस्तम् निर्हस्तत्वं हस्तसामर्थ्यवैकल्यं चकार कृतवान् । तादृशेन इन्द्रेण स्थिरेण युद्धकर्मणि दृढेन मेदिना स्निग्धेन सहायभूतेन मम मदीयाः सत्वानः सादयन्ति विशरणं प्रापयन्तीति [3]योद्धृजनाः सत्वानः । सदेरन्तर्भावितण्यर्थात् कनिप्[3] । जयन्तु शत्रून् पराजितान् कुर्वन्तु । मेदिनेति । ञिमिदा स्नेहने 'शमित्यष्टाभ्यः'' ( पा ३,२,१४१ ) इति घिनुणप्रत्ययः अस्मादपि द्रष्टव्यः । यद्वा 'नन्दिग्रहिपचादिभ्यः'' ( पा ३,१,१३४ ) इति ग्रह्यादेराकृतिगणत्वात् णिनिः ।

इति सप्तमेऽनुवाके द्वितीयं सूक्तम् ।

'निर्हस्तः' इति तृचस्य 'अव मन्युः' ( अ ६,६५ ) इति तृचवत् संग्रामजयकर्मणि विनियोगो द्रष्टव्यः । सूत्रं च तत्रैवोदाहृतम् ।

'परि वर्त्मानि' इति तृचस्य 'निर्हस्तः' इति तृचवत् संग्रामजयकर्मणि विनियोगो द्रष्टव्यः ।

तथा अनेन तृचेन परसेनाया विद्वेषणत्रासनकामो राजा सेनां त्रिः परिगच्छेत् ।

तथा तत्रैव कर्मणि अनेन तृचेन संपातिताभिमन्त्रितसोममणिं चर्मवेष्टितं कृत्वा राज्ञे बध्नीयात् । सूत्रितं हि — '' 'परि वर्त्मानि' ( अ ६,६७ ), 'इन्द्रो जयाति' ( अ ६,९८ ) इति राजा त्रिः सेनां परियाति । उक्तः पूर्वस्य सोमांशुः ( कौसू १६,४;५ ) इति ।

अनयोस्तृचयोः अपराजितगणे पाठाद् ''अभयैरपराजितैर्गणकर्मभिर्विश्वकर्मभिरायुष्यैः स्वस्त्ययनैराज्यं[4] जुहुयात्' ( कौसू १३९,७ ) इत्यादिषु गणप्रयुक्तो विनियोगोऽनुसंधेयः ।

निर्हस्तः शत्रुरभिदासन्नस्तु ये सेनाभिर्युधमायन्त्यस्मान् ।
समर्पयेन्द्र[5] महता वधेन द्रात्वेषामघहारो विविद्धः[6] ॥ १ ॥

---

१. प्रथमो पं १९,११,९.  २. नैःऽर्हस्तम् P.  ३. योद्‌धृ इत्यादि कनिप् इत्यन्तम् उत्तरसूक्तावतरणिकायाम्, नेह S'.  ४. वैतु. संपा. °जितैराज्यं.  ५. समर्प° B.  ६. विविधः A.

निःऽहस्तः । शत्रुः । अभिऽदासन् । अस्तु । ये । सेनाभिः । युधम् । आऽयन्ति । अस्मान् ।
सम् । अर्पय । इन्द्र । महता । वधेन । द्रातु । एषाम्[1] । अघऽहारः । विऽविद्धः ॥ १ ॥

अभिदासन् उपक्षपयन् अस्माकं पीडां कुर्वन् शत्रुः निर्हस्तोऽस्तु निर्गतहस्तसामर्थ्यो भवतु । शत्रुरिति जात्येकवचनम् । ये शत्रवः सेनाभिः स्वकीयाभिः युधम् योद्धुम् अस्मान् आयन्ति अभिगच्छन्ति । हे इन्द्र तान् शत्रून् महता प्रौढेन वधेन हननसाधनेन आयुधेन वज्रेण समर्पय संयोजय । एषां शत्रूणां मध्ये यः शूरो भटः अघहारः अघस्य मरणलक्षणस्य दुःखस्य प्रापयिता असौ विविद्धः विशेषेण ताडितः सन् द्रातु कुत्सितां गतिं प्राप्नोतु । द्रा कुत्सितायां गतौ । अघहार इति । अघशब्दोपपदात् हरतेर्ण्यन्तात् 'कर्मण्यण्' (पा ३,२,१) इति अण्प्रत्ययः। विविद्ध इति । व्यध ताडने । 'ग्रहिज्या' (पा ६,१,१६) इत्यादिना संप्रसारणम् ।

आतन्वाना[2] आयच्छन्तोऽस्यन्तो ये च धावथ ।
निर्हस्ताः शत्रवः स्थनेन्द्रो[3] वोऽद्य पराशरीत्[4] ॥ २ ॥

आऽतन्वानाः । आऽयच्छन्तः । अस्यन्तः । ये । च । धावथ ।
निःऽहस्ताः । शत्रवः । स्थन[5] । इन्द्रः । वः । अद्य । परा । अशरीत् ॥ २ ॥

आतन्वानाः धनूंषि आततज्यानि कुर्वाणाः आयच्छन्तः शरसंधानेन धनूंषि आकर्षन्तः अस्यन्तः शरान् क्षिपन्तः धनुःसकाशाद् नुदन्तो हे[6] शत्रवः ये च यूयं धावथ अस्मदभिमुखं शीघ्रं गच्छथ । 'पाघ्रा' (पा ७,३,७८) इत्यादिना 'सर्तेर्वेगितायां गतौ' (काशि ७,३,७८) इति धावादेशः । ते यूयं शत्रवः निर्हस्ताः निर्वीर्यहस्ताः स्तन[7] भवत । अस्तेर्लोटि 'तप्तनप्तनथनाश्च' (पा ७,१,४५) इति तस्य तनादेशः । अद्य इदानीं वः युष्मान् इन्द्रः पराशरीत् पराहतान् अकार्षीत् । शॄ हिंसायाम् । लुङि रूपम् ।

निर्हस्ताः सन्तु[8] शत्रवोऽङ्गैषां म्लापयामसि ।
अथैषामिन्द्र वेदांसि शतशो[9] वि भजामहै ॥ ३ ॥

निःऽहस्ताः । सन्तु । शत्रवः[10] । अङ्गा । एषाम् । म्लापयामसि ।
अथ । एषाम् । इन्द्र । वेदांसि । शतऽशः । वि । भजामहै ॥ ३ ॥

---

१. एषाम् P. २. आय° Km. ३. °श्रव स्थ° Bh,D,Sm,Cs. ४. °शरीन् B; °शरेन् Bp[1],E,R[1],I,T,O,Rw. ५. स्थनं P ६. तु. S'; वैतु. सपा. ये. ७. सतु. संपा. स्त. ८. सन्तु A,B,D,K,Km,R,Sm,J,VCs. ९. यूयतो पै १९,११,१३. १०. शत्रवः > शत्रवः Cp.

अस्मदीयाः शत्रवः निर्हस्ताः सन्तु भवन्तु । एषां शत्रूणाम् अङ्गा अङ्गानि हस्तपाद्याद्यवयवान् म्लापयामसि म्लापयामः क्षीणहर्षान् कुर्मः । म्लै म्लै हर्षक्षये । णौ आत्वे 'अर्तिह्री' (पा ७,३,३६) इत्यादिना पुगागमः । 'इदन्तो मसि (पा ७,१,४६)। अथ अनन्तरम् हे इन्द्र त्वत्प्रसादाद् एषां शत्रूणां वेदांसि । धननामैतत् । धनानि शतशः बहुधा वि भजामहै विभज्य प्राप्नुयाम ।

परि॑ वर्त्मा॑नि स॒र्वत॑ इन्द्रः॑ पू॒षा च॑ सस्रतुः॑ ।
मुह्य॑न्त्व॒द्याऽमूः सेना॑ अ॒मित्रा॑णां परस्त॒राम् ॥ १ ॥

परि॑ । वर्त्मा॑नि । स॒र्वतः॑ । इन्द्रः॑ । पू॒षा । च॒ । स॒स्र॒तुः॒ ।
मु॒ह्य॑न्तु । अ॒द्य । अ॒मूः । सेनाः॑ । अ॒मित्रा॑णाम् । प॒रः॒ऽत॒राम् ॥ १ ॥

इन्द्रः पूषा च इमौ देवौ सर्वतः सर्वासु दिक्षु वर्त्मानि संचरणमार्गान् परि सस्रतुः परितो निरुध्य गच्छताम् । सृ गतौ । अस्मात् छान्दसो लिट् । 'असंयोगाल्लिट् कित्' (पा १,२,५) इति किद्वद्भावाद् गुणाभावे यण् । अद्य इदानीम् अमूः दूरे दृश्यमाना अमित्राणाम् शत्रूणां सेनाः रथतुरगपदातयः परस्तराम् अतिशयेन मुह्यन्तु । व्यामूढचित्ताः कार्याकार्यज्ञानशून्या भवन्तु । परःशब्दाद् अतिशयार्थवाचिनः पुनः प्रकर्षविवक्षायां तरपि 'किमेत्तिङव्ययघात्°' (पा ५,४,११) इति आमुप्रत्ययः ।

मूढा॑[4] अ॒मित्रा॑श्चरता॒शीर्षाण॑[5] इ॒वाह॑यः ।
तेषां॑ वो अ॒ग्निमू॑ढाना॒मिन्द्रो॑[6] हन्तु॒ वरं॑वरम् ॥ २ ॥

मू॒ढाः । अ॒मित्राः॑ । च॒र॒त॒ । अ॒शी॒र्षाणः॑ऽइव । अह॑यः ।
तेषा॑म् । वः॒ । अ॒ग्निऽमू॑ढानाम् । इन्द्रः॑ । ह॒न्तु॒ । वर॑म्ऽवरम् ॥ २ ॥

हे [7]अमित्राः शत्रवः मूढाः जयोपायज्ञानशून्याः चरत युद्धभूमौ संचरत । तत्र दृष्टान्तः— अशीर्षाण इवाहयः । अशिरस्काश्छिन्नशिरसः सर्पाः केवलं चेष्टन्त एव न तु किंचित् कार्यं कर्तुं शक्नुवन्ति तथा भवतेत्यर्थः । तेषां तादृशानाम् अग्निमूढानाम् अस्मदाहुतिवृद्धेन अग्निना व्यामोहं प्रापितानां वः युष्माकं मध्ये वरंवरम् श्रेष्ठंश्रेष्ठं नायकम् इन्द्रो देवो हन्तु मारयतु ।

---

१. पृषाम् खि ५,२,२ पै १९,६,१३. २. तु पै. ३. चस्रतुः खि. ४. मुग्धा पै १९,६,१४; अन्धा कौ २,१२२१ खि ३,२१,२. ५. अमित्राश्च° सात°; अमित्रा भवताशी° कौ. खि. ६. अथैषाममिरुद्धानामि° पै.; °°मिर्नुन्नानामि° कौ.; °मिदग्धानामि° खि.; °मिगूढानामि° खि ५,२,२. ७. वैतु. मंपा. द.

ऐषु॑ नह्य॒ वृषा॒जिनं॑[1] हरि॒णस्या॑[2] [3]भियं॑ कृधि[4] ।
[5]परा॑ङ॒मित्र॒ एष॑त्व॒र्वाची॑[6] गौ॑रुपै॑षतु[7] ॥ ३ ॥

आ । ए॒षु॒ । न॒ह्य॒ । वृषा॑ । अ॒जिन॑म् । ह॒रि॒णस्य॑ । भिय॑म् । कृ॒धि॒ ।
परा॑ङ् । अ॒मित्रः॑ । एष॑तु । अ॒र्वाची॑ । गौः । उप॑ । ए॒ष॒तु॒ ॥ ३ ॥

हे इन्द्र वृषा कामानां वर्षिता त्वं हरिणस्य कृष्णमृगस्य अजिनम् त्वचं सोममणिवेष्टनम् एषु अस्मदीयेषु भटेषु आनह्य आबद्धं कुरु । ततः शत्रूणां भियम् भीतिं कृधि कुरु उत्पादय । अमित्रः शत्रुः पराङ् युद्धपराङ्मुखः सन् एषतु गच्छतु । पलायताम् इत्यर्थः । इष गतौ । ततः शत्रुसंबन्धिनी गौः अर्वाची अस्मदभिमुखा उपैषतु[1] उपगच्छतु । शत्रुसंबन्धिगवादिधनम् अस्मान् प्राप्नोत्वित्यर्थः ।

इति सप्तमेऽनुवाके तृतीयं सूक्तम् ।

'आयमगन्त्सविता क्षुरेण' ( अ ६,६८ ) इति तृचेन गोदानचूडाकरणयोः क्षौरार्थोदकुम्भाभिमन्त्रणं कुर्यात् । अत्र 'अदितिः श्मश्रु' (२) इति ऋचा क्षौरार्थम् अभिमन्त्रितोदकेन माणवकस्य शिरः क्लेदयेत् । 'येनावपत्' (३) इत्यृचा वपनं कुर्यात् । तद् उक्तं संहिताविधौ — 'गोदानम्' प्रक्रम्य "'आयमगन्त्सविता क्षुरेण (१)' इत्युदपात्रम् अनुमन्त्रयते । 'अदितिः श्मश्रु (२)' इत्युनत्ति" ( कौसू ५३,१;१७;१८ ) इत्यादि ।

तथा उपनयनकर्मणि अस्यैव तृचस्य क्षौरार्थोदकाभिमन्त्रणे विनियोगः । तत्रैव कर्मणि 'आयमगन्' इति पादेन क्षुरं मार्जयेत् । 'उष्णेन वायो' इति पादेन उदकम् अनुमन्त्रयते । 'आदित्या रुद्राः' इति पादेन माणवकस्य शिरःक्लेदनं कुर्यात् । 'सोमस्य राज्ञः' इति पादेन 'येनावपत्' इत्यृचा च वपनं कुर्यात् । सूत्रितं हि — "उपनयनम् । 'आयमगन्' इति मन्त्रोक्तम् । 'यत् क्षुरेण' ( अ ८,२,१७ ) इत्युक्तम्" ( कौसू ५५,१-३ ) इत्यादि ।

'गिराविरगराटेषु' इति तृचेन मेधाजननकामः सुप्तोत्थितः मुखं प्रक्षालयेत् । "'प्रातरग्निम्' ( अ ३,१६ ), 'गिराविरगराटेषु' ( अ ६,६९ ), 'दिवस्पृथिव्याः' ( अ ९,१ ) इति मेधाय मुखं विमार्ष्टि" ( कौसू १०,२४ ) इति सूत्रात् ।

तथा कुमारीवर्चस्यकर्मणि दधि मधु एकत्र कृत्वा अनेन तृचेन संपात्य अभिमन्त्र्य कुमारीं प्राशयेत् ।

तथा क्षत्रियवर्चस्यकर्मणि दधिमधुमिश्रमोदनमनेन तृचेन संपात्य अभिमन्त्र्य क्षत्रियं प्राशयेत् ।

---

१. विशाद्नं खि ५,२,३. २. °णस्य सि. पं १९,६,१५. ३. धियं यथा खि. ४. °मि॒त्रो वेप॑° सि. ५. °पैजतु सि. ६. उपैषतु S'.

तथा वैश्यशूद्रादिवर्चस्यकर्मणि अनेन तृचेन ओदनं संपात्य अभिमन्त्र्य वर्चस्कामं वैश्यादिं प्राशयेत् ।

सूत्रितं हि — "'प्रातरग्निम्', 'गिरावरगराटेषु', 'दिवस्पृथिव्याः' इति दधि मध्वाशयति । कीलालमिश्रं क्षत्रियं कीलालमितरान्" (कौसू १२,१५;१६) इति ।

तथा क्षत्रियादिवर्चस्यकर्मणि स्नातकसिंहव्याघ्रवस्तवृष्णिवृषभराज्ञां सूत्रोक्तानां सप्तानामन्यतमस्य मर्म स्थालीपाके प्रक्षिप्य अनेन तृचेन संपात्य अभिमन्त्र्य बध्नीयात् ।

तथा तत्रैव कर्मणि अनेन तृचेन जलं संपात्य अभिमन्त्र्य आप्लावयेत् अवसिञ्चेद् वा ।

तद् उक्तं संहिताविधौ — "'प्रातरग्निम्', 'गिरावरगराटेषु', 'दिवस्पृथिव्याः' इति सप्त मर्माणि स्थालीपाके पृक्तान्यश्नाति । अकुशलं यो ब्राह्मणो लोहितमश्नीयाद् इति गार्ग्यः । उक्तो लोममणिः । सर्वैराप्लावयति । अवसिञ्चति" ( कौसू १३,६-१० ) इति ।

तथा उत्सर्जनाख्ये कर्मणि अनेन तृचेन आज्यं हुत्वा रसेषु संपातान् आनयेत् । सूत्रितं हि — 'यशसं मेन्द्रः' ( अ ६,५८ ), 'गिरावरगराटेषु', 'यथा सोमः प्रातःसवने' ( अ ९,१,११ ) ( कौसू १३९,१५ ) इत्यादि ।

तथा अग्निचयने स्वयमातृण्णामासिच्यमानां ब्रह्मा अनेन अनुमन्त्रयेत । "पुनन्तु मा' ( अ ६,१९ ) 'गिरावरगराटेषु', 'यद् गिरिषु', ( अ ९,१,१८ ) इति शतातृण्णामासिच्यमानाम्' ( वैताश्रौ ३०,१३ ) इति वैतानं सूत्रम् ।

स्वर्गौदनब्रह्मौदनयोस्तन्त्रसंनिपाते तण्डुलानामवसेकप्रायश्चित्तार्थं 'मयि वर्चो अथो यशः' ( अ ६,६९,३ ) इति ऋचं ब्रह्मा यजमानं वाचयेत् । सूत्रितं हि — "'स्वर्गब्रह्मौदने तन्त्रसंनिपाते' ब्रह्मौदनमितमुदकमासेचयेद् विभागम् । यावन्तस्तण्डुलाः स्युर्नावसिञ्चेन्न प्रतिषिञ्चेत् । यद्यवसिञ्चेन् 'मयि वर्चो अथो यशः' इति ब्रह्मा यजमानं वाचयति" ( कौसू ६८,४-७ ) इति ।

'आयमगन्त्सविता' क्षुरेणोष्णेन 'वाय उदकेनेहि' ।
आदित्या रुद्रा वसव उन्दन्तु सचेतसः' सोमस्य राज्ञो वपत प्रचेतसः ॥१॥

आ । अयम् । अगन् । सविता । क्षुरेण । उष्णेन । वायो इति । उदकेन । आ । इहि ।
आदित्याः । रुद्राः । वसवः । उन्दन्तु । सऽचेतसः । सोमस्य । राज्ञः । वपत । प्रऽचेतसः ॥

---

१. 'दनौ तन्त्रम् । संनि' Bl. २. 'मगात्स' मंत्रा १,६,१,१ गोगृ २,९,१०. ३. 'वायवुद' पै १९,१७,११; 'केनैधि मंत्रा १,६,१,२ गोगृ २,९,११. ४. सुचेतसः पै. ५. वायो' P.

अयं नभसि दृश्यमानः सविता सर्वस्य प्रेरको देवः क्षुरेण वपनसाधनेन शस्त्रेण सह आगन् आगमत् आगतवान्। गमेर्लुङि 'मन्त्रे घस°' ( पा २,४,८० ) इति च्लेर्लुक्। 'मो नो धातोः' ( पा ८,२,६४ ) इति नत्वम्। हे वायो उन्दनार्थम् उष्णेन उदकेन सह त्वमपि एहि आगच्छ। आदित्याः द्वादशसंख्याकाः एकादश रुद्राः अष्टौ वसवः इत्येते देवगणाः सचेतसः समानज्ञानाः सन्तः तेन उदकेन माणवकस्य शिरः उन्दन्तु आर्द्री कुर्वन्तु। उन्दी क्लेदने। हे परिचारकाः प्रचेतसः प्रकृष्टज्ञानाः सन्तः। यद्वा प्रचेतसः वरुणस्य सोमस्य राज्ञश्च संबन्धिना क्षुरेण वपत क्लिन्नान् केशान् वपनेन वर्जयत।

[1]अदि॑तिः [2]श्मश्रु॑ [3]वप॒त्वाप॑ उन्दन्तु॒ वर्च॑सा[4]।
[5]चिकि॑त्सतु प्र॒जाप॑तिर्दी॒र्घायु॒त्वाय॒ चक्ष॑से[5] ॥ २ ॥

अदि॑तिः। [6]श्मश्रु॑। व॒प॒तु॒। आपः॑। उ॒न्द॒न्तु॒। वर्च॑सा।
चिकि॑त्सतु। प्र॒जाऽप॑तिः। दी॒र्घा॒यु॒ऽत्वाय॑। चक्ष॑से ॥ २ ॥

अदितिः अदीना देवमाता। सा अस्य पुरुषस्य श्मश्रु वपतु। मुखस्य परितो वर्तमानानि रोमाणि श्मश्रूणि। तानि वपतु वर्जयतु। आपः अब्देवता वर्चसा तेजसा स्वकीयेन उन्दन्तु क्लेदयन्तु। तथा प्रजापतिः प्रजानां देवमनुष्यादीनां पतिः स्रष्टा चिकित्सतु भिषज्यतु। अस्मिन् संभवद्रोगादिकम् इति शेषः। कित ज्ञाने। 'गुप्तिज्किद्भ्यः सन्' ( पा ३,१,५ )। 'निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्यते' ( पावा ३,१,५ ) इति स्मरणात्। किमर्थम्। दीर्घायुत्वाय। दीर्घम् आयुश्चिरकालजीवनम् अस्य यथा स्यात् इत्येवमर्थम्। चक्षसे दर्शनाय। अविशेषात् सर्वस्य श्रेयसे इति शेषः। चक्षिङ् व्यक्तायां वाचि। 'असनयोश्च प्रतिषेधः' ( पावा २,४,५४ ) इति स्मरणात् ख्याञादेशाभावः।

येनाव॑पत् सवि॒ता [7]क्षु॒रेण॒ सोम॑स्य॒[8] राज्ञो॒ वरु॑णस्य वि॒द्वान्[8]।
तेन॑ ब्रह्माणो [9]वपते॒दम॒स्य[9] [10]गोमा॑नश्ववा॑नु॒यम॑स्तु प्र॒जावा॑न्[10] ॥ ३ ॥

येन॑। अव॑पत्। स॒वि॒ता। क्षु॒रेण॑। सोम॑स्य। राज्ञः॑। वरु॑णस्य। वि॒द्वान्। तेन॑। ब्र॒ह्माणः॒। व॒प॒त॒। इ॒दम्। अ॒स्य। गोऽमा॑न्। अश्व॑ऽवान्। अ॒यम्। अ॒स्तु॒। प्र॒जाऽवा॑न् ॥ ३ ॥

सविता देवः विद्वान् जानन् सोमस्य राज्ञो वरुणस्य च संबन्धिना येन क्षुरेण अवपत् वपनं कृतवान्। यद्वा कर्मणि षष्ठी। सोमं राजानं वरुणं च येन क्षुरेण अवपद् इत्यर्थः। हे ब्रह्माणः ब्राह्मणाः तेन तादृशेन क्षुरेण अस्य पुरुषस्य इदं केशश्मश्रु वपत

---

१. अदिते पागृ २,१,६. २. केशान् आगृ १,१७,७ पागृ. ३. वप पागृ. ४. वर्चसे आगृ.
५. धारयतु प्रजापतिः पुनः पुनः सुवस्वे पै १९,१७,१५. ६. श्मश्रु P; ७. शीर्ष्णो (श्मश्रु शागृ) अग्ने क्षुरेण पै २,५२,३ शागृ १,२८,१५. ८. केशान् पै. ९. °मथ शागृ.
मैत्रा २,७,१७,२ हिगृ २,६,१०; १०. आयुष्मान् दीर्घायुरयमस्तु वीरः ( °रोऽसौ शागृ. ) पै. शागृ.; ऊर्जेमं रदया वर्चसा संसृजाथ पागृ २,१,११. आयुष्मान् ( आयुष्यं पागृ.) जरदष्टिर्यथाऽसत् आगृ १,१७,१०

तेन विशिष्टवपनसंस्कारेण अयं पुरुषः गोमान् बह्वीभिर्गोभिर्युक्तः अश्ववान् अश्वैर्युक्तः प्रजावान् पुत्रपौत्रादिभिर्युक्तश्च अस्तु भवतु ।

[1]गिरावरगराटेषु हिरण्ये गोषु यद् यशः[1] ।
सुरायां सिच्यमानायां [2]कीलाले मधु तन्मयि[2] ॥ १ ॥

गिरौ । अरगराटेषु । हिरण्ये । गोषु । यत् । यशः । सुरायाम् ।
सिच्यमानायाम् । कीलाले । मधु । तत् । मयि ॥ १ ॥

गिरौ पर्वते हिमवदादौ यद् यशः कीर्तिरस्ति । तथा अरगराटेषु रथचक्रावयवाः कीलका अराः । तान् गिरति आत्मना संश्लेषयतीति अरगरो रथः । तेन अटन्ति संचरन्तीति अरगराटाः रथिनो यशस्विनो राजानः । यद्वा अराः अरयः तान् गच्छन्तीति अरगाः वीरा भटाः तेषां राटाः जयघोषाः । रट परिभाषणे । भावे घञ्[3] । व्युत्पत्त्यनवधारणाद् नावगृह्यते । तेषु अरगराटेषु यद् यशोऽस्ति हिरण्ये सुवर्णे गोषु वहनदोहनसमर्थेषु च यद् यशोऽस्ति तन्मयि । भवत्वित्यर्थः । अपि च सिच्यमानायां पात्रेषु आसिच्यमानायां सुरायां कीलाले अन्ने च यद् मधु मदकरं माधुर्योपेतं रसं जनाः प्रशंसन्ति तन्मयि भवतु ।

अश्विना सारघेण मा मधुनाङ्क्तं शुभस्पती ।
यथा भर्गस्वतीं[4] वाचमावदानि [5]जनाँ अनु[5] ॥ २ ॥

अश्विना । सारघेण । मा । मधुना । अङ्क्तम् । शुभः । पती इति ।
यथा । भर्गस्वतीम् । वाचम् । आऽवदानि । जनान् । अनु ॥ २ ॥

हे अश्विना अश्विनौ शुभस्पती शोभमानायाः सूर्यायाः शोभाहेतोरलंकारस्य वा पती भर्तारौ मा मां सारघेण सरघा मधुमक्षिका तत्संपादितेन मधुना अङ्क्तम् अभिषिञ्चतं संयोजयतम् । अञ्जू व्यक्तिम्लक्षणकान्तिगतिषु । अस्मात् लोण्मध्यमे श्नसोरल्लोपे श्नान्नलोपे च कृते रूपम् । यथा खल्वहं भर्गस्वतीम् दीप्तिमतीं मधुरां वाचं जनान् मनुष्यान् अनु अनुलक्ष्य [6]आवदामि अभिलक्ष्य उच्चारयामि । तथा मां मधुना सिञ्चतम् इत्यर्थः ।

मयि वर्चो [7]अथो यशोऽथो यज्ञस्य यत् पयः[7] ।
[8]तन्मयि[8] प्रजापतिर्दिवि द्यामिव दृंहतु ॥ ३ ॥

---

१. यद् गिरिषु पर्वतेषु ( यदश्विना क्षौ पै ८,१०,४ ) गोष्वश्वेषु यन्मधु पै २,३५,२ अ ९,१,१८. २. 'ह्रेऽधि यन्मधु पै ८,१०,४; यत्तत्र मधु त' पै १६,३३,६ अ. ३. एवं स्वरो न सिध्यति. ४. वर्चस्वतीं पै १६,३३,९ अ ९,१,१९. ५. जनेभ्यः मा २१,२. ६. वैतु. मैरा. ह. ७. मयि श्रवो मयि द्युम्नं मयि त्विषिः पै ५,२९,८. ८. परमेष्ठी[2] कौ १,६०२.

मयि । वर्चः । अथो इति । यशः । अथो इति । यज्ञस्य । यत् । पयः ।
तत् । मयि । प्रजाऽपतिः । दिवि । द्याम्ऽइव । दृंहतु ॥ ३ ॥

मयि साधके यद् वर्चः तेजोऽस्ति अथो अपि च यद् यशः अन्नं कीर्तिर्वा । अथो अपि च यज्ञस्य क्रियमाणस्य यागस्य यत् पयः सारभूतं फलं तत् सर्वं मयि यजमाने प्रजापतिः प्रजानामधिपतिर्विधाता दृंहतु दृढीकरोतु । तत्र दृष्टान्तः — दिवि अन्तरिक्षे निराधारे स्थाने द्याम् दीव्यमानं ज्योतिर्मण्डलं यथा दृढीकृतवान् तथा दृंहत्वित्यर्थः । दृह दृहि वृद्धौ ।

इति षष्ठकाण्डे सप्तमेऽनुवाके चतुर्थं सूक्तम् ।

'यथा मांसम्' इति सूक्तेन गोवत्सयोरन्योन्यविरोधशान्तिरूपे सांमनस्यकर्मणि वत्सं संस्नाप्य गोमूत्रेण अवसिच्य वत्सं त्रिः परिभ्राम्य अभिमन्त्र्य स्तनपानार्थं मुञ्चेत् ।

तथा तत्रैव कर्मणि अनेन तृचेन गोः शिरः कर्णं च अनुमन्त्रयेत ।

सूत्रितं हि — "'यथा मांसम्' इति वननम् । वत्सं संधाव्य गोमूत्रेणाऽवसिच्य त्रिः परिणीय उपसृजति । शिरःकर्णम् अनुमन्त्रयते[1]" ( कौसू ४१,१८-२० ) इति ।

'यद् अन्नम्' इति तृचेन दुष्टादुष्टप्रतिग्रहजनितदोषशान्त्यर्थं प्रतिग्राह्यं वस्तु अभिमन्त्र्य गृह्णीयात् । "'क इदं कस्मा अदात्' (अ ३,२९,७) 'कामस्तदग्रे' ( अ १९,५२ ), 'यदन्नम्[2]' ( अ ६,७१ ), 'पुनर्मैत्विन्द्रियम्' ( अ ७,६९ ) इति प्रतिगृह्णाति" ( कौसू ४५,१७ ) इति सूत्रात् ।

तथा अनेन अग्निकार्ये ब्रह्मचारी भैक्षम् अहरहर्जुहुयात् । "'यदन्नम्' इति निमभिभैक्षस्य जुहोति" ( कौसू ५७,२९ ) इति सूत्रात् ।

दर्शपूर्णमासयोः पुरोडाशभागं 'यदन्नम्' इत्यनया ब्रह्मा अश्नीयात् । "'यदन्नम्' इति भागं प्राश्य[3]" ( वैताश्रौ ४,१६ ) इति सूत्रात् ।

'यथासितः' इति तृचेन वाजीकरणकामः पकशाखार्कमणिं संपात्य अभिमन्त्र्य अर्कसूत्रेण बध्नीयात् ।

तत्रैव कर्मणि 'यावदङ्गीनम्' इत्यृचा कृष्णाचर्ममणिं संपात्य अभिमन्त्र्य कृष्णमृगवालेन बध्नीयात् ।

---

1. अभिम° Bl.　　2. यद् अन्नम् नास्ति S'.　　3. प्राश्नाति सं°पा.

सूत्रितं हि—" 'यथासितः' ( अ ६,७२ ) इत्येकार्कसूत्रम् आर्कं बध्नाति । 'यावदङ्गीनम्' ( अ ६,७२,३ ) इति असितस्तम्भम्[1] असितवालेन" ( कौसू ४०,१६;१७ ) इति ।

यथा मांसं[2] यथा सुरा यथाक्षा अधिदेवने ।
यथा पुंसो वृषण्यत[3] स्त्रियां निहन्यते मनः ।
एवा ते अघ्न्ये मनोऽधि वत्से नि हन्यताम् ॥ १ ॥

यथा । मांसम् । यथा । सुरा । यथा । अक्षाः । अधिऽदेवने । यथा । पुंसः । वृषण्यतः । स्त्रियाम् । निऽहन्यते । मनः । एव । ते । अघ्न्ये । मनः । अधि । वत्से । नि । हन्यताम् ॥

यथा मांसं पुरुषस्य भोक्तुः प्रेमास्पदम् । यथा च सुरा प्रियतमा । यथा च अक्षाः द्यूतकरणानि अधिदेवने । अधि उपरि दीव्यन्त्यस्मिन् कितवा इति अधिदेवनं द्यूतस्थानं तत्र प्रियतमाः । यथा च पुंसः पुरुषस्य वृषण्यतः वृषाणं सेक्तारम् आत्मानम् इच्छतः सुरतार्थिनो मनः मानसं स्त्रियां निहन्यते स्त्रीविषये प्रह्वीभवति । 'दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ( पा ७,४,३६ ) इति क्यचि निपातितः । एव एवम् हे अघ्न्ये अहन्तव्ये धेनो ते तव मनः वत्से अधि उपरि नि हन्यताम् प्रह्वीभूतम् अस्तु । अयं वत्सो मांसादिवत् मनसः प्रेमास्पदं भवत्वित्यर्थः ।

यथा हस्ती हस्तिन्याः पदेन पदमुद्युजे[4] ।
यथा पुंसो वृषण्यत स्त्रियां निहन्यते मनः ।
एवा ते अघ्न्ये मनोऽधि वत्से नि हन्यताम् ॥ २॥

यथा । हस्ती । हस्तिन्याः । पदेन । पदम् । उत्ऽयुजे । यथा । पुंसः । वृषण्यतः । स्त्रियाम् । निऽहन्यते । मनः । एव । ते । अघ्न्ये । मनः । अधि । वत्से । नि । हन्यताम् ॥ २ ॥

यथा हस्ती गजः पदेन स्वकीयेन पादेन हस्तिन्याः करेण्वाः पदम् पादं प्रेम्णा उद्युजे उद्यमयति । यथा पुंस इत्यादि पूर्ववद् योज्यम् । उद्युजे इति । युजिर् योगे । छान्दसो विकरणस्य लुक् । 'लोपस्त आत्मनेपदेषु' ( पा ७,१,४१ ) इति तलोपः । हस्तीति । 'हस्ताज्जातौ' ( पा ५,२,१३३ ) इति णिनिः ।

यथा प्रधिर्यथोपधिर्यथा नभ्यं प्रधावधि ।
यथा पुंसो वृषण्यत स्त्रियां निहन्यते मनः ।
एवा ते अघ्न्ये मनोऽधि वत्से नि हन्यताम् ॥ ३ ॥

---

१. °तस्कन्धम् Bl. २. मगु पै २,३५,२. ३. °ण्यतः A,B,V. ४. °दमन्वगात् पै १९,२६,८.

यथा । प्रऽधिः । यथा । उपऽधिः । यथा । नभ्यम् । प्रऽधौ । अधि । यथा । पुंसः । वृषण्यतः । स्त्रियाम् । निऽहन्यते । मनः । एव । ते । अघ्न्ये । मनः । अधि । वत्से । नि । हन्यताम् ॥ ३ ॥

प्रधीयत इति प्रधिः रथचक्रस्य नेमिः, उपधिः उप तत्समीपे धीयत इत्युपधिः नेमिसंबद्धः अराणां संबन्धको वलयः । 'उपसर्गे घोः किः' (पा ३,३,९२) इति धाञः किप्रत्ययः । यथा प्रधिः उपधिना संबध्यते । उपधिश्च यथा प्रधिना । यथा च नभ्यम् नाभये हितं रथचक्रमध्यफलकं प्रधावधि नेमिदेशे संबध्यते । अधिः सप्तम्यर्थानुवादी । यथा उक्तरूपा रथचक्रावयवाः परस्परं दृढसंबन्धाः हे धेनो त्वदीयं मनः वत्से तथा दृढसंबन्धम् अस्तु ।

यदन्नमद्मि बहुधा विरूपं हिरण्यमश्वमुत[1] गामजामविम् ।
यदेव किं च[2] प्रतिजग्रहाहमग्निष्टद्धोता[3] सुहुतं[4] कृणोतु ॥ १ ॥

यत् । अन्नम् । अद्मि । बहुऽधा । विऽरूपम् । हिरण्यम् । अश्वम् । उत । गाम् । अजाम् । अविम् । यत् । एव । किम् । च । प्रतिऽजग्रह । अहम् । अग्निः । तत् । होता । सुऽहुतम् । कृणोतु ॥ १ ॥

विरूपम् विविधाकारं यद् अन्नं बहुधा बहुप्रकारेण अद्मि भक्षयामि । क्षुत्पीडावशेन भोज्याभोज्यविभागमन्तरेण भक्षितवान् अस्मीत्यर्थः । उत अपि च हिरण्यादिकं यदेव किं च किमपि द्रव्यजातं दारिद्र्यवशाद् अहं प्रतिजग्राह[5] प्रतिगृहीतवान् अस्मि । तत् सर्वम् अन्नं हिरण्यादिद्रव्यं च होता होमनिष्पादकः अयम् अग्निः सुहुतम् सुष्ठु हुतं कृणोतु करोतु । यथा मम अन्नदोषः प्रतिग्रहदोषश्च न भवति तथा करोत्वित्यर्थः ।

यन्मा हुतमहुतमाजगाम[6] दत्तं पितृभिरनुमतं मनुष्यैः[7] ।
यस्मान्मे मन उदिव रारजीत्यग्निष्टद्धोता[8] सुहुतं कृणोतु ॥ २ ॥

यत् । मा । हुतम् । अहुतम् । आऽजगाम । दत्तम् । पितृऽभिः । अनुऽमतम् । मनुष्यैः । यस्मात् । मे । मनः । उतऽइव । रारजीति । अग्निः । तत् । होता । सुऽहुतम् । कृणोतु ॥

हुतम् होमसंस्कृतम् अहुतम् तद्विपरीतम् उभयविधं यद् द्रव्यं मा माम् आजगाम प्रतिग्रहादिना प्राप्तम् अभूत् । कीदृशम् इति पुनर्विशिनष्टि— पितृभिः पितृदेवताभिः

१. यान्नो हिरण्यमुत तैआ २,६,२. २. किं चिन् पै २०,१४,१. ३. °जग्राहमग्नि° मां तस्माद् तैआ.; °ष्टद् विश्वाद् पै. ४ मनुणं तैआ.; मगादं पै. ५. वैद्. मंपा. द्र. ६. हुतं यदहुत° पै २,२८,३. ७. °नुष्यैः A,R,Sm,P,J,Bp[1],P[3],M H,T,K[1]; °नुष्यैः > °नुष्यैः Cs. ८. यस्मादन्नात् मनसोद्वारजीमि पै.

अस्मभ्यं भोगार्थं दत्तम् वितीर्णं मनुर्ष्यः मनुष्यजातीयैः अनुमतम् अनुज्ञातम् । यस्मात् प्रतिगृहीताद् द्रव्याद्धेतोः मे मदीयं मनः उदिव रारजीतु[1] हर्षातिशयेन भृशम् उद्दीप्यत इव । राजृ दीप्तौ । अस्माद् यङ्लुगन्तात् लोटि छान्दसम् उपधाह्रस्वत्वम् । यद्वा उत्कर्षेण भृशं रागयुक्तमभूद् इत्यर्थः । रञ्ज रागे इत्यस्माद् यङ्लुगन्तात् लोटि रूपम् । अभिष्टद् इत्यादि पूर्ववत् ।

यद॒न्नमद्म्य॑नृ॒तेन॑ देवा दा॒स्यन्नदा॑स्यन्नु॒त सं॑गृ॒णामि॑[2] ।
वै॒श्वा॒न॒रस्य॑ मह॒तो म॑हि॒म्ना [3]शि॒वं मह्यं॒ मधु॑मद॒स्त्वन्न॑म्[3] ॥ ३ ॥

यत् । अन्न॑म् । अद्मि॑ । अ॒नृतेन॑ । दे॒वाः । दा॒स्यन् । अदा॑स्यन् । उ॒त । स॒म्ऽगृ॒णामि॑ ।
वै॒श्वा॒न॒रस्य॑ । म॒ह॒तः । म॒हि॒म्ना । शि॒वम् । मह्य॑म् । मधु॑ऽमत् । अ॒स्तु॒ । अन्न॑म् ॥ ३ ॥

हे देवाः अनृतेन असत्यवदनेन अन्यदीयम् अपहृत्य यद् अन्नम् अद्मि भक्षयामि । उत्तमर्णाय पुनः दास्यन् अदास्यन् पुनः प्रदानम् अकरिष्यंश्च संगृणामि दास्यामीति केवलं प्रतिजानामि । संपूर्वो गृणातिः प्रतिज्ञायां वर्तते । गॄ शब्दे । प्वादित्वात् ह्रस्वः । तत् सर्वम् अन्नं वैश्वानरस्य विश्वनरहितस्य महतः अतिशयितप्रभावस्य देवस्य महिम्ना माहात्म्येन मह्यं शिवम् सुखकरं मधुमत् माधुर्यवद् अस्तु भवतु ।

यथासि॑तः प्र॒थय॑ते[4] व॒शाँ[5] अनु॒ वपूं॑षि कृ॒ण्वन्नसु॑रस्य मा॒यया॑ ।
ए॒वा ते॑[6] शेपः॒ सह॑सा॒यम॒र्को॒ऽङ्गेना॒ङ्गं संस॑मकं कृणोतु ॥ १ ॥

यथा॑ । अ॒सि॒तः । प्र॒थय॑ते । व॒शान् । अनु॑ । वपूं॑षि । कृ॒ण्वन् । असु॑रस्य । मा॒यया॑ ।
ए॒व । ते॒ । शेपः॑ । सह॑सा । अ॒यम् । अ॒र्कः । अङ्गे॑न । अङ्ग॑म् । स॒म्ऽस॑मकम् । कृ॒णो॒तु॒ ॥

यथा [7]सितः बद्धः पुरुषः वशान् स्ववशान् आत्मीयान् पुरुषान् अनुलक्ष्य प्रथयते स्वात्मानं प्रसारयति । किं कुर्वन् । असुरस्य क्षेप्तुर्देवस्य मायया मायाशक्त्या वपूंषि शरीराणि कृण्वन् कुर्वन् । एव एवम् अयम् अर्कः अर्कवृक्षविकारो मणिः सहसा शीघ्रं ते त्वदीयं शेपः पुंव्यञ्जनलक्षणम् अङ्गम् अङ्गेन तद्व्यतिरिक्तेन हस्तपादादिना सम्[1] सम्यक् समगम्[1] समानगमनं कृणोतु करोतु । यद्वा स्त्रिया अङ्गेन योनिदेशेन समानगमनम् । उपभोगक्षमं करोत्वित्यर्थः ।

यथा॒ [8]पस॑स्तायाद॒रं[8] वाते॑न स्थूल॒भं कृ॒तम् ।
याव॒त्पर॑स्वतः॒ पस॒स्ताव॑त् ते॑[9] वर्धतां॒ पसः॑ ॥ २ ॥

---

१. वैतु. मंगा. द्र.　२. था करिष्यन् पै २,२८,२ तैआ २,६,२.　३. अभिष्टद् विश्वं सुहुतं कृणोतु पै २,२८,१.　४. प्रथते पै १९,२७,१४.　५. वशाँ B.　६. मे पै.
७. वैतु. पत्रा. द्र.　८. पसं B; °स्तायान्तर? पै १९,२७,१६.　९. मे पै.

यथा । पसः । तायादरम् । वातेन । स्थूलभम् । कृतम् ।
यावत् । परस्वतः । पसः । तावत् । ते । वर्धताम् । पसः ॥ २ ॥

तायोदरम्[1] तयोदरः प्राणिविशेषः तत्संबन्धि पसः पुंव्यञ्जनं वातेन वायुना यथा स्थूलभं कृतम् । स्थौल्येन भासमानं क्रियत इत्यर्थः । परस्वतः पतत्संज्ञस्य मृगविशेषस्य पसः पुंव्यञ्जनं यावत् यत्परिमाणविशिष्टं भवति हे साधक ते तव पसः पुंव्यञ्जनं तावत् तत्परिमाणविशिष्टं वर्धताम् ।

यावदङ्गीनं पारस्वतं हास्तिनं गार्दभं च यत् ।
यावदश्वस्य वाजिनस्तावत् ते वर्धतां पसः ॥ ३ ॥

[1]यावत्ऽअङ्गीनम् । पारस्वतम् । हास्तिनम् । गार्दभम् । च । यत् ।
यावत् । अश्वस्य । वाजिनः । तावत् । ते । वर्धताम् । पसः ॥ ३ ॥

अङ्गीनम्[1] अङ्गेभ्यः समुद्भूतं पारस्वतम् परस्वतः संबन्धि प्रजननं यावत्[1] यत्परिमाणविशिष्टं भवति । तथा हास्तिनम् हस्तिसंबन्धि । गार्दभम् गर्दभसंबन्धि च प्रजननं यत् यादृगाकारवद् भवति । अश्वस्य वाजिनः यौवनावस्थस्य वडवासंगमने यावद् भवति ते तव पसः पुंव्यञ्जनं तावत्परिमाणं वर्धताम् । हास्तिनम् इति । हस्तिन्शब्दात् 'तस्येदम्' (पा ४,३,१२०) इति अण्[4] । 'इनण्यनपत्ये' (पा ६,४,१६४) इति प्रकृतिभावः ।

इति सायणार्यविरचिते अथर्ववेदार्थप्रकाशे षष्ठकाण्डे सप्तमोऽनुवाकः ।

अष्टमेऽनुवाके पञ्च सूक्तानि । तत्र 'एह यातु वरुणः' इति प्रथमं सूक्तम् । अत्र आद्यस्य तृचस्य 'सं वः पृच्यन्ताम्' इति द्वितीयस्य च सांमनस्यकर्मणि 'सं जानीध्वम्' (अ ६,६४) इति तृचोक्तेषु उदकुम्भनिनयनादिषु विनियोगः । सूत्रं च तत्रैवोदाहृतम् ।

तत्र आद्यस्य तृचस्य वास्तोष्पत्यगणे पाठात् शान्त्युदकाभिमन्त्रणादौ गणप्रयुक्तो विनियोगोऽनुसंधेयः । सूत्रितं हि—"'इहैव ध्रुवाम्' (अ ३,१२), 'एह यातु' (अ ६,७३), 'यमो मृत्युः' (अ ६,९३), 'सत्यं बृहत्' (अ १२,१) इत्यनुवाको वास्तोष्पत्यानि[1]" (कौसू ८,२३) इति ।

अत्र 'इहेत्' (१) इत्यनया ऋचा नवशालाप्रवेशकर्मणि उदपात्रनिनयनानन्तरं यजमानो पात्रं विसृजेत् । "'यजूंषि यज्ञे' (अ ५,२६) इति नवशालायाम्" इति प्रक्रम्य "'इहेत् स्त' (१) इति पात्रं विसृजते" (कौसू २३,१६) इति सूत्रितत्वात् ।

एह यातु वरुणः सोमो अग्निर्बृहस्पतिर्वसुभिरेह यातु ।
अस्य [1]श्रियमुपसंयात[1] सर्वं उग्रस्य चेत्तुः[2] संमनसः[3] सजाताः[4] ॥ १ ॥

आ । इह । यातु । वरुणः । सोमः । अग्निः । बृहस्पतिः । वसुऽभिः । आ । इह । यातु ।
अस्य । श्रियम् । उपऽसंयात । सर्वे । उग्रस्य । चेत्तुः[5] । सम्ऽमनसः । सऽजाताः ॥ १ ॥

इह अस्मिन् देशे वरुणः सोमः अग्निः च प्रत्येकम् आ यातु सांमनस्यकरणार्थं आगच्छतु । बृहस्पतिः बृहतां देवानामधिपतिर्देवः वसुभिः अष्टसंख्याकैर्गणदेवैः सह इह अस्मिन् देशे आ यातु आगच्छतु । एते खलु सांमनस्यकारिणो देवाः। तथा च तैत्तिरीयकम्—'अग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वै-र्देवैः' ( तै ६,२,२,१ ) इति । हे सजाताः समानजन्मानो बान्धवाः ते सर्वे यूयं संमनसः समानमनस्काः सन्तः उग्रस्य उद्गूर्णबलस्य चेत्तुः कार्याकार्यविभागं सम्यग् जानानस्य अस्य यजमानस्य श्रियम् संपदम् उपसंयात उपसंप्राप्नुत । उपजीवका भवतेत्यर्थः।

यो वः शुष्मो[6] [7]हृदयेष्वन्तराकूतिर्या[7] वो मनसि प्रविष्टा ।
[8]तान्त्सीवयामि[8] हविषा घृतेन मयि सजाता रमतिर्वो अस्तु ॥ २ ॥

यः । वः । शुष्मः । हृदयेषु । अन्तः । आऽकूतिः । या । वः । मनसि । प्रऽविष्टा ।
तान् । सीवयामि[10] । हविषा । घृतेन । मयि । सऽजाताः । रमतिः । वः । अस्तु ॥ २ ॥

हे सजाताः वः युष्माकं हृदयेषु यः शुष्मः शोषकं बलम् अस्ति । तथा वः युष्माकं हृदयमध्यवर्तिनि मनसि अन्तःकरणे या आकूतिः इदं मे स्याद् इदं मे स्याद् इति कल्पना अन्तः प्रविष्टा तां[11] विविधाम् आकूतिं बलं च हूयमानेन घृतेन हविषा सीवयामि परस्परसंबद्धां करोमि। हे सजाताः वः युष्माकं रमतिः रमणम् अनुकूलप्रवृत्तिः मयि मदीये सांमनस्यकामे पुरुषे अस्तु भवतु।

[12]इहैव स्त[12] माप याताध्यस्मत् पूषा परस्तादपथं[13] वः कृणोतु ।
वास्तोष्पतिरनु [14]वो जोहवीतु[14] मयि सजाता रमतिर्वो अस्तु ॥ ३ ॥

---

१. °यमभिसं° पै १९,१०,९.　२. चेतसः पै.　३. समनसः A.　४. सुजाताः पै.　५. चेतुः P.　६. शुभो पै १९,१०,११.　७. °न्तर्याभूतिर् पै.　८. तां श्रीं° S; तान्छ्रीं° D,Sm,Cs; तां छ्रीं° Bb,K,Km,R,V; तान् स्रीं° Bp[2]; तान् श्रीं° A,B; °तां श्रेवयामि? पै.　९. सुजाता पै.　१०. ह्र. सा.; वैतु. P,P[2],J,Cp श्रीवयामि.　११. वैतु. मंपा. द्र.　१२. एह यात पै १९,१०,१०.　१३. पुरस्ता° पै.　१४. वोऽयम-ह्वत् पै.

इह । एव । स्त । मा । अप । यात । अधि । अस्मत् । पूषा । परस्तात् । अपथम् । वः । कृणोतु ।
वास्तोः । पतिः । अनु । वः । जोहवीतु । मयि । सऽजाताः । रमतिः । वः । अस्तु ॥ ३ ॥

हे सजाताः इह अस्मदीये गृहे एव स्त भवत अनुरागेण वर्तध्वम् । अध्यस्मत् । अधिः पञ्चम्यर्थानुवादी । अस्मत्तोऽधि माऽप यात अपसरणं मा कुरुत । अस्मत्तः परस्ताद् अन्यत्र प्रातिकूल्येन वर्तमानानां वः युष्माकं पूषा मार्गरक्षको देवः । अपथम् अमार्गं कृणोतु करोतु । अपसरणाय मार्गं न ददात्वित्यर्थः । न पन्थाः अपथम् । 'नञस्तत्पुरुषात्' ( पा ५,४,७१ ) इति समासान्तनिषेधस्य 'पथो विभाषा' ( पा ५,४,७२ ) इति विकल्पनात् 'ऋक्पूरब्धूः°' ( पा ५,४,७४ ) इति अकारः समासान्तः । 'अपथं नपुंसकम्' ( पा २,४,३० ) इत्यनुशासनात् नपुंसकत्वम् । वास्तोष्पतिः एतत्संज्ञको गृहाणां पालको देवः वः युष्मान् अनु जोहवीतु अनुसृत्य पुनः पुनरस्मदर्थम् आह्वयतु । ह्वयतेर्यङ्लुकि 'अभ्यस्तस्य च' ( पा ६,१,३३ ) इति संप्रसारणम् । अन्यद् व्याख्यातम् ।

सं वः पृच्यन्तां तन्वः[1] सं मनांसि समु व्रता ।
सं वोऽयं ब्रह्मणस्पतिर्भगः सं वो अजीगमत्[2] ॥ १ ॥

सम् । वः । पृच्यन्ताम् । तन्वः । सम् । मनांसि । सम् । ऊं इति । व्रता ।
सम् । वः । अयम् । ब्रह्मणः । पतिः । भगः । सम् । वः । अजीगमत् ॥१॥

हे सांमनस्यकामाः वः युष्माकं तन्वः शरीराणि सं पृच्यन्ताम् परस्परानुरागेण संसृज्यन्ताम् । पृची संपर्के । तथा मनांसि शरीरान्तर्वर्तीनि अन्तःकरणानि सम् संसृज्यन्ताम् । सम् उ । उशब्दः चार्थे । व्रता व्रतानि । कर्मनामैतत् । 'शेश्छन्दसि बहुलम्' ( पा ६,१,७० ) इति शेर्लोपः । कृषिवाणिज्यादीनि कर्माणि च संसृज्यन्ताम् । अपि च ब्रह्मणस्पतिः एतत्संज्ञको वेदराशेः पालयिता अयं देवः वः युष्मान् समजीगमत् संगतमनस्कान् करोतु । तथा भगः एतत्संज्ञो देवः वः युष्मान् सम् अजीगमत् संगतमनस्कान् करोतु । गमेर्ण्यन्तात् लुङि चङि रूपम् ।

संज्ञपनं[3] वो[4] मनसोऽथो संज्ञपनं[5] हृदः ।
अथो भगस्य यच्छ्रान्तं तेन संज्ञपयामि वः[6] ॥ २ ॥

---

1. तुन्वा३ः A,B,Bᵇ,D; तन्वा३ Cs; तन्वा R; तन्वा३ः Sᵐ. 2. त्वचः पै १९,१५,४. 3. 'राष्ट्रिस्योमस्मं दशोपातु माम् पै. 4. संवननं माङ् पै १९,१९,८. 5. सौवनने पै. 6. 'पयामि माम् पै १९,१५,१.

सम्ऽज्ञपनम् । वः । मनसः । अथो इति । सम्ऽज्ञपनम् । हृदः ।
अथो इति । भगस्य । यत् । श्रान्तम् । तेन । सम्ऽज्ञपयामि[1] । वः ॥ २ ॥

हे सांमनस्यकामाः वः युष्माकं मनसः ज्ञानसाधनस्य इन्द्रियस्य संज्ञपनम् सम्यग्ज्ञानजननम्[2]। येन कर्मणा भवति तत् कर्म करोमीत्यर्थः । संजानानान् प्रयुङ्क्ते इत्यस्मिन्नर्थे 'हेतुमति च' (पा ३,१,२६) इति णिच् । ततः पुकि '[3]मारणतोषणनिशामनेषु[3] ज्ञा' इति मित्त्वात् 'मितां ह्रस्वः' (पा ६,४,९२) इति ह्रस्वत्वम्। 'नन्दिग्रहिपचादिभ्यः'' (पा ३,१,१३४) इति ल्युप्रत्ययः । अथो अपि च हृदः हृदयस्य मनसोऽपि आधारभूतस्य संज्ञपनम् समानज्ञानजननं करोमि । अथो अपि च भगस्य एतत्संज्ञस्य सौभाग्यकरस्य देवस्य यच्छ्रान्तम् श्रमजनितं तपोऽस्ति। श्राम्यत्यस्मिन्निति श्रान्तम्[4]। अधिकरणे क्तः । 'यस्य विभाषा' (पा ७,२,१५) इति इट्प्रतिषेधः । 'अनुनासिकस्य क्विझलोः'' (पा ६,४,१५) इति दीर्घत्वम्। तेन श्रमजनिततपसा वः युष्मान् सांमनस्यकामान् संज्ञपयामि समानज्ञानान् करोमि ।

यथादित्या वसुभिः [5]संबभूवुर्मरुद्भिरुग्रा[5] अहृणीयमानाः[6] ।
एवा [7]त्रिणामन्नहृणीयमान[7] [8]इमान् जनान्त्संमनसस्कृधीह[8] ॥ ३ ॥

यथा । आदित्याः । वसुऽभिः । सम्ऽबभूवुः । मरुत्ऽभिः । उग्राः । अहृणीयमानाः ।
एव । त्रिऽनामन् । अहृणीयमानः । इमान् । जनान् । सम्ऽमनसः । कृधि । इह ॥ ३ ॥

आदित्याः अदितेः पुत्रा मित्रवरुणादयः[9] यथा येन प्रकारेण वसुभिः अष्टसंख्याकैर्गणदेवैः संबभूवुः समानज्ञाना अभूवन् । यथा च मरुद्भिः एकोनपञ्चाशत्संख्याकैः सह उग्राः उद्गूर्णबला रुद्रा अहृणीयमानाः अक्रुध्यन्तः समानज्ञाना अभूवन्। हृणीयतिः कण्ड्वादिरत्र क्रुध्यतिकर्मा। एव एवं हे त्रिणामन् त्रिषु भूम्यन्तरिक्षद्युस्थानेषु पार्थिववैद्युतसूर्यात्मना सर्वेषां नमयितः । यद्वा त्रीणि गार्हपत्यादीनि नामानि यस्य स तथोक्तः । तादृश हे अग्ने अहृणीयमानः अक्रुध्यंस्त्वम् इमान् सांमनस्यकामान् जनान् इह अस्मिन् ग्रामनगरादौ संमनसः समानमनस्कान् परस्परानुरक्तचित्तान् कृधि कुरु। 'श्रुशृणुपृकृवृभ्यः'' (पा ६,४,१०२) इति हेर्धिरादेशः ।

इति अष्टमेऽनुवाके प्रथमं सूक्तम्।

---

१. सम् । ज्ञपयामि P; सम् । ज्ञंपयामि P², D², Kp; सम्ऽज्ञंपयामि>सम् । ज्ञपयामि J.
२. समज्ञान° S'. ३. °रणतोरणनिशा° S'. ४. श्रान्त S'. ५. °न्नी रुद्राः तै २,१,११,३. ६. अहृणीय° A; समजानताभि तै. ७. त्रिणा° K; त्रिनाम° V; °यमाना तै. ८. इमां ज° A, Kᵐ, R, Sᵐ; विश्वे देवाः समनसो भवन्तु तै.; °नसस्कृणु त्वम् पै १९,१५,६. ९. मित्राव° S'.

'निरमुं नुदे' इति तृचेन आभिचारिके तन्त्रे दर्भास्तरणं कुर्यात्।

तथा तत्रैव कर्मणि अनेन सूक्तेन अभ्यातानान्ते इङ्गिडं जुहुयात्। (द्र. कौसू ४८,२९-३१)।

तस्मिन्नेव तन्त्रे अनेन तृचेन संस्थितहोमान् जुहुयात्। (द्र. कौसू ४७,१०)।

'य एनं परिपीदन्ति' इति चतुर्ऋचेन विजयस्वस्त्ययनकामः 'खड्गाद्यसाधारणं शस्त्रं' संपात्य हस्तेन विमृज्य अभिमन्त्र्य धारयेत्।

तथा रात्रिस्वस्त्ययनकामः एतं चतुर्ऋचं जपित्वा प्रादेशेन मुखं विमाय स्वप्यात्।

तथा देशान्तरं जिगमिषुः स्वप्रयोजनसिद्ध्यर्थं सुप्तोत्थित एतं चतुर्ऋचं जपन् त्रीणि पदानि प्रक्रम्य उद्दिष्टं देशं गच्छेत्।

तत्रैव कर्मणि भूमौ त्रीन् प्रादेशान् मित्वा गच्छेत्।

सूत्रितं हि—"'य एनं परिपीदन्ति' (अ ६.७६) इति[२] यदायुधं दण्डेन व्याख्यातम्। दिष्ट्या मुखं विमाय संविशति। त्रीणि पदानि प्रमायोत्तिष्ठति। तिस्रो दिष्टीः" (कौसू ५०,४-७) इति।

निर॒मुं नु॑द॒ ओक॑सः स॒पत्नो॒ यः पृ॑त॒न्यति॑।
नै॒र्बा॒ध्ये॒न[१] ह॒विषेन्द्र॑ ए॒नं[३] परा॑शरीत्[४] ॥ १ ॥

निः। अ॒मुम्। नु॒दे॒। ओक॑सः। स॒ऽपत्नः॑। यः। पृ॒त॒न्यति॑।
नैः॒ऽबा॒ध्ये॒न[५]। ह॒विषा॑। इन्द्रः॑। ए॒नम्। परा॑। अ॒श॒री॒त् ॥ १ ॥

अमुं शत्रुम् ओकसः स्वनिवासस्थानाद् निर्णुदे निर्गमयामि। मन्त्रसामर्थ्येन स्वस्थानात् प्रच्यावयामीत्यर्थः। कः पुनरसौ इत्याह—यः सपत्नः शत्रुः पृतन्यति अस्मान् बाधितुं पृतनां सेनाम् आत्मन इच्छति। 'कव्यध्वरपृतनस्यर्चि लोपः' (पा ७,४,३९) इति क्यचि पृतनाशब्दस्य अन्तलोपः। निर्णोदनप्रकारम् आह—नैर्बाध्येन इति। निःशेषेण बाधो निर्बाधः तम् अर्हतीति निर्बाध्यो हन्तव्यः शत्रुः तद्विषये प्रयुज्यमानं हविः नैर्बाध्यम्। 'तस्येदम्' (पा ४,३,१२०) इति अण्[६]। तेन नैर्बाध्येन निर्बाधनक्षमेण हविषा आज्यादिना हूयमानेन परितुष्ट इन्द्रः एनं शत्रुं पराशरीत्

१. 'रणनार्थ S'. २. इति नास्ति Bl. ३. निर्बा° पै १९,१५,७ तैत्रा ३,१, ११,३ आपश्री ३,१४,२. ४. एणु नैत्रा आश्री. ५. °शरीत् O. ६. °बाध्येन P.J. ७. एवं स्वरो न सिध्यति.

पराशृणातु। यथा न पुनरावर्तते तथा पराङ्मुखं हिनस्तु इत्यर्थः। शॄ हिंसायाम्। अस्मात् 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति प्रार्थनायां लुङ्।

परमां तं' परावतमिन्द्रो 'नुदतु' वृत्रहा' ।
यतो न 'पुनरायति' शश्वतीभ्यः समाभ्यः ॥ २ ॥

परमाम्। तम्। पराऽवतम्। इन्द्रः। नुदतु। वृत्रऽहा।
यतः। न। पुनः। आऽअयति। शश्वतीभ्यः। समाभ्यः ॥ २ ॥

वृत्रहा वृत्रम् असुरं हतवान् इन्द्रः तं शत्रुं परमां परावतम्। परावत् इति दूरनाम। अतिशयितदूरदेशं नुदतु प्रेरयतु। तं दूरदेशं विशिनष्टि—यतः यस्माद् दूरात् प्रणुत्तः शत्रुः शश्वतीभ्यः समाभ्यः बहुसंवत्सरकालादपि न पुनरायति पुनर्नावर्तते। तादृशम् अत्यन्तदूरं देशं शत्रुं गमयत्वित्यर्थः। परावतम् इति। 'उपसर्गाच्छन्दसि धात्वर्थे' (पा ५,१,११८) इति वतिः।

एतु' तिस्रः परावत एतु' पञ्च जनाँ' अति' ।
एतु' 'तिस्रोति' रोचना यतो न पुनरायति
शश्वतीभ्यः समाभ्यो यावत् सूर्यो असद् दिवि ॥ ३ ॥

एतु। तिस्रः। पराऽवतः। एतु। पञ्च। जनान्। अति। एतु। तिस्रः। अति। रोचना।
यतः। न। पुनः। आऽअयति। शश्वतीभ्यः। समाभ्यः। यावत्। सूर्यः। असत्। दिवि ॥ ३ ॥

इन्द्रेण नुन्नः अस्मच्छत्रुः परावतः दूरवर्तिनीः तिस्रो भूमीः अति एतु अतिक्रम्य गच्छतु। 'त्रयो वा इमे त्रिवृतो लोकाः' (ऐब्रा २,१७) इति वाक्यशेषात् 'तिस्रो भूमीर्धारयन्' (ऋ २,२७,८) इति मन्त्रवर्णाच्च तिस्रः परावत इत्युक्तम्। तथा पञ्च जनान्। निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः तान् अति एतु। मनुष्यसंचारदेशं विहाय दूरं गच्छत्वित्यर्थः। तथा तिस्रः त्रिसंख्याका रोचनाः सूर्यचन्द्राग्नीनां रोचमानाः प्रभा अत्येतु अतिक्रम्य गच्छतु। सूर्यादीनां प्रभा यत्र न सन्ति तं देशं गच्छत्वित्यर्थः। रुच दीप्तौ। 'अनुदात्तेतश्च हलादेः' (पा ३,२,१४९) इति युच्। यतो न पुनरायति इत्यादि व्याख्यातम्। उक्तं कालबहुत्वं विशिनष्टि—यावत् सूर्य इति। यावत् यावत्कालपर्यन्तं दिवि द्युलोके सूर्यः सर्वस्य प्रेरक आदित्यः असत् भवेत्। अस्तेर्लेटि अडागमः। तावत्कालपर्यन्तं शत्रुः पुनर्नावर्तताम् इत्यर्थः।

---

१. स्वा पै १९,१५,९ तैब्रा ३,३,११,३ आपश्रौ ३,१४,२. २. देवो अचीक्लृपत् पै. † नयतु तैब्रा ३,३,११,४ आपश्रौ. ३. °रायसि पै. तैब्रा. आपश्रौ. ४. इुहि ऋ ८,३२,२२ पै १९,१५,८ तैब्रा ३,३,११,३ आपश्रौ. ५. जनां B,B[h],D,K[m],S[m],Cs. ६. क्षतु पै. ७. इुहि पै. तैब्रा. आपश्रौ. ८. चत्वारि पै.

'य एनं' परिपीदन्ति समादधति चक्षसे।
संप्रेद्धो 'अग्निर्जिह्वाभिरुदेतु' हृदयादधि ॥ १ ॥

ये । एनम् । परिऽसीदन्ति । समऽआदधति । चक्षसे ।
समऽप्रेद्धः । अग्निः । जिह्वाभिः । उत् । एतु । हृदयात् । अधि ॥ १ ॥

एनं स्वस्त्ययनकामं ये रक्षःप्रभृतयो हिंसकाः परिषीदन्ति हिंसितुं परित उपविशन्ति ततः चक्षसे हिंसायै समादधति समाहिताः संनद्धा भवन्ति । नृचक्षा राक्षसः इतिवत् चष्टिरत्र हिंसाकर्मा । तस्माद् असुनि 'असनयोश्च' ( पावा० २,४,५४ ) इति ख्याञादेशाभावः । यद्वा एनम् अग्निं परिचरितुं ये जनाः पर्युपविशन्ति चक्षसे दर्शनाय समादधति इध्मप्रक्षेपेण प्रज्वलयन्ति । तैः संप्रेद्धः प्रकर्षेण संदीपितोऽग्निः स्वकीयाभिर्जिह्वाभिः सह हृदयादधि अस्मदीयाद्धृदयाद् उदेतु उद्गच्छतु । उत्पद्यताम् इत्यर्थः । 'अहं त्वदस्मि मदसि त्वमेतत् । ममासि योनिस्तव योनिरस्मि' ( तैब्रा १,२,१,२० ) इति हि निगमः । यद्वा पर्युपविशतां रक्षःप्रभृतीनां हृदयात् संप्रवृद्धोऽग्निः उदेतु । तान् प्रदग्धुम् इत्यर्थः ।

अग्नेः सांतपनस्याहमायुषे पदमा रभे ।
अद्धातिर्यस्य पश्यति धूममुद्यन्तमास्यतः ॥ २ ॥

अग्नेः । साम्ऽतपनस्य । अहम् । आयुषे । पदम् । आ । रभे ।
अद्धातिः । यस्य । पश्यति । धूमम् । उत्ऽयन्तम्[३] । आस्यतः ॥ २ ॥

सांतपनस्य अत्यर्थं तपनं संतपनं तत्संबन्धिनः अग्नेः पदम् स्थानं तद्वाचिपदात्मकं शब्दं वा आयुषे जीवनाय अहम् आ रभे उपक्रमे । यस्य अग्नेः आस्यतः आस्याद् मुखाद् उद्यन्तम् उद्गच्छन्तं धूमम् अद्धातिः । अद्धा प्रत्यक्षम् अतति सततं ध्यानेन प्राप्नोतीति अद्धातिः एतत्संज्ञो महर्षिः पश्यति साक्षात्करोति । यद्वा यस्याग्नेर्धूमं तपःप्रभावात् स्वस्माद् आस्याद् उद्गच्छन्तं पश्यति तादृशस्याग्नेः पदम् इति संबन्धः ।

यो अस्य समिधं वेद क्षत्रियेण समाहिताम् ।
'नाभिह्वारे' पदं नि दधाति' स मृत्यवे ॥ ३ ॥

यः । अस्य । समऽइधम् । वेद । क्षत्रियेण । समऽआहिताम् ।
न । अभिऽह्वारे । पदम् । नि । दधाति । सः । मृत्यवे ॥ ३ ॥

---

१. पैमं० पै १९,१५,१२.　२. °हृदयद् पै.　३. °यन्तम् P.　४. मा विह्वारे पै १९,१५,१४.　५. दधातु पै.

क्षत्रियेण क्षत्रजातीयेन विजयकामेन पुंसा समाहिताम् सम्यग् आहितां क्षिप्ताम् अस्य अग्नेः समिधम् संदीपनीम् आहुतिं यः पुरुषो वेद जानाति स वेदिता मृत्यवे मृत्युं गन्तुम् अभिह्वारे अभितः कुटिले मृत्युप्राप्तिनिमित्ते गजव्याघ्रादिभूयिष्ठे स्थाने पदं न नि दधाति न निक्षिपति। इत्थं वेदितुर्मरणशङ्कापि नैवोदेतीत्यर्थः।

नैनं घ्नन्ति पर्यायिणो न सुन्नाँ[1] अव[2] गच्छति।
अग्नेर्यः क्षत्रियो विद्वान्नाम गृह्णात्यायुषे ॥ ४ ॥

न। एनम्। घ्नन्ति। परिऽआयिनः। न। सन्नान्। अव। गच्छति।
अग्नेः। यः। क्षत्रियः। विद्वान्। नाम। गृह्णाति[3]। आयुषे ॥४॥

एनं स्वस्त्ययनकामं पर्यायिणः परित आगन्तारः शत्रवो न घ्नन्ति न हिंसन्ति। सन्नान् समीपस्थानपि तान् अयं नावगच्छति नावबुध्यते। अस्य ज्ञानविषयेऽपि शत्रवो नावस्थातुं शक्नुवन्तीत्यर्थः। कः पुनरसौ इत्याह—यः क्षत्रियः विद्वान् उक्तप्रकारेण माहात्म्यं जानन् अग्नेर्नाम स्तावकं नामधेयम् आयुषे चिरकालजीवनाय गृह्णाति उच्चारयति। नैवेनं घ्नन्तीति संबन्धः।

इति अष्टमेऽनुवाके द्वितीयं सूक्तम्।

'अस्थाद् द्यौः' इति तृचेन पलायनशीलायाः स्त्रिया निरोधनकर्मणि रज्जुवेष्टनम् अभिमन्त्र्य मध्यमस्थूणायां बध्नीयात्।

तथा तस्मिन्नेव कर्मणि स्त्रीखट्वायाः पादमनेन तृचेन अभिमन्त्र्य उपले बध्नीयात्।

तथा तस्मिन्नेव कर्मणि अनेन तृचेन तिलान् जुहुयात्।

सूत्रितं हि—"'अस्थाद् द्यौः' इति [4]निवेष्टनम्। आवेष्टनेन वंशाग्रमववध्य मध्यमायां[4] बध्नाति" (कौसू ३६,५;६) इत्यादि।

'तेन भूतेन' इति तृचेन विवाहे आज्यं हुत्वा वरवध्वोर्मूर्ध्नि संपातान् आनयेत्।

तथा तत्रैव कर्मणि तेनैव तृचेन रसान् स्थालीपाकं च संपात्य अभिमन्त्र्य भोजनसमये जायापती प्राशयेत्।

तथा तस्मिन्नेव कर्मणि अनेन तृचेन आज्यमिश्रैर्यवैः अञ्जलिं परिपूर्य जुहुयात्।

---

१. सुन्नां $B^b, K^m$, R, $S^m$. २. इव पै ८,३,१२ [मूको.]. ३. गृह्णाति शंपा.
४. निवेष्टनमावेष्टनेन वंशाग्रमिव मध्यमायां S'.

सूत्रितं हि विवाहप्रकरणे—'तेन भूतेन' (अ ६,७८), 'तुभ्यमग्रे' (अ १४,२), 'शुम्भनी' (अ ७,११७) इति प्रक्रम्य "मूर्ध्नोः संपातान् आनयति। 'तेन भूतेन' इति [1]समशनम्। रसान् आशयति[1] स्थालीपाकं च। यवानामाज्यमिश्राणां पूर्णाहुतिं[2] जुहोति" (कौसू ७८,९;११;१४-१६) इति।

अस्थाद्[3] द्यौरस्थात्[4] पृथिव्यस्थाद्[5] विश्वमिदं जगत् ।
[5]आस्थाने पर्वता अस्थुः[†] स्थाम्न्यश्वाँ[‡] अतिष्ठिपम्[6] ॥१॥

अस्थात् । द्यौः । अस्थात् । पृथिवी । अस्थात् । विश्वम् । इदम् । जगत् ।
आऽस्थाने । पर्वताः । अस्थुः । स्थाम्नि । अश्वान् । अतिष्ठिपम् ॥ १ ॥

नियन्तुरीश्वरस्य आज्ञया यथा द्यौरस्थात् अप्रचलिता स्वस्थाने तिष्ठति। पृथिव्यपि यथा अस्थात् निश्चलं तिष्ठति । तयोर्द्यावापृथिव्योर्मध्ये वर्तमानं विश्वम् सर्वम् इदं जगत् स्वे स्वे स्थाने अस्थात् तिष्ठति। पर्वता मेरुमन्दरादयोऽपि आस्थाने ईश्वरेण कल्पिते स्थाने अस्थुः तिष्ठन्ति । एवमेव हे योषित् स्थाम्नि तिष्ठत्यस्मिन् गृहं सर्वम् इति स्थामा स्थूणा ।'आतो मनिन्°' ( पा ३,२,७४ ) इति मनिन्प्रत्ययः। तत्र त्वाम् अतिष्ठिपम् बन्धनेन स्थापयामि । अश्वान् इति लुप्तोपमम् । यथा दुष्टान् अश्वान् सादिनो रज्जुभिर्बध्नन्ति तद्वत् । यद्वा स्थाम्नि स्थाने गृहे अश्वानिव त्वाम् अनेन कर्मणा स्थापयामि । तिष्ठतेर्ण्यन्ताच्छान्दसे लुङि चङि 'तिष्ठतेरित्' (पा ७,४,५) इति इत्त्वम्।

य उदानट् परायणं[7] य [7]उदानण्न्यायनम्[8] ।
आवर्तनं निवर्तनं [8]यो गोपा अपि[†] तं हुवे[9] ॥ २ ॥

यः । उत्ऽआनट् । पराऽअयनम् । यः । उत्ऽआनट् । निऽअयनम्[9] ।
आऽवर्तनम् । निऽवर्तनम् । यः । गोपाः । अपि । तम् । हुवे ॥ २ ॥

यो देवः परायणम् पराङ्मुखगमनम् उदानट् उत्कर्षेण व्याप्नोति । तथा न्ययनम् नितरां नीचीनं वा गमनं यो देवः उदानट् उत्कर्षेण व्याप्नोति । नशतिर्व्याप्तिकर्मा। अस्मात् छान्दसे लुङि 'मन्त्रे घस°' ( पा २,४,८० ) इति च्लेर्लुक् । 'छन्दस्यपि दृश्यते' (पा ६,४,७३ ) इति आडागमः । 'नश्यजन्ते'[10] । यश्च देवः गोपाः गोपायिता पलायमानानाम् आवर्तनम् आगमनं निवर्तनम् गतिप्रतिरोधं च कर्तुं शक्नोति । अपिः संभावनायाम्। इत्थं संभाव्यमानं तं देवं हुवे आह्वयामि । 'बहुलं छन्दसि' ( पा ६,१,३४ ) इति ह्वयतेः संप्रसारणम्।

---

1. समशनं रसानानयति S'. 2. °र्णाहुतिं B। 3. आस्थात् पै १९,२३,९. 4. पृथिवी स्थास्थाद् पै. 5. तिष्ठन्ति पर्वता इमे स्थामश्वा अरंसत पै १९,१६,१. † अस्थुः B,B',D,K,K[m],R,S[m],Cs. ‡ °म्न्यश्वाँ D,Cs 6. न्ययनं ऋ १०,१९,५ पै १९,१६,२. 7. °नट् परायणम् ऋ. पै. 8. अपि गोपा निवर्तताम् ऋ. † अपि A. 9. °अयनं > °अयन° Cp. 10. °न्त्वे पा.

जातवेदो नि वर्तय शतं ते सन्त्वावृतः ।
सहस्रं त उपावृतस्ताभिर्नः पुनरा कृधि[1] ॥ ३ ॥

जातऽवेदः । नि । वर्तय । शतम् । ते । सन्तु । आऽवृतः ।
सहस्रम् । ते । उपऽआवृतः । ताभिः । नः । पुनः । आ । कृधि ॥ ३ ॥

हे जातवेदः जातानां वेदितः अग्ने पलायनशीलाम् इमां निवर्तय पलायनात् प्रच्यावय । गृहे स्थापयेत्यर्थः । ते तव आवृतः आवर्तनोपायाः शतम् शतसंख्याकाः अस्मिन् विषये सन्तु भवन्तु । तथा सहस्रम् सहस्रसंख्याकाः ते त्वदीया उपावृतः समीपदेशप्राप्त्युपायाः सन्तु भवन्तु । ताभिरावृद्भिः उपावृद्भिश्च नः अस्माकम् इमां स्त्रियं पुनरा कृधि अभिमुखीं कुरु ।

तेन भूतेन[2] हविषाऽयमा प्यायतां पुनः ।
जायां यामस्मा आवाक्षुस्तां[3] रसेनाभि वर्धताम् ॥१॥

तेन । भूतेन । हविषा । अयम् । आ । प्यायताम् । पुनः । जायाम् ।
याम् । अस्मै । आऽअवाक्षुः । ताम् । रसेन । अभि । वर्धताम् ॥ १ ॥

तेन प्रसिद्धेन भूतेन समृद्धिकरेण हूयमानेन हविषा अयं पतिः पुनरा प्यायताम् पुनः पुनः प्रजापश्वादिभिः समृद्धो भवतु । अस्मै पत्ये यां स्त्रियं जायाम् आवाक्षुः जायात्वेन समीपम् आनैषुः[4] विवाहकर्तारः पितृमात्रादयः । वह प्रापणे । लुङि सिचि 'एकाच उपदेशेऽनुदात्तात्' ( पा ७,२,१० ) इति इट्प्रतिषेधः । तां जायां रसेन दधिमधुघृतादिना अभि वर्धताम् अयं हूयमानोऽग्निरभिवर्धयतु । छन्दस्युभयथा' ( पा ३,४,११७ ) इति शप आर्धधातुकत्वात् 'णेरनिटि' ( पा ६,४,५१ ) इति णिलोपः ।

अभि वर्धतां पयसाऽभि[5] राष्ट्रेण वर्धताम् ।
रय्या सहस्रवर्चसेमौ[6] स्तामनुपक्षितौ[7] ॥ २ ॥

अभि । वर्धताम् । पयसा । अभि । राष्ट्रेण । वर्धताम् ।
रय्या । सहस्रऽवर्चसा । इमौ । स्ताम्[8] । अनुपऽक्षितौ ॥ २ ॥

---

१. °भिरेनं निवर्त्तय पै १९,१६,४.　२. भूतस्य पै १९,१६,९.　३. आविदन् सा पै.
४. आनयिषुः शंपा.　५. प्रजयाभि पै १९,१६,१०.　६. एता सहस्रवीर्यांविमौ पै.
७. तु. A,O; वैतु. शंपा. स्ताम°; स्तामनु° > स्तामनु° Cs; °मनपेक्षितौ मंत्रा १,८,७.
८. तु. मंपा.; वैतु. शंपा. स्ताम्.

पूर्वमन्त्रोक्त एवार्थः अनया विव्रियते — अयं वरो वधूश्च पयसा क्षीरेण अभि वर्धताम्। गोभिः समृध्यताम् इत्यर्थः। तथा राष्ट्रेण अभि वर्धताम्। ग्रामादिसमृद्धिर्भवत्वित्यर्थः। सहस्रवर्चसा अपरिमिततेजसा रय्या धनेन इमौ जायापती अनुपक्षितौ अनुपक्षीणौ संपूर्णकामौ स्ताम् भवताम्। अस्तेर्लोटि तसस्तामादेशे 'श्नसोरल्लोपः' (पा ६,४,१११) इति अकारलोपः।

त्वष्टा॑ जा॒याम॑जनय॒त् त्वष्टा॒ऽस्यै॒ त्वां पति॑म्[१]।
त्वष्टा॑ स॒हस्र॒मायूं॑षि दी॒र्घमायुः॑ कृणोतु[२] वाम् ॥ ३ ॥

त्वष्टा॑। जा॒याम्। अ॒ज॒न॒य॒त्। त्वष्टा॑। अ॒स्यै॒। त्वाम्। पति॑म्।
त्वष्टा॑। स॒ह॒स्र॑म्। आयूं॑षि। दी॒र्घम्। आयुः॑। कृ॒णो॒तु॒। वा॒म् ॥ ३ ॥

त्वष्टा तनूकर्ता शिल्पकारी एतत्संज्ञो देवः जायाम् स्त्रियम् अजनयत् उदपादयत्। जायतेऽस्याम् अपत्यरूपेण पतिरिति जाया। श्रूयते हि—'तज्जाया जाया भवति यद् अस्यां जायते पुनः' (ऐब्रा ७,१३) इति। ईदृक्सामर्थ्योपेतं स्त्रीजन्म कृतवान् इत्यर्थः। हे वर अस्यै अस्या जायायास्त्वां पतिम् भर्तारं त्वष्टा एव अजनयत्। स्त्रीपुंसस्रष्टेस्त्वष्टैव कर्तेत्यर्थः। श्रूयते हि तैत्तिरीयके—'त्वष्टा वै पशूनां मिथुनानां प्रजनयिता' (तै २,१,८,३;४) इति। यस्माद् एवं तस्मात् हे जायापती वां युवयोः त्वष्टा देवः सहस्रम् सहस्रसंवत्सरपरिमितानि आयूंषि एवमात्मकं दीर्घम् आयुः कृणोतु करोतु। कृवि हिंसाकरणयोश्च। 'धिन्विकृण्व्योर च' (पा ३,१,८०) इति उप्रत्ययः। 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः' (पा ८,१,२०) इति युष्मदो वाम् आदेशः। स च 'अनुदात्तं सर्वमपादादौ' (पा ८,१,१८) इत्यनुवृत्तेरनुदात्तः।

इति अष्टमेऽनुवाके तृतीयं सूक्तम्।

'अयं नो नभसस्पतिः' इति तृचेन धान्यस्फातिकामः अश्मानं संप्रोक्ष्य अभिमन्त्र्य कुसूलादिधान्यनिधानस्थानेषु निधाय तस्योपरि अन्वृचं तिस्रो धान्यमुष्टीर्निदध्यात्। सूत्रितं हि—"'अयं नो नभसस्पतिः' इति पल्येऽश्मानं संप्रोक्ष्य अन्वृचं काशीन् ओप्य आवापयति" (कौसू २१,७) इति।

'अन्तरिक्षेण पतति' (अ ६,८०) इति तृचेन काककपोतश्येनादिपक्षिहतमङ्गं श्वपदस्थानमृत्तिकामभिमन्त्र्य प्रलिम्पेत्।

तथा तत्रैव कर्मणि शुनोऽङ्गस्या मक्षिका अनेन अभिमन्त्र्य अग्नौ प्रक्षिप्य तथाविधमङ्गं धूपयेत्।

---

१. पाठि दृष्टो वे १९,१९,११. २. °मायुष्कृ° D,S^m,Cs.

"'अन्तरिक्षेण' (अ ६,८०) इति पक्षहतम् अङ्गं[1] [2]मन्त्रोक्तमृत्तिकया[2] । कीटेन धूपयति" ( कौसू ३१,१८;१९ ) इति सूत्रात् ।

अयं नो नभसस्पतिः[3] संस्फानो अभि रक्षतु । [4]असमातिं गृहेषु नः[4]† ॥१॥

अयम् । नः । नभसः । पतिः । सम्ऽस्फानः । अभि । रक्षतु । असमातिम् । गृहेषु । नः ॥

अयं परिदृश्यमानोऽग्निः नभसः द्युलोकस्य पतिः हविःप्रदानादिना पालयिता । यद्वा नभ इति आदित्यनाम । अग्निस्तस्यापि आहुतिद्वारा पालयिता । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' ( मस्मृ ३,७६ ) इति स्मृतेः । ईदृशोऽग्निः संस्फानः धान्यराशेर्वर्धयिता सन् नः अस्मान् अभि रक्षतु । तथा नः अस्माकं गृहेषु असमातिम् । मा माने इत्यस्माद् औणादिकस्तिप्रत्ययः । मातिर्मानं परिच्छेदस्तेन सह वर्तत इति समातिः तद्वैपरीत्यम् असमातिः । कुसूलस्थानां धान्यानां परिच्छेदराहित्यं करोतु इत्यर्थः । अस्य तृचस्य क्रमाद् अग्निवाय्वादित्यपरत्वं तैत्तिरीयसंहितायां[5] अवगन्तव्यम् । तत्र हि एवम् आम्नायते—'अयं नो नभसा पुर इत्याह । अग्निर्वै नभसा पुरः । अग्निमेव तद् आह एतन्मे गोपायेति । स त्वं नो नभसस्पत इत्याह । वायुर्वै नभसस्पतिः । वायुमेव तद् आह एतन्मे गोपायेति । देव संस्फानेत्याह । असौ वा आदित्यो देवः संस्फानः । आदित्यमेव तद् आह एतन्मे गोपायेति' ( तै ३,३,८,६ ) इति ।

त्वं[6] नो [7]नभसस्पत[7] ऊर्जं [8]गृहेषु धारय[8] । आ पुष्टमेत्वा वसु ॥ २ ॥

त्वम् । नः । नभसः । पते । ऊर्जम् । गृहेषु । धारय ।
आ । पुष्टम् । एतु । आ । वसु ॥ २ ॥

हे नभसस्पते अन्तरिक्षस्य पालयितर्वायो त्वं नः अस्माकं गृहेषु ऊर्जम् बलकरं रसवद् अन्नं धारय स्थापय । तथा पुष्टम् प्रजापश्वादिकम् आ एतु आगच्छतु । वसु धनं च ऐतु आगच्छतु ।

देव संस्फान [9]सहस्रपोषस्येशिषे[9] ।
तस्य नो रास्व[10] तस्य नो[11] धेहि[12] तस्य ते भक्तिवांसः[13] स्याम[14] ॥३॥

देव । सम्ऽस्फान । सहस्रऽपोषस्य । ईशिषे । तस्य । नः । रास्व ।
तस्य । नः । धेहि । तस्य । ते । भक्तिऽवांसः । स्याम ॥ ३ ॥

---

१. नास्ति Bl. २. मन्त्रोक्तं चङ्क्रमया Bl. ३. °भसा पुरः तै ३,३,८,२. ४. गृहाणामसमर्त्यै बहवो नो गृहा असन् तै. † नास्ति-E^4H.O. ५. °यब्राह्मणात् शंपा. ६. स त्वं तै. ७. °सस्पतिर् पै १९,१६,१८. ८. मो धेहि भद्रया तै ३,३, ८,३. ९. °हस्रपो° तै. पै १९,१६,१९. १०. धेहि पै. ११. त पै. १२. भक्षीमहि पै. १३. भक्तिवानः मै १,४,३ ^काठ ७,३ भक्षिवाणः तैब्रा ३,७,५,७ आपश्रौ ३,२,११. १४. भूयास्म पै.

हे देव दानादिगुणयुक्त हे संस्फान प्रवृद्ध एवंभूत हे आदित्य सहस्रपोषस्य सहस्रसंख्याकानां प्रजानां पोषकस्य बहुलस्य धनस्य त्वम् ईशिषे ईश्वरो भवसि। ईश ऐश्वर्ये। अदादित्वात् शपो लुक्। 'ईशः से' (पा ७,२,७७) इति इडागमः। 'अधीगर्थदयेशाम्°' (पा २,३,५२) इति कर्मणि षष्ठी। तस्य तथाविधस्य धनस्य। 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। तथाविधं धनं नः अस्मभ्यं रास्व प्रयच्छ। रा दाने। यद्वा भागपदाध्याहारेण योज्यम्। तथा तस्य धनस्य भागं नः अस्माकं धेहि भोगार्थं धारय पोषय वा। ते त्वदीयस्य तस्य धनस्य भक्तिवांसः भागवन्तस्त्वत्प्रसादात् स्याम भवेम। भक्तिशब्दात् 'छन्दसीवनिपौ' (पावा ५,२,१०९) इति मत्वर्थीयो वनिप्। सकारोपजनश्छान्दसः।

अन्तरिक्षेण पतति विश्वा[1] [2]भूतावचाकशत्[3]।
शुनो [4]दिव्यस्य यन्महस्तेना[5] ते[6] हविषा विधेम[7] ॥ १ ॥

अन्तरिक्षेण। पतति[5]। विश्वा। भूता। अवऽचाकशत्।
शुनः। दिव्यस्य। यत्। महः। तेन। ते। हविषा। विधेम ॥ १ ॥

अन्तरिक्षेण आकाशमार्गेण काककपोतादिः पक्षी पतति पुरुषस्य अङ्गे निपतति। किं कुर्वन्। विश्वा विश्वानि सर्वाणि भूता भूतानि भूतजातानि अवचाकशत्। अवचाकशत् पश्यतिकर्मा। जिघत्सया पुनः पुनः पश्यन्। तद्दोषशान्त्यर्थं दिव्यस्य दिवि भवस्य शुनः यत् महः तेजोऽस्ति तेन हविषा हे अग्ने ते त्वां विधेम परिचरेम। अन्तरिक्षपक्ष्युपघातजं[6] दोषं दिव्यस्य शुनो महसा तुष्टोऽग्निर्निवर्तयतु इत्यर्थः।

ये त्रयः कालकाञ्जा दिवि देवा[7] इव श्रिताः।
तान्सर्वानह्व ऊतयेऽस्मा अरिष्टतातये ॥ २ ॥

ये। त्रयः। कालकाञ्जाः। दिवि। देवाःऽइव। श्रिताः।
तान्। सर्वान्। अह्वे। ऊतये। अस्मै। अरिष्टऽतातये ॥ २ ॥

कालकाञ्जाख्या ये त्रयः असुराः सत्कर्मवशाद् दिवि देवा इव श्रिताः आश्रिता वर्तन्ते। तथा च तैत्तिरीयकम्—'कालकञ्जा वै नामासुरा आसन्। ते सुवर्गाय लोकायाग्निम्

1. मशो पै १९,१६,१२. 2. रूपाणु° ऋ १०,१३६,४. 3. °स्येदं महस्तस्मा एतेन पै. 4. परोति पै. 5. पतति P. 6. °मान्तरिक्ष° S'. 7. यातौ ऋ १,१८७,४.

अविन्वत' इति प्रक्रम्य 'स इन्द्र इष्टकामावृहत् । तेऽवाकीर्यन्त । येऽवाकीर्यन्त त 'ऊर्णावभयोऽभवन्[1] । द्वावुदपतताम् । तौ दिव्यौ श्वानावभवताम्' ( तैब्रा १,१,२,४-६ ) इति । तान् तथाविधान् सर्वान् कालकाञ्जान् अह्वे आह्वयामि । ह्वयतेश्छान्दसे लुङि 'लिपिसिचिह्वश्च' ( पा ३,१,५३ ) इति च्लेरङ् आदेशः । किमर्थमाह्वानम् । ऊतये रक्षणार्थम् अस्मै अस्य पुरुषस्य । षष्ठ्यर्थे चतुर्थी । अरिष्टतातये । रिष्टं हिंसा तदभावः अरिष्टम् । तस्य करणाय काककपोतादिपक्ष्युपघातजनितदोषशान्तये इत्यर्थः । 'शिवशमरिष्टस्य करे' ( पा ४,४,१४३ ) इति अरिष्टशब्दात् करोत्यर्थे तातिल्प्रत्ययः । 'लिति' ( पा ६,१,१९३ ) इति प्रत्ययात् पूर्वस्य उदात्तत्वम् ।

अप्सु ते जन्म दिवि ते सधस्थं समुद्रे 'अन्तर्महिमा' ते पृथिव्याम् ।
शुनो 'दिव्यस्य यन्महस्तेना ते' हविषा विधेम' ॥ ३ ॥

अप्ऽसु । ते । जन्म । दिवि । ते । सधऽस्थम् । समुद्रे । अन्तः । महिमा । ते । पृथिव्याम् । शुनः । दिव्यस्य । यत् । महः । तेन । ते । हविषा । विधेम ॥ ३ ॥

हे अग्ने ते तव अप्सु उदकेषु जन्म और्ववैद्युतादिरूपेण दृश्यते । दिवि द्युलोके ते तव आदित्यात्मनः सधस्थम् सहस्थानम् । तथा समुद्रे अन्तः मध्ये पृथिव्यां च ते तव महिमा माहात्म्यं दृश्यते । 'दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः । तृतीयमप्सु नृमणा अजस्रम्' ( ऋ १०,४५,१ ) इति हि मन्त्रान्तरम् । शुनो दिव्यस्य इत्यादि व्याख्यातम् ।

इत्यष्टमेऽनुवाके चतुर्थं सूक्तम् ।

'यन्तासि' इति तृचेन गर्भाधाने कङ्कणादिकं संपात्य अभिमन्त्र्य स्त्रिया हस्ते बध्नीयात् । "'यन्तासि' इति मन्त्रोक्तं बध्नाति" ( कौसू ३५,११ ) इति सूत्रात् ।

'आगच्छतः' इति तृचेन विवाहकामः इन्द्रं यजते उपतिष्ठते वा । "'आगच्छतः' ( अ ६,८२ ) इति जायाकामः" ( कौसू ५९,११ ) इति सूत्रात् ।

तथा विवाहे अनेन तृचेन आज्यं हुत्वा वरवध्वोर्मूर्ध्नि संपातान् आनयेत् । "'आगच्छतः' । 'सविता प्रसवानाम्' ( अ ५,२४ ) इति मूर्ध्नोः संपातान् आनयति[4]" ( कौसू ७८,१०;११ ) इति सूत्रम् ।

यन्ताऽसि यच्छसे हस्तावप रक्षांसि सेधसि ।
प्रजां धनं च गृह्णानः 'परिहस्तो अभूदयम्' ॥ १ ॥

---

१. ऊर्णनाभ° शंपा.; ऊर्णावाभ° मै १,६,९. २. आत्मा म° पै १९,१६,१३. ३. °स्येदं महस्तस्मा एतेन पै. ४. जुहोमि पै. ५. आनयतेति S'. ६. °हस्तोऽभू° पै १९,१७,१.

यन्ता । असि । यच्छसे । हस्तौ । अप । रक्षांसि । सेधसि ।
प्रऽजाम् । धनम् । च । गृह्णानः । परिऽहस्तः । अभूत् । अयम् ॥ १ ॥

हे अग्ने त्वं यन्ताऽसि गर्भव्यापत्कराणां रक्षःप्रभृतीनां नियामको भवसि । अत एव आत्मीयौ हस्तौ यच्छसे आयतौ प्रसारयसि । ताभ्यां हस्ताभ्यां रक्षांसि गर्भधारणविघातकानि अप सेधसि अपगमयसि । प्रजाम् पुत्रादिरूपां तद्भोगार्थं धनं च गृह्णानः[1] कुर्वाणः अयम् अग्निः परिहस्तः हस्तं परिवेष्ट्य वर्तमानः रक्षाकरः प्रतिसरः अभूत् ।

परिहस्त वि धारय योनिं गर्भाय धातवे[2] ।
मर्यादे पुत्रमा धेहि तं त्वमा गमयागमे[3] ॥ २ ॥

परिऽहस्त । वि । धारय । योनिम् । गर्भाय । धातवे । मर्यादे ।
पुत्रम् । आ । धेहि । तम् । त्वम् । आ । गमय । आऽगमे ॥ २ ॥

हे परिहस्त कङ्कणादिरूप प्रतिसर योनिम् गर्भाशयस्थानं वि धारय विवृतम् अवस्थापय । किमर्थम् । गर्भाय धातवे गर्भं धातुं धारयितुम् । 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वाच्चतुर्थी । धाञस्तुमर्थे तवेन्प्रत्ययः । मर्यादे मर्याः मरणधर्माणो मनुष्याः तैरादीयमाने स्वोत्पत्त्यर्थं स्वीक्रियमाणे स्थाने गर्भाशये हे जाये त्वं पुत्रम् आ धेहि अभिमुखं धारय । यद्वा हे मर्यादे मर्येण मनुष्येण स्वभोगार्थम् आदीयमाने । जायायाः संबोधनम् । हे जाये त्वं पत्युर्मम आगमे[3] आगमने सति तम् अभीष्टं पुत्रम् आ गमय । उत्पादयेत्यर्थः ।

यं परिहस्तमबिभरदितिः पुत्रकाम्या ।
त्वष्टा तमस्या आ बध्नाद् यथा पुत्रं [4]जनादिति ॥ ३ ॥

यम् । परिऽहस्तम् । अबिभः । अदितिः । पुत्रऽकाम्या । त्वष्टा ।
तम् । अस्यै । आ । बध्नात् । यथा । पुत्रम् । जनात् । इति ॥ ३ ॥

अदितिः देवमाता पुत्रकाम्या पुत्रम् आत्मन इच्छन्ती यं परिहस्तम् हस्तं परिवेष्ट्य वर्तमानं कङ्कणादिरूपं प्रतिसरम् अबिभः धृतवती । पुत्रशब्दात् कर्मण इच्छार्थे 'काम्यच्च' (पा ३,१,९) इति काम्यच् । 'सनाद्यन्ताः' (पा ३,१,३२) इति धातुसंज्ञायां पचाद्यच् । अबिभरिति । डुभृञ् धारणपोषणयोः । अस्मात् लङि 'हल्ङ्याप्' (पा ६,१,६८) इत्यादिना तिलोपे 'भृञामित्' (पा ७,४,७६) इति अभ्यासस्य इत्वम् । तं तथाविधं प्रतिसरम् अस्यै अस्या जायायाः । षष्ठ्यर्थे

1. पैगु. मैगा. द. 2. कर्तवे पै १९,१७,२. 3. °यागमः पै [मूको.]
4. पुत्रादिति पै १९,१७,२.

चतुर्थी। त्वष्टा आ वध्नात् आवध्नातु यथा येन प्रकारेण एषा पुत्रं जनात् जनयेत् इति अनेन अभिप्रायेण। त्वष्टा वध्नातु इति संबन्धः। जनात् इति। जनेर्ण्यन्तात् लेटि आडागमः। 'छन्दस्युभयथा' (पा ३,४,११७) इति आर्धधातुकत्वात् णिलोपः।

आगच्छ॑त आग॑तस्य॒ नाम॑ गृह्णाम्याय॒तः।
इन्द्र॑स्य वृत्र॒घ्नो व॑न्वे[1] वास॒वस्य॑ श॒तक्र॑तोः॥ १॥

आऽगच्छ॑तः। आऽग॑तस्य। नाम॑। गृ॒ह्णामि॒। आऽय॒तः।
इन्द्र॑स्य। वृ॒त्रऽघ्नः। व॒न्वे॒। वा॒स॒वस्य॑। श॒तऽक्र॑तोः॥ १॥

आगच्छतः वर्तमानागमनस्य आगतस्य अस्मदन्तिकं प्राप्तस्य इन्द्रस्य नाम प्रीतिकरं[2] वृत्रहादिनामधेयं गृह्णामि उच्चारयामि आयतः नियतोऽहं विवाहकामः। यद्वा आयत इत्यपि षष्ठी उत्तरवाक्ये संबध्यते। आयतः आगच्छतः वृत्रघ्नः वृत्रं हतवतः इन्द्रस्य वासवस्य वसुभिरुपास्यमानस्य शतक्रतो[3]। वर्णविकारश्छान्दसः। शतं क्रतवः कर्माणि वीर्यप्रख्यापकानि वृत्रवधादीनि यस्य स तथोक्तस्तस्य। सर्वत्र कर्मणि षष्ठी। एवंविधम् इन्द्रं वन्वे अहम् अभिमतफलं याचामि। वनु याचने। तनादित्वाद् उप्रत्ययः।

येन॑ सू॒र्यां सा॑वि॒त्रीम॒श्विनो॒हतुः॑ प॒था।
तेन॒ माम॑ब्रवी॒द् भगो॑ जा॒याम॑ा व॑हता॒दिति॑॥ २॥

येन॑। सू॒र्याम्। सा॒वि॒त्रीम्। अ॒श्विना॑। ऊ॒हतुः॑। प॒था।
तेन॑। माम्। अ॒ब्रवी॒त्। भगः॑। जा॒याम्। आ। व॒ह॒ता॒त्। इति॑॥ २॥

येन पथा अध्वना अश्विना अश्विनौ एतत्संज्ञौ देवौ सावित्रीम् सवितुः पुत्रीं सूर्याम् सूर्याख्यां स्त्रियम् ऊहतुः ऊढवन्तौ। विवाहकर्मणा जायात्वेन लब्धवन्तौ इत्यर्थः। तद्विवाहप्रकारश्च दाशतय्यां—'सत्येनोत्तभिता' (ऋ १०,८५) इति सूक्ते प्रपञ्चितः। ऐतरेयकब्राह्मणे च—'प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् सूर्यां सावित्रीम्। तस्यै सर्वे देवा वरा आगच्छन्। तस्या एतत् सहस्रं वहतुम् अन्वाकरोत्। यद्[4] एतद् आश्विनम् इत्याचक्षते' (ऐब्रा ४,७) इत्यादिना प्रतिपादितः। ऊहतुरिति। वह प्रापणे इत्यस्मात् लिटि यजादित्वात्संप्रसारणद्विर्वचनादिकार्ये रूपम्। पथेति। पथिन्शब्दात् तृतीयैकवचने 'भस्य टेर्लोपः' (पा ७,१,८८) इति टिलोपे उदात्तनिवृत्तिस्वरेण

---

१. राज्ञो पै १९,१७,४.　　२. प्रतीकरं S'.　　३. वेंद्र. मंपा. द्र.　　४. सद् शंपा.

विभक्तेरुदात्तत्वम् । तेन पथा जायाम् भार्याम् आ वहतात् आवह आनय इति भगो देवः मा विवाहार्थिनं प्रति अब्रवीत् । विवाहोपायमुपदिष्टवान् इत्यर्थः ।

यस्तेऽङ्कुशो वसुदानो बृहन्निन्द्र हिरण्ययः ।
तेना जनीयते जायां मह्यं धेहि शचीपते ॥ ३ ॥

यः । ते । अङ्कुशः । वसुऽदानः । बृहन् । इन्द्र । हिरण्ययः ।
तेन । जनिऽयते । जायाम् । मह्यम् । धेहि । शचीऽपते ॥ ३ ॥

हे इन्द्र ते तव योऽङ्कुशः अङ्कुशवद् आकर्षको हस्तः वसुधानः[3] वसूनि धनानि धीयन्ते धार्यन्ते[4] अस्मिन्निति वसुधानः । अधिकरणे ल्युट् । अत एव बृहन् महान् हिरण्ययः [5]हिरण्मयः हिरण्यप्रचुरः[5] । 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि' (पा ६,४,१७५) इति हिरण्यशब्दान्मयटि निपात्यते । एवंविधो यो हस्तः अङ्कुश एव वा तेन साधनेन हे शचीपते शचीदेव्याः पते इन्द्र जनीयते । जायन्तेऽस्याम् अपत्यानीति जनिर्जाया । ताम् आत्मन इच्छते । यद्वा पुत्रेणोत्पत्तिर्जनिः तत्कामाय मह्यं जायाम् भार्यां धेहि देहि प्रयच्छ ।

इति पञ्चमं सूक्तम् ।

इति सायणार्यविरचिते अथर्वसंहिताभाष्ये षष्ठकाण्डे अष्टमोऽनुवाकः ।

नवमेऽनुवाके पञ्च सूक्तानि । 'अपचितः' इति प्रथमं सूक्तम् । तत्र 'अपचितः' इति तृचेन[6] गण्डमालाभैषज्यकर्मणि शङ्खं घृष्ट्वा अभिमन्त्र्य शुनकलालां वा अभिमन्त्र्य गण्डमालां प्रलिम्पेत् ।

तथा तत्रैव कर्मणि अनेन तृचेन[6] जलूकां गृहगोधिकां वा अभिमन्त्र्य रुधिरमोक्षार्थं गण्डमालास्थाने संश्लेषयेत् ।

तथा तत्रैव कर्मणि सैन्धवलवणं चूर्णयित्वा अभिमन्त्र्य गण्डमालायां विकीर्य तूष्णीं निष्ठीवेत् ।

सूत्रितं हि—"'अपचित' (अ ६,८३), 'आ सुस्रसः' (अ ७,८०) इति क्लिन्त्यादीनि लोहितलवणं संक्षुद्य[7] अभिनिष्ठीवति' (कौसू ३१,१६,१७) इति ।

तत्रैव कर्मणि 'ग्लौरितः प्र पतिष्यति' (३) इत्यर्धर्चं जपन् गोमूत्रेण गण्डं मर्दयेत् प्रक्षालयेद् वा ।

---

१. रवं पै १९,१७,६. २. दातकनो पै. ३. वंतु. मंशा. द्र. ४. धीयते S'.
५. °ण्मयः प्रप्र हिर° शंता. ६. चतुर्ऋचे सूक्ते ऋक्त्रयेणेत्यर्थः; वंतु. रा. सूक्तमेव तृचमिति.
७. संक्षुप S'.

तथा अनेनैव दन्तमलम् अभिमन्त्र्य गण्डमालां प्रलिम्पेत्। "'ग्लौः' इत्यर्धर्चेन[1]" (कौसू. ३१,२०) इति सूत्रात्।

'वीहि स्वाम्' इति चतुर्ऋचेन[2] चतुष्पाद्गण्डभैषज्यार्थं शान्त्युदकम् अभिमन्त्र्य व्रणं प्रोक्षेत्।

तथा तस्मिन्नेव कर्मणि अनेन चतुर्ऋचेन[2] आज्यं हुत्वा मनसा संकल्प्य व्रणे संपातान् आनयेत्।

सूत्रितं हि—"'वीहि स्वाम्' इत्यज्ञातारुः[3] शान्त्युदकेन संप्रोक्ष्य मनसा संपातवता" (कौसू. ३१,२१) इति।

अपचितः प्र पतत सुपर्णो वसतेरिव।
सूर्यः कृणोतु[4] भेषजं चन्द्रमा वोऽपोच्छतु ॥१॥

अप॑ऽचितः[5] । प्र । पतत । सुऽपर्णः । वसतेःऽइव । सूर्यः । कृणोतु ।
भेषजम् । चन्द्रमाः । वः । अप । उच्छतु ॥ १ ॥

हे अपचितः दोषवशाद् अपाक् चीयमानाः गलादारभ्य अधस्तात् प्रसृता गण्डमालाः प्र पतत अस्मात् शरीरात् प्रकर्षेण निर्गच्छत। तत्र दृष्टान्तः—सुपर्ण इति। सुपर्णः शोभनपतनः श्येनः वसतेरिव आवासस्थानाद् नीडाद् यथा शीघ्रं प्रपतति तथा पुरुषस्य गण्डस्याधस्तात्प्रदेशम् आशु विसृज्य धावतेत्यर्थः। अपचित इति। अपपूर्वाच्चिनोतेः कर्मणि क्विप्। हे अपचितः वः युष्माकं भेषजम् चिकित्सनं सूर्यः सर्वस्य प्रेरक आदित्यः कृणोतु करोतु। चन्द्रमाः अमृतमयश्चन्द्रो वः युष्मान् अपोच्छतु अपवासयतु। अपवर्जयत्वित्यर्थः। उछी विवासे।

एन्येका श्येन्येका कृष्णैका रोहिणी द्वे। सर्वासामग्रभं नामावीरघ्नीरपेतन ॥२॥

एनी । एका । श्येनी । एका । कृष्णा । एका ।-रोहिणी इति । द्वे इति । सर्वासाम् ।
अग्रभम् । नाम । अवीरऽघ्नीः । अप । इतन ॥ २ ॥

अनया अपचित्प्रभेदानां[6] नामग्रहणेन तासामपगमनं प्रार्थ्यते—एका गण्डमाला एनी एतवर्णा। ईषद्रक्तमिश्रश्वेतः एतवर्णः। एका अपरा श्येनी श्येत-

---

१. 'त्यक्षतेन Bl. २. अत्र सा. शंपा. च वीहि स्वाम् इत्यारभ्य 'अवसर्जनाय कम्' इत्यन्तां प्रथमाम्, 'भूमिरिति त्वा' इत्यारभ्य 'अमूनेनसः स्वाहा' इत्यन्तां द्वितीयाम्, 'एवो ष्वस्मद्' इति तृतीयाम्, 'अयस्मये' इति चतुर्थीमृचं मत्वा चतुरशीतितमं सूक्तं चतुर्ऋचमूचतुः. ३. 'त्यन्यच्चारुः S'. ४. W. तु स्वराभावं न्याय्यं मन्यते. ५. अप॒ऽचितः P. ६. 'चित्प्रभे' शंपा.

वर्णा । अत्यन्तशुभ्रेत्यर्थः । एतश्येतशब्दाभ्यां 'वर्णादनुदात्तात्तोपधात्तो नः' (पा ४,१,३९) इति ङीप् तकारस्य च नकारः । एका अन्या गण्डमाला कृष्णा कृष्णवर्णा । अन्ये द्वे गण्डमाले रोहिणी रोहिण्यौ लोहितवर्णे । रोहितशब्दात् पूर्ववद् ङीन्नकारौ । वातपित्तश्लेष्मवशाद् वर्णनानात्वाद् एतासां नानात्वम्। सर्वासाम् अपचिताम् । उदीरितवर्णव्यतिरेकाभावात् । नाम प्रीतिकरं नामधेयम् अहम् अग्रभम् अग्रहीषम् उच्चारयामि । छान्दसश्च्लेर्लुक् । 'हृग्रहोर्भः°' (पावा ८,२,३२) इति भत्वम् । हे अपचितः यूयम् अस्मान्नामग्रहणात् प्रीताः सत्यः अवीरघ्नीः वीरम् इमं पुरुषं गण्डमालाग्रस्तम् अहन्त्यः अपेतन अपगच्छत । एतेर्लोटि 'तप्तनप्तनथनाश्च' (पा ७,१,४५) इति तस्य तनादेशः । अवीरघ्नीरिति । वीरशब्दोपपदात् हन्तेः 'बहुलं छन्दसि' (पा ३,२,८८) इति क्विप् । 'ऋन्नेभ्यो ङीप्' (पा ४,१,५) इति ङीप् । 'अल्लोपोऽनः' (पा ६,४,१३४) इति अकारलोपः । 'वा च्छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घत्वम् ।

अ॒सू॒ति॒का रा॑माय॒ण्य॑प॒चित् प्र प॑तिष्यति ।
ग्लौरि॒तः प्र प॑तिष्यति॒ स[१] ग॑लु॒न्तो[१] न॑शिष्यति[२] ॥ ३ ॥

अ॒सू॒ति॒का । रा॒मा॒य॒णी । अ॒प॒ऽचित् । प्र । प॒ति॒ष्य॒ति॒ ।
ग्लौः । इ॒तः । प्र । प॒ति॒ष्य॒ति॒ । सः । ग॒लु॒न्तः । न॒शि॒ष्य॒ति॒[२] ॥ ३ ॥

असूतिका पूयस्रावम् अजनयन्ती । चिरपरिपाकेत्यर्थः । रामायणी रमते आसु प्राणवायुरिति रामा नाड्यः ता अयनं प्रधावनमार्गो यस्याः सा रामायणी नाडी । मर्मारिमकेत्यर्थः । एवंभूता अपचित् प्र पतिष्यति अस्मात् शरीरात् प्रगता अन्यत्र गमिष्यति । मन्त्रसामर्थ्याद् इत्यर्थः । ग्लौः व्रणजनितो हर्षक्षयः इतः अस्माद् अङ्गात् प्र पतिष्यति व्याध्यपगमे तज्जनितदुःखानुभवोऽपि प्रकर्षेण निर्गमिष्यतीत्यर्थः । यद्वा ग्लौश्चन्द्रमाः इतः अस्माद् गोमूत्रजलावसेकाद् अपचितं प्र पतिष्यति । पतिरत्र अन्तर्णीतण्यर्थः । प्रगमयिष्यति । चन्द्रमा वोऽगोचद्ग इत्युक्तप्रयायोऽनूद्यते । स चन्द्रमाः गलुन्तः गण्डमालोद्भवविकारेण तत्र तत्र हस्तपादादिगंधिषु उद्भूतान् गडून् तस्यति उपक्षपयतीति गडुन्तः । तसु उपक्षये । अस्मादौणादिकः क्विप् । मकारोपजनश्छान्दसः । न[३] शिष्यति[३] नाशयत्येव । सर्वव्रणविकारं निवर्तयतीत्यर्थः ।

---

१. यक्ष्मं नैव शुष्यति ऋ १,२१,८.  १. गंडुन्तो W,O,D[१].  २. नशिष्यति> नशिष्यति P; नशिष्यति P[१]; न । शिष्यति>नशिष्यति J.  ३. पैप्प. मंत्रा. द्र.

वीहि स्वामाहुतिं[1] जुषाणो मनसा स्वाहा मनसा यदिदं जुहोमि[2] ॥ ४ ॥

वीहि । स्वाम् । आऽहुतिम् । जुषाणः । मनसा । स्वाहा । मनसा । यत् । इदम् । जुहोमि ॥४॥

[3]हे व्रणरोगाभिमानिन् देव त्वं स्वाम् स्वकीयाम् आहुतिं मनसा जुषाणः सेवमानो वीहि भक्षय । स्वाहा स्वाहुतम् इदं हविरस्तु अहमपि मनसा एव यद् इदं हविः जुहोमि ।

[4]यस्यास्त[4] आसनि[5] घोरे[6] जुहोम्येषां [7]बद्धानामवसर्जनाय[7] कम् ।

[8]भूमिरिति त्वाभिप्रमन्वते जना[8] निर्ऋतिरिति[9] त्वाहं परि वेद सर्वतः[10] ॥१॥

यस्याः । ते । आसनि । घोरे । जुहोमि । एषाम् । बद्धानाम् । अवऽसर्जनाय । कम् । भूमिः । इति । त्वा । अभिऽप्रमन्वते । जनाः । निःऽऋतिः । इति । त्वा । अहम् । परि । वेद । सर्वतः ॥ १ ॥

हे रोगाभिमानिनि पापदेवते यस्यास्ते तव घोरे क्रूरे आसनि आस्ये जुहोमि हविः प्रक्षिपामि सा त्वं मनसा हूयमानं तद्धविः सेवस्वेत्यर्थः । किमर्थम् । एषां व्रणरोगजनितानां बन्धानाम्[11] अवसर्जनाय विमोचनार्थम् । कम् इति पदपूरणः । यद्वा कम् इति उदकनाम । व्रणप्रक्षालनार्थमिदमौषधोदकं तद्रोगशान्तये अवकल्पत इत्यर्थः[3] । हे व्रणाभिमानिदेवते त्वा त्वां जनाः जन्ममात्रसारा विशेषज्ञानरहिताः प्राणिनः भूमिः पृथिवी इति अभिप्रमन्वते अभितः प्रबुध्यन्ते । मनु अवबोधने । अहं तु त्वत्स्वरूपं जानानः त्वा त्वां निर्ऋतिरिति । सर्वरोगनिदानभूता पापदेवता निर्ऋतिः । सैवेति सर्वतः सर्वस्माद्धेतोः परि वेद परितो जानामि[3] ।

भूते [12]हविष्मती [13]भवैष ते भागो यो अस्मासु ।

[13]मुञ्चेमानमूनेनसः[13] स्वाहा ॥ २ ॥[14]

भूते[15] । हविष्मती । भव । एषः । ते । भागः । यः । अस्मासु ।

मुञ्च । इमान् । अमून् । एनसः । स्वाहा ॥ २ ॥

हे भूते सर्वत्र विद्यमाने निर्ऋतिरूपे[16] हविष्मती भव अस्माभिर्दत्तेन हविषा आज्या-

---

१. स्वाहाहुतिं तै १,८,१,१. २. कृणोमि पै १९,५,१०. ३. पृ. ७७१ टि २ द्र.
४. यस्यास्ते अस्याः तै ४,२,५,३; यत् ते अस्मिन् काठ १६,१२; यद्दद्यं ते मै २,२,१. ५. आसन् मा १२,६४ तै. मै. काठ. पै १९,५,११ [मूको.]. ६. घोरे मा.; क्रूरे तै.
७. बन्धानां प्रमोचनाय मै.; बन्धानां° मा. तै. ८. यां त्वा जनो भूमिरिति प्रमन्दते मा. मै.; °त्वा जना विदुर् तै. † °प्रवन्वते R; प्रमन्यते पै. [मूको.]. ९. निर्ऋतिं मा. मै.
१०. विश्वतः मा. तै ४,२,५,४ मै. पै. ११. बंधु. मंगा. द्र. १२. °ष्मत्यसि तै १,८,१,१ तैब्रा १,६,१,३. १३. मुञ्चेममंहसः तै. तैब्रा. १४. भूयान् पाठभेदः पै १९,५,१२. १५. भूते P. १६. निर्ऋतेरूप° S'.

दिना युक्ता भव । एष ते तव भागः । यः अस्मासु इदानीं परिकल्पितः । अनेन हविर्भागेन तुष्टा इमान् समीपस्थान् गवादीन् अमून् दूरस्थान् अस्मद्दृष्टिगोचरान् एनसः रोगनिदानभूतात् पापाद् मुञ्च विसृज स्वाहा इदं हविः स्वाहुतम् अस्तु ।

'एवो ष्व१स्मन्निर्ऋतेनेहा त्वमयस्मयान्' 'वि चृता' बन्धपाशान्' ।
यमो मह्यं पुनरित् त्वां 'ददाति तस्मै यमाय नमो अस्तु मृत्यवे' ॥ ३ ॥

एवो इति । सु । अस्मत् । निःऽऋते । अनेहा । त्वम् । अयस्मयान् । वि । चृत । बन्धऽपाशान् ।
यमः । मह्यम् । पुनः । इत् । त्वाम् । ददाति । तस्मै । यमाय । नमः । अस्तु । मृत्यवे ॥ ३ ॥

हे निर्ऋते निःशेषेण आर्तिकरि पापदेवते अनेहा अनाहन्त्री । 'नञ्याहन एह च' ( पाउद ९,८३ ) इति आङ्पूर्वाद्धन्तेरसुन् तत्संनियोगेन एहादेशश्च । 'ऋदुशन-स्पुरुदंसोऽनेहसां च' ( पा ७,१,९४ ) इति सौ अनङ् आदेशः । अस्मान् अबाधमाना त्वम् एवो एव उ एवमेव पूर्वोक्तप्रकारेणैव सु सुष्ठु अस्मत् अस्मत्तः अयस्मयान् अयो-विकारान् अत्यन्तदृढान् बन्धपाशान् बन्धनरज्जुविशेषान् रोगात्मकान् वि चृत विमुञ्च छिन्धीत्यर्थः । चृती हिंसाग्रन्थनयोः । हे रुग्ण यमः वैवस्वतः प्राणाप-हारी देवः त्वा मह्यं पुनर्ददाति । तस्मै मृत्यवे प्राणापहारिणे यमाय नमो अस्तु नमस्कारोऽस्तु ।

अयस्मये द्रुपदे बेधिषे 'इहाभिहितो मृत्युभिर्ये सहस्रम् ।
यमेन त्वं पितृभिः' 'संविदान उत्तमं' 'नाकमधि रोहयेमम्' ॥४॥

अयस्मये । द्रुऽपदे । बेधिषे । इह । अभिऽहितः । मृत्युभिः । ये । सहस्रम् ।
यमेन । त्वम् । पितृऽभिः । सम्ऽविदानः । उत्ऽतमम् । नाकम् । अधि । रोहय । इमम् ॥४॥

'अयस्मये द्रुपदे' इत्येषा सप्तमेऽनुवाके ( अ ६,६३,३ ) व्याख्याता ।

इति नवमेऽनुवाके प्रथमं सूक्तम् ।

---

१. नमोऽस्तु (नमः सु ते मा. तै. मै. काठ.) निर्ऋते तिग्मतेजोऽ (विश्वरूपेऽ तै.) यस्मयान् (यस्मयं मा. तै. मै. काठ.) अ ६,६३,२ मा १२,६३ तै ४,२,५,३ मै २,७,१२ काठ १६,१२; °स्मत् त्वं निर्ऋते विश्ववारे अय° पै १९,५,१३. † ष्वस्म° B[b]; ष्वा१स्म° R; ष्वा१स्म° A,K. २. विचृता काठ.; प्र मुमुग्धि पै. ३. यन्धमेतम् मा. तै. मै. काठ.; पाशान् पै. ४. ददातु तस्मै देवाय हविषा विधेम पै १९,११,१. ५. इदभि° पै. ६. यम्या मा. तै. मै. काठ. पै १९,५,११. ७. संविदानोत्तमे मा. मै. काठ. पै १९,११,५ [मूको.]; °दान उत्तमे पै.; °दानोत्त° तै. ८. नाके अधि मा. मै. काठ. पै. ९. रोहयेनम् मा. मै. काठ. पै.

'वरणो वारयातै' इति तृचेन राजयक्ष्मादिरोगभैषज्यकर्मणि वरणवृक्षमणिं संपात्य अभिमन्त्र्य पुनस्तृचं जपित्वा बध्नीयात्। 'शं नो देवी' (अ २,२५), 'वरणः', 'पिप्पली' (अ ६,१०९) इति प्रक्रम्य 'तृतीयेन मन्त्रोक्तं बध्नाति' (कौसू २६,३३;३७) इति सूत्रात्।

'वृषेन्द्रस्य' इति तृचेन श्रैष्ठ्यकामः इन्द्रं यजते उपतिष्ठते वा। "'वृषेन्द्रस्य' (अ ६,८६) इति वृषकामः" (कौसू ५९,१२) इति सूत्रात्।

व॒र॒णो वा॑रयाता अ॒यं[1] दे॒वो वन॒स्पति॑ः[2] ।
यक्ष्मो॒ यो[3] अ॒स्मिन्नावि॑ष्ट॒स्तमु॑ दे॒वा अ॑वीवरन् ॥ १ ॥

व॒र॒णः । वा॒र॒या॒तै॒ । अ॒यम् । दे॒वः । वन॒स्पति॑ः ।
यक्ष्म॑ः । यः । अ॒स्मिन् । आऽवि॑ष्टः । तम् । ऊं इति॑ । दे॒वाः । अ॒वी॒व॒र॒न् ॥ १ ॥

अयं पुरोवर्ती देवः दानादिगुणयुक्तः वरणः वरणाख्यो वनस्पतिः वनानामधिपतिर्वृक्षः। विकारे प्रकृतिशब्दः। वरणवृक्षनिर्मितो मणिः वारयातै राजयक्ष्मादिरोगं वारयतु निवर्तयतु। वारयतेर्लेटि आडागमः। 'वैतोऽन्यत्र' (पा ३,४,९६) इति ऐकारः। अस्मिन् पुरुषे यो यक्ष्मः रोग आविष्टः प्रविष्टः तमु। उशब्दः अप्यर्थे। तं सर्वमपि रोगं देवा इन्द्रादयः सर्वे अवीवरन् वारयन्तु। वारयतेश्छान्दसे लुङि चङि रूपम्।

इन्द्र॑स्य॒ वच॑सा व॒यं मि॒त्रस्य॒ वरु॑णस्य च ।
दे॒वानां॒ सर्वे॑षां वा॒चा यक्ष्मं॑ ते वारयामहे ॥ २ ॥

इन्द्र॑स्य । वच॑सा । व॒यम् । मि॒त्रस्य॑ । वरु॑णस्य । च॒ ।
दे॒वाना॑म् । सर्वे॑षाम् । वा॒चा । यक्ष्म॑म् । ते॒ । वा॒र॒या॒म॒हे॒ ॥ २ ॥

मणिबन्धनकर्तारो वयम् हे व्याधित ते तव यक्ष्मम् रोगम् इन्द्रस्य देवानामधिपतेः वचसा आज्ञारूपेण वाक्येन वारयामहे निवारयामः। न केवलमिन्द्रस्य वचसा। मित्रस्य वरुणस्य च अन्येषामपि सर्वेषां देवाना वाचा वाक्येन त्वदीयं रोगं निवारयामः।

यथा॑ वृ॒त्र इ॒मा आप॑स्त॒स्तम्भ॑ वि॒श्वधा॑ य॒तीः[4] ।
ए॒वा ते॑ अ॒ग्निना॒ यक्ष्मं॑ वैश्वान॒रेण॑ वारये ॥ ३ ॥

यथा॑ । वृ॒त्रः । इ॒माः । आप॑ः । त॒स्तम्भ॑ । वि॒श्वधा॑ । य॒तीः ।
ए॒व । ते॒ । अ॒ग्निना॑ । यक्ष्म॑म् । वै॒श्वा॒न॒रेण॑ । वा॒र॒ये॒ ॥ ३ ॥

यथा येन प्रकारेण वृत्रः आवरणशीलस्त्वष्टृपुत्रोऽसुरः इमाः परिदृश्यमाना विश्वधायनीः[5] विश्वस्य कृत्स्नस्य स्थावरजङ्गमात्मकस्य जगतः पोषयित्रीः आपः मेघस्था

---

१. इदं वै १६,६२,५. २. बृहस्पतिः वै. ३. प्रतिष्ठा योऽस्मिन् तमु वै.
४. विश्वधायसः वै १९,६,३. ५. वैतु. मंपा. द्र.

व्यापनशीला अपः तस्तम्भ निरुद्धगतीश्चकार । ष्टभि स्कभि गतिप्रतिबन्धे । हे व्याधित ते तव यक्ष्मम् रोगम् एव एवं वैश्वानरेण विश्वनरहितेन सर्वप्राणिहितकारिणा अग्निना वारये निवारयामि ।

वृषेन्द्र॑स्य॒ वृषा॑ दि॒वो वृषा॑ पृथि॒व्या अ॒यम् ।
वृषा॒ विश्व॑स्य भू॒तस्य॒ त्वमे॑कवृ॒षो भ॑व ॥ १ ॥

वृषा॑ । इन्द्र॑स्य । वृषा॑ । दि॒वः । वृषा॑ । पृ॒थि॒व्याः । अ॒यम् ।
वृषा॑ । विश्व॑स्य । भू॒तस्य॑ । त्वम् । ए॒क॒ऽवृ॒षः । भ॒व ॥ १ ॥

अयं श्रैष्ठ्यकामः पुरुषः इन्द्रस्य प्रसादाद् वृषा सेचनसमर्थः श्रेष्ठो भवतु । यद्वा हविःप्रदानादिना उपजीव्यः सन् इन्द्रस्यापि श्रेष्ठो भवत्वित्यर्थः । दिवः द्युलोकस्य वृषा कामानां वर्षिता श्रेष्ठो भवतु । पृथिव्या अपि वृषा आहुतिद्वारा वृष्टेरुत्पादयिता सन् अयं श्रेष्ठो भवतु । दिव इति । 'ऊडिदम्' ( पा ६,१,१७१ ) इत्यादिना विभक्तेरुदात्तत्वम् । पृथिव्या इति । प्रथनात् पृथिवी । 'यद् अप्रथयत् तत् पृथिव्यै पृथिवित्वम्' ( तैत्रा १,१,३,७ ) इति श्रुतेः । प्रथ प्रख्याने । 'प्रथेः षिवन् संप्रसारणं च' ( पाउद ८,१२४ )। 'षिद्गौरादिभ्यश्च' ( पा ४,१,४१ ) इति ङीष् । 'उदात्तयणो हल्पूर्वात्' ( पा ६,१,१७४ ) इति विभक्तेरुदात्तत्वम् । किं बहुना, द्यावापृथिव्युपलक्षितस्य विश्वस्य भूतस्य सर्वस्यापि प्राणिजातस्य वृषा सेचनसमर्थः उत्कृष्टो भवतु । परः प्रत्यक्षकृतः । हे श्रैष्ठ्यकाम पुरुष उदीरितरीत्या त्वम् एकवृषो भव । यथा गोयूथमध्ये प्रधानभूतो वृषभः सर्वश्रेष्ठो वर्तते एवं सर्वोत्कृष्टो भवेत्यर्थः ।

स॒मु॒द्र ई॑शे स्र॒वता॑म॒ग्निः पृ॑थि॒व्या व॒शी ।
च॒न्द्रमा॒[1] नक्ष॑त्राणामीशे॒ त्वमे॑कवृ॒षो भ॑व ॥ २ ॥

स॒मु॒द्रः । ई॒शे॒ । स्र॒वता॑म् । अ॒ग्निः । पृ॒थि॒व्याः । व॒शी ।
च॒न्द्रमाः॑ । नक्ष॑त्राणाम् । ई॒शे॒ । त्वम् । ए॒क॒ऽवृ॒षः । भ॒व ॥ २ ॥

स्रवताम् प्रवहताम् उदकानां समुद्रः अब्धिः ईशे ईष्टे । ईश ऐश्वर्ये । 'लोपस्त आत्मनेपदेषु' ( पा ७,१,४१ ) इति तलोपः । पृथिव्याः भूम्याः अग्निर्वशी वशयिता स्वामी । नक्षत्राणाम् अश्विन्यादीनां चन्द्रमा ईशे ईष्टे । यथा एतेषां समुद्रादीनां स्वस्वविषयाधिपत्यमव्याहतम् एवं हे श्रैष्ठ्यकाम त्वम् एकवृषो भव इति संबन्धः ।

---

१. सूर्यो पै १९,६,११.

'सम्राडस्यसुराणां' ककुन्मनुष्याणाम् ।
देवानामर्धभागसि त्वमेकवृषो भव ॥ ३ ॥

सम्ऽराट् । असि । असुराणाम् । ककुत् । मनुष्याणाम् ।
देवानाम् । अर्धऽभाक् । असि । त्वम् । एकऽवृषः । भव ॥ ३ ॥

हे इन्द्र त्वम् असुराणाम् सुरविरोधिनां दानवानां सम्राट् सम्यग् राजमानः ईश्वरः असि भवसि[2] । तद्वद् अयं श्रैष्ठ्यकामो मनुष्याणाम् मनोरपत्यानां सर्वप्राणिनां ककुत् वृषभस्य ककुदिव उन्नतो भवतु । तथा हे इन्द्र त्वं देवानाम् अर्धभाग् असि । अर्धशब्दः समप्रविभागवचनः । अन्ये सर्वे देवा एको भागः इन्द्र एको भागः । सर्वदेवप्रतिनिधिर्भवसीत्यर्थः । तथा च तैत्तिरीयकम्—'यत् सर्वेषाम् अर्धमिन्द्रः प्रति तस्माद् इन्द्रो देवतानां भूयिष्ठभाक्तमः' ( तै ५,४,८,३ ) इति । ईदृशस्य इन्द्रस्य प्रसादात् हे श्रैष्ठ्यकाम त्वम् इन्द्रवद् एकवृषो भव।

इति नवमेऽनुवाके द्वितीयं सूक्तम् ।

'आ त्वाहार्षम्', 'ध्रुवा द्यौः' इति तृचाभ्यां स्थैर्यकामो राजा इन्द्रं यजते उपतिष्ठते वा । "'आ त्वाहार्षं', 'ध्रुवा द्यौः' ( अ ६,८८ ) इति ध्रौव्यकामः" ( कौसू ५९,१३) इति सूत्रात् ।

तथा भूमिकम्पलक्षणोत्पातप्रायश्चित्तार्थम् आभ्यां तृचाभ्याम् आज्यं जुहुयात् । 'अथ यत्रैतद् भूमिचलो भवति' इति प्रक्रम्य "'आ त्वाहार्षम्', 'ध्रुवा द्यौः', 'सत्यं बृहत्' ( अ १२,१ ) [3]इत्येतेनाऽनुवाकेन[3] जुहुयात्" ( कौसू ९८,१;२ ) इति ।

तथा उदकुम्भमङ्गलक्षणाद्भुतप्रायश्चित्तार्थम् आभ्यां तृचाभ्याम् अन्यं नवकलशं दृढीकरणार्थम् अभिमन्त्रयेत । सूत्रितं हि — 'अथ यत्रैतत् [4]कुम्भ उदधानः[4] सक्तुधानी [5]वोखा वानिङ्गिता[5] विकसति' इति प्रक्रम्य "अथ चेद् उदधानः स्यात् 'समुद्रं वः प्र हिणोमि' इत्येताभ्याम् (अ १०,५,२३;२४) अभिमन्त्र्य । अन्यं कृत्वा ध्रुवाभ्यां (अ ६,८७;८८) दृंहयित्वा'" ( कौसू १३६,१;६;७ ) इति ।

तथा इन्द्रमहाख्ये उत्सवकर्मणि आभ्यां तृचाभ्याम् इन्द्रम् उत्थापयेत् । 'अथ राज्ञाम् इन्द्रमहस्योपचारकल्पम्' इति प्रक्रम्य "अथेन्द्रम् उत्थापयन्ति । 'आ त्वाहार्षम्', 'विशस्त्वा सर्वा वाञ्छन्तु' (अ ६,८७,१), 'ध्रुवा द्यौः' ( अ ६,८८,१ )" ( कौसू १४०,१;७;८ ) इति ।

---

१. त्वं सम्राळसु° पै १९,६,१२. २. ईश्वरो भवसि S'. ३. °त्येकेनानु° S'. ४. °म्भोद° Bl ५. वोखादानिंगता S'.

तथा अग्निचयने 'आ त्वाहार्षम्' इत्यनेन उन्नीतम् उख्याग्निं ब्रह्मा अनुमन्त्रयेत । अग्निचयनं प्रक्रम्य सूत्रितम् — "'संशितं मे' (अ ३,१९) इत्युख्यम् उन्नीयमानम् । 'आ त्वाहार्षम्' इत्युन्नीतम्" ( वैताश्रौ २८,१५;१६ ) इति ।

आ [1]त्वा॑हार्षम॒न्तर॑भूर्ध्रु॒वस्ति॒ष्ठावि॑चाचलत्[1] ।
विश॑स्त्वा॒ सर्वा॑ वाञ्छन्तु[2] [3]मा त्वद्रा॒ष्ट्रमधि॑ भ्रशत्[3] ॥ १ ॥

आ । त्वा॒ । अ॒हा॒र्ष॒म् । अ॒न्तः । अ॒भूः॒ । ध्रु॒वः । ति॒ष्ठ॒ । अवि॑ऽचाचलत् ।
विशः॑ । त्वा॒ । सर्वाः॑ । वा॒ञ्छ॒न्तु॒ । मा । त्वत् । रा॒ष्ट्रम् । अधि॑ । भ्र॒श॒त् ॥ १ ॥

हे राजन् त्वा त्वाम् आहार्षम् राष्ट्रम् [4]आनैषम् । अन्तः अस्माकं मध्ये अभूः अधिपतिरभवः । भवतेर्लुङि 'गातिस्था॰' (पा २,४,७७) इति सिचो लुक् । 'भूसुवोस्तिङि' (पा ७,३,८८) इति गुणप्रतिषेधः । अविचाचलन् भृशं चलनरहितः सन् अस्मिन् राज्याधिपत्ये ध्रुवस्तिष्ठ स्थिर उपविश । अविचाचलत् इति । चल गतौ । अस्माद् यङ्लुगन्तात् शतरि रूपम् । 'नाभ्यस्ताच्छतुः' (पा ७,१,७८) इति नुम्प्रतिषेधः । भूमण्डलमध्यवर्तिन्यः सर्वा विशः प्रजाः त्वा त्वां वाञ्छन्तु अस्माकम् अयमेव स्वामी इत्यनुरागयुक्ता भवन्तु । वाछि इच्छायाम् । इदं राष्ट्रम् राज्यं त्वत् त्वत्सकाशाद् मा अधि भ्रशत् अधिकं कदाचिदपि भ्रष्टं मा भूत् । सर्वदा त्वच्छासने वर्तताम् इत्यर्थः । भृशु भ्रंशु अधःपतने । अस्मान्माङि लुङि पुषादित्वात् च्लेः अङ् आदेशः ।

[5]इ॒हैवैधि॒ [6]माऽप॑ च्योष्ठाः[6] पर्व॑त इ॒वावि॑चाचलत्[7] ।
[8]इन्द्र॑ इ॒वेह[8] ध्रु॒वस्ति॑ष्ठे॒ह रा॒ष्ट्रमु॑ धारय ॥ २ ॥

इ॒ह । ए॒व । [9]ए॒धि॒ । मा[9] । अप॑ । च्यो॒ष्ठाः॒ । पर्व॑तःऽइव । अवि॑ऽचाचलत् ।
[10]इन्द्र॑ःऽइव । इ॒ह[10] । ध्रु॒वः । ति॒ष्ठ॒ । इ॒ह । रा॒ष्ट्रम् । ऊं॒ इति॑ । धा॒र॒य॒ ॥ २ ॥

इहैव अस्मिन्नेव राज्यसिंहासने एधि भव सर्वदा वर्तस्व । माऽप च्योष्ठाः कदाचिदपि अस्माद् राष्ट्रात् प्रच्युतो मा भूः । च्युङ् प्रुङ् गतौ । अस्मान्माङि

---

१. °न्त्रैधि ध्रुवस्तिष्ठाविचाचलिः ऋ १०,१७३,१; °चाचलिः मा १२,११ तै ४,२,१,४ तैब्रा २,४,२,८. २. मा यन्तु पै १९,६,५. ३. अस्मिन् (अस्मे काठ.) राष्ट्रमधि श्रय तै. काठ १६, ८; अस्मे राष्ट्राणि धारय मं २,७,८; मा त्वद्राष्ट्रमधि° काठ ३५,७. ४. आनयिषम् सांभा. ५. मा व्यथिष्ठाः तैब्रा. ६. °चाचलिः ऋ १०,१७३,२ तैब्रा. आपश्रौ १४,२७,७. ७. °तु S, गा. श्र. काठ. तैब्रा. आपश्रौ.; पंपु. मूको. पं. (तु. सांभा. Wh.) पै १९,६,६ इन्द्रेहे°. ८. धर्मेषु काठ. आपश्रौ.; राष्ट्रं नि पै ९. एधि । मा P. १०. तु. मैसं.; पंपा. P,P¹,J,Cp इन्द्रे । इह । एव.

लुङि च्लेः सिच् । 'न माङ्योगे' (पा ६,४,७४) इति अडभावः । कथंभूतः सन् । पर्वत इव अविचाचलत् सर्वदा सर्वथा चलनरहितः सन् । इन्द्र इव इह अस्मिन् राष्ट्रे ध्रुवस्तिष्ठ स्थिरो वर्तस्व । राष्ट्रमु । उशब्दः चार्थे । तव स्वभूतम् एतद् राष्ट्रं च धारय स्वेस्वे स्थानेऽवस्थापय । संभवद्बाधपरिहारेण पालयेत्यर्थः ।

'इन्द्र एतमदीधरद्' ध्रुवं ध्रुवेण हविषा ।
तस्मै सोमो' अधि 'ब्रवद॒यं च ब्रह्मणस्पतिः ॥ ३ ॥

इन्द्रः । एतम् । अदीधरत् । ध्रुवम् । ध्रुवेण । हविषा ।
तस्मै । सोमः । अधि । ब्रवत् । अयम् । च । ब्रह्मणः । पतिः ॥ ३ ॥

ध्रुवेण स्थैर्यकरेण अस्माभिर्दत्तेन हविषा तुष्ट इन्द्रः एतं राजानम् अस्मिन् राष्ट्रे ध्रुवम् स्थिरं प्रच्युतिरहितम् अदीधरत् धारितवान् । प्रतिष्ठापितवान् इत्यर्थः । तस्मै राज्ञे सोमो राजा अधि ब्रवत् अस्मदीयोऽयम् इति अधिकं ब्रवीतु । अयं च ब्रह्मणस्पतिः वेदराशेः पालयिता देवः अधि ब्रवीतु । 'षष्ठ्याः पतिपुत्र'' (पा ८,३,५३) इति विसर्जनीयस्य सत्वम् ।

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् ।
'ध्रुवासः 'पर्वता इमे' 'ध्रुवो राजा विशामयम्' ॥ १ ॥

ध्रुवा । द्यौः । ध्रुवा । पृथिवी । ध्रुवम् । विश्वम् । इदम् । जगत् ।
ध्रुवासः । पर्वताः । इमे । ध्रुवः । राजा । विशाम् । अयम् ॥ १ ॥

यथा द्यौः ध्रुवा स्थिरा वर्तते । पृथिवी च यथा ध्रुवा निश्चला दृश्यते । द्यावापृथिव्योर्मध्ये वर्तमानम् इदं विश्वम् सर्वं जगत् ध्रुवम् स्थिरं दृश्यते । तत्रत्या इमे परिदृश्यमानाः पर्वता यथा ध्रुवासः ध्रुवाः स्थिराः । 'आज्जसेरसुक्' (पा ७,१,५०) । तथा अयं विशाम् प्रजानां राजा ध्रुवः स्थिरो भवतु ।

ध्रुवं ते 'राजा वरुणो' ध्रुवं देवो बृहस्पतिः ।
ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥ २ ॥

---

१. इममिन्द्रो अदी° ऋ १०,१७३,३; °एणमदी° तैब्रा २,४,२,९ आपश्रौ १४,२७,७. २. देवा मा १७,५२ तैब्रा. आपश्रौ. ३. ध्रुवद° पै १९,६,७; °ब्रवत्रयं° तैब्रा; °ध्रुवत्रयं° मा. आपश्रौ. ४. समुद्राः पर्वता ध्रुवाः पै १९,६,९; ध्रुवा ह° तैब्रा २,४,२,८ आपश्रौ. ५. ध्रुवा स्त्री पतिकुले इयम् मंब्रा १,३,७; °विशामसि काठ ३५,७. ६. देवः सविता पै १९,६,८.

ध्रुवम् । ते । राजा । वरुणः । ध्रुवम् । देवः । बृहस्पतिः ।
ध्रुवम् । ते । इन्द्रः । च । अग्निः । च । राष्ट्रम् । धारयताम् । ध्रुवम् ॥ २ ॥

हे राजन् ते तव राज्यं राजा राजमान ईश्वरो वरुणः ध्रुवं स्थिरं करोतु । देवः द्योतमानो बृहस्पतिः देवमन्त्री त्वदीयं राष्ट्रं ध्रुवं करोतु । बृहतां देवानां पतिर्बृहस्पतिः । 'तद्बृहतोः करपत्योः' (पावा ६,१,१५७) इति सुट्तलोपौ । 'उभे वनस्पत्यादिषु' (पा ६,२,१४०) इति उभयपदप्रकृतिस्वरत्वम् । तथा ते त्वदीयं राष्ट्रम् इन्द्रश्च अग्निश्च ध्रुवं स्थिरं धारयताम् । प्रत्येकापेक्षया ध्रुवशब्दस्यावृत्तिः ।

ध्रुवोऽच्युतः प्र मृणीहि 'शत्रूंञ्छत्रूयतोऽधरान्' पादयस्व ।
सर्वा दिशः संमनसः सध्रीचीर्ध्रुवाय ते समितिः कल्पतामिह ॥ ३ ॥

ध्रुवः । अच्युतः । प्र । मृणीहि । शत्रून् । शत्रुऽयतः । अधरान् । पादयस्व । सर्वाः । दिशः । समऽमनसः । सध्रीचीः । ध्रुवाय । ते । समऽइतिः । कल्पताम् । इह ॥ ३ ॥

हे राजन् ध्रुवः अस्मिन् राष्ट्रे स्थिरः अच्युतः चलनरहितः सन् शत्रून् प्र मृणीहि प्रजहि । मृ हिंसायाम् । शत्रूयतः शत्रुवद् आचरतः अन्यानपि जनान् अधरान् अधोमुखान् पातयस्व[3] भूमौ निपतितान् कुरु । एवं शत्रूणाम् अपगमे सति सर्वाः प्राच्याद्या दिशः संमनसः समनस्काः सत्यः सध्रीचीः त्वया सह अञ्चन्त्यो[4] वर्तमानाः । त्वत्सेवापरायणा भवन्त्वित्यर्थः । सह अञ्चन्तीति सध्रीच्यः । अञ्चतेः 'ऋत्विग्' (पा ३,२,५९) इत्यादिना क्विन् । 'अनिदिताम्' (पा ६,४,२४) इति नलोपः । 'सहस्य सध्रिः' (पा ६,३,९५) इति सध्र्यादेशः । 'अञ्चतेश्चोपसंख्यानम्' (पावा ४,१,६) इति ङीप् । 'अचः' (पा ६,४,१३८) इति अकारलोपे 'चौ' (पा ६,३,१३८) इति दीर्घत्वम् । जसि 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः । इह सर्वासु दिक्षु ध्रुवाय निश्चलमवस्थिताय ते तुभ्यं समितिः आयोधनं कल्पताम् समर्थं भवतु । आयोधनात् पलायनं कदाचिदपि मा भूद् इत्यर्थः ।

इति नवमेऽनुवाके तृतीयं सूक्तम् ।

'इदं यत् प्रेण्यः' इति तृचेन जायापत्योरन्योन्यं प्रीतिजननकर्मणि अननुकूलस्य शिरः कर्णं च अनुमन्त्रयेत केशान् वा धारयेत् । सूत्रितं हि—"'इदं यत् प्रेण्यः' इति शिरःकर्णम् अनुमन्त्रयते[5] । केशान् धारयते" ( कौसू ३६,१०;११ ) इति ।

---

१. शत्रूंछत्रूयतो' B^b,R.　२. मृण् हिंसा.　३. वैतु. मंपा. द्र.　४. अंचत्ये S'.
५. अभिम' Bl.

'यां ते रुद्रः' इति तृचेन शारीरशूलरोगपरिहारार्थं लोहमणिं पाषाणमणिं वा संपात्य अभिमन्त्र्य बध्नीयाद् इति रुद्रदारिलयोर्भाष्यकारयोर्मतम्। शूलिनः[2] शूल-स्थानम् अनुमन्त्रयेतेति भद्रस्य भाष्यकारस्य मतम्। "'यां ते रुद्रः' (अ ६,९०) इति शूलिने शूलम्" (कौसू ३१,७) इति सूत्रात्।

इ॒दं यत् प्रे॒ण्यः शिरो॑ द॒त्तं सोमे॑न॒ वृष्ण्य॑म्।
[3]तत॒ः परि॑[3] प्रजा॑तेन॒ हार्दिं॑ ते शोचयामसि ॥ १ ॥[4]

इ॒दम्। यत्। प्रे॒ण्यः। शिरः॑। द॒त्तम्। सोमे॑न। वृष्ण्य॑म्।
ततः॑। परि॑। प्रऽजा॑तेन। हार्दि॑म्। ते॒। शो॒च॒या॒म॒सि॒ ॥ १ ॥

प्रेण्यः प्रेमप्रापकस्य यद् इदं शिरः वृष्ण्यम् वीर्यप्रदं सोमेन दत्तम् ततः तस्माद् दत्ताच्छिरसः परिप्रजातेन[5] उत्पन्नेन स्नेहविशेषेण ते तव हार्दिम् हृन्मध्यवर्ति अन्तःकरणं शोचयामसि संतापयुक्तं कुर्मः। 'इदन्तो मसि' (पा ७,१,४६)।

शो॒चया॑मसि ते॒ हार्दिं॑ शो॒चया॑मसि ते॒ मनः॑।
वातं॑ धू॒म इ॑व स॒ध्र्य१ङ्[6] माम॒वान्वे॑तु ते॒ मनः॑ ॥ २ ॥

शो॒चया॑मसि। ते॒। हार्दि॑म्। शो॒चया॑मसि। ते॒। मनः॑।
वात॑म्। धू॒मःऽइ॑व। स॒ध्र्य॑ङ्[7]। माम्। ए॒व। अनु॑। ए॒तु। ते॒। मनः॑ ॥२॥

हे जायापत्योरन्यतर ते तव हार्दिम् हृदयमध्यवर्ति अन्तःकरणं हृदयमेव वा परस्परानुरागोत्पादनेन शोचयामसि तप्तं कुर्मः। तथा ते तव मनः संकल्प-विकल्पात्मकम् अन्तःकरणस्य वृत्तिविशेषमपि शोचयामसि शोचयामः। एवं संताप-जननोत्तरकालं सध्रिम्[5] सहभूतं वातम् वायुं धूम इव ते तव मनः मामेव अन्वेतु अनुगच्छतु। यथा धूमो वातानुसारेण पृष्ठतो धावति एवम् अनुरागवशात् त्वदीयं मनो माम् अनुधावतित्यर्थः। सध्रिम् इति। अनुत्तरपदस्यापि सह-शब्दस्य सध्र्यादेशश्छान्दसः।

मह्यं॑ त्वा मि॒त्रावरु॑णौ[8] मह्यं॑ दे॒वी सर॑स्वती।
मह्यं॑ त्वा॒ मध्यं॒ भूम्या॑ उ॒भावन्तौ॒ सम॑स्यताम् ॥ ३ ॥

---

१. °शंपा (तु. के.); वैतु. S' °दारणयो°. २. शूलिने S'. ३. ततुस्परि O.
४. भूयान् पाठभेदः पै ३,२८,३. ५. वैतु. मंपा. द्र.. ६. सध्र्याङ् D; सध्र्यङ् R; सध्र्युङ् Cs; सध्र्य१ङ् Wh. ७. सध्र्यङ् P,Cp. ८. द्यावापृथिवी पै २,३५,५.

मह्यम् । त्वा । मित्रावरुणौ । मह्यम् । देवी । सरस्वती ।
मह्यम् । त्वा । मध्यम् । भूम्याः । उभौ । अन्तौ । सम् । अस्यताम् ॥ ३ ॥

हे जाये त्वा त्वां मित्रावरुणौ मित्रश्च वरुणश्च । 'देवताद्वन्द्वे च' ( पा ६,३,२६ ) इति पूर्वपदस्य आनङ् आदेशः । 'देवताद्वन्द्वे च' ( ६,२,१४१ ) इति उभयपदप्रकृतिस्वरत्वम् । एतत्संज्ञौ देवौ मह्यं पत्ये समस्यताम् । संयोजयताम् इत्यर्थः । देवी द्योतमाना सरस्वती त्वां मह्यं समस्यतु । भूम्याः पृथिव्या मध्यम् मध्यस्थितं प्राणिजातं त्वा त्वां मह्यं संयोजयतु । तस्या एव भूम्या उभावन्तौ ऊर्ध्वाधःप्रदेशौ त्वां समस्यताम् संयोजयताम् । असु क्षेपणे । दिवादित्वात् श्यन् ।

यां ते रुद्र इषुमास्यदङ्गेभ्यो हृदयाय च ।
इदं[1] तामद्य त्वद्[2] वयं विषूचीं वि वृहामसि ॥ १ ॥

याम् । ते । रुद्रः । इषुम् । आस्यत् । अङ्गेभ्यः । हृदयाय । च ।
इदम् । ताम् । अद्य । त्वत् । वयम् । विषूचीम् । वि । वृहामसि ॥ १ ॥

हे व्याधित ते तव अङ्गेभ्यः हस्तपादादिभ्यः हृदयाय च अङ्गानि हृदयं च व्यद्धुं रुद्रः रोदयिता शूलरोगाभिमानी देवः याम् इषुम् बाणम् आस्यत् धनुर्यन्त्रेण प्राक्षिपत् । अद्य इदानीम् इदं तत्प्रतीकारार्थं ताम् इषुं विषूचीम् अनभिमुखीं वयं त्वत् त्वत्तो वि वृहामसि विवृहामः शरीरमध्याद् उत्क्षिपामः । वृहू उद्यमने । 'इदन्तो मसि' ( पा ७,१,४६ ) ।

यास्ते शतं[3] धमनयोऽङ्गान्यनु विष्ठिताः ।
तासां ते सर्वासां वयं[4] निर्विषाणि ह्वयामसि ॥ २ ॥

याः । ते । शतम् । धमनयः । अङ्गानि । अनु । विऽस्थिताः ।
तासाम् । ते । सर्वासाम् । वयम् । निः । विषाणि । ह्वयामसि ॥ २ ॥

हे शूलरोगिन् ते तव अङ्गानि अनु हस्तपादाद्यवयवाननु याः शतम् शतसंख्याकाः धमनयः नाड्यो विष्ठिताः विविधम् अवस्थिताः ते त्वदीयानां तासां सर्वासां धमनीनां निर्विषाणि[5] विषरहितानि भैषज्यानि शूलनिवर्हणानि वयं ह्वयामसि ह्वयामः संपादयामः ।

---

१. इमां पै १९,१८,२. २. ते पै. ३. शिरा पै १९,१८,१. ४. साकं पै.
५. सं. मरा. इ.

नमस्ते रुद्रास्यते नमः प्रतिहितायै[1] ।
नमो विसृज्यमानायै[2] नमो निपतितायै[3] ॥३॥

नमः । ते । रुद्र । अस्यते । नमः । प्रतिऽहितायै ।
नमः । विऽसृज्यमानायै । नमः । निऽपतितायै ॥ ३ ॥

हे रुद्र रोदयितर्देव अस्यते व्याधिरूपाम् इषुं क्षिपते ते तुभ्यं नमोऽस्तु 'नमः स्वस्ति' (पा २,३,१६) इति चतुर्थी । तथा प्रतिहितायै धनुषि संहितायै त्वदीयेषवे नमोऽस्तु । विसृज्यमानायै धनुषः सकाशात् प्रेर्यमाणायै तस्यै नमोऽस्तु । विसर्जनानन्तरं लक्ष्ये निपतितायै तस्यै नमोऽस्तु । इत्थं रुद्रस्य तदायुधस्य च विविधावस्थस्य नमस्कारेण तत्कृतपीडाभावः प्रार्थितः ।

इति नवमेऽनुवाके चतुर्थं सूक्तम् ।

'इमं यवम्' इति तृचेन सर्वरोगभैषज्यार्थम् अर्धर्चेनार्धर्चेन आज्यं हुत्वा सयवे केवले वा उदपात्रे चतुरः संपातान् द्वौ पृथिव्याम् आनीय संपातितमृत्सहितोदकेन तृचाभिमन्त्रितेन व्याधितम् आप्लावयेत् ।

तथा तत्रैव कर्मणि अनेन तृचेन यवमणिं संपात्य अभिमन्त्र्य बध्नीयात् ।

सूत्रितं हि—"'दिवे स्वाहा' (अ ५,९), 'इमं यवम्' (अ ६,९१) इति [4]चतुर उदपात्रे संपातान् आनयति । द्वौ पृथिव्याम् । तौ प्रत्याहृत्याप्लावयति । सयवे चोत्तरेण यवं बध्नाति" (कौसू २८,१७-२०) इति ।

'वातरंहाः' (अ ६,९२) इति तृचेन अश्वशान्तौ आज्यं हुत्वा उदपात्रे संपातान् आनीय तेनोदकेन सूत्रोक्तरीत्या अश्वम् आचामयेत् आप्लावयेच्च । तद् उक्तं संहिताविधौ—"'वातरंहा' इति स्नातेऽश्वे संपातान् अभ्यतिनयति । पलाशे [5]संचूर्णं चोत्तरान्[5] । आचामयति[6] । आप्लावयति" (कौसू ४१,२१-२४) इति ।

इमं यवमष्टायोगैः षड्योगेभिरचर्कृषुः ।
[7]तेना ते तन्वो३ रपोऽपाचीनमप[7] व्यये[8] ॥ १ ॥

इमम् । यवम् । अष्टाऽयोगैः । षट्ऽयोगेभिः । अचर्कृषुः ।
तेन । ते[9] । तन्वः । रपः । अपाचीनम् । अप । व्यये ॥ १ ॥

---

१. °हिताभ्यः पै १,२७,२.  २. °मानाभ्यो पै.  ३. °ताभ्यः पै., आयताभ्यः? पै १९, १८,३.  ४. चतुरुद° S'.  ५. °चूर्णंचूत्तरान् Bl.  ६. आचम° Bl.  ७. स घा ते तन्वो रपः प्रतीचो° पै १९,१८,७; °मुप B; °मप>°मुप Cs.  ८. ह्वये D; ह्वयताम् पै.  ९. ते P.

इमं भैषज्याय प्रयुज्यमानं यवम् दीर्घशूकं धान्यम् अष्टायोगैः अष्टभिर्बलीवर्दैर्युज्यमाना हला अष्टायोगाः । पड्योगेभिः पड्भिर्युज्यमानाः पड्योगाः । इत्थं महद्भिर्हलैः अदर्कृषुः कर्षणं कृतवन्तः । ईदृशेन कर्षणेन उत्पादितवन्त इत्यर्थः । कृष विलेखने । तेन यवेन हे व्याधित ते तव तन्वः शरीरस्य रपः रोगनिदानभूतं पापम् अपाचीनम् अपाङ्मुखम् अप व्यये अपगमयामि ।

न्य१ग्¹ वातो² वाति न्यक् तपति सूर्यः ।
नीचीनमघ्न्या दुहे न्यग् भवतु ते रपः³ ॥ २ ॥

न्यक्⁴ । वातः । वाति । न्यक्⁵ । तपति । सूर्यः ।
नीचीनम् । अघ्न्या । दुहे । न्यक् । भवतु । ते । रपः ॥ २ ॥

न्यग् वात इत्याद्या उपमानार्थाः । यथा वातः वायुः न्यग् वाति नीचीनं गच्छति । वा गतिगन्धनयोः । सूर्यः सर्वस्य प्रेरक आदित्यश्च न्यग् नीचीनम् अवाङ्मुखं तपति । अघ्न्या । गोनामैतत् । अहन्तव्या गौश्च नीचीनम् अधोमुखं पयो दुहे दुग्धे । 'लोपस्त आत्मनेपदेषु' ( पा ७,१,४१ ) इति तलोपः । यथा एते वातादयो न्यक्त्वधर्मोपेताः हे व्याधित एवं ते तव रपः पापं रोगावहं न्यग् नीचीनम् अधोमुखं भवतु । शाम्यत्वित्यर्थः ।

आप इद् वा उ भेषजीरापो अमीवचातनीः ।
आपो विश्वस्य⁶ भेषजीस्तास्ते⁷ कृण्वन्तु भेषजम्⁸ ॥ ३ ॥

आपः । इत् । वै । ऊं इति । भेषजीः । आपः । अमीवऽचातनीः ।
आपः । विश्वस्य । भेषजीः । ताः । ते । कृण्वन्तु । भेषजम् ॥ ३ ॥

आप इद् वा उ आप एव खलु भेषजीः भेषज्यः सर्वौषधानां तद्विकारत्वात् । "मुमुक्षभेषजाच्च' ( पा ४,१,३० ) इति भेषजशब्दात् ङीप् । 'वा छन्दसि' ( पा ६,१,१०६ ) इति पूर्वसवर्णदीर्घः । अत एव हेतोः आपः अमीवचातनीः अमीवानां रोगाणां विनाशयित्र्यः । 'चातयतिर्नाशने' (नि ६,३०) इति यास्कः । तस्माद् विश्वस्य सर्वस्य रोगजातस्य भेषजीः भेषज्यः ता आपः ते तव भेषजम् रोगनिवर्तकम् औषधं कृण्वन्तु कुर्वन्तु ।

वातरंहा भव वाजिन् युज्यमान इन्द्रस्य याहि प्रसवे मनोजवाः⁹ ।
युञ्जन्तु त्वा मरुतो विश्ववेदस आ ते त्वष्टा पत्सु जवं दधातु ॥ १ ॥

---

१. न्यङ्ग् Bᵏ,D,Sᵐ,Cs; न्यग् B  २. उप वाति ऋ १०,६०,११.  ३. विपम् पै १,१११,१.
४. न्यङ् P.  ५. न्यङ् P.  ६. सर्वस्य ऋ १०,१३७,६.  ७. तास्त्वा मुञ्चन्तु
धन्विपाक अ १,७,५; पै १,२,७. पै १९,३४,१०.  ८. स्येषु दक्षिण अधिविधि मा ९,८.  ९. देव्यामः

वातऽरंहाः । भव । वाजिन् । युज्यमानः । इन्द्रस्य । याहि । प्रऽसवे । मनःऽजवाः । युञ्जन्तु । त्वा । मरुतः । विश्वऽवेदसः । आ । ते । त्वष्टा । पत्ऽसु । जवम् । दधातु ॥१॥

हे वाजिन् अश्व युज्यमानः रथयुगे बध्यमानस्त्वं वातरंहाः वायुवेगो भव । इन्द्रस्य प्रसवे प्रेरणे अनुज्ञायां सत्यां मनोजवाः मनोवेगः सन् याहि गन्तव्यमवधिं प्राप्नुहि । विश्ववेदसः विश्वधनाः सर्वगोचरज्ञाना वा मरुतः एकोनपञ्चाशत्संख्याका देवाः त्वा त्वां युञ्जन्तु संनह्यन्तु । त्वष्टा देवः ते तव पत्सु पादेषु जवम् वेगम् आ दधातु करोतु ।

> जवस्ते[1] अर्वन् निहितो गुहा यः श्येने वात [2]उत योऽचरत्[3] परीत्तः ।
> तेन [4]त्वं वाजिन् बलवान् [5]बलेनाजिं जय समने[5] पारयिष्णुः[6] ॥ २ ॥

जवः । ते । अर्वन् । निऽहितः । गुहा । यः । श्येने । वाते । उत । यः । अचरत् । परीत्तः । तेन । त्वम् । वाजिन् । बलऽवान् । बलेन । आजिम् । जय । समने । पारयिष्णुः ॥

हे अर्वन् अश्व ते तव यो जवः वेगः गुहा गुहायाम् असाधारणे स्थाने निहितः निक्षिप्तोऽस्ति । श्येने पक्षिविशेषे वाते वायौ । उत शब्दः अप्यर्थे । यो जवः परीत्तः । परिदानं रक्षणार्थं दानम् । रक्षणाय दत्तः अचरत् चरति वर्तते । हे वाजिन् त्वं तेन वेगवता बलेन बलवान् भूत्वा समने संग्रामे पारयिष्णुः पारप्रापणशीलः सन् आजिम् युद्धं जय ।

> तनूष्टे[7] वाजिन् [8]तन्वं१ नयन्ती[9] वाममस्मभ्यं धावतु[10] शर्म तुभ्यम् ।
> अह्रुतो[11] महो धरुणाय देवो[12] दिवीव[13] ज्योतिः स्वमा[14] मिमीयात्[15] ॥३॥

तनूः । ते । वाजिन् । तन्वम् । नयन्ती । वामम् । अस्मभ्यम् । धावतु । शर्म । तुभ्यम् । अह्रुतः । महः । धरुणाय । देवः । दिविऽइव । ज्योतिः । स्वम्[16] । आ । मिमीयात् ॥

हे वाजिन् वेगवन्नश्व ते तव तनूः शरीरयष्टिः तन्वम् आरूढस्य सादिनः शरीरं नयन्ती युद्धभूमिं प्रापयन्ती अस्मभ्यं वामम् वननीयं धनं धावतु प्रापयतु । तुभ्यं च शर्म शस्त्रक्षतादिव्यतिरेकेण सुखं यथा भवति तथा धावतु शीघ्रं गच्छतु । महः महतो

---

१. वाजिन् मा ९,९. २. च मा. पै १९,३४,११. ३. चरति पै. ४. नो मा. ५. बलेन वाजजिच्च भव समने च मा. ६. पारयिष्णुं B; पारयिष्णु A,B^h,D,K,K^m; पारयिष्णुः>पारयिष्णु Cs. ७. तनूस्ते पै १९,३४,१३. ८. तन्वं३ A,B,B^h,D,K,S^m,Cs. ९. वहन्ती पै. १०. धातु ऋ १०,५६,२ पै. ११. अविहुतो पै. १२. देवा पै. RW.; देवान् ऋ. १३. दिव्यमिव पै. १४. स्वरा पै. १५. मिमीयान् पै., मिमीयाः ऋ. १६. सम् P.

दिवः[1] अन्तरिक्षस्य अवकाशात्मकस्य ग्रामजनपदादेः धरुणाय धारणाय अहुतः अकुटिलगामी भूत्वा दिवि अन्तरिक्षे ज्योतिरिव सूर्यप्रकाश इव स्वम् स्वकीयं स्थानम् आ मिमीयात् आगच्छतु। माङ् माने शब्दे च। व्यत्ययेन परस्मैपदम्।

इति पञ्चमं सूक्तम्।

इति सायणार्यविरचिते अथर्वभाष्ये षष्ठकाण्डे नवमोऽनुवाकः।

दशमेऽनुवाके चत्वारि सूक्तानि। तत्र 'यमो मृत्युः' इति प्रथमं सूक्तम्। अत्र आद्यस्य तृचस्य वास्तोष्पत्यगणे (कौसू ८,२३) पाठाद् वास्तोष्पत्याख्यायां महाशान्तौ वास्तोष्पत्यगणप्रयुक्तो[2] विनियोगोऽनुसंधेयः। तद् उक्तं शान्तिकल्पे—'वास्तोष्पत्यगणो वास्तोष्पत्यायाम्' (शाक १८,५) इति।

तथा यत्र वास्तोष्पत्यगणस्य विनियोगस्तत्र सर्वत्र अस्यापि गणप्रयुक्तो विनियोगो द्रष्टव्यः।

तथा बृहद्गणे (कौ. ९,२) पाठात् शान्त्युदकाभिमन्त्रणादौ बृहद्गणप्रयुक्तो विनियोग उन्नेयः।

तथा स्वस्त्ययनकर्मणि अनेन तृचेन आज्यसमित्पुरोडाशादिशष्कुल्यन्तानि त्रयोदश द्रव्याणि जुहुयात्। सूत्रितं हि—"'यमो मृत्युः' (अ ६,९३), 'विश्वजित्' (अ ६,१०७), 'शकधूमम्' (अ ६,१२८), भवाशर्वौ' (अ ११,२) इत्युपदधीत" (कौसू ५०,१३) इति।

अत्र 'सं वो मनांसि' इति द्वितीयेन तृचेन सांमनस्यकर्मणि ग्राममध्ये [3]संपातितोदकुम्भनिनयनम् तद्वत् [4]सुराकुम्भनिनयनम् त्रिवर्षवत्सिकाया गोः पिशितानां प्राशनम् [5]संपातितान्नप्राशनम् [5]संपातितसुरायाः पायनम् तथाविधप्रपोदकपायनं च कुर्यात्। सूत्रितं हि—"'सं वो मनांसि' (अ ६,९४), 'संज्ञानं नः' (अ ७,५४) इति सामनस्यानि। उदकुम्भं संपातवन्तं ग्रामं परिहृत्य मध्ये निनयति। एवं सुराकुम्भम् त्रिहायण्या वत्सतर्याः शुक्तानि[6] पिशितान्याशयति। भक्तं सुरां प्रपां संपातवत् करोति" (कौसू १२,५-९) इति।

'अश्वत्थो देवसदनः' (अ ६,९५) इति तृचेन राजयक्ष्मकुष्ठादिरोगशान्त्यर्थं कुष्ठाख्यौषधमिश्रितं नवनीतम् अभिमन्त्र्य प्रतिलोमं व्याधितशरीरं प्रलिम्पेत्। 'कुष्ठलिङ्गाभिर्नवनीतमिश्रेणाप्रतीहारं प्रलिम्पति'[7] (कौसू २८,१३) इति सूत्रात्।

---

१. वैतु. मेरा. द्र. २. प्र नास्ति S'. ३. संपादितो S'. ४. °कुम्भे नि° S'. ५. संपादि° S'. ६. शुष्कानि B। ७. °मिश्रेण प्रतीहारं S'.

'गर्भो असि' (अ ६,९५,३) इत्यनया अग्निचयने अप्सु प्रक्षिप्यमाणम् उख्यं भस्म ब्रह्मा अनुजपेत्। "'गर्भो अस्योषधीनाम्' इत्युख्यं[1] भस्माप्सूप्यमानम्[2]" ( वैताश्रौ २८,२० ) इति हि वैतानं सूत्रम्।

'या ओषधयः' (अ ६,९६) इति तृचेन ब्राह्मणाक्रोशे जलोदरे[3] च शान्त्यर्थं सोमलताम् अग्नौ प्रक्षिप्य व्याधितं धूपयेत्।

तथा तत्रैव कर्मणि अनेन तृचेन मधुमिश्रं दधि अभिमन्त्र्य पाययेत्।

तथा क्षीरं तक्रेण संमिश्र्य अभिमन्त्र्य पाययेत्।

तथा दधि मधु क्षीरम् उदश्वितं च एकीकृत्य पाययेत्।

सूत्रितं हि—"'या ओषधयः' इति मन्त्रोक्तयौषधीभिर्धूपयति" (कौसू ३१,२२) इत्यादि।

तथा 'या ओषधयः' इत्यस्या अंहोलिङ्गगणे पाठाद् 'अनुक्तान्यप्रतिषिद्धानि भैषज्यानाम्। अंहोलिङ्गाभिः' ( कौसू ३२,२६;२७ ) इत्यादिषु गणप्रयुक्तो विनियोगो द्रष्टव्यः।

यमो मृत्युरघमारो निर्ऋथो [4]बभ्रुः [5]शर्वोऽस्ता[6] नीलशिखण्डः[7]।
देवजनाः [8]सेनयोत्तस्थिवांसस्ते अस्माकं[9] परि वृञ्जन्तु[10] वीरान् ॥ १ ॥

यमः। मृत्युः। अघऽमारः। निःऽऋथः। बभ्रुः। शर्वः। अस्ता[6]। नीलऽशिखण्डः।
देवऽजनाः। सेनया। उत्तस्थिऽवांसः। ते। अस्माकम्। परि। वृञ्जन्तु। वीरान् ॥१॥

यमयति नियमयति पापानुसारेण प्राणिनो निगृह्णातीति यमः। मारयति प्राणांस्त्याजयतीति मृत्युः। अघमारः अघेन पापेन निमित्तेन मारयतीति अघमारः। 'पुंसि संज्ञायाम्' ( पा ३,३,११८ ) इति घः। निर्ऋथः निःशेषेण ऋच्छति पीडयतीति निर्ऋथः। ऋ गतौ इत्यस्मान्निरुपसृष्टाद् औणादिकः थक्प्रत्ययः (पाउ २,८)। बभ्रुः पिङ्गलवर्णः भरणशीलो वा। भृञ् भरणे इत्यस्मात् 'कुर्भ्रश्च' (पाउ १,२२) इति कुप्रत्ययः द्विर्भावश्च। शृणाति हिनस्तीति शर्वः। शॄ हिंसायाम् इत्यस्माद् वप्रत्ययः। अस्ता। असु क्षेपणे इत्यस्मात् ताच्छीलिकस्तृन्। क्षेपणशीलः। नीलशिखण्डः नीलाः कृष्णवर्णाः शिखण्डाः शिखा यस्य स तथोक्तः। एतत्संज्ञका यमादयो देवजनाः देवजातयः पापिनां हिंसार्थं सेनया स्वस्वपरिवारजनसंघेन उत्तस्थिवांसः उत्थिताः स्वस्थानाद् उत्क्रान्ता वर्तन्ते। उत्पूर्वात् तिष्ठतेर्लिटः क्वसुः। 'वस्वेकाजाद्घसाम्' ( पा ७,२,६७ )

---

१. °ख्य S'.   २. भस्माप्स्वोप्य° RG.   ३. °दरं S'.   ४. भवश् पै १९, १४,१३.   ५. शुर्व्यो A.   ६. तु. सा. पै, (पै. शर्वो अस्ता); वैतु. मूको. वै. (तु. शंपा. WM °स्त्रा (पपा. °स्त्रां).   ७. °खण्डी पै.   ८. सेनामुत्त° पै.   ९. तेऽस्मा° पै.   १०. °न्ति पै.

इति इडागमः। जगदुपद्रवकारिणस्ते अस्माकं वीरान् पुत्रपौत्रादीन् परि वृञ्जन्तु परिहरन्तु मा बाधन्ताम् इत्यर्थः। वृजी वर्जने। 'श्नसोरल्लोपः' (पा ६,४,१११) इति अकारलोपः।

मन॑सा हो॒मैर्हर॑सा घृ॒तेन॑ श॒र्वाया॑स्त्र उ॒त राज्ञे॑ भ॒वाय॑।
न॒म॒स्ये॒भ्यो॒ नम॑ ए॒भ्यः कृ॒णोम्य॒न्यत्रा॒स्मद॑घ॒वि॑षा नयन्तु ॥ २ ॥

मन॑सा। हो॒मैः। हर॑सा। घृ॒तेन॑। श॒र्वाय॑। अस्त्रे॑। उ॒त। राज्ञे॑। भ॒वाय॑। न॒म॒स्ये॑भ्यः। नमः॑। ए॒भ्यः। कृ॒णो॒मि॒। अ॒न्यत्र॑। अ॒स्मत्। अ॒घऽवि॑षाः। न॒य॒न्तु॒ ॥ २ ॥

मनसा मनःसंकल्पमात्रेण हरसा हरणशीलेन तेजसा। तद्धेतुत्वात् ताच्छब्द्यम्। तेजोरूपेण घृतेन क्षरणशीलेन आज्येन क्रियमाणैः होमैः सह शर्वाय एतत्संज्ञाय देवाय अस्त्रे क्षेप्त्रे एतन्नाम्ने। उत अपि च राज्ञे एतेषाम् ईश्वराय भवाय महादेवाय। एभ्यः 'यमो मृत्युरघमारः' इति प्राग् अनुक्रान्तेभ्यः नमस्येभ्यः नमस्कारार्हेभ्यो नमस्कृणोमि नमस्करोमि। होमैर्नमस्कारेण च प्रीतास्ते अस्मत् अस्मत्तः अन्यत्र अघविषाः। अघं पापमेव विषं विषवन्मृतिकरं यासु ताः कृत्यास्तथोक्ताः। ता नयन्तु प्रापयन्तु।

त्राय॑ध्वं नो अ॒घवि॑षाभ्यो व॒धाद् विश्वे॑ देवा मरुतो विश्ववेदसः।
अ॒ग्नीषोमा॒ वरु॑णः पू॒तद॑क्षा वातापर्ज॒न्ययोः॑ सुम॒तौ स्या॑म ॥ ३ ॥

त्राय॑ध्वम्। नः॒। अ॒घऽवि॑षाभ्यः। व॒धात्। विश्वे॑। दे॒वाः॒। म॒रु॒तः॒। वि॒श्व॒ऽवे॒द॒सः॒। अ॒ग्नीषोमा॑। वरु॑णः। पू॒तऽद॑क्षाः। वा॒ता॒प॒र्ज॒न्ययोः॑। सु॒ऽम॒तौ। स्या॒म॒ ॥ ३ ॥

हे विश्वे देवा· हे मरुतः विश्ववेदसः सर्वधनाः सर्वगोचरज्ञाना वा यूयम् अघविषाभ्य· प्रागुक्ताभ्यः कृत्याभ्यः वधात् तत्कृतात् हननात् नः अस्मान् त्रायध्वम् पालयत। अघविषाभ्य इति। 'भीत्रार्थानाम्'[1] (पा १,४,२५) इत्यपादानत्वात् पञ्चमी। विश्वे देवा इत्युक्तम् के पुनस्त इत्याह — अग्नीषोमा अग्निश्च सोमश्च अग्नीषोमौ। 'ईदग्नेः सोमवरुणयोः' (पा ६,३,२७) इति अग्निशब्दस्य दीर्घः ईकारः। 'सुपां सुलुक्'[1] (पा ७,१,३९) इति पूर्वसवर्णदीर्घः। वरुणः वारयिता पापिनां निग्रहीता देवः पूतदक्षाः पूतं शुद्धं दक्षो बलं यस्य स तथोक्तः। अनेन मित्रो विवक्षितः। 'मित्रं हुवे पूतदक्षम्' (ऋ १,२,७) इति हि मन्त्रान्तरम्। तथा वयं वातापर्जन्ययोः वातश्च पर्जन्यश्च वातापर्जन्यौ। वातो वायुः सूत्रात्मा सर्वजगत्प्राणभूतः। पर्जन्यः वृष्टिप्रदो जीवनात्मा। 'देवताद्वन्द्वे च' (पा ६,३,२६) इति पूर्वपदस्य आनङ्। तयोः सुमतौ शोभनायाम् अनुग्रहात्मिकायां बुद्धौ स्याम भवेम।

---

१. नमस्येभ्यो पै १९,१४,१४.

सं वो[1] मनांसि सं व्रता समाकूतीर्नमामसि[2] ।
[3]अमी ये विव्रता स्थन[3] तान् वः सं [4]नमयामसि ॥ १ ॥

सम् । वः । मनांसि । सम् । व्रता । सम् । आऽकूतिः । नमामसि ।
अमी इति । ये । विऽव्रताः । स्थन । तान् । वः । सम् । नमयामसि ॥ १ ॥

अहं [5]गृभ्णामि मनसा मनांसि मम [6]चित्तमनु चित्तेभिरेत ।
मम [7]वशेषु हृदयानि[7] वः कृणोमि मम [8]यातमनुवर्त्मान एत ॥२॥

अहम् । गृभ्णामि । मनसा । मनांसि । मम । चित्तम् । अनु । चित्तेभिः । आ । इत ।
मम । वशेषु । हृदयानि । वः । कृणोमि । मम । यातम् । अनुऽवर्त्मानः । आ । इत ॥ २ ॥

'सं वो मनांसि' इति द्वे चतुर्थीपञ्चम्यौ (१,२) पूर्ववद् ( ३,८,५;६ ) व्याख्येये ।

ओते मे द्यावापृथिवी ओता देवी सरस्वती ।
ओतौ म इन्द्रश्चाग्निश्चर्ध्यास्मेदं सरस्वति ॥ ३ ॥

ओते इत्याऽउते । मे । द्यावापृथिवी इति । आऽउता । देवी । सरस्वती ।
आऽउतौ । मे । इन्द्रः । च । अग्निः । च । ऋध्यास्म । इदम् । सरस्वति ॥ ३ ॥

द्यावापृथिवी द्यौश्च पृथिवी च द्यावापृथिव्यौ । 'दिवो द्यावा', 'दिवसश्च पृथिव्याम्' (पा ६,३,२९;३०) इति द्यावा आदेशः । 'सुपां सुलुक्' (पा ७,१,३९) इति पूर्वसवर्णदीर्घः । ते उभे मे मह्यम् ओते आभिमुख्येन संतते परस्परं संबद्धे वा । देवी द्योतमाना सरस्वती द्यावापृथिव्योर्मध्ये वर्तमाना वाग्देवता सापि ओता अस्मदाभिमुख्येन संबद्धा । आङ्पूर्वाद् वेञ् तन्तुसंताने इत्यस्मान्निष्ठा । 'वचिस्वपि' ( पा ६,१,१५ ) इत्यादिना संप्रसारणम् । तथा इन्द्रश्च अग्निश्च मे मह्यं मदभिलषितफलसिद्ध्यर्थम् ओतौ अभिमुख्येन संबद्धौ परस्परप्रोतौ वा एककार्योद्युक्तौ । अतः एतेषाम् अनुग्रहात् हे सरस्वति मन्त्रात्मिके देवि इदम् इदानीं वयम् ऋध्यास्म समृद्धा भूयास्म । ऋधु वृद्धौ ।

अश्वत्थो देवसदनस्तृतीयस्यामितो दिवि ।
तत्रामृतस्य चक्षणं [9]देवाः कुष्ठमवन्वत[9] ॥ १ ॥

---

१. वां मा १२,५८.  २. °तीर्नयामसि पै १९,१५,२ °तीरनंसत मै २,२,६; समु चित्ताम्याकरम् मा.  ३. इमे ये विव्रताः स्थन पै.; °विव्रताः स्थ मै.  ४. ज्ञपया° पै.  ५. गृह्णामि पै १९,१०,१३.  ६. चित्तमुप पै.  ७. वशे हृदयं पै.  ८. वाचमनु पै.  ९. ततः कुष्ठो अजायत पै ७,१०,६.

अश्वत्थः । देवऽसदनः । तृतीयस्याम् । इतः । दिवि ।
तत्र । अमृतस्य । चक्षणम् । देवाः । कुष्ठम् । अवन्वत ॥ १ ॥

हिरण्ययी नौरचरद्धिरण्यबन्धना दिवि ।
तत्रामृतस्य पुष्पं[1] देवाः कुष्ठमवन्वत[2] ॥२॥

हिरण्ययी । नौः । अचरत् । हिरण्यऽबन्धना । दिवि ।
तत्र । अमृतस्य । [1]पुष्पम् । देवाः । कुष्ठम् । अवन्वत ॥ २ ॥

'अश्वत्थो देवसदनः' इति सतम्यृचस्यौ (१,२) पूर्ववद् (५,४,३,४) अत्रापि व्याख्येये[3]।

गर्भो असोषधीनां गर्भो हिमवतामुत[4] ।
गर्भो विश्वस्य भूतस्येमं मे अगदं कृधि[5] ॥३॥

गर्भः । असि । ओषधीनाम् । गर्भः । हिमऽवताम् । उत । गर्भः ।
विश्वस्य । भूतस्य । इमम् । मे । अगदम् । कृधि ॥ ३ ॥

हे अग्ने त्वम् ओषधीनाम् । ओषः पाकः आसु धीयत इति ओषधयः सर्वा वीरुधः । तासां गर्भः गर्भवद् अन्तरवस्थितः असि भवसि । उत अपि च हिमवताम् शीतस्पर्शवताम् अन्येषामपि वनस्पतीनां हिमवत्प्रमुखाणां पर्वतानां वा हे अग्ने त्वं गर्भो भवसि । किं बहुना । विश्वस्य सर्वस्यापि भूतस्य भूतजातस्य त्वं गर्भो भवसि । अग्नेः सर्वजगत्परिपाकहेतुत्वेन सर्वत्र अन्तरवस्थानात् । ईदृशस्त्वम् इमं मे मदीयं जनम् अगदम् रोगरहितं कृधि कुरु ।

या ओषधयः[6] सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ १ ॥

याः । ओषधयः । सोमऽराज्ञीः । बह्वीः । शतऽविचक्षणाः ।
बृहस्पतिऽप्रसूताः । ताः । नः । मुञ्चन्तु । अंहसः ॥ १ ॥

या ओषधयः वीरुधः सोमराज्ञीः सोमः अमृतमयो देवो राजा ईश्वरो यासां तास्तथोक्ताः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । जसि 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः । बह्वीः बहवः अनेकविधाः । 'बह्वादिभ्यश्च' ( पा ४,१,४५ ) इति ङीष् । शतविचक्षणाः शतविधदर्शनाः । रसवीर्यविपाकेन नानाविधज्ञानोपेता इत्यर्थः ।

---

१. पुष्पं J,RW. (द्र. पृ ५६६ टि ८).　　२. ततः कुष्ठो अजायत पै ७,१०,७.
३. व्याख्यानं तु पूर्वत्र ५,४,३,४ अपि नोपलभ्यते । पञ्चमकाण्डे सा. भाष्यस्य लुप्तत्वात् । तेन सा. भाष्ये पूर्वमार्गादित्यनुमीयते.　　४. पर्वतानाम् पै १३,२,६.　　५. 'इदं मे अगदं गर्भेऽ(?) भाः पै.　　६. ओषधीः ऋ १०,९७,१८ मा १२,९२ मैसं २,८,३.

बृहस्पतिप्रसूताः बृहस्पतिना देवेन तत्तद्रोगभैषज्येषु प्रसूताः प्रेरिताः । विनियुक्ता इत्यर्थः । तास्तथाविधा ओषधयः नः अस्मान् अंहसः पापात् नानाविधरोगनिदानात् मुञ्चन्तु विसृजन्तु पृथक् कुर्वन्तु ।

**मुञ्चन्तु मा[1] शपथ्या३दथो[2] वरुण्यादुत[3] ।**
**अथो[4] यमस्य पड्वीशाद्[5] विश्वस्माद्[6] देवकिल्बिषात्[7] ॥ २ ॥**

मुञ्चन्तु । मा । शपथ्यात् । अथो इति । वरुण्यात् । उत ।
अथो इति । यमस्य । पड्वीशात् । विश्वस्मात् । देवऽकिल्बिषात् ॥ २ ॥

आपः ओषधयो वा मा मां शपथ्यात् शपथजनिताद् ब्राह्मणाक्रोशजात् पापाद् मुञ्चन्तु वियोजयन्तु । अथो अपि च । उतशब्दः अप्यर्थे । वरुण्यात् वरुणकृताद् अनृतवदनादिजनितात् पापादपि मुञ्चन्तु । 'अनृते खलु वै क्रियमाणे वरुणो गृह्णाति' (तैब्रा १,७,२,६) इति हि श्रुतिः । अथो अपि च यमस्य अन्तकस्य संबन्धिनः पड्वीशात्[8] पादबन्धनपाशाद् मुञ्चन्तु । पड्वीशशब्दः पृषोदरादिः । किमनेन विशेषकथनेन । विश्वस्मात् सर्वस्माद् देवकिल्बिषात् देवकृतात् पापाद् मां मुञ्चन्तु ।

**यच्चक्षुषा मनसा[9] यच्च वाचोपारिम जाग्रतो[10] यत् स्वपन्तः ।**
**सोमस्तानि स्वधया नः पुनातु[11] ॥ ३ ॥**

यत् । चक्षुषा । मनसा । यत् । च । वाचा । उपऽआरिम । जाग्रतः । यत् । स्वपन्तः ।
सोमः । तानि । स्वधया । नः । पुनातु ॥ ३ ॥

जाग्रतः जाग्रदवस्थापन्ना इन्द्रियैः शब्दस्पर्शादिविषयान् व्यवहरन्तो वयम् । जागृ निद्राक्षये । अस्मात् लटः शत्रादेशः । 'जक्षित्यादयः षट्' (पा ६,१,६) इति अभ्यस्तत्वाद् 'नाभ्यस्ताच्छतुः' (पा ७,१,७८) इति नुमभावः । चक्षुषा । उपलक्षणमेतत् । चक्षुरादीन्द्रियेण प्रतिषिद्धबाह्यविषयगतरूपादिग्राहिणा । मनसा प्रतिषिद्धविषयसंकल्पविकल्पजनकेन मानसेन्द्रियेण यद् उपारिम यत् पापम् उपगताः । ऋ गतौ इत्यस्मात् लिटि रूपम् । यच्च पापं वाचा । कर्मेन्द्रियाणामुपलक्षणमे-

---

१. मुञ्चामि त्वा पै ३,१७,४; निर्मा मुञ्चामि आपश्रौ ७,२१,६ लाश्रौ २,२,११. २ शपथान्निर्मा आपश्रौ. लाश्रौ. ३. वा (च आपश्रौ. लाश्रौ.) रुणादुत (°दधि आपश्रौ.) पै. आपश्रौ. लाश्रौ. ४. निर्मा आपश्रौ. लाश्रौ. ५. पड्बीशाद् R,V,WM.,RW. सा. ऋ १०,९७,१६ पै. आपश्रौ.; पड्वीं° B; पड्विं° लाश्रौ. ६. सर्वस्माद् ऋ. मा १२,९० पै १९,१२,५ आपश्रौ. लाश्रौ. ७. देवदुष्कृतात् पै.; °पादथो मनुष्यकिल्बिषात् आपश्रौ.; ?ष्व कि° लाश्रौ. ८. वैतु. मंपा. द्र. ९. यन्मनसा पै १९,१२,६. १०. यज्जाग्रतो पै. ११. सोमो मा तस्मादेनसस्स्वधया पुनाति विद्वान् पै.

तत्। वागादिकर्मेन्द्रियेण कामचारवादादिना उपगताः स्मः। तथा स्वान्तः स्वप्नावस्था वयं तत्र बाह्येन्द्रियाणामुपरमात् केवलं मनसैव यत् पापं चकृम नः अस्माकं तानि पापानि सोमः पितृलोकाधिपतिर्देवः स्वधया पितॄन् उद्दिश्य अस्माभिः क्रियमाणया। स्वधाकारोपलक्षितेन पित्र्यकर्मणेत्यर्थः। पुनातु शोधयतु। पूञ् पवने। 'प्वादीनां ह्रस्वः' ( पा ७,३,८० ) इति ह्रस्वत्वम्।

इति दशमेऽनुवाके प्रथमं सूक्तम्।

'अभिभूः', 'इन्द्रो जयाति' ( अ ६,९८ ), 'अभि त्वेन्द्र:' ( अ ६,९९ ) इति तृचैः संग्रामजयकर्मणि आज्यहोमं सक्तुहोमम् धनुरिध्मेऽग्नौ धनुःसमिदाधानम् शरेध्मेऽग्नौ[1] शरसमिदाधानम् [2]संपातिताभिमन्त्रितधनुःप्रदानं वा कुर्यात्। "'अभिभूः', 'इन्द्रो जयाति', 'अभि त्वेन्द्र' इति साग्रामिकाणि। आज्यसक्तून् जुहोति" (कौसू १४,७;८) इत्यादिसूत्रात्।

तथा एषां तृचानामपराजितगणे (कौसू१४,७) पाठाद् उपाकर्मादिषु 'अभयैरपराजितैः' ( कौसू १३९,७ ) इति, 'अपराजितगणोऽपराजितायाम्' (शांक १८,५) इति च पद्यमादिषु गणप्रयुक्तो विनियोगो द्रष्टव्यः।

तथा इन्द्रमहाख्ये कर्मणि एतैस्तृचैः पूर्णहोमं जुहुयात्। तथा तत्रैव कर्मणि एतैस्तृचैः पशव आलब्धव्याः[3]। तथा तत्रैव एतैरिन्द्रोपस्थानं कुर्यात्।

सूचितं हि— "'अभिभूर्यज्ञः' इत्येतैस्त्रिभिः सूक्तैरन्वारब्धे राजनि पूर्णहोमं जुहुयात्" ( कौसू १४०,१० ) इत्यादि।

अत्र 'इन्द्रो जयाति' इति तृचेन परसेनाविक्षेपणकर्मणि राजा सेनां त्रिः परियाच्छेत्। "'परि वर्माणि' ( अ ६,६७ ), 'इन्द्रो जयाति' इति राजा त्रिः सेनां परियाति" ( कौसू १६,४ ) इति सूत्रात्।

तथा महाव्रते संनद्धं राजानम् अन्यं वा ब्रह्मा अनेन अनुमन्त्रयेत। "राजानम् अन्यं वा 'मर्माणि ते' ( अ ७,११८ ) इति। संनद्धम् 'इन्द्रो जयाति' इत्यनुमन्त्रयते" (वैताश्रौ ३३,१२;१३ ) इति हि वैतानं सूत्रम्।

अ॒भि॒भूर्य॒ज्ञो अ॑भि॒भूर॒ग्निर॑भि॒भूः[4] सोमो॑ अभि॒भूरिन्द्रः॑[5]।
अ॒भ्य॑१॒हं[6] विश्वाः॒ पृत॑ना यथासा॒न्येवा[7] वि॑धेमा॒ग्निहो॑त्रा इ॒दं ह॒विः॥ १॥

---

१. शरेध्मे S'. २. संपादिता° S'. ३. आरब्धव्याः S'. ४. °ग्निरस्तु भभि° पै १९,१२,७. ५. °न्द्रोऽस्तु पै. ६. अभ्या१हं Km; अभ्या३हं A,Bh,D,R, Sm,Cs; भम्यवं पै. ७. यथासांदिया पै.

अभिऽभूः। यज्ञः। अभिऽभूः। अग्निः। अभिऽभूः। सोमः। अभिऽभूः। इन्द्रः। अभि। अहम्। विश्वाः। पृतनाः। यथा। असानि। एव। विधेम। अग्निऽहोत्राः। इदम्। हविः॥ १॥

यज्ञः अस्माभिर्जयकामैः क्रियमाणो यागः अभिभूः शत्रूणाम् अभिभविता भवतु। तथा यागनिष्पादकोऽयं सांग्रामिकोऽग्निः अभिभूः अभिभविता अस्तु। यागसाधनभूतः सोमः अभिभूः शत्रूणाम् अभिभविता। तेन सोमेन तर्पित इन्द्रः अभिभूः अभिभविता। अहं शत्रुजयकामः विश्वाः सर्वाः पृतनाः सेनाः शात्रवीः यथा अभ्यसानि अभिभवानि एव एवम् अग्निहोत्राः अग्नौ जुह्वतो वयम् इदं संग्रामजयार्थं हविः विधेम विदध्याम। विध विधाने। तौदादिकः।

स्वधाऽस्तु मित्रावरुणा विपश्चिता प्रजावत्[1] क्षत्रं मधुनेह पिन्वतम्[2]।
बाधेथां[3] दूरं[4] निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुक्तमस्मत्[5]॥ २॥

स्वधा। अस्तु। मित्रावरुणा। विपःऽचिता। प्रजाऽवत्। क्षत्रम्। मधुना। इह। पिन्वतम्। बाधेथाम्। दूरम्। निःऽऋतिम्। पराचैः। कृतम्। चित्। एनः। प्र। मुमुक्तम्। अस्मत्॥ २॥

हे विपश्चिता विपश्चितौ मेधाविनौ मित्रावरुणा मित्रावरुणौ युवाभ्यां स्वधा। अन्ननामैतत्। हविर्लक्षणम् अन्नम् अस्तु तृप्तिकरं भवतु। तौ युवाम् इह अस्मिन् राजनि प्रजावत् प्रजाभिर्युक्तं क्षत्रम् बलं मधुना मधुररसेन पिन्वतम् सिञ्चतम्। पिवि सेचने। इदित्त्वान्नुम्। निर्ऋतिम् पापदेवतां पराजयकारिणीं पराचैः पराङ्मुखं दूरं बाधेथाम्। अस्मत्तो दूरदेशे यथा सा पराङ्मुखी विनश्यति तथा हिंस्तम् इत्यर्थः। कृतं चित् शत्रुभिः कृतमपि एनः पापं पराजयनिमित्तम् अस्मत् सकाशात् प्र मुमुक्तम् प्रमोचयतम्। मुच्लृ मोक्षणे। छान्दसः शपः श्लुः।

इमं[6] वीरमनु हर्षध्वमुग्रमिन्द्रं[7] सखायो[8] अनु सं रभध्वम्[9]।
ग्रामजितं[9] गोजितं[10] वज्रबाहुं जयन्तमज्म[11] प्रमृणन्तमोजसा॥ ३॥

इमम्। वीरम्। अनु। हर्षध्वम्। उग्रम्। इन्द्रम्। सखायः। अनु। सम्। रभध्वम्। ग्रामऽजितम्। गोऽजितम्। वज्रऽबाहुम्। जयन्तम्। अज्म। प्रऽमृणन्तम्। ओजसा॥३॥

---

१. प्रजापतिः पै १९,१२,८ [मूको.]. २. पिन्वत Bb. ३. बाधस्व ऋ १,२४,९ तै १,४,४५,१ मै १,३,३९; बाधस्व काठ ४,१३; बाधेथा पै ५,३७,५. ४. दूरे ऋ.; आरे मै. काठ.; द्वेषो तै. पै. ५. मुमुग्ध्यस्मत् ऋ तै. मै.; मुमुग्ध्यस्मात् काठ. ६. संजाता अनु वीरयध्वमि° ऋ १०,१०३,६ मा १७,३८ तै ४,६,४,२ मै २,१०,४ काठ १८,५ कौ २,१२०४. ७. संखायम् काठ.; सत्वानो पै १९,१२,९. ८. व्ययध्वम् काठ. ९. गोभिदं ऋ. मा. तै. मै. काठ. कौ. १०. गोविदं ऋ. मा. तै. मै. काठ. कौ. ११. °मज्मा काठ.

इमम् अस्मदीयं वीरम् वीर्यवन्तं राजानम् अनु हे सैनिकाः हर्षध्वम् वीररसेन हृष्टा भवत । कीदृशम् । उग्रम् उद्गूर्णबलम् इन्द्रम् परमैश्वर्ययुक्तम् हे सखायः समानख्यानाः सैनिकाः अनु सं रभध्वम् राजानम् अनुसृत्य युद्धोद्युक्ता भवत । यद्वा इन्द्रः संग्रामाधिदेवता स एवात्र स्तूयते । अस्मिन् पक्षे हे सखायः समानख्याना मरुत इत्येतावानेव विशेषः । कीदृशम् इन्द्रम् । ग्रामजितम् ग्रामान् जयन्तं गोजितम् गाः शात्रवीर्जयन्तम् अपहरन्तं वज्रबाहुम् वज्रहस्तम् उद्यतायुधम् अत एव जयन्तन् शत्रून् पराजितान् कुर्वन्तम् । अज्म अजनशीलं क्षेपणशीलं शत्रुबलम् ओजसा बलेन प्रमृणन्तम् प्रकर्षेण हिंसन्तम् । 'मृ हिंसायाम्'। 'श्नाभ्यस्तयोरातः' ( पा ६,४,११२ ) इति आल्लोपः ।

इन्द्रो॑ जयाति॒[1] न परा॑ जयाता[2] अधिरा॒जो राज॑सु राजयातै[3] ।
च॒र्कृत्य॒ ईड्यो॒ वन्द्य॑श्चोप॒सद्यो॑ नम॒स्यो॑ भवे॒ह[5] ॥ १ ॥

इन्द्रः॑ । ज॒याति॒ । न । परा॑ । ज॒या॒ते॒ । अ॒धि॒ऽरा॒जः । राज॑ऽसु । रा॒ज॒या॒ते॒ ।
च॒र्कृत्यः॑ । ईड्यः॑ । वन्द्यः॑ । च॒ । उ॒प॒ऽसद्यः॑ । न॒म॒स्यः॑ । भ॒व॒ । इ॒ह ॥ १ ॥

अस्मिन् संग्रामे अस्य राज्ञः साहाय्यार्थम्[6] आगत इन्द्रः तदात्मको वा अयं राजा जयाति जयतु न परा जयाते पराजयं मा प्राप्नोतु । अधिको राजा अधिराजः सर्वेषां राज्ञाम् अधिपतिरिन्द्रः राजसु अन्येषु भूपालेषु राजयातै अस्मान् राजयतु प्रकाशयतु वीर्यवत्तया प्रख्यापयतु । राजयतेर्लेटि आडागमः । 'वैतोऽन्यत्र' (पा ३.४,९६) इति ऐकारः । स च इन्द्रः चर्कृत्यः अतिशयेन शत्रूणां कर्तिता छेत्ता । कृती छेदने इत्यस्माद् यङन्तात् पचाद्यच्[7] । ईड्यः स्तुत्यः वन्द्यः वन्दनीयः । उभयत्र 'ऋहलोर्ण्यत्' (पा ३,१,१२४) इति ण्यत् । 'ईड्वन्दवृशंसदुहां ण्यतः' (पा ६,१,२१४) इति आद्युदात्तत्वम् । उपसद्यः उपसदनीयः सर्वैः सेवनीयः । हे इन्द्र यस्मात् त्वम् एवंगुणविशिष्टः तस्माद् इह अस्मिन् संग्रामे नमस्यः अस्माभिः पूजनीयो भव । 'नमसः पूजायाम्' ( पावा ३,१,१९ ) इति स्मरणाद् नमःशब्दात् पूजार्थे 'नमोवरिवः॰' ( पा ३,१,१९ ) इति क्यच् । तदन्तात् पचाद्यच् ।[8]

त्वमि॑न्द्राधिरा॒जः[9] श्र॑व॒स्युस्त्वं [10]भू॒र॒भिभू॑ति॒र्जना॑नाम् ।
त्वं दैवी॒र्विश॑ इ॒मा[11] वि रा॒जायु॑ष्मत्[12] क्ष॒त्रम॒जरं॑ ते अस्तु ॥ २ ॥

त्वम् । इ॒न्द्र॒ । अ॒धि॒ऽरा॒जः । श्र॒व॒स्युः । त्वम् । भूः॒ । अ॒भि॒ऽभूतिः । जना॑नाम् ।
त्वम् । दैवीः॑[13] । विशः॑ । इ॒माः । वि । रा॒ज॒ । आयु॑ष्मत् । क्ष॒त्रम् । अ॒जर॑म् । ते॒ । अ॒स्तु॒ ॥ २ ॥

---

१. मृण् शंग. २. जयति मं ४,१२,३. ३. जयते मं. ४. राजयाति सं २,४,१४,२; राजयते मं. ५. यथाऽसंन् तै. मं. ६. सहायार्थम् S'. ७. एवं स्वरो न सिध्यति, कर्मणि कृत्यैर्भाव्यमिति विमृश्यम्. ८. एवं स्वरो न सिध्यति. ९. °न्द्रास्यधि° मं ४,१२,२ काठ ८,१७. १०. भवाधिपतिर्जं° मं. काठ. ११. उतो मं. काठ. १२. राजाजस्यन् मे. काठ. १३. दैवीः P.

इन्द्राभेदेन राज्ञः स्तुतिः। हे इन्द्र त्वम् अधिराजः राज्ञाम् अन्येषाम् अधिकः सन् भवस्युः। भव इत्यन्नस्य यशसो वा नामधेयम्। तद्युक्तो भवसि। 'क्याच्छन्दसि' (पा ३,२,१७०) इति उप्रत्ययः। अधिराज इति। 'राजाहःसखिभ्यष्टच्' (पा ५,४,९१) इति टच् समासान्तः। हे इन्द्र त्वं जनानाम् सर्वेषां प्राणिनाम् अभिभूतिः अभिभविता स्वमहिम्ना तिरस्कर्ता भूः भवसि। भवतेश्छान्दसे लुङि 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा ६,४,७५) इति अडभावः। दैवीः देवसंबन्धिनीः इमा विशः प्रजाः त्वं वि राज ईशिष्व। राजतिः ऐश्वर्यकर्मा। हे राजन् ते तव आयुष्म। चिरकालजीवनोपेतम् अजरम् जराराहितम् अपचयरहितं क्षत्रम् बलम् अस्तु भवतु। अजरम् इति। 'नञो जरमरमित्रमृताः' (पा ६,२,११६) इति उत्तरपदाद्युदात्तत्वम्।

प्राच्या[1] दिशस्त्वमिन्द्रासि[2] राजोतोदीच्या[3] दिशो[4] वृत्रहञ्छत्रुहोऽसि[5]।
यत्र यन्ति स्रोत्यास्तज्जितं ते दक्षिणतो वृषभ एषि हव्यः[7] ॥ ३ ॥

प्राच्याः। दिशः। त्वम्। इन्द्र। असि। राजा। उत। उदीच्याः। दिशः। वृत्रऽहन्। शत्रुऽहः। असि। यत्र। यन्ति। स्रोत्याः। तत्। जितम्। ते। दक्षिणतः। वृषभः। एषि। हव्यः ॥ ३ ॥

हे इन्द्र त्वं प्राच्या दिशः राजाऽसि अधिपतिर्भवसि। उत उदीच्याः उत्तरस्या अपि दिशः अधिपतिरसि। प्राचीग्रहणं प्रतीच्या अप्युपलक्षणम्। उदीचीग्रहणं दक्षिणस्या अपि उपलक्षणम्। अत एव देशस्य द्वैविध्यम् उक्तम् —

'देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः' (अको २,१,७) इति। तस्मात् सर्वासां दिशाम् अधिपतिरसीत्यर्थः। हे वृत्रहन् वृत्राणां शत्रूणां हन्तरिन्द्र त्वं शत्रुहोऽसि अस्मदीयानां शत्रूणां हन्ता भवसि। 'आशिषि हनः' (पा ३,२,४९) इति हन्तेर्डप्रत्ययः। यत्र यस्मिन् भूप्रदेशे स्रोत्याः स्रोतोऽर्हा जलप्रवाहा यन्ति प्रवहन्ति तत् सर्वं स्थानं ते तव जितम् स्वकीयमेव भवति। कृत्स्नं भूमण्डलं त्वदायत्तमेवेत्यर्थः। ईदृशो वृषभः कामानां वर्षिता हव्यः अस्माभिराह्वातव्यः सन् संग्रामजयार्थं दक्षिणतः अस्मद्दक्षिणभागे युद्धसमये एषि गच्छ साहाय्यार्थं वर्तस्व। हव्य इति। 'बहुलं छन्दसि' (पा ६,१,३४) इति ह्वयतेः संप्रसारणे 'अचो यत्' (पा ३,१,९७) इति यत्। 'यतोऽनावः' (पा ६,१,२१३) इति आद्युदात्तत्वम्।

इति द्वितीयं सूक्तम्।

---

१. प्राच्यां तै २,४,१४,१ मै ४,१२,२ काठ ८,१७ पै १९,१२,१५. २. दिशि त्व° तै. मै. काठ.; दिशि त्वमिन्द्राधि° पै. ३. °दीच्यां तै. मै. काठ. पै. ४. दिशि पै. ५. वृत्रहंछ° R; °हन् वृत्रहाऽसि तै. मै. काठ. ६. सवरयुस्त° काठ. ७. एषि हव्यः A,K,Km,P², V; एषि हव्यः D,Cs; एषि हव्यः > एषि हव्यः Bᵇ,Cs; एधि हव्यः तै.; हव्य एधि मै.काठ.; असि हव्यः पै.

'अभि त्वेन्द्र' इति तृचस्य संग्रामजयादिकर्मसु पूर्वसूक्तेन सह उक्तो विनियोगः। सूत्रमपि तत्रैवोदाहृतम्।

तथा अग्निष्टोमे प्रातःसवने अनेन ब्रह्मा स्तोत्रम् अनुमन्त्रयेत। "'अभि त्वेन्द्र' इति स्तोत्रम्[1]" ( वैताश्री १८,१६ ) इति हि वैतानं सूत्रम्।

'देवा अदुः' इति तृचेन स्थावरजङ्गमविषभैषज्यार्थं वल्मीकमृदः 'संपाति-ताभिमन्त्रिताया[2] बन्धनम् उदकेन सह पायनम् आचमनम् प्रलेपनं वा कुर्यात्। सूत्रितं हि—"'देवा अदुः' (अ ६,१००) इति वल्मीकेन बन्धनपायनाचमनप्रदेहनम् उदकेन[3]" ( कौसू ३१,२६ ) इति।

तथा आहिताग्नेरन्त्यसंस्कारे पुरोडाशं हृदये निधाय अनेन अनुमन्त्रयेत। सूत्रितं हि—"'देवा अदुः[4]' इत्युरसि पुरोडाशम्" ( कौसू ८१,१० ) इति।

अभि त्वेन्द्र वरिमतः पुरा त्वांहूरणाद्धुवे[5]।
ह्वयाम्युग्रं चेत्तारं पुरुणामानमेकजम् ॥ १ ॥

अभि। त्वा। इन्द्र। वरिमतः। पुरा। त्वा। अंहूरणात्। हुवे।
ह्वयामि। उग्रम्। चेत्तारम्। पुरुऽनामानम्। एकऽजम् ॥ १ ॥

हे इन्द्र त्वा त्वां वरिमतः उरुत्वाद्धेतोः। उरुशब्दाद् इमनिचि[6] 'प्रियस्थिर' ( पा ६,४,१५७ ) इत्यादिना वर् आदेशः। विस्तीर्णशरीरत्वेन युगपत्संनिधानसमर्थत्वात् संग्रामेषु अंहूरणात् कुटिलगमनात् पराजयनिमित्तात् पुरा पूर्वमेव अभि हुवे आभिमुख्येन ह्वयामि। आह्वाने कारणमाह—उग्रम् उद्गूर्णबलं चेत्तारम् वेदितारं जयोपायदं पुरुनामानम् पुरुभिर्बहुभिः प्रशस्तैर्नामधेयैर्युक्तम् यद्वा बहूनां शत्रूणां नमयितारम् एकजम्। एक एव जायते युद्धेषु प्रादुर्भवतीति एकजः। तम् असहायशूरम् इन्द्रं ह्वयामि।

यो अद्य सेन्यो[7] वधो जिघांसन् न उदीरते।
इन्द्रस्य तत्र बाहू समन्तं परि दद्मः[8] ॥ २ ॥

यः। अद्य। सेन्यः। वधः। जिघांसन्[9]। नः। उत्ऽईरते।
इन्द्रस्य। तत्र। बाहू इति। समन्तम्। परि। दद्मः ॥ २ ॥

---

1. स्तोत्रानुमन्त्रणम् RG. 2. संपादिता° S' 3. उदकेन Bl. 4. सु. के.; वैसु. Bl. देवा यजम्. 5. °हूरणेभ्य पै १९,१२,१; त्वांहूरणाद्धवे S'. 6. एवं स्वरो न मिलति; वैस. १,२९८० m.n न द्र 7. हैन्यो पै १९,१३,२. 8. दध्मः Bp[2],M,T,RW. सा.; दध्महे वै.; दद्मंहे पै [गलो.]. 9. सु. सा.; वैसु. P,P[2],J,Cp,WM. जिघांसम्

अथ इदानीं सैन्यः शत्रुसेनासंबन्धी यो वधः हननसाधनम् आयुधं नः अस्मान् जिघांसन् हन्तुम् इच्छन् उदीरते उद्गच्छति । ईर गतौ कम्पने च । छान्दसः शपो लुगभावः । जिघांसन्निति । 'अज्झनगमां सनि' ( पा ६,४,१६ ) इति दीर्घः । 'अभ्यासाच्च' ( पा ७,३,५५ ) इति कुत्वम् । तत्र तस्मिन् वधे इन्द्रस्य बाहू हस्तौ अस्मद्रक्षार्थं समन्तम् सर्वतः परि दध्मः[1] प्राकारवत् परितो धारयामः ।

परिं दद्म[2] इन्द्रस्य बाहू समन्तं त्रातुस्त्रायतां नः ।
देवं सवितः सोमं राजन्त्सुमनसं मा कृणु[3] स्वस्तयें ॥ ३ ॥

परिं । दद्मः । इन्द्रस्य । बाहू इतिं । सम्न्तम् । त्रातुः । त्रायताम् । नः ।
देवं । सवितः । सोमं । राजन् । सुऽमनसम् । मा । कृणु । स्वस्तयें ॥ ३ ॥

त्रातुः पालयितुरिन्द्रस्य बाहू हस्तौ समन्तम् सर्वतः परि दध्मः[1] । अतः स इन्द्रः नः अस्मान् त्रायताम् रक्षतु । हे सवितः सर्वस्य प्रेरक देव हे राजन् सोम स्वस्तये क्षेमाय अविनाशाय मा मां संग्रामे सुमनसम् जयेन शोभनमनस्कं कृणु कुरु । 'सोर्मनसी अलोमोषसी' ( पा ६,२,११७ ) इति उत्तरपदाद्युदात्तत्वम् ।

देवा अंदुः सूर्यो अदाद् द्यौरदात् पृथिव्यदात् ।
तिस्रः[4] सरस्वतीरदुः सचित्ता विषदूषणम् ॥ १ ॥

देवाः । अदुः । सूर्यः । अदात् । द्यौः । अदात् । पृथिवी । अदात् ।
तिस्रः । सरस्वतीः । अदुः । सऽचित्ताः । विषऽदूषणम् ॥ १ ॥

देवा इन्द्रादयः सर्वे सचित्ताः समानमनस्काः सन्तः विषदूषणम् विषस्य स्थावरजङ्गमोद्भवस्य दूषकं निवर्तकम् औषधम् अदुः दत्तवन्तः । आशंसायां भूतवत् प्रत्ययः । डुदाञ् दाने । लुङि 'गातिस्था°' ( पा २,४,७७ ) इति सिचो लुक् । 'आतः' ( पा ३,४,११० ) इति झेर्जुस् आदेशः । सूर्यः सर्वस्य प्रेरक आदित्योऽपि विषदूषणम् अदात् ददातु । द्यौः द्युलोकः अदात् ददातु । पृथिवी भूमिदेवता अदात् ददातु । तिस्रः त्रिसंख्याकाः सरस्वतीः सरस्वत्यस्त्रयीरूपाः । यद्वा इडा सरस्वती भारतीति तिस्रो देव्यः साहचर्यात् सरस्वत्य उच्यन्ते । ताश्च विषनिवारकम् इदम् औषधम् अदुः ददतु प्रयच्छन्तु ।

यद् वो देवा उपजीका[5] आसिञ्चन् धन्वन्युदकम् ।
तेन देवप्रसूतेनेदं दूषयता विषम् ॥ २ ॥

---

१. वैत्. संपा. द्र. २. दध्म Bp[2],M,RW. सा. पै १९,१३,३. ३. कृणुतं पै. ४. सर्वास् पै. ५. उपजीका B[b]; उपुजीका RW; उपचीका पै १९,१३,५.

यत् । वः । देवाः[1] । उपऽजीकाः । आऽअसिञ्चन् । धन्वनि । उदकम् ।
तेन । देवऽप्रसूतेन । इदम् । दूषयत । विषम् ॥ २ ॥

हे देवाः[2] वः युष्माकं संबन्धिन्यः उपजीका वल्मीकस्य निर्मात्र्यः एतत्संज्ञाः प्राणिविशेषा धन्वनि निरुदके स्थाने युष्मदीयाद् वरप्रदानाद् यद् उदकम् आसिञ्चन् अक्षारयन् । तथा च तैत्तिरीयकम्—'ता उपदीका अब्रुवन् वरं वृणामहै । अथ व इमं रन्धयाम । यत्र क्व च खनाम तदपोऽभितृणदामेति । तस्माद् उपदीका यत्र क्व च खनन्ति तदपोऽभितृन्दन्ति' ( तैआ ५,१,४ ) इति । तेन उदकेन देवप्रसूतेन देवैर्दत्तेन इदं विषं दूषयत निवर्तयत ।

असुराणां दुहितासि सा[3] देवानामसि स्वसा ।
दिवस्पृथिव्याः संभूता[4] सा चकर्थारसं[5] विषम् ॥ ३ ॥

असुराणाम् । दुहिता । असि । सा । देवानाम् । असि[6] । स्वसा ।
दिवः । पृथिव्याः । समऽभूता । सा । चकर्थ । अरसम् । विषम् ॥ ३ ॥

हे वल्मीकमृत्तिके असुराणाम् सुरविरोधिनां दानवानां दुहितासि कुमारी भवसि । देवानाम् इन्द्रादीनामपि सा त्वं स्वसासि भगिनी भवसि । दिवः अन्तरिक्षाद् अवकाशात्मकात् पृथिव्याश्च संभूता उत्पन्ना सा वल्मीकमृत्तिका विषम् स्थावरजङ्गमोद्भवम् अरसम् रसरहितं निर्वीर्यं चकर्थ[7] आकर्षतु । कृष विलेखने[8] । छान्दसो लिट् ।

इति तृतीयं सूक्तम् ।

'आ वृषायस्व' इति तृचेन वाजीकरणकामः एकशाखार्कमणिं संपात्य अभिमन्त्र्य अर्कसूत्रेण बध्नीयात् ।

तथा कृष्णमृगचर्ममणिं संपात्य अभिमन्त्र्य कृष्णमृगवालेन बध्नीयात् । सूत्रितं हि—"'आ वृषायस्व' इत्युभयम् अप्येति" ( कौसू ४०,१८ ) इति ।

'यथायं वाहः' इति तृचेन स्त्रीवशीकरणकर्मणि वृक्षत्वक्शरखण्डनगराञ्जनकुष्ठवातसंभ्रमतृणादिद्रव्याणि पेषयित्वा आज्येन आलोड्य स्त्रिया अङ्गम् अनुलिम्पेत् । सूत्रितं हि—"'वाञ्छ मे' ( अ ६,९ ), 'यथायं वाहः' ( अ ६,१०२ ) इति संस्पृष्टयोरीक्षितयोः शकधवन्तरेणुनगराञ्जनकुष्ठमदुघरेष्ममथिततृणम् आज्येन संनीय संस्पृशति" ( कौसू ३५,२१ ) इति ।

---

1. देवाः P,Cp 2. वनु. मंपा. द. 3. या म्र २,३२,६. 4. जज्ञिषे पै १९,११,६. 5. चकर्थारसं गान. 6. असि P. 7. आकर्षणे संपा. 8. °रेणु° संपा. 9. °रसहरा° Bl. 10. 'मधुघ' संपा.

आ वृषायस्व श्वसिहि वर्धस्व प्रथयस्व च ।
यथाङ्गं[1] वर्धतां[2] शेपस्तेन योषितमिज्जहि ॥१॥

आ । वृषऽयस्व । श्वसिहि[3] । वर्धस्व । प्रथयस्व । च ।
यथाऽअङ्गम् । वर्धताम् । शेपः । तेन । योषितम् । इत् । जहि ॥१॥

हे पुरुष त्वम् आ वृषायस्व आ समन्ताद् वृषा सेचनसमर्थः पुंगवः स इव आचर । अनेन वर्द्धेन अर्कमणिना बहुरेतस्को भवेत्यर्थः । वृषशब्दात् 'कर्तुः क्यङ् सलोपश्च' (पा ३,१,११) इति क्यङ् । श्वसिहि प्राणिहि । दृढप्राणो बलवान् भवेत्यर्थः । श्वस प्राणने । अदादित्वात् शपो लुक् । 'रुदादिभ्यः सार्वधातुके' (पा ७,२,७६) इति इडागमः । वर्धस्व उपचीयमानावयवो भव प्रथयस्व च विस्तीर्णशरीरो भव । प्रथ [4]प्रख्याने । चुरादिरदन्तः[5] । [6]यथा येन प्रकारेण त्वदीयम् अङ्गं शेपः पुंस्प्रजननं वर्धताम् । उपचितावयवं सत् मिथुनीभवनक्षमं भवति तथा वर्धस्व प्रथयस्व चेति संबन्धः । तेन प्रवृद्धेन शेपसा योषितम् सुरतार्थिनीं स्त्रियं जहि गच्छ । इत्शब्दः अवधारणे । स च उक्तफलस्य अव्यभिचारं सूचयति ।

येन[7] कृशं वाजयन्ति[8] येन हिन्वन्त्यातुरम् ।
तेनास्य[9] ब्रह्मणस्पते धनुरिवा तानया पसः ॥२॥

येन । कृशम् । वाजयन्ति[10] । येन । हिन्वन्ति । आतुरम् ।
तेन । अस्य । ब्रह्मणः । पते । धनुःऽइव । आ । तानय । पसः ॥ २ ॥

येन रसविशेषेण [6]कृशम् वन्ध्यं शुष्कवीर्यं पुरुषं वाजयन्ति वाजीकुर्वन्ति प्रजननसमर्थवीर्योपेतं कुर्वन्ति । येन रसविशेषेण आतुरम् रोगार्तं पुरुषं हिन्वन्ति प्रीणयन्ति पोषयन्ति । हिवि प्रीणने । इदित्वान्नुम् । हे ब्रह्मणस्पते मन्त्रराशेः पालक देव तेन रसविशेषेण अस्य वाजीकरणकामस्य पसः । प्रजनननामैतत् । पुंस्प्रजननं धनुरिव धनुर्दण्डमिव आ तानय आततम् उन्नमितं कुरु ।

आहं तनोमि ते पसो अधि ज्यामिव धन्वनि ।
क्रमस्वर्श इव रोहितमनवग्लायता सदा ॥३ ॥[11]

---

१. यथा° A,B,D,R,Sm,V,Cs. २. ते शेप° पै १९,१३,१०. ३. श्वसिहि P. ४. विस्तारे शंपा. ५. अदन्तत्वं नास्ति । घटादित्वान् मित्त्वमिति न्याय्यम्. ६. वैतु. मंपा. द्र. ७. येना पै १९,१३,११. ८. एधयन्ति पै. ९. अद्यास्य अ ४,४,६; अद्य मे पै ४,५,८. १०. वाजयन्ति Bp[2]. ११. अ ४,४,७ टि. द्र.

आ । अहम् । तनोमि । ते । पसः । अधि । ज्याम्ऽइव । धन्वनि ।
क्रमस्व । ऋशःऽइव । रोहितम् । अनवऽग्लायता । सदा ॥ ३ ॥

'आहं तनोमि' इत्येषा तृतीया पूर्ववद् ( अ ४,४,७ ) व्याख्येया।

यथायं वाहो अश्विना समैति सं च वर्तते ।
एवा मामभि ते मनः समैतु सं च वर्तताम् ॥ १

यथा । अयम् । वाहः[1] । अश्विना । समऽएति । सम् । च । वर्तते ।
एव । माम् । अभि । ते । मनः । समऽएतु । सम् । च । वर्तताम् ॥ १ ॥

हे अश्विना अश्विनौ यथा अयं वाहः सुशिक्षितोऽश्वः समैति वाहकेच्छानुगुण्येन सम्यग् वा आगच्छति सं च वर्तते सम्यक् तदधीनं वर्तते च एव एवम् हे कामिनि ते त्वदीयं मनः मां कामुकम् अभि अभिलक्ष्य समैतु सम्यग् आगच्छतु। सम्यग् मदधीनं वर्तता च। मय्येव सर्वदा रमताम् इत्यर्थः।

आहं खिदामि ते मनो राजाश्वः पृष्ट्यामिव[2] ।
रेष्मच्छिन्नं यथा तृणं [3]मयि ते वेष्टतां मनः[3] ॥ २ ॥

आ । अहम् । खिदामि । ते । मनः । राजऽअश्वः । पृष्ट्याम्ऽइव ।
रेष्मऽछिन्नम् । यथा । [4]तृणम् । मयि । ते । वेष्टताम् । मनः ॥ २ ॥

हे कामिनि ते तव मनः चित्तम् अहम् अनेन प्रयोगेण आ खिदामि मदभिमुखम् उत्खनामि उन्मूलयामि। आवर्जयामीत्यर्थः। खिद परिघातने[5]। तत्र दृष्टान्तः— राजाश्वः अश्वानां राजा राजाश्वः। राजदन्तादिषु पठितत्वात् षष्ठ्याः परनिपातः। स यथा अश्वश्रेष्ठः पृष्ट्याम् शङ्कुबद्धां संबन्धनरज्जुं लीलया आखिदति तद्वत्। रेष्मच्छिन्नम् रेष्मा रेषको वात्यात्मको वायुः तेन छिन्नं भग्नं तृणं यथा तद्वशं सत् परिभ्रमद् वर्तते हे कामिनि ते त्वदीयं मनः तद्वद् मयि वेष्टताम् मदधीनं सत् परिभ्राम्यतु मा कदाचिद् अपगच्छतु। वेष्ट वेष्टने।

---

१. वाहः P. २. पृष्ठ्या° A.K.Km,V. ३. वेष्टयामि मनो मयि पै १९,१९,१०.
४. तृण्म् Bp[1],Bp[2]. ५. उत्खाते सा.

आञ्जनस्य मदुघस्य कुष्ठस्य नलदस्य च ।
तुरो भगस्य 'हस्ताभ्यामनुरोधनमुद्भरे' ॥ ३ ॥

आऽअञ्जनस्य । मदुघस्य । कुष्ठस्य । नलदस्य । च ।
तुरः । भगस्य । हस्ताभ्याम् । अनुऽरोधनम् । उत् । भरे ॥ ३ ॥

आञ्जनस्य अञ्जनसाधनद्रव्यस्य त्रिककुत्पर्वतोद्भवस्य नीलाञ्जनादिमणेः मधुघस्य[२] मधूकवृक्षस्य यष्टिमधुकस्य वा कुष्ठस्य एतत्संज्ञकस्य औषधस्य नलदस्य । सुगन्धिस्तृणविशेषो नलदः उशीरापरपर्यायः । एतेषां द्रव्याणां समुच्चयार्थश्चकारः । एतेषां समुदितानां द्रव्याणां संबन्धि अनुरोधनम् । अनुरुध्यते वशीक्रियते अनेनेति अनुरोधनम् अनुलेपनम् । अनो रुध कामे इत्यस्मात् करणे ल्युट् । ईदृशम् अञ्जनादिद्रव्यसाधनभूतम् अनुलेपनं तुरः त्वरमाणस्य भगस्य सौभाग्यकरस्य देवस्य हस्ताभ्याम् अहम् उद् भरे उद्धरामि । त्वदीयमङ्गमनुलिम्पामीत्यर्थः ।

इति चतुर्थं सूक्तम् ।

इति सायणार्यविरचिते अथर्वसंहिताभाष्ये षष्ठकाण्डे दशमोऽनुवाकः ।

एकादशेऽनुवाके पञ्च सूक्तानि । अत्र 'संदानं वः', 'आदानेन' (अ ६,१०४) इति तृचाभ्यां संग्रामजयकर्मणि भाङ्गपाशान् अन्यान् वा इङ्गिडालंकृतान् पाशान् संपात्य अभिमन्त्र्य परसेनाक्रमणस्थानेषु प्रक्षिपेत् । " 'संदानं वः', 'आदानेन' इति पाशैरादानसंदानानि" ( कौसू. १६,६ ) इति हि सूत्रम् ।

संदानं वो बृहस्पतिः संदानं सविता करत् ।
संदानं 'मित्रो अर्यमा' संदानं भगो अश्विना ॥ १ ॥

सम्ऽदानम् । वः । बृहस्पतिः । सम्ऽदानम् । सविता । करत् ।
सम्ऽदानम् । मित्रः । अर्यमा । सम्ऽदानम् । भगः । अश्विना ॥ १ ॥

हे शत्रुसेनाः बृहस्पतिर्देवः वः युष्माकं संदानम् बन्धनम् एभिः प्रक्षिप्तैः पाशैः करोतु । संपूर्वो द्यतिर्बन्धने वर्तते । तस्माद् भावे ल्युट् । सविता सर्वप्रेरको देवः संदानम् युष्माकं बन्धनं करत् करोतु । करोतेर्लेटि अडागमः । व्यत्ययेन वा शप् । मित्रश्च अर्यमा च संदानम् बन्धनं करोतु । भगः च अश्विना अश्विनौ च संदानम् बन्धनं कुर्वन्तु ।

---

१. °भ्यामनु° A,B[h],D,K,R,Cs P[3],M,I,O,T, °धनमाभरे पै. २. वैतु. मंपा. द्र.
३. इन्द्रश्चाग्निश्च पै १९,१८,१३.

सं पर॑मान्त्सम॑व॒मानथो॒ सं द्या॑मि मध्य॒मान् ।
इन्द्र॒स्तान् पर्य॑हा॒र्दाम्ना॒ ताम॑ग्ने॒ सं द्या॒ त्वम् ॥ २ ॥

सम् । प॒र॒मान् । सम् । अ॒व॒मान् । अथो॒ इति॑ । सम् । द्या॒मि॒ । म॒ध्य॒मान् ।
इन्द्रः॑ । तान् । परि॑ । अ॒हाः॒ । दाम्ना॑ । तान् । अ॒ग्ने॒ । सम् । द्य॒ । त्वम् ॥ २ ॥

परमाम्[1] उत्कृष्टां दूरदेशस्थां वा शत्रुसेनां पाशैरहं सं द्यामि बध्नामि । दो अवखण्डने । 'ओतः श्यनि' (पा ७,३,७१) इति ओकारलोपः । अत्र उपसर्गवशाद् बन्धनार्थः । अवमाम्[1] अपकृष्टाम् आसन्नदेशवर्तिनीं वा परसेनां सं द्यामि । अथो अपि च मध्यमाम्[1] मध्यवर्तिनीमपि सेनां सं द्यामि । तान् तथाविधसेनापतीन् शत्रून् संग्रामाधिपतिः इन्द्रः पर्यहाः परिहरतु वर्जयतु । हरतेर्लुङि च्लेः सिच् । 'बहुलं छन्दसि' (पा ७,३,९७) इति इडभावे 'हल्ङ्याब्' (पा ६,१,६८) इत्यादिलोपे 'रात् सस्य' (पा ८,२,२४) इति सलोपः । हे अग्ने तान् परिहृतान् शत्रून् दाम्ना पाशेन त्वं सं द्य बधान ।

अ॒मी ये यु॒धमा॒यन्ति॑ के॒तून् कृ॒त्वानी॑क॒शः ।
इन्द्र॒स्तान् पर्य॑हा॒र्दाम्ना॒ ताम॑ग्ने॒ सं द्या॒ त्वम् ॥ ३ ॥

अ॒मी इति॑ । ये । यु॒धम् । आ॒ऽयन्ति॑ । के॒तून् । कृ॒त्वा । अ॒नी॒क॒ऽशः ।
इन्द्रः॑ । तान् । परि॑ । अ॒हाः॒ । दाम्ना॑ । तान् । अ॒ग्ने॒ । सम् । द्य॒ । त्वम् ॥ ३ ॥

अमी दूरे दृश्यमाना ये शत्रवः युधम् युद्धम् आयन्ति आगच्छन्ति अनीकशः संघशः केतून् कृत्वा ध्वजान् कृत्वा । आगत्य युध्यन्त इत्यर्थः । इन्द्रस्तान् इत्यादि पूर्ववद् ।

आ॒दाने॑न सं॒दाने॑ना॒मित्रा॒ना[2] द्या॑मसि ।
अ॒पाना॒ ये चै॑षां प्रा॒णा 'असु॑नासू॒न्त्सम॑च्छिदन्'[3] ॥ १ ॥

आ॒ऽदाने॑न । स॒म्ऽदाने॑न । अ॒मित्रा॑न् । आ । द्या॒म॒सि॒ ।
अ॒पा॒नाः । ये । च॒ । ए॒षा॒म् । प्रा॒णाः । असु॑ना । असू॑न् । सम् । अ॒च्छि॒द॒न् ॥ १ ॥

आदीयते आबध्यते अनेनेति आदानम् पाशयन्त्रविशेषः । तेन, यत् संदानं बन्धनं तेन अमित्रान् शत्रून् आ द्यामसि आद्यामः आबध्नीमः ।

---

१. वैद्. मंत्रा. इ. २. °त्रान् सं पै १९,४९,१४. ३. सममूनममुतम्? पै.

'इदन्तो मसि' ( पा ७,१,४६ ) । एषां[1] शत्रूणां ये च अपानाः अन्तर्मुखाः प्राणवायुवृत्तयः ये च प्राणाः बहिर्मुखाः श्वासवृत्तयः तान् असून् प्राणान् असुना प्राणेन समच्छिदम्[2] सम्यक् छिनद्मि । पाशयन्त्रेण गलगतेन प्राणापानगती निरुध्य परस्परोपमर्देन हन्मीत्यर्थः । छिदिर् द्वैधीकरणे । 'इरितो वा' ( पा ३,१,५७ ) इति च्लेः अङ् आदेशः ।

इदमादानमकरं तपसेन्द्रेण[3] संशितम् ।
अमित्रा येऽत्र[4] नः सन्ति[5] तानग्न आ द्या त्वम्[6] ॥ २ ॥

इदम् । आऽदानम् । अकरम् । तपसा । इन्द्रेण । सम्ऽशितम् ।
अमित्राः । ये । अत्र । नः । सन्ति । तान् । अग्ने । आ । द्य । त्वम् ॥ २ ॥

इदम् आदानम् आबन्धनसाधनं पाशयन्त्रं तपसा अभिचारकर्मोक्तनियमविशेषेण अकरम् अकार्षम् । 'कृमृदृरुहिभ्यः' ( पा ३,१,५९ ) इति च्लेः अङ् आदेशः । तच्च पूर्वम् इन्द्रेण संशितम् सम्यक् तीक्ष्णीकृतम् । शो तनूकरणे । 'शाच्छोरन्यतरस्याम्' ( पा ७,४,४१ ) इति इत्त्वम् । अत्र अस्मिन् संग्रामे नः अस्माकम् अमित्राः शत्रवो ये सन्ति हे अग्ने तान् सर्वान् शत्रून् त्वम् आ द्य आबधान पाशयन्त्रेण गृहाण ।

ऐनान्[7] द्यतामिन्द्राग्नी सोमो[8] राजा च मेदिनौ[9] ।
इन्द्रो मरुत्वानादानममित्रेभ्यः कृणोतु नः[10] ॥ ३ ॥

आ । एनान् । [11]द्यताम् । इन्द्राग्नी इति । सोमः । राजा । च । मेदिनौ ।
इन्द्रः । मरुत्वान् । आऽदानम् । अमित्रेभ्यः । कृणोतु । नः ॥ ३ ॥

इन्द्रश्च अग्निश्च इन्द्राग्नी मेदिनौ मेदस्विनौ अस्माभिर्दत्तेन हविषा माद्यन्तौ वा देवौ एनान् अस्मच्छत्रून् आ द्यताम् आबध्नीताम् । तथा सोमो राजा च आबध्नातु । मरुत्वान् मरुद्गणैर्युक्त इन्द्रः नः अस्माकम् अमित्रेभ्यः शत्रुभ्यः आदानम् आबन्धनं कृणोतु करोतु ।

इति एकादशेऽनुवाके प्रथमं सूक्तम् ।

---

१. तेषां शंपा. २. वैतु. मंपा. द्र. ३. °सेन्द्रियेण पै १९,४९,१३ [मूको.]. ४. सन्तु मे पै. ५. ताना द्या द्विषतो मम पै. ६. °नां मूको. (तु. शंपा. WM.); एनान् पै १९,४९,१२. ७. राज्ञा सोमेन मेदिना पै. ८. मे पै. ९. °नाम् मूको. (तु. शंपा. WM.) १०. द्यताम् P[2].

'यथा मनो मनस्केतैः' इति तृचेन कासश्लेष्मरोगादिशान्त्यर्थं सक्तुमन्थमभिमन्त्र्य भक्षयेत् ।

तथा अनेन उदकमभिमन्त्र्य पाययेत् ।

तथा अनेन सूर्यमुपतिष्ठेत ।

"'यथा मनः', 'अव दिवः' (अ ७,११२) इत्यरिष्टेन" (कौसू. ३१,२७) इति हि सूत्रम् ।

'आयने' (अ ६,१०६) इति तृचेन गृहादीनामग्निदाहनिवृत्त्यर्थं गृहमध्ये गर्तं कृत्वा उदकमभिमन्त्र्य निनयेत् ।

तथा तत्रैव कर्मणि अनेन अवकामभिमन्त्र्य गृहस्योपरि वितनुयात् ।

तथा ततमापके दिव्ये तैलादिकमभिमन्त्र्य शपथकर्त्रे प्रयच्छेत् ।

तथा अग्निदग्धम् एतत्तृचेन अभिमन्त्रितोदकेन प्रक्षालयेत् ।

सूत्रितं हि—"'आयने ते'" इति शमनम् । अन्तरा ह्रदं करोति । शाले च । अवकया शालां परितनोति । शप्यमानाय प्रयच्छति । निर्दग्धं प्रक्षालयति" (कौसू. ५२,५-९) इति ।

अत्र 'अपामिदम्', 'हिमस्य त्वा' इत्याभ्याम् ऋग्भ्याम् अग्निचयने मण्डूकावकवेतसैर्विकृष्यमाणां चितिं ब्रह्मा अनुमन्त्रयेत । उक्तं वैताने—'चितिं परिषिञ्चति' इति प्रक्रम्य "'इदं व आपः' (अ ३,१३,७), 'हिमस्य त्वा' (अ ६,१०६,३), 'उप द्यामुप वेतसम्' (अ १८,३,५) 'अपामिदम्' (अ ६,१०६,२) इति [३]मण्डूकावकवेतसैर्दक्षिणादिप्रतिदिशं[३] विकृष्यमाणाम्" (वैताश्री २९,१३) इति ।

यथा॒ मनो॒ मन॒स्केतैः॒ प॒राप॒तत्या॒शुम॑त् ।
ए॒वा त्वं का॑से[१] प्र प॑त[२] मन॒सोऽनु॑ प्रवा॒य्य॑म् ॥ १ ॥

यथा॑ । मनः॑ । म॒नः॒ऽकेतैः । प॒रा॒ऽपत॑ति । आ॒शु॒ऽमत् ।
ए॒व । त्वम् । का॒से॑[४] । प्र । प॒त॒ । मन॑सः । अनु॑ । प्र॒ऽवा॒य्य॑म् ॥ १ ॥

मनस्केतैः मनसा बुद्धिवृत्त्या केत्यमानैर्ज्ञायमानैर्दूरस्थैर्विषयैः सह यथा येन प्रकारेण मनः अन्तःकरणम् आशुमत् शैघ्र्ययुक्तं परापतति ध्रुवमण्डलपर्यन्तं पराङ्मुखं गच्छति । पत्लृ गतौ । एव एवम् हे कासे कासश्लेष्मरोगात्मिके कृत्ये त्वं मनसो वेगेन धावतः प्रवाय्यम्

१. नास्ति Bl २. °कावकाये° °णादिकम्° RG. ३. द्र. गा. RW.; वैतु. शांग. कासे. ४. पर्ते A,B. ५. द्र. मं ग.; वैतु. P कासे > कासें; P²,J,K,Cp. शांग. कासें.

प्रगन्तव्यम् अवधिम् अनु अनुलक्ष्य प्र पत प्रगच्छ । मनोवेगेन अस्मात् पुरुषाच्छीघ्रं दूरदेशं निर्गच्छेत्यर्थः । 'भय्यप्रवय्ये च च्छन्दसि' ( पा ६,१,८३ ) इति निपात्यते[1] । व्यत्ययेन दीर्घः ।

यथा बाणः सुसंशितः परापतत्याशुमत् ।
एवा त्वं कासे[2] प्र[3] पत पृथिव्या अनु संवतम् ॥ २ ॥

यथा । बाणः । सुऽसंशितः । पराऽपतति । आशुऽमत् ।
एव । त्वम् । कासे[4] । प्र । पत । पृथिव्याः । अनु । सम्ऽवतम् ॥ २ ॥

यथा येन प्रकारेण सुसंशितः सुष्ठु सम्यक् तीक्ष्णीकृतो बाणः धनुर्यन्त्रविमुक्तः सन् आशुमत् परापतति पराङ्मुखः शीघ्रं भूमिं प्रभिद्य गच्छति एव एवम् हे कासे त्वं पृथिव्याः बाणविद्धाया भूम्याः संवतम् संहतप्रदेशम् अनु अनुलक्ष्य प्र पत प्रधाव । बाणवेगेन पातालपर्यन्तं गच्छेत्यर्थः ।

यथा सूर्यस्य रश्मयः परापतन्त्याशुमत् ।
एवा त्वं कासे प्र पत समुद्रस्यानु विक्षरम् ॥ ३ ॥

यथा । सूर्यस्य । रश्मयः । पराऽपतन्ति[5] । आशुऽमत् ।
एव । त्वम् । कासे[4] । प्र । पत । समुद्रस्य । अनु । विऽक्षरम् ॥ ३ ॥

सूर्यस्य रश्मयः किरणा उदयाद् ऊर्ध्वं यथा आशुमत् परापतन्ति लोकालोकपर्यन्तं शीघ्रं परागच्छन्ति एव एवं हे कासे त्वं समुद्रस्य उदधेः विक्षरम् विविधं क्षरणं प्रवाहो यस्मिन् देशे तं देशम् अनु अनुलक्ष्य प्र पत प्रगच्छ । इमं पुरुषं विसृज्य समुद्रपर्यन्तं सूर्यरश्मिवत् शीघ्रं गच्छेत्यर्थः ।

आयने ते परायणे दूर्वा[6] रोहन्तु पुष्पिणीः[6] ।
उत्सो वा तत्र[7] जायतां ह्रदो वा पुण्डरीकवान् ॥ १ ॥

आऽअयने । ते । पराऽअयने । [8]दूर्वाः । रोहन्तु । पुष्पिणीः[8] ।
उत्सः । वा । तत्र । जायताम् । ह्रदः । वा । पुण्डरीकऽवान् ॥ १ ॥

---

१. प्रवय्याशब्दस्य स्त्रियामेव निपातनादिदं चिन्त्यम्. २. पृ ८०४ टि ३ द्र. ३. परा पै २०,५४,७. ४. पृ ८०४ टि ५ द्र. ५. °पतति P,P²,J. ६. रोहतु पुष्पिणीः B^h,O, रोहतु पुष्पिणी D,R,Sm.Cs,RW. ७. यत्र पै १९,३३,५. ८. तु. सा.; वैतु. P,P²,J दूर्वा । रोहतु । पुष्पिणी; Cp दूर्वा । रोहन्तु । पुष्पिणी.

हे अग्ने ते तव आयने आभिमुख्येन गमने परायणे पराङ्मुखगमने च अस्मदीये देशे पुष्पिणीः पुष्पयुक्ताः कोमला दूर्वा रोहन्तु प्ररोहन्तु उत्पद्यन्ताम्। तत्र तस्मिन् गृहादिदेशे उत्सो वा उदकप्रस्रवणं वा जायताम् उत्पद्यताम्। पुण्डरीकवान् तामरसयुक्तो ह्रदो वा उत्पद्यताम्। अनेन अग्निकृतबाधस्य अत्यन्ताभावः प्रार्थितः।

अपामिदं न्ययनं समुद्रस्य निवेशनम्[1]।
मध्ये ह्रदस्य नो गृहाः पराचीना मुखा कृधि ॥ २ ॥

अपाम्। इदम्। निऽअयनम्। समुद्रस्य। निऽवेशनम्।
मध्ये। ह्रदस्य। नः। गृहाः। पराचीना। मुखा। कृधि ॥ २ ॥

इदम् अस्मदीयं गृहम् अपाम् उदकानां न्ययनम् निलयनम् आवासस्थानं भवतु। तथा समुद्रस्य जलधेः निवेशनम् निविशतेऽस्मिन्निति निवेशनम् गृहं भवतु। निपूर्वाद् विशतेः अधिकरणे ल्युट्। ह्रदस्य अगाधजलस्य तटाकादेः मध्ये नः अस्माकं गृहा भवन्तु। न ह्येतेषां समुद्रादीनां दाहशङ्कास्ति तत्संबन्धप्रतिपादनेन अग्निदाहस्य अत्यन्तासंभव उक्तः। इदानीं प्रत्यक्षतः प्रार्थ्यते। हे अग्ने त्वं मुखा मुखानि ज्वालारूपाणि आस्यानि पराचीना पराचीनानि पराङ्मुखानि कृधि कुरु। उभयत्र 'शेश्छन्दसि बहुलम्' (पा ६,१,७०) इति शेर्लोपः। 'विभाषाञ्चेरदिक्स्त्रियाम्' (पा ५,४,८) इति स्वार्थिकः खः। 'श्रुशृणुपृकृवृभ्यः०' (पा ६,४,१०२) इति हेर्धिरादेशः।

हिमस्य त्वा[2] जरायुणा शाले[3] परि व्ययामसि।
शीतह्रदा[4] हि नो भुवोऽग्निष्कृणोतु[5] भेषजम् ॥ ३ ॥

हिमस्य। त्वा। जरायुणा। शाले। परि। व्ययामसि।
शीतऽह्रदा। हि। नः। भुवः। अग्निः। कृणोतु। भेषजम् ॥ ३ ॥

हे शाले हिमस्य शीतलोदकस्य जरायुणा जरायु गर्भवेष्टनम् तद्वद् आवेष्ट्य अवस्थितेन अवकारूपेण शैवालेन त्वा त्वां परि व्ययामसि परिव्ययामः परिवेष्टयामः। नः अस्माकं त्वं शीतह्रदा शीतलह्रदयुक्ता भुवः भवेः। हि यस्माद् एवं तस्मात् परिव्ययाम इत्यर्थः। इत्थम् अस्माभिः प्रार्थितः अग्निः गृहादीनां भेषजम् अदाहनिमित्तम् औषधं कृणोतु करोतु।

इति द्वितीयं सूक्तम्।

---

1. निर्मोचनम् काठ १७,१७. 2. 'णाऽहि मा १७,५ तै ४,६,१,१ मै २,१०,१ काठ. 3. °ह्रदा° K[m],R,P,V; °ह्रदाय पै १९,३३,६ [मूको.]; उत ह्रदो, °ह्रदो ति ७,७,१. 4. °ग्निः कृणोतु A,B,B[b],K,K[m],R,V,WM; °ग्निर्दाशु पै. नि.

'विश्वजित् त्रायमाणायै' इति चतुर्ऋचस्य बृहद्गणे (कौसू ९,२) पाठात् शान्त्युदकाभिमन्त्रणादौ विनियोगः।

तथा स्वस्त्ययनकर्मणि अनेन चतुर्ऋचेन आज्यसमित्पुरोडाशादिशष्कुल्यन्तानि त्रयोदश द्रव्याणि जुहुयात्।

सूत्रितं हि — " 'विश्वजित्', 'शकधूमम्' ( अ ६,१२८ ), 'भवाशर्वौ' ( अ ११,२ ) इत्युपदधीत" ( कौसू ५०,१३ ) इति।

'त्वं नो मेधे' इति पञ्चर्चेन सूक्तेन मेधाजननकर्मणि क्षीरौदनं[1] पुरोडाशं रसान् वा संपात्य अभिमन्त्र्य भक्षयेत्।

तथा तस्मिन्नेव कर्मणि अनेन सूक्तेन आदित्यमुपतिष्ठेत।

'पूर्वस्य मेधाजननानि' इति प्रक्रम्य सूत्रितम् — " 'त्वं नो मेधे' (अ ६,१०८), 'ब्रह्म मे' ( अ ६,५३ )[2] इत्याशयति। आदित्यम् उपतिष्ठते" ( कौसू १०,१;२०;२१ ) इति।

तथा उपनयने 'त्वं नो मेधे' इति पञ्चर्चेन अग्निमुपतिष्ठेत। " 'त्वं नो मेधे' उपतिष्ठते" ( कौसू ५७,२८ ) इति सूत्रात्।

विश्वजित्[3] त्रायमाणायै[4] मा परि देहि।
त्रायमाणे द्विपाच्च सर्वं नो रक्ष चतुष्पाद् यच्च नः स्वम्[5] ॥ १ ॥

विश्वऽजित्। त्रायमाणायै। मा। परि। देहि।
त्रायमाणे। द्विऽपात्। च। सर्वम्। नः। रक्ष। चतुःऽपात्। यत्। च। नः। स्वम् ॥ १ ॥

हे विश्वजित् विश्वं कृत्स्नं जगज्जयति वशीकरोतीति विश्वजित् हे [illegible] देव त्रायमाणायै जगत्पालनाधिकृतायै देवतायै मा मां स्वस्त्ययनकर्मणि [illegible] रक्षणार्थं प्रयच्छ। हे त्रायमाणे एतत्संज्ञे देवते नः अस्माकं [illegible] पादद्वयोपेतं सर्वम् पुत्रभृत्यादिकं रक्ष पालय। तथा नः अस्माकं स्वभूतं यत् प्राणिजातं चतुष्पात् पादचतुष्टयोपेतं गोमहिषादिकम् अस्ति तत् रक्ष। द्वौ पादौ यस्य चत्वारः पादा अस्येति विगृह्य समासे 'संख्यासुपूर्वस्य' (पा ५,४,१४०) इति पादशब्दान्त्यलोपः समासान्तः। 'द्वित्रिभ्यां पाद्दन्०' (पा ६,२,१९७) इति द्विपाच्छब्दोऽन्तोदात्तः। चतुष्पाद् इत्यत्र तु बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। पूर्वपदं च 'त्रः संख्यायाः' (फि २,५) इति आद्युदात्तम्[6]।

त्रायमाणे[1] विश्वजिते[2] मा परि देहि ।
विश्वजिद्[3] द्विपाच्च सर्वं नो रक्ष चतुष्पाद् यच्च नः स्वम् ॥ २ ॥

त्रायमाणे । विश्वऽजिते । मा । परि । देहि ।
विश्वऽजित् । द्विऽपात् । च । सर्वम् । नः । रक्ष । चतुःऽपात् । यत् । च । नः । स्वम् ॥२॥

हे त्रायमाणे पालयित्रि मा मां विश्वजिते देवतायै परि देहि । परिदानं रक्षणार्थं दानम् । 'घ्वसोरेद्धौ' ( पा ६,४,११९ ) इति एत्वाभ्यासलोपौ । हे [4]विश्वजित् सर्वजित् द्विपाच्चतुष्पाच्च अस्मदीयं स्वं रक्षेति पूर्ववद् योजना ।

विश्वजित्[5] कल्याण्यै[6] मा परि देहि ।
कल्याणि द्विपाच्च सर्वं नो रक्ष चतुष्पाद् यच्च नः स्वम् ॥ ३ ॥

विश्वऽजित् । कल्याण्यै । मा । परि । देहि ।
कल्याणि । द्विऽपात् । च । सर्वम् । नः । रक्ष । चतुःऽपात् । यत् । च । नः । स्वम् ॥३॥

हे विश्वजित् कल्याण्यै सर्वमङ्गलकारिण्यै देवतायै मा मां परि देहि । अन्यत् पूर्ववद् योज्यम् ।

कल्याणि सर्वविदे[1] मा परि देहि ।
सर्वविद् द्विपाच्च सर्वं नो रक्ष चतुष्पाद् यच्च नः स्वम् ॥ ४ ॥

कल्याणि । सर्वऽविदे । मा । परि । देहि ।
सर्वऽवित् । द्विऽपात् । च । सर्वम् । नः । रक्ष । चतुःऽपात् । यत् । च । नः । स्वम् ॥४॥

हे कल्याणि मङ्गलकारिणि देवते सर्वविदे सर्वं कार्यजातं जानते देवाय मा मां परि देहि । हे सर्वविद् देव अस्मदीयं पुत्रपश्वादिकं स्वं रक्षेत्यर्थः ।

त्वं नो मेधे प्रथमा गोभिरश्वेभिरा गहि ।
त्वं सूर्यस्य [7]रश्मिभिस्त्वं नो असि[8] यज्ञिया ॥ १ ॥

त्वम् । नः । मेधे । प्रथमा । गोभिः । अश्वेभिः । आ । गहि ।
त्वम् । सूर्यस्य । रश्मिऽभिः । त्वम् । नः । असि । यज्ञिया ॥ १ ॥

---

१. विश्वजित् श्चा° S'. २. सर्वविदे पै १९,४४,७. ३. त्रायमाणे पै. एवमग्रेऽपि. ४. पंगु. नीरा. हे विश्वजित् सर्वजित् इति आदौ पठति । एतत्स्थाने च हे त्रायमाणे इति पुनः पठति. ५. विश्वजित् पै १९,४४,९; सर्वविद् विश्वजित् पै [मूको.]. ६. त्रायमाणायै पै १९, ४४,१०. ७. रश्मिषु पै १९,१७,७. ८. वसुदा पै.

हे मेधे 'श्रुतधारणसामर्थ्यरूपिणि देवि प्रथमा मुख्या देवमनुष्यादिभिः सर्वैरुपास्यमाना त्वं गोभिः अस्मभ्यं दातव्यैः अश्वेभिः अश्वैश्च नः अस्मान् आ गहि आगच्छ। गमेर्लोटि 'बहुलं छन्दसि' ( पा २,४,७३ ) इति शपो लुक्। 'अनुदात्तोपदेश'' ( पा ६,४,३७ ) इत्यादिना अनुनासिकलोपः। तस्य 'असिद्धवदत्राभात्' (पा ६.४,२२) इति असिद्धत्वात् हेर्लुगभावः। हे मेधे त्वं सूर्यस्य सर्वप्रेरकस्य देवस्य रश्मिभिः सर्वव्यापिभिः किरणैः। लुप्तोपममेतत्। सूर्यरश्मयो यथा आशु सर्वं जगद् व्याप्नुवन्ति एवं सर्वविषयव्यापनशक्तैरात्मीयैः सामर्थ्यैरस्मान् आगच्छेति संबन्धः। तत्र हेतुरुच्यते — हे मेधे त्वं नः अस्माकं यज्ञिया यज्ञार्हा असि भवसि। अस्माभिर्दत्तेन हविषा यतः प्रीता भवसि तत आगच्छेत्यर्थः। 'यज्ञर्त्विग्भ्यां घखञौ' ( पा ५,१,७१ ) इति अर्हार्थे यज्ञशब्दाद् घप्रत्ययः।

मेधामहं प्रथमां ब्रह्मण्वतीं ब्रह्मजूतामृषिष्टुताम्।
प्रपीतां[2] ब्रह्मचारिभिर्देवानामवसे[3] हुवे॥ २॥

मेधाम्। अहम्। प्रथमाम्। ब्रह्मण्ऽवतीम्। ब्रह्मऽजूताम्। ऋषिऽस्तुताम्।
प्रऽपीताम्। ब्रह्मचारिऽभिः। देवानाम्। अवसे। हुवे॥ २॥

अहं मेधाकामः प्रथमाम् मुख्यां मेधां देवीं हुवे आह्वयामि। कीदृशीम्। ब्रह्मण्वतीम् ब्रह्म वेदः तद्युक्ताम्। तद्धारणेन तैर्युज्यमानाम् इत्यर्थः। 'मादुपधायाः'' ( पा ८,२,९ ) इति मतुपो वत्वम्। 'अनो नुट्' ( पा ८,२,१६ ) इति नुडागमः। ब्रह्मजूताम् ब्राह्मणजातीयैः सेविताम्। ऋषिष्टुताम् ऋषिभिः अतीन्द्रियार्थदर्शिभिर्वसिष्ठादिभिः प्रशंसिताम्। ब्रह्मचारिभिः। ब्रह्म वेदस्तत्र चरितुं शीलमेषामिति ब्रह्मचारिणः गुरुकुलवासादिनियमोपेता अधीयानाः। चरतेस्ताच्छीलिको णिनिः। तैः प्रपीताम् सेविताम्। प्रपूर्वात् पिवतेः 'घुमास्था' ( पा ६,४,६६ ) इत्यादिना ईत्वम्। यद्वा प्रपीताम् प्रवर्धिताम्। ओप्यायी[4] वृद्धौ इत्यस्मान्निष्ठा। 'प्यायः पी' ( पा ६,१,२८ ) इति पीभावः[5]। किमर्थम्। देवानाम् इन्द्रादीनाम् अवसे। अध्ययनतदर्थज्ञानतदनुष्ठानादिना रक्षणायेत्यर्थः।

यां मेधामृभवो विदुर्यां मेधामसुरा विदुः[7]।
ऋषयो भद्रां मेधां यां विदुस्तां मय्या वेशयामसि॥ ३॥

याम्। मेधाम्। ऋभवः। विदुः[8]। याम्। मेधाम्। असुराः। विदुः।
ऋषयः। भद्राम्। मेधाम्। याम्। विदुः। ताम्। मयि। आ। वेशयामसि॥ ३॥

---

१. 'तधरसा' S'. २. प्रणीतां पै १९,१७,८; प्रणिहितां पै. [मुको.]. ३. 'मवसा पै.
४. घृणे पै. ५. प्यायी शंपा. ६. निष्ठान्त्याभावश्छान्दसः. ७. विदुः B K,K[m],
P[3],M,J,K[4],O. ८. विदुः Cp.

ऋभवो **देवाः** यां **मेधां** विदुः **जानन्ति** असुराः **दानवा** यां मेधां विदुः भद्राम् **भन्दनीयां** कल्याणीं वेदशास्त्रादिविषयां यां मेधाम् ऋषयः **वसिष्ठाद्या** विदुः तां **सर्वतोदिक्कां** मेधां मयि **साधके** आ वेशयामसि **आवेशयामः आस्थापयामः**। 'इदन्तो मसि' (पा ७,१,४६)।

यामृषयो भूतकृतो मेधां मेधाविनो विदुः।
तया मामद्य मेधयाग्ने मेधाविनं कृणु[1] ॥ ४ ॥

याम्। ऋषयः। भूतऽकृतः। मेधाम्। मेधाविनः। विदुः।
तया। माम्। अद्य। मेधया। अग्ने। मेधाविनम्। कृणु ॥ ४ ॥

ऋषयः **मन्त्रद्रष्टारो** भूतकृतः **पृथिव्यादीनि भूतानि कर्तुं शक्ताः कश्यपकौशिकादयो** मेधाविनः **धीमन्त इति प्रसिद्धा** यां मेधां विदुः **जानन्ति**। 'विदो लटो वा' (पा ३,४,८३) इति झेः **उस् आदेशः**। हे अग्ने तया मेधया अद्य **इदानीं** मां मेधाविनं कृणु **मेधायुक्तं कुरु**।

मेधां सायं मेधां प्रातर्मेधां[2] मध्यन्दिनं परि।
मेधां[3] सूर्यस्य रश्मिभिर्वचसा †वेशयामहे[‡] ॥५॥

मेधाम्। सायम्। मेधाम्। प्रातः। मेधाम्। मध्यन्दिनम्। परि।
मेधाम्। सूर्यस्य। रश्मिऽभिः। वचसा। आ। वेशयामहे ॥ ५ ॥

सायंकाले मेधाम् **अहं स्तौमि**। प्रातःकाले मेधां **देवीं स्तौमि**। मध्यन्दिनं परि **मध्याह्नकालेऽपि** मेधां **भजे। किं बहुना।** सूर्यस्य रश्मिभिः **सार्धं सर्वस्मिन्नपि अहनि** वचसा **स्तुतिरूपेण वाक्येन तां महानुभावां** मेधाम् आ वेशयामहे **आत्मनि स्थापयामः। कर्त्रभिप्रायक्रियावचनाद् विशेर्ण्यन्तात्** 'णिचश्च' (पा १,३,७४) **इति आत्मनेपदम्।**

इति एकादशेऽनुवाके तृतीयं सूक्तम्।

'पिप्पली क्षिप्तभेषजी' **इति तृचेन धनुर्वातक्षितवातादिकृत्स्नवातव्याधिशान्त्यर्थं** पिप्पलीं संपात्य **अभिमन्त्र्य पुनस्तृचं जपित्वा आदापयेत्।** 'पिप्पली', 'विद्रधस्य' (अ ६,१२७), 'या बभ्रवः' (अ ८,७) इति प्रक्रम्य 'चतुर्थेनाशयति' (कौसू २६,३८) **इति सूत्रात्।**

---

१. कुरु मा ३२,१४ गि ४,८,९. २. श्रद्धां ऋ १०,१५१,५. ३ सूर्यस्योदिता- श्राद्धां ऋग् सुन्दम पै १९,१७,९. † विशुपि य. ‡ वेदयामसि ऋ १०,१५१,१.

'प्रत्नो हि' (अ ६,११०) इति तृचेन पापनक्षत्रजातस्य अपत्यस्य संपातिताभिमन्त्रितोदपात्रेण सूत्रोक्तरीत्या आप्लावनम् अवसेकं वा कुर्यात्।

तथा तत्रैव कर्मणि अनेन तृचेन [1]संपातिताभिमन्त्रितक्षीरौदनं प्राशयेत्।

" 'प्रत्नो हि' इति पापनक्षत्रे [2]जाताय" इति[2] प्रक्रम्य सूत्रितम्—'उदकान्ते मौञ्जैः पर्वसु बद्ध्वा पिञ्जूलीभिराप्लावयत्यवसिञ्चति' (कौसू ४६,२५-२७) इति।

**पिप्पली[3] [4]क्षिप्तभेषज्यू३ुतातिविद्धभेषजी।**
**तां देवाः [5]समकल्पयन्नियं जीवितवा अलम्[5] ॥१॥**

पिप्पली[3]। क्षिप्तऽभेषजी। उत। अतिविद्धऽभेषजी[6]।
ताम्। देवाः। सम्। अकल्पयन्। इयम्। जीवितवै[7]। अलम् ॥१॥

पिप्पली एतत्संज्ञा कणाद्यपरपर्याया ओषधिः क्षिप्तभेषजी क्षिप्तानि तिरस्कृतानि अन्यानि भेषजानि यया सा तथोक्ता। यद्वा क्षिप्तस्य वातरोगविशेषस्य भेषजी निवर्तिका। उत अपि च अतिविद्धभेषजी अतिशयेन विद्धानि ताडितानि भेषजान्तराणि यया सा तथोक्ता। यद्वा कृत्स्नं रोगम् अतिविध्यति निपीडयतीति अतिविद्धा। व्यध ताडने इत्यस्मात् कर्तरि क्तः। अतिविद्धा चासौ भेषजी च अतिविद्धभेषजी। तां तादृशीं पिप्पलीं देवा इन्द्रादयः अमृतमथनसमये सम् अकल्पयन् सम्यक् कल्पितवन्तः। कथम् इति। इयम् एकैव ओषधिः जीवितवै सर्वरोगनिवारणेन सर्वान् प्राणिनो जीवयितुम् अलम् समर्था शक्ता इत्यभिप्रेत्य। जीव प्राणधारणे इत्यस्मात् ण्यन्तात् तुमर्थे तवैप्रत्ययः।

**[8]पिप्पल्यः [9]समवदन्तायतीर्जननादधि।**
**यं जीवमश्नवामहै[10] न स रिष्याति पूरुषः[11] ॥ २ ॥**

[8]पिप्पल्यः। सम्। अवदन्त। आऽयतीः। जननात्। अधि।
यम्। जीवम्। अश्नवामहै। न। सः। रिष्याति[12]। पुरुषः ॥२॥

हस्तिपिप्पल्यादिजातिभेदभिन्नाः सर्वाः पिप्पल्यः ओषधयः जननाद् अधि अमृतमथनसमकालीनोत्पत्तेरूर्ध्वम् आयतीः आयत्यः आगच्छन्त्यः समवदन्त परस्परं

---

१. संपादिता° S'. २. जाताया इति S'. ३. पिप्पली A,B,D,K^m,Cs,Cp,Bp², E²,O,R². ४. °ज्यू ३° R,V,WM.; °ज्यु३° WM; °ज्यु° पै १९,२७,९. ५. °यन्नलं जीवितवा इति पै. ६. अतिविद्धऽभे° P; अति। विद्धऽभे° P². ७. जीवित। वै P,P²,J,Cp,WM. ८. पिप्प° B,D,K^m,Cs,Cp,Bp²,E²,I,O; °ल्या१ S^m,V; ल्यः१ Cs; ओषधयः ऋ १०,९७,२२. ९. संवदन्ते. १०. °महै मं २,७,१२. ११. पौरुषः पै १९,२७,८. १२. ऋष्याति P²,J.

संवादं संभाषणम् अक्रुपत। 'व्यक्तवाचा समुच्चारणे' (पा १,३,४८) इति आत्मनेपदम्। तत्प्रकार उच्यते — यं जीवम् जीवनवन्तं पुरुषम् अस्नयामहे वयं भेषजत्वेन व्याप्नवाम स पुरुषः न रिष्याति न रिष्यतु न विनश्यत्विति। रिष हिंसायाम्। लेटि आडागमः।

> असुरास्त्वा[१] न्यखनन्[२] देवास्त्वोदवपन् पुनः।
> वातीकृतस्य भेषजीमथो क्षिप्तस्य भेषजीम्॥ ३॥

असुराः। त्वा। नि। अखनन्। देवाः। त्वा। उत्। अवपन्। पुनः।
वातीऽकृतस्य। भेषजीम्। अथो इति। क्षिप्तस्य। भेषजीम्॥ ३॥

हे पिप्पलि त्वा त्वाम् असुराः पूर्वदेवाः न्यखनन् निखातवन्तः। देवाः पुनस्त्वा त्वां सर्वप्राणिहिताय उदवपन् उद्धृतवन्तः। कीदृशीम्। वातीकृतस्य वातरोगाविष्टशरीरस्य भेषजीम् औषधभूताम्। अथो अपि च क्षिप्तस्य मुहुर्मुहुरवयवक्षेपणशीलस्य आक्षेपकनाम्नो वातरोगविशेषस्य भेषजीम् निवर्तयित्रीम्।

> [३]प्रत्नो हि[४] कमीड्यो[५] अध्वरेषु सनाच्च होता नव्यश्च सत्सि[६]।
> स्वां चाग्ने [७]तन्वं[८] पिप्रायस्वास्मभ्यं च सौभगमा यजस्व॥१॥

प्रत्नः। हि। कम्। ईड्यः। अध्वरेषु। सनात्। च। होता। नव्यः। च। सत्सि।
स्वाम्। च। अग्ने। तन्वम्। पिप्रायस्व। अस्मभ्यम्। च। सौभगम्। आ। यजस्व॥ १॥

प्रत्न इति पुराणनाम। हिशब्दः प्रसिद्धौ। कम् इति पूरणः। प्रत्नः चिरंतनः खलु अयम् अग्निः सर्वदेवात्मकत्वात्। 'अग्निः सर्वा देवताः' (तै २,२,९,१) इति श्रुतिः। अत एव ईड्यः स्तुत्यः। अध्वरेषु यज्ञेषु च सनात् चिरंतनो होता देवानाम् आह्वाता होमनिष्पादको वा। हे अग्ने ईदृशस्त्वं नव्यः अभिनवश्च होता भूत्वा सत्सि वेद्यां सीदसि। 'अग्निर्देवो होता देवान् यक्षत्' (आपश्रौ २,१६,५) इति हि निगमः। इत्थं होतृत्वेन वेद्याम् उपविशंस्त्वं स्वाम् स्वकीयां तन्वम् शरीरं [च] पिप्रयस्व[८] आज्यादिहविषा पूरय। अस्मभ्यं च सौभगम् सौभाग्यकरं धनम् आ यजस्व आगमय। प्रयच्छेत्यर्थः। पिप्रयस्व[८] च आ यजस्व चेति परस्परसमुच्चयार्थौ चकारौ। 'चवायोगे प्रथमा' (पा ८,१,५९) इति प्रथमा तिङ्विभक्तिर्न निहन्यते।

---

१. [१]स्ते पै १९,२७,१०. २. नि ग्वनन्तु पै. ३. प्रत्नोऽसि तैआ १०,१,१६. ४. पूर्वोड्यो ऋ ८,११,१० तैआ. ५. सत्सि ऋ. तैआ. ६. तनुवं तैआ. ७. प्रिप्रयं ऋ. तैआ. ८. वैतु. मंपा. द्र.

ज्येष्ठघ्न्यां जातो विचृतोर्यमस्य मूलबर्हणात् परि पाह्येनम् ।
अत्येनं नेषद् दुरितानि विश्वा दीर्घायुत्वाय शतशारदाय ॥ २ ॥

ज्येष्ठऽघ्न्याम् । जातः । विऽचृतोः । यमस्य । मूलऽबर्हणात् । परि । पाहि । एनम् ।
अति । एनम् । नेषत् । दुःऽइतानि । विश्वा । दीर्घायुऽत्वाय । शतऽशारदाय ॥ २ ॥

ज्येष्ठं वयसा प्रवृद्धं हन्तीति ज्येष्ठघ्नी ज्येष्ठाख्यं नक्षत्रम् । तथा च तैत्तिरीयकम्— 'ज्येष्ठम् एषाम् अवधिष्मेति तज्ज्येष्ठघ्नी' ( तैब्रा १,५,२,८ ) इति । तस्यां ज्येष्ठघ्न्यां जातः पुत्रः ज्येष्ठस्य पितृभ्रात्रादेर्हन्ता भवति । तथा विचृतोः विचर्तनस्वभावे मूलनक्षत्रे जातः पुत्रः सर्वं कुलं विचृतति हिनस्ति । चृती हिंसाग्रन्थनयोः इत्यस्मात् क्विप् । नक्षत्रस्य एकत्वेऽपि अधिष्ठानापेक्षया द्विवचनम् । 'उदगातां भगवती विचृतौ नाम तारके' ( अ २,८,१ ) इति हि आम्नायते । मूलनक्षत्रं हि मूलोन्मूलनकरम् । तथा च तैत्तिरीयके तन्नामनिर्वचनम्— 'मूलम् एषाम् अवृक्षामेति तन्मूलबर्हणी' ( तैब्रा १,५,२,८ ) इति । अतः पापनक्षत्रे जातम् एनं कुमारं यमस्य यमसंबन्धिनः यमेन क्रियमाणाद् मूलबर्हणात् संतानमूलोच्छेदनात् परि पाहि परितः सर्वतो रक्ष । बृहू उद्यमने । अस्माद् भावे ल्युट् । ततः कर्मणि षष्ठ्याः समासः । यमस्येति शेषषष्ठी । अतो न 'उभयप्राप्तौ कर्मणि' ( पा २,३,६६ ) इति नियमस्य अवसरः । एनं पुत्रं विश्वा विश्वानि सर्वाणि दुरितानि अति नेषत् अतिनयतु अतिक्रमयतु । किमर्थम् । दीर्घायुत्वाय चिरकालजीवनाय । तदेव विशेष्यते— शतशारदाय शतं शारदाः शरदृतुना युक्ताः संवत्सरा यस्मिन् तस्मै । शतसंवत्सरपरिमितजीवनायेत्यर्थः ।

व्याघ्रेऽह्न्यजनिष्ट[1] वीरो नक्षत्रजा जायमानः[2] सुवीरः[3] ।
स मा वधीत्[4] पितरं[5] वर्धमानो मा मातरं प्र मिनीज्जनित्रीम् ॥ ३ ॥

व्याघ्रे । अह्नि । अजनिष्ट । वीरः । नक्षत्रऽजाः । जायमानः । सुऽवीरः ।
सः । मा । वधीत् । पितरम् । वर्धमानः । मा । मातरम् । प्र । मिनीत् । जनित्रीम् ॥३॥

व्याघ्रे व्याघ्रवत्क्रूरे अह्नि उदीरिते पापनक्षत्रे वीरः पुत्रः अजनिष्ट जातोऽभूत् । नक्षत्रजाः दुष्टनक्षत्रे जातः । जनी प्रादुर्भावे । 'जनसनखनक्रमगमो विट्' ( पा ३,२,६७ ) । 'विड्वनोरनुनासिकस्यात्' ( पा ६,४,४१ ) इति आत्वम् । जायमान एव सुवीरः शोभनवीर्ययुक्तो भवतु । स तथाविधः पुत्रः वर्धमानः उपचितावयवः प्रवृद्धः सन् पितरम् स्वजनकं मा

1. वर्हणी शौपा. 2. 'घ्रेऽह्न्यज' पै १९,२०,२. 3. सर्ववीरस् पै. 4. हिंसीः पै.
5. पितरौ पै.

वधीत् मा हन्तु । जनित्रीम् जनयित्रीम् उत्पादयित्रीं मातरं मा प्र मिनीत् मा प्रमिनातु हिनस्तु । मीञ् हिंसायाम् । लङि तिपि व्यत्ययेन ईत्वम् ।

इति चतुर्थं सूक्तम् ।

'इमं मे अग्ने' इति चतुर्ऋचस्य मातृनामगणे (तु. कौसू. ८,२४) पाठाद् "'दिव्यो गन्धर्वः' (अ २,२) इति मातृनामभिर्जुहुयात्" ( कौसू ९४,१५ ) इत्यादिषु विनियोगो द्रष्टव्यः ।

तथा गन्धर्वराक्षसाप्सरोभूतग्रहादिपीडाशान्तये घृताक्तसर्वौषधिहोमे चतुष्पथे ग्रहगृहीतशिरःस्थितमृन्मयकपालाग्निहोमादौ च अस्य विनियोगः ।

'मातृनाम्नोः सर्वसुरभिचूर्णान्यन्वक्तानि हुत्वा शेषेण प्रलिम्पति । चतुष्पथे च शिरसि [1]दर्भेण्ड्वेऽङ्गारकपालेन्वक्तानि । तितउनि प्रतीपं गाहमानो वपति इतरोवसिञ्चति पश्चात् । आमपात्र ओप्य आसिच्य मौञ्जे त्रिपादे वयोनिवेशने प्रबध्नाति' ( कौसू २६,२९-३२ ) इति सूत्रम् ।

'मा ज्येष्ठम्' (अ ६,११२)'त्रिते देवा.' (अ ६,११३) इति तृचाभ्यां परिवित्तिपरिवेत्तृप्रायश्चित्तार्थम् उदकघटं संपात्य अभिमन्त्र्य तयोः पर्वाणि मौञ्जपाशैर्बद्ध्वा आप्लावनम् अवसेकं वा कुर्यात् । अत्र 'नदीनां फेनान्' (अ ६,११३,२) इत्यर्धर्चेन उत्तरपाशान् नदीफेने निदध्यात् । सूत्रितं हि— "'मा ज्येष्ठम्', 'त्रिते देवाः' इति परिवित्तिपरिविविदानावुदकान्ते[3] मौञ्जैः पर्वसु बद्ध्वा पिञ्जूलीभिराप्लावयति । अवसिञ्चति । फेनेषूत्तरान् पाशान् आधाय[4] 'नदीनां फेनान्' इति [5]प्रप्लावयति । सर्वैश्च प्रविश्य" (कौसू ४६,२६–२९) इति ।

इ॒मं मे॑ अग्ने॒ पुरु॑षं [6]मुमुग्ध्य॒यं यो ब॒द्धः सुय॑तो॒ लाल॑पीति ।
[7]अतोऽधि॑ ते कृणवद् भा॒ग॒धेयं॑ [8]य॒दानु॑न्मदि॒तोऽस॑ति ॥ १ ॥

इ॒मम् । मे॒ । अ॒ग्ने॒ । पुरु॑षम् । मु॒मु॒ग्धि॒ । अ॒यम् । यः । ब॒द्धः । सुऽय॑तः । लाल॑पीति ।
अतः॑[9] । अधि॑ । ते॒ । कृ॒ण॒व॒त् । भा॒ग॒ऽधेय॑म् । य॒दा । अनु॑त्ऽमदितः । अस॑ति ॥१॥

हे अग्ने मे मदीयम् इमं पुरुषं मुमुग्धि रोगनिदानभूतात् पापाद् मोचय । मुचेर्व्यत्ययेन शपः श्लुः । 'हुझल्भ्यो हेर्धि.' ( पा ६,४,१०१ ) इति हेर्धिरादेशः । योऽयं पुरुषो बद्धः पापरूपैः पाशैर्बद्धः सन् सुयतः सुष्ठु नियमितः निरुद्धप्रसरः सन् लालपीति भृशं प्रलपति । अतः अस्माद्धेतोः हे अग्ने ते तव भागधेयम् हविर्भागम् अधि कृणवत् अधिकं करोतु अयं पुरुषः । यदा[10] येन प्रकारेण असौ अनुन्मदितः उन्मादरहितः गन्धर्वाप्सरो-

---

१. 'स्थिते मृ° S'. २. दर्भेड्वककपाले° S'. ३. °विदानानामुद° S'. ४. आदाय S'. ५. च प्ला° S'. ६. °ग्धि यो विबद्धो आह्रा पै ५,१७,६. ७. अतो° A,B,K,D,S^m,P,J,Cs,Cp,WM. ८. अनुन्मदितो अगदो यथासत् पै. ९. अतः P,J,Cp. १०. वैमु. मैसा. द.

ग्रहजनितबुद्धिस्खालित्यरहितः असति भवेत्। अस भुवि। व्यत्ययेन शपो लुगभावः।

अग्निष्टे नि शमयतु यदि[1] ते[2] मन उद्युतम्[3]।
कृणोमि[4] विद्वान् भेषजं[5] यथानुन्मदितोऽससि[6] ॥ २ ॥

अग्निः। ते। नि। शमयतु। यदि। ते। मनः। उत्ऽयुतम्।
कृणोमि। विद्वान्। भेषजम्। यथा। अनुत्ऽमदितः। अससि ॥ २ ॥

हे गन्धर्वग्रहगृहीत ते त्वाम् अग्निः नि शमयतु सम्यग् शापयतु। उन्मादं निवर्तयत्वित्यर्थः। 'शमो दर्शने' इति मित्त्वनिषेधाभावात्[6] 'मितां ह्रस्वः' (पा ६,४,९२) इति ह्रस्वत्वम्। ते त्वदीयं मनः यदि उद्यतम्[7] ग्रहविकारेण उद्भ्रान्तं वर्तते। यदिशब्दो हेतौ। यस्माद् एवं तस्मात् कारणाद् विद्वान् प्रतीकारं जानन्नहं ग्रहविकारस्य भेषजम् औषधं कृणोमि करोमि। यथा येन प्रकारेण त्वम् अनुन्मदितः उन्मादरहितश्चित्तभ्रमरहितः अससि भवसि। तथाहं चिकित्सामीत्यर्थः।

[8]देवैनसादुन्मदितमुन्मत्तं रक्षसस्परि।
कृणोमि विद्वान् भेषजं [9]यदानुन्मदितोऽसति ॥ ३ ॥

देवऽएनसात्। उत्ऽमदितम्। उत्ऽमत्तम्। रक्षसः। परि।
कृणोमि। विद्वान्। भेषजम्। यदा। अनुत्ऽमदितः। असति ॥ ३ ॥

*[देवैनसात्] देवकृतम् एनः देवैनसम्। 'अनसन्तान्नपुंसकाच्छन्दसि' (पा ५,४,१०३) इति अच् समासान्तः। *[तस्मात्] देवकृतात् पापाद् उपघाताद् उन्मदितम् उन्मादं चित्तस्खलनं प्रापितं तथा रक्षसः रक्षःसकाशाद् ब्रह्मराक्षसादिग्रहणाद् उन्मत्तम् उन्मादेन परवशम् एनं परि परिप्राप्य विद्वान् तत्प्रतीकारज्ञोऽहं भेषजम् औषधं कृणोमि करोमि। अन्यद् व्याख्यातम्।

पुनस्त्वा दुरप्सरसः पुनरिन्द्रः[10] पुनर्भगः[11]।
पुनस्त्वा दुर्विश्वे देवा यथानुन्मदितोऽससि ॥ ४ ॥

पुनः। त्वा। दुः। अप्सरसः। पुनः। इन्द्रः। पुनः। भगः।
पुनः। त्वा। दुः। विश्वे। देवाः। यथा। अनुत्ऽमदितः। अससि ॥ ४ ॥

---

१. यत् पै ५,१७,७. २. तन्मन उद्धृतम् पै. ३. जुहोमि पै. ४. ते हविर् पै. ५. यदानु° Km; °सति Bb; °तो भवः पै. ६. मित्त्वात् शंपा. ७. वैतु. मंपा. द्र. ८. दुर्वैन° Km. ९. यदानु° A,B,D,O. १०. °र्वातः पै ५,१७,८. ११. °र्दिशः पै.

हे उन्मादगृहीत पुरुष त्वा त्वाम् अप्सरसः। एतद् गन्धर्वादीनामपि उपलक्षणम्। 'गन्धर्वाप्सरसो वा एतम् उन्मादयन्ति य उन्माद्यति' (तै ३,४,८,४) इति हि तैत्तिरीयकम्। उन्मादकारिण्योऽप्सरसः त्वां पुनः अदुः[1] उन्मादपरिहारेण अस्मभ्यं दत्तवत्यः। इन्द्रश्च त्वा पुनः अदात्। भगः च पुनः अदात्। किं बहुना। विश्वे सर्वे देवास्त्वा त्वां पुनः अदुः[1] दत्तवन्तः। यथा येन प्रकारेण त्वम् अनुन्मदितः असि उन्मादविकाररहितो भवसि तथा [1]अदुरिति संबन्धः।

मा ज्ये॒ष्ठं व॑धीद॒यम॑ग्न[2] ए॒षां मू॑ल॒बर्ह॑णा॒त्[3] परि॑ [4]पाह्ये॒नम्।
स[5] ग्राह्याः पाशा॒न् वि चृ॑त प्रजा॒नन् तुभ्यं॑ दे॒वा अनु॑ जानन्तु॒ विश्वे॑ ॥१॥

मा। ज्येष्ठम्। व॒धी॒त्। अ॒यम्। अ॒ग्ने॒। ए॒षाम्[6]। मू॒ल॒ऽबर्ह॑णात्। परि॑। पा॒हि॒। ए॒न॒म्। सः। ग्राह्याः। पाशा॑न्। वि। चृ॒त॒। प्र॒ऽजा॒नन्। तु॒भ्य॑म्। दे॒वाः। अनु॑। जा॒न॒न्तु॒। विश्वे॑ ॥ १ ॥

हे अग्ने अयं परिवित्तः एषां पितृमातृभ्रात्रादीनां मध्ये ज्येष्ठम् भ्रातरं मा वधीत् मा हन्तु। 'लुङि च' (पा २,४,४३) इति वधादेशः। मूलबर्हणात् मूलोच्छेदनात् तद्धेतुभूताद् दोषाद् वा एनं परिवित्तं परि पाहि परिपालय। परिवेदनदोषं शमयेत्यर्थः। हे अग्ने स त्वं प्रजानन् विमोचनोपायं विद्वान् ग्राह्याः ग्रहणशीलायाः पिशाच्याः पाशान् बन्धनरज्जून् वि चृत विमुञ्च। चृती हिंसाग्रन्थनयोः। तुभ्यं विमोक्त्रे विश्वे सर्वे देवाः अनु जानन्तु विमोचने अनुज्ञां कुर्वन्तु।

उन्मु॑ञ्च॒ पाशां॒स्त्वम॑ग्न ए॒षां त्रय॑स्त्रि॒भिरुत्सि॑ता[7] येभि॒रास॑न्।
स ग्राह्याः पाशा॒न् वि चृ॑त प्रजा॒नन् पि॑तापु॒त्रौ मा॒तरं॑ मुञ्च॒ सर्वा॑न् ॥ २ ॥

उत्। मु॒ञ्च॒। पाशा॑न्। त्वम्। अ॒ग्ने॒। ए॒षाम्[6]। त्रयः॑। त्रि॒ऽभिः[8]। उत्ऽसि॑ताः। येभिः॑। आस॑न्। सः। ग्राह्याः। पाशा॑न्। वि। चृ॒त॒। प्र॒ऽजा॒नन्। पि॒ता॒पु॒त्रौ। मा॒तर॑म्। मु॒ञ्च॒। सर्वा॑न् ॥ २ ॥

हे अग्ने त्वम् एषां पित्रादीनां पाशान् परिवेदनदोषोद्भवान् बन्धकान् पाशान् उन्मुञ्च उन्मोचय। शमयेत्यर्थः। पाशा विशेष्यन्ते। माता पिता पुत्र इत्येते त्रयः येभिः यैः त्रिभिः उत्तमाधममध्यमैः पाशैः परिवेदनदोषोद्भवैः उत्सिताः[1] उत्क्रम्य अवस्थिता आसन्। तान् विमुञ्चेत्यर्थः। स ग्राह्या इति पूर्ववत्। एषाम् इति प्रागुक्तमेव विवृणोति — पितापुत्राविति। पिता च पुत्रश्च पितापुत्रौ। 'आनङ् ऋतो द्वन्द्वे' (पा ६,३,२५) इति पूर्वपदस्य आनङ् आदेशः। पितरं पुत्रं मातरम् अन्यानपि सर्वान् भ्रात्रादीन् परिवेदनदोषाद् मुञ्च। दोषं शमयेत्यर्थः।

---

१. यत्र. मंत्रा. द्र. २. °मग्निर् पै १९,२१,१२. ३. °र्हणं पै. ४. वृणक्त्वेनम् पै. ५. सं A,R. ६. ए॒षाम् P². ७. °रुत्थि॑ता H,I,O, सा. पै १९,२१,१२ [पुस्तो.]. ८. त्रिऽभिः P.

येभिः[1] पाशैः परिवित्तो[2] [3]विबद्धोऽङ्गेअङ्ग आर्पित ‡उत्सितश्च[3]।
वि ते[4] मुच्यन्तां[5] विमुचो[6] हि सन्ति भ्रूणघ्नि पूषन् दुरितानि मृक्ष्व[7] ॥२॥

येभिः। पाशैः। परिऽवित्तः। विऽबद्धः। अङ्गेऽअङ्गे। आर्पितः। उत्सितः। च।
वि। ते[8]। मुच्यन्ताम्। विऽमुचः। हि। सन्ति। भ्रूणऽघ्नि। पूषन्। दुःऽइतानि। मृक्ष्व ॥२॥

येभिः यैः पापरूपैः पाशैः परिवित्तः ज्येष्ठे अकृतदारपरिग्रहे पूर्वं गृहीतदारः पुरुषः अङ्गेअङ्गे अवयवेऽवयवे विबद्धः विविधं बद्धः आर्पितः[9] आर्तिं प्रापितः उत्थितः[10] उत्क्रान्तावस्थितिश्च भवति ते तथाविधाः पाशा वि मुच्यन्ताम् विसृज्यन्ताम्। हि यस्माद् विमुचः विमोक्तारो देवाः सन्ति विद्यन्ते। तस्माद् विमुच्यन्ताम् इति संबन्धः। हे पूषन् पोषक देव भ्रूणघ्नि भ्रूणहनि। भ्रूणशब्दो गर्भवचनः। 'गर्भो भ्रूण इमौ समौ' (अको २,६,३९) इत्यभिधानात्। यद्वा [11]'कल्पप्रवचनाध्यायी भ्रूणः' (बौगृ १,७,६) इति बौधायनस्मरणात् कल्पप्रवचनसहितसाङ्गवेदाध्यायी भ्रूणः। तं हतवान् भ्रूणहा। 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (पा ३,२,८७) इति भूते क्विप्। तस्मिन् भ्रूणघ्नि दुरितानि परिवेदनोद्भवानि पापानि मृक्ष्व मार्जय। भ्रूणहा पूर्वमेव पापी तत्रैव पापायतने इदमपि पापं[12] निवेशयेत्यर्थः।

त्रिते[13] देवा अमृजतैतदेनस्त्रित[13] एनन्मनुष्येषु[14] ममृजे[15]।
ततो यदि [16]त्वा ग्राहिरानशे[17] तां ते देवा ब्रह्मणा नाशयन्तु ॥ १ ॥

त्रिते। देवाः। अमृजत। एतत्। एनः। त्रितः[13]। एनत्[18]। मनुष्येषु। ममृजे।
ततः। यदि। त्वा। ग्राहिः। आनशे। ताम्। ते। देवाः। ब्रह्मणा। नाशयन्तु ॥ १ ॥

अत्र इयमाख्यायिका। पुरा खलु देवाः पुरोडाशादिकं हविः संभृत्य तल्लेपजनितपापमार्जनाय एकतो द्वितस्त्रित इति त्रीन् पुरुषान् आप्याख्यान् अग्न्युदकसंपर्कवशाज्जनयामासुः। तेषु च तत् पापं निमृष्टवन्तः। ते च आप्याः सूर्याभ्युदितादिषु परंपरया पापं निमृष्टवन्त इति। तद् एतत् सर्वं तैत्तिरीये समाम्नायते—'देवा वै हविर्भृत्वाऽब्रुवन्' (तैब्रा ३,२,८,९) इति प्रक्रम्य 'ते देवा आप्त्येष्वमृजत। आप्त्या अमृजत सूर्याभ्युदिते। सूर्याभ्युदितः सूर्याभिनिम्रुक्ते[16]। सूर्याभिनिम्रुक्तः[16] कुनखिनि।

---

१. एभिः पै १,७०,४.　२. दधिपूपतिर् पै.　३. °द्धः परीपरावार्पितो अङ्गेअङ्गे पै १९,३३,१०.　† 'द्धोअङ्गे° A　‡ उत्थितश्च A,R,H,I; उत्सितं च K.　४. तें Bᵇ,D,K,Kᵐ,R,Sᵐ,Cs,WM.RW; ते>तें A.　५. मुंचतां Kᵐ; मुंच्यतां K²; मुञ्चन्तां WM.RW.; मुंच्य°>मुच्य° A; चृत्यन्तां पै.　६. विचृतो पै.　७. मृष्ठाः पै.　८. ते P,P²,Cp.　९. वैप १, पृ ६९९, o द्र.　१०. वंतु. मंपा. द्र.　११. सूत्रप्र° बौगृ.　१२. पाशं S'.　१३. तु. सा. पै १,७०,३ तैब्रा ३,७,१२,५; वंतु. मूको (तु. शंपा. WM.) तु°.　१४. एनं म° A,Bᵇ,D,K,Kᵐ,Sᵐ,P,P²,J,Cs,Cp,WM.RW. एनं मानुषेषु पै.; एतन्म° तैब्रा.　१५. ममृष्ट पै.; मामृजे तैब्रा.　१६. मा तैब्रा.　१७. किंचिदानशे तैब्रा.　१८. एनम् P,P²,J,K,Cp.　१९. °निमृ° S'.

कुनखी श्यावदति । श्यावदन्नग्रदिधिषौ । अग्रदिधिषुः परिवित्ते । परिवित्तो वीरहणि । वीरहा ब्रह्महणि तद् ब्रह्महणं नात्यच्यवत' (तैब्रा ३,२,८,११;१२) इति । तदिदमुच्यते— एतत् परिवित्तसमवेतम् एनः पापं पूर्वं देवास्त्रिते एतत्संज्ञे आप्त्ये अमृजत निमृष्टवन्तः । स च त्रितः एतत् स्वात्मनि समवेतं पापं मनुष्येषु सूर्याभ्युदितादिषु ममृजे मृष्टवान् निमार्जनेन स्थापितवान् । ततः तस्माद्धेतोः हे परिवित्त त्वा त्वां ग्राहिः ग्रहणशीला पापदेवता यदि । निपातानामनेकार्थत्वाद् अत्र यदिशब्दो यच्छब्दार्थे । या ग्राहिरानशे प्राप ते त्वदीयां तां ग्राहिं प्रागुक्ता देवाः ब्रह्मणा मन्त्रेण नाशयन्तु ।

मरीचीर्धूमान्[1] प्र विशानु पाप्मन्नुदारान्[2] गच्छोत वा नीहारान् ।
नदीनां फेनाँ[3] अनु[4] तान् वि नश्य[5] भ्रूणघ्नि पूषन् दुरितानि मृक्ष्व[6] ॥२॥

मरीचीः । धूमान् । प्र । विश । अनु । पाप्मन् । उत्ऽआरान् । गच्छ । उत । वा । नीहारान् ।
नदीनाम् । फेनान् । अनु । तान् । [7]वि । नश्य[7] । भ्रूणऽघ्नि । पूषन् । दुःऽइतानि । मृक्ष्व ॥२॥

हे पाप्मन् परिवेदनजनितपाप मरीचीः अग्निसूर्यादिप्रभाविशेषान् अनु प्र विश । परिवित्तं विसृज्य प्रगच्छेत्यर्थः । अथवा धूमान् अग्नेरुत्पन्नान् अनु प्र विश । यद्वा उदारान् ऊर्ध्वं गतान् मेघात्मना परिणतांस्तान् गच्छ प्रविश । उत वा अपि वा तज्जन्यान् नीहारान् अवश्यायान् गच्छ । निपूर्वात् हरतेः कर्मणि घञ् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (पा ६,३,१२२) इति दीर्घः । तथा च तैत्तिरीये सृष्टिं प्रक्रम्य आम्नायते—'तस्मात् तेपानाद् धूमोऽजायत । तद् भूयोऽतप्यत । ××× तस्मात् तेपानान्मरीचयोऽजायन्त । ×××तस्मात् तेपानाद् उदारा अजायन्त । तद् भूयोऽतप्यत । तद् अभ्रम् इव समहन्यत' (तैब्रा २,२,९,१;२) इति । हे पाप्मन् नदीनाम् सरितां तान् प्रसिद्धान् फेनान् फेनिलान् प्रवाहान् अनु वि विश्व[1] अनुप्रविश्य विविधं गच्छ । 'नेर्विशः' (पा १,३,१७) इति आत्मनेपदम् । व्यत्ययेन शपो लुक् । अन्यद् व्याख्यातम् ।

द्वादशधा निहितं त्रितस्यापमृष्टं मनुष्यैनसानि ।
ततो यदि त्वा ग्राहिरानशे तां ते देवा ब्रह्मणा नाशयन्तु ॥ ३ ॥

द्वादशऽधा । निऽहितम् । त्रितस्य[8] । अपऽमृष्टम् । मनुष्यऽएनसानि ।
ततः । यदि । त्वा । ग्राहिः । आनशे । ताम् । ते । देवाः । ब्रह्मणा । नाशयन्तु ॥ ३ ॥

त्रितस्य आप्त्यस्य संबन्धि प्रागुक्तरीत्या अपमृष्टं तद् एनः द्वादशधा निहितम् द्वादशसु स्थानेषु स्थापितम् । प्रथमं देवेषु पश्चात् त्रिषु आप्त्येषु ततः सूर्या-

---

१. वैदु. मंगा. द्र. २. °धूंसं पै १९,३३,१२. ३. वाच उदा° पै. ४. फेनमव पै. ५. वि नश्यन् $B^{b}$,D,$K^{m}$,$S^{m}$; विंनश्यन् Cs. ६. मृष्टाः पै. ७. वि । नश्यन् Cp. ८. द्र. सा.; वैदु. मूको. (द्र. शंपा. WM.) त्रि°.

भ्युदितादिषु अष्टसु एवं द्वादशसु स्थानेषु निक्षिप्तम् । तद् एनः मनुष्यैनसानि भवन्ति मनुष्यसमवेतानि इदानींतनानि पापानि संपद्यन्ते । उत्तरोऽर्धर्चो व्याख्यातः ।

इति पञ्चमं सूक्तम् ।

इति सायणार्यविरचिते अथर्वसंहिताभाष्ये षष्ठकाण्डे एकादशोऽनुवाकः ।

द्वादशेऽनुवाके पञ्च सूक्तानि । अस्यानुवाकस्य आचार्यमरणे आज्यसमित्पुरोडाशादिहोमे विनियोगः ।

तथा [1]खदाशयान्नप्रायश्चित्तार्थं याज्ञिकः [1]खदाशयानां व्रीहियवतिलं कृत्वा अनेनानुवाकेन जुहुयात् ।

तथा तत्रैव कर्मणि पाकयज्ञतन्त्रं कृत्वा वैवस्वतदेवताकं चरुमनेनानुवाकेन जुहुयात् ।

तथा तत्रैव कर्मणि [1]खदाशयान्नं शरावचतुष्टयपरिमितमनेनानुवाकेन अभिमन्त्र्य ब्राह्मणाय प्रयच्छेत् ।

सूत्रितं हि—'देवहेडनेन मन्त्रोक्तम् । आचार्याय । उपदधीत । खदाशयस्यावपते । वैवस्वतं यजते । चतुःशरावं ददाति' ( कौसू. ४६,३०-३५ ) इति ।

तथा सवान् आधास्यमानः [2]सवाग्नौ अनेनानुवाकेन आज्यं जुहुयात् समिधः शकलान् वा आदध्यात् । सूत्रितं हि—'अग्नीन् आधास्यमानः [3]सवान् वा दास्यन्[3]' इति प्रक्रम्य 'तस्मिन् देवहेडनेनाज्यं जुहुयात् । समिधोऽभ्यादध्यात् । शकलान् वा' ( कौसू. ६०,१;७,-९ ) इति ।

तथा अन्त्येष्टौ चितानावादीप्ते अनेनानुवाकेन आज्यं जुहुयात् ।

'याम्यां यमभये' ( शांक १७,४ ) इति विहितायां याम्याख्यायां महाशान्तौ 'यद् देवा देवहेडनम्' इति अनुवाकमावपेत् । तद् उक्तं शान्तिकल्पे—"'यद् देवा देवहेडनम्' इति याम्यायाम्" ( शांक १८,६ ) इति ।

तथा सवयज्ञेषु ब्राह्मौदनिकाग्नौ 'यद् देवा देवहेडनम्,' 'यद् विद्वांसः' (अ,६,११५), 'अपमित्यमप्रतीत्तम्' ( अ ६,११७ ) एतैस्त्रिभिस्तृचैः पूर्णाहुतिं जुहुयात् । सवयज्ञं प्रक्रम्य सूत्रितम्—"ब्राह्मौदनिकम्[4] अग्निं मथित्वा । 'यद् देवा देवहेडनम्', 'यद् विद्वांसो यदविद्वांसः', 'अपमित्यमप्रतीत्तम्' इत्येतैस्त्रिभिः सूक्तैरन्वारब्धे दातरि पूर्णहोमं जुहुयात्" ( कौसू. ६७,१८;१९ ) इति ।

---

१. खट्वाश° S'. २. सवाग्नी S'. ३. सवानाधास्यन् S'. ४. ब्रह्मौ°

तथा 'यद् देवा देवहेडनम्' इति द्वाभ्यां (अ ६,११४;११५) तृचाभ्यामग्निष्टोमे तृतीयसवने आदित्यग्रहहोमं ब्रह्मा अनुमन्त्रयेत। अग्निष्टोमं प्रक्रम्य वैताने सूत्रितम्— "आदित्यग्रहहोमं 'यद् देवा देवहेडनम्' इति द्वाभ्याम्" ( वैताश्रौ २२,१५ ) इति।

तथा अग्निष्टोम एव तृतीयसवनान्ते आभ्यां तृचाभ्यां सर्वप्रायश्चित्तहोमान् कुर्यात्। तद् उक्तं वैताने—'आग्नीध्रीये सर्वप्रायश्चित्तीयान्[1] जुहोति' इति प्रक्रम्य 'देवहेडनस्य सूक्ताभ्यां च' ( वैताश्रौ २३,११;१२ ) इति।

अत्र 'यद् विद्वांसः' इत्यनेन तृचेन आग्रयणेष्टौ वैश्वदेवं चरुं ब्रह्मा अनुमन्त्रयेत। आग्रयणेष्टिं प्रक्रम्य "'यद् विद्वांसः', 'द्यावापृथिवी उरुश्रुत्या' ( अ २,१६,२ ), 'सोमो वीरुधाम्' ( अ ५,२४,७ ) इति वैश्वदेवद्यावापृथिव्यसौम्यान्[2] ( वैताश्रौ ८,७ ) इति वैताने सूत्रितत्वात्।

यद् देवा देवहेडनं[3] [4]देवासश्चकृमा वयम्[4]।
[5]आदित्यास्तस्मान्नो† ‡यूयमृतस्यर्तेन मुञ्चत[5] ॥ १ ॥

यत्। देवाः। देवऽहेडनम्। देवासः। चकृम[6]। वयम्।
आदित्याः। तस्मात्। नः। यूयम्। ऋतस्य। ऋतेन। मुञ्चत ॥ १ ॥

हे देवाः अग्न्यादयः देवहेळनम्[7]। हेळतिः क्रुध्यतिकर्मा। देवाः क्रुध्यन्ति येन पापेन। करणे[8] ल्युट्[9]। देवानां क्रोधकरं यत् पापं देवासः देवाः देवनशीला इन्द्रियपरवशाः सन्तः वयं चकृम कृतवन्तः। देवास इति। 'आज्जसेरसुक्' ( पा ७,१,५० )। 'देवसेवमेघादयः पचादिषु द्रष्टव्याः' (द्र. पाम ३,१,१३५) इति परिगणनाद् इगुपधलक्षणं कं बाधित्वा अजन्तो देवशब्दः सर्वत्र अन्तोदात्तः। इह तु व्यत्ययेन आद्युदात्तत्वम्[10]। हे आदित्याः अदितेः पुत्रा देवाः यूयं तस्मात् तथाविधात् पापाद् ऋतस्य ऋतेन। ऋतम् इति यज्ञस्य सत्यस्य च नामधेयम्। यज्ञसंबन्धिना सत्येन। यद्वा ऋतम् सत्यं परं ब्रह्म तत्संबन्धिना प्रणवादिरूपेण मन्त्रेण साधनेन नः अस्मान् मुञ्चत वियोजयत। इन्द्रियचापलेन उपार्जितं कृत्स्नं पापं मन्त्रसामर्थ्येन निर्दहतेत्यर्थः।

ऋतस्यर्तेनादित्या यजत्रा मुञ्चतेह नः[11]।
[12]यज्ञं यद्[12] यज्ञवाहसः शिक्षन्तो[13] नोपशेकिम[14] ॥ २ ॥

---

१. °श्चित्तीयां S'. २. °थिवीयसौ° RG. ३. °हेलनं तैआ २,३,१. ४. यद्वा घोरमॄतमोदिम मं ४,१४,१७. ५. अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः मा २०,१४ मं ३,११,१० काठ ३८,५ तैब्रा २,६,६,१. † °स्मान् मं ४,१४,१७; °स्मान्मा तैब्रा २,४,४,८; तैआ. ‡ मुञ्चततस्य त्वेनमामुतः मं.; मुञ्चत ऋत (° ततं तैआ.) स्यर्तेन मामु (मि तैआ.) त तैब्रा ३,७,१२,१ तैआ. ६. चकृम P². ७. मतु. मपा. द ८. अधिकरणे S'. ९. ततः थाथघञ्क्तोजबित्रकारकदुत्तरपदप्रकृतिस्वरः. १०. इद चिन्त्यम्, देव-शब्दस्यात्र आमन्त्रितत्वेन पादादावाद्युदात्तस्य निर्बाधत्वात्. ११. मा तैब्रा २,४,४,९. १२. यज्ञैर्° पै १६,४९,२; यज्ञैर्वो तैब्रा. १३. आशि° तैब्रा. १४. °शेकिम B,B^b,D,K,R,S^m,P,J,Cp,WM; °मुपारिम पै.; न शेकिम तैब्रा.

ऋतस्य । ऋतेन । आदित्याः । यजत्राः । मुञ्चत । इह । नः ।
यज्ञम् । यत् । यज्ञऽवाहसः । शिक्षन्तः । न । उपऽशेकिम[1] ॥ २ ॥

हे आदित्याः अदितेः पुत्रा देवाः । 'दित्यदित्या' (पा ४,१,८५) इत्यादिना अपत्येऽर्थे प्राग्दीव्यतीयो ण्यप्रत्ययः । यजत्राः[2] । 'अमिनक्षि' (पाउ ३,१०५) इत्यादिना यजेरत्रन् प्रत्ययः । यष्टव्याः यूयम् ऋतस्य यज्ञस्य संबन्धिना ऋतेन सत्येन । यद्वा ऋतशब्दद्वयेनापि सत्यम् उच्यते । सत्यस्य सत्येन परब्रह्मणा । श्रूयते हि तद् एतत् — सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यम्' (बृआ २,१,२०) । तेन परब्रह्मणा ध्यातव्येन इह अस्मिन् कर्मणि नः अस्मान् मुञ्चत कर्माधिकारविघातकात् सर्वस्मात् पापाद् वियोजयत । ध्यायमानं हि परं ब्रह्म सर्वस्य पापस्य निवर्तकम् । स्मर्यते हि—

'उपपातकेषु सर्वेषु पातकेषु महत्सु च ।
प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत् ॥' इति ।

हे यज्ञवाहसः यज्ञस्य प्रापका निर्वर्तका[3] देवाः वयं यज्ञम् ज्योतिष्टोमादिकं शिक्षन्तः शक्तुं निष्पादयितुम् इच्छन्तः यत् यस्मात् पापाद्धेतोः नोप शेकिम शक्ताः समर्था न भवेम । तस्मात् पापाद् मुञ्चतेत्यर्थः । यज्ञवाहस इति । 'वहिहाधाञ्भ्यश्छन्दसि (पाउ ४, २२१) इति वहेरसुन्प्रत्ययः । तत्र णिदित्यनुवृत्तेरुपधावृद्धिः । शिक्षन्त इति । शक्लृ शक्तौ अस्मात् सनि 'सनि मीमा' (पा ७,४,५४) इत्यादिना अचः स्थाने इस् आदेशः । 'अत्र लोपोऽभ्यासस्य' (७,४,५८) इति अभ्यासलोपः । शेकिमेति । तस्मादेव धातोश्छान्दसे लिटि एत्वाभ्यासलोपौ । क्रादिनियमाद् इट् ।

मेदस्वता यजमानाः स्रुचाज्यानि[4] जुह्वतः ।
अकामा विश्वे[5] वो देवाः शिक्षन्तो नोप शेकिम[6] ॥ ३ ॥

मेदस्वता । यजमानाः । स्रुचा । आज्यानि । जुह्वतः ।
अकामाः । विश्वे[7] । वः । देवाः । शिक्षन्तः । न । उप । शेकिम[8] ॥ ३ ॥

मेदस्वता । चतुर्थो धातुर्मेदः । तद्वता स्फीतावयवेन पशुना यजमानाः[9] यागं निष्पादयन्तः स्रुचा जुह्वा आज्यानि जुह्वतः आहवनीये प्रक्षिपन्तः एवंभूता वयम् हे विश्वे देवाः वः युष्माकम् अकामाः कामनारहिताः । पापवशाद् विभ्यत[6] इत्यर्थः । शिक्षन्तः शक्तुं यागानुष्ठानं कर्तुम् इच्छन्तः नोप शेकिम । यस्मात् पापात् न शक्ता भवाम तस्मात् पापान्मुञ्चतेति शेषः ।

---

१. उपऽशेकिम P,J,Cp,WM.　२. सं ३ स्थं न्याय्यम्.　३. निवर्तका S'.
४. °ज्येन पै १६,४९,३ तैब्रा २,४,४,९.　५. विश्वे A,Bh,Km,R,P,J,Cp,P¹,M,I.　६. तु. D,K,V,M,W,R²,T,RW. तैब्रा.; वैतु. A,B,Bh,Km,R,Sm,Cs,WM., शंपा. शेकिम.
७. विश्वे P,J,K,Cp.　८. तु. मंपा. P²,K,Bp²,WI; वैतु. P,J,Cp,WM. शंपा. शेकिम.
९. मयमाना शंपा.

यद् विद्वांसो यदविद्वांस एनांसि चकृमा वयम् ।
'यूयं नस्तस्मान्मुञ्चत' विश्वे देवाः सजोषसः[2] ॥ १ ॥

यत् । विद्वांसः । यत् । अविद्वांसः । एनांसि । चकृम[3] । वयम् ।
यूयम् । नः । तस्मात् । मुञ्चत । विश्वे । देवाः । सऽजोषसः ॥ १ ॥

यत् पापनिमित्तं विद्वांसः जानन्तः यच्च पापनिमित्तम् अविद्वांसः अजानानाः ज्ञानाद् अज्ञानाद् वा वयम् एनांसि पापानि चकृम कृतवन्तः हे विश्वे देवाः सजोषसः[4] सह प्रीयमाणा यूयं तस्मान् प्रागुक्तात् पापाद् नः अस्मान् मुञ्चत ।

यदि जाग्रद्[5] यदि[6] स्वपन्नेनः[7] 'एनस्योऽकरम्'[8] ।
भूतं मा तस्माद् भव्यं च द्रुपदादिव मुञ्चताम्[9] ॥ २ ॥

यदि । जाग्रत् । यदि । स्वपन् । एनः । एनस्यः[10] । अकरम् ।
भूतम् । मा । तस्मात् । भव्यम् । च । द्रुपदात्ऽइव । मुञ्चताम् ॥ २ ॥

एनः पापं प्रियम् अस्य एनसि साधुरिति वा एनस्यः अज्ञानाद् ईदृशोऽहं जाग्रत् जागरावस्थापन्नः सन् । यदिशब्दः यद् इत्यर्थे । यद् एनः पापम् अकरम् कृतवान् अस्मि । तथा स्वपन् स्वप्नावस्थां प्राप्तः सन् यदि यत् पापं कृतवान् अस्मि । जाग्रद् इति । जागृ निद्राक्षये । अस्मात् लटः शत्रादेशः । अदादित्वात् शपो लुक् । 'जक्षित्यादयः षट्' (पा ६,१,६) इति अभ्यस्तत्वाद् 'नाभ्यस्ताच्छतुः' (पा ७,१,७८) इति नुमभावः । अकरम् इति । 'कृमृदृरुहिभ्यः॰' (पा ३,१,५९) इति च्लेः अङ् आदेशः । तस्माद् उभयविधात् पापाद् भूतम् लब्धसत्ताकं प्राणिजातम् । भव्यम् भविष्यत्सत्ताकं प्राणिजातम् । 'भव्यगेय' (पा ३,४,६८) इत्यादिना 'अचो यत्' (पा ३,१,९७) इति कर्तरि यत् । 'यतोऽनावः' (पा ६,१,२१३) इति उदात्तत्वम् । यद्वा इमौ लोकौ भूतभव्यशब्दवाच्यौ । तथा च तैत्तिरीयकम् — 'भूताय स्वाहा भविष्यते स्वाहेति भूताभव्यौ होमौ जुहोति । अयं वै लोको भूतम् । असौ भविष्यत्' (तैब्रा ३,८,१८,५;६) इति । ते उभे भूतभव्ये मा मां द्रुपदादिव । पादबन्धनार्थो द्रुमो द्रुपदः । तस्मादिव मुञ्चताम् वियोजयताम् ।

---

१. तस्मान्नो प्रमुञ्चत पै १६,४९,४. २. सजोषसः P³,M,T,RW. तैआ २,३,१ मै ४,१४,१७ प्रभृ. च ३. चकृम P. ४. वेङ्क. मंपा. द्र. ५. दिवा तैब्रा २,४,४,९. ६. नक्तं पै १६,४९,५. ७. स्वप॰ RW.; स्वप्न एनांसि मा २०,१६; नक्तमेनं तैब्रा. ८. चकृमा वयम् मा॰; ॰करन् तैब्रा. ९. मुञ्चतु तैब्रा. १०. द्र. मंपा. W,J,P³,Cp,D¹. वेङ्क. धीरा. एनस्यः

द्रुपदादिव[1] मुमुचानः स्विन्नः[2] स्नात्वा[3] मलादिव ।
पूतं पवित्रेणेवाज्यं विश्वे[4] शुम्भन्तु[5] मैनसः ॥ ३ ॥

द्रुपदात्ऽइव । मुमुचानः । स्विन्नः । स्नात्वा । मलात्ऽइव ।
पूतम् । पवित्रेणऽइव । आज्यम् । विश्वे । शुम्भन्तु । मा । एनसः ॥ ३ ॥

द्रुपदादिव काष्ठमयात् पादबन्धनादिव पापाद् मुमुचानः विमुच्यमानः । व्यत्ययेन यकः श्लुः । यद्वा मुचेर्लिटः कानच् । व्यत्ययेन कर्मणि कर्तृप्रत्ययः । तथा स्विन्नः स्वेदयुक्तः पुरुषः स्नात्वा अप्सु निमज्ज्य मलादिव यथा देहाश्रिताद् बाह्यमलाद् वियुज्यते एवं पापाद् वियुज्यमानः । भवानीति शेषः । तथा पवित्रेण पवनसाधनेन पूतम् शोधितम् आज्यमिव तद् यथा निष्कल्मषं भवति एवं मा मां विश्वे सर्वे देवाः एनसः पापात् शुम्भन्तु शुद्धं कुर्वन्तु ।

इति द्वादशेऽनुवाके प्रथमं सूक्तम् ।

'यद् यामं चक्रुः' इति तृचेन घृततैलमधूनां परिमितानां वृद्धिक्षयलक्षणाद्भुतप्रायश्चित्तार्थमाज्यं जुहुयात् । सूत्रितं हि — "अथ यत्रैतत् सर्पिर्वा तैलं वा मधु वा विस्पन्दते[6] 'यद् यामं चक्रुर्निखनन्तो अग्रे' इत्येतेन सूक्तेन जुहुयात् । सा तत्र प्रायश्चित्तिः" ( कौसू १३२,१;२ ) इति ।

'अपमित्यमप्रतीत्तम्' इति त्रिभिस्तृचैः उत्तमर्णे[7] मृते सति तत्पुत्राय सगोत्राय वा धनमभिमन्त्र्य ऋणी दद्यात् ।

तथा अनेन तृचत्रयेण द्रव्यमभिमन्त्र्य उत्तमर्णस्य[7] श्मशानभूमौ चतुष्पथे वा निक्षिपेत् ।

तथा तृचत्रयेण द्रव्यमभिमन्त्र्य कक्षेषु निक्षिप्य तान् अग्निना दीपयेत् ।

सूत्रितं हि — "'अपमित्यमप्रतीत्तम्' इत्युत्तमर्णे मृते तदपत्याय प्रयच्छति । सगोत्राय । श्मशाने निवपति । चतुष्पथे च । कक्षान् आदीपयति" (कौसू ४६,३६ ४०) इति ।

तथा अस्य तृचत्रयस्य सवयज्ञेषु पूर्णहोमे विनियोग उक्तः ।

तथा लौकिकाग्निना शालादाहे तच्छान्त्यर्थमनेन तृचत्रयेण व्रीहियवगोधूमादिमिश्रधान्यैः पूर्णाञ्जलिं जुहुयात् । सूत्रितं हि — "अथ यत्रैतद् ग्राम्योऽग्निः शाला

१. द्रिवैत् मै ३,११,१० काठ ३८,५ तैब्रा २,४,४,९; २,६,६,३. २. सिन्धो? पै १६,४९,६. ३. स्नातो मा २०,२०; स्नात्वी मै. काठ. तैब्रा. ४. आपः मा. काठ. तैब्रा २,६,६,४; विश्वान् पै. ५. शुन्धन्तु मा. काठ. तैब्रा २,६,६,४; मुञ्चन्तु मै. पै. तैब्रा २,४,४,९. ६. विष्पंदते S'; विष्यन्दति Bl. ७. उत्तमवर्णे S'.

दहति 'अपमित्यमप्रतीत्तम्' इत्येतैस्त्रिभिः सूक्तैर्मैप्रधान्यस्य पूर्णाञ्जलिं हुत्वा" (कौसू १३२,१) इति।

तथा अग्निष्टोमावसाने गार्हपत्याग्नेररण्योरात्मनि वा समारोपणानन्तरम् उपोष्यमाणां[1] वेदिम् 'अपमित्यम्' इत्यनेन अनुमन्त्रयेत । "'अपमित्यमप्रतीत्तम्' इति वेदिम् उपोष्यमाणाम्" ( वैताश्री २४,१५ ) इति वैतानात् ।

'यद् यामं' चक्रुर्निखनन्तो अग्रे कार्षीवणा अन्नविदो न विद्यया[2] ।
वैवस्वते राजनि तज्जुहोम्यथ यज्ञियं 'मधुमदस्तु नोऽन्नम्'[3] ॥ १ ॥

यत् । यामम् । चक्रुः । निऽखनन्तः । अग्रे । कार्षीवणाः । अन्नऽविदः । न । विद्यया ।
वैवस्वते । राजनि । तत् । जुहोमि । अथ । यज्ञियम् । मधुऽमत् । अस्तु । नः । अन्नम् ॥ १ ॥

कार्षीवणाः कृषिं वनन्ति संभजन्त इति कृषीवनाः शूद्राः । तत्संबन्धिनः कर्मकराः कार्षीवणाः । ते अग्रे पुरा भूमिं निखनन्तः कृपन्तः यद् यामं यमसंबन्धि क्रूरं यत् कर्म चक्रुः कृतवन्तः । तत्र कारणम् आह — न[4] विदो न[4] विद्यया इति । यस्मात् ते विद्यया विशेषज्ञानेन न उपलक्षिताः अत एव न[4] विदः न वेदितारः कार्याकार्यविभागज्ञानशून्याः तस्माद् यामं कर्म कृतवन्त इत्यर्थः । यद्वा अग्रे पुरा भूमिं निखनन्तः असुराः यद् यामं यमसंबन्धि प्राणापहरणनिमित्तं क्रूरं[5] कर्म कृतवन्तः । श्रूयते हि — 'असुरा वै निर्यन्तो देवाना प्राणेषु वलगान् न्यखनन्' ( तै ६,२,११,१ ) इति । तत् कर्म कार्षीवणा अज्ञजनाः न विदो न जानन्ति । विदुरित्युकारस्य व्यत्ययेन अकारः । यतस्ते विद्यया संस्कृतबुद्ध्या न भवन्ति विशेषज्ञानशून्या इत्यर्थः । तत् तत्र अद्भुतशमने न्यूनाधिकपरिमाणोपेतं तत् आज्यमधुतैलादिकं वैवस्वते विवस्वान् आदित्यः तस्य पुत्रे राजनि ईश्वरे यमे जुहोमि हविष्ट्वेन प्रक्षिपामि । अथ अद्भुतशमनानन्तरं यज्ञियम् यज्ञार्हं तद् अन्नं मधुमत् माधुर्योपेतं अस्माकं भोक्तुं योग्यम् अस्तु ।

वैवस्वतः कृणवद् भागधेयं[6] मधुभागो मधुना सं सृजाति ।
मातुर्यदेन इषितं न आगन् यद् वा पिताऽपराद्धो जिहीडे ॥ २ ॥

वैवस्वतः । कृणवत् । भागऽधेयम् । मधुऽभागः । मधुना । सम् । सृजाति । मातुः । यत् । एनः । इषितम् । नः । आऽअगन् । यत् । वा । पिता । अपऽराद्धः । जिहीडे ॥ २ ॥

---

१. उपोष्यमाना S'. २. यथा° ( यदि भा° ) BVC. ३. °मन्नो अस्तु पै १६,४९,७. ४. वैतु. मंत्रा. द्र. ५. °मित्तक्रूरं S' ६. भेषजानि पै १६,४९,८.

( पा ७,४,४७ ) इति धातोस्तकारादेशः । 'दस्ति' ( पा ६,३,१२४ ) इति उपसर्गस्य दीर्घः । ईदृशं यद् ऋणमेव अहम् अस्मि भवामि । ऋणबाहुल्यख्यापनार्थं तादात्म्यव्यपदेशः । यस्माद् एवं तस्माद् बलिना बलवता येन ऋणेन शास्तिुः यमस्य वशे चरामि हे अग्ने त्वत्प्रसादाद् इदम् इदानीं तत् तेन ऋणेन अनृणः ऋणरहितो भवामि । त्वं खलु तान् सर्वान् ऋणोद्भवान् पारलौकिकान् पाशान् बन्धनरज्जुविशेषान् विचृतम् विचर्तितुं मोचयितुं वेत्थ जानासि । शक्तो भवसीत्यर्थः । चृती हिंसाग्रन्थनयोः । अस्मात् तुमर्थे 'शकि णमुल्कमुलौ' ( पा ३,४,१२ ) इति शकेरप्रयोगेपि छान्दसः कमुल्प्रत्ययः ।

इहैव सन्तः प्रति [1]दद्म एनज्जीवा जीवेभ्यो नि हराम एनत् ।
अपमित्य [2]धान्यं१ [3]यज्जघसाहमिदं तदग्ने अनृणो भवामि ॥ २ ॥

इह । एव । सन्तः । प्रति । दद्मः । एनत् । जीवाः । जीवेभ्यः । नि । हरामः । एनत् । अपऽमित्य । धान्यम् । यत् । जघस । अहम् । इदम् । तत् । अग्ने । अनृणः । भवामि ॥

इहैव इह लोक एव सन्तः विद्यमाना एनद् ऋणं प्रति दद्मः[4] उत्तमर्णाय प्रत्यर्पयामः । एतदेव विवृणोति—जीवाः इह लोके जीवन्त एव जीवेभ्यः जीवद्भ्य उत्तमर्णेभ्यो देहत्यागात् पुरैव एनद् ऋणं नि हरामः नितरां नियमेन वा अपाकुर्मः । धान्यं व्रीहियवादिकम् उत्तमर्णसकाशाद् अपमित्य प्रस्थाढकादिसंख्यया परिवृत्य गृहीत्वा यद् अहं जघस भक्षितवान् अस्मि । अपमित्येति । अपपूर्वात् मेङः 'उदीचां माङो व्यतीहारे' ( पा ३,४,१९) इति क्त्वाप्रत्ययः । ल्यबादेशे 'मयतेरिदन्यतरस्याम्' ( पा ६,४,७० ) इति इत्त्वम् । 'ह्रस्वस्य पिति' ( पा ६,१,७१ ) इति तुक् । जघसेति । 'लिट्यन्यतरस्याम्' ( पा २,४,४० ) इति अदेर्लिटि उत्तमैकवचने घस्लादेशः । 'णलुत्तमो वा' ( पा ७,१,९१ ) इति णित्त्वस्य विकल्पनाद् वृद्ध्यभावः । हे अग्ने इदम् इदानीं तत् तस्मात् परकीयधान्यभक्षणात् त्वत्प्रसादेन अनृणः ऋणरहितः ऋणनिमित्तनरकपातरहितो भवामि । अनृण इति । बहुव्रीहौ 'नञ्सुभ्याम्' ( पा ६,२,१७२ ) इति उत्तरपदान्तोदात्तत्वम् ।

अनृणा अस्मिन्ननृणाः [5]परस्मिन् तृतीये[6] लोके अनृणाः स्याम ।
ये देवयानाः [7]पितृयाणाश्च लोकाः सर्वान् पथो अनृणा [8]आ क्षियेम ॥३॥

अनृणाः । अस्मिन् । अनृणाः । परस्मिन् । तृतीये । लोके । अनृणाः । स्याम । ये । देवऽयानाः । पितृऽयानाः । च । लोकाः । सर्वान् । पथः । अनृणाः । आ । क्षियेम ॥३॥

---

१. दध्म॰ B; दध्म एत॰ पै १६,५०,१ [मूको.], ॰एत॰ पै ; तद्यातयामः । जीवा तैब्रा ३,७,९,८ आपश्री १३,२२,५. २. धान्यां३ A; धान्यं३ B,D,S[m],Cs. ३. ॰घसामिमां यस्मादनृण ऋणोतु पै. ४. देनु मंपा. द्र. ५. ॰तस्मिंस्तृ॰ पै १६,५०,२ तैआ २,१५,१ आपश्री. ६. नाके पै. ७. उत पितृयाणाः (नाः पै.) पै. तैब्रा. तैआ. आपश्री. ८. माक्षीयम तैब्रा. तैआ. आपश्री.; सं चरेमहि माश्री २,५,५,२२; भद्रोप? पै.

हे अग्ने त्वत्प्रसादाद् अस्मिन् भूलोके अनृणाः । ऋणम् अत्र लौकिकं वैदिकं च परिगृह्यते। लौकिकं तावद् उत्तमर्णाद् गृहीतं हिरण्यधान्यादिकं प्रसिद्धम्। वैदिकं तु 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते। ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' (तै ६,३,१०,५) इति। तेन सर्वेण ऋणेन रहिताः स्याम भवेम। परस्मिन् लोके स्वर्गादौ एतद्देहपरित्यागेन दिव्यशरीरपरिग्रहेण सुकृतफलभोगस्थानेऽपि अनृणाः स्याम। ऋणादाननिमित्तो भोगप्रतिबन्धस्तत्रापि मा भूद् इत्यर्थः। तृतीये लोके स्वर्गादपि उत्कृष्टे नाकपृष्ठादौ वयम् अनृणा भवेम। अन्येऽपि ये लोकाः देवयानाः देवा एव येषु यान्ति गच्छन्ति ते तथोक्ताः। अधिकरणे ल्युट्। ये च लोकाः पितृयाणाः पितॄणाम् असाधारणभोगभूमयः तान् सर्वान् लोकान् तत्प्राप्त्युपायभूतान् पथः मार्गांश्च। यद्वा लोक्यन्त इति लोकाः पन्थानः देवानेव यैर्यान्ति ते देवयानाः पितॄनेव यैर्यान्ति ते पितृयाणाः। उभयत्र करणे ल्युट्। य एवम् उभये विभिन्ना मार्गाः तान् सर्वान् अनृणाः ऋणप्रतिबन्धरहिताः सन्तः आ क्षियेम अभिगच्छेम। क्षि निवासगत्योः। तुदादित्वात् शः।

इति द्वितीयं सूक्तम्।

'यद्धस्ताभ्याम्' इति तृतीयं सूक्तम्। अस्य विनियोगः पूर्वतृचेन सह उक्तः।

यद्धस्ताभ्यां चकृम[1] किल्बिषाण्यक्षाणां[2] गत्नुमुपलिप्समानाः[3]।
उग्रंपश्ये[4] उग्रजितौ[5] तदद्याप्सरसावनु दत्तामृणं नः[6] ॥ १ ॥

यत्। हस्ताभ्याम्। चकृम। किल्बिषाणि। अक्षाणाम्। गत्नुम्। उपऽलिप्समानाः।
उग्रंपश्ये इत्युग्रम्ऽपश्ये। उग्रऽजितौ। तत्। अद्य। अप्सरसौ। अनु। दत्ताम्। ऋणम्। नः ॥१॥

हस्ताभ्याम्। इन्द्रियाणामुपलक्षणमेतत्। हस्तपादादीन्द्रियैः किल्बिषाणि पापानि यत् चकृम वयं कृतवन्तः स्मः। अक्षाणाम् इन्द्रियाणां गत्नुम् गन्तव्यं शब्दस्पर्शादिविषयम् उपलिप्समानाः उपलब्धुम् अनुभवितुम् इच्छन्तः। यद् ऋणं चकृमेत्यर्थः। गत्नुम् इति। गमेः औणादिकः क्तुप्रत्ययः। 'अनुदात्तोपदेश' (पा ६,४,३७) इत्यादिना अनुनासिकलोपः। उपपूर्वात् लभेः इच्छासनि 'सनि मीमाघुरभलभ' (पा ७,४,५४) इति अच इसादेशः। 'अत्र लोपोऽभ्यासस्य' (पा ७,४,५८)

---

१. चकर्म मै ४,१४,१७ तैब्रा ३,७,१२,२ तैआ २,४,१; चकृमा पै १६,५०,२. २. °पान्यक्षाँ° मै.; किल्बिषा° तैआ. ३. गुन्तु° K,Km,V,W,M; वग्नुमेवज्रिघ्नमांपः मै.; भक्षम-भिलिप्समानाः पै.; वग्नुमुपजिघ्नमानः तैब्रा. तैआ. ४. उग्रं पश्याच मै.; उग्रंपश्या च तैआ.; दूरेपश्या च तैब्रा. ५. राष्ट्रभृच्च मै. तैब्रा. तैआ. ६. तान्यप्सरसाम् (व तैब्रा. तैआ.) नुदत्तान् (मु तैब्रा. तैआ.) णानि मै. तैब्रा. तैआ.

इति अभ्यासलोपः । 'पूर्ववत् सनः' (पा १,३,६२) इति आत्मनेपदम् । हे उग्रंपश्ये तीक्ष्णदर्शने । 'उग्रंपश्येरंमदपाणिंधमाश्च' (पा ३,२,३७) इति खशि निपात्यते । हे उग्रजितौ उग्रान् उद्गूर्णबलान् प्रतिकर्तुमशक्यान् शत्रून् जयत इति उग्रजितौ । तत्रैका उग्रंपश्या । अपरा उग्रजित् । युगपदधिकरणवाचित्वाद् वृक्षौ च वृक्षौ च वृक्षौ इतिवद् उभयत्रापि द्विवचनम् । एतन्नामानौ अप्सरसौ अद्य इदानीं नः अस्माकं तत् प्रागुदीरितम् ऋणम् अनु दत्ताम् आनुकूल्येन उत्तमर्णेभ्यः प्रयच्छतम् ।

उग्रंपश्ये राष्ट्रभृत् किल्बिषाणि यदक्षवृत्तमनु दत्तं न एतत् ।
ऋणान्नो नर्णमेर्त्समानो यमस्य लोके अधिरज्जुरायत् ॥ २ ॥

उग्रंपश्ये इत्युग्रम्ऽपश्ये । राष्ट्रऽभृत् । किल्बिषाणि । यत् । अक्षऽवृत्तम् । अनु । दत्तम् । नः । एतत् । ऋणात् । नः । न । ऋणम् । एर्त्समानः । यमस्य । लोके । अधिऽरज्जुः । आ । अयत् ॥ २ ॥

हे उग्रंपश्ये । राष्ट्रभृतः पृथगुपादानाद् अत्र एकवचनान्तमेतत्[6] । हे राष्ट्रभृत् राष्ट्रं राज्यं बिभर्ति पोषयतीति राष्ट्रभृत् । एतत्संज्ञे अप्सरसौ यानि अस्माभिः कृतानि किल्बिषाणि पापानि यच्च पापम् अक्षवृत्तम् अक्षेषु इन्द्रियेषु निषिद्धानिषिद्धविभागपरिहारेण स्वस्वविषयप्रवृत्तेषु निष्पन्नम् । 'तत्पुरुषे तुल्यार्थ' (पा ६,२,२) इत्यादिना सप्तमीपूर्वपदप्रकृतिस्वरत्वम् । नः अस्माकम् ऋणभूतम् एतत् सर्वं पापम् अनु दत्तम् आनुकूल्येन यथास्मान् न बाधते तथा दत्तम् प्रयच्छतम् । निवारयतमित्यर्थः । अनुदानप्रकारमाह ऋणान्न इति । ऋणान्[6] ऋणिनः । मत्वर्थीयः अकारः । अनपाकृतिनो[10] नः अस्मान् । यद्वा ऋणात् इति पदच्छेदः । भावप्रधानो निर्देशः । ऋणित्वाद्धेतोः नः अस्मान् यमस्य पुण्यपापानुरूपं दण्डयितुर्वैवस्य संबन्धिनि लोके स्थाने उत्तमर्णः ऋणम् एत्समानः[7] ऋणं ग्रहीतुमभित इच्छन् अधिरज्जुः अस्मद्ग्रहणाय पाशहस्तो भूत्वा न आयत् न प्राप्नोति । तथा अनुदत्तम् इति संबन्धः । अय गतौ । व्यत्ययेन परस्मैपदम् ।

यस्मा ऋणं यस्य जायामुपैमि यं याचमानो अभ्यैमि देवाः ।
ते वाचं वादिषुर्मोत्तरां मद्देवपत्नी अप्सरसावधीतम् ॥ ३ ॥

---

१. वेतु. मंपा. द्र. २. चेविव° S'. ३. पद्वेद् मै ४,१४,१७. ४. किल्बिषा° तैआ. २,४,१. °षानि मै. ५. एतत् मै. तैआ नस्तत् पै १६,५०,४. ६. नेम्न ऋणानृणं वानीप्समानो मै.; नेर्म ऋणानृणवा इत्संमानो तैआ.; नर्णं यद् यच्छमानो पै. ७. निधिरज्जराय मै. अधिरज्जुरायं तैआ. ८ वेप१, पृ १०६३ d द्र. ९. वेतु. पपा. द्र. १०. अनपाकृतिनो S'. ११. वाजिन् वाजिभिर् ? मो° पै १६,५०,५.

यस्मै । ऋणम् । यस्य । जायाम् । उपऽऐमि[1] । यम् । याचमानः । अभिऽऐमि । देवाः । ते ।
वाचम् । वादिषुः । मा[2] । उत्तराम् । मत् । देवपत्नी इति देवऽपत्नी । अप्सरसौ[3] । अधि । इतम् ॥३॥

यस्मै उत्तमर्णाय वस्त्रहिरण्यधान्यादिकम् ऋणम् अहं धारयामि। धारयतेः प्रयोगाभावेऽपि अर्थसत्तां द्योतयितुं 'धारेरुत्तमर्णः' (पा १,४,३५) इति चतुर्थी। यस्य पुरुषस्य जायाम् भार्याम् उपैमि कामुकः सन् उपगच्छामि । तथा यं पुरुषं स्वामिनम् उत्तमर्णं वा याचमानः इष्टं धनं प्रार्थयमानः हे देवाः अभ्येमि[4] अभिगच्छामि । ते सर्वे मत् मत्तः उत्तराम् उत्कृष्टतरां वाचं प्रतिकूलां मा वादिषुः मा ब्रुवन्तु । हे देवपत्नी देवपत्न्यौ देवानां पत्न्यौ जायाभूते अप्सरसौ अधीतम् मद्विज्ञापनं चित्तेऽवधारयतम्[5] । इक् स्मरणे ।

यददीव्यन्नृणमहं कृणोम्यदास्यन्नग्न उत संगृणामि[6] ।
वैश्वानरो नो अधिपा वसिष्ठ उदिन्नयाति[7] सुकृतस्य लोकम् ॥ १ ॥

यत् । अदीव्यन् । ऋणम् । अहम् । कृणोमि । अदास्यन् । अग्ने । उत । सम्ऽगृणामि ।
वैश्वानरः । नः । अधिऽपाः । वसिष्ठः । उत् । इत् । नयाति । सुऽकृतस्य । लोकम् ॥ १ ॥

अदीव्यन् व्यवहर्तुमशक्नुवन् यद् ऋणम् अहं कृणोमि करोमि हे अग्ने अदास्यन् पुनः प्रदानमकरिष्यन् । उतशब्दः अप्यर्थे । संगृणामि दास्यामीति केवलं प्रतिजानामि । गॄ शब्दे । प्वादित्वात् ह्रस्वः । वैश्वानरः विश्वनरहितः सर्वेषां प्राणिनां हितकारी अत एव अधिपाः अधिकं पालयिता वसिष्ठः वासयितृतमः एवंभूतोऽग्निः सुकृतस्य पुण्यकर्मणः फलभूतं लोकम् नः अस्मान् उन्नयाति उन्नयतु ऊर्ध्वं प्रापयतु। इत्शब्दः अवधारणे। स्वयमेव नयत्वित्यर्थः।

वैश्वानराय प्रति वेदयामि[8] यद्यृणं[9] संगरो देवतासु ।
स एतान् पाशान् विचृतं[10] वेद[11] सर्वानथ पक्वेन सह सं भवेम ॥ २ ॥

वैश्वानराय । प्रति । वेदयामि । यदि । ऋणम् । सम्ऽगरः । देवतासु ।
सः । एतान् । पाशान् । विऽचृतम्[12] । वेद । सर्वान् । अथ । पक्वेन । सह । सम् । भवेम ॥२॥

वैश्वानराय विश्वनरहिताय अग्नये प्रति वेदयामि विज्ञापयामि। किं तद् इत्याह- यदृणम् इति । यदिशब्दो यच्छब्दार्थः । यद् ऋणं लौकिकम् देवतासु देवताविषये

---

१. °एमि Cp. २. मा P,J,W,M. ३. अप्सरसौ P. ४. वेतु. मेधा. द्र.
५. °तम् अवधारयतम् S'. ६. चकार। यद्वाऽदास्यन्त्संजुगारा जनेभ्यः तैब्रा ३,७,१२,३; बभूवादित्सन्वा संजगर जनेभ्यः तैआ २,४,१. ७. उरुं नयातु पै १६,५०,६. ८. वेदयामो तैआ २,६,१. ९. यदनृणं पै १६,५०,८; यदीमृणं तैआ. १०. प्रमुचन्[म्] तैआ.
११. प्रवेद तैआ. १२. चृतम् P[4].

यः संगरः अवश्यकर्तव्यतया प्रतिज्ञा 'ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' ( तै ६,३,१०,५ ) इति, तद्धि वैदिकमृणम् । तत् सर्वं वैश्वानराय निवेदयामी-त्यर्थः । स तादृशो वैश्वानरोऽग्निः एतान् लौकिकवैदिकऋणात्मकान् सर्वान् पाशान् पाश-वद्बन्धकान् विचृतम् विचर्तितुं विश्लेषयितुं वेद जानाति । विचृतम् इति । विपूर्वाच्चृतेः तुमर्थे कमुल्प्रत्ययः । अथ ऋणरूपपाशच्छेदनानन्तरं पक्केन परिपक्केन स्वर्गादिफलेन सह वयं सं भवेम संगच्छेमहि ।

वैश्वानरः 'पवित्रा मा पुनातु' यत् संगरमभिधावाम्याशाम्[1] ।
अनाजानन् मनसा याचमानो यत् 'तत्रैनो अप[2]' तत् सुवामि[3] ॥ ३ ॥

वैश्वानरः । पवित्रा । मा । पुनातु । यत् । सम्ऽगरम् । अभिऽधावामि । आऽशाम् ।
अनाजानन् । मनसा । याचमानः । यत् । तत्र । एनः[5] । अप । तत् । सुवामि ॥ ३ ॥

पवित्रा शोधयिता सर्वभावानां शुद्धेः कर्ता वैश्वानरोऽग्निः मा मां पुनातु पूतं शुद्धं करोतु । यत् यस्माद्धेतोः संगरम् प्रतिज्ञाम् यक्ष्ये दास्यामीत्येवंरूपाम् ऋणापाकरण-विषयां केवलम् अभिधावानि[6] आभिमुख्येन प्राप्नवानि तथा आशाम् देवादीनामभिला-षमेव उत्पादयामि न किंचिद् यागादिरूपमृणापाकरणं करोमि अनाजानन् हिता-हितविभागमजानन् प्रत्युत मनसा अन्तःकरणेन ऐहिकमेव सुखं याचमानः प्रार्थय-मानः । उभयत्र 'लक्षणहेत्वोः क्रियायाः' ( पा ३,२,१२६ ) इति हेतौ शतृप्रत्ययः । अज्ञानाद् विपर्ययज्ञानाच्च हेतोरित्यर्थः । तत्र तथाविधे अनृतकरणे यद् एनः पापम् उत्पन्नमस्ति तद् अप सुवामि अस्मत्तोऽपगमयामि । षू प्रेरणे । तुदादित्वात् शः ।

इति तृतीयं सूक्तम् ।

'यदन्तरिक्षम्' इति चतुर्थं सूक्तम् । तत्र 'विषाणा पाशान्' इति चतुर्ऋचेन दारुलोहरज्ज्वादिबन्धनमोचनार्थं चर्ममयलोहमयादिकं पूर्वबन्धनरज्जुसदृशं कृत्वा संपात्य अभिमन्त्रयेत । सूत्रितं हि—" 'विषाणा पाशान्' (अ ६,१२१)"इत्युन्मोचनम् । प्रतिरूपं संपातवन्तं करोति । वाचा बद्धाय भूमिपरिलेखम्" ( कौसू ५२,३;४ ) इति ।

यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं[7] पितरं वा जिहिंसिम ।
अयं तस्माद् गार्हपत्यो नो अग्निरुदिन्नयाति सुकृतस्य लोकम् ॥ १ ॥

---

१. पा ( पं तैआ. ) वयाग्रः पवित्रैर् पै १६,५०,७ तैआ २,६,१. २. अग्रेनो तैआ. ३. भत्र तैआ. ४. धिस्यामि पै. ५. एनः P,J. ६. वैतु. मंपा. द्र. ७. °धन-मति° Bl. ८. यमन्तरं तैआ ३,७,१२,४.

यत् । अन्तरिक्षम् । पृथिवीम् । उत । द्याम् । यत् । मातरम् । पितरम् । वा । जिहिंसिम । अयम् । तस्मात् । गार्हऽपत्यः । नः । अग्निः । उत् । इत् । नयाति । सुऽकृतस्य । लोकम् ॥

अन्तरिक्षादिशब्दैर्लोकवचनैस्तत्रत्या जना लक्ष्यन्ते । अन्तरिक्षम् अन्तरिक्षलोकस्थान् जनान् पृथिवीम् भूलोकं तत्रत्यान् जनान् । उतशब्दः अप्यर्थः समुच्चये । द्याम् दिवं द्युलोकस्थांश्च जनान् यज्जिहिंसिम । तत्तद्विपर्यहिंसया यत् पापं कृतमित्यर्थः । तथा मातरम् जनयित्रीं पितरम् जनकम् । वाशब्दः समुच्चये । यत् जिहिंसिम । तयोः प्रतिकूलाचरणलक्षणाद्धिंसनाद् यत् पापम् उपार्जितमित्यर्थः । हिसि हिंसायाम् । अस्मात् लिटि रूपम् । तस्माद् उभयविधात् पापाद् अयं गार्हपत्यः गृहपतिना संयुक्तः अस्माभिः परिचर्यमाणोऽग्निः नः अस्मान् सुकृतस्य लोकम् इत् सुकृतपरिपाकस्य लोकं स्वर्गमेव उन्नयाति उन्नयतु उद्गमयतु । पापाद् उत्तारयत्वित्यर्थः । गार्हपत्य इति । 'गृहपतिना संयुक्ते ञ्यः' ( पा ४,४,९० ) इति ञ्यप्रत्ययः ।

भूमिर्माताऽदितिर्नो जनित्रं 'भ्राताऽन्तरिक्षमभिशस्त्या नः'[1] ।
द्यौर्नः पिता 'पित्र्याच्छं भवाति जामिमृत्वा माव पत्सि'[2] लोकात्[3] ॥ २ ॥

भूमिः । माता । अदितिः । नः । जनित्रम् । भ्राता । अन्तरिक्षम् । अभिऽशस्त्याः । नः । द्यौः । नः । पिता । पित्र्यात् । शम् । भवाति । जामिम् । ऋत्वा । मा[4] । अव । पत्सि । लोकात्[3] ॥

नः अस्माकं भूमिः पृथिवीदेवता माता जननी । अदितिः अखण्डनीया अदीना वा देवमाता जनित्रम् जननकारणम् । अन्तरिक्षम् अवकाशात्मकोऽन्तरिक्षलोकः भ्राता सर्वदा सहभावित्वात् । अतो न[5] अस्माकं मात्रादिकृतं पापमस्तीत्यर्थः । ते सर्वे अभिशस्त्या अभिशंसनाद् मिथ्यापवादजनितात् पापाद् नः अस्मान् । रक्षन्त्विति शेषः । तथा नः अस्माकं द्यौः द्युलोकः पिता वृष्ट्यादिप्रदानेन रेतःसेकस्य कर्ता । स च पित्र्यात् पितुरागताद् दोषाद् ऋणादानादिरूपात् । 'पितुर्यच्च' ( पा ४,३,७९ ) इति यत्प्रत्ययः । शं भवाति सुखम् उत्पादयतु । पित्र्यमपि दोषं निवर्त्य अस्मान् सुखिनः करोत्वित्यर्थः । अहं च जामिं[6] व्यर्थमेव ऋत्वा[6] प्राणान् परित्यज्य परलोकहितं यागहोमदानादिकम् अननुष्ठाय लोकात् लोकनीयात् स्वर्गादेः मा अव पत्सि अवपन्नः अधोगतिर्मा भूवम् । यद्वा जामिम् इति पदच्छेदः । जामिर्भगिनी तद्वन्निषिद्धा स्त्री ताम् ऋत्वा गत्वा निषिद्धाचरणेन अवपन्नो मा भूवम् इत्यर्थः । पद गतौ । माङि लुङि उत्तमैकवचने रूपम् ।

---

१. °शस्त एनः तैआ २,६,२. २. पितृयाच्छं भवासि जामिमित्वा मा विविस्ति तैआ. ३. लोकान् D,K,Cp. ४. मा P,P², J,Cp,WM. ५. नः शंपा. ६. वैतु. मंपा. द.

[1]यत्रा सुहार्दः[1] सुकृतो मदन्ति[2] विहाय रोगं तन्वः[3] स्वायाः[4] ।
[5]अश्लोणा अङ्गैरह्रुताः[5] स्वर्गे तत्र[6] पश्येम पितरौ[7] च पुत्रान्[8] ॥ ३ ॥

यत्र । सुऽहार्दः । सुऽकृतः । मदन्ति । विऽहाय । रोगम् । तन्वः । स्वायाः ।
अश्लोणाः । अङ्गैः । अह्रुताः । स्वःऽगे । तत्र । पश्येम । पितरौ । च । पुत्रान् ॥ ३ ॥

यत्र **यस्मिन्नुत्तमे स्वर्गादिलोके** सुहार्दः **शोभनहृदयाः** सुकृतः **शोभनं यागादिकं कृतवन्तो जनाः** स्वायाः **स्वकीयायाः** तन्वाः[6] **शरीरस्य संबन्धिनं** रोगम् **पापफलभूतं ज्वरादिकं** विहाय **परित्यज्य** मदन्ति **दुःखासंस्पृष्टकेवलसुखानुभवेन "माद्यन्ति वयमपि"** अङ्गैः **अवयवैर्हस्तपादादिभिः** अश्रोणाः[6] **कुष्ठादिरोगरहिता** अह्रुताः **अकुटिलगतयः सन्तः** तत्र **पुण्यकृद्भिः प्राप्ये** स्वर्गे **लोके** पितरौ **पितरं मातरं च** । 'पिता मात्रा' (पा १,२,७०) इति पितुः शेषः । तथा **आत्मीयान्** पुत्रांश्च पश्येम **साक्षात्कुर्याम** ।

विषाणा पाशान् वि ष्याऽध्यस्मद् य उत्तमा अधमा वारुणा ये ।
दुष्वप्न्यं[11] दुरितं [12]नि ष्वास्मदथ[13] गच्छेम सुकृतस्य लोकम् ॥ १ ॥

विऽसाना । पाशान् । वि । स्य । अधि । अस्मत् । ये । उत्ऽतमाः । अधमाः । वारुणाः । ये ।
दुःऽस्वप्न्यम् । दुःऽइतम् । निः । स्व । अस्मत् । अथ । गच्छेम । सुऽकृतस्य । लोकम् ॥ १ ॥

हे **बन्धनाभिमानिनि निर्ऋतिदेवते** पाशान् **अस्मदवयवगतान् बन्धनरज्जुविशेषान्** विषाणा **विमुञ्चती** अस्मत् **अस्मत्तः** अधि **उपरि** वि ष्य **विमुञ्च** । षो अन्तकर्मणि । 'ओतः श्यनि' (पा ७,३,७१) इति ओकारलोपः । पाशा **विशेष्यन्ते** — ये पाशा उत्तमा **उत्कृष्टा ऊर्ध्वकायाश्रिताः** ये च अधमाः **निकृष्टा अधःकायाश्रिता** ये च वारुणाः **वरुणसंबन्धिनः सर्वकायाश्रिताः पाशाः** । 'उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय' (ऋ १,२४,१५) इति हि **निगमः** । **इत्थम् अनेकभेदभिन्नान् पाशान् अस्मत्तो विमुञ्चेत्यर्थः** । **अपि च** दुःष्वप्न्यम् **दुष्टस्वप्नदर्शनजनितं** दुरितं **पापम्** अस्मत् **अस्मत्तो** निः ष्व[13] **निर्गमय**। षू **प्रेरणे**। तुदादित्वात् शः। 'तन्वादीनां छन्दसि बहुलम्' (पावा ६,४,७७) इति यण् । अथ **पाशविमोचनानन्तरं** सुकृतस्य **पुण्यस्य फलभूतं** लोकम् **इमं च अमुं च** गच्छेम **प्राप्नुयाम** ।

यद् दारुणि[14] बध्यसे यच्च रज्ज्वां[15] यद् भूम्यां बध्यसे यच्च वाचा ।
अयं तस्माद् गार्हपत्यो नो अग्निरुदिन्नयाति सुकृतस्य लोकम् ॥ २ ॥

---

१. यत्रे सुहार्दः तैआ २,६,२. २ मदन्ते तैआ. ३. तन्वाः३ A,B,S,Cs, P².M,I,O, सा.; तन्वां३ तैआ. ४. स्वायाम् तैआ. ५. °णाङ्गैरह्रुता° तैआ. ६. तत्रा पै १६,५१,१. ७. पितरं तैआ. ८. पुत्रं तैआ. ९. वैतु. मंपा. द्र. १०. 'न्वि तथा यय° S'. ११. दुःप्व° Cs १२. निःप्वा° O,RW. १३. निष्व S'. १४. दारुणा पै १६,५१,२. १५. रज्वां मूको. (तु. शंपा.); रज्ज्वा पै.

यत् । दारुणि । वुध्यसे । यत् । च । रज्ज्वाम्[1] । यत् । भूम्याम् । वुध्यसे । यत् । च । वाचा ।
अयम् । तस्मात् । गार्हऽपत्यः । नः । अग्निः । उत् । इत् । नयाति । सुऽकृतस्य । लोकम् ॥२॥

हे पुरुष त्वं दारुणि काष्ठविशेषे यद् बध्यसे । यच्च रज्ज्वां बध्यसे । भूम्यां वा गर्तरूपायां यद् बध्यसे । वाचा राजाज्ञाप्रकाशिन्या यच्च बध्यसे । तस्मात् सर्वस्माद् बन्धनाद् अयम् अस्मदीयो गार्हपत्योऽग्निः त्वाम् उत्तारयत्वित्यर्थः । शेषं पूर्ववत् ।

'उद॑गातां भग॑वती[2] वि॒चृतौ॒ नाम॒ तार॑के ।
प्रेहामृ॑तस्य यच्छतां प्रैतु[3] बद्धकमोच॑नम् ॥ ३ ॥

उत् । अ॒गा॒ता॒म् । भग॑वती इति॒ भग॑ऽवती । वि॒ऽचृतौ॑[4] । नाम॑ । तार॑के इति॑ ।
प्र । इ॒ह । अ॒मृत॑स्य । य॒च्छ॒ता॒म् । प्र । ए॒तु । ब॒द्ध॒क॒ऽमोच॑नम् ॥ ३ ॥

भगवती भाग्ययुक्ते विचृतौ नाम विचृन्नामनी तारके नक्षत्रे उदगाताम् उदयं प्राप्तवती । 'विचृतौ नक्षत्रं पितरो देवता' (तै ४,४,१०,२) इति श्रुतेः मूलनक्षत्रस्य विचृत् इति संज्ञा । अधिष्ठानद्वयापेक्षया द्विवचनम् । इह अस्मिन् बद्धे पुरुषे अमृतस्य । कर्मणि षष्ठी । अमृतम् अमरणं प्र यच्छताम् । बद्धकमोचनम् कुत्सितं निगडादिभिर्बद्धः बद्धकः । कुत्सायां कन्प्रत्ययः । तस्य मोचनं बन्धान्मोक्षः प्रैतु प्राप्नोतु ।

वि जि॑हीष्व[5] लो॒कं कृ॑णु[5] ब॒न्धान्मु॑ञ्चासि॒ बद्ध॑कम् ।
योन्या॑[6] इव॒ प्रच्यु॑तो॒ गर्भः॑ प॒थः सर्वां॒ अनु॑ क्षिय[7] ॥ ४ ॥

वि । जि॒ही॒ष्व॒ । लो॒कम् । कृ॒णु॒ । ब॒न्धात् । मु॒ञ्चा॒सि॒ । ब॒द्ध॑कम् ।
योन्याः॑ऽइव । प्रऽच्यु॑तः । गर्भः॑ । प॒थः । सर्वा॑न् । अनु॑ । क्षि॒य॒ ॥ ४ ॥

हे बन्धनाभिमानिदेव त्वं वि जिहीष्व विविधं गच्छ । ओहाङ् गतौ । शपः श्लुः । 'भृञामित्' (पा ७,४,७६) इति अभ्यासस्य इत्त्वम् । लोकं स्थानम् अस्य पुरुषस्य बन्धनार्तस्य कृणु कुरु । तस्माद् बन्धात् बन्धनाद् बद्धकम् इमं पुरुषं मुञ्चासि मुञ्च । हे पुरुष बन्धनमोक्षानन्तरं योन्याः प्रच्युतः मातुर्गर्भाशयाद् बहिर्विनिर्गतो गर्भ इव स यथा इतस्ततः अनिरुद्धगतिः प्रचलति एवं सर्वान् पथो मार्गान् अनु क्षिय अनुगच्छ । यथेष्टं वर्तस्वेत्यर्थः । क्षि निवासगत्योः ।

इति चतुर्थं सूक्तम् ।

---

१. रज्ज्वाम् मूको (तु. शंपा.). २. अमू (°मी तैआ.) ये दिवि सुभगे अ ३,७,४ तैआ २,६,१. ३. मुतद् तैआ. ४. °चृतौ P². ५. °हीष्व लोकान् कृधि तैआ. ६. योनेर् तैआ. ७. गच्छ पै १६,५१,४; व्य तैआ.

'एतं भागम्' 'एतं सधस्थाः' इति द्वाभ्यां सवयज्ञेषु संस्थितहोमान् जुहुयात्। तदनुमन्त्रणं च कुर्यात्। सूत्रितं हि—"'एतं भागम्', 'एतं सधस्थाः' (अ ६,१२३), 'उलूखले' (अ १०,९,२६) इति संस्थितहोमान्[1]। आवपते। अनुमन्त्रणं च" (कौसू. ६३,२९-३१) इति।

तथा अग्निष्टोमे हविर्धाने स्वस्वचमससमीपे चमसिभिः स्वकीयान् पितॄन् उद्दिश्य पुरोडाशशकलेषु दत्तेषु सत्सु आभ्याम् अनुमन्त्रयेत। उक्तं वैताने—'हविर्धाने यथाचमसं दक्षिणतः स्वेभ्य उपासनेभ्यस्त्रींस्त्रीन् पुरोडाशसंवर्तान् 'एतत् ते प्रततामह' (अ १८,४,७५) इति निपृणन्ति। 'अत्र पितरः' (कौसू. ८८,१८) इति जपित्वा 'एतं भागम्', 'एतं सधस्थाः', 'श्येनो नृचक्षाः' (अ ७,४२,२) इत्यनुमन्त्रयते" (वैताश्रौ २९,२२,२३) इति।

अत्र 'एतं सधस्थाः' (अ ६,१२३,१;२) इति द्वाभ्यां ब्रह्मा वैश्वकर्मणहोमान् अनुमन्त्रयेत। "'एतं सधस्थाः' इति द्वे। 'येना सहस्रम्' (अ ९,५,१७) इति वैश्वकर्मणहोमान्" (वैताश्रौ २९,२२;२३) इति वैतानसूत्रात्।

'शुद्धाः पूताः' इत्यनया सवयज्ञेषु ऋत्विजां हस्तप्रक्षालनार्थमुदकं दद्यात्। सवयज्ञान् प्रक्रम्य सूत्रितम्—"चतुर आर्षेयान् भृग्वङ्गिरोविद उपसादयति। 'शुद्धाः पूताः' इति मन्त्रोक्तम्" (कौसू. ६३,३;४) इति।

'देवाः पितरः' इति तिस्रः (अ ६,१२३,३-५) यजमानस्य आर्षेयप्रवरणे वाचयेत्। "प्रवरे प्रव्रियमाणे वाचयेद् 'देवाः पितरः' इति तिस्रः" (वैताश्रौ २,१५) इति वैतानसूत्रात्।

'दिवो नु मां बृहतः' इति तृचेन आकाशोदकप्लावनदोषशान्त्यर्थमुदकम् अभिमन्त्र्य शरीरं प्रक्षालयेत्।

तथा तत्रैव कर्मणि अनेन तैलं [2]शान्त्योषधीर्गन्धं हिरण्यं वासो वा अभिमन्त्र्य तैः शरीरमुद्वर्तयेत्।

सूत्रितं हि—"'दिवो नु माम्' (अ ६,१२४) इति वियद्बिन्दून्[3] प्रक्षालयति। मन्त्रोक्तैः स्फुगति" (कौसू. ४६,४१;४२) इति।

[4]एतं भागं परि ददामि विद्वान् विश्वकर्मन्[5] प्रथमजा ऋतस्य।
अस्माभिर्दत्तं जरसः परस्तादच्छिन्नं तन्तुमनु सं तरेम[6] ॥ १ ॥

एतम्। भागम्। परि। ददामि। विद्वान्। विश्वऽकर्मन्। प्रथमऽजाः। ऋतस्य। अस्माभिः। दत्तम्। जरसः। परस्तात्। अच्छिन्नम्। तन्तुम्। अनु। सम्। तरेम ॥

---

१. °होमाः Bl. २. °शांत्यौष° S'. ३. वीप्रवि° Bl. ४. तं प्रजानन् प्रति गृह्णाति ते १९,५१,५; स प्रजानन् प्रतिगृभ्णीत तैआ ३,६,१. ५. बृहस्पतिः पै.; प्रजापतिः तैआ. ६. चरेम तैआ.

हे विश्वकर्मन् विश्वं कृत्स्नं जगत् कर्म कर्तव्यं यस्य स विश्वकर्मा । एतत्संज्ञ हे देव यस्त्वम् ऋतस्य सत्यस्य परब्रह्मणः प्रथमजाः प्रथमं जातः उत्पन्नः । स प्रथमशरीरी हिरण्यगर्भः सर्वजगत्स्रष्टेत्यर्थः । 'जनसनखनक्रमगमो विट्' (पा ३,२,६७)। 'विड्वनोरनुनासिकस्यात्' (पा ६,४,४१) इति आत्त्वम् । ईदृशस्य तव माहात्म्यं विद्वान् जानन् एतं भागम् पक्वम् अन्नं हविर्भागं वा परि ददामि रक्षणार्थं तुभ्यं प्रयच्छामि। एवम् इह लोके अस्माभिस्तुभ्यं दत्तम् इमं भागं जरसः परस्तात् जराया ऊर्ध्वम् एतद्देहपातोत्तरकालम्। जरसः परस्ताद् इति वदता जरापर्यन्तमायुषो दैर्घ्यं प्रार्थितम्। जीर्णमिमं देहं परित्यज्य अच्छिन्नम् अविच्छिन्नं तन्तुम् । तायते कुलं विस्तार्यते अनेनेति तन्तुः पुत्रपौत्रादिलक्षणः संतानः । तम् अनु अनुप्रविश्य सं चरेम[1] संप्राप्नुयाम । एतदेव हि संसारिणः पुरुषस्य अमृतत्वम् । तथा च मन्त्रवर्णः — 'प्रजामनु प्रजायसे तदु ते मर्त्याऽमृतम्' (तैब्रा १,५,५,६) इति, 'प्रजाभिरग्ने अमृतत्वमश्याम्' (ऋ ५,४,१०) इति च ।

तुतं तन्तुमन्वेके[2] तरन्ति[3] येषां दुत्तं [4]पित्र्यमायनेन[4] ।
अबुन्ध्वेके ददतः[5] प्रयच्छन्तो[6] दातुं चेच्छिक्षान्त्स[7] स्वुर्ग एव[8] ॥ २ ॥

तुतम् । तन्तुम् । अनु । एके । तरन्ति । येषाम् । दुत्तम् । पित्र्यम् । आऽअयनेन ।
अबुन्धु । एके । ददतः । प्रऽयच्छन्तः । दातुम् । चु । इत् । शिक्षान्[9] । सः । स्वुःऽगः । एव ॥

एके केचन जना ऋणिनः सन्तः देहपातोत्तरकालं ततम् विस्तीर्णं तन्तुम् पुत्रपौत्रादिलक्षणं संतानम् अनु अनुलक्ष्य तरन्ति ऋणम् अतिक्रामन्ति। पुत्रादिभिस्तस्य पितृगतस्य ऋणस्य अपाकरणात्। येषां जनानाम् ऋणवतां पित्र्यम् पितुरागतमपि ऋणम् आयनेन आगमनेन पुत्रपौत्रादिषु प्रवेशनेन दत्तम् उत्तमर्णेभ्यः प्रत्यर्पितं भवति। ते तरन्तीति पूर्वत्र संबन्धः । अस्त्वेवं पुत्रपौत्रादिसंतानवताम् । येषां तु तदभावः कथं ते अनृणाः स्युरिति तत्राह — अबन्ध्वेके इति । अबन्धु । 'सुपां सुलुक्°' (पा ७,१,३९) इति जसो लुक् । अबन्धवः । बध्नाति "कुलं संततम्"[10] अविच्छिन्नं करोतीति बन्धुः पुत्रपौत्रादिलक्षणः संतानः । तद्रहिता एके जना ददतः । चतुर्थ्यर्थे षष्ठी । हिरण्यधान्यादिकं ददते उत्तमर्णाय पितृकृतम् आत्मकृतं चेति उभयविधमपि ऋणं प्रयच्छन्तः इह लोक एव प्रत्यर्पयन्तो दातुं चेत् शिक्षान् सर्वात्मना प्रत्यर्पयितुं यदि शक्नुवन्ति शक्त्यभावेपि तदिच्छामात्रं वा विद्यते स एव तेषां स्वर्गः । तावन्मात्रेणापि सर्वम् ऋणम् अपाकृत्य[11] स्वर्गभाजो भवन्तीत्यर्थः । शिक्षान् इति । शक्लृ शक्तौ इत्यस्मात्

---

१. वैतु. मंपा. द्र.  २. °मत्येके पै १६,५१,६.  ३. तरन्तु (चरन्तु मूको.) पै.; अनुसंचरन्ति तैआ २,६,२.  ४. आयनं पित्र्येण पै.; पित्र्यमायनवत् तैआ.  ५. जनन्तः पै.  ६. प्रयच्छान् पै.; प्रयच्छाद् तैआ.  ७. चेच्छिक्षा° > चेच्छिक्षा° A,B[b]; चेच्छिक्षा° R; ते शिक्षान् स पै.; चेच्छकनुवांसः तैआ.  ८. एषाम् पै. तैआ.  ९. शिक्षान् P,J.  १०. कुलसं° S'.  ११. उपा° S'.

सनि 'सनि मीमा' ( पा ७,४,५४ ) इत्यादिना अचः स्थाने इस् आदेशः । 'अत्र लोपोऽभ्यासस्य' ( पा ७,४,५८ ) इति अभ्यासलोपः । लेटि आडागमः । 'इतश्च लोपः परस्मैपदेषु' ( पा ३,४,९७ ) इति इकारलोपः । संयोगान्तलोपे तस्य असिद्धत्वात् नलोपाभावः ।

'अ॒न्वा॒र॑भेथामनु॒संर॑भेथामे॒तं लो॒कं श्र॒द्दधा॑नाः सचन्ते ।
यद्वां॑ प॒क्वं' परि॑विष्टम॒ग्नौ' 'तस्य॑ गु॒प्तये॑ दम्पती॒ सं श्र॑येथाम्' ॥ ३ ॥

अ॒नु॒ऽआर॑भेथाम् । अ॒नु॒ऽसंर॑भेथाम् । ए॒तम् । लो॒कम् । श्र॒त्ऽदधा॑नाः । स॒च॒न्ते॒ । यत् । वा॒म् । प॒क्वम् । परि॑ऽविष्टम् । अ॒ग्नौ । तस्य॑ । गुप्त॑ये । दंप॑ती॒ इति॒ दम्ऽप॑ती । सम् । श्र॒य॒था॒म् ॥

हे दंपती जायापती अन्वारभेथाम् परलोकहितं सत्कर्म अनुलक्ष्य तस्य आरम्भः क्रियताम् । अनुसंरभेथाम् आरम्भानन्तरं तत्रैव संरब्धौ संयुक्तौ भवताम् । सत्कर्मणाम् अग्निहोत्रादीनाम् अनारम्भः आरब्धानां च तेषां परित्यागश्च सर्वथा न युक्त इत्यर्थः । एतम् कर्मफलभूतं लोकं स्वर्गादिकं श्रद्दधानाः श्रद्धावन्तः आस्तिक्यबुद्धियुक्ताः कर्मानुष्ठानतत्परा जनाः सचन्ते सेवन्ते । " 'सचस्वा नः स्वस्तये' (ऋ १,१,९) सेवस्व नः स्वस्तये" इति हि निरुक्तम् ( नि ३,२१ ) । यस्माद् एवं तस्मात् हे दंपती युवामपि श्रद्दधानौ भवतम् इत्यर्थः । वा युवाभ्यामर्थे यत् पक्वम् पाकेन संस्कृतं स्थालीपाकादिलक्षणम् अन्नम् । 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ' (पा ८,१,२०) इति चतुर्थीद्विवचनान्तस्य वाम् आदेशः । पक्वम् इति । पचेरुत्तरस्य निष्ठातकारस्य 'पचो वः' ( पा ८,२,५२ ) इति वत्वम् । यद्वा युवयोः संबन्धि ब्राह्मणेभ्यो देयं पक्वम् अन्नम् । एतच्च स्मृतिविहितस्य वापीकूपतटाकनिर्माणादेः पूर्तस्य उपलक्षणम् । यच्च अन्नम् अग्नौ परिविष्टम् हवीरूपेण देवतार्थं प्रक्षिप्तम् । एतच्च इष्टशब्दवाच्यस्य अग्निहोत्रदर्शपूर्णमासादेर्यागस्य उपलक्षणम् । तस्य इष्टापूर्तस्य गुप्तये रक्षणाय हे दंपती युवां सं श्रयेथाम् संसेवेथाम् । श्रिञ् सेवायाम् ।

य॒ज्ञं यन्तं॒ मन॑सा' बृ॒हन्त॑म॒न्वारो॑हामि॒ तप॑सा' सयो॑निः ।
"उप॑हूता अग्ने" ज॒रसः॑ प॒रस्ता॑त् तृ॒तीये॒ नाके॑ सध॒मादे॑ मदेम ॥ ४ ॥

य॒ज्ञम् । यन्त॑म् । मन॑सा । बृ॒हन्त॑म् । अ॒नु॒ऽआरो॑हामि । तप॑सा । सऽयो॑निः ।
उप॑ऽहूताः । अ॒ग्ने॒ । ज॒रसः॑ । प॒रस्ता॑त् । तृ॒तीये॑ । नाके॑ । स॒ध॒ऽमाद॑म् । म॒दे॒म ॥ ४ ॥

---

१. आर॑भे° तैआ २,६,२. २. पूर्तं पै १६,५१,७ तैआ. ३. प्रविष्ट° पै.; °ष्टं यदुग्नौ तैआ. ४. तस्मै गोत्रायेह जायापती संर॑भेथाम् तैआ. ५. तपसा पै २,६०,१. ६. मनसा पै. ७. °हूताऽग्ने P³,M,H,O.

यज्ञम् अस्माभिः कृतं यागं यन्तम् देवान् गच्छन्तं बृहन्तम् महान्तं मनसा बुद्ध्या अहम् अन्वारोहामि अनुप्रविश्य तत्रैव तिष्ठामि । कथंभूतः । तपसा अनशनादिरूपेण दीक्षानियमेन सयोनिः । योनिः दिव्यदेहोत्पत्तिबीजम् अपूर्वम् । तत्सहितः । यदि हि यजमानस्तपस्वी भवति तदा यज्ञस्तेन संबद्धो भवति । 'योऽतपस्वी स्याद् असंश्लिष्टोऽस्य यज्ञः स्यात् । तपस्वी स्यात् । यज्ञमेव तत् संश्लेषयत इति विज्ञायते' (आपश्रौ २१,१,१०) इति स्मरणात् । सर्वथा यजमानेन तपस्विना भवितव्यमित्यभिप्रायः । यद्वा यज्ञम् यज्ञसाधनं यष्टव्यं वा अग्निं यन्तम् अस्मदीयं हविरादाय देवान् गच्छन्तमिति योज्यम् । यज देवपूजादौ । 'यजयाच' ( पा ३,३,९० ) इत्यादिना भावे अकर्तरि च कारके नङ्प्रत्ययः । यन्तम् इति । एतेर्लटः शत्रादेशे 'इणो यण्' ( पा ६,४,८१ ) इति यण् । हे अग्ने उपहूताः त्वया अनुज्ञाता जरसः परस्तात् चिरकालम् इह लोके उषित्वा जरसः परस्तात् जराया ऊर्ध्वम् । 'जराया जरसन्यतरस्याम्' ( पा ७,२,१०१ ) इति जरस् आदेशः । जीर्णम् इदं मानुषशरीरं परित्यज्य तृतीये त्रित्वसंख्यापूरके नाके । कं सुखम् अकं दुःखम् नास्मिन् अकम् अस्तीति नाकः । 'नभ्राण्नपाद्' ( पा ६,३,७५ ) इत्यादिना नञः प्रकृतिभावः । दुःखासंस्पृष्टे स्वर्गलोके सधमादम् पुत्रपौत्रादिभिः सह हर्षो यथा भवति तथा मदेम हृष्येम । 'सध मादस्थयोश्छन्दसि' ( पा ६,३,९६ ) इति सहशब्दस्य सधादेशः ।

शुद्धाः पूता[1] योषितो यज्ञिया इमा ब्रह्मणां हस्तेषु प्रपृथक् सादयामि ।
यत्काम इदमभिषिञ्चामि वोऽहमिन्द्रो मरुत्वान्त्स ददातु तन्मे[2] ॥ ५ ॥

शुद्धाः । पूताः । योषितः । यज्ञियाः । इमाः । ब्रह्मणाम् । हस्तेषु । प्रऽपृथक् । सादयामि । यत्ऽकामः । इदम् । अभिऽसिञ्चामि । वः । अहम् । इन्द्रः । मरुत्वान् । सः । ददातु । तत् । मे ॥ ५ ॥

शुद्धाः पापरहिताः पूताः जगत्पवित्रभूता योषितः स्त्रीरूपाः यज्ञियाः यज्ञार्हा इमा अपः ब्रह्मणाम् ब्राह्मणानां चतुर्णाम् आर्षेयाणाम् ऋत्विजां हस्तेषु प्र[3] प्रक्षालनेन पृथक्[3] सादयामि अस्मदुपभोगार्थं स्थापयामि । यत्कामः यत्फलं कामयमानः इदम् इदानीम् हे आपः वः युष्मान् अहम् अभिषिञ्चामि अभितो निनयामि । षिच क्षरणे । 'शे मुचादीनाम्' ( पा ७,१,५९ ) इति नुम् । मरुत्वान् मरुद्गणैर्युक्तः स प्रसिद्ध इन्द्रः मे मह्यं तत् फलं ददातु प्रयच्छतु ।

एतं सधस्थाः[4] परि वो[5] ददामि यं शेवधिमावहाज्जातवेदाः ।
अन्वागन्ता यजमानः स्वस्ति[6] तं स्म जानीत परमे व्योमन् ॥ ६ ॥

---

१. आपो पै १६,१०,७. २. ददादिदं मे अ ११,१,२७. ३. वैतु. मंपा. द्र.
४. संधस्थ मा १८,५९. ५. वे मा. ६. यज्ञपतिर्वोऽ अत्र मा.

एतम् । सधऽस्थाः । परि । वः । ददामि । यम् । शेवऽधिम् । आऽवहात् । जातऽवेदाः ।
अनुऽआगन्ता । यजमानः । स्वस्ति । तम् । स्म । जानीत । परमे । विऽओमन् ॥ १ ॥

हे सधस्थाः । सह तिष्ठन्ति एकत्र स्वर्गे लोके स्थाने यजमानेन सह निवसन्तीति सधस्था देवाः । 'सुपि स्थः' ( पा ३,२,४ ) इति तिष्ठतेः कप्रत्ययः । 'सध मादस्थयोः' ( पा ६,३,९६ ) इति सहस्य सधादेशः । हे सहायभूता देवाः एतं हविर्भागं वः युष्मभ्यं परि ददामि । परिदानं रक्षणार्थं दानम् । यं भागं शेवधिम् निधिरूपं जातवेदाः जातानां वेदिता अग्निः आवहात् युष्मान् प्रापयति । आङ्पूर्वाद् वहेर्लेटि आडागमः । एतम् इति पूर्वत्रान्वयः । अयं यजमानः स्वस्ति क्षेमेण तं शेवधिम् अन्वागन्ता पृष्ठत आगमिष्यति । 'अनद्यतने लुट्' ( पा ३,३,१५ ) इति गमेर्लुट्[1] । परमे उत्कृष्टे व्योमन् व्योमनि विविधावनयुक्ते स्वर्गलोके तम् अन्वागतं यजमानं जानीत स्म अवगच्छत । मा विस्मरतेत्यर्थः । अविस्मरणद्योतनार्थः स्मशब्दः । व्योमन्निति । विपूर्वाद् अवतेः 'अन्येभ्योपि दृश्यन्ते' ( पा ३,२,७५ ) इति दृशिग्रहणाद् भावे मनिन् । 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' ( पा ६,४,२० ) इति ऊठि कृते गुणः । 'सुपां सुलुक्' ( पा ७,१,३९ ) इति सप्तम्या लुक् । विविधम् ओम रक्षणम् अस्मिन्निति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । 'न ङिसंबुद्ध्योः' ( पा ८,२,८ ) इति नलोपाभावः ।

'जानीत स्मैनं[2] परमे व्योमन् देवाः[3] सधस्था विद लोकमत्र[4] ।
'अन्वागन्ता यजमानः स्वस्तीष्टापूर्तं स्म कृणुताविरस्मै[5] ॥ २ ॥

जानीत । स्म । एनम् । परमे । विऽओमन् । देवाः । सधऽस्थाः । विद । लोकम् । अत्र ।
अनुऽआगन्ता । यजमानः । स्वस्ति । इष्टापूर्तम् । स्म । कृणुत । आविः । अस्मै ॥ २ ॥

जानीत स्मैनम् इत्यादि पूर्ववद् योज्यम् । हे सधस्थाः सहस्थाना देवाः अत्र अस्मिन् स्वर्गे अस्य यजमानस्य लोकं विद जानीथ । कर्मानुष्ठानसमय एव अवधारयत । तृतीयः पादः पूर्ववद् योजनीयः । अस्मै अन्वागताय यजमानाय तत्कृतम् इष्टापूर्तम् । इष्टं श्रुत्युक्तयागादि कर्म । स्मृत्युक्तवापीकूपतटाकनिर्माणादि पूर्तम् । तद् उभयम् आविष्कृणुत दर्शयत । तत्फलं प्रयच्छतेत्यर्थः ।

देवाः पितरः पितरो देवाः । 'यो अस्मि[†] सो अस्मि'[6] ॥ ३ ॥
देवाः । पितरः । पितरः । देवाः । यः । अस्मि[7] । सः । अस्मि ॥ ३ ॥

---

१. चतु. VWI. तृजन्तमिति. २. एवं जानाथ (°नीत काठ.; °नीतात् तैत्रा.) मा १८,६० काठ ४०,१३ तैत्रा ३,७,१३,३; जानीतादेनं तै ५,७,७,१. ३. अग्ने काठ.; वृक्णाः तैत्रा. ४. रूपमस्य मा. तैत्रा.; 'मस्य काठ. ५. यद्वागच्छात् पथिभिर्देवयानैरिष्टापूर्ते ('र्तं काठ.) कृणवाथा ('णुताद्दा काठ. तैत्रा.) विरस्मै मा. काठ. तैत्रा ३,७,१३,४. ६. योहमस्मि सो अस्मि S'; योऽस्मि सोऽस्मि सोऽयमस्मि पै १९,११,८. † अस्मि B.K.V,Cs.O. ७. अस्मि P.

ये देवा[1] वसुरुद्रादित्यरूपास्ते अस्माकं पितरः[1] पितृपितामहप्रपितामहात्मकाः पितृदेवताः। ये च अस्माकं पितरः पितृपितामहप्रपितामहरूपा मानुषास्त एव प्रागुक्ता देवाः। इत्थं परस्परव्यतिहारेण पितृणां देवतात्मकत्वं दृढीकृतम्। अतः सर्वेषां जनकाः देवा एव। ततो यः अस्मि यदीयो भवामि सः अस्मि तदीयोऽहमस्मि। संभावितव्यतिक्रमा हि स्त्रियः। अत एतद्भावनया स्वपितुरेव अहं पुत्रो भवामीत्यर्थः। 'स्त्र्यपराधात् कर्तुश्च पुत्रदर्शनात्' (मीसू ३,२,१३) इत्यत्र मीमांसाभाष्यकृता एतत् समर्थितम्।[2]

स प॑चामि॒ स द॑दामि॒ स य॑जे॒ स द॒त्तान्मा यू॑षम् ॥ ४ ॥

सः। प॒चा॒मि॒। सः। द॒दा॒मि॒। सः। य॒जे॒। सः। द॒त्तात्[3]। मा। यू॒ष॒म् ॥ ४ ॥

अतः स तदीय एवाहं पचामि पाकयज्ञान् करोमि। स ददामि दानानि करोमि। स यजे यागान् अनुतिष्ठामि। सोऽहं दत्तात् पुत्रादिभिरनुष्ठितश्राद्धादिजन्यफलाद् मा यूषम् पृथक्कृतो मा भूवम्। सत्यपि मातापित्रोर्व्यभिचारे एतन्मन्त्रपाठसामर्थ्येन यथास्वमेव सर्वं कर्मानुष्ठितं भवतीत्यर्थः। यूषम् इति। यौतेः पृथग्भावार्थाद् माङि लुङि 'च्लेः सिच्' (पा ३,१,४४)। वर्णव्यत्ययेन ऊकारः।[2]

नाके॑ राज॒न् प्रति॑ तिष्ठ॒ तत्रै॒तत् प्रति॑ तिष्ठतु।
वि॒द्धि पू॒र्तस्य॑ नो राज॒न्त्स दे॑व सु॒मना॑ भव ॥ ५ ॥

नाके॑। राज॒न्। प्रति॑। तिष्ठ॒। तत्र॑। ए॒तत्। प्रति॑। ति॒ष्ठ॒तु॒।
वि॒द्धि। पू॒र्तस्य॑। नः॒। राज॒न्। सः। दे॒व॒। सु॒ऽमना॑ः। भ॒व॒ ॥ ५ ॥

हे राजन् स्वामिन् सोम। 'सोमोऽस्माकं ब्राह्मणानां राजा' (तै १,८,१०,२) इति श्रुतेः। स त्वं नाके स्वर्गे लोके प्रति तिष्ठ अस्मदीयमपराधं विस्मृत्य सुखं वर्तस्व। तत्र तस्मिन् स्वर्गे लोके एतत् अस्माभिः कृतमिष्टापूर्तं प्रति तिष्ठतु प्रतिष्ठितं फलप्रदानसमर्थं वर्तताम्। हे राजन् नः अस्माकं पूर्तस्य। उपलक्षणमेतत्। कर्मणि षष्ठी। इष्टापूर्तं विद्धि जानीहि। एतस्य कर्मण एतावत् फलं देयमिति मनसा निश्चिनु। हे देव स तादृशस्त्वं सुमनाः शोभनमनस्को भव।

दि॒वो नु मां॑[4] बृ॒ह॒तो अ॒न्तरि॑क्षाद॒पां स्तो॒को अ॒भ्य॑पप्त॒द्[5] रसे॑न[6]।
समि॑न्द्रि॒येण॒ [7]पय॑सा॒ऽहम॑ग्ने॒ छन्दो॑भिर्य॒ज्ञैः सु॒कृतां॑ कृ॒तेन॑ ॥ १ ॥

दि॒वः। नु। माम्। बृ॒ह॒तः। अ॒न्तरि॑क्षात्। अ॒पाम्। स्तो॒कः। अ॒भि। अ॒प॒प्त॒त्। रसे॑न।
सम्। इ॒न्द्रि॒येण॑। पय॑सा। अ॒हम्। अ॒ग्ने॒। छन्दः॑ऽभिः। य॒ज्ञैः। सु॒ऽकृता॑म्। कृ॒तेन॑ ॥ १ ॥

---

१. देवा- मंपा. द्र. २. तु. शंपा. तृतीयां चतुर्थीं च ऋचं तृतीयेति, नाके राजन् इति पञ्चमीं च चतुर्थीति मन्यते. ३. दुत्तान् P; दुत्तात् P[3]. ४. मा हिग १,१६,६. ५. अभ्यपप्तद् B; अभ्यपप्तद् R; °पतत् हिग. ६. शिवाय हिग. ७. मनसाहमागां ब्रह्मणा गुप्तः सुकृता हिग.

दिवः द्युलोकात्। नुशब्दो वितर्के। अथवा बृहतः महतः अन्तरिक्षात् आकाशाद् निर्मेघाद् अपाम् उदकानां स्तोकः बिन्दुः स्वकीयेन रसेन माम् अभ्यपतत् ममोपरि [1]पतितोऽभूत्। पत्लृ गतौ। लुङि लृदित्त्वात् च्लेः अङ् आदेशः। 'पतः पुम्' (पा ७,४,१९) इति पुम् आगमः। हे अग्ने त्वत्प्रसादेन अकालवर्षबिन्दुसेकजनितदोषमनेन प्रक्षालनेन परिहृत्य इन्द्रियेण इन्द्रस्य आत्मनो लिङ्गं यत् तेजो बलं वा तेन। पयसा क्षीरेण पयोवत् सारभूतेन अमृतेन वा। सम् इत्युपसर्गश्रुतेर्योग्यक्रियाध्याहारः। संगच्छेय। तथा छन्दोभिः गायत्र्यादिच्छन्दोयुक्तैर्मन्त्रैः यज्ञैः अनुष्ठितैर्यागैः सुकृताम् पुण्यकृतां जनानां कृतेन कर्मणा। यद्वा सुकृतां शोभनकर्मणां कृतेन फलेन अहं संगच्छेयेत्यर्थः। एतस्य सर्वस्य निवर्तकं हि वृष्ट्युदकाभिवर्षणम्। श्रूयते हि दीक्षितधर्मप्रकरणे — 'दिव्या आपोऽशान्ता ओजो बलं दीक्षा तपोऽस्य निर्घ्नन्ति' (तै ३,१,१,३) इति।

यदि[2] वृक्षाद[3]भ्यप॑प्त॒त् फ॒लं तद् य॒द्य[4]न्तरि॑क्षा॒त् स उ॑ वा॒युरे॒व।
[5]यत्रास्पृ॑क्षत् त॒न्वो॒३॑ यच्च॒ वास॑स॒ आपो॑ नुदन्तु॒ निर्ऋ॑तिं परा॒चैः ॥२॥

यदि॑। वृ॒क्षात्। अ॒भि॒ऽअप॑प्तत्। फल॑म्। तत्। यदि॑। अ॒न्तरि॑क्षात्। सः। ऊं इति॑। वा॒युः। ए॒व। यत्र॑। अस्पृ॑क्षत्। त॒न्वः॑। यत्। च॒। वास॑सः। आप॑ः। नु॒द॒न्तु॒। निः॒ऽऋ॑तिम्। प॒रा॒चैः॥२॥

वृक्षात् वृक्षाग्राद् यदि वर्षबिन्दुः अभ्यपतत् मामभिलक्ष्य पतितोऽभूत्। पूर्ववत् लुङि पुम् आगमः। तत् पतितं वर्षजलं तद्वृक्षसंबन्धि फलम् एव। यदि च अन्तरिक्षात् [6]निरावरणाद् आकाशप्रदेशाद् वर्षबिन्दुः अभ्यपतत् स उ सोऽपि वायुरेव वाय्वात्मक एव। नास्माकं दोषायेत्यर्थः। तन्वः शरीरस्य संबन्धिनि यत्र यस्मिन्नङ्गे अस्पृक्षत् वर्षबिन्दुः स्पृशति। स्पृशतेश्छान्दसो लुङ्। 'शल इगुपधादनिटः क्सः' (पा ३,१,४५) इति च्लेः क्सादेशः। वाससः परिहितस्य अस्मदीयस्य वस्त्रस्य यच्च अङ्गं स्पृशति वर्षबिन्दुस्तां वर्षबिन्द्वात्मना पतितां निर्ऋतिम् अनिष्टकरीं पापदेवतामिमाः प्रक्षालनार्थाः शुद्धा आपः पराचैः पराङ्मुखीः नुदन्तु अस्मत्तः प्रेरयन्तु। दूरं गमयन्तु इत्यर्थः।

अ॒भ्य॒ञ्ज॑नं सु॒र॒भि सा सम॑द्धि॒र्हिर॑ण्यं॒ वर्च॒स्तदु॑ पू॒त्रिम॑मे॒व।
सर्वा॑ प॒वि॒त्रा वित॒ताध्य॒स्मत्[8] तन्मा॑ तारी॒न्निर्ऋ॑ति॒र्मो अरा॑तिः ॥३॥

अ॒भि॒ऽअञ्ज॑नम्। सु॒र॒भि। सा। सम्ऽऋ॑द्धिः। हिर॑ण्यम्। वर्चः॑। तत्। ऊं इति॑। पू॒त्रिम॑म्। ए॒व। सर्वा॑। प॒वि॒त्रा। विऽत॑ता। अधि॑। अ॒स्मत्। तत्। मा। ता॒री॒त्। निः॒ऽऋ॑तिः। मो इति॑। अरा॑तिः॥३॥

---

१. पतितमभूत् S'. २. यद् पै. १९,४०,५. ३. वृक्षाग्रादभ्यपतत् हिर. १,१६,७. ४. अभ्यन्त° पै.; यद्यान्त° हिर. ५. वद् पै. हिर. ६. यत्रा वृक्षस्तनुवै यत्र वास हिर. † तन्वो॒३ A,K ७. याधन्वां हिर. ८. निरारणा S'. ९. 'ध्यस्मिन् पै १९,४०,६.

यद् एतद् वर्षजलं मदङ्गे पतितं तत् अभ्यञ्जनम् अभ्यङ्गसाधनम्। इदं तैलं सुरभि सौरभ्योपेतं चन्दनादिकम्। सा एव समृद्धिः अस्माकमभिवृद्धिः। हिरण्यम् स्वर्णमयालंकारादि। वर्चः बलम्। इत्थमभ्यञ्जनाद्यात्मना भाव्यमानं तत् वर्षबिन्दुजलं पूत्रिमम् एव पवनसाधनम् शुद्धिकरमेव। न दोषावहमित्यर्थः। पूञ् पवने इत्यस्मात् छान्दसः क्त्रिप्रत्ययः। 'क्त्रेर्मम् नित्यम्' (पा ४,४,२०) इति मप्। सर्वा सर्वाणि पवित्रा पवित्राणि पवनसाधनानि अभ्यञ्जनादीनि उक्तानि अनुक्तानि च अस्मदधि अस्माकमुपरि वितता विततानि विस्तृतानि। 'शेश्छन्दसि बहुलम्' (पा ६,१,७०) इति शेर्लोपः। तत् तस्मात् पवित्राच्छन्नत्वाद् निर्ऋतिः अनिष्टकारिणी पापदेवता अस्मान् मा तारीत् मातिक्रामतु। अरातिः शत्रुश्च मो मैव अतिक्रामतु। तॄ प्लवनसंतरणयोः। अस्माद् माङि लुङि सिचि वृद्धौ 'इट ईटि' (पा ८,२,२८) इति सिज्लोपः।

इति सायणार्यविरचिते अथर्वसंहिताभाष्ये षष्ठकाण्डे द्वादशोऽनुवाकः।

त्रयोदशोऽनुवाके नव सूक्तानि। तत्र 'वनस्पते वीड्वङ्गः' इति प्रथमं सूक्तम्। अत्र आद्येन तृचेन नवं रथमभिमन्त्र्य जयकामं राजानं रथमारोहयेत्। तद् उक्तं कौशिकेन — "'वनस्पते', 'अया विष्ठा' (अ ७,३), 'अग्न इन्द्रः' (अ ७,११५), 'दिशश्चतस्रः' (अ ८,८,२२) इति नवं रथं राजानं ससारथिमास्थापयति" (कौसू १५,११) इति।

तथा आधाने रथचक्रहोमानन्तरमनेन आतिष्ठेत्।

अत्र 'इन्द्रस्यौजः' इत्यनया तत्रैव कर्मणि च रथचक्रे जुहुयात्।

उक्तं वैताने — "'इन्द्रस्यौजो मरुतामनीकम्' (३) इति रथमभि हुत्वा 'वनस्पते वीड्वङ्गः' इत्यातिष्ठति" (वैताश्रौ ६,८) इति।

तथा महाव्रते माध्यन्दिनसवने अनेनाभिमन्त्रितं रथं राजानम् अन्यं वा आरोहयेत्। "'वनस्पते वीड्वङ्गः' इत्यभिमन्त्रितं रथमारोहयति" (वैताश्रौ ३४,१५) इति हि वैतानं सूत्रम्।

'उप श्वासय' इति तृचेन परसेनात्रासनविद्वेषणकर्मणि भेर्यादिवादित्रं सूत्रोक्तप्रकारेण संपात्य त्रिस्ताडयित्वा वादकाय प्रयच्छेत्। सूत्रितं हि — "'उच्चैर्घोषः' (अ ५,२०), 'उप श्वासय' (अ ६,१२६) इति सर्ववादित्राणि प्रक्षाल्य तगरोशीरेण संधाव्य संपातवन्ति त्रिराहत्य प्रयच्छति" (कौसू १६,१) इति।

तथा महाव्रते अनेन तृचेन भूमिदुन्दुभिं ताडयेत्। तद् उक्तं वैताने — "भूमिदुन्दुभिम् 'औक्षेणापिनद्धं पुच्छेनाघ्नन्ति 'उच्चैर्घोषः' 'उप श्वासय' इति" (वैताश्रौ ३४,११) इति।

---

१. औष्ट्रेणा° RG.

वन॑स्पते वी॒ड्व॑ङ्गो॒ हि भू॒या अ॒स्मत्स॑खा प्र॒तर॑णः सु॒वीरः॑ ।
गोभिः॒ संन॑द्धो असि वी॒डय॑स्वास्था॒ता ते॑ जयतु॒ जेत्वा॑नि ॥ १ ॥

वन॑स्पते । वी॒डुऽअ॑ङ्गः । हि । भू॒याः । अ॒स्मत्ऽस॑खा । प्र॒ऽतर॑णः । सु॒ऽवीरः॑ ।
गोभिः॑ । सम्ऽन॑द्धः । अ॒सि॒ । वी॒डय॑स्व । आ॒ऽस्था॒ता । ते॒ । ज॒य॒तु॒ । जेत्वा॑नि ॥ १ ॥

हे वनस्पते। विकारे प्रकृतिशब्दः। वनस्पतिविकारवृक्षनिर्मितरथ। 'आमन्त्रितस्य च' (पा ६,१,१९८) इति पाष्ठिकमाद्युदात्तत्वम्। वीड्वङ्गः दृढाङ्गो भूयाः। त्वदीयानि [1]अङ्गानि ईषाचक्रयुगादीनि दृढानि भवन्त्वित्यर्थः। हिशब्दः प्रसिद्धौ। 'हि च' (पा ८,१,३४) इति निघातप्रतिषेधात् यासुट उदात्तत्वम्। अस्मत्सखा वयं सखायः समानख्याना मित्रभूता यस्य स तथोक्तः। तत्पुरुषे हि 'राजाहःसखिभ्यष्टच्' (पा ५,४,९१) इति समासान्तः स्यात्। अतो नात्र प्रसङ्गः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। प्रतरणः प्रकर्षेण शत्रुभ्यस्तारयिता सुवीरः शोभनैर्वीरैर्योधैरुपेतः। 'वीरवीर्यौ च' (पा ६,२,१२०) इति उत्तरपदाद्युदात्तत्वम्। गोभिः विकारे प्रकृतिशब्दः। गोविकारैश्चर्मरज्जुभिः संनद्धः सम्यक् दृढं बद्धः असि अत एव वीळयस्व[2] दृढो भव। संग्रामयोग्यो भवेत्यर्थः। ते तव आस्थाता अधिष्ठाता पुरुषः जेत्वानि जेतव्यानि परकीयाणि बलानि सुवर्णरजतराज्यादीनि वा परकीयाणि जयतु। जेत्वानीति। जि जये। 'कृत्यार्थे तवैकेन्०' (पा ३,४,१४) इति कर्मणि त्वन्प्रत्ययः। 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इति आद्युदात्तत्वम्।

[3]दि॒वस्पृ॑थि॒व्याः [4]पर्योज॒ [†]उद्भृ॑तं॒ [5]वन॒स्पति॑भ्य॒ः [6]पर्याभृ॑तं॒ सहः॑ ।
अ॒पामो॒ज्मानं॒ परि॒ [7]गोभि॒रावृ॑त॒मिन्द्र॑स्य॒ वज्रं॑ ह॒विषा॒ रथं॑ यज ॥ २ ॥

दि॒वः । पृ॒थि॒व्याः । परि॑ । ओजः॑ । उत्ऽभृ॑तम् । वन॒स्पति॑ऽभ्यः । परि॑ । आऽभृ॑तम् । सहः॑ ।
अ॒पाम् । ओ॒ज्मान॑म् । परि॑ । गोभिः॑ । आऽवृ॑तम्[7] । इन्द्र॑स्य । वज्र॑म् । ह॒विषा॑ । रथ॑म् । य॒ज ॥ २ ॥

दिवः द्युलोकात् पृथिव्याश्च सकाशात् ओजः तदीयं बलम् उद्भृतम् उद्धृतम्। द्युसंबन्धिवृष्टिजललक्षणस्य रेतसो निषेकात् पृथिव्यवयवैरुपचयाच्च[8]। तदीयं सारम् उद्धृत्य रथात्मना निर्मितमित्यर्थः। परिः पञ्चम्यर्थानुवादी। 'हृग्रहोर्भः०' (पावा ८,२,३२) इति भत्वम्। तथा वनस्पतिभ्यः सारवद्भ्यो वृक्षेभ्यः सकाशाद्

---

1. अवयवानि S'. 2. वेतु. मंत्रा. द्र. 3. दिवः पृ॰ मा २९,५२ तै ४,६,६,६. 4. पर्यन्तरिक्षात् मै ३,१६,३. † आभृतं पै १५,११,६. 5. पर्याभृतं मै.; परिसंभृतं पै. 6. ॰राभृतं॰ A,B,B[b],D,K,K[m],S[m],V,Cs,Cp, पै. 7. ॰भृतम् P[1],Cp. 8. पृथिव्यवयवानुषमात्य S'.

आवृतम् आहृतं सहः पराभिभवनक्षमं बलमेव अयं रथः । [1]तथा अपाम् उदकानाम् ओज्मानम् । ओजो बलम् । तदात्मकम् । उदकसंवर्धितवृक्षविकारत्वात् । परि परितो गोभिः गोविकारैश्चर्मभिः आवृतम् आवेष्टितम् इन्द्रस्य वज्रम् इन्द्रायुधवद् अप्रतिहतगतिम् । यद्वा वज्रावयवत्वाद् वज्रो रथः । अवयवे समुदायशब्दः प्रयुज्यते । तथा च श्रुतिः—'इन्द्रो वृत्राय वज्रं प्राहरत् । स त्रेधा व्यभवत् । स्फ्यस्तृतीयम् । रथस्तृतीयम् । यूपस्तृतीयम्' (तै ६,१,३,४) इति । एवंभूतं रथम् हे होतः हविषा आज्यादिना यज प्रीणय ।

इन्द्र॑स्यौजो॑[2] म॒रुता॒मनी॑कं मि॒त्रस्य॒ गर्भो॒ वरु॑णस्य॒ नाभिः॑ ।
[3]स इ॒मां[4] नो॑ ह॒व्यदा॑तिं जुषा॒णो दे॑व रथ॒ प्रति॑ ह॒व्या गृ॑भाय ॥ ३ ॥

इन्द्र॑स्य । ओजः॑ । म॒रुता॑म् । अनी॑कम् । मि॒त्रस्य॑ । गर्भः॑ । वरु॑णस्य । नाभिः॑ ।
सः । इ॒माम् । नः॒ । ह॒व्यऽदा॑तिम् । जु॒षा॒णः । दे॑व । र॒थ॒ । प्रति॑ । ह॒व्या । गृ॒भा॒य॒ ॥ ३ ॥

हे देव दानादिगुणयुक्त हे रथ त्वम् इन्द्रस्य ओजः बलम् असि । मरुताम् मरुद्गणानाम् अनीकम् समुदायरूपं बलम् असि । तथा मित्रस्य देवस्य गर्भः गर्भवद् अन्तरवस्थितः पालनीयोऽसि । वरुणस्य देवस्य नाभिः नाभिरिव अवयवभूतोऽसि । यद्वा वरुणेन संनद्धो भवसि । णह बन्धने इत्यस्मात् 'नहो भश्च' (पाउ ४,१२६) इत्यौणादिक इञ्प्रत्ययो भत्वं च । स तादृशस्त्वं नः अस्मदीयाम् इमां हव्यदातिम् । हव्यानि हवींषि दीयन्तेऽस्याम् इति हव्यदातिः यजिक्रिया । तां जुषाणः सेवमानः हव्या हव्यानि हवींषि अस्माभिर्दीयमानानि प्रति गृभाय प्रतिगृहाण । 'छन्दसि शायजपि' (पा ३,१,८४) इति श्नः शायजादेशः । 'हृग्रहोर्भः°' (पावा ८,२,३२) इति भत्वम् ।

उप॑ श्वासय पृथि॒वीमु॒त द्यां पु॑रु॒त्रा ते॑ [5]वन्व॒तां विष्ठि॑तं॒ जग॑त् ।
स[6] दु॑न्दुभे स॒जूरिन्द्रे॑ण दे॒वैर्दू॒राद्[7] दवी॑यो॒ अप॑ सेध॒ शत्रू॑न् ॥ १ ॥

उप॑ । श्वा॒स॒य॒ । पृ॒थि॒वीम् । उ॒त । द्याम् । पु॒रु॒ऽत्रा । ते॒ । व॒न्व॒ताम् । विऽस्थि॑तम् । जग॑त् ।
सः । दु॒न्दु॒भे॒ । स॒ऽजूः । इन्द्रे॑ण । दे॒वैः । दू॒रात् । दवी॑यः । अप॑ । से॒ध॒ । शत्रू॑न् ॥ १ ॥

हे दुन्दुभे पृथिवीम् भूमिम् उप श्वासय आत्मीयेन घोषेण उपश्वसिताम् आपूरितां कुरु । उत द्याम् द्यामपि द्युलोकमपि उप श्वासय आपूरय । श्वस प्राणने ।

---

१. तदा S'. २. इन्द्र॑स्य॒ वज्रो॑ ऋ ६,४७,२८ मा २९,५४ तै ४,६,६,६ मै ३,१६,४ पै १५,११,७. ३. सेमां ऋ. मा. तै. मै. ४. मरुतां ऋ ६,४७,२९ मा २९,५५ तै. मै. पै १५,११,९. ५. सं मै. ६. देवैरारात् मै.

विष्ठितम् विविधम् अवस्थितं जगत् प्राणिजातं पुरुत्रा बहुषु देशेषु ते त्वदीयं जयघोषं वनुताम्[1] संभजताम् । वन षण संभक्तौ । विकरणव्यत्ययः । यद्वा । वनु याचने। श्रोत्रसुखं त्वदीयं जयघोषं सर्वो जनः प्रार्थयतामित्यर्थः । पुरुत्रेति । 'देवमनुष्य' ( पा ५,४,५६ ) इत्यादिना सप्तम्यर्थे पुरुशब्दात् त्राप्रत्ययः । हे दुन्दुभे स तादृशस्त्वम् इन्द्रेण संग्रामाधिदैवतेन तदनुचरैर्देवैः मरुदादिभिश्च सजूः दूरात् सर्वे जना यावन्तं विप्रकृष्टदेशं दूरं मन्यन्ते ततोऽपि दवीयो दूरतरम् अस्मदीयान् शत्रून् अप सेध अपगमय। षिधु गत्याम् । भौवादिकः । दवीय इति । ईयसुनि 'स्थूलदूर' (पा ६,४,१५६) इत्यादिना यणादिपरं लुप्यते पूर्वस्य च गुणे अवादेशः ।

आ क्रन्दय बलमोजो न आ धा 'अभि ष्टन' दुरिता बाधमानः ।
अप सेध' दुन्दुभे दुच्छुनामित' इन्द्रस्य मुष्टिरसि वीडयस्व ॥ २ ॥

आ । क्रन्दय । बलम् । ओजः । नः । आ । धाः । अभि । स्तन । दुःऽइता । बाधमानः[5] । अप । सेध । दुन्दुभे । दुच्छुनाम् । इतः । इन्द्रस्य । मुष्टिः । असि । वीडयस्व ॥ २ ॥

हे दुन्दुभे बलम् परकीयं शत्रुसंबन्धि रथतुरगगजपदातिलक्षणं युद्धाय संनद्धम् आ क्रन्दय पराजयेन आर्तध्वनियुक्तं कुरु । क्रदि आह्वाने रोदने च । अस्माकम् ओजः बलम् आ धाः आधेहि । युद्धाभिमुखं स्थापय । दधातेश्छान्दसो लुङ् । तथा दुरिता दुरितानि पराजयनिमित्तानि पापानि, यद्वा शत्रुकृतानि दुर्गतानि दुःखानि बाधमानः निवर्तयन् अभि ष्टन अभितः श्रवणकटुकं शत्रुहृदयभञ्जकं[6] परुषं शब्दं कुरु । ष्टन[7] शब्दे । 'अभिनिसः स्तनः शब्दसंज्ञायाम्' ( पा ८,३,८६ ) इति षत्वम् । इतः अस्माद् युद्धरङ्गाद् दुच्छुनाम् दुःखकरीं शत्रुसेनाम् अप सेध अपगमय । इन्द्रस्य देवस्य त्वं मुष्टिरसि मुष्टिवत् शत्रूणां भञ्जकोऽसि अतस्त्वं वीडयस्व दृढीभव ।

'प्रामूं जयाभी३मे जयन्तु' केतुमद् दुन्दुभिर्वावदीतु' ।
समश्वपर्णाः पतन्तु[10] नो नरोऽस्माकमिन्द्र रथिनो जयन्तु ॥ ३ ॥

प्र । अमूम् । जय । अभि । इमे । जयन्तु । केतुऽमत् । दुन्दुभिः । वावदीतु । सम् । अश्वऽपर्णाः । पतन्तु । नः । नरः । अस्माकम् । इन्द्र । रथिनः । जयन्तु ॥ ३ ॥

हे इन्द्र अमूं दूरे दृश्यमानां शत्रुसेनां प्र प्रकर्षेण जय यथा अस्मत्समीपं नायाति तथा पराजितां कुरु । इमे अस्मदीया भटाः पुरोवर्तिनः अभि जयन्तु शत्रून् अभिमुखं

---

१. वैतु. मंपा. द्र. २. नि. ष्टनिहि ऋ ६,४७,३०; निष्टनिहि मा २९,५६ तै ४,६, ६,७ मै ३,१६,३; निष्टनिहि पै १५,११,१०. ३. प्रोथ ऋ. मा. तै. मै. पै. ४. दुच्छुना इत ऋ. मा. मै. पै.; दुच्छुनां इत तै. ५. बाधमानाः P. ६. °यजंभकं S'. ७. स्तन शंपा. ८. आमूरज प्रत्यावर्तयेमाः ऋ. मा. तै. मै. ९. °वदीति ऋ. मा. तै. मै. १०. चरन्ति ऋ. मा. तै.; चरन्तु मै.

गच्छन्तो जयं प्रतिपद्यन्ताम् । अयं दुन्दुभिः केतुमत् प्रज्ञानवद् उच्चैस्तरां वावदीतु भृशं वदतु । ध्वनिश्रवणमात्रेण यथा शत्रवः पलायन्ते तथा उच्चैर्ध्वनत्वित्यर्थः । केतुमद् इति । 'ह्रस्वनुड्भ्यां मतुप्' ( पा ६,१,१७६ ) इति मतुप उदात्तत्वम् । वावदीतु । वद व्यक्तायां वाचि । अस्माद् यङ्लुगन्तात् लोटि रूपम् । नः अस्माकं नरः नेतारः सेनानायकाः अश्वपर्णाः अश्वपतनाः अश्वारूढाः सन्तः सं पतन्तु युद्धभूमिमितस्ततो गच्छन्तु । तथा अस्माकं रथिनः रथारूढा अमात्यजना राजानश्च जयन्तु जयं प्रतिपद्यन्ताम् ।

इति त्रयोदशेऽनुवाके प्रथमं सूक्तम् ।

'विद्रधस्य बलासस्य' इति तृचेन जलोदरविसर्पादिसर्वरोगभैषज्यार्थं व्याधितस्य मूर्ध्नि संपातान् आनयेत् ।

तथा तत्रैव कर्मणि अनेन तृचेन चतुरङ्गुलं पलाशशकलं पिष्ट्वा अभिमन्त्र्य व्याधितशरीरं लिम्पेत् ।

सूत्रितं हि— "'विद्रधस्य', 'या बभ्रवः' ( अ ८,७ ) इति उपोत्तमेन पलाशस्य चतुरङ्गुलेनालिम्पति" ( कौसू २६,३३;३४ ) इति, 'पञ्चमेन वरुणगृहीतस्य मूर्ध्नि संपातान् आनयति' ( कौसू २६,३९ ) इति च ।

'शकधूमम्' इति चतुर्ऋचेन स्वस्त्ययनकामः आज्यसमित्पुरोडाशादिशष्कुल्यन्तानां त्रयोदशद्रव्याणामन्यतमं जुहुयात् ।

तथा नित्यनैमित्तिककाम्यकर्माणि शीघ्रं कर्तुकामः अनेन चतुर्ऋचेन ब्राह्मणस्य संधिषु गोमयपिण्डान् निधाय अग्नित्वेन संकल्प्य अभिमन्त्र्य सूत्रोक्तप्रकारेण प्रश्नप्रतिवचने कुर्यात् ।

सूत्रितं हि— "'शकधूमम्' ( अ ६,१२८ ), 'भवाशर्वौ' ( अ ११,२ ) इत्युपदधीत" ( कौसू ५०,१३ ) इति । 'उत्तमेन सुहृदो ब्राह्मणस्य शकृत्पिण्डान् पर्वस्वाधाय शकधूमं[1] किम् अद्याहरिति पृच्छति । भद्रं सुमङ्गलम् इति प्रतिवदते' ( कौसू ५०,१५;१६ ) इति च ।

तथा सोमग्रहणजनितारिष्टशान्तये अनेनाज्यं जुहुयात् । 'अथ यत्रैतच्चन्द्रमसम्[2] उपप्लवति' इति प्रक्रम्य सूत्रितम् — "'शकधूमं नक्षत्राणि' इत्येतेन सूक्तेन जुहुयात्" ( कौसू १००,१;३ ) इति ।

तथा ग्रहयज्ञे हविराज्यहोमादीनि अनेन सोमाय कुर्यात् । तद् उक्तं शान्तिकल्पे "'शकधूमम्' इति सोमाय" ( शाक १५? ) इति ।

---

१. तु. Bl.; वेतु. S', संपा. शकधूम.  २. °मस S'.

विद्रधस्य बलासस्य[1] लोहितस्य वनस्पते ।
विसल्पकस्योषधे[2] मोच्छिषः पिशितं चन ॥ १ ॥

विऽद्रधस्य । बलासस्य । लोहितस्य । वनस्पते ।
विऽसल्पकस्य । ओषधे । मा । उत् । शिषः । पिशितम् । चन ॥ १ ॥

हे वनस्पते चतुरङ्गुलपलाशवृक्ष हे ओषधे विसर्पकादिव्याधेरौषधभूत विद्रधस्य विदरणशीलस्य व्रणविशेषस्य । बलासस्य बलं शारीरम् अस्यति क्षिपतीति बलासः कासश्वासादिः तस्य । लोहितस्य लोहितवर्णस्य । एतद् विसर्पकविशेषस्य नाम । यद्वा लोहितं रुधिरम् । रुधिरस्रावात्मकस्य रोगस्येत्यर्थः । विसल्पकस्य विविधं सर्पति [3]नाडीमुखेन शरीरस्य अन्तर्व्याप्नोतीति विसर्पकः । कपिलकादित्वात् लत्वम् । एवंविधस्य रोगजातस्य पिशितं चन । चनशब्दः अप्यर्थे । निदानभूतं दुष्टं मांसमपि । अपिशब्दाद् दुष्टत्वगादिकम् मोच्छिषः मोच्छेषय । वातपित्तश्लेष्मणां दोषाणां तारतम्येन त्वगसृङ्मांसादीन् धातून् दूषयित्वा विसर्पकादयो रोगा उत्पद्यन्ते । सनिदानांस्तान् सर्वान् निवर्तयेत्यर्थः । उच्छिष इति । शिषॢ विशेषणे । लृदित्वाच्च्लेः अङ् आदेशः ।

यौ[4] ते बलास तिष्ठतः कक्षे मुष्कावपश्रितौ[5] ।
वेदाहं तस्य[6] भेषजं [7]चीपुद्रुरभिचक्षणम् ॥ २ ॥

यौ । ते । बलास । तिष्ठतः । कक्षे । मुष्कौ । अपऽश्रितौ ।
वेद । अहम् । तस्य । भेषजम् । चीपुद्रुः । अभिऽचक्षणम् ॥ २ ॥

हे बलास कासश्वासादिरोग ते तव यौ विकारौ विसर्पकादिरूपौ कक्षे बाहुमूले तिष्ठतः । मुष्कौ अण्डौ च अपश्रितौ अपकृष्टमाश्रितौ तस्य तादृग्विकारोपेतस्य बलासस्य अहं भेषजं वेद जानामि । किं तद् इति उच्यते— चीपुद्रुः[8] एतत्संज्ञो द्रुमविशेषः । अभिचक्षणम् व्याधिमूलं सम्यग् अभिचक्ष्य ज्ञात्वा निवर्तकमौषधमित्यर्थः ।

यो अङ्ग्यो यः कर्ण्यो यो अक्ष्योर्विसल्पकः ।
वि वृहामो विसल्पकं विद्रधं हृदयामयम् ।
परा तमज्ञातं[9] यक्ष्ममधराञ्चं सुवामसि ॥ ३ ॥

१. अमितस्य पै १,९१,१ २ विकल्पकस्यौ[प°] पै. ३. नीडामु° S'. ४. उद पै १,९०,२. ५. °वपाकृतौ पै. ६. तस्मिन् पै. ७. चीपर्दु° S. सा.; द्रीपुर्दु° RW.; दीपुद्रावभि° पै.; चीपद्रावभि° पै [मूको.]. ८. वैनु. मंपा. द्र. ९. तेऽज्ञा° पै १,९०,४.

यः । अङ्ग्यः । यः । कर्ण्यः[1] । यः । अक्ष्योः । विऽसल्पकः । वि । वृहामः । विऽसल्पकम् । विऽद्रधम् ।
हृदयऽआमयम् । परा[2] । तम्[3] । अज्ञातम् । यक्ष्मम् । अधराञ्चम् । सुवामसि ॥ ३ ॥

यो विसर्पकः[4] अङ्ग्यः अङ्गेषु हस्तपादादिषु भवः यः कर्ण्यः कर्णयोरुत्पन्नः । उभयत्र 'शरीरावयवाच्च' (पा ४,३,५५) इति यत् । अक्ष्योः अक्ष्णोर्यो विसर्पकः । 'ई च द्विवचने' (पा ७,१,७७) इति अक्षिशब्दस्य ईकारान्तादेशः । एवं बहुविधं तं विसर्पकं[4] वि वृहामः उत्खनामः । समूलमुन्मूलयाम इत्यर्थः । वृहू उद्यमने । तथा विद्रधम् विदरणस्वभावं व्रणविशेषं हृदयामयम् हृद्रोगं हृदयाश्रितमन्यमपि रोगं निवर्तयामः । तं तथाविधम् अज्ञातम् अनिर्ज्ञातस्वरूपं यक्ष्मम् रोगम् अधराञ्चम् अधरम् अधस्ताद् अञ्चन्तम् अधोमुखं गच्छन्तं परा सुवामसि पराङ्मुखं प्रेरयामः । षू प्रेरणे । 'इदन्तो मसि' (पा ७,१,४६) ।

शकधूमं नक्षत्राणि यद् राजानमकुर्वत[5] ।
भद्राहमस्मै प्रायच्छन्निदं[6] राष्ट्रमसादिति[7] ॥ १ ॥

शकऽधूमम् । नक्षत्राणि । यत् । राजानम् । अकुर्वत ।
भद्रऽअहम् । अस्मै । प्र । अयच्छन् । इदम् । राष्ट्रम् । असात्[8] । इति ॥ १ ॥

शकस्य शकृतः संबन्धी धूमो यस्मिन्नग्नौ स शकधूमः अग्निः । तदभेदाद् ब्राह्मणोऽत्र अभिधीयते । 'एष वा अग्निर्वैश्वानरो यद् ब्राह्मणः' (तै ५,२,८,२) इति श्रुतिस्तयोस्तादात्म्यं दर्शयति । तं शकधूमं ब्राह्मणं पुरा नक्षत्राणि तारकाः राजानं चन्द्रमसम् अकुर्वत व्यदधतेति यत् तस्य कारणम् उच्यते । अस्मै शकधूमाय भद्राहम् पुण्याहं कल्याणप्रदं कालं प्रायच्छन् । भद्रं च तद् अहश्चेति भद्राहः । 'राजाहस्सखिभ्यष्टच्' (पा ५,४,९१) इति टच् समासान्तः । किमर्थं प्रायच्छन् । तत्राह—इदं राष्ट्रम् राज्यं नक्षत्रमण्डलाधिपत्यम् असात् भवेत् । अस्य वशे सर्वं वर्तेत इति अनेनाभिप्रायेणेत्यर्थः ।

भद्राहं नो मध्यंदिने भद्राहं सायमस्तु नः ।
भद्राहं नो अह्नां प्राता रात्री भद्राहमस्तु नः ॥ २ ॥

भद्रऽअहम् । नः । मध्यंदिने । भद्रऽअहम् । सायम् । अस्तु । नः ।
भद्रऽअहम् । नः । अह्नाम् । प्रातः । रात्री । भद्रऽअहम् । अस्तु । नः ॥ २ ॥

---

१. कुर्ण्यः P.　२. परः P.　३. तत् P; ते पै १,१०,४.　४. वैतु. संपा. द.
५. अकृण्वत पै १९,२४,१६.　६. °च्छन् ततो पै.　७. °मजायत पै.　८. असात् P², J.

नः अस्माकं मध्यंदिने मध्याह्ने भद्राहम् शोभनदिनं पुण्यम् अहः । भवतित्यर्थः । तथा नः अस्माकं सायम् सूर्यास्तमयकालेऽपि भद्राहम् पुण्याहम् अस्तु । अह्नाम् दिवसानां प्रातः पूर्वाह्णकालेऽपि नः अस्माकं भद्राहम् पुण्याहं भवतु । तथा रात्री कृत्स्नापि निशीथिनी नः भद्राहम् शुभकालो भवतु । 'रात्रेश्चाजसौ' (पा ४,१,३१) इति ङीप् ।

अ॒हो॒रा॒त्राभ्यां॒ नक्ष॑त्रेभ्यः सूर्याचन्द्र॒मसा॒भ्याम्[1] ।
भ॒द्राह॒म॒स्मभ्यं॑ राज॒न्छक॑धूम॒ त्वं कृ॑धि[2] ॥ ३ ॥

अ॒हो॒रा॒त्राभ्या॑म् । नक्ष॑त्रेभ्यः । सू॒र्या॒च॒न्द्र॒मसा॑भ्याम् ।
भ॒द्रऽअ॒ह॒म् । अ॒स्मभ्य॑म् । रा॒ज॒न् । शक॑ऽधूम । त्वम् । कृ॒धि ॥ ३ ॥

अहोरात्राभ्याम् अहश्च रात्रिश्च अहोरात्रौ । 'अहःसर्वैकदेश' (पा ५,४,८७) इत्यादिना अकारः समासान्तः । [ताभ्याम्] अहोरात्राभ्यां सकाशात् नक्षत्रेभ्यः अश्विन्यादिभ्यः सूर्याचन्द्रमसाभ्याम् । सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ अहोरात्रयोर्विभेदकौ ताभ्यां च सकाशात् हे शकधूम ब्राह्मणात्मक हे राजन् नक्षत्राणाम् अधिप अस्मभ्यं भद्राहम् पुण्याहं त्वं कृधि कुरु । सूर्याचन्द्रमसाभ्याम् इति । पूर्वपदस्य 'देवताद्वन्द्वे च' (पा ६,३,२६) इति आनङ् । छान्दसः अकारः समासान्तः ।

यो नो॑ भ॒द्राह॒मक॑रः[3] सा॒यं नक्त॒मथो॑[4] दिवा॑ ।
तस्मै॑ ते नक्षत्ररा॒ज॒ शक॑धूम॒ सदा॒ नमः॑ ॥ ४ ॥

यः । नः॒ । भ॒द्रऽअ॒ह॒म् । अक॑रः[5] । सा॒यम् । नक्त॑म् । अथो॒ इति॑ । दिवा॑ ।
तस्मै॑ । ते॒ । न॒क्ष॒त्र॒ऽरा॒ज॒ । शक॑ऽधूम । स॒दा॑ । नमः॑ ॥ ४ ॥

हे शकधूम ब्राह्मणात्मक नक्षत्रराज नक्षत्राणामधिप हे सोम यस्त्वं नः सायम् सायाह्नकाले नक्तम् रात्रौ अथो अपि च दिवा दिवसे भद्राहम् पुण्याहं सुदिनम् अकरः कृतवान् असि । करोतेर्लुङि 'कृमृदृरुहिभ्य.' (पा ३,१,५९) इति च्लेः अङ् आदेशः । तस्मै तथाविधाय ते तुभ्यं सदा सर्वदा नमः नमस्कारोऽस्तु ।

इति त्रयोदशेऽनुवाके द्वितीयं सूक्तम् ।

'भगेन मा मम्'' इति तृचेन शङ्खपुष्पिकामूलं खात्वा संपात्य अभिमन्त्र्य सौभाग्यकामस्य बध्नीयात् ।

---

१. वैतु. अ ११,८,३ ( मंत्रा. WM. गात. ) सूर्याचन्द्रमसाभ्याम्. २. राजं K[m],R. ३. द्रष्टु पै १९,२८,१७. ४. तु.गात. RW., वैतु. मंत्रा. "मंकरः; "मकरत् पै १९,२८,१८. ५. मातरथो पै. ६. तु. मंत्रा.; वैतु. मंत्रा. अकुरः. ७. वैतु. मंत्रा. इ.

तथा तत्रैव कर्मणि अनेन शङ्खपुष्पिकापुष्पमभिमन्त्र्य शिरसि बध्नीयात् ।

तद् उक्तं संहिताविधौ — "'भगेन मा', 'न्यस्तिका' ( अ ६,१३९ ), 'इदं खनामि' (अ ७,३९) इति सौवर्चलम् ओषधिवच्छुक्लप्रसूनं शिरस्युपचृत्य[1] ग्रामं प्रविशति" .(कौसू ३६,१२) इति ।

'रथजिताम्' इत्यादिसूक्तत्रयेण दुष्टस्त्रीवशीकरणकर्मणि मापान् अभिमन्त्र्य स्त्रियाः संचरणस्थलेषु प्रक्षिपेत् ।

तथा तत्रैव कर्मणि अनेन [2]सूक्तत्रयेण शरभृष्टीः[3] संदीप्ताः प्रतिदिशं प्रक्षिपेत् ।

तथा तत्रैव कर्मणि आवलेखनीं[4] स्त्रीप्रतिकृतिं कृत्वा सूत्रोक्तप्रकारेण धनुरिषुं च कृत्वा अनेन [2]सूक्तत्रयेण प्रतिकृतिं[5] हृदये विध्येत् ।

"'रथजिताम्' (अ ६,१३०-१३२ [तु. के. दा.]) इति मापान्[6] निवपति । शरभृष्टीरादीप्ताः प्रतिदिशम् अभ्यस्यत्यवाच्या आवलेखन्या"[7] ( कौसू ३६,१३;१४ ) इति ।

भगेन मा शांशपेन[8] साकमिन्द्रेण मेदिना ।
कृणोमि भगिनं माप द्रान्त्वरातयः ॥ १ ॥

भगेन । मा । शांशपेन । साकम् । इन्द्रेण । मेदिना ।
कृणोमि । भगिनम् । मा । अप । द्रान्तु । अरातयः ॥ १ ॥

संशफेन[9] । संगताः शफा गोमहिपादीनां खुराः शफाकृतिरायुधविशेषो वा यस्य स तथोक्तः । तादृशेन भगेन सौभाग्यकरेण देवेन साकं सह मा मां सौभाग्यवन्तं करोमि । मेदिना स्निग्धेन अस्मत्सेवया परितुष्टेन इन्द्रेण मा मां भगिनम् भाग्यवन्तं कृणोमि करोमि । अरातयः अदानशीलाः शत्रवः अप द्रान्तु अस्मत्सकाशाद् अपेत्य कुत्सितां गतिं गच्छन्तु । द्रा कुत्सितायां गतौ । अदादित्वात् शपो लुक् ।

येन[10] वृक्षाँ[11] अभ्यभवो [12]भगेन वर्चसा सह[12] ।
तेन[13] मा भगिनं कृण्वप द्रान्त्वरातयः ॥ २ ॥

येन । वृक्षान् । अभिऽअभवः । भगेन । वर्चसा । सह ।
तेन । मा । भगिनम् । कृणु । अप । द्रान्तु । अरातयः ॥ २ ॥

---

१. तु· Bl. दा.; वैतु· S'. शंपा. शिरस्यपिहत्य; शंपा. कौसू. शिरस्युंपवृत्य. २. वैतु. शंपा. नृषत्र°. ३. शिरभृ° S'. ४. तु. टि ७; वैतु. शंपा. °लेखिनीं. ५. प्रकृतिं S'. ६. मापस्मरान् Bl.; मापस्वारां दा. ७. तु. Bl. दा.; वैतु. शंपा. °लेखिन्या. ८. शांशुफेन R,Km; शांमुपेनें, सांशुपेनं WM.; सांशपेन पै १९,३२,१ [मूको.]. ९. वैतु. मंपा. द्र. १०. यथा पै १९,३२,३. ११. वृक्षां Bb,D,Km,Sm,Cs. १२. साकमिन्द्रेण मेदिना पै. १३. एवा पै.

हे ओषधे येन भगेन सौभाग्यकरेण देवेन वर्चसा तत्कृतेन तेजसा सह वृक्षान् समीपस्थान् अभ्यभवः अभिभवसि तिरस्करोषि तेन भगेन मा मां भगिनम् सौभाग्यवन्तं कृणु कुरु । गतमन्यत् ।

'यो अन्धो[1] यः पुनःसरो[2] भगो वृक्षेष्वाहितः[3] ।
[4]तेन मा भगिनं कृण्वप[5] द्रान्त्वरातयः ॥ २ ॥

यः । अन्धः । यः । पुनःऽसरः । भगः । वृक्षेषु । आऽहितः ।
तेन । मा । भगिनम् । कृणु । अप । द्रान्तु । अरातयः ॥ २ ॥

यो भगः अन्धः दृष्टिरहितः । तथा च यास्कः — "'अन्धो भग इत्याहुः ××× । प्राशित्रमम्याक्षिणी निर्जघान' (तु. कौब्रा ६,१३) इति च ब्राह्मणम्" ( नि १२,१४ ) इति । यो भगः पुनःसरः । दृष्टिराहित्येन पुरतो गन्तुमशक्नुवन् गतप्रदेश एव पुनः सरति गच्छतीति पुनःसरः । अत एव वृक्षेषु स्थाणुषु मार्गस्थेषु आहृतः[४] ताडितो भवति । यो भगः आन्ध्येन पुरतोऽन्यत्र गन्तुमशक्नुवन् गृहीतं न परित्यजतीत्यर्थः । तेन भगेन सौभाग्यकरेण देवेन । उक्तार्थमन्यत् ।

'रथजितां[6] [7]राथजितेयीनामप्सरसामयं स्मरः ।
देवाः प्र हिणुत स्मरमसौ मामनु शोचतु[8] ॥ १ ॥

रथऽजिताम्[9] । राथऽजितेयीनाम्[10] । अप्सरसाम् । अयम् । स्मरः[11] ।
देवाः । प्र । हिनुत । स्मरम् । असौ । माम् । अनु । शोचतु । १ ॥

हे रथजिते[५] रथेन जेतव्ये मरापाख्ये ओषधि रथजिताम् रथेन आत्मीयेन वाहनेन विश्वं जयन्तीनां धीनाम्[५] ध्यानजननीनां विरागविशेषस्य उत्पादयित्रीणाम् अप्सरसाम् उर्वशीप्रभृतीनां संबन्धी अयं स्मरः कामः । तदधीने वर्तत इत्यर्थः । अतः इयं दुष्टा स्त्री मां स्मरकृतपीडाभावाद् न कामयत इत्यर्थः । यद्वा रथजिताम् रथेन रथाकारेण विमानेन विश्वं जयतां देवानां संबन्धिनि रथजिते रथेन जेतव्ये मेरुशिखरादौ भोगभूप्रदेशे धीनाम् ध्यातॄणां गन्धर्वाणाम् अप्सरसां च अयं स्वभूतः स्मरः । हे देवाः तं स्मरम् कामं प्र हिणुत एतस्याः समीपं प्रेषयत । हि गतौ वृद्धौ च । स्वादित्वात् श्नुः । 'हिनुमीना' ( पा ८,४,१५ ) इति णत्वम् । असौ पराङ्मुखी स्त्री तेन स्मरेण पीडिता सती माम् अनु शोचतु अनुस्मृत्य शोकयुक्ता भवतु । शुच शोके ।

---

१. योऽन्धो पै १९,३२,२. २. पुनस्सरो पै. ३. °ष्वार्पितः पै. ४. भगेनीया मेऽस्तु शांशपो? अप पै. ५. वेतु. मंत्रा. द ६. रथजिताम् इत्यादिसूक्तत्रयं स्त्रीवशीकरणकर्मणि विनियुक्तमिति सा. के. च, पुरुषवशीकरणे विनियुक्तमिति W प्रभृ. अर्वाञ्चः ७. रथजितेयीनां° > राथजितेयीनां° A,K^m. ८. शोचतौ B. ९. °जितम् Cp. १०. राथऽजितेयी । यीनाम् P,P^s,J,W.M.; राथजितु । यीनाम् > राथजितेयीनाम् Cp. ११. स्मरः P.

'असौ मे स्मरतादिति प्रियो मे स्मरतादिति ।
देवाः प्र हिणुत स्मरमसौ मामनु शोचतु' ॥ २ ॥

असौ । मे । स्मरतात् । इति । प्रियः । मे । स्मरतात् । इति ।
देवाः । प्र । हिनुत । स्मरम् । असौ । माम् । अनु । शोचतु ॥ २ ॥

'यथा मम स्मरादसौ नामुष्याहं कदा चन ।
देवाः प्र हिणुत स्मरमसौ मामनु शोचतु ॥ ३ ॥

यथा । मम । स्मरात् । असौ । न । अमुष्य[1] । अहम् । कदा । चन ।
देवाः । प्र । हिनुत । स्मरम् । असौ । माम् । अनु । शोचतु ॥ ३ ॥

असौ पुरुषः मे मां स्मरतात् स्मरतु इति । इतिशब्दो वाक्यसमाप्तौ । प्रियः मयि अनुरागविशेषयुक्तः सन् मे मां स्मरतात् स्मरतु । स्मृ चिन्तायाम् । 'तुह्योस्तातङ्' (पा ७,१,३५) इति तातङ् आदेशः । अनेन प्रकारेण आशंसमाना कामार्ता यथा असौ दुष्टा स्त्री मम स्मरात् मां स्मरेत् । 'अधीगर्थ' (पा २,३,५२) इति कर्मणि षष्ठी । इति चिन्तयेत् । अमुष्य अमूं स्त्रियम् अहं कदा चन कदाचिदपि कामार्तो न स्मरामि तथा हे देवाः स्मरं प्र हिणुत ।

यद्वा असौ मे स्मरताद् इति प्रियो मे स्मरताद् इति यथा माम् अनुस्मृत्य सा परितप्यते तथा स्मरं प्र हिणुतेति संबन्धः । यथा मम स्मरात् इति स्त्रीवाक्यम् । असौ पुरुषो यथा मां स्मरेत् कदाचिदपि अहम् अमुष्य अमुं पुरुषं न स्मरामि । इत्थं पुरुष एव कामातुरो माम् अभिगच्छेद् इति वशीकृतायाः स्त्रिया वाक्यम् । गतमन्यत् ।

'उन्मादयत मरुत उदन्तरिक्ष मादय ।
अग्न उन्मादया त्वमसौ मामनु शोचतु ॥ ४ ॥

उत् । मादयत । मरुतः । उत् । अन्तरिक्ष । मादय ।
अग्ने । उत् । मादय । त्वम् । असौ । माम् । अनु । शोचतु ॥ ४ ॥

हे मरुतः मरुद्गणाः इमां स्त्रियम् उन्मादयत उन्मत्तां परवशामस्मदायत्तां कुरुत । हे अन्तरिक्ष त्वमपि एनाम् उन्मादय अस्मद्वशे कुरु । हे अग्ने त्वम् एनाम् उन्मादय स्वात्मानं विस्मृत्य यथा अस्माकं वशे भवति तथा कुरु । एवं युष्माभिरुन्मादं प्रापिता असौ माम् अनु अनुस्मृत्य शोचतु ।

इति तृतीयं सूक्तम् ।

---

१. दंपा. द्वितीया तृतीया च ऋचमेकामेव मन्यते. २. शोचतो B. ३. अमुष्य दंपा.

'नि शीर्षतो नि पत्तत' इति सूक्तस्य पूर्वसूक्तेन[1] सह उक्तो विनियोगः ।

**नि शीर्षतो नि पत्तत आध्यो३[2] नि तिरामि ते ।**
**देवाः प्र हिंणुत स्मरमसौ मामनु शोचतु ॥ १ ॥**

नि । शीर्षतः । नि । पत्ततः । आऽध्यः[3] । नि । तिरामि । ते ।
देवाः । प्र । हिनुत । स्मरम् । असौ । माम् । अनु । शोचतु ॥ १ ॥

हे जाये ते तव शीर्षतः शिरःप्रदेशाद् आरभ्य आध्यः आधींश्चिन्ताविशेषान् नि तिरामि शरीरे निक्षिपामि । तथा पत्ततः । पकारस्तशब्दश्छान्दसः । पत्तः पादत आरभ्य तव शरीरे आधीन् निक्षिपामि । इत्थं सर्वस्मिन्नपि त्वदीये अङ्गे स्मरकृतां पीडां निक्षिपामीत्यर्थः । आध्यः । आङ्पूर्वाद् दधातेः 'उपसर्गे घोः किः' ( पा ३,३,९२ ) इति किप्रत्ययः । शसि व्यत्ययेन यणादेशः । यद्वा आङ्पूर्वाद् ध्यै चिन्तायाम् इत्यस्माद् 'ध्यायतेः सम्प्रसारणं च' ( पावा ३,२,१७८ ) इति भावे क्विप् संप्रसारणं च । आध्यः आध्यानानीत्यर्थः[4] । 'एरनेकाचः' ( पा ६,४,८२ ) इति शसि यण् । व्याख्यातम् अन्यत् ।

**अनुमतेऽन्विदं मन्यस्वाकूते समिदं नमः[5] ।**
**देवाः प्र हिंणुत स्मरमसौ मामनु शोचतु ॥ २ ॥**

अनुऽमते । अनु । इदम् । मन्यस्व । आऽकूते । सम् । इदम् । नमः ।
देवाः । प्र । हिनुत । स्मरम् । असौ । माम् । अनु । शोचतु ॥ २ ॥

हे अनुमते सर्वकार्याणामनुमन्त्रि हे अनुमतकारिणि देवपत्नि इदम् मदभिलषितम् अनु मन्यस्व अनुजानीहि । हे आकूते । आकूतिः संकल्पाभिमानिनी देवता । त्वमपि इदम् अस्माभिः क्रियमाणं नमः नमस्कारं हविर्लक्षणम् अन्नं वा संप्राप्य । अनुमन्यस्वेत्यर्थः । शिष्टं व्याख्यातम् ।

**यद् धावसि त्रियोजनं[6] पञ्चयोजनमाश्विनम् ।**
**ततस्त्वं पुनरायसि पुत्राणां नो असः पिता ॥ ३ ॥**

---

१. °पत्रेकेन शौता. २. आध्यो३ A,R. ३. आध्याः P; आध्यः P²,J.
४. °निरर्थः S². ५. नमः RW. ६. त्रयो° K,V; त्रियो°>त्रयो° B¹.

यत् । धावसि । त्रिऽयोजनम् । पञ्चऽयोजनम् । आश्विनम् ।
ततः । त्वम् । पुनः । आऽअयसि[1] । पुत्राणाम् । नः । असः । पिता ॥ ३ ॥

वशीकृता स्त्री प्रार्थयते — हे पुरुष त्वं त्रियोजनम् [2]योजनत्रयपरिमितं दूरदेशं[2] यद् धावसि गच्छसि। यद्वा पञ्चयोजनम् ततोऽपि दूरतरं पञ्चसंख्याकयोजनपरिमितं देशं धावसि । अथवा आश्विनम् अश्वेनैव[3] प्रापणीयं न पादचारेणेति अत्यन्तं दूरं यद् धावसि ततः तस्माद् दूरदेशात् त्वं पुनरायसि पुनरागच्छ । नः अस्माकं पुत्राणां गृहे वर्तमानानां पिता असः पालको भव । यद्वा तव देशान्तरगमनाद् एतावन्तं कालं पुत्राः पितृरहिता आसन् इदानीं त्वदागमनात् पितृमन्तो भवन्तु इत्यर्थः ।

यं देवाः स्मरमसिञ्चन्नप्स्व१न्तः[4] शोशुचानं सहाध्या ।
तं ते तपामि वरुणस्य धर्मणा ॥ १ ॥

यम् । देवाः । स्मरम् । असिञ्चन् । अप्ऽसु । अन्तः । शोशुचानम् । सह । आध्या ।
तम् । ते । तपामि । वरुणस्य । धर्मणा ॥ १ ॥

सर्वे देवाः यं स्मरं मनोभवम् आध्या । आधिस्तु मानसी पीडा । सा हि स्मरस्य भार्या । 'कामो गन्धर्वस्तस्याऽऽधयोऽप्सरसः' ( तै ३,४,७,३ ) इति श्रुतेः । तया सह शोशुचानम् विरहाग्निना संतप्यमानगात्रम् अप्सु उदकेषु अन्तः मध्ये असिञ्चन् परितापशमनार्थम् आसिक्तवन्तः। यद्वा शोशुचानम् दीप्यमानं स्वशक्त्या सहितं स्मरम् अप्सु। अन्तरिक्षनामैतत्। अवकाशात्मके[5] अन्तरिक्षे अन्तरवस्थितान् तत्रत्यान् प्राणिनः पीडयितुम् असिञ्चन्। कामिनां साम्राज्ये अभ्यषिञ्चन्नित्यर्थः। हे योषित् ते तुभ्यं त्वदर्थं त स्मरं वरुणस्य जलाधिपतेर्देवस्य धर्मणा धारणशक्त्या तपामि संतापयामि। स्मरकृतं संतापमुत्पादयामीत्यर्थः।

यं विश्वे देवाः स्मरमसिञ्चन्नप्स्व१न्तः[4] शोशुचानं सहाध्या ।
तं ते तपामि वरुणस्य धर्मणा ॥ २ ॥

यम् । विश्वे । देवाः । स्मरम् । असिञ्चन् । अप्ऽसु । अन्तः । शोशुचानम् । सह । आध्या । तम् । ते । तपामि । वरुणस्य । धर्मणा ॥ २ ॥

विश्वे देवाः एतत्संज्ञा देवगणाः । अन्यत् पूर्ववद् योज्यम् ।

---

१. आऽअर्यसि P,J,WI.; आ । अयसि Cp; आऽअयसि P[6]. २. 'मितदूर' S'. ३. द्र. S'; वैतु. सपा. अश्विनेव. ४. 'प्स्व १न्तः B. ५. 'कानारिमके S'.

यमि॑न्द्रा॒णी स्म॒रमसि॑ञ्चद॒प्स्व॑१॒न्तः[1] शोशु॑चानं स॒हाध्या ।
तं ते॑ तपामि॒ वरु॑णस्य॒ धर्म॑णा ॥ ३ ॥

यम् । इ॒न्द्रा॒णी । स्म॒रम् । असि॑ञ्चत्[2] । अ॒प्ऽसु । अ॒न्तः । शोशु॑चानम् । स॒ह । आ॒ऽध्या ।
तम् । ते॒ । त॒पा॒मि॒ । वरु॑णस्य । धर्म॑णा ॥ ३ ॥

इन्द्राणी इन्द्रस्य पत्नी । 'इन्द्रवरुण' ( पा ४,१,४९ ) इत्यादिना ङीपानुकौ । अन्यत् पूर्ववत् ।

यमि॑न्द्रा॒ग्नी स्म॒रमसि॑ञ्चताम॒प्स्व॑१॒न्तः[1] शोशु॑चानं स॒हाध्या ।
तं ते॑ तपामि॒ वरु॑णस्य॒ धर्म॑णा ॥ ४ ॥

यम् । इ॒न्द्रा॒ग्नी इति॑ । स्म॒रम् । असि॑ञ्चताम् । अ॒प्ऽसु । अ॒न्तः । शोशु॑चानम् । स॒ह । आ॒ऽध्या । तम् । ते॒ । त॒पा॒मि॒ । वरु॑णस्य । धर्म॑णा ॥ ४ ॥

इन्द्रश्च अग्निश्च इन्द्राग्नी । 'देवताद्वन्द्वे च' ( पा ६,२,१४१ ) इति प्राप्तस्य उभयपदप्रकृतिस्वरत्वस्य 'नोत्तरपदेऽनुदात्तादौ' ( पा ६,२,१४२ ) इति प्रतिषेधः । तौ यं स्मरम् असिञ्चताम् अभ्यषिञ्चताम् । अन्यत् समानम् ।

यं मि॒त्रावरु॑णौ स्म॒रमसि॑ञ्चताम॒प्स्व॑१॒न्तः[1] शोशु॑चानं स॒हाध्या ।
तं ते॑ तपामि॒ वरु॑णस्य॒ धर्म॑णा ॥ ५ ॥

यम् । मि॒त्रावरु॑णौ । स्म॒रम् । असि॑ञ्चताम् । अ॒प्ऽसु । अ॒न्तः । शोशु॑चानम । स॒ह । आ॒ऽध्या । तम् । ते॒ । त॒पा॒मि॒ । वरु॑णस्य । धर्म॑णा ॥ ५ ॥

मित्रश्च वरुणश्च मित्रावरुणौ । 'देवताद्वन्द्वे च' ( पा ६,३,२६ ) इति पूर्वपदस्य आनङ् । 'देवताद्वन्द्वे च' ( पा ६,२,१४१ ) इति उभयपदप्रकृतिस्वरत्वम् । अन्यत् पूर्ववद् योज्यम् ।

इति त्रयोदशेऽनुवाके चतुर्थं सूक्तम् ।

'य इमां देवो मेखलाम्' इति पञ्चर्चेन अभिचारकर्मणि दीक्षायां मेखलां संपात्य अभिमन्त्र्य बध्नीयात् ।

अत्र 'आहुतासि' (२) इत्यनया तत्रैव कर्मणि मेखलाया ग्रन्थिमालिम्पेत् ।

---

१. 'प्स्व॑१॒न्तः B. २. असिंचद् P.

'मृत्योरहम्' (३) इत्यनया बाधकीः[1] समिध आदध्यात् ( तु. कौसू ४७,१३ )।

उपनयनकर्मणि 'श्रद्धाया दुहिता' इति द्वाभ्यां मेखलां बध्नीयात्। सूत्रितं हि— "'श्रद्धाया दुहिता' इति द्वाभ्यां (४,५) मौञ्जीं[2] [3]मेखलां बध्नाति[3]" ( कौसू ५७,१ ) इति।

'अयं वज्रः' ( अ ६,१३४ ) इति तृचेन अभिचारकर्मणि दीक्षायां दण्डं संपात्य अभिमन्त्र्य गृह्णीयात्।

तत्रैव कर्मणि अनेन तृचेन अन्नमभिमन्त्र्य कर्ता भुञ्जीत।

य इमां देवो मेखलामाबबन्ध यः संननाह य उ नो[4] युयोज।
यस्य देवस्य प्रशिषा चरामः[5] स पारमिच्छात्[6] स उ नो[4] वि मुञ्चात् ॥१॥

यः। इमाम्। देवः। मेखलाम्। आऽबबन्ध। यः। सम्ऽननाह। यः। ऊं इति। नः। युयोज। यस्य। देवस्य। प्रऽशिषा। चरामः। सः। पारम्। इच्छात्। सः। ऊं इति। नः। वि। मुञ्चात् ॥ १ ॥

यो देवः शत्रुहननकुशलः इमां मेखलां स्वशत्रुवधार्थम् आबबन्ध पुरा आबद्धवान्। तथा यो देवः संननाह इदानीमपि अन्येषां मेखलां संनह्यति। यश्च नः अस्मान् युयोज अभिचारकर्मणि मेखलया योजयति। तथा वयं यस्य देवस्य प्रशिषा प्रशासनेन चरामः वर्तामहे स सर्वान्तर्यामी देवः पारं प्रारिप्सितस्य[7] कर्मणः समाप्तिम् इच्छात् इच्छतु। इच्छतेर्लेटि आडागमः। स उ स एव नः अस्मान् वि मुञ्चात्[8] शत्रुभ्यो विमुञ्चतु। शत्रुं निहत्य अस्मान् कृतार्थान् करोत्वित्यर्थः।

आहुतास्यभिहुत ऋषीणामस्यायुधम्।
पूर्वा व्रतस्य प्राश्नती वीरघ्नी भव मेखले ॥ २ ॥

आऽहुता। असि। अभिऽहुता। ऋषीणाम्। असि। आयुधम्।
पूर्वा। व्रतस्य। प्रऽअश्नती। वीरऽघ्नी। भव। मेखले ॥ २ ॥

हे मेखले त्वम् आहुता आहुतिभिः संस्कृता असि। अभिहुता संपाताभिहुता च। सा ऋषीणाम् अतीन्द्रियार्थदर्शिनां विश्वामित्रादीनाम् आयुधम् शत्रुहननसाधनम् असि। व्रतस्य कर्मणः प्रारिप्सितस्य पूर्वा प्रथमभाविनी प्राश्नती प्राश्नुवाना प्राप्नुवती। यद्वा व्रतस्येति कर्मणि षष्ठी। व्रतं क्षीरादिकं प्राश्नती प्रथमं पिबन्ती। वीरघ्नी वीराः शत्रवः तेषां हन्त्री भव।

---

१. तु. Bl; वैद्य. संपा. बाधकीः. २. भाद्रमौञ्जीं Bl. ३. °लां माब्रणाय व° Bl. ४. मा पै ५,३४,१. ५. चरामि पै. ६. °मृच्छात् पै. ७. प्रारप्सि° S'. ८. मुंचता S'.

मृत्योर॒हं ब्र॑ह्मचा॒री यदस्मि॑ नि॒र्याच॑न् भू॒तात्[1] पुरु॑षं य॒माय॑ ।
तम॒हं ब्रह्म॑णा॒ तप॑सा॒ श्रमे॑णा॒नयै॑नं॒ मेख॑लया सिनामि ॥ ३ ॥

मृत्योः । अ॒हम् । ब्र॒ह्म॒ऽचा॒री । यत् । अस्मि॑ । निः॒ऽयाच॑न् । भू॒तात् । पुरु॑षम् । य॒माय॑ ।
तम् । अ॒हम् । ब्रह्म॑णा । तप॑सा । श्रमे॑ण । अ॒नया॑ । ए॒नम् । मेख॑लया । सि॒ना॒मि॒ ॥ ३ ॥

मृत्यो॰ **वैवस्वतस्य** अहं **कर्मकरो भवामि** । यत् **यस्माद्** ब्रह्मचारी अस्मि **ब्रह्मचर्यधर्मेण दीक्षादिनियमेन तपोविशेषेण युक्तो भवामि । तस्मात् मत्कृतेन अभिचारकर्मणा नियमविशेषेण च शत्रुवधः अवश्यंभावीति मृत्योरेव अहं सहायभूतो भवामीत्यर्थः । अतो हेतोः** भूतान् **भूतग्रामात्** पुरुषम् **शत्रुं** यमाय **यमार्थं** निर्याचम्[2] **निःशेषेण याचे प्रार्थये** । तं **मारयितव्यम्** एनं **शत्रुं** ब्रह्मणा **मन्त्रेण** तपसा **अनशनादिरूपेण मत्कृतेन** श्रमेण **शरीरदण्डेन च** अनया **आबध्यमानया** मेखलया अहं सिनामि **बध्नामि । अनेन मेखलाबन्धनेन शत्रुमेव निरुद्धगतिं बध्नामीत्यर्थः । षिञ् बन्धने ।**

श्र॒द्धाया॑ दुहि॒ता तप॒सोऽधि॑ जा॒ता स्वस॒[3] ऋषी॑णां[3] भूत॒कृतां॑ ब॒भूव॑[4] ।
सा नो॑ मेखले म॒तिमा धे॑हि मे॒धामथो॑ नो धेहि॒ तप॑ इन्द्रि॒यं च॑ ॥ ४ ॥

श्र॒द्धायाः॑ । दु॒हि॒ता । तप॑सः[5] । अधि॑ । जा॒ता । स्वसा॑ । ऋषी॑णाम् । भू॒त॒ऽकृता॑म् । ब॒भूव॑ ।
सा । नः॒ । मे॒ख॒ले॒ । म॒तिम् । आ । धे॒हि॒ । मे॒धाम् । अथो॒ इति॑ । नः॒ । धे॒हि॒ । तपः॑ । इ॒न्द्रि॒यम् । च॒ ॥

श्रद्धाया दुहिता । **श्रुतिस्मृत्युदितकर्मसु आस्तिक्यबुद्धिः श्रद्धा । तस्या दुहिता पुत्री** तपसोऽधि जाता **सृष्ट्यादौ ब्रह्मणस्तपस उत्पन्ना । अधिशब्दः पञ्चम्यर्थानुवादी । उपर्यर्थो वा ।** भूतकृताम् **भूतग्रामस्य कर्तॄणाम्** ऋषीणाम् **मरीच्यत्रिप्रभृतीनां** स्वसा **भगिनी येयं मेखला इत्थं** बभूव हे मेखले सा **तादृशी त्वं** नः मतिम् **आगामिगोचरां बुद्धिम्** आ धेहि **आभिमुख्येन कुरु । तथा** मेधाम् **श्रुतधारणसमर्थां[6] बुद्धिम् आ धेहि ।** अथो **अपि च** नः **नियमविशेषम्** इन्द्रियम् **इन्द्रस्यात्मनो लिङ्गं वीर्यं** च नः **अस्माकं** धेहि **विधेहि ।**

यां त्वा॒ पूर्वे॑ भूत॒कृत॒ ऋष॑यः परिबे॒धि॒रे ।
सा त्वं परि॑ ष्वजस्व॒ मां दी॑र्घायु॒त्वाय॑ मेखले ॥ ५ ॥

याम् । त्वा॒ । पूर्वे॑ । भू॒त॒ऽकृतः॑ । ऋष॑यः । प॒रि॒ऽबे॒धि॒रे ।
सा । त्वम् । परि॑ । स्व॒ज॒स्व॒ । माम् । दी॒र्घा॒यु॒ऽत्वाय॑ । मे॒ख॒ले॒ ॥ ५ ॥

---

1. भूतान् K,Km,V. 2. वेङ्क० मेधा. द्र. 3. स्वसर्षीणां पै ५,३३,१०. 4. अत्र स्वरयोगाद् यद्रूपयोगोऽनुमेयः. 5. तपसः P. 6. श्रुतधरम् S'.

हे मेखले यां त्वा त्वां भूतकृतः पृथिव्यादिभूतग्रामस्य कर्तारः पूर्वे पूर्वभाविन ऋषयः परिबेधिरे परिबद्धवन्तः सा तादृशी त्वं मा परि ष्वजस्व आलिङ्ग । ष्वञ्ज परिष्वङ्गे । किमर्थम् । दीर्घायुत्वाय आयुषो दैर्घ्याय । अभिचारदोषपरिहारेण चिरकालजीवनायेत्यर्थः ।

अयं [1]वज्रस्तर्पयतामृतस्यावास्य[1] राष्ट्रमप[2] हन्तु जीवितम्[3] ।
शृणातु ग्रीवाः[4] प्र शृणातूष्णिहा वृत्रस्येव शचीपतिः ॥ १ ॥

अयम् । वज्रः । तर्पयताम् । ऋतस्य । अव । अस्य । राष्ट्रम् । अप । हन्तु ।
जीवितम् । शृणातु । ग्रीवाः । प्र । शृणातु । उष्णिहाः[5] । वृत्रस्यऽइव । शचीऽपतिः ॥

अयं धार्यमाणो दण्डः वज्रः शत्रूणां वर्जयिता इन्द्रस्य वज्र इव सन् ऋतस्य सत्यस्य यज्ञस्य वा सामर्थ्येन तर्पयताम् तृप्तो भवतु । अप्रतिहतशक्तिर्भवतु इत्यर्थः । स वज्रः अस्य द्वेष्यस्य राज्ञो राष्ट्रम् राज्यम् अप[6] हन्तु । अन्ततो जीवितम् जीवनं प्राणमपि अप हन्तु । तथा ग्रीवाः गलगतान्यस्थीनि शृणातु हिनस्तु छिनत्तु । उष्णिहाः उत्तरनाडीस्तत्रत्या धमनीः प्र शृणातु प्रच्छिनत्तु । शॄ हिंसायाम् । प्वादित्वाद् ह्रस्वः । वृत्रस्येव शचीपतिः । यथा शचीपतिरिन्द्रः वृत्रस्य असुरस्य ग्रीवा उष्णिहाश्च अच्छैत्सीद् एवं छिनत्तु इत्यर्थः ।

[7]अधरोऽधर उत्तरेभ्यो[7] गूढः पृथिव्या मोत्सृपत् । वज्रेणावहतः शयाम् ॥२॥

अधरःऽअधरः । उत्तरेभ्यः । गूढः । पृथिव्याः । मा । उत् । सृपत् ।
वज्रेण । अवऽहतः । शयाम् ॥ २ ॥

उत्तरेभ्यः उत्कृष्टतरेभ्यः अधरोऽधरः अतिशयेन अधरः अधोगतिर्निकृष्टतरः गूढः संवृतः पृथिव्यामन्तर्निमग्नः तस्याः पृथिव्याः सकाशात् मा उत्सृपत् मोत्सर्पतु उत्तिष्ठतु । अनेन वज्रेण अवहतः चूर्णीकृतः शयाम् शेताम् । म्रियतामित्यर्थः । शीङ् स्वप्ने । 'लोपस्त आत्मनेपदेषु' ( पा ७,१,४१ ) इति तलोपः ।

यो जिनाति तमन्विच्छ यो जिनाति तमिज्जहि ।
जिनतो वज्र त्वं[8] सीमन्तमन्वञ्चमनु पातय ॥ ३ ॥

यः । जिनाति । तम् । अनु । इच्छ । यः । जिनाति । तम् । इत् । जहि ।
जिनतः । वज्र । त्वम् । सीमन्तम् । अन्वञ्चम् । अनु । पातय ॥ ३ ॥

---

१. °यतां मतेनावास्य पै ५,३३,४.	२. °मव पै.	३. जीवम् पै.	४. स्कन्धान् पै.	५. तु. WI. सा. प्रभृ.; वैतु. शंपा. उष्णिहाः.	६. वैतु. मंपा. द्र.	७. अधरोऽधमधरोऽधमेण पै ५,३३,५.	८. सायक पै ५,३३,६.

यः शत्रुः जिनाति हानिं प्रापयति । ज्या वयोहानौ । 'ग्रहिज्या' ( पा ६,१,१६ ) इत्यादिना संप्रसारणम् । हे वज्र तं शत्रुम् अन्विच्छ । तथा यां जिनाति तम् इत् तमेव जहि मारय । जिनतः हानिं प्रापयतः शत्रोः सीमन्तम् । सीम्नोरन्तः सीमन्तः तम् । 'सीमन्तः केशेषु' इति शकन्ध्वादिषु ( पावा ६,१,९४ ) पाठात् पररूपत्वम् । शिरसो मध्यदेशम् अन्वञ्चम् अनुलोमम् अनु पातय । अनुक्रमेण विदारयेत्यर्थः ।

इति पञ्चमं सूक्तम् ।

'यदश्नामि', 'यद् गिरामि' (३) इत्याभ्यामभिचारकर्मणि अन्नमभिमन्त्र्य भुञ्जीत[1] ।

'यत् पिबामि' (२) इत्यनया उदकमभिमन्त्र्य पिबेत्[1] ।

'देवी देव्याम्', 'यां जमदग्निः' इति तृचाभ्यां केशवृद्धिकरणकामः काचमाचीफलं जीवन्तीफलं भृङ्गराजं वा संपात्य अभिमन्त्र्य वर्धनीयात् ।

तथा तत्रैव कर्मणि काचमाचीभृङ्गराजसहितोदकमाभ्यां तृचाभ्यामभिमन्त्र्य उपःकाले अवसिञ्चेत् ।

सूत्रितं हि—" 'देवी देव्याम्' (अ ६,१३६), 'या जमदग्निः' (अ ६,१३७) इति मन्त्रोक्तफलं जीव्यलकाभ्याम् अमावास्याया कृष्णवसनः कृष्णभक्षः पुरा काकसंपाताद् अवनक्षत्रेऽवसिञ्चति" ( कौसू ३१,२८ ) इति ।

यद॒श्नामि॒ बलं॑ कु॒र्व इ॒त्थं वज्र॒मा[2] द॑दे[3] ।
स्क॒न्धान॒मुष्य॑ शा॒तय॑न् वृ॒त्रस्ये॑व॒ शची॒पति॑ः ॥ १ ॥

यत् । अ॒श्नामि॑ । बल॑म् । कु॒र्वे । इ॒त्थम् । वज्र॑म् । आ । द॒दे ।
स्क॒न्धान् । अ॒मुष्य॑ । शा॒तय॑न् । वृ॒त्रस्य॑ऽइव । शची॒ऽपति॑ः ॥ १ ॥

अश्नामि भुञ्जे इति यत् तेन आत्मनो बलं कुर्वे करोमि । तेन च बलेन इत्थम् अनेन प्रकारेण वज्रम् वर्जकम् आयुधम् आ ददे गृह्णामि । इत्थम्[4] इति इदमा आदानप्रकारस्य अभिनयः । 'आङो दोऽनास्यविहरणे' ( पा १,३,२० ) इति आत्मनेपदम् । शचीपतिः इन्द्रः वृत्रस्येव अमुष्य पतन्नाम्नः अस्मच्छत्रोः स्कन्धान् स्कन्धोपलक्षितान् शरीरावयवान् शातयन्[3] छिन्दन् । 'लक्षणहेत्वोः क्रियायाः' (पा ३,२,१२६) इति हेतौ शतृप्रत्ययः । शद्लृ शातने इत्यस्मात् णिचि 'शदेरगतौ तः' ( पा ७,३,४२ ) इति तकारादेशः ।

---

१. तु. कौसू ४७,२०. २. °मनु पै ५,३३,७. ३. पातयति? पै. ४. ना- स्ति S'.

यत् पिबा॑मि सं पि॑बामि समु॒द्र इ॑व संपि॒बः ।
प्रा॒णान॒मुष्य॑ संपा॑य॒ सं पि॑बामो अ॒मुं व॒यम् ॥ २ ॥

यत् । पिबा॑मि । सम् । पि॒बा॒मि॒ । स॒मु॒द्रःऽइ॑व । स॒म्ऽपि॒बः[2] ।
प्रा॒णान् । अ॒मुष्य॑ । स॒म्ऽपाय॑ । सम् । पि॒बा॒मः॒ । अ॒मुम् । व॒यम् ॥ २ ॥

अहम् उदकं पिबामि इति यत् तेन सं पिबामि शत्रुमेव संगृह्य तदीयं रसं पिबामि । समुद्र इव यथा समुद्रः नदीमुखात् सर्वं जलम् आदाय संपिबः सम्यक् पाता भवति। स्वात्मसात् करोतीत्यर्थः । 'पाघ्राध्माधेट्दृशः शः' ( पा ३,१,१३७ ) इति पिबतेः कर्तरि शप्रत्ययः । 'पाघ्रा' ( पा ७,३,७८ ) इत्यादिना पिबादेशः । सं पिबामीति उक्तमर्थं विवृणोति—अमुष्य शत्रोः प्राणान् प्राणापानव्यानादिकांश्चक्षुरादीन्द्रियाणि च प्रथमं संपाय रसीकृत्य सम्यक् पीत्वा अन्ततः अमुम् अवयविनं शत्रुमेव वयं सं पिबामः ।

यद् गिरा॑मि सं गि॑रामि समु॒द्र इ॑व संगि॒रः ।
प्रा॒णान॒मुष्य॑ संगीर्य॑ सं गि॑रामो अ॒मुं व॒यम्[3] ॥ ३ ॥

यत् । गिरा॑मि । सम् । गि॒रा॒मि॒ । स॒मु॒द्रःऽइ॑व । स॒म्ऽगि॒रः ।
प्रा॒णान् । अ॒मुष्य॑ । स॒म्ऽगीर्य॑ । सम् । गि॒रा॒मः॒ । अ॒मुम् । व॒यम् ॥ ३ ॥

पिबतेः स्थाने गिरतिरेव विशेषः । अन्यत् पूर्ववद् योज्यम् । यत् पलादिकं गिरामि निगिरामि निगरणव्यापारेण अन्तर्नयामि । गॄ निगरणे । तुदादित्वात् शः । 'ऋत इद्धातोः' ( पा ७,१,१०० ) इति इत्त्वम् । संगिर इति सम्यङ्निगरिता । 'इगुपधज्ञा०' ( पा ३,१,१३५ ) इति किरतेर्विधीयमानः कप्रत्ययः गिरतेरपि द्रष्टव्यः। संगीर्येति । ऋत इत्त्वे 'हलि च' ( पा ८,२,७७ ) इति दीर्घः ।

दे॒वी दे॒व्याम॑धि जा॒ता[4] पृ॑थि॒व्याम॑स्योषधे[5] ।
तां त्वा॑ नितत्नि॒ केशे॑भ्यो॒ दृंहणा॑य खनामसि ॥ १ ॥

दे॒वी । दे॒व्याम् । अधि॑ । जा॒ता । पृ॒थि॒व्याम् । अ॒सि॒[6] । ओ॒ष॒धे॒ ।
ताम् । त्वा॒ । नि॒ऽत॒त्नि॒ । केशे॑भ्यः । दृंह॑णाय । ख॒ना॒म॒सि॒ ॥ १ ॥

हे ओषधे काचमाचीप्रभृतिके देवी द्योतमाना देव्याम् पृथिव्याम् अधि जाता उत्पन्ना असि भवसि । हे नितत्नि नितन्वाने न्यक्प्रसरणशीले ओषधे । 'आद-

---

१. संपिबन् सं पिबाम्यहं पिबम् पै ५,३३,८. २. °पि॒ब॒ P; °पिब P². ३. संगिरन् सं गिराम्यहं गिरम् पै ५,३३,९. ४. देव्यां जातासि पै १,६७,१. ५. °मस्योष° पै. ६. भर्सि P,J.

गमहन" ( पा ३,२,१७१ ) इति तनोतेश्छान्दसः किप्रत्ययः। लिड्वद्भावाद् द्विर्वचनम्। 'तनिपत्योश्छन्दसि' ( पा ६,४,९९ ) इति उपधालोपः । तां पूर्वोक्तगुणविशिष्टां त्वा त्वां केशेभ्यः केशानामर्थं दृंहणाय दृढीकरणाय खनामसि खनामः खननेन संगृह्णीमः।

**दृंह प्रत्नान्[1] जनयाजा॑तान्[2] जा॒तानु॑[3] वर्षी॑यसस्कृधि ॥ २ ॥**

दृंह॑ । प्र॒त्नान् । ज॒नय॑ । अजा॑तान् । जा॒तान् । ऊं॒ इति॑ । वर्षी॑यसः । कृ॒धि॒ ॥ २ ॥

प्रत्नान् पुरातनान् केशान् हे ओषधे त्वं दृंह दृढीकुरु । अजातान् अनुत्पन्नान् केशान् जनय उत्पादय । जातान् उ उत्पन्नानपि केशान् वर्षीयसः प्रवृद्धतमान् आयततमान् कृधि कुरु।

**यस्ते॒ केशो॑ऽव॒पद्य॑ते॒[4] समू॑लो॒ यश्च॑ वृ॒श्च्यते॑[5] ।**
**इ॒दं॑[6] तं॑[7] वि॒श्वभे॑षज्या॒ऽभि षि॑ञ्चामि वी॒रुधा॑ ॥ ३ ॥**

यः । ते॒ । केशः॑ । अ॒व॒ऽपद्य॑ते । स॒ऽमू॑लः । यः । च॒ । वृ॒श्च्यते॑ ।
इ॒दम् । तम्[8] । वि॒श्वऽभे॑षज्या । अ॒भि । सि॒ञ्चा॒मि॒ । वी॒रुधा॑ ॥ ३ ॥

हे केशदृंहणकाम[9] ते तव यः केशः अवपद्यते मध्ये भग्नो भूमौ निपतति समूलः मूलसहितः सन् यश्च केशः वृश्च्यते छिद्यते । इदम् [10]"अनेन प्रयोगेण"[10] तं सर्वं केशं विश्वभेषज्या सर्वस्य केशाश्रितरोगजातस्य निवर्तयित्र्या वीरुधा ओषध्या अभि षिञ्चामि अभितः सिञ्चामि आर्द्रीकरोमि । अस्माद् औषधप्रयोगाद् मन्त्रसामर्थ्याच्च[11] सर्वं केशाश्रितरोगजातं निवर्तत इत्यर्थः।

इति त्रयोदशेऽनुवाके षष्ठं सूक्तम्।

'यां जमदग्निः' इति तृचस्य पूर्वतृचेन सह उक्तो विनियोगः । [12]सूत्रमपि तत्रैवोदाहृतम्[12]।

'त्वं वीरुधाम्' ( अ ६,१३८ ) इति पञ्चर्चेन अभिचारकर्मणि सूत्रोक्तप्रकारेण मूत्रपुरीषस्थानं बाधकेन[13] काष्ठेन हन्यात् ( तु. के. कौसू ४८,३२ )।

---

१. प्रत्नां Km,R; जाताम् पै १,६७,२. २. °जातां Km,R. ३. ये जातास्तान् पै. ४. केशो अवततम् पै १,६७,३. ५. दृश्यते पै. ६. सर्वं पै. ७. तां A,B*,K,Km,V,Cs. ८. ताम् > तम् Cp. ९. °दृहण° S'. १०. अनेन° S'. ११. ममप्यांच S'. १२. अपि तत्रैवो° नास्ति S'. १३. वेधकेन S'.

यां ज॒मद॑ग्नि॒रख॑नद् दुहि॒त्रे के॑श॒वर्ध॑नीम् ।
तां वी॒तह॑व्य॒ आभ॑र॒दसि॑तस्य गृ॒हेभ्यः॑ ॥ १ ॥

याम् । ज॒मत्ऽअ॑ग्निः । अख॑नत् । दु॒हि॒त्रे । के॒श॒ऽवर्ध॑नीम् ।
ताम् । वी॒तऽह॑व्यः । आ । अ॒भ॒र॒त् । असि॑तस्य । गृ॒हेभ्यः॑ ॥ १ ॥

'जमत्' इति ज्वलतिकर्मसु ( निघ १,१७ ) पाठात् जमच्छब्दो दीप्तिवचनः। जमन्तः ज्वलन्तः अग्नयो यस्य स जमदग्निः महर्षिः दुहित्रे आत्मजाया अर्थे केशवर्धनीम् केशाभिवृद्धिकरीं याम् ओषधिम् अखनत् खननेन उद्धृतवान् ताम् ओषधिं वीतहव्यो वीतहव्याख्यो महर्षिः केशवृद्ध्यर्थम् असितस्य कृष्णकेशस्य एतत्संज्ञस्य मुनेर्गृहेभ्यः गृहसकाशाद् आ अभरत् आहरत् । 'हृग्रहोर्भः' (पावा ८,२,३२) इति भत्वम् ।

अ॒भीशु॑ना॒ मेया॑[1] आस॒न्[2] व्या॒मेना॑नु॒मेयाः॑[3] ।
केशा॑[4] न॒डा इ॑व[5] वर्ध॑न्तां[6] शी॒र्ष्णस्ते॑ असि॒ताः[7] परि॑ ॥ २ ॥

अ॒भीशु॑ना । मेयाः॑ । आ॒स॒न् । वि॒ऽआ॒मेन॑ । अ॒नु॒ऽमेयाः॑ ।
केशाः॑ । न॒डाःऽइ॑व । व॒र्ध॑न्ताम् । शी॒र्ष्णः । ते॒ । अ॒सि॒ताः । परि॑ ॥ २ ॥

हे केशाभिवृद्धिकाम त्वदीयाः केशाः प्रथमम् अभीशुना । अङ्गुलिनामैतत् । जातावेकवचनम् । अङ्गुलिभिः मेयाः मातव्याश्चतुरङ्गुलाः षडङ्गुला इत्येवं परिच्छेद्या आसन् । ततो व्यामेन प्रसारितहस्तद्वयपरिमाणेन अनुमेयाः अनु पश्चात् मेयाः मातव्या आसन् । 'चतुररत्निर्व्यामः' ( बौशु १:८ ) इति याज्ञिकाः । हे पुरुष ते तव शीर्ष्णः शिरसः परि परितः असिताः कृष्णवर्णाः केशाः नडा इव वर्धन्ताम् । नडास्तृणविशेषाः । ते यथा तटाकोदकप्रान्तेषु उत्पन्नाः संहताः सन्तः शीघ्रं वर्धमाना[8] द्राघीयांसो भवन्ति तथा केशा अपि वर्धन्ताम् इत्यर्थः ।

दृं॒ह मूल॒माग्रं॑ यच्छ॒[9] वि मध्यं॑ यामयौषधे ।
केशा॑ न॒डा इ॑व वर्ध॑न्तां शी॒र्ष्णस्ते॑ असि॒ताः परि॑ ॥ ३ ॥

दृं॒ह । मूल॑म् । आ । अग्र॑म् । य॒च्छ॒ । वि । मध्य॑म् । य॒म॒य॒ । ओ॒ष॒धे॒ ।
केशाः॑ । न॒डाःऽइ॑व । व॒र्ध॑न्ताम् । शी॒र्ष्णः । ते॒ । अ॒सि॒ताः । परि॑ ॥ ३ ॥

हे ओषधे केशानां मूलं दृंह दृढीकुरु। यथा नोत्खिद्यन्ते तथा कुर्वित्यर्थः।

---

१. मेयो पै १,६७,४.   २. भस्तु पै.   ३. 'मेयः पै.   ४. केशः पै.
५. न न स्वैर्! पै.   ६. वर्धतां पै.   ७. असितम् पै.   ८. वर्तमाना S'.   ९. यच्छा पै १,३८,४.

तथा केशानाम् अग्रम् आ यच्छ आयतम् आयामयुक्तं कुरु । एवं केशानां मध्यं वि यमय विविधं यमय नियमय स्थिरीकुरु। उत्तरोऽर्धर्चो व्याख्यातः ।

त्वं वीरुधां श्रेष्ठतमाऽभिश्रुताऽस्योषधे ।
इमं मे अद्य पूरुषं [1]क्लीबमोपशिनं कृधि ॥ १ ॥

त्वम् । वीरुधाम् । श्रेष्ठऽतमा । अभिऽश्रुता । असि । ओषधे ।
इमम् । मे । अद्य । पुरुषम् । क्लीबम् । ओपशिनम् । कृधि ॥ १ ॥

हे ओषधे निर्वीर्यकारिन् ओषधिविशेष वीरुधाम् अन्यासां लतानां त्वं श्रेष्ठतमा अतिशयेन प्रशस्या । प्रशस्यशब्दाद् इष्ठनि 'प्रशस्यस्य श्रः' (पा ५,३,६०) इति श्रादेशः । पुनः श्रैष्ठ्यप्रकर्षविवक्षायां तमप् । अत एव हे ओषधे त्वम् अभिश्रुता अभितः सर्वतः प्रख्याता अप्रतिहतवीर्यतया प्रसिद्धा असि भवसि। अद्य इदानीं मे मदीयम् इमं पुरुषम् द्वेष्यं पुरुषं क्लीबम् निर्वीर्यं सन्तम् ओपशिनम् । उपशेते अस्मिन् पुरुष इति ओपशः स्त्रीव्यञ्जनम्। तद्वन्तं कृधि कुरु। नपुंसकत्वे हि पुंस्त्वशङ्कापि स्यात् सापि अस्य मा भूद् इत्यर्थः ।

क्लीबं[2] कृध्योपशिनमथो कुरीरिणं कृधि ।
[3]अथास्येन्द्रो[4] ग्रावभ्यामुभे[3] भिनत्त्वाण्डयौ[5] ॥ २ ॥

क्लीबम् । कृधि । ओपशिनम् । अथो इति । कुरीरिणम् । कृधि ।
अथ । अस्य । इन्द्रः । ग्रावऽभ्याम् । उभे इति । भिनत्तु । आण्डयौ[5] ॥ २ ॥

उक्त एवार्थः अनूद्य विधीयते—हे ओषधे मदीयं शत्रुं क्लीबम् नपुंसकम् ओपशिनम् स्त्रीत्वोपेतं कृधि कुरु । अथो अपि च कुरीरिणम् कुरीराः केशाः तद्वन्तं कृधि कुरु। पुंस्त्वापगमेन स्त्रीत्वागतात् तद्वत् प्रशस्तकेशयुक्तं कुर्वित्यर्थः ।

'स्तनकेशवती स्त्री स्यात् लोमशः पुरुषः स्मृतः (पाम ४,१,३)' ।

इति हि व्यक्तिविदः । अत एव सिनीवाल्याः प्रशंसार्थो मन्त्र इत्थमाम्नातः—'सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा' ( तै ४,१,५,३ ) इति । अथ अनन्तरम् अस्य द्वेष्यस्य उभे आण्डयौ वीर्यस्य आश्रयभूतौ अण्डौ इन्द्रः ग्रावभ्याम् पाषाणाभ्यां भिनत्तु मर्दयतु । यथासौ पुत्रोत्पादनक्षमो न भवेत् तथा करोत्वित्यर्थः ।

---

१. क्लीब' पै १,६८,२. २. क्लोबं पै. ३. उभाभ्यामस्य पै. ४. °स्मा मिन्द्रो पै. ५. °ण्डौ पै.

'क्लीवं क्लीवं' त्वाऽकरं वध्रे वध्रिं त्वाऽकरमरसारसं त्वाऽकरम् ।
कुरीरमस्य शीर्षणि कुम्बं' चाधिनिदध्मसि' ॥ ३ ॥

क्लीवं । क्लीबम् । त्वा । अकरम् । वध्रे । वध्रिम् । त्वा । अकरम् । अरस । अरसम् । त्वा । अकरम् ।
कुरीरम् । अस्य । शीर्षणि । कुम्बम् । च । अधिऽनिदध्मसि ॥ ३ ॥

हे क्लीव द्वेष्य त्वा त्वाम् अनेन कर्मणा क्लीबम् अकरम् अकार्षम् । हे वध्रे। निसर्गपण्डको वध्रिः । हे तथाविध शत्रो त्वा त्वां वध्रिम् स्वभावतः पण्ढम् अकरम् अकार्षम् । हे अरस । रसो रेतः । हे अरेतस्क शत्रो त्वा त्वाम् अरसम् अरेतस्कम् अकरम् अकार्षम् । यस्माद् एवं तस्माद् अस्य द्वेष्यस्य नपुंसकीभूतस्य शीर्षणि शिरसि कुरीरम् केशजालं कुम्बम् तदाभरणं च स्त्रीणाम् असाधारणम् अधिनिदध्मसि उपरि निक्षिपामः । यद् आह आपस्तम्बः—'अत्र पत्नीशिरसि कुम्बकुरीरम् अध्यूहते' ( आपश्रौ १०,९,५ ) इति ।

ये ते नाड्यौ देवकृते ययोस्तिष्ठति वृष्ण्यम् ।
ते ते भिनद्मि शम्ययाऽमुष्या अधि मुष्कयोः ॥ ४ ॥

ये इति । ते । नाड्यौ । देवकृते इति देवऽकृते । ययोः । तिष्ठति । वृष्ण्यम् ।
ते इति । ते । भिनद्मि । शम्यया । अमुष्याः । अधि । मुष्कयोः ॥ ४ ॥

देवकृते देवेन विधात्रा निर्मिते ते त्वदीये ये नाड्यौ रेतोवहे । ययोर्नाड्योः वृष्ण्यम् । वृषा सेचनसमर्थः पुरुषः । तत्संबन्धि वीर्यं वृष्ण्यम् तिष्ठति आश्रित्य वर्तते ते 'शुक्राधारभूते देवनिर्मिते नाड्यौ ते तव मुष्कयोः अण्डयोरुपरि स्थिते अमुष्याः प्रसिद्धायाः शिलाया अधि उपरि शम्यया लकुटेन भिनद्मि पेषयामि ।

यथा नडं कशिपुने स्त्रियो भिन्दन्त्यश्मना ।
एवा भिनद्मि ते शेपोऽमुष्या अधि मुष्कयोः' ॥ ५ ॥

यथा । नडम् । कशिपुने । स्त्रियः । भिन्दन्ति । अश्मना ।
एव । भिनद्मि । ते । शेपः । अमुष्याः । अधि । मुष्कयोः ॥ ५ ॥

---

१. क्लीव क्लीवं पै १,६८,४. २. कुबं A,B,D,K; कुम्भं P³, पै [मूको.]. ३. चावनि° पै. ४. शुक्रा° S'. ५. मुष्कौ तस्मै त्वामवसे हुवे पै १,६८,१.

स्त्रियः कशिपुने **कटाय कटं निर्मातुं** यथा **येन प्रकारेण** नडम् **कटोपादानं तृणविशेषम्** अश्मना भिन्दन्ति **आघ्नन्ति एव एवम् हे शत्रो ते तव** मुष्कयोः **अण्डयोः वर्तमानं** शेपः अमुष्याः **शिलाया** अधि **उपरि अश्मना** भिनद्मि **आहन्मि। अनेन कर्मणा त्वां निर्वीर्यं करोमीति तात्पर्यम्**[1]।

**इति त्रयोदशेऽनुवाके सप्तमं सूक्तम्।**

'न्यस्तिका' **इति सूक्तेन पञ्चर्चेन स्त्रीवशीकरणकर्मणि** 'भगेन मा सम्'[2] **( अ ६,१२९ ) इत्यत्रोक्तानि कर्माणि कुर्यात्। सूत्रं तु तत्रैव उदाहृतम्।**

'यौ व्याघ्रौ' **इति तृचेन कुमारस्य कुमार्या वा प्रथमम् उपरितनदन्तजननिमित्तदोषपरिहारार्थं व्रीहियवतिलानामन्यतमं जुहुयात्।**

**तथा तत्रैव कर्मणि व्रीहियवमाषतिलान् एकीकृत्य अनेनाभिमन्त्र्य उपजातदन्ताभ्यां दंशयेत्।**

**तथा तत्रैव कर्मणि अनेन स्थालीपाकं संपात्य अभिमन्त्र्य उक्तं शिशुम् आशयेत्।**

**सूत्रितं हि**—"यस्योत्तमदन्तौ पूर्वौ जायेते 'यौ व्याघ्रौ' ( अ६,१४० ) इत्यावपति। मन्त्रोक्तान् दंशयति। शान्त्युदकश्रृतम् आदिष्टानाम् आशयति। पितरौ [3]च" ( कौसू ४६,४३-४६ ) इति[3]।

**न्युस्तिका रुरोहिथ सुभगंकरणी[4] मर्म।**
**शतं तव प्रतानास्त्रयस्त्रिंशन्नितानाः।**
**तया सहस्रपर्ण्या हृदयं शोषयामि ते ॥ १ ॥**

निऽअस्तिका। रुरोहिथ। सुभगम्ऽकरणी। मर्म। शतम्। तव। प्रऽतानाः। त्रयःऽत्रिंशत्। निऽतानाः। तया। सहस्रऽपर्ण्या। हृदयम्। शोषयामि। ते ॥ १ ॥

**हे शङ्खपुष्पिके** न्यस्तिका **दौर्भाग्यलक्षणं नितराम् अस्यन्ती त्वम्।** असु क्षेपणे **इत्यस्माद् औणादिकस्तिकन्प्रत्ययः**[5]। रुरोहिथ **प्रादुर्भूताऽसि उत्पन्ना भवसि। रुह बीजजन्मनि प्रादुर्भावे च। क्रादिनियमाद् इट्। किं कुर्वती।** मम सुभगंकरणी **सौभाग्यं कुर्वती।** 'आढ्यसुभग' ( पा ३,२,५६ ) **इत्यादिना करोतेः ख्युन्प्रत्ययः।** 'खित्यनव्ययस्य' ( पा ६,३,६६ ) **इति पूर्वपदस्य मुम्।** 'टिड्ढाणञ्' ( पा ४,१,१५) **इति ङीप्। हे ओषधे** तव शतम् **शतसंख्याकाः** प्रतानाः **प्रतायन्ते विस्तार्यन्ते इति प्रतानाः शाखाः।** 'हलश्च' ( पा ३,३,१२१ ) **इति तनोतेर्घञ्**

---

१. तात्पर्यम् S'. २. वृद्ध. मंत्र. द्र. ३. चेति S'. ४. सुभगं° A,B, B[a],D,R,S[m],P,C[s],W,M. ५. एवं स्वरो न सिध्यति.

प्रत्ययः । शतायुषः पुरुषस्य उपकाराय प्रताना अपि शतसंख्याका उत्पद्यन्त इत्यर्थः । नितानाः न्यग्विस्तार्यमाणाः प्ररोहाः त्रयस्त्रिंशत् त्रयस्त्रिंशत्संख्याकाः संभवन्ति । त्रयस्त्रिंशत्संख्यानां देवानाम् उपकारकत्वात् तत्संख्यया नितानाः प्ररोहन्तीत्यर्थः । त्रयश्च त्रिंशच्च त्रयस्त्रिंशत् । 'त्रेस्त्रयः' ( पा ६,३,४८ ) इति पूर्वपदस्य त्रिशब्दस्य त्रयस् आदेशः स च आद्युदात्तः । 'संख्या' (पा ६,२,३५) इति पूर्वपदप्रकृतिस्वरत्वम् । हे कामिनि तया तथाविधया प्रागुदीरितमाहात्म्योपेतया सहस्रपर्ण्या सहस्रसंख्याकपत्रोपेतया ते त्वदीयं हृदयम् अहं शोषयामि कामाग्निना परितप्तं करोमि । शुष शोषणे ।

शुष्य॑तु मयि॑ ते॒ हृद॑यमथो॑ शुष्यत्वा॒स्य॑म् ।
अथो॑ नि शु॑ष्य॒ मां काम॑ेनाथो॑ शुष्का॑स्या चर ॥ २ ॥

शुष्य॑तु । मयि॑ । ते॒ । हृद॑यम् । अथो॑ इति॑ । शु॒ष्य॒तु॒ । आ॒स्य॑म् ।
अथो॑ इति॑ । नि । शु॒ष्य॒ । माम् । काम॑ेन । अथो॑ इति॑ । शुष्क॑ऽआस्या । च॒र॒ ॥ २ ॥

हे कामिनि मयि मद्विषये ते तव हृदयम् जीवायतनं हृदयस्थानं शुष्यतु शुष्कं परितप्तं भवतु । अथो अपि च आस्यम् त्वदीयं मुखमपि शुष्यतु शुष्कं द्रवरहितं भवतु । अथो अपि च माम् उद्दिश्य कामेन अभिलाषेण नि शुष्य नितरां परितप्यस्व । अथो अपि च सा त्वं शुष्कास्या द्रवरहिताननी सती चर माम् अभिगच्छ ।

सं॒वन॑नी समु॒ष्पला॑[1] बभ्रु॒ कल्या॑णि॒ सं नु॑द ।
अ॒मूं[2] च॒ मां च॒ सं नु॑द स॒मानं॒ हृद॑यं कृधि ॥ ३ ॥

स॒म्ऽवन॑नी । स॒म्ऽउ॒ष्प॒ला[3] । बभ्रु॑ । कल्या॑णि । सम् । नु॒द॒ । अ॒मूम् ।
च॒ । माम् । च॒ । सम् । नु॒द॒ । स॒मान॑म् । हृद॑यम् । कृ॒धि॒ ॥ ३ ॥

हे बभ्रु बभ्रुवर्णे पीतवर्णे हे कल्याणि मङ्गलकारिणि ओषधे संवननी संवननं वशीकरणं तद्वती । संपूर्वाद् वनतेः करणे ल्युट् । टित्त्वान्ङीप् । समुष्पला सम्यक् उप्तफला सती सं नुद मत्समीपं तां स्त्रियं नुद प्रेरय । तदनन्तरम् अमूं च कामिनीं मां कामुकं च सं नुद संयोजय सम्यग् मिथुनीभावय । आवयोः हृदयं समानम् एकं कृधि कुरु ।

यथो॑द॒कमप॑पुषोऽप॒शुष्य॑त्या॒स्य॑म्[4] ।
ए॒वा नि शु॑ष्य॒ मां काम॑ेनाथो॑ शुष्का॑स्या चर ॥ ४ ॥

---

१. समुम्पुला WM.,RW. २. अमुं P³,M,I. ३. °उप्पुला J,WM.,WI.
४. °ष्यंत्युा° K^m.

यथा । उदकम् । अपपुषः[1] । अपऽशुष्यति । आस्यम् ।
एव । नि । शुष्य । माम् । कामेन । अथो इति । शुष्कऽआस्या । चर ॥ ४ ॥

यथा येन प्रकारेण उदकम् अपपुषः जलम् अपीतवतस्तृषार्तस्य पुरुषस्य आस्यम् मुखम् अपशुष्यति एव एवम् हे कामिनि माम् उद्दिश्य कामेन नि शुष्य परितप्ता भव। अन्यत् पूर्ववत्। अपपुष इति। पा पाने इत्यस्मात् लिटः क्वसुः। ङसि 'वसोः सम्प्रसारणम्' (पा ६,४,१३१) इति संप्रसारणम्। 'आतो लोप इटि च' (पा ६,४,६४) इति आकारलोपः। न च तस्मिन् कर्तव्ये संप्रसारणस्य 'असिद्धवदत्राभात्' (पा ६,४,२२) इति असिद्धवद्भावः। अत्रग्रहणं समानाश्रयप्रतिपत्त्यर्थम् इत्युक्तत्वात्। ङसि संप्रसारणं क्वसौ आल्लोप इति अनयोर्व्याश्रयत्वात्। 'न लोकाव्यय°' (पा २,३,६९) इति कर्मणि षष्ठ्याः प्रतिषेधः।

यथा नकुलो विच्छिद्य संदधात्यहिं पुनः ।
एवा कामस्य विच्छिन्नं सं धेहि वीर्यावति ॥ ५ ॥

यथा । नकुलः । विऽछिद्य । सम्ऽदधाति । अहिम् । पुनः ।
एव । कामस्य । विऽछिन्नम् । सम् । धेहि । वीर्यऽवति ॥ ५ ॥

नास्य कुलम् अस्तीति नकुलः प्राणी। 'नभ्राण्नपात्' (पा ६,३,७५) इत्यादिना नञः प्रकृतिभावः। स यथा अहिम् सर्पं विच्छिद्य खण्डयित्वा पुनः संदधाति संयोजयति एव एवम् हे वीर्यावति अतिशयितवीर्ययुक्ते ओषधे कामस्य विच्छिन्नम् स्त्रियाः पराङ्मुखत्वेन कामकृतविकारेण अवखण्डितं मां सं धेहि पुनः संयोजय।

यौ व्याघ्रावर्वरूढौ[2] जिघत्सतः पितरं मातरं च ।
तौ दन्तौ ब्रह्मणस्पते शिवौ कृणु[†] जातवेदः[3] ॥ १ ॥

यौ । व्याघ्रौ । अवऽरूढौ । जिघत्सतः । पितरम् । मातरम् । च ।
तौ । दन्तौ । ब्रह्मणः । पते । शिवौ । कृणु । जातऽवेदः ॥ १ ॥

व्याघ्रौ व्याघ्रवत् हिंसकौ यौ दन्तौ उपरितनपङ्क्तिस्थौ अवरूढौ अवाङ्मुखं प्ररूढौ प्रथमत उत्पन्नौ पितरं मातरं च जिघत्सतः अत्तुं भक्षयितुम् इच्छतः। अद भक्षणे। 'लुङ्सनोर्घस्लृ' (पा २,४,३७) इति घस्लादेशः। 'सः स्यार्धधातुके' (पा ७,४,४९) इति तत्वम्। हे ब्रह्मणस्पते मन्त्रस्याधिपते हे जातवेदः

---

1. अपपुषः P³. 2. 'व्याघ्रवाग्व्यौ' पै १९,४९,९. 3. मा हिंसिष्टं पितरं मातरं च पै. † कृणुहि P³.M.W.

जातानां वेदितरग्ने तौ तथाविधौ दन्तौ शिवौ सुखकरौ मातापित्रोरहिंसकौ कृणु कुरु।

व्रीहिमत्तं 'यवमत्तमथो माषमथो' तिलम्।
एष' वां भागो निहितो रत्नधेयाय' दन्तौ मा हिंसिष्टं पितरं मातरं च ॥२॥

व्रीहिम्। अत्तम्। यवम्। अत्तम्। अथो इति। माषम्। अथो इति। तिलम्। एषः। वाम्। भागः। निऽहितः। रत्नऽधेयाय। दन्तौ। मा। हिंसिष्टम्। पितरम्। मातरम्। च ॥ २ ॥

हे प्रथमोत्पन्नौ उपरितनदन्तौ व्रीहिम् अत्तम् भक्षयतं तथा यवम् अत्तम् भक्षयतम्। अथो अपि च माषम् अत्तम्। अथो अपि च तिलम् अत्तम्। हे दन्तौ रत्नधेयाय रमणीयफलाय वाम् युवयोः एषः व्रीहियवादिलक्षणो भागो निहितः निक्षिप्तः। तेन तृप्तौ युवाम् अस्य शिशोः पितरं मातरं च मा हिंसिष्टम् मा वधिष्टम्।

'उपहूतौ सयुजौ' स्योनौ दन्तौ सुमङ्गलौ।
अन्यत्र वां घोरं तन्वः' परैतु दन्तौ मा हिंसिष्टं पितरं मातरं च ॥ ३ ॥

उपऽहूतौ। सऽयुजौ। स्योनौ। दन्तौ। सुऽमङ्गलौ।
अन्यत्र। वाम्। घोरम्। तन्वः। परा। एतु। दन्तौ। मा। हिंसिष्टम्। पितरम्। मातरम्। च ॥३॥

उपहूतौ समीपम् आहूतौ देवेन अनुज्ञातौ वा सयुजौ समानं युञ्जानौ मिश्रभूतौ स्योनौ सुखकरौ सुमङ्गलौ सुशोभनौ एवंगुणविशिष्टौ तौ दन्तौ भवताम्। हे दन्तौ वाम् युवयोः घोरम् क्रूरं कर्म मातापितृहननलक्षणम् अन्यत्र अन्यस्मिन्' देशे तन्वाः' शिशुशरीरात् परैतु परागच्छतु। गतमन्यत्।

इति त्रयोदशेऽनुवाके अष्टमं सूक्तम्।

'वायुरेनाः' इति तृचेन पुष्टयर्थचित्राकर्मणि वृक्षशाखादिसंभारान् संपातयेत्।
तत्रैव कर्मणि 'वायुरेनाः' इति ऋचा प्रभाते उदकधारोपेतया शाखया गां परिक्रामेत्।

तत्रैव कर्मणि 'लोहितेन स्वधितिना' इति मन्त्रेण सूत्रोक्तरीत्या वत्सकर्णं छिन्द्यात्।

---

१. °त्तं माषमत्तमथो पै १९,४६,१०. २. स पै. ३. रत्नधेयं पै. ४. अघोरौ सयुजा संविदानौ पै १९,४६,११. ५. तन्वः A.V; तन्वाः R; तन्वः B[a],S[m]. ६. अस्मिन् S'. ७. कौसू. ३१. ६.

तत्रैव कर्मणि 'यथा चक्रुः' (३) इति ऋचा कर्णलोहितं दधिमधुघृतोदकमिश्रितं कृत्वा संपात्य अभिमन्त्र्य वत्सं प्राशयेत्।

आह च कौशिकः—"'वायुरेनाः' इति युक्तयोः (अ ६,४,१;६,१४१ [वृ. दा.]) चित्राकर्मनिशाया संभारान् संपातवतः करोति। अपरेद्युः 'वायुरनाः' (१) इति शाखयोदकधारया गाः परिक्रामति। प्रथमजस्य शकलम् अवधायौदुम्बरेणासिना 'लोहितेन' (२) इति मन्त्रोक्तम्। 'यथा चक्रुः' (३) इतीक्षुकाशकाण्डया[1] लोहितं निर्मृज्य[2] रसमिश्रम् अश्नाति। सर्वम् औदुम्बरम्" (कौसू २३,१२-१६) इति।

'उच्छ्रयस्व' इति तृचेन पुष्ट्यर्थबीजवापनकर्मणि व्रीह्यादिबीजम् आज्यमिश्रं कृत्वा अभिमन्त्र्य प्रत्यृचं तिस्रो मुष्टीर्लाङ्गलपद्धतौ निधाय पांसुभिराच्छादयेत्। तद् उक्तं कौशिकेन—"'उच्छ्रयस्व' (अ ६,१४२) इति बीजोपहरणम्। आज्यमिश्रान् यवान् [3]उर्वरया कृष्टे[3] फालेन उद्धृह्य अन्वृचं कार्शान् निनयति निवपति" (कौसू २४,१;२) इति।

वायुरेनाः समाकरत् त्वष्टा पोषाय ध्रियताम्।
इन्द्र आभ्यो अधि ब्रवद् रुद्रो भूम्ने चिकित्सतु ॥ १ ॥

वायुः। एनाः। सम्ऽआकरत्। त्वष्टा। पोषाय। ध्रियताम्।
इन्द्रः। आभ्यः। अधि। ब्रवत्। रुद्रः। भूम्ने। चिकित्सतु ॥ १ ॥

एनाः अस्मदीया गाः वायुर्देवः समाकरत् समाकरोतु संघशः आनयतु। वायुर्हि तेषां रक्षिता। तथा च तैत्तिरीयकम्—'वायवः स्थेत्याह। वायुर्वा अन्तरिक्षस्याध्यक्षाः। अन्तरिक्षदेवत्याः खलु वै पशवः। वायव एवैनान् परिददाति' (तैब्रा ३,२,१,३;४) इति। तथा त्वष्टा देवः पोषाय अभिवृद्धये इमा गाः ध्रियताम् धारयतु। स एव हि पशूनामभिवृद्धेः कर्ता। 'त्वष्टा वै पशूनां मिथुनानां रूपकृत्' (तैं १,७,४,५) इति श्रुतेः। धृङ् अवस्थाने। तुदादित्वात् शः। 'रिङ् शयग्लिङ्क्षु' (पा ७,४,२८) इति रिङ् आदेशः। आभ्यो गोभ्यः इन्द्रो देवानामधिपतिः अधि ब्रवत् अधिब्रवीतु आधिक्यं वदतु। रुद्रः पशूनामभिमन्ता पीडाकरो देवः भूम्ने बहुत्वाय चिकित्सतु। पादास्यादिरोगपरिहारेण वर्द्धाः करोतु इत्यर्थः। इति भूम्न इति। बहुशब्दाद् इमनिचि 'बहोर्लोपो भू च बहोः' (पा ६,४,१५८) इति इमनिच आदिवर्णलोपो बहोर्भूभावश्च। चिकित्सतु। कित ज्ञाने। 'गुप्तिज्किद्भ्यः सन्' (पा ३,१,५) इति व्याधिप्रतीकारलक्षणेऽर्थे कितेः सन्प्रत्ययः।

लोहितेन स्वधितिना मिथुनं कर्णयोः कृधि[4]।
अकर्तामश्विना लक्ष्म तदस्तु प्रजया बहु ॥ २ ॥

---

१. 'तीक्ष्णकाण्ड' S'. २. निमृज्य S'. ३. 'रायाङ्' S'. ४. कृधि तै १९,२१,७. ५. कृतम् मैत्रा १,८,७.

लोहितेन । स्वऽधितिना । मिथुनम् । कर्णयोः । कृधि ।
अर्कर्ताम् । अश्विना । लक्ष्म । तत् । अस्तु । प्रऽजया । बहु[1] ॥ २ ॥

हे गोपाल लोहितेन लोहितवर्णेन ताम्रविकारेण स्वधितिना शस्त्रेण कर्णयोः वत्ससंबन्धिनोः मिथुनम् स्त्रीपुंसात्मकम् चिह्नं कृधि कुरु । अश्विना अश्विनौ देवौ तादृशं[2] लक्ष्म चिह्नम् अकर्ताम् कुरुताम् । करोतेश्छान्दसो लुङ् । 'बहुलं छन्दसि' ( पा २,४,७३ ) इति विकरणस्य लुक्[3] । तत् तथाविधं लक्ष्म प्रजया पुत्रपौत्रादिरूपया बहु बहुलं समृद्धम् अस्तु ।

यथा चक्रुर्देवासुरा[4] यथा मनुष्या उत ।
एवा सहस्रपोषाय कृणुतं लक्ष्माश्विना ॥ ३ ॥

यथा । चक्रुः । देवऽअसुराः । यथा । मनुष्याः । उत ।
एव । सहस्रऽपोषाय । कृणुतम् । लक्ष्म । अश्विना ॥ ३ ॥

देवाश्च असुराश्च देवासुराः । ते यथा पशूनां लक्ष्म लक्षणं कर्णयोः स्वधितिना चक्रुः कृतवन्तः । मनुष्या उत मानवा अपि यथा चक्रुः कृतवन्तः । हे अश्विना अश्विनौ एव एवं सहस्रपोषाय गवामपरिमिताभिवृद्धये लक्ष्म चिह्नं कृणुतम् कुरुतम् ।

उच्छ्रयस्व बहुर्भव स्वेन महसा यव ।
मृणीहि विश्वा पात्राणि मा त्वा दिव्याशनिर्वधीत् ॥ १ ॥

उत् । श्रयस्व । बहुः । भव । स्वेन । महसा । यव ।
मृणीहि । विश्वा । पात्राणि । मा । त्वा । दिव्या । अशनिः । वधीत् ॥ १ ॥

हे यव धान्य त्वम् उच्छ्रयस्व उत्तिष्ठ प्ररूढः सन् उन्नतो भव । तथा बहुः अनेकविधो भव । स्वेन आत्मीयेन महसा तेजसा रसवीर्येण सह विश्वा विश्वानि सर्वाणि पात्राणि [5]कुसूलकोष्ठागारादीनि मृणीहि[6] । वर्णव्यत्ययः । पृणीहि पूरय । दिव्या दिवि भवा अशनिः त्वा त्वां मा वधीत् मा हिंसीत् ।

आशृण्वन्तं यवं देवं यत्र त्वाऽच्छावदामसि ।
तदुच्छ्रयस्व द्यौरिव समुद्र इवैध्यक्षितः ॥ २ ॥

---

१. बहु P². २. तादृशौ S'. ३. बाहुलकादयो लुगित्यर्थः. ४. देवसुरा B; देवासुरा Sᵐ. ५. गुसूल° S'. ६. वैतु. मंपा. द्र.

आऽशृण्वन्तम् । यवम् । देवम् । यत्र । त्वा । अच्छऽआवदामसि ।
तत् । उत् । श्रयस्व । द्यौःऽईव । समुद्रःऽईव । एधि । अक्षितः ॥ २ ॥

आश्रृण्वन्तम् आभिमुख्येन अस्मदुक्तमाकर्णयन्तं यवम् यवधान्यरूपेण अवस्थितं देवं तत्र[1] तस्यां भूमौ त्वा त्वाम् अच्छवदामसि[1] आभिमुख्येन वदामः प्रार्थयामहे । तत् तत्र भूम्यां द्यौरिव आकाश इव उच्छ्रयस्व उन्नतो भव । सस्यावस्थायाम् उक्तम् । फलावस्थायामपि आह— समुद्र इव अक्षितः अक्षीणः क्षयरहितः एधि भव । अस्तेर्लोटि सिपो हिरादेशः । श्नसोरल्लोपे 'घ्वसोरेद्धौ' (पा ६,४,११९) इति एत्वम् । तस्य 'असिद्धवदत्राभात्' (पा ६,४,२२) इति असिद्धत्वात् झलन्तलक्षणं हेर्धित्वम् । अक्षित इति । क्षि क्षये । 'निष्ठायामण्यदर्थे' (पा ६,४,६०) इति पर्युदस्तत्वाद् दीर्घाभावात् 'क्षियो दीर्घात्' (पा ८,२,४६) इति नत्वस्यापि अभावः ।

अक्षितास्त उपसदोऽक्षिताः सन्तु राशयः ।
पृणन्तो अक्षिताः सन्त्वत्तारः सन्त्वक्षिताः ॥ ३ ॥

अक्षिताः । ते । उपऽसदः । अक्षिताः । सन्तु । राशयः ।
पृणन्तः । अक्षिताः । सन्तु । अत्तारः । सन्तु । अक्षिताः ॥ ३ ॥

हे यव ते तव उपसदः उपसत्तारः उपगन्तारः कर्मकरा अक्षिताः क्षयरहिताः सन्तु भवन्तु । राशयः धान्यसमूहा अक्षिता क्षयरहिताः सन्तु भवन्तु । पृणन्तः गृहादिकं पूरयन्तः समाहर्तारो जना अक्षिताः क्षयरहिताः सन्तु भवन्तु । अत्तारः भोक्तारो जना अक्षिताः क्षयरहिताः सन्तु भवन्तु ।

इति षष्ठकाण्डे त्रयोदशेऽनुवाके नवमं सूक्तम् ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

श्रीमद्राजाधिराजराजपरमेश्वरश्रीवीरप्रतापहरिहरमहाराजकारिते
अथर्वसंहिताभाष्ये षष्ठकाण्डं संपूर्णम् ॥



१. पंमु. मंपा. द.

अथ

# सप्तमं काण्डम्

**श्रीगणाधिपतये नमः ।**

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

सप्तमे काण्डे दशानुवाकाः । तत्र प्रथमेऽनुवाके त्रीणि सूक्तानि । तत्र 'धीती वा ये' इति प्रथमे सूक्ते आद्याभ्यां द्वाभ्याम् ऋग्भ्याम् अर्थोत्थापनविघ्नशमनकर्मणि आज्यसमित्पुरोडाशादिशष्कुल्यन्तानां त्रयोदशानां द्रव्याणाम् अन्यतमं जुहुयात् जपेद् वा । तद् उक्तं संहिताविधौ — " 'धीती वा' इत्यर्थम् उत्थास्यन्नुपदधीत । जपति" ( कौसू ४१,८;९ ) इति ।

तथा सर्वफलकामः आभ्याम् ऋग्भ्याम् इन्द्राग्नी यजते उपतिष्ठते वा । " 'तदिदास' ( अ ५,२ ), 'धीती वा' इतीन्द्राग्नी" ( कौसू ५९,१७ ) इति कौशिकसूत्रात् ।

अत्र 'अथर्वाणं पितरम्' इत्यृग्द्वयेन ( अ ७,२-५ ) सर्वफलकामः अथर्वाणं यजत उपतिष्ठते वा । 'यस्येदमा रजः' ( अ ६,३३ ), 'अथर्वाणम्', 'अदितिर्द्यौः' ( अ ७,६ ) ( कौसू ५९,१८ ) इति सूत्रात् ।

'अया विष्ठा' इति द्व्यृचेन नवं रथम् अभिमन्त्र्य जयकामं राजानम् आरोहयेत् । सूत्रितं हि — " 'अया विष्ठा' ( अ ७,३ ), 'अम इन्द्रः' ( अ ७,११५ ), 'दिशश्चतस्रः' ( अ ८,८,२२ ) इति नवं रथं राजानं ससारथिम् आस्थापयति" ( कौसू १५,११ ) इति ।

'एकया च' ( अ ७,४ ) इत्यनया अश्वशान्तौ सर्वौषधिचूर्णम् अश्वस्य मूर्ध्नि प्रकिरेत् । " 'वातरंहाः' ( अ ६,९२ ) इति स्नातेऽश्वे" इति प्रक्रम्य कौशिकेन सूत्रितम् — "चूर्णैरवकिरति । त्रिः 'एकया च' " ( कौसू ४१,२१;२५;२६) इति ।

तथा चातुर्मास्ये शुनासीरीयपर्वणि वायव्ययागानुमन्त्रणम् अनया कुर्यात् । उक्तं वैताने — "वायव्यं शुनासीरीयं सौर्यम् 'एकया च' " ( वैताश्रौ ९,२७ ) इति ।

'यज्ञेन' (अ ७,५) इत्यनया सोमयागे आतिथ्येष्टौ हविर्ब्रह्माभिमृशेत् । "आतिथ्यायां हविरभिमृशति 'यज्ञेन यज्ञम्' इति" ( वैताश्रौ १३,१३ ) इति हि वैतानं सूत्रम् ।

---

धीती वा ये अनयन् वाचो अग्रं मनसा वा येऽवदन्नृतानि ।
तृतीयेन ब्रह्मणा 'वावृधानास्तुरीयेणामन्वत' नाम धेनोः ॥ १ ॥

धीती । वा । ये । अनयन् । वाचः । अग्रम् । मनसा । वा । ये । अवदन् । ऋतानि ।
तृतीयेन । ब्रह्मणा । वावृधानाः । तुरीयेण । अमन्वत । नाम । धेनोः ॥ १ ॥

यद्यपि अस्मिन् द्व्यृचे देवताविशेषो न प्रतीयते तथापि 'अनिरुक्तो वै प्रजापतिः' (ऐब्रा ६,२०) इति श्रुतेर्देवता अत्र प्रजापतिः । 'अथर्वाणं पितरम्' इत्यृचेऽपि प्रजापतिर्देवता । अथर्वशब्दः प्रजापतिवाचक इति वक्ष्यते । अतः कृत्स्नम् इदं सूक्तं प्राजापत्यम् । अत एव अर्थोत्थापनकर्मणि समिदाज्यादिहोमे देवताविशेषादर्शनात् प्रजापतिर्देवतेति निश्चीयते । अथवा 'धीती वा' इति द्व्यृचेन इन्द्राग्नी यजेत सर्वकामः (तु. कौ १५९,१७) इति विनियोगविधानात् तयोश्च 'उभा दातारावियां रयीणाम्' (ऋ ६,६०,१३) इत्यादिषु फलदातृत्वप्रसिद्धेः देवताविशेषानादेशस्थलेषु च प्रजापतिवद् इन्द्रस्यापि देवतात्वेन स्मरणात् ऐन्द्रेषु च मन्त्रेषु 'मुञ्चामि त्वा हविषा' (ऋ १०,१६१,१) इत्यादिषु अग्नेर्निपातभाक्त्वाद् इन्द्राग्नी देवतेति अध्यवसीयते । अपि च 'यत सर्वेषाम् अर्धम् इन्द्रः प्रति' (तै ५,४,८,३) इति 'अग्निः सर्वा देवता' (तै २,२,९,१) इति इन्द्रस्याग्नेश्च सर्वदेवतात्मकत्वाभिधानात् तयोर्यागेन सर्वकामप्राप्तिर्युक्ता । अतस्तस्य तयोर्वा इतरदेवतावन्न स्तुतिहविःप्रदानमात्रेण अर्थसिद्धिः, किं तु तन्माहात्म्यज्ञानेनैव इत्यभिप्रेत्य आद्यया तज्ज्ञानप्रकारः उत्तरया तत्सार्वात्म्यम् अभिधीयते ।

ईदृशी खलु विवक्षूणां शब्दाभिव्यक्तिः । प्रथमम् अभिलषितम् अर्थं विवक्षोः पुरुषस्य तद्वाचकशब्दप्रयोगार्थं तदिच्छावशेन जातात् प्रयत्नात् मूलाधारे प्राणवायोः परिस्पन्दो जायते । तेन परिस्पन्देन मूलाधारे सकलशब्दमूलकारणभूता निष्पन्दा सूक्ष्मा परा वाक् आविर्भवति । सैव मूलाधाराद् ऊर्ध्वं नाभिदेशं प्राप्ता सामान्यज्ञानरूपा विवक्षितपदार्थदर्शनात् पश्यन्तीति उच्यते । सैव हृदयदेशं प्राप्ता अर्थविशेषनिश्चयबुद्धियुक्ता मध्यदेशावस्थानाद् मध्यमेति गीयते । सैव कण्ठताल्वादिस्थानेषु वर्णरूपेण व्यज्यमाना विशेषेण परावबोधप्रचण्डा वैखरीति भण्यते । अत्र पराद्यवस्थात्मकास्त्रयः शब्दा देहान्तर्गतत्वाद् अस्फुटत्वेन विवक्षितम् अर्थं परेभ्यो न प्रतिपादयन्ति । वैखर्यात्मकः शब्द एव अर्थप्रत्यायनक्षमः । 'गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या

---

१. 'स्तुर्येणाम' पै २०,१,१; संविदानास्तुरीयेण मन्वत शांश्री १५,३,७.

वदन्ति' ( ऋ १,१६४,४५ ) इति हि निगमः । 'गुहायां त्रीणि[1] निहितानि नार्थं वेदयन्ते' ( नि १३,९ ) इति हि यास्केन व्याख्यातम् । आगमोऽपि —

"[2]स्वरूपज्योतिरेवान्तः परा वाग् अनपायिनी ।
यस्यां दृष्टस्वरूपायामधिकारो निवर्तते ॥
अविभागेन वर्णानां सर्वतः संहृतक्रमा ।
प्राणाश्रयात् तु पश्यन्ती मयूराण्डरसोपमा ॥
मध्यमा बुद्ध्युपादाना कृतवर्णपरिग्रहा ।
अन्तःसंजल्परूपा तु न श्रोत्रमुपसर्पति ॥
ताल्वोष्ठव्यापृतिव्यङ्ग्या[3] परबोधप्रकाशिनी ।
मनुष्यमात्रसुलभा बाह्या वाग् वैखरी मता ॥' इति ।

तथा च अस्या ऋचः अयम् अर्थः—ये प्रजापतेः इन्द्राग्न्योर्वा वाचकशब्दं विवक्षवः स्तोतारः धीती । ध्यायतेः क्तिनि छान्दसं संप्रसारणम् । 'हलः' ( पा ६,४,२ ) इति दीर्घः । 'सुपां सुलुक्' ( पा ७,१,३९ ) इति तृतीयायाः पूर्वसवर्णदीर्घः । धीत्या ध्यानात्मकेन विवक्षाजन्यप्रयत्नजातप्राणवायुपरिस्पन्दाविर्भूतेन परावस्थापन्नेन प्रथमेन शब्दब्रह्मणा इति यावत् । 'तृतीयेन ब्रह्मणा' इति वक्ष्यमाणत्वाद् अत्रापि संख्याविशिष्टब्रह्मपदं संबध्यते । वाशब्दः चार्थे । वाचो अग्रम् । 'सर्वे वेदा यत् पदम् आमनन्ति' ( कउ १,२,१५ ) इति श्रुतेः सकलवाक्यप्रतिपाद्यत्वेन मुख्यं निखिलवाग्व्यवहारस्य वा आदिभूतं प्रजापतिरूपम् अर्थम् इन्द्राग्निरूपं वा अनयन् ध्यानविषयत्वं प्रापितवन्तः । 'यद्वृत्तान्नित्यम्' ( पा ८,१,६६ ) इति निघातनिषेधः । अडागमस्य उदात्तत्वेन आद्युदात्तं पदं भवति । ये च विवक्षवः मनसा सामान्यधर्मग्राहकेण पश्यन्त्यात्मकेन द्वितीयेन शब्दब्रह्मणेत्यर्थः । ऋतानि सत्यभूतानि अखण्डपरावस्थापेक्षया ईषद् उद्गतानि वा वाक्यानि देवतावाचकशब्दविचारविषयाणि अवदन् । वदनम् अत्र सामान्यज्ञानं विवक्षितम् । पूर्ववाक्ये यच्छब्दश्रुतेस्तच्छब्दः अध्याहार्यः । ते विवक्षवः तृतीयेन । ध्यानमनोऽवच्छिन्नपरापश्यन्त्यपेक्षया तृतीयत्वम् । त्रित्वसंख्यापूरकेण ब्रह्मणा । अन्तर्विभक्तवर्णात्मकेन अर्थविशेषाध्यवसायबुद्धियुक्तेन मध्यमाख्येनेत्यर्थः । वावृधानाः । अन्तर्भावितण्यर्थः । वृधेर्लिटः कानच् । तुजादित्वाद् दीर्घः । 'चितः' ( पा ६,१,१६३ ) इति अन्तोदात्तत्वम् । वर्धयन्तः अशब्दविषयम् अर्थं शब्दवाच्यत्वेन पोषयन्तः तुरीयेण चतुर्थेन । 'चतुरश्छयतावाद्यक्षरलोपश्च' ( पावा ५,२,५१ ) इति छप्रत्ययः । चतुःसंख्यापूरकेण वैखर्यात्मकेन वर्णपदवाक्यरूपेण ब्रह्मणा धेनोः । वाङ्नामैतत् । वाच्यवाचकयोरभेदाद् वाच्ये वाचकशब्दः । मन्त्रप्रतिपाद्यस्य[4] । यद्वा धेनुवद् धेनुः[5] । अभिमतफलप्रदानेन प्रीणनकारिणः प्रजापतेः नाम नामधेयम् प्रजासर्जनपालनादि-

---

१. त्रीणि पदानि शंपा. २. स्वरूपं ज्यो° शंपा. ३. °पृथिव्य° S'.
४. °पाद्यस्व नू S'. ५. धेनुर्द्विः S'.

धर्मकं प्रजापतिरिति, इन्द्राग्निदेवतापक्षे इदंदर्शनभूतेन्धनादिगुणविशिष्टम् (तु. नि १०,८ ) इन्द्र इति, अग्रणीत्वाङ्गनादिगुणकम् (तु. नि ७,१४) अग्निरिति च नामधेयम् अमन्वत । उच्चारितवन्त इत्यर्थः । धातूनाम् अनेकार्थत्वात् । मनु अवबोधने । तानादिकः । एवं परादिवाचा प्रतिपादितस्वरूपः[1] प्रजापतिः अस्माकम् अभीष्टं साधयत्विति इन्द्राग्नी वा साधयताम् इति प्रार्थना ।

अथवा वाचो अग्रम् इति पदेन वेदात्मिकाया वाचो निदानं पर्यवसानभूमिर्वा परमात्मतत्त्वं विवक्ष्यते । तथा च ऐतरेयारण्यके 'तदिद् आस भुवनेषु ज्येष्ठम्' ( ऋ १०, १२०) इत्यस्य सूक्तस्य तच्छन्दप्रशंसावसरे समाम्नायते – "'बृहस्पते प्रथमं वाचो अग्रम्' ( ऋ १०,७१,१ ) इत्येतद्वेव· प्रथमं वाचो अग्रम्" ( ऐआ १,३,२ ) इति । 'तदिद् आस' इत्यत्र तच्छब्देन सर्वश्रुतिप्रसिद्धं सर्वजगत्कारणं ब्रह्म अभिहितं तद् अत्र एतच्छब्देन विवक्ष्यत इति तत्रार्थः । तादृशं सकलवाङ्निदानभूतं तत्त्वं ये जिज्ञासवो महर्षयो देवा वा धीती । कर्मनामैतत् । धीत्या । वाशब्दो विकल्पवाची । बाह्यविषयव्यापृतया अक्षवृत्त्या अनयन् । ज्ञातुं प्रयत्नं कृतवन्त इत्यर्थः । अनेन जाग्रदवस्थाभिमानिविश्वसंज्ञात्मना तत्त्वं ग्रहीतुम् उद्युञ्जत इत्युक्तं भवति । ये वा ततोऽपि सूक्ष्मदर्शिनो मनसा केवलेन अन्तःकरणेन[2] कृतानि सत्यब्रह्मविषयाणि वाक्यानि अवदन् । अनेन स्वप्नावस्थायां केवलमनोव्यापारात् तदभिमानितैजसात्मकब्रह्मणा तत्त्वज्ञानाय प्रयतन्त इत्युक्तं भवति । ये वा ततोऽप्यान्तरं वस्तु जिज्ञासमाना वावृधानाः । वर्धतेः 'लक्षणहेत्वोः" ( पा ३,२,१२६ ) इति हेतौ शानचि व्यत्ययेन शपः श्लुः । परिच्छेदापनयनरूपवर्धनाद्धेतोः तृतीयेन त्रित्वसंख्यापूरकेण ब्रह्मणा चैतन्यात्मना । अत्र सुषुप्तौ कारणशरीराभिमानी प्राज्ञघनः प्राज्ञो विवक्षितः । तेन जागरस्वप्नावस्थावत् सुषुप्तौ बाह्यान्तरेन्द्रियजनितविक्षेपाभावात् अपरिच्छिन्नब्रह्मभावेन वर्तन्त इति शेषः । एवम् अवस्थात्रयाभिमानिविश्वादितादात्म्येन तत्त्वं बुभुत्सवः सर्वेऽपि तत्रतत्र निरस्तसमस्तभेदं तत्त्वम् अलभमानाः सन्तः धेनोः वाचो अग्रम् इति निर्दिष्टस्य फलप्रदस्य वा परमात्मनः नाम नामकं यत्स्वरूपं प्रति सर्वे प्रणताः तत् निरस्तसमस्तोपाधिकं सत्यज्ञानादिलक्षणं तत्त्वं तुरीयेण तुरीयावस्थापन्नेन कारणशरीराभिमानरहितेन सर्वसाक्षिणा चैतन्येनात्मना अमन्वत जानन्ति स्म । 'गूळ्हं सूर्यं तमसापव्रतेन तुरीयेण ब्रह्मणाविन्दद् अत्रिः' ( ऋ ५,४०,६ ) इति हि निगमः । 'स ब्रह्मा स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्' ( तैआ १०,११,२ ) इति श्रुतौ परमात्मनो नानादेवतानामव्यवहार्यत्वदर्शनाद् अत्र प्रजापतिशब्दव्यपदेश्यम् इन्द्राग्निशब्दव्यपदेश्यं वा तदेव तत्त्वं सम्यग् अधिगतं सत् अस्माकम् अभिमतं साधयत्विति प्रार्थ्यते ।

स वे॑द पु॒त्रः पि॒तरं॒ स मा॒तरं॒ स सू॒नुर्भु॑व॒त् स भु॑व॒त् पुन॑र्मघः ।
स द्यामौ॑र्णोद॒न्तरि॑क्षं॒ स्व॑१ः[3] 'स इ॒दं विश्व॑मभव॒त्' स आभ॑वत् ॥ २ ॥

1. °पादितस्वरूप° S'.  2. °णेन कृता S'.  3. स्वः B.B^b; स भुवः तै २,२,१२,१ तैआ १,५,७,२; स स्वर् पै २०,१,२.  4. विश्वा भुवो॰ भ (°वोऽ पै.) भ° तै. पै. तैआ.

सः । वेद॑ । पुत्रः । पितर॑म् । सः । मातर॑म् । सः । सूनुः । भुवत् । सः । भुवत् । पुनः॑ऽमघः । सः । द्याम् । और्णोत् । अन्तरि॑क्षम् । स्वः॑ । सः । इदम् । विश्व॑म् । अभवत् । सः । आ । अभवत् ॥ २ ॥

अनया उक्तविधस्य देवस्य ब्रह्माभेदेन सार्वात्म्यम् अभिधीयते । स विश्वात्मकः प्रजापतिः पुत्रः स्वीयं रूपम् सम्यक् जानतः पुरुषान् अनर्थहेतोः संसारात् त्रायत इति पुत्र इति व्यपदिश्यते । 'पुत्रः पुरु त्रायते' ( नि २,११ ) इत्यादि निरुक्तम् । पितरम् द्युलोकं वेद वेत्ति । स एव मातरम् पृथिवीं वेत्ति । प्रजापतिः द्यावाभूमी स्वधार्यत्वेन जानातीत्यर्थः । 'द्यौः पिता । पृथिवी माता' (तैब्रा ३,७,५,५) इति हि मन्त्रवर्णः । 'ताभ्याम् इदं विश्वम् एजत् सम् एति यद् अन्तरा पितरं मातरं च' ( ऋ १०,८८,१५) इति श्रुतेः द्यावापृथिव्योर्मध्ये विश्वस्यावस्थानात् तयोः प्राधान्येनाभिधानम् । अथवा 'हिरण्यगर्भः समवर्तताग्रे' ( ऋ १०,१२१,१ ) इति मन्त्रवर्णात् प्रजापतिः परमात्मना प्रथमं सृष्टः । तस्य पिता सकलजगदधिष्ठानं परं ब्रह्म । माता चित्प्रतिबिम्बिता मूलप्रकृतिः । तौ प्रजापतिः स्वाभेदेन जानाति । पुत्रशब्दः अत्र मुख्यार्थवाची । कारणपरिज्ञानेन कार्यमपि तदभेदात् परिज्ञातं भवतीति कारणभूतमातापितृपरिज्ञानमात्रम् अत्रोक्तम् । न केवलं परिज्ञाता अपितु स प्रजापतिः सूनुः सर्वस्य जगतः स्वस्वकर्मसु प्रेरयिता भुवत् भवति । 'एष उ एव साधु कर्म कारयति तम्' ( तु. कौउ ३,९ ) इत्यादिश्रुतेः । षू प्रेरणे इत्यस्माद् औणादिको नुप्रत्ययः । भुवत् इति । भवतेर्लेङि व्यत्ययेन शः । [1]'सार्वधातुकमपित्' (पा १,२,४) इति शस्य ङित्त्वाद् गुणप्रतिषेधः । स एव मघः[2] । लिङ्गव्यत्ययः । धनवाचिना मघशब्देन कर्मफलं विवक्ष्यते । कर्मफलमपि भुवत् भवति । [2]पुनःशब्दः चार्थे । स च अनुक्तसमुच्चयार्थः । भोक्तापि स एवेत्यर्थः । *'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्मम् एतत्'* ( श्वेउ १,१२ ) इति हि श्रुतिः । यद्वा पुनर्मघ इति समस्तं पदम् । स्तोतृभ्यो बहुधनप्रदानेऽपि पुनःपुनः अभिवृद्धधन इत्यर्थः । किं च स प्रजापतिः द्याम् । द्यु अभिगमने इत्यस्माद् उत्पन्नो द्योशब्दः । सुकृतिभिरभिगन्तव्यां दिवम् और्णोत् स्वात्मना व्याप्नोति । ऊर्णुञ् आच्छादने । लङि शब्लुकि वृद्ध्यपवादे गुणे रूपम् । अन्तरिक्षम् । 'अन्तरा क्षान्तम्' (नि २,१०) इत्यन्तरिक्षम् आकाशं तदपि व्याप्नोति । स च स्वः स्वर्गं पुण्यभोगस्थानं च व्याप्नोति । इदं पृथिव्यादेरुपलक्षणम् । व्याप्यापेक्षया व्यापकस्य अधिकवृत्तिप्रदर्शनात् सर्वेभ्योऽपि लोकेभ्यः प्रजापतिः अधिकवृत्तिरित्यर्थः । *'ज्यायान् पृथिव्या ज्यायान् अन्तरिक्षाज्ज्यायान् दिवः'* ( छाउ ३,१४,३ ) इत्यादिश्रुतेः । किं बहुना । स प्रजापतिः इदं परिदृश्यमानं नामरूपात्मकं विश्वं जगद् अभवत् । विश्वात्मना स एवावतिष्ठते । स आभवत् आ सर्वतो व्याप्य वर्तते । आवृत्यावृत्य ताद्रूप्येण कारणात्मना वा वर्तते । सोऽस्माकम् अभिमतसर्वफलानि साधयत्विति प्रार्थ्यते ।

---

१. 'भूसुवोस्तिङि' इति शंपा. २. वैतु. मंपा. द.

अथर्वाणं[1] पितरं देवबन्धुं[2] मातुर्गर्भं पितुरसुं युवानम् ।
[3]य इमं यज्ञं मनसा †चिकेत[3] प्र णो वोचस्तमिहेह ब्रवः ॥ १ ॥

अथर्वाणम् । पितरम् । देवऽबन्धुम् । मातुः । गर्भम् । पितुः । असुम् । युवानम् ।
यः । इमम् । यज्ञम् । मनसा । चिकेत । प्र । नः । वोचः । तम् । इह । इह । ब्रवः ॥ १ ॥

**अथर्वशब्दः प्रजापतिवाची । तथा च गोपथब्राह्मणे** – 'ब्रह्म ह वा इदम् अग्र आसीत् । [4]स्वयंभ्वेकमेव तद्[4] ऐक्षत । ××× मन्मात्रं द्वितीय देवं निर्मिमै' (गोब्रा १,१,१) **इति प्रक्रम्य** 'तद् अथर्वाभवत्' (गोब्रा १,१,४) **इत्यथर्वसृष्टिम् अभिधाय तस्याथर्वणः परब्रह्मणश्च अभेदं प्रतिपाद्य समाम्नायते** — 'तम् अथर्वाणं ब्रह्माऽब्रवीत् प्रजापतेः प्रजाः सृष्ट्वा पालयस्वेति । तद् यद् अब्रवीत् प्रजापतेः प्रजाः सृष्ट्वा पालयस्वेति तस्मात् प्रजापतिरभवत् । तत् प्रजापतेः प्रजापतित्वम् । अथर्वा वै प्रजापतिः' (गोब्रा १,१,४) **इति । तथा** 'प्रजापतिरथर्वा देवः स तपस्तप्त्वैतं चातुष्प्राश्यं[5] ब्रह्मौदनं निरमिमीत' (गोब्रा १,२,१६) **इति । अतः अथर्वशब्देन प्रजापतिरुक्तः । तस्य प्रजानां स्रष्टृत्वं पालकत्वं च अनेन प्रदर्श्यते**[6]। पितरम् **पालकं प्रजानाम् । न केवलं पालकम् अपि तु** देवबन्धुम् **देवानां बन्धुं कारणं स्रष्टारम् ।** 'समुद्रो बन्धुः' (तु. वृउ १,१,२) **इत्यत्र** 'बन्धुशब्दः कारणम् आह' **इति व्याख्यातम् । मनुष्यादिसृष्टेर्देवसृष्टिः पूर्वभाविनीति सा प्रथमम् उक्ता । स्त्रीपुंससृष्टिरपि तस्मादेव भवतीत्याह** — मातुर्गर्भम् **यस्य गर्भस्य या माता तस्यास्तं गर्भं** युवानम् **मिश्रयन्तं कुर्वन्तम् ।** पितुर्गर्भजनकस्य असुम् **प्राणं प्राणसहितम्**[7] **। रेत इत्यर्थः । तच्च युवानम् सिञ्चन्तम् ।** 'न ह वा ऋते प्राणाद् रेतः सिच्यते' (ऐआ ३,२,२), 'आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते' (ऋ १०,१८४,१) **इत्यादिश्रुतिभ्यः । युवानम् इति । यौतेरादादिकात् लटः शानचि उवङादेशे रूपम् । स्त्रीपुंससृष्टिः इतरसृष्टेरुपलक्षणम् । यद्वा** 'स इदं सर्वम् अभवत्' **इति स्वस्यैव जगदात्मना भवनाद् गर्भरूपत्वम् असुरूपत्वं च संपद्यते ।** 'यच्चासुः पुरुषो जायते यच्च पुत्रः' **इति हि श्रुतिः । तथापि युवानम् नित्यतरुणम् । न कदाचिदपि जननादिभावविकारवन्तम् इत्यर्थः । एतादृशम्** अथर्वाणम् । 'थर्वतिश्चरतिकर्मा तत्प्रतिषेधः' **(नि ११,१८) इति हि यास्कः । अत्र चरतिना च्युतिर्विवक्ष्यते । च्युतिरहितं प्रजापतिं स्वमनीषितसिद्धये प्रार्थय इति शेषः । एवं सम्यग्विदिताथर्वस्वरूपो मन्त्रद्रष्टा महर्षिः स्वेन ज्ञातं तत्स्वरूपं परेषां प्रत्याययितुं** [8]**स्वयम् अजानन्निव**[8] **तटस्थम् अभिज्ञं पृच्छति उत्तरार्धेन** — य **इति ।** यः **अथर्वा ।** 'एतद् वा अथर्वणो रूपं यद् उर्णाशी ब्रह्मा' (गोब्रा १,२,१९) **इत्याम्नानाद् अथर्वात्मक ऋत्विग्भूतो ब्रह्मा**

---

१. अथर्वाणं पै २०,१,३. २. विश्वदेवं पै. ३. अयं चिकेतामृतस्य धाम पै.
† चिकेतुः D,S[m],Cs. ४. स्वयंभुवेकमेतद् S'. ५. चतु° S'. ६. प्रदर्श्यते S'.
७. प्राणसहितम् S'. ८. स्वयमज्ञातानन्त S'.

इमम् अनुष्ठीयमानं सर्वफलसाधनं यज्ञं स्वर्गादिसाधनं प्रसिद्धम् अग्निष्टोमादियज्ञं वा मनसा चिकेत। कितीे[1] संज्ञाने । जानाति अनुसंधत्ते। एतद् उक्तं भवति— यज्ञस्य हि द्वौ पक्षौ। तत्रैकः पक्षः त्रिभिर्होत्रादिभिर्वाचा संस्क्रियते। अपरस्तु ब्रह्मणा मनसेति । अत्र 'तस्य वाक् च मनश्च वर्तनी' इति प्रक्रम्य ब्राह्मणे समाम्नायते—'स वा एष त्रिभिर्वेदैर्यज्ञस्यान्यतरः पक्षः संस्क्रियते। मनसैव ब्रह्मा यज्ञस्यान्यतरं पक्षं संस्करोति' ( गोब्रा १,३,२ ) इति । तं मनसा यज्ञान् अनुसंदधानम् अथर्वाणं नः अस्माकं प्र वोचः प्रकर्षेण ब्रूहि। हे विद्वन्निति शेषः । किं यदाकदाचित्। नेत्याह । इहेह अस्मिन्नस्मिन् अभिलषितसाधने कर्मणि ब्रवः ब्रूहि । जानासि चेद् ब्रूहि। मद्व्यतिरिक्तो न कोपि जानातीत्यर्थः। वोच इति । ब्रवीतेश्छान्दसे लुङि च्लेरङि अडभावे रूपम् । इहेहेति । वीप्सायां द्विर्वचनम् । 'अनुदात्तं च' ( पा ८,१,३ ) इति आम्रेडितस्य अनुदात्तत्वम्[2] । ब्रव इति। पञ्चमलकारे 'लेटोऽडाटौ' (पा ३,४,९४) इति अडागमः । यद्वा प्रजापतिस्वरूपं सामान्यतो ज्ञात्वा तद्विशेषजिज्ञासायै पार्श्वस्थं पृच्छति—यो विद्वान् इमम् अथर्वाणं पितरं देवबन्धुमित्याद्युक्तलक्षणं सर्वैः स्वात्मत्वेन अनुभूयमानं वा यज्ञम् यष्टव्यं यज्ञात्मकं वा प्रजापतिं मनसा मनसैव चिकेत जानाति । न केवलं श्रुतिवाक्यश्रवणेन किं तु मनननिदिध्यासनाभ्यां यस्तत्त्वं साक्षात्करोति तम् अभिज्ञं नः अस्माकं प्रब्रूहि । 'आचार्यवान् पुरुषो वेद' ( छांउ ६,१४,२ ) इति श्रुतेः आचार्योपदेशेनैव अधिगतं देवतास्वरूपं पुरुषार्थाय भवतीति विवक्षया अभिज्ञप्रश्नः । अथ तेनाभिज्ञेन प्रदर्शितं तत्त्वोपदेष्टारं गुरुं पृच्छति तम् इहेह ब्रव इति। यष्टव्यदेवतास्वरूपपरिज्ञाने क्रियमाणं कर्म सगुणं भवेद् इति मनीषया प्रश्नः । अथवा मन्त्रद्रष्टा महर्षिः स्वात्मानमेव संबोध्य ब्रूते—य उक्तविधः प्रजापतिः तं नः अस्मदर्थं प्र वोचः प्रकर्षेण ब्रूहि यष्टव्यदेवतास्वरूपं सम्यग् ज्ञात्वा ब्रूहि। इहेह[3] ब्रूहीति पुनर्वचनम् आदरार्थम्। तथाहि[4] देवतास्तुतिकरणविषये मन्त्रद्रष्टुः स्वात्मानम् अभिमुखीकृत्य वचनं शाखान्तरे समाम्नायते—'अग्नि स्तुहि दैववातं देवश्रवः' ( ऋ ३,२३,३ ) इति।

अया विप्रा[5] जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः ।
स प्रत्युदैद्[6] धरुणं[7] मध्वो अग्रं [8]स्वया तन्वा[8] [9]तन्वमैरयत[9] ॥ १ ॥

१. चिती इति पाधा. उपलभ्यते.　२. वैतु. मंपा. द.　३. इहैव S'.　४. तथापि S'.
५. विप्रा B.　६. प्रत्युदैद् तै १,७,१२,२; प्रत्यङैद् मै १,१०,३.　७. धरुणो तै. मं. काश्रौ २५,६,१०; धरुणे पै २०,२,१.　८. स्वायुं यत्तनुवां (°न्वां काश्रौ.) तै. काश्रौ.; स्वां यत्तनूं मै. आश्रौ २,१९,३२ शांश्रौ ३,१७,१; स्वां यत्तनूं काठ ९,६ पै.　९. °मैरयत् K,Km, W,T,R². °मैरयन्त R,K²; °मैरयत् > °मैरयत A,Sm; तनूमै° तै. काश्रौ.; तन्वामैं° मै. आश्रौ. शांश्रौ.; तन्वामैरयन्त पै.

अया । विऽस्था[1] । जनयन् । कर्वराणि । सः । हि । घृणिः । उरुः । वराय । गातुः ।
सः । प्रतिऽउदैत् । धरुणम् । मध्वः । अग्रम् । स्वया । तन्वा[2] । तन्वम् । ऐरयत[3] ॥ १ ॥

अया अनया । तृतीयाया याजादेशः । 'हलि लोपः' ( पा ७,२,११३ ) इति लोपः । उक्तरीत्या विष्ठाः[3] । विविधं तिष्ठतीति । 'क्विप् च' ( पा ३,२,७६ ) इति क्विप् । सर्वात्मभावेन स्थित इत्यर्थः । अथवा अया अयम् । प्रथमाया आकारः । अयं प्रजापतिः विष्ठा विश्वात्मना स्थितः कर्वराणि । कर्मनामैतत् । यज्ञादिकर्माणि कार्यजातानि वा जनयन् उत्पादयन् वर्तते । स प्रजापतिः घृणिः दीप्यमानः । घृणु दीप्तौ । औणादिक इन्प्रत्ययः । वराय वरणीयाय कर्मफलाय । तादर्थ्ये चतुर्थी । उरुः महान् गातुः मार्गः । फलप्राप्तेः अयमेव साधनान्तरनिरपेक्षो महान् उपाय इत्यर्थः । हिशब्दो हेतौ । यस्मात् फलप्राप्तिमार्गः तस्मात् स तादृशो धरुणम् धारकं चिरकालभावित्वेनावस्थायि[4] मध्वः मधुनः । नुमभावश्छान्दसः । मधुवद् आस्वाद्यस्य फलस्य अग्रं सारं प्रत्युदैत् । अन्तर्भावितण्यर्थः । प्रत्युद्गमयति स्तोतृभ्यः । एतेश्छान्दसो लुङ्[5] । गादेशाभावे सिचि वृद्धिः । सर्वेषां फलप्रदत्वं स्वस्य सर्वनियन्तृत्वम् अन्तरेण न संभवतीति तद् उपपादयति— स्वयेति । स्वया स्वीयया तन्वा विराडात्मिकया तन्वम् । जात्येकवचनम् । सर्वप्राणिशरीराणि ऐरयत प्रेरयति तत्तत्कर्मस्विति । ईर गतौ कम्पने च । छान्दसो लङ् ।

अस्य मन्त्रस्य अभिनवे रथे जयकामस्य नृपतेरास्थापने विनियोगात् तत्परतया व्याख्यायते— अया अयं जयकामो राजा कर्वराणि शत्रुत्रासनादीनि कर्माणि जनयन् । 'लक्षणहेत्वोः क्रियायाः' ( पा ३,२,१२६ ) इति हेतौ शतृप्रत्ययः । मन्त्रायुधत्रासनादिजननाद्धेतोः विष्ठाः विशेषेण विशिष्टे वा रथे स्थितः । मन्त्रायुधादिसंस्काराद् रथस्य वैशिष्ट्यम् । स तादृशः खलु राजा दीप्यमानः । स्वसेनयेति शेषः । तेजस्वी वा वराय वरिष्ठाय जयलक्षणाय फलाय महान् मार्गः । स राजा धरुणम् ध्रियमाणं परैः अनभिभाव्यं मधुनः जयलक्षणस्य सारं प्रत्युदैत् प्रत्युद्गच्छतु प्राप्नोतु । स च पराभिभवनम् अन्तरेण न घटत इति तद् उपपादयति — स्वया स्वीयेन तन्वा शरीरेण स्वगतबलेन सेनालक्षणबलेन वा तन्वम् शत्रुशरीराणि ऐरयत कम्पयति उच्चाटयति ।

एकया च दशभिश्चा[6] सुहुते[7] द्वाभ्यामिष्टये विंशत्या[8] च ।
तिसृभिश्च वहसे त्रिंशता च [9]नियुग्भिर्वाय इह[9] ता वि मुञ्च ॥ १ ॥

---

१. °स्थाः तपा   २. °यन् P,P²,Bp².   ३. वैतृ. पपा. द्र.   ४. °कालं भगात्वेन° S'; °कालं भगत्वे° शपा.   ५. लङ् इति न्याय्यम्.   ६. °भिश्च मा २७,३३ म ४,६,२ माश ४,४,१,१५ तैआ १,११,७ आश्रौ ५,१८,५ शांश्रौ ८,३,१०.   ७. स्वभूते मा. मै. माश. तैआ. आश्रौ. शांश्रौ.; सुहुते A D,Kᵐ,Pᵃ,R,Sᵐ,V,Cs, BVC.   ८. विंशती मा. माश. शांश्रौ.   ९. नियुद्भिर्वायविह ता वि मुञ्च ("प इ मं.) इ मा. मं. माश. तैआ. आश्रौ. शांश्रौ.; °यविह पै २०,१,१०.

एकया । च । दशऽभिः । च । सुऽहुते । द्वाभ्याम् । इष्टये । विंशत्या । च ।
तिसृऽभिः । च । वहसे । त्रिंशता । च । वियुक्ऽभिः । वायो इति । इह । ताः । वि । मुञ्च ॥ १ ॥

हे सुहुते शोभनाह्वान सुष्ठु ह्वातव्य वा हे वायो । सर्वप्रेरकः प्रजापतिः प्रसिद्धो वा वायुः । एकया च दशभिश्च । परस्परसमुच्चयार्थौ चशब्दौ । एकादशभिः वियुग्भिः विशेषेण युज्यन्ते रथे इति वियुजो वडवाः । युजेः कर्मणि क्विप् । ताभिः वहसे । वहतिरत्र गतिमात्रवाची । आगच्छ । किमर्थम् । इष्टये यागाय । 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वात् चतुर्थी । अस्माभिरनुष्ठीयमानं कर्म आयाहि । यद्वा इष्टये इच्छायै । 'मन्त्रे वृषेषपच' (पा ३,३,९६) इति क्तिन्नुदात्तः । 'क्रियार्थोपपदस्य' (पा २,३,१४) इति चतुर्थी । अस्मदीयफलकामनां पूरयितुम् एकादशभिरश्वाभिः वहसे । व्यत्ययेन कर्मार्थे कर्तृप्रत्ययः । उह्यसे । दशभिरिति 'झल्युपोत्तमम्' (पा ६,१,१८०) इति स्वरेण मध्योदात्तं पदम् । तथा द्वाभ्यां च विंशत्या च द्वाविंशत्या वडवाभिर्वहसे । विंशत्येति । 'उदात्तयणो हल्पूर्वात्' (पा ६,१,१७४) इति विभक्तिरुदात्ता । तथा तिसृभिश्च त्रिंशता च त्रयस्त्रिंशता अश्वाभिर्वहसे । अयम् अर्थः — सुहुत इति विधेयविशेषणम् । यतस्त्वं सुहुतिः अतः अस्मदाह्वानानुसारेण अस्माकं फलप्रदानादरानुसारेण वा शीघ्रम् आगन्तुं कदाचिद् एकादशभिः कदाचिद् द्वाविंशत्या कदाचित् त्रयस्त्रिंशता वडवाभिः अस्मदीयं यागं प्राप्नुहीति । अतित्वरागमनविवक्षायां वायोः अपरिमिता अश्वाः शाखान्तरे समाम्नायन्ते — 'आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार' (ऋ ७,९२,१) इति । वायोरश्वा नियुत इत्युच्यन्ते । आगत्य च हे वायो इह अस्मिन् अस्मदीये कर्मणि अश्वशान्तिलक्षणे वा ता वडवा वि मुञ्च इहैव स्थापय । इतः प्रदेशात् प्रदेशान्तरम् आभिर्वडवाभिर्मा प्राप इत्यर्थः ।

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त[1] यत्र पूर्वे साध्याः सन्ति देवाः ॥ १ ॥

यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि । आसन् ।
ते । ह । नाकम् । महिमानः । सचन्त । यत्र । पूर्वे । साध्याः । सन्ति । देवाः ॥ १ ॥

देवाः कर्मणा देवत्वं प्राप्ता यजमानाः पूर्वं यज्ञेन अग्निना निर्मन्थ्येन यज्ञं होमाधारम् आहवनीयम् अग्निम् अयजन्त । यजिरत्र संगतिकरणवाची । अनुष्ठानाय संयोजितवन्त इत्यर्थः । 'यद् अग्नावग्निं मथित्वा प्रहरति तेनैवास्य आतिथ्यं क्रियते'

---

१. सचन्ते तै ३,५,११,५ तैआ ३,१२,७.

(तै ६,२,१,७) इति हि तैत्तिरीयकम् । तानि धर्माणि अग्निसाधनानि कर्माणि प्रथमानि । प्रथम इति मुख्यनाम । प्रतमानि प्रकृष्टतमानि आसन् । फलप्रसवसमर्थानि अभवन्नित्यर्थः । धर्माणीति । धर्मशब्दः अपूर्वे पुंलिङ्गः तत्साधने नपुंसक इति 'अर्धर्चाः पुंसि च' (पा २,४,३१) इति सूत्रे वृत्तिकारेण लिङ्गानुशासनं कृतम् । ते ह ते खलु देवा महिमानः महत्त्वयुक्ता नाकम् कं सुखम् अकं दुःखं तद् अत्र नास्तीति नाकः स्वर्गः तं सचन्त संगताः । षच समवाये । लङि "अमाङ्योगेऽपि' (पा ६,४,७५) इति अडभावः । यत्र यस्मिन् नाके पूर्वे पुरातनाः साध्याः । प्राणाभिमानिनो देवाः साध्या इत्युच्यन्ते । तथा च वाजसनेयकम्—'प्राणा वै साध्या देवास्त एतम् अग्र एवम् असाधयन्' (माश १०,२,२,३) इति । यद्वा छन्दोऽभिमानिनो देवा आदित्या अङ्गिरसश्च साध्या देवा इत्युच्यन्ते । ते देवाः सन्ति निवसन्ति । तस्माद् इदानीमपि यज्ञाधिकारिभिः एवं कर्तव्यम् इत्यर्थः । अत्र ऐतरेयकब्राह्मणम्—'यज्ञेन वै तद् देवा यज्ञम् अयजन्त । यद् अग्निनाऽग्निम् अयजन्त ते स्वर्गं लोकम् आयन्' (ऐब्रा १,१६) इति । " 'यत्र पूर्वे साध्याः सन्ति देवाः' इति । छन्दांसि वै साध्या देवाः । तेऽग्रेऽग्निनाऽग्निम् अयजन्त । ते स्वर्गं लोकम् आयन्नादित्याश्चैवेहाऽऽसन्नङ्गिरसश्च । तेऽग्रेऽग्निनाग्निम् अयजन्त । ते स्वर्गं लोकम् आयन्" (ऐब्रा १,१६) इति ।

यद्वा देवा इदानीं देवभावम् आपन्नाः पूर्वं यज्ञेनाग्निना पशुभूतेन यज्ञं यष्टव्यम् अग्निम् अयजन्त पूजितवन्तः । अग्नेरेव मूर्तिभेदेन देवत्वं पशुत्वं च द्रष्टव्यम् । " 'अग्निः पशुरासीत् । तम् आलभन्त । तेनायजन्त' (तु. तै ५,७,२६,१) इति च ब्राह्मणम्" (नि १२,४१) इति हि यास्कः । साध्याः यज्ञादिसाधनवन्तः । 'साधनाः । द्युस्थानो देवगण इति नैरुक्ताः' (नि १२,४१) इति हि यास्कः । शिष्टं पूर्ववद् व्याख्येयम् ।

अथ वा यज्ञेन ज्ञानयज्ञरूपेण यज्ञम् । 'यज्ञो वै विष्णुः' (तैब्रा १,२,८,५) इति श्रुतेः यज्ञो विष्णुः । तम् अयजन्त आत्मत्वेन ध्यातवन्तः । ते नाकम् स्वर्गम् ।

'दुःखेन यन्न संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं यत् सुखं स्वर्गपदास्पदम् ॥'

'इत्युक्तनित्यसुखरूपम् 'यद् गत्वा न निवर्तन्ते तद् धाम परमं मम' (भगी १५,६) इति भगवतोक्तं स्थानं सचन्त सेवन्ते प्राप्नुवन्ति । साध्याः । व्यत्ययेन कर्तरि कृत्यप्रत्ययः । साधकाः । अहंगृहोपासका इत्यर्थः । यद्वा साध्यं ज्ञानेन प्राप्यं वस्तु येषाम् आत्मत्वेन अस्तीति । अर्शआदित्वाद् अच्प्रत्ययः । शिष्टं समानम् ।

यज्ञो बभूव स आ बभूव स प्र जज्ञे [1]स उ वावृधे पुनः[2] ।
स [3]देवानामधिपतिर्बभूव [4]सो अस्मासु[5] द्रविणमा दधातु ॥ २ ॥

---

१. इति इत्युक्तं S'. २. स वावृधे तै १,६,६,४. † द्र वै २०,२,१.
३. दृधिष्या अधि' तै. ४. सो अस्मां तै; सोऽस्मासु वै.; सोऽस्मान् शाश्री ४,१२,१५.
५. अधिपतीन् करोतु (कृणोतु शाश्री.) तै. शाश्री.

यज्ञः । ब॒भू॒व॒ । सः । आ । ब॒भू॒व॒ । सः । प्र । ज॒ज्ञे॒ । सः । ऊँ इति॑ । व॒वृ॒धे॒ । पुनः॑ । सः । दे॒वाना॑म् । अधि॑ऽपतिः । ब॒भू॒व॒ । सः । अ॒स्मासु॑ । द्रवि॑णम् । आ । द॒धा॒तु॒ ॥ २ ॥

यज्ञः यज्ञरूपः प्रजापतिः प्रसिद्धो वा यज्ञः स बभूव विश्वात्मना व्याप्तः निर्वृत्तो वा अभूत् । स आ बभूव सर्वतः कारणात्मना अभवत् । यद्वा स निर्वृत्तो[1] यज्ञः आवृत्य भवतु पुनःपुनर्भवतु । छान्दसो लिट् । स प्र जज्ञे । जानातेर्जायतेर्वा रूपम् । प्रज्ञातः प्रसिद्धो यज्ञः प्रकर्षेण जातः । फलोन्मुखो जात इत्यर्थः । उशब्दः अवधारणे । स एव पुनर्वावृधे अद्यापि जगदात्मना पुनःपुनर्वर्धते वर्धतां वा यज्ञः । तुजादित्वाद् अभ्यासस्य दीर्घः । स देवानाम् इन्द्रादीनाम् अधिपतिः अधिको मुख्यः स्वामी बभूव । यज्ञो वा हेतुत्वाद् देवानाम् अधिकं पालयिताऽभूत् । स यज्ञः अस्मासु हविषा परिचरत्सु द्रविणम् धनम् अभिमतं फलम् आ दधातु स्थापयतु ।

यद् दे॒वा दे॒वान् ह॒विषाऽय॑जन्ताम॑र्त्या॒न् मन॒साऽम॑र्त्ये॑न[2] ।
मदे॑म॒ तत्र॑ प॒र॒मे व्यो॑म॒न् पश्ये॑म॒ तदुदि॑तौ॒ सूर्य॑स्य ॥ ३ ॥

यत् । दे॒वाः[3] । दे॒वान् । ह॒विषा॑ । अय॑जन्त । अम॑र्त्यान् । मन॑सा । अम॑र्त्येन । मदे॑म । तत्र॑ । प॒र॒मे । वि॒ऽओ॑मन् । पश्ये॑म । तत् । उत्ऽइ॑तौ । सूर्य॑स्य ॥ ३ ॥

देवाः कर्मणा देवत्वं प्राप्ताः यत् फलम् । उद्दिश्येति क्रियाध्याहारः । अमर्त्यान् अमरणधर्मणो देवान् इन्द्रादीन् अमर्त्येन अमर्त्यसंबन्धिना । देवविषयेणेत्यर्थः । अविनाशिना वा । भोगायतनेष्वागमापायिष्वपि मनसोऽवस्थानाद् नित्यत्वम् । तादृशेन चिरकालावस्थायिना मनसा हविषा चरुपुरोडाशादिना अयजन्त इष्टवन्तः इति स्वेषामेव परोक्षेणाभिधानम् । 'विद्वान् [4]यजेत' इति 'विद्वान् याजयेत' इति वचनाद् अनुष्ठेयार्थप्रकाशकमन्त्रार्थयष्टव्यदेवताकर्तृज्ञानरूपं वैदुष्यं कर्मसु अपेक्षितम् । तच्च पूर्वापरानुसंधानसाधनभूतेन मनसा विना न संभवतीति मनसेत्युक्तम् । 'यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेद् वषट्करिष्यन्' ( ऐब्रा ३,८ ) इति हि श्रुतिः । वषट्कारवचनम् उपलक्षणम् । तत्र तस्मिन् परमे उत्कृष्टे केवलपुण्यफलभोगस्थाने व्योमन् व्योमनि द्युलोके मदेम वयं यजमाना हृष्यास्म । माद्यतेः 'लिङ्याशिष्यङ्' ( पा ३,१,८६ ) इत्यङ्प्रत्ययः । अपि च सूर्यस्योदितौ । द्युलोके हि नित्योदितः सूर्यः । सूर्यप्रकाशे यावत्सूर्यप्रकाशं तत् फलं पश्येम । पश्यतिरत्र आलोचनवाची । भोग्यत्वेन जानीमः । चिरकालपुण्यफलमनुभवेमेत्यर्थः । एवं द्रव्ययज्ञस्वरूपतत्फलतद्भोगस्थानपरतया व्याख्यातः ।

ज्ञानयज्ञपरत्वेनापि अयं मन्त्रो व्याख्यायते — आत्मविषयविद्यया दीव्यन्ति

---

१. निवृत्तो S'.    २. °मर्त्येन Bh.    ३. दे॒वाः P.    ४. यजे S'.

क्रीडन्तीति देवाः विविदिषवः। यत्। सप्तम्या लुक्। यस्मिन् ब्रह्माग्नौ देवान्। देवशब्देन देवनसाधनभूता इन्द्रियवृत्तयो विवक्ष्यन्ते। तासां मनसश्च विषयेषु सांतत्येन प्रवर्तनाद् अमर्त्यत्वाभिधानम्। अथवा तत्त्वविद्योदयपर्यन्तम् इन्द्रियवासनानां मनसश्चावस्थानाद् अविनश्वरत्वम्। मनसेति सहार्थे तृतीया। अक्षवृत्त्युपरमेऽपि मनसो व्यापारसद्भावात् पृथगुपादानम्। मनःसहिता अक्षवृत्तीः हविषा। भावपरोऽयं निर्देशः। हविष्ट्वेन। संकल्प्येति शेषः। यद्वा हविष्ट्वसंकल्पे मनसः करणत्वात् तृतीया। अमर्त्येन। मर्त्यशब्देन क्षयिष्णवो बाह्यविषया उच्यन्ते। विनाशिविषयानासक्तेनेत्यर्थः।

'मन एव मनुष्याणां कारणं बन्धमोक्षयोः।
बन्धाय विषयासक्तं मुक्तैर्निर्विषयं स्मृतम्॥' (मैउ ४,४,११)

इति श्रुतेः। तादृशेन विषयानासङ्गिना मनसा इन्द्रियवृत्तीर्हविष्ट्वेन संकल्प्य अयजन्त। तथाविधा वयं तत्र तस्मिन् परमे। तस्य सर्वजगदधिष्ठानत्वात् तस्य वा अधिष्ठानान्तराभावात् परमत्वम्। 'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' (छाउ ७,२४,१) इति श्रुतेः स्वमहिमप्रतिष्ठे व्योमनि व्योमवद् असङ्गे सर्वगते चिदानन्दलक्षणे ब्रह्मणि विषये मदेम तुष्यास्म। न केवलं संतोषः, अपि तु सूर्यस्य सुष्ठु प्रेरकस्य परमात्मनः उदितौ परिपूर्णप्रकाशसाक्षात्कारेण अविद्यास्तमये सति तत् प्रकाशात्मकं तत्त्वं पश्येम स्वात्मतया अनुभवेम। संप्रश्ने लिङ्।

यत् पुरुषेण हविषा यज्ञं देवा अतन्वत[2]।
अस्ति[3] नु तस्मादोजीयो यद् विहव्येनेजिरे॥ ४॥

यत्। पुरुषेण। हविषा। यज्ञम्। देवाः। अतन्वत[4]।
अस्ति[5]। नु। तस्मात्। ओजीयः। यत्। विऽहव्येन। ईजिरे॥४॥

सर्वातिशायिसर्वात्मकहिरण्यगर्भरूपफलप्रापकात् पुरुषमेधाख्यमहाक्रतोरपि सर्वात्मकब्रह्मस्वरूपावाप्तिफलप्रापको ज्ञानयज्ञः श्रेयान् इत्यनया अभिधीयते। पुरुषमेधविधायकं वाक्यम् एवं वाजसनेयब्राह्मणे समाम्नायते— 'पुरुषो ह[6] नारायणोऽकामयत। अतितिष्ठेयं सर्वाणि भूतान्यहमेवेदं सर्वं स्याम् इति। स एतं[7] पुरुषमेधं पञ्चरात्रं यज्ञक्रतुम् अपश्यत्। तम् आहरत्। तेनायजत। तेनेष्ट्वाऽत्यतिष्ठत् सर्वाणि भूतानीदं सर्वम्

---

१. मुक्त्यै निरा.; मोक्षे सात. २. अतन्वत B,Bh,D,R,S,Cs,WM.; अतन्व°>अतन्व° A.
३ अस्ति B,Bh,D,K,Km,R,Sm,V,WM.; अस्ति>अस्ति A. ४. अतन्वत P,J,Cp
५. अस्ति P,P², J,Cp,WM. ६. ह वै शपा. ७. एवं S'.

अभवत्' ( माश १३,६,१,१ ) इति । देवाः दीव्यन्तीति देवा यजमानाः पुरुषेण अश्वरूपेण हविषा । 'अथ स पुरुषोऽश्व आसीत्' इति वाजसनेयश्रुतेः । अत्र साक्षात् पुरुषस्य अनालम्भनात् पर्यग्निकरणानन्तरम् उत्सर्गविधानाद् 'अश्वमेधातिदिष्टोऽश्वः पशुः'[1] पुरुषशब्देन विवक्ष्यते । तेन हविषा यज्ञं पुरुषमेधाख्यं अतन्वत विस्तारितवन्तः । यद्वृत्तयोगाद् अनिघातः । 'ब्रह्मणे ब्राह्मणम् आलभते' ( तैब्रा ३,४,१,१ ) इत्यादिना समाम्नाता ब्राह्मणक्षत्रियवैश्यशूद्रादिरूपा बहवः पुरुषपशवो विद्यन्ते इति यज्ञविस्तारोक्तिः । एवं पुरुषहविष्कयज्ञ इति यत् अस्ति तस्मात् ओजीयः अतिशयेन ओजस्वि सारवत् अस्ति नु विद्यते खलु । सामान्यनिर्देशेन यज्ञस्वरूपापेक्षया वा नपुंसकत्वम् । ओजीय इति ओजस्विशब्दाद् ईयसुनि विनो लुकि रूपम् । ओजीयोऽस्तीति प्रतिज्ञातं तद् दर्शयति — विहव्येन । हव्यं होतव्यहविः । विगतहविष्केण ज्ञानयज्ञेन ईजिरे इष्टवन्तः स्वात्मानं परमात्माभेदेन साक्षात्कृतवन्त इति यत् तद् ओजीय इति । द्रव्ययज्ञज्ञानयज्ञयोरुभयोः सार्वात्म्यलक्षणफलसाम्येऽपि पुरुषमेधफलस्य कर्मजन्यत्वेन विनाशित्वं ज्ञानयज्ञफलं तु न तथेति तस्माद् ओजीय इत्युक्तम् । भगवतापि उक्तम् —

'श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः परंतप' ( भगी ४,३३ ) इति ।

मुग्धा देवा उत शुनाऽयजन्तोत गोरङ्गैः पुरुधाऽयजन्त[2] ।
य इमं यज्ञं मनसा चिकेत प्र णो वोचस्तमिहेह ब्रवः ॥ ५ ॥

मुग्धाः[3] । देवाः । उत । शुना । अयजन्त । उत । गोः । अङ्गैः । पुरुऽधा । अयजन्त । यः । इमम् । यज्ञम् । मनसा । चिकेत । प्र । नः । वोचः । तम् । इह । इह । ब्रवः ॥ ५ ॥

एवं कर्मयज्ञात् ज्ञानयज्ञस्य उत्कर्षं श्रुत्वा कर्मयज्ञं निन्दन् अविनाशिफलकामस्तटस्थो ब्रूते — मुग्धाः कार्याकार्यविवेकरहिता देवा यजमानाः । उतशब्दः अप्यर्थे । शुनाऽपि अयजन्त । यज्ञो हि पशुसाधनकः । तत्र अत्यन्तगर्हितस्यापि शुनः पशुत्वेन निर्देशात् कर्मयज्ञस्य निन्दा दर्शिता । अखाद्यानां परमावधिः श्वा । तथा । उतशब्दः अप्यर्थे । गोः गोरूपपशोः अङ्गैः अवयवैरपि । 'हृदयस्याग्रेऽवद्यति' ( तै ६,३,१०,४ ) इति अङ्गावदानश्रवणाद् अङ्गैरित्युक्तम् । अवध्यानां परमावधिर्गौः[4] । पुरुधा बहुधा अयजन्त । एकदा करणे प्रमादाज्ञानादिकृतम् इति संभावना भवति । अतस्तन्निरासाय पुरुधेत्युक्तम् । सर्वदा शुनकगवादिरूपैः पशुभिर्यज्ञं कुर्वन्तीत्यर्थः । एवं पूर्वार्धेन कर्मयज्ञं निन्दित्वा उत्तरार्धेन ज्ञानयज्ञप्राप्तये तद्भिज्ञं प्रार्थयते — यो विद्वान् इमं यज्ञम् यष्टव्यं परमात्मानं मनसा चिकेत जानाति स्म तं तथाविधं गुरुं नः अस्माकं प्र वोचः प्रकर्षेण ब्रूहि ।

---

१. °धादतिदिष्टोश्वपशुः S'. २. पुरुपार्य° K; पुरुपार्य° > पुरुधार्य° Bb.
३. मुग्धा P,P² J,Cp,WM. ४. °वधिश्वातथागौः S'.

तेन प्रदर्शितं गुरुं ब्रूते — इहेह इहैव इदानीमेव नवः परमात्मस्वरूपं ब्रूहि ।

इति सप्तमे काण्डे प्रथमेऽनुवाके प्रथमं सूक्तम् ।

'अदितिर्द्यौरदितिः' इति द्वितीयं सूक्तम् । तत्र आद्याभिश्चतसृभिः सर्वफलकामः अदितिं यजते उपतिष्ठते वा । 'अथर्वाणम्' (अ ७,२), 'अदितिर्द्यौः' (अ ७,६), 'दितेः पुत्राणाम्' (अ ७,८) इति सूत्रात् (कौसू ५९,१८) ।

तथा आधाने पवमानेष्टौ आदित्यहविरनुमन्त्रणे 'अदितिर्द्यौः' इति विनियुक्ता । आधानं प्रक्रम्य वैताने सूत्रितम् — "'पवमानः पुनातु' (अ ६,१९,२), 'त्वेपस्ते' (अ १८,४,५९), 'अग्नी रक्षांसि' (अ ८,३,२६), 'अदितिर्द्यौः' (अ ७,६,१) इति" (वैताश्री ६,११) इति ।

'महीमू षु' (अ ७,६,२;७,७) इति तृचेन नौघटादिभिरुदकतरणे स्वस्त्ययनकामो नावादिकम् अभिमन्त्र्य तेन तरेत् ।

तथा नावादिभिर्दूरदेशगमने स्वस्त्ययनकामः अनेन तृचेन नावं संपात्य तरेत् ।

तथा तत्रैव कर्मणि अनेन तृचेन नौमार्णि संपात्य अभिमन्त्र्य नाविकेभ्यो बध्नीयात् ।

सूत्रितं हि — "'महीमू षु' इति तरणान्यारोहयति[1] । दूरान्नावं संपातवतीं[2] नौमार्णि बध्नाति" (कौसू ५२,१०,११) इति ।

'महीमू षु' इति ऋचा विवाहे चतुर्थिकाकर्मणि खट्वां स्पर्शयेत् । "'महीमू षु' इति तल्पम् आलम्भयति" (कौसू ७९,३) इति सूत्रात् ।

तथा आवसथ्याधाने कन्याद्विसर्जनानन्तरं गृहसमीपे नदीरूपाणि[3] कृत्वा उदकेन आपूर्य 'महीमू षु', 'सुत्रामाणम्' इत्याभ्यां नावम् आरोहयेत् । सूत्रितं हि — "प्राग्दक्षिणं सप्त नदीरूपाणि कारयित्वा उदकेन पूरयित्वा 'आ रोहत सवितुर्नावमेताम्' (अ १२,२,४८), 'सुत्रामाणम्' (अ ७,७,१), 'महीमू षु' (अ ७,६,२) इति सहिरण्यां सयवां नावम् आरोहयति" (कौसू ७१,२३) इति ।

सोमयागे दीक्षायां 'सुत्रामाणम्' इत्येनां कृष्णाजिनस्थो यजमानो जपेत् । "'पुनन्तु मा' (अ ६,१९,१) इति पाव्यमानः । 'सुत्रामाणम्' (अ ७,७,१) इति कृष्णाजिनम् उपविशन्" (वैताश्री ११,१०;११) इति हि वैतानं सूत्रम् ।

अग्निचयने 'वाजस्य नु प्रसवे' इति वाजप्रसवीयहोमान् ब्रह्मा अनुमन्त्रयेत । "'वाजस्य नु प्रसवे' (अ ७,७,२) इति वाजप्रसवीयहोमान्" (वैताश्री २९,२०) इति वैतानसूत्रात् ।

---

१. °न्यालभयति Bl. २. संपातवर्ता S'. ३. नदीं रू° S'.

सर्वफलकामो 'दितेः पुत्राणाम्' इति देवान् यजते उपतिष्ठते[1] वा । 'अथर्वाणम्', 'अदितिर्द्यौः', 'दितेः पुत्राणाम्' ( कौसू ५९,१८ ) इति हि कौशिकं सूत्रम् ।

प्रवासे द्रव्यलाभार्थं 'भद्रादधि' (अ ७,९) इति ऋचा आज्यसमित्पुरोडाशादीनाम् अन्यतमं जुहुयाद् ऋचं जपेद् वा ।

तथा अश्वादियानेन गच्छन् अनया अश्वादिकं संपात्य अभिमन्त्र्य उद्-केन संप्रोक्षयेद् मोचयेच्च ।

तथा विक्रेयं वस्त्रादिकम् अनया संपात्य अभिमन्त्र्य लाभकामः अभिमतं देशं नयेत् ।

तथा लाभकामः अनया वस्त्रादिकम् अभिमन्त्र्य स्वीकुर्यात् ।

सूत्रितं हि — " 'भद्रादधि' इति प्रवत्स्यन्नुपदधीत । जपति । यानं संप्रोक्ष्य विमोचयति । द्रव्यं संपातवद् उत्थापयति । निर्मृज्योपयच्छति" ( कौसू ४२,१-५ ) इति ।

तथा ग्रहयज्ञे 'भद्रादधि' इत्यनया हविराज्यसमिदाधानोपस्थानानि बृहस्पतये कुर्यात् । तद् उक्तं शान्तिकल्पे — " 'स बुध्न्यात्[2]' ( अ ४,१,५ ), 'भद्रादधि श्रेयः प्रेहि', 'बृहस्पतिर्नः' ( अ ७,५३ ) इति बृहस्पतये" ( शाक १५? ) इति ।

'प्रपथे पथाम्' इति चतुर्ऋचेन नष्टद्रव्यलाभार्थं नष्टद्रव्याकाङ्क्षिणां दक्षिणं पाणिम् उन्मृज्य संपात्य विमृज्य वा उत्थापयेत् ।

तथा तत्रैव कर्मणि अनेन चतुर्ऋचेन एकविंशतिशर्करा अभिमन्त्र्य चतुष्पथे निधाय विकिरेत् ।

सूत्रितं हि—" 'प्रपथे' (अ ७,१०) इति नष्टैषिणा प्रक्षालिताभ्यक्तपाणि[रा]दानां [3]दक्षिणं पाणि[3] निमृज्योत्थापयति[4] । एवं संपातवतः । निमृज्यैकविंशति[5] शर्कराश्चतुष्पथे निक्षिप्याऽवकिरति" (कौसू ५२,१२-१४ ) इति ।

तथा चातुर्मास्ये वैश्वदेवपर्वणि 'प्रपथे पथाम्' इत्यनया पौष्णं हविरनु-मन्त्रयेत । 'चातुर्मास्यानि प्रयुञ्जीत' इति प्रक्रम्य 'प्रपथे पथाम्', 'मरुतः पर्वतानाम्' (अ ५,२४,६) इति वैताने सूत्रितम् ( वैताश्रौ ८,८;१३ ) ।

अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्ष॒मदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः ।
विश्वे॑ दे॒वा अदि॑तिः॒ पञ्च॒ जना॒ अदि॑तिर्जा॒तमदि॑ति॒र्जनि॑त्वम् ॥ १ ॥

अदि॑तिः । द्यौः । अदि॑तिः । अ॒न्तरि॑क्षम् । अदि॑तिः । मा॒ता । सः । पि॒ता । सः । पु॒त्रः ।
विश्वे॑ । दे॒वाः । अदि॑तिः । पञ्च॑ । जना॑ः । अदि॑तिः । जा॒तम् । अदि॑तिः । जनि॑त्वम् ॥ १ ॥

---

१. उत्तिष्ठते S'.　२. बुध्नाद् S'.　३. दक्षिणान् पाणीन् Bl.　४. निर्मृ-ज्योत्थापयेत् शंपा.　५. विमृज्यैकविंशतिश° शंपा.

अदितिः अदीना अखण्डनीया वा पृथिवी देवमाता वा । सैव द्यौः द्योतनशीलो नाकः । सैव अन्तरिक्षम् अन्तरा द्यावापृथिव्योर्मध्ये ईक्ष्यमाणं व्योम । सैव माता निर्मात्री जगतो जननी । स एव[1] पिता उत्पादकस्ताताश्च[2] । स पुत्रः मातापित्रोर्जातः पुत्रोऽपि । विश्वे देवाः सर्वेऽपि देवा अदितिः एव । पञ्च जनाः निषादपञ्चमाश्चत्वारो वर्णाः । यद्वा गन्धर्वाः पितरो देवा असुरा रक्षांसि । तद् उक्तं यास्केन — 'गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके । चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः' ( नि ३,८ ) इति । ऐतरेयब्राह्मणे तु एवम् आम्नातम् — 'सर्वेषां वा एतत् पञ्चजनानाम् उक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां च' ( ऐब्रा ३,३१ ) इति । तत्र गन्धर्वाप्सरसाम् ऐक्यात् पञ्चजनत्वम् । एवंविधाः पञ्च जना अपि अदितिः एव । जातम् जननं प्रजानाम् उत्पत्तिः सापि अदितिः एव । जनित्वम् जन्माधिकरणम् । यद्वा जातम् उत्पन्नं जनित्वम् उत्पत्स्यमानं च यद् अस्ति तदपि अदितिः एव । एवं सकलजगदात्मना अदितिः स्तूयते । उक्तं च यास्केन — 'इत्यदितेर्विभूतिम् आचष्टे' ( नि ४,२३ ) इति । अदितिः । दो अवखण्डने । अस्मात् कर्मणि क्तिनि 'द्यतिस्यतिमास्थाम्' ( पा ७,४,४० ) इति इत्वम् । यास्कपक्षे तु दीङ् क्षये इत्यस्मात् क्तिनि व्यत्ययेन ह्रस्वत्वम् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । स पितेति स पुत्र इति 'उद्दिश्यमानप्रतिनिर्दिश्यमानयोरैकत्वमापादयन्ति सर्वनामानि पर्यायेण तत्तल्लिङ्गमुपाददते' (पाकै पस्पशाह्निके) इत्युद्देश्यलिङ्गतया पुंलिङ्गत्वम् । जनित्वम् । जनेरौणादिक इत्वन्प्रत्ययः ।

महीमू षु मातरं सुव्रतानामृतस्य पत्नीमवसे हवामहे[3] ।
तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिम् ॥ २ ॥

महीम् । ऊं इति । सु । मातरम् । सुऽव्रतानाम् । ऋतस्य । पत्नीम् । अवसे । हवामहे । तुविऽक्षत्राम् । अजरन्तीम् । उरूचीम् । सुऽशर्माणम् । अदितिम् । सुऽप्रनीतिम् ॥ २ ॥

महीम् महतीं मंहनीयां वा सुव्रतानाम् । व्रतम् इति कर्मनाम (तु. निघ २,१) । शोभनकर्मणां पुरुषाणां मातरम् मातृस्थानीयाम् ऋतस्य सत्यस्य यज्ञस्य वा पत्नीम् पालयित्रीं तुविक्षत्राम् बहुबलां बहुधनां वा । त्रिचक्रादित्वाद् (पावा ६,२,१९९) उत्तरपदान्तोदात्तत्वम् । अजरन्तीम् अविनश्वरीम् उरूचीम् उरून् महतः अञ्चन्तीम् उरु महद् अतिदूरं वा गच्छन्तीं बहुप्रकारगतिं वा । 'चौ' ( पा ६,३,१३८ ) इति पूर्वपदस्य दीर्घत्वम् । सुशर्माणम् सुसुखाम् । 'सोर्मनसी अलोमोषसी' ( पा ६,२,११७ ) इति उत्तरपदाद्युदात्तत्वम् । सुप्रणीतिम् सुखेन कर्मणां प्रणेत्रीं सुष्ठु प्रणीयमानां वा अदितिम् अखण्डनीयां देवमातरं नावं वा अवसे रक्षणाय सु सुष्ठु हवामहे आह्वयामः । व्यत्ययेन शः[4] । उ इति पदपूरणे ।

---

१. सैव द्यौः. २. 'कस्ताबतश्च S'. ३. हुवेम मा २१,५, तै १,५,११,५ मै ४,१०,१ काठ २०,४ पै २०,१,८ वाश्री २,२,१४. ४. चिन्त्यमिदम् । 'बहुलं छन्दसि' (पा ६,१,३४) इति संप्रसारणे पूर्वरूपे च शपि गुण इति न्याय्यम्.

सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।
दैवीं नावं स्वरित्रामनागसो[1] अस्रवन्तीमा रुहेमा स्वस्तये ॥ १ ॥

सुऽत्रामाणम् । पृथिवीम् । द्याम् । अनेहसम् । सुऽशर्माणम् । अदितिम् । सुऽप्रनीतिम् ।
दैवीम् । नावम् । सुऽअरित्राम् । अनागसः । अस्रवन्तीम् । आ । रुहेम । स्वस्तये ॥ १ ॥

सुत्रामाणम् सुष्ठु त्रायमाणां पृथिवीम् विस्तीर्णाम् । प्रथेः 'प्रथेः षिवन् संप्रसारणं च' (पाउद ८,१२४) इति प्रत्ययसंप्रसारणे । षित्वात् ङीष् । द्याम् द्योतमानाम् अभिगन्तव्यां वा अनेहसम् अपापाम् । सुशर्माणम् इति पादः पूर्वस्याम् ऋचि व्याख्यातः । स्वरित्राम् शोभनारित्राम् । अरित्रम् उदकक्षेपणसाधनभूतो दण्डः । अस्रवन्तीम् अच्छिद्रां दैवीम् । देवानाम् इयम् । 'देवाद् यञञौ' (पावा ४,१,८५) इति अञ्प्रत्ययः । देवमातरं देवसंबन्धिनीं वा नावम् नौसदृशीं प्रसिद्धां वा नावम् अनागसः अनपराधा वयं स्वस्तये क्षेमाय आ रुहेम आरूढा भूयास्म । 'लिङ्याशिष्यङ्' (पा ३,१,८६) । 'अन्येषामपि दृश्यते' (पा ६,३,१३७) इति सांहितिको दीर्घः । अस्य मन्त्रस्य दीक्षायां कृष्णाजिनादिरूढेन यजमानेन जप्यत्वाद् नौशब्देन कृष्णाजिनं विवक्ष्यते । तथा च ऐतरेयब्राह्मणे — 'कृष्णाजिनं वै सुतर्मा नौः' (ऐब्रा १,१३) इत्याम्नातम् । सर्वाणि विशेषणानि पूर्ववद् योज्यानि ।

वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे ।
यस्या उपस्थ उर्व१न्तरिक्षं सा नः[2] शर्म त्रिवरूथं नि यच्छात् ॥ २ ॥

वाजस्य । नु । प्रऽसवे । मातरम् । महीम् । अदितिम् । नाम । वचसा । करामहे ।
यस्याः । उपऽस्थे[3] । उरु । अन्तरिक्षम् । सा । नः । शर्म । त्रिऽवरूथम् । नि । यच्छात् ॥२॥

वाजस्य अन्नस्य प्रसवे उत्पत्तौ उत्पत्त्यर्थम् । 'थाथ' (पा ६,२,१४४) इत्यादिस्वरेण अन्तोदात्तः । मातरम् अन्नस्य निर्मात्रीं महीम् महतीम् अदिति नाम । अदितिः अदीना अखण्डनीया वा । एवंनामधेयाम् एवंस्वभावां नावं वा नु क्षिप्रं वचसा स्तुत्या करामहे कुर्महे । अदितिं नावं वा अन्नप्रसवार्थं स्तुम इत्यर्थः । करोतेर्व्यत्ययेन शप् । यस्या अदित्या उपस्थे उत्सङ्गे समीपे उरु विस्तीर्णम् अन्तरिक्षम् आकाशं वर्तते सा अदितिः नः अस्माकं त्रिवरूथम् त्रिभूमिकं त्रिकक्ष्यं शर्म गृहं नि यच्छात् नियच्छतु प्रयच्छतु । यमेर्लेटि आडागमः । 'इषुगमियमां छः' (पा ७,३,७७) इति छादेशः ।

---

1. °मनागसम् ऋ १०,६३,१० मा २१,६ तै १,५,११,५ मै ४,१२,१ कठ २,३; सुरित्रामनागसम् पै २०,१,९.　　2. दुर्गी सुहवा शर्म यच्छतु तै ३,३,११,४.　　3. °स्थे. K P, P[1],J,Cp,W M.W.W1. तैत्ता.; पंद्ध. दांरा. मा. उपऽस्थे.

दितेः पुत्राणामदितेरकारिषम्[1] [2]अव देवानां[2] [3]बृहतामनर्मणाम्[3] ।
तेषां हि धाम गभिषक् समुद्रियं [4]नैनान् नमसा परो अस्ति[4] कश्चन ॥१॥

दितेः । पुत्राणाम् । अदितेः । अकारिषम् । अव । देवानाम् । बृहताम् । अनर्मणाम् ।
तेषाम् । हि । धाम । गभिऽसक् । समुद्रियम् । न । एनान्[5] । नमसा । परः । अस्ति । कः । चन ॥१॥

कश्यपस्य द्वे भार्ये अदितिर्दितिश्च । तत्र अदितेरुत्पन्ना देवाः । दितेस्तु दैत्या दानवाः । तथा सति देवयागे अस्या ऋचो विनियोगाद् देवप्रशंसापरत्वेन व्याख्यायते — दितेः पुत्राणाम् दैत्यानां संबन्धि । तेषां हि धामेति तृतीयपादे दैत्यस्थानस्य उक्तत्वाद् अत्र षष्ठ्या तत्संबन्धि स्थानं विवक्ष्यते । दैत्यानां स्थानम् अव । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । अवकृष्य दैत्येभ्यः अपहृत्य अदितेः । जन्ये जनकशब्दः । पुत्राणाम् इति वा अनुषङ्गः । अदितेः पुत्राणां देवानाम् । अर्थायेति शेषः । दितेः पुत्राणां स्थानम् अव अकारिषम् अवकिरामि । अवक्षिपामि । यथा तद् धाम दैत्यानां निवासाय न भवेत् तथा विप्रकीर्णं करोमीत्यर्थः । कॄ विक्षेपे । लुङि 'आर्धधातुकस्येड्वलादेः' (पा ७,२,३५) इति इडागमे वृद्धौ रूपम् । देवा विशेष्यन्ते — बृहताम् गुणैर्महताम् अनर्मणाम् अर्म हतस्थानम् तद्रहितानां शत्रुभिरनभिभाव्यानाम् । हिर्हेतौ । हि यस्मात् समुद्रियं समुद्रे भवम् । 'समुद्राभ्राद्घः' (पा ४,४,११८) इति घः । समुद्रम् अन्तरिक्षं प्रसिद्धो वा समुद्रः । तत्र दैत्या निवसन्तीति हि प्रसिद्धिः । तादृशं समुद्रभवं तेषां दैत्यानां धाम स्थानं गभिषक् । गम्भीरम् इत्यर्थः । परैर्दुष्प्रवेशम् । दुर्जयम् इति यावत् । अतः अवकृष्य किरामि[6] अवक्षिपामि तेषामिति[7] संबन्धः । किमिति दैत्यतिरस्कारः तद् आह — एनान् । देवानां बृहताम् अनर्मणाम् इति गुणाधिक्यस्य उक्तत्वात् ते देवा अत्र अन्वादिश्यन्ते । एनान् देवान् परः । परशब्दयोगे पञ्चम्या भवितव्यम् । अत्र छान्दसो विभक्तिव्यत्ययः[8] । एतेभ्यो देवेभ्यः परः अन्यः कश्चन । चनेति निपातसमुदायः अप्यर्थे । कश्चिदपि नमसा नमस्कारेण हविर्लक्षणेन अन्नेन वा न संभाव्योऽस्ति । अतो देवानामेव यष्टव्यत्वेन प्रशस्तत्वात् तदर्थेनानेन यागेन अस्माभिरभिलषितसिद्धिराशास्यते ।

भद्रादधि[9] श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्तु ।
अथेममस्या[10] वर आ पृथिव्या आरेशत्रुं[11] कृणुहि सर्ववीरम्[12] ॥ १ ॥

१. °कार्षम् A R.WM. पै २०,१,६. २. अवो दे° ऋ १०,३६,११; महातमर्णां पै. ३. महताम° पै.; °मनर्वणाम् ऋ. ४. नेषां ये अपम· परोऽस्ति पै. ५. एनाम् Bp°. ६. करोमि S'. ७. तेनि S' ८. वस्तुनः परम् इति शब्दः. ९. °दुभि ते १. २,३,३ कौसा ७,१० आश्री ४,४,२ आपश्री १०,१९,८ शांश्री ५,६,२. १०. अथेमवं स्य तै. आश्री. शांश्री. ११. आरे शत्रून तै. आश्री. शांश्री. १२. °वीरः तै. आश्री. शांश्री.

भ॒द्रात् । अधि॑ । श्रेयः॑ । प्र । इ॒हि॒ । बृह॒स्पतिः॑ । पु॒रः॒ऽए॒ता । ते॒ । अ॒स्तु॒ ।
अथ॑ । इ॒मम् । अ॒स्याः । वरे॑ । आ । पृ॒थि॒व्याः । आ॒रेऽश॑त्रुम् । कृ॒णु॒हि॒ । सर्व॑ऽवीरम् ॥१॥

हे वस्त्रधनादिलाभकाम पुरुष भद्रात् मङ्गलात् संपदः । अधिः पञ्चम्यर्थानुवादी । श्रेयः संपदं प्रेहि प्रगच्छ प्रकर्षेण गच्छ । उत्तरोत्तरं संपदं प्राप्नुहीत्यर्थः । यद्वा भद्रात् भन्दनीयाद् अस्मात् स्थानात् श्रेयः अतिशयितलाभहेतुं स्थानं प्रेहि । देशान्तरं गच्छतः पुरुषस्य बृहस्पतिसाहायकं[1] दर्शयति — ते लाभार्थं गच्छतस्तव बृहस्पतिः बृहतां देवानां पतिः हिताचरणेन पालयिता एतन्नामा देवः पुरएता अस्तु पुरतो गन्ता अग्रगामी भवतु । प्राप्तकाले लोट् । 'पुरोऽव्ययम्' (पा १,४,६७) इति गतित्वाद् 'गतिकारकोपपदात् कृत्' ( पा ६,२,१३९ ) इति उत्तरपदप्रकृतिस्वरत्वम् । उत्तरार्धे बृहस्पतिः संबोध्यते — हे बृहस्पते त्वम् अथ पुरतो गमनानन्तरम् इमं लाभकामं पुरुषम् अस्याः पृथिव्या वरे उत्कृष्टे लाभस्थाने आ । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । आस्थापय । यस्मिन् प्रदेशे धनादिलाभविशेषो भवति तत्र इमं पुरुषं संयोजयेत्यर्थः । अपि च सर्ववीरम् सर्वे वीराः पुत्रभृत्यादयः यस्य तादृशं शत्रुम्[2] आरे[2] दूरे कृणुहि कुरु । लाभस्थाने लाभकामस्य पुरुषस्य ये परिपन्थिनो जनाः तान् दूरम् अपसारयेत्यर्थः । कृवि हिंसाकरणयोश्च । 'धिन्विकृण्व्योर च' (पा ३,१,८० ) इति उप्रत्ययः । 'उतश्च प्रत्ययाच्छन्दसि वा वचनम्' ( पावा ६,४,१०६ ) इति हेर्लुगभावः ।

प्रप॑थे प॒थाम॑जनिष्ट[3] पू॒षा प्रप॑थे दि॒वः प्रप॑थे पृथि॒व्याः ।
उ॒भे अ॒भि प्रि॒यत॑मे स॒धस्थे॒ आ च॒ परा॑ च चरति प्रजा॒नन् ॥ १ ॥

प्रऽप॑थे । प॒थाम् । अ॒ज॒नि॒ष्ट॒ । पू॒षा । प्रऽप॑थे । दि॒वः । प्रऽप॑थे । पृ॒थि॒व्याः । उ॒भे इति॑ । अ॒भि । प्रि॒यऽत॑मे॒ इति॑ प्रि॒यऽत॑मे । स॒धऽस्थे॒ इति॑ स॒धऽस्थे॑ । आ । च॒ । परा॑ । च॒ । च॒र॒ति॒ । प्र॒ऽजा॒नन् ॥ १ ॥

पूषा पोषको मार्गरक्षको देवः पथाम् मार्गाणां प्रपथे । प्रक्रान्तः पन्थाः प्रपथः । मार्गमुखे अजनिष्ट प्रादुर्भवति रक्षणार्थम् । तथा पूर्ववद् दिवः द्युलोकस्य प्रपथे प्रवेशद्वारे पृथिव्याः प्रपथे प्रवेशद्वारे । अजनिष्ट इति संबन्धः । सोऽयं पूषा प्रियतमे अतिशयेन प्रीतिमत्यौ सधस्थे परस्परं सहैव अवस्थिते । 'सध मादस्थयोश्छन्दसि' (पा ६,३,९६) इति सहस्य सधादेशः । तादृश्यौ उभे द्यावापृथिव्यौ अभि अभिलक्ष्य प्रजानन् यजमानैः कृतं कर्म तत्फलं च प्रकर्षेण विद्वान् आ चरति च परा चरति च दिवः पृथिवीम् आगच्छति पृथिव्या दिवं परागच्छति । सर्वप्राणिकृतस्य कर्मणः साक्षी भूत्वा उभयोरपि लोकयोर्गमनागमने करोतीत्यर्थः ।

---

१. साहाय्यकं S'. २. वैतु. मंत्रा. ट. ३. अजनिष्ट मै ४,१४,१६.

पूषेमा आशा अनु वेद सर्वाः सो अस्माँ अभयतमेन नेषत्[1] ।
स्वस्तिदा आघृणिः[2] सर्ववीरोऽप्रयुच्छन् पुर एतु प्रजानन्[3] ॥ २ ॥

पूषा । इमाः । आशाः । अनु । वेद । सर्वाः । सः । अस्मान् । अभयऽतमेन । नेषत् ।
स्वस्तिऽदाः । आघृणिः । सर्वऽवीरः । अप्रऽयुच्छन् । पुरः । एतु । प्रऽजानन् ॥ २ ॥

पूषा पोषको देवः इमाः सर्वा आशाः दिशः अनु वेद अनुक्रमेण जानाति। स पूषा देवः अस्मान् अभयतमेन अत्यन्तभयरहितेन मार्गेण नेषत् नयतु । नयतेर्लेटि 'सिब्बहुलं लेटि' (पा ३,१,३४) इति सिप् । अडागमः । सोऽयं पूषा स्वस्तिदाः क्षेमस्य कल्याणस्य वा दाता आघृणिः आगतदीप्तिर्व्याप्तदीप्तिर्वा सर्ववीरः सर्ववीरैः पुत्रादिभिर्युक्तः अप्रयुच्छन् । युच्छ प्रमादे । प्रमादम् अकुर्वन् प्रजानन् अस्मदभिप्रायं मार्गं वा प्रकर्षेण जानन् पुर एतु पुरतो गच्छतु । अस्मदभिलषितसाधनायेति शेषः ।

[4]पूषन् तव[5] व्रते वयं न[6] रिष्येम कदा[7] चन । स्तोतारस्त इह स्मसि ॥३॥

पूषन् । तव । व्रते । वयम् । न । रिष्येम । कदा । चन । स्तोतारः । ते । इह । स्मसि ॥

हे पूषन् पोषक देव तव व्रते कर्मणि यागरूपे वर्तमाना वयं कदा चन कदाचिदपि न रिष्येम न विनश्येम । पुत्रमित्रादिभिर्धनेन च वियुक्ता मा भूमेत्यर्थः। रुष रिष हिंसायाम् । दैवादिकः । किं च इह अस्मिन् कर्मणि इदानीं वा ते तव स्तोतारः स्तुतिं कुर्वाणाः स्मसि भवामः ।

परि पूषा [8]परस्ताद्धस्तं दधातु दक्षिणम् ।
पुनर्नो नष्टमाजतु सं नष्टेन गमेमहि ॥ ४ ॥

परि । पूषा । परस्तात्[9] । हस्तम् । दधातु । दक्षिणम् ।
पुनः । नः । नष्टम् । आ । अजतु । सम् । नष्टेन । गमेमहि ॥ ४ ॥

पूषा पोषको देवः परस्तात् परतः अतिदूराद् देशादपि । धनम् आदातुम् इति शेषः । दक्षिणं हस्तं परि दधातु प्रसारयतु । यत्रयत्र अस्माकं दित्सितं धनम अस्ति तद् धनम् अस्माकं दातुं तत्रतत्र देशे हस्तं प्रसारयतु इत्यर्थः।

---

१. मिषत् मै ४,१४,१६. २. अघृणिः तैत्रा २,४,१,६ तैआ ६,१,१. ३. प्रद्विद्वान् नेश्रा. ४. पूर्षस्तव तैत्रा २,५,५,५. ५. ना K,K^m,V. ६. कदा ऋ ६,५४,९ मा ३४,४१. ७. तु A,R,J, गा. ऋ ६,५४,१०; वंतु. B^h,D,K,K^m,S^m,P,P^s, V,Cs,Cp,RW. ९ २०,४३,१ पुर°.

नः अस्मान् नष्टं धनं पुनः आजतु पुनरागच्छतु। अज गतिक्षेपणयोः । न केवलम् आगमनं किं तु नष्टेन पुनरागतेन धनेन सं गमेमहि संगच्छेमहि । धनेन संगता भवेमेत्यर्थः । संपूर्वाद् गमेरात्मनेपदिनो 'लिङयाशिष्यङ्' (पा ३,१,८६ ) इति अङ् प्रत्ययः ।

इति सप्तमे काण्डे प्रथमेऽनुवाके द्वितीयं सूक्तम् ।

'यस्ते स्तनः' इति तृतीयं सूक्तम् । तत्र जम्भगृहीतबालकभैषज्यार्थं 'यस्ते स्तनः' इत्यनया स्तनम् अभिमन्त्र्य बालं पाययेत् ।

तथा तत्रैव कर्मणि प्रियङ्गुतण्डुलानाम् उपरि क्षीरं दुग्ध्वा अनया ऋचा अभिमन्त्र्य व्याधितं पाययेत् ।

सूत्रितं हि — "'यस्ते स्तनः' इति जम्भगृहीताय स्तनं प्रयच्छति। प्रियङ्गुतण्डुलान् अभ्यवदुग्धान् पाययति" ( कौसू. ३२,१;२) इति ।

अशनिनिवारणकर्मणि 'यस्ते पृथु स्तनयित्नुः' इति ऋचा अशनिम् उपतिष्ठेत । "'यस्ते पृथु स्तनयित्नुः' (अ ७,१२) इत्यशनिम्[1]" (कौसू. ३८,८) इति सूत्रात् ।

तथा ग्रहयज्ञे अनया हविराज्यहोमसमिदाधानोपस्थानानि केतवे कुर्यात् । तद् उक्तं शान्तिकल्पे — 'यस्ते पृथु स्तनयित्नुः' ( अ ७,१२ ), 'देवो देवान्' (अ १८,१,३०) इत्यादि "'केतुं कृण्वन्नकेतवे' ( ऋ १,६,३ ) इति केतवे" ( शाक. १५? ) इत्यन्तम् ।

तथा उपाकर्मणि अनया आज्यं जुहुयात् ।

"'सभा च मा' (अ ७,१३;१४) इति पञ्चर्चेन सभाजयकर्मणि क्षीरौदनं पुरोडाशं रसान् वा संपात्य अभिमन्त्र्य अश्नीयात् ।

तथा तत्रैव कर्मणि पञ्चर्चं जपन् सभास्तम्भं गृह्णीयात् ।

तथा तत्रैव कर्मणि अनेन पञ्चर्चेन सभाम् उपतिष्ठते ।

"'सभा च मा' इति भक्षयति। स्थूणे गृह्णाति उपतिष्ठते" ( कौसू. ३८,२७;२८ ) इति कौशिकसूत्रात् ।

कृत्याप्रतिहरणकर्मणि कृत्यानिःसारणानन्तरं स्वगृहम् आगत्य 'यथा सूर्यः' इत्यृचं जपन् प्रदक्षिणं गच्छेत् । "'यथा सूर्यः' (अ ७,१४,१) इत्यावृत्यानुव्रजति" ( कौसू. ३९,२६) इति सूत्रात् ।

अभिचारकर्मणि 'यथा सूर्यो नक्षत्राणाम्' इति द्व्यृचं शत्रुं दृष्ट्वा जपेत् ।

तत्रैव कर्मणि 'यावन्तो मा सपत्नानाम्' (७,१४,२) इति जपित्वा शत्रून् निरीक्षते ।

---

१. °शनिमुपतिष्ठते BI., पृ ९१ टि ३-५ द.

तथा नैर्ऋतकर्मणि निर्ऋतिप्रतिकृतिविसर्जनानन्तरं 'यथा सूर्यः' इति जपन् पुनः स्वगृहम् आगच्छेत्। तद् उक्तं शान्तिकल्पे—"उपानहावुपमुच्य[1] 'यथा सूर्यः' इत्यावृत्यावजति" ( शाक १५,६ ) इति।

यस्ते स्तनः शशयुर्यो मयोभूर्यः सुम्नयुः[2] सुहवो[3] यः सुदत्रः।
येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे कः[4] ॥ १ ॥

यः। ते। स्तनः। शशयुः। यः। मयःऽभूः। यः। सुम्नऽयुः। सुऽहवः। यः। सुऽदत्रः।
येन। विश्वा। पुष्यसि। वार्याणि। सरस्वति। तम्। इह। धातवे। कः[5] ॥ १ ॥

हे सरस्वति वर्णपदवाक्यादिना सरणवति वाग्देवते ते तव यः स्तनः शिशयुः[6] शिशोः पोषं कुर्वन् भवति। 'प्रातिपदिकाद्धात्वर्थे बहुलम् इष्ठवच्च' इति शिशुशब्दात् पुष्णातिधात्वर्थे णिच्प्रत्ययः। इष्ठवद्भावात् शिशोष्टि-लोपः। ण्यन्ताद् औणादिक उप्रत्ययः। णिलोपाभावश्छान्दसः। ण्यन्तत्वादेव अनवग्रहः। शेतेर्वा। शिशयुः निगूढः। अनुपासकानाम् अप्रकाश इत्यर्थः। 'यस्ते स्तनो गुहाया निहितः' (माश १४,२,१,१५) इति वाजसनेयश्रुतेः। यः च स्तनो मयोभूः। मय इति सुखनाम। सुखस्य भावयिता। यः च सुम्नयुः सुम्नं सुखं परेषां इच्छतीति सुम्नयुः। 'छन्दसि परेच्छायाम्' ( पावा ३,१,८ ) इति क्यच्। सामान्यविशेषविवक्षया मयोभूः सुम्नयुरिति विशेषणद्वयम्। सुहवः शोभनाह्वानः सर्वैराप्यायनार्थं[7] सम्यग् आहूय-मानः। काम्यमान इत्यर्थः। यः च सुदत्रः कल्याणदानः सुधनो वा। येन च स्तनेन विश्वा विश्वानि वार्याणि वरणीयानि धनानि पुष्यसि पोषयसि। स्तोतॄम्य इति शेषः। तं तादृशगुणोपेतं स्तनम् इह अस्मिन् जन्मगृहीते बालके धातवे धातुं पातुं योग्यं कः कुरु। धेट् पाने। तुमर्थे तवेन्प्रत्ययः। करिति। करोते-श्छान्दसे लुङि 'मन्त्रे घस॰' ( पा २,४,८० ) इति च्लेर्लुकि गुणे 'हल्ङ्या' ( पा ६,१,६८ ) इत्यादिना सिपो लोपे "अमाङ्योगेऽपि' ( पा ६,४,७५) इति अडभावे रूपम्।

यस्ते पृथु[8] स्तनयित्नुर्य ऋष्वो[9] दैवः केतुर्विश्वमाभूषतीदम्।
मा नो वधीर्विद्युता देव सस्यं मोत वधी रश्मिभिः सूर्यस्य ॥ १ ॥

यः। ते। पृथुः। स्तनयित्नुः। यः। ऋष्वः। दैवः। केतुः। विश्वम्। आऽभूषति। इदम्।
मा। नः। वधीः। विऽद्युता। देव। सस्यम्। मा। उत। वधीः। रश्मिऽभिः। सूर्यस्य ॥१॥

---

१. °वमुच्य (नक. ?) शंपा. २. शशयो यो ऋ १,१६४,४९ मा ३८,५ मं ४,१४,३ माश १४,९,४,२८ तैआ ४,८,२. ३. रत्नधा ऋ. मा. मं. माश. तैआ. ४. वसुविद् ऋ. मा. मं माश. तैआ. ५. ऽकः मा. ( पपा. अकः ) माश. तैआ. ६. वंशु. मंपा. ई. ७. °मवराप्या° S'. ८. पृथुः WM. ९. °यो ऋष्वो A,Cs; °यो रिष्वो K,K[m],V,Bp[s],E[s],O; यो रिष्वो P[s],M.

हे देव द्योतनशील पर्जन्य ते तव स्वभूतः पृथुः विस्तीर्णो महान् यः स्तनयित्नुः गर्जनरूपशब्दं कुर्वन् अशनिः यः च रुष्वः[1] बाधकः। रुष हिंसायाम्। औणादिकः क्नप्रत्ययः। दैवः देवस्य पर्जन्यस्य संबन्धी देवैर्निर्मितो वा। 'देवाद्यञञौ' (पा४,१,८५) इति अञ्प्रत्ययः। केतुः अनर्थज्ञापकोऽशनिः केतुरूपो वा ग्रहः इदं परिदृश्यमानं विश्वम् आभूषति व्याप्नोति। बाधितुम् इति शेषः। हे देव पर्जन्य विद्युता तादृश्या अशन्या नः अस्माकं सस्यम् शाल्यादिकं मा वधीः मा बाधिष्ठाः। हन्तेर्लुङि वधादेशः। उत अपि च सूर्यस्य सवितुः रश्मिभिः संतापकरैः किरणैः अस्मदीयं सस्यं मा वधीः मा शोषय। अयम् अर्थः—क्षेत्रेषु उप्ताः शाल्यादयः अतिवृष्ट्यनावृष्टिभ्यां बाध्यन्ते। सस्यविनाशेन तदुपजीविन्यः प्रजा विनश्यन्ति। अतोऽत्र तत्परिहारः प्रार्थ्यत इति।

सभा च मा समितिश्चावतां[2] [3]प्रजापतेर्दुहितरौ संविदाने[3]।
[4]येना संगच्छा[4] उप मा स शिक्षाच्चारु[5] [6]वदानि पितरः संगतेषु[6] ॥ १ ॥

सभा। च। मा। सम्ऽइतिः। च। अवताम्। प्रजाऽपतेः। दुहितरौ। संविदाने इति सम्ऽविदाने। येन। सम्ऽगच्छै। उप। मा। सः। शिक्षात्। चारु। वदानि। पितरः। सम्ऽगतेषु ॥ १ ॥

सभा विदुषां समाजः। समितिः संयन्ति संगच्छन्ते युद्धाय अत्रेति समितिः संग्रामः। सांग्रामीणजनसभेत्यर्थः। यद्वा संग्रामनामानि यज्ञनामानि भवन्तीति यास्केनोक्तत्वात् समितिशब्देन यज्ञ उच्यते। परस्परसमुच्चयार्थौ चकारौ। ते उभे अपि मा मां वादिनम् अवताम् रक्षताम्। कीदृश्यौ। प्रजापतेः सर्वजगत्स्रष्टुर्दुहितरौ पुत्र्यौ।

'चत्वारो वेदधर्मज्ञाः पर्षत् त्रैविद्यमेव वा।
सा ब्रूते यं स धर्मः स्यात् xxx ॥' (याम्र १,९) इति।

'यद् आर्याः प्रशंसन्ति स धर्मः' (आपध १,२०,७) इति च स्मृतेर्विद्वत्संघस्य सभात्वात् तदुक्तेश्च सर्वशास्त्रनिर्णीतधर्मरूपत्वात् प्रजापतिपुत्रीत्यव्यपदेशः। ते च सभे संविदाने अस्मद्रक्षणविषयम् ऐकमत्यं प्राप्ते। विदेः संपूर्वात् 'समो गम्यृच्छि' 'विदिप्रच्छि°' (पा१,३,२९) इति आत्मनेपदम्। किं च येन वादिना संगच्छै वक्तुं संगतो भवानि। पूर्ववद् आत्मनेपदिनो गमेर्लोटि रूपम्। स विद्वान् मा मां संगतम् उप शिक्षात् उपेत्य शिक्षयतु। समीचीनं वादयत्वित्यर्थः। शिक्ष विद्योपादाने। ण्यन्तात् लेटि आडागमः। यद्वा शिक्षात् मां वक्तुं शक्तं समर्थम् इच्छतु। शकेः सन्नन्तात् पञ्चमलकारे रूपम्। अयम् अर्थः—येन सह अहं विवदे स स्वयं मदुक्तवचन-

---

1. चेतु. मं रा. ह. 2. °तिश्चोभे पाग् ३,१३,२. 3. °तरः प्रचेतसा पै २०,२०,९; °तरौ सचेतसौ पाग्. 4. येन वदामि पै.; यो मा न वियात् पाग्. 5. °चारु B$^b$,K$^m$; °क्षादन्तर् पै., तिष्ठेत्सचेतनो पाग्. 6. वदामि हृदये जनानाम् पै.; भवतु शंमथे जनः पाग्.

विघटनपटूनि वाक्यानि अभाषमाणः प्रत्युत मामेव स्ववचनतिरस्कारकवाक्यवादिनं करोत्विति। अपि च हे पितरः पालकाः मदुक्तं वाक्यं साधु साध्विति अनुमोदमानाः पितृभूता वा हे सभासदो जनाः संगतेषु मया सह वक्तुं मिलितेषु वादिषु चारु न्यायोपेतं सदुत्तरं वदामि । यथा सम्यग् वदामि तथा अनुगृह्णीतेत्यर्थः ।

विद्म ते सभे नाम नरिष्टा नाम वा असि ।
ये ते के च सभासदस्ते मे सन्तु सवाचसः ॥ २ ॥

विद्म । ते । सभे । नाम । नरिष्टा । नाम । वै । असि ।
ये । ते । के । च । सभाऽसदः । ते । मे । सन्तु । सऽवाचसः ॥ २ ॥

हे सभे ते तव नाम नामधेयं विद्म जानीमः । 'विदो लटो वा' ( पा ३,४,८३ ) इति मसो मादेशः । तन्नाम दर्शयति—हे सभे नाम । नाम्नेति यावत् । नरिष्टा । रिषिणा क्रान्तेन नञ्समासः । अहिंसिता परैरनभिभाव्या । एतन्नामिका असि वै भवसि खलु । एकस्य वचनम् अन्यैराद्रियते तिरस्क्रियतेऽपि । बहवः संभूय यद्येकं वाक्यं वदेयुस्तद्धि न परैरतिलङ्घ्यम् । अतः अनतिलङ्घ्यवाक्यत्वाद् नरिष्टेति नाम सभाया युज्यते । अतस्ते तव संबन्धिनः ये के च सभासदः सभायां सीदन्तो विद्वांसस्ते सर्वे मे मम सवाचसः समानवाक्याः सन्तु भवन्तु । तेऽपि न हि सभा सर्वा संभूय एकं प्रति ब्रूते अपि तु तत्रत्याः कतिपये । तेऽपि मद्विषये अनुकूलवाक्या भवन्तु इति प्रार्थ्यते ।

एषामहं समासीनानां वर्चो विज्ञानमा ददे ।
अस्याः सर्वस्याः संसदो मामिन्द्र भगिनं कृणु ॥ ३ ॥

एषाम् । अहम् । समऽआसीनानाम् । वर्चः । विऽज्ञानम् । आ । ददे ।
अस्याः । सर्वस्याः । समऽसदः । माम् । इन्द्र । भगिनम् । कृणु ॥ ३ ॥

समासीनानाम् सभायाम् अवतिष्ठमानानाम् एषाम् पुरोवर्तिनां वादिनां वर्चः तेजो वैदुष्यजनितप्रभावविशेषम् विज्ञानम् वेदशास्त्रार्थविषयं ज्ञानं च । 'विज्ञानं शिल्पशास्त्रयोः' (अको १,५,६) इति तद्विदः । तद् अहम् आ ददे स्वीकरोमि । अपहरामीत्यर्थः । ददातेः 'आङो दोऽनास्यविहरणे' ( पा १,३,२० ) इति आत्मनेपदम् । किं बहुना । हे इन्द्र । इन्द्रस्यैव वागनुशासनकर्तृत्वात् सभाजयकर्मणि तस्यैव प्रार्थनम् । तथा च तैत्तिरीयके

---

१. वेदु. मंपा. द्र. २. वेद वै पे २०,२१,३. ३. सुभद्राऽसि सरस्वति पै. ४. अथो पे ते पै. ५. सुवाचसः पै. ६. सुवाचसः Bp[2]. ७. मामंन भगिनं इड आपमं २,६,१२.

'ते देवा इन्द्रम् अब्रुवन्निमां नो वाचं व्याकुरु' इति प्रक्रम्य आम्नातम्—'ताम् इन्द्रो मध्यतोऽवक्रम्य व्याकरोत् तस्माद् इयं व्याकृता वाग् उद्यते' ( तै ६,४,७,३ ) इति। तादृशेन्द्र अस्याः पुरः स्थितायाः सर्वस्याः संसदः सभाया भगिनम्। भगो भाग्यं वैदुष्यलक्षणं जयलक्षणं वा। तद्वन्तं मां कृणु कुरु। सर्वामपि सभां मदेकवाक्यश्रवणपरां कुर्वित्यर्थः। अथवा भगो भागः। तद्वन्तं कुरु। सर्वस्याः सभाया यावती वैदुष्यकृता संभावना तावद्भागभाजं कुर्विति इन्द्रः प्रार्थ्यते।

यद् वो मनः परागतं यद् बद्धमिह वेह वा।
तद् व आ वर्तयामसि मयि वो रमतां मनः ॥ ४ ॥

यत्। वः। मनः। पराऽगतम्। यत्। बद्धम्। इह। वा। इह। वा।
तत्। वः। आ। वर्तयामसि। मयि। वः। रमताम्। मनः ॥ ४ ॥

हे सभासदः वः युष्माकं यन्मनः मानसं परागतम् अस्मत्तः परागत्य अन्यत्र गतम्। अस्मदनभिमुखम् इत्यर्थः। यत् च मनः इह वा अस्मिन् वा विषये बद्धं संसक्तम्। मनसो विषयानासङ्गेन अनवस्थानात् तत्संबन्धार्हान् सर्वान् पदार्थान् अभिनयेन दर्शयति—इह वा इह वेति अस्मद्व्यतिरिक्तसर्वविषयेषु संसक्तं वर्तते। तत् तादृशं वः युष्माकं मनः आ वर्तयामसि अस्मदभिमुखं कुर्मः। आवर्तितं च वो मनः मयि रमताम् मदनुकूलार्थचिन्तापरं भवत्वित्यर्थः।

यथा सूर्यो 'नक्षत्राणामुद्यंस्तेजांस्याददे'।
एवा 'स्त्रीणां च पुंसां च द्विषतां वर्च' आ ददे ॥ १ ॥

यथा। सूर्यः। नक्षत्राणाम्। उत्ऽयन्। तेजांसि। आऽददे।
एव। स्त्रीणाम्। च। पुंसाम्। च। द्विषताम्। वर्चः। आ। ददे ॥ १ ॥

उद्यन् उदयं प्राप्नुवन् सूर्यः नक्षत्राणाम् तारकाणां तेजांसि दीप्तिं यथा आददे आदत्ते। निस्तेजस्कानि करोति। छान्दसो लिट्। एव एवम्। अन्त्यलोपश्छान्दसः। स्त्रीणां पुंसां च द्विषताम् स्त्रीणां द्विषतीनां पुरुषाणां द्विषतां च। 'पुमान् स्त्रिया' (पा १,२,६७) इति पुंसो द्विषत एकशेषः। वर्चः तेजः पराभिभवनसामर्थ्यम्। आ ददे स्वीकरोमि अपहरामि। ददातेर्वर्तमाने लटि उत्तमैकवचने रूपम्।

यावन्तो मा सपत्नानामायन्तं प्रतिपश्यथ।
उद्यन्त्सूर्य इव सुप्तानां द्विषतां वर्च आ ददे ॥ २ ॥

---

१. °र्नां वर्चांसि पुरुषेरिव पै १९,२१,१. २. सपत्नानामहं वर्च इन्द्रियम् पै.

यावन्तः । मा । सऽपत्नानाम् । आऽयन्तम् । प्रतिऽपश्यथ ।
उत्ऽयन् । सूर्यःऽइव । सुप्तानाम् । द्विषताम् । वर्चः । आ । दुदे ॥ २ ॥

सपत्नानाम् शत्रूणां मध्ये यावन्तः यत्परिमाणाः शत्रवो यूयम् आयन्तम् युद्धाय युष्मान् अभिगच्छन्तं मा मां प्रतिपश्यत[1] प्रतिकूलं निरीक्षध्वम् । अतिसर्गे लोट् । द्विषताम् तेषां प्रतिकूलं पश्यतां शत्रूणां युष्माकं वर्चः पराक्रमरूपं तेजः आ ददे अपहरामि । तत्र दृष्टान्तः — उद्यन् उदयं गच्छन् सूर्य इव सूर्यो यथा सुप्तानाम् उदयकाले स्वपतां जनानां वर्चः अपहरति तद्वत् । सूर्यस्योदये अस्तमये वा स्वपतां पुरुषाणां वर्चसः सूर्येण अपहृतत्वात् तत्समाधानाय आपस्तम्बेन प्रायश्चित्तरूपाणि कर्माणि विहितानि — 'स्वपन्नभिनिम्रुक्तोऽनाश्वान्[2] वाग्यतो रात्रिम् आसीत श्वोभूत उदकम् उपस्पृश्य वाचं विसृजेत् । स्वपन्नभ्युदितोऽनाश्वान् वाग्यतोऽहस्तिष्ठेत् । आ तमितोः प्राणम् आयच्छेदित्येके[3]' (आपध २,५,१२, १३-१५ ) इति ।

इति सप्तमकाण्डे प्रथमेऽनुवाके तृतीयं सूक्तम् ।

इति अथर्ववेदार्थप्रकाशे सप्तमकाण्डे प्रथमोऽनुवाकः ।

द्वितीयेऽनुवाके द्वे सूक्ते । तत्र 'अभि त्यम्' इत्याद्ये सूक्ते आदितश्चतुर्कवेन सूत्रोक्तं स्थानं गत्वा तत्र उदपात्रं संपात्य सोममिश्रं कृत्वा सारूपवत्सम् ओदनं संपात्य अभिमन्त्र्य पुष्टिकामः अश्नीयात् ।

'ता सवितः' इति ऋचा एकवारप्रसूताया गोर्वन्धनरज्जुमणिं कृत्वा संपात्य अभिमन्त्र्य पुष्टिकामो बध्नीयात् ।

सूत्रितं हि — "'अभि त्यम्' ( अ ७,१५ ) इति महावकाशेऽरण्य उन्नते विमिते 'प्राग्द्वारे प्रत्यग्द्वारे वाऽप्सु[4] संपातान् आनयति । कृष्णाजिने सोमांशून् विचिनोति । सोममिश्रेण संपातवन्तम् अश्नाति । आशीरे संनन्नम् । 'तां सवितः' ( अ ७,१६ ) इति सूष्टिदाम बध्नाति" ( कौसू २४,३-७ ) इति ।

तथा सोमक्रयणानन्तरम् 'अभि त्यम्' इत्यनेन ब्रह्मा हिरण्यपाणिः सोमं विचिनुयात् । "चर्मणि सोमम् 'अभि त्यम्' इति हिरण्यपाणिर्विचिनोति" ( वैताश्री १३,७ ) इति हि वैतानं सूत्रम् ।

'बृहस्पते सवितः' (अ ७,१७,१) इत्यनया सूर्योदयपर्यन्तं सुप्तं ब्रह्मचारिणम् उत्थापयेत् । तथा आधाने संभारस्पर्शनदिवसे सुप्तान् यजमानादीन् अनया उत्थापयेत् । 'अथाग्न्याधेयम्' इति प्रक्रम्य वैताने सूत्रितम् — "वाग्यता जाग्रतो रात्रिम् आसते । अपररात्रे वा 'बृहस्पते सवितः' इति सुप्तान्[5] बोधयेत्" ( वैताश्री ५,१;८,९) इति ।

1. बेतु. मपा. द्र. 2. 'निमुक्तो' S'; 'भिम्रुक्तो' इति पाठ उद्धलयेत. 3. 'त्यके S'. 4. 'प्राग्यग्द्वारेत्वप्सु Bl. 5. स्वप्तो RG.

'धाता दधातु' (अ ७,१८) इति चतुर्ऋचेन सर्वफलकामो धातारं यजेत उपतिष्ठेत[1] वा । सूत्रितं हि — 'अदितिर्द्यौः' (अ ७,६), 'दितेः पुत्राणाम्' (अ ७,८), 'बृहस्पते सवितः' ××× 'धाता दधातु' (कौसू ५९,१८;१९) इति ।

तथा वीरपुत्रप्रजननार्थम् अनेन चतुर्ऋचेन गर्भिण्या उदरम् अभिमन्त्रयेत । 'याम् इच्छेद् वीरं जनयेद् इति [2]धातव्याभि(?°तर्भि, °तादिभि)रुदरम् अभिमन्त्रयते' (कौसू ३५,१६) इति ।

अ॒भि त्यं[3] दे॒वं स॑वि॒तार॑मो॒ण्योः॑[4] क॒विक्र॑तुम् ।
अर्चा॑मि स॒त्यस॑वं[5] रत्न॒धाम॒भि प्रि॒यं म॒तिम्[6] ॥ १ ॥

अ॒भि । त्यम् । दे॒वम् । स॒वि॒तार॑म् । ओ॒ण्योः॑ । क॒विऽक्र॑तुम् ।
अर्चा॑मि । स॒त्यऽस॑वम् । र॒त्नऽधाम् । अ॒भि । प्रि॒यम् । म॒तिम् ॥१॥

त्यं तं प्रसिद्धं देवम् द्योतनात्मकम् ओण्योः सर्वस्य अविव्योर्द्यावापृथिव्योः सवितारम् प्रसवितारम् एतन्नामधेयं देवम् अभ्यर्चामि अभिष्टौमि । ओण्योरिति । अवतेः औणादिको [7]निप्रत्ययः । 'ज्वरत्वर' (पा ६,४,२०) इत्यादिना ऊठ् । गुणः । छान्दसं णत्वम् । 'उदात्तस्वरितयोः' (पा ८,२,४) इति ओकारः स्वर्यते । 'उदात्तयणो हल्पूर्वात्' (पा ६,१,१७४) इत्येष स्वरो व्यत्ययेन न प्रवर्तते । सवितारं विशिनष्टि— कविक्रतुम् कवीनां मेधाविनामिव क्रतुः कर्म यस्य तादृशं कमनीयकर्माणं वा सत्यसवम् सत्यानुज्ञं यथार्थप्रेरणम् रत्नधाम् रमणीयधनानां धारयितारं दातारं वा प्रियमभि प्रियं प्रेम प्रीणयितारं स्तोतारं वा अभिलक्ष्य । रत्नधाम् इति संबन्धः । यद्वा अभि आभिमुख्येन प्रियं सर्वस्य प्रीतिकरम् अत एव मतिम् सर्वैर्मन्तव्यम् । 'मन्त्रे वृषेष'' (पा ३,३,९६) इति क्तिन्नुदात्तः । ईदृशं देवम् अभ्यर्चामि । अर्चतिः स्तुतिकर्मा । पादादित्वात् न निघातः ।

ऊ॒र्ध्वा य॒स्याम॒तिर्भा[8] अदि॑द्युत॒त् सवी॑मनि ।
हिर॑ण्यपाणिरमिमीत सु॒क्रतुः॑ कृ॒पात्[9] स्वः॑[10] ॥ २ ॥

ऊ॒र्ध्वा[11] । यस्य॑ । अ॒मतिः॑ । भाः[12] । अदि॑द्युतत् । सवी॑मनि ।
हिर॑ण्यऽपाणिः । अ॒मि॒मी॒त । सु॒क्रतुः॑ । कृ॒पात् । स्वः॑ ॥ २ ॥

---

१. उपतिष्ठते S'.   २. धातव्याभि° S'.   ३. त्या पै २०,४,८.
४. °मोण्योः K, °मुण्योः तै १,२,६,१.   ५. °सवां A,O; °सवं>°सवां B,S^m; °सवां>°सवं K^m; °सवसं तै. मै १,२,५; सवस पै. [मूको.].   ६. मतिं कविम् मा ४,२५. आश्रौ ४,६,३ शाश्रौ ५,९,७.   ७. णिप्रत्ययः S'.   ८. अस्या°>यस्या° B; °तिरुद्गा पै २०,४,९.   ९. कृपा B^b,P^3,M, मा. कौ १,४६४ तै. मै. पै. आश्रौ. शाश्रौ.   १०. सुवः तै.; स्वस्तृपा स्वः आश्रौ. शाश्रौ.   ११. ऊर्ध्वाः P,P^2,J,Cp,K,WM.   १२. भाः P.

यस्य सवितुर्देवस्य अमतिः अमनशीला व्यापनशीला । अमतेर्गतिकर्मण औणादिकः अतिप्रत्ययः । अत एव मध्योदात्तः । एतादृशी भाः दीप्तिः ऊर्ध्वा उत्कृष्टा अदिद्युतत् द्योतयति । विश्वम् इति शेषः । द्योततेर्ण्यन्तात् चङि उपधाह्रस्वत्वम् । यस्य च देवस्य सवीमनि सवे अनुज्ञायां सत्याम् । षू प्रेरणे । 'अन्येभ्योऽपि दृश्यन्ते' ( पा ३,२,७५ ) इति मनिन् । छान्दसम् इटो दीर्घत्वम् । येन सवित्राऽनुज्ञातः सुक्रतुः शोभनकर्मा पुष्टिकामो ब्रह्मा वा हिरण्यपाणिः हिरण्यहस्तः सन् कृपा[1] कल्पनया अङ्गुल्यादिविषयया स्वः स्वर्गप्रदं सुखप्रदम् । सोमम् इत्यर्थः । अमिमीत मिमीते । छान्दसो लङ् । त्यं प्रसिद्धम् इति पूर्वमन्त्रेण संबन्धः । यद्वा सवीमनीति निमित्तसप्तमी । सुनोतेरौणादिक ईमनिन्प्रत्ययः । अभिषवार्थं हिरण्यपाणिः हितरमणीयरश्मिः हिरण्यहस्तो वा । 'हिरण्यपाणिमूतये सवितारमुप ह्वये[2]' ( ऋ १,२२,५ ) इति हि निगमः । स्वः आदित्यः सविता कृपा[3] कृपया पुष्टिकामं ब्रह्माणं वा आविश्य स्वयमेव मिमीते । सोमम् इति शेषः । कृपा । कृपू सामर्थ्ये । क्विप् । 'सावेकाचः[4]' ( पा ६,१,१६८ ) इति विभक्तेरुदात्तत्वम् ।

सा॒वीर्हि दे॑व प्रथ॒माय॑[1] पि॒त्रे व॒र्ष्माण॑मस्मै वरि॒माण॑मस्मै ।
अथा॒स्मभ्यं॑ सवित॒र्वार्या॑णि[4] दि॒वोदि॑व[5] आ सु॑वा[6] भूरि॑ प॒श्वः ॥ ३ ॥

सा॒वीः । हि । दे॒व । प्र॒थ॒माय॑ । पि॒त्रे । व॒र्ष्माण॑म् । अ॒स्मै॒ । व॒रि॒माण॑म् । अ॒स्मै॒ ।
अथ॑ । अ॒स्मभ्य॑म् । स॒वि॒तः॒ । वार्या॑णि । दि॒वःऽदि॑वः । आ । सु॒व॒ । भूरि॑ । प॒श्वः ॥ ३ ॥

हे देव द्योतनात्मक सवितः प्रथमाय । प्रथम इति मुख्यनाम । प्रतमाय प्रकृष्टतमाय पित्रे पालकाय यजमानाय सावीर्हि प्रेरयैव । फलम् इति शेषः । सामान्येनोक्तं विशिनष्टि— अस्मै पुष्टिकामाय वर्ष्माणम् देहम् । पुत्रपौत्रादिलक्षणां संततिम् इत्यर्थः । तां प्रयच्छेति सम्बन्धः । अस्मै पुष्टिकामाय यजमानाय वरिमाणम् उरुत्वं च प्रयच्छ । यद्वा वर्ष्माणम् देहं यथा यजमानस्य देहः पुत्रपौत्रादिजननक्षमो भवति तथा कुरु । वरिमाणम् पुत्रपौत्रादिलक्षणम् उरुत्वं प्रयच्छेति । अथ अनन्तरं हे सवितः अस्मभ्यं वार्याणि वरणीयानि फलानि । आ सुवेति क्रियया संबन्धः । अपि च दिवोदिवः दिवसान्दिवसान् प्रतिदिवसम् । 'दिवेदिव आ सुव' (ऋ ३,५६,६) इति शाखान्तरे पठ्यते । भूरि भूरीन् । सुपो लुक् । पश्वः पशून् । छान्दसो यणादेशः । आ सुव अस्मदभिमुखं प्रेरय ।

दमू॑ना दे॒वः स॑वि॒ता वरे॑ण्यो द॒धद् रत्नं॑[7] 'दक्षं॑ पि॒तृभ्य॑[8] आयूं॑षि[9] ।
पिबा॑त् [10]सोमं॑ म॒मद॑देनमि॒ष्टे[10] परि॑ज्मा चित् क्रमते[11] अस्य॒ धर्म॑णि ॥४॥

---

१. वैतु. मंपा. द्र. २. स्तुहि S'. ३. प्रसुवाय तैब्रा २,७,१५,१. ४. 'वर्याणि' B[o]; 'वः सुवर्तातां तैब्रा. आश्री ४,१०,१ शांश्री ५,१४,८. ५. दिवेदिव ऋ ३,५६,६ पै २०,१,१ तैब्रा. आश्री. शांश्रा. ६. सुव ऋ. ७. रत्ना आश्री ५,१८,२. ८. दक्षपि' आश्री शांश्री ८,३,४. ९. आयुनि आश्री. शांश्री. १०. सोमममदन्नेनमिष्टय: आश्री. शांश्री.; 'मिष्टये पै २०,३,३. ११. रमते पै. आश्री. शांश्री.

दमूनाः । देवः । सविता । वरेण्यः । दधत् । रत्नम् । दक्षम् । पितृऽभ्यः । आयूंषि । पिबात् । सोमम् । ममदत् । एनम् । इष्टे । परिऽज्मा । चित् । क्रमते । अस्य । धर्मणि ॥

दमूनाः दान्तमना दानमना वा वरेण्यः वरणीयः सविता सर्वप्रेरको देवः रत्नम् रमणीयं धनं दक्षम् । बलनामैतत् (तु. निघ २,९) । बलं च दधत्[1] प्रयच्छन् तथा पितृभ्यः पूर्वेभ्यः सकाशात् आयूंषि शतसंवत्सरपरिमितम् आयुः । तपनपरिस्पन्दबाहुल्यात् तत्कालावच्छिन्नस्यापि आयुषो बहुत्वम् पुत्रपौत्राद्यपेक्षया वा बहुवचनम् । तादृशम् आयुश्च दधत्[1] विदधत् प्रयच्छन् सोमम् अभिषुतं पिबात् पिबतु । पातेर्लेटि आडागमः । पीतः स सोमः इष्टे यागे सवितृदेवत्ये एनं सवितारं ममदत् मदयतु । माद्यतेर्ण्यन्तात् लुङि चङि रूपम् । वाक्यादित्वात् न निघातः । 'चङ्यन्यतरस्याम्' (पा ६,१,२१८) इति उपोत्तमस्य उदात्तत्वम् । ततः परिज्मा चित् परितो व्यापनशीलोऽपि स सोमः अस्य सवितुः धर्मणि धारके स्थाने जठररूपे क्रमते अप्रतिबद्धो वर्तताम् । 'वृत्तिसर्गतायनेषु क्रमः' (पा १,३,३८) इति आत्मनेपदम् ।

तां 'सवितः सत्यसवां' सुचित्रामाहं' 'वृणे सुमतिं †विश्ववाराम्' ।
यामस्य कण्वो अदुहत् प्रपीनां' सहस्रधारां 'महिषो भगाय' ॥ १ ॥

ताम् । सवितरिति । सत्यऽसवाम् । सुऽचित्राम् । आ । अहम् । वृणे । सुऽमतिम् । विश्वऽवाराम् । याम् । अस्य । कण्वः । अदुहत् । प्रऽपीनाम् । सहस्रऽधाराम् । महिषः । भगाय ॥ १ ॥

हे सवितः प्रसवितः सर्वस्य प्रेरयितः ता तादृशीम् उत्तरार्धे वक्ष्यमाणगुणां त्वदीयां सत्यसवाम् सत्यानुज्ञां सुचित्राम् सुष्ठु चायनीयां विश्ववाराम् सर्वैर्वरणीयां सुमतिम् शोभनाम् अनुग्रहबुद्धिम् । 'मनिक्तन्व्याख्यान॰' (पा ६,२,१५१) इति उत्तरपदान्तोदात्तत्वम् । ताम् अहम् आ वृणे आभिमुख्येन याचे[7] । याम् अस्य सवितुः संबन्धिनीं सुमतिं महिषः । महन्नामैतत् (तु. निघ ३,३) । महान् कण्वः एतन्नामा ऋषिः अदुहत् दुग्धवान् । स्वाधीनां कृतवान् इत्यर्थः । कीदृशीम् । प्रपीनाम् प्रवृद्धाम् । प्यायतेः पीभावः । सहस्रधाराम् बहुधाराम् । सुमतेर्गोसादृश्यविवक्षया पीनत्वादिविशेषणयोगाद् दुहिधातुप्रयोगः । किमर्थं दुग्धवान् । भगाय भाग्याय । यां कण्वो दुग्धवान् तां सवितृसंबन्धिनीं सुमतिम् आ वृणे इति संबन्धः ।

---

१. क्रियापदं युकम्, तु. इतरत् क्रियाद्वयम्. २. सवितुर्वरेण्यस्य मा १७,७४ तै ४,६,५,४ मै २,१०,६ माश ९,२,३,३८; सवितुस्सत्यसवस्य पै २०,३,४. ३. 'त्रामहं B; चित्रा॰ मा. तै. मै. माश.; चित्रां वयं पै. ४ देवस्य प्रसवे मनामहे पै. †. विश्वजन्याम् मा. तै. मै. माश. ५. प्रपीनां पै. ६. पर्यसा मुहीं गाम् मा. तै ४,६,५,५ मै. माश. ७. संभजयाचे S'.

'बृहस्पते सवितर्वर्धयैनं' ज्योतयैनं' 'महते सौभगाय'।
संशितं चित् संतरं' सं शिशाधि विश्व' एनमनु मदन्तु' देवाः ॥ १ ॥

बृहस्पते । सवितः । वर्धय । एनम् । ज्योतय । एनम् । महते । सौभगाय ।
सम्ऽशितम् । चित् । सम्ऽतरम् । सम् । शिशाधि । विश्वे । एनम् । अनु । मदन्तु । देवाः ॥

हे बृहस्पते बृहतां महतामपि देवानां पते हे सवितः प्रसवितः एतन्नामक देव। 'नामन्त्रिते समानाधिकरणे' (पा ८,१,७३) इति पूर्वस्यामन्त्रितस्य अविद्यमानत्वप्रतिषेधाद् द्वितीयम् इदं सवितृपदं निहन्यते[२]। एनं सूर्योदयपर्यन्तं सुप्तं ब्रह्मचारिणं यजमानादिकं वा वर्धय। उदयकाले स्वपतः पुरुषस्य दोषश्रवणात् तद्दोषपरिहारेण एनं यजमानं समर्धयेत्यर्थः। द्वितीयस्य आमन्त्रितस्य अविद्यमानत्वाद् वर्धयेति पदं न निहन्यते। किं च एनं यजमानादिकं महते प्रभूताय सौभगाय सौभाग्याय द्योतय[३]। यथा महत् सौभाग्यं भवति तथा दीप्तं कुर्वित्यर्थः। अपि च संशितम् संशितव्रतं चित् अपि व्रतवन्तमपि सन्तरम् सम्यगतिशयेन। समस्तरपि प्रत्यये 'अमु च च्छन्दसि' (पा ५,४,१२) इति अम्। सं शिशाधि सम्यक् तीक्ष्णीकुरु। संतरं सं शिशाधि इत्युपसर्गद्वयश्रुतेर्व्रतलोपपरिहारेण यजमानादेः कर्मसाफल्यम् आशास्यते। शो तनूकरणे। लोटि 'बहुलं छन्दसि' (पा २,४,७६) इति शपः श्लुः। इत्वं च अभ्यासस्य छान्दसम् (पा ७,४,७८)। 'वा छन्दसि' (पा ३,४,८८) इति अपित्त्वे प्रतिषिद्धे पित्त्वेन ङित्त्वाभावात् 'अङितश्च' (पा ६,४,१०३) इति हेर्धिभावः। किं च विश्वे सर्वे देवा एनं यजमानादिकम् अनु मदन्तु अनुमोदन्ताम्। साधीयान् असाविति सर्वेऽनुमन्यन्ताम् इत्यर्थः।

धाता दधातु' नो रयिमीशानो जगतस्पतिः। स नः पूर्णेन यच्छतु' ॥ २ ॥

धाता। दधातु। नः। रयिम्। ईशानः। जगतः। पतिः। सः। नः। पूर्णेन। यच्छतु ॥

धाता विश्वस्य धारयिता एतन्नामको देवः नः अस्मभ्यं रयिम् धनं दधातु विदधातु प्रयच्छतु। कीदृशः। ईशानः सर्वार्थसाधनशक्तः। अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वम्। जगतस्पतिः पालयिता। 'षष्ठ्याः पतिपुत्र॰' (पा ८,३,५३) इति सत्वम्। किं च स धाता देवः नः अस्मान् पूर्णेन आप्यायितेन समृद्धेन धनेन यच्छतु नियच्छतु योजयत्वित्यर्थः।

---

१. बृहस्पते सवितर्बोधयैनं मा २७,८ तै ४,१,७,३ मै २,१२,५ पै २०,६,१.
२. बुधयैनं मा. तै. मै. पै. ३. बृहते रणाय पै. ४. सन्तरां मा. तै. ५. विश्वे च दे.
६. मद्भिः पै. ७. वेङ्क. मंत्रा. द्र. ८. ददातु तै ३,३,११,२. ९. यावनद् तं.

धाता द॑धातु[1] दा॒शुषे॑[2] प्राची॑ जी॒वातु॑मक्षि॑ताम्[3] ।
व॒यं दे॒वस्य॑ धीमहि सुम॒तिं वि॒श्वरा॑धसः[4] ॥ २ ॥

धा॒ता । द॒धा॒तु॒ । दा॒शुषे॑ । प्राची॑म् । जी॒वातु॑म् । अक्षि॑ताम् ।
व॒यम् । दे॒वस्य॑ । धी॒म॒हि॒ । सु॒ऽम॒तिम् । वि॒श्वऽरा॑धसः ॥ २ ॥

धाता सर्वस्य विधारको देवः दाशुषे हविर्दत्तवते मह्यं यजमानाय प्राचीम् प्रकृष्टगमनाम् अस्मदभिमुखगमनां जीवातुम् जीवनकारिणीम्। जीवेः आतुप्रत्ययः (पाउ १,७८)। अक्षिताम् अनुपक्षीणाम्। सुमतिम् इति अनुषज्यते। तां दधातु धारयतु। वयम् अपि विश्वराधसः सर्वधनस्य[5] अतिप्रभूतधनस्य देवस्य धातुः सुमतिम् कल्याणीं मतिम् अनुग्रहात्मिकां धीमहि धारयेम। धीङ् आधारे। श्यनो[6] लुक्। यद्वा दाशुषे यजमानाय प्राचीम् प्राञ्चनाम् अनुगुणां जीवातुम् जीवनाय पर्याप्ताम् अक्षितां रयिं दधातु। वयमपि धनप्रदानार्थं धातुः सुमतिं धीमहि ध्यायेम। याचेमेत्यर्थः।

धाता [7]विश्वा वार्या दधातु[7] प्रजाकामाय दाशुषे[8] दुरोणे ।
[9]तस्मै देवा[9] अमृतं[10] सं व्ययन्तु[11] विश्वे देवा[12] अदितिः सजोषाः ॥३॥

धा॒ता । विश्वा॑ । वार्या॑ । द॒धा॒तु॒ । प्र॒जाऽका॑माय । दा॒शुषे॑ । दु॒रो॒णे ।
तस्मै॑ । दे॒वाः । अ॒मृत॑म् । सम् । व्य॒य॒न्तु॒ । विश्वे॑ । दे॒वाः । अदि॑तिः । स॒ऽजोषाः॑ ॥ ३ ॥

धाता देवः विश्वा विश्वानि वार्या वार्याणि वरणीयानि फलानि दधातु विदधातु। कस्मै कस्मिन्निति तद् आह— प्रजाकामाय पुत्रादिकम् इच्छते दाशुषे हविर्दत्तवते यजमानाय दुरोणे। 'दुरोण इति गृहनाम दुरवा भवन्ति' (नि ४,५) इति यास्कः। दुरवने गृहे। अपि च तस्मै यजमानाय देवा इन्द्राद्याः अमृतम् अमरणसाधनम् अविनाशं वा सं व्ययन्तु संवृण्वन्तु। प्रयच्छन्तु इत्यर्थः। व्येञ् संवरणे। के ते देवाः। विश्वे सर्वे देवाः। अदितिः अदीना अखण्डनीया वा देवमाता। सजोषाः सहप्रीयमाणा[13] परस्परं स्निग्धा[14]। जुषी प्रीतिसेवनयोः। असुनि रूपम्। अदितेर्विशेषणम्। देवविशेषणपक्षे जसो लुक्।

---

1. दे॑दातु तै ३,३,११,२ आश्री ६,१४,१६ शांश्री ९,२८,२ शांगृ १,२२,७.　2. नो रयिं तै. मै ४,१२,६ पै २०,२,४.　3. 'क्षितिम् शांश्री. शांगृ.　4. सत्यरा॑धसः तै.; सत्यधर्मणः मै. पै. शांश्री. शांगृ.; वाजिनीवतः आश्री.　5. सत्यधनस्य S'.　6. शपो S'.　7. दे॑दातु दा॒शुषे॒ वसू॑नि तै. मै.; विश्वानि दाशुषे ददातु पै २०,२,५.　8. मी॒ढुषे॑ तै. मै.　9. तस्य प्रजाम् पै.　10 अ॒मृताः॑ तै. मै. पै.　11. व्यय॑न्ताम् तै. मै.　12. दे॒वासो॑ तै. मै. पै.　13. °माणाः S'.　14. स्निग्धाः S'.

धाता रातिः सवितेदं जुषन्तां[1] प्रजापतिर्निधिपतिर्नो[2] अग्निः ।
त्वष्टा विष्णुः[3] प्रजया संरराणो[4] यजमानाय द्रविणं दधातु[5] ॥ ४ ॥

धाता । रातिः । सविता । इदम् । जुषन्ताम् । प्रजाऽपतिः । निधिऽपतिः । नः । अग्निः ।
त्वष्टा । विष्णुः । प्रऽजया । सम्ऽरराणः । यजमानाय । द्रविणम् । दधातु ॥ ४ ॥

धाता सर्वस्य स्रष्टा रातिः दाता सर्वश्रेयसाम् । कर्तरि क्तिच् । यद्वा 'मन्त्रे वृषेष॰' (पा ३,३,९६) इति क्तिन्नुदात्तः व्यत्ययेन कर्त्रर्थे भवति । सविता सर्वस्य प्रेरकः अभ्यनुज्ञाता वा । प्रजापतिः प्रजानां स्रष्टा पालयिता च परमेष्ठी। स एव विशेष्यते। निधिपतिः निधीयन्ते पुरुषार्था येष्विति निधयो वेदाः तेषां पाता रक्षिता । अग्निः अङ्गनादिगुणयुक्तो वह्निः । त्वष्टा रूपाणां[6] कर्ता । विष्णुः व्यापको[7] देवश्च। एते धात्रादयः सर्वे न अस्मदीयम् इद हविः जुषन्ताम् सेवन्ताम् । इदानीम् एत एव एकैकश उच्यन्ते । एष धात्रादिर्देवः प्रजया पुत्रपौत्रादिकया सरराण: सम्यग् रममाणः प्रजोत्पत्त्यादिहेतुः । यद्वा प्रजया सह संरराणः संप्रयच्छन् । अभिमतं फलम् इति शेषः । रमतेः अन्त्यलोप श्छान्दसः । रातेर्वा शपः श्लुः । यजमानाय यागं कुर्वते द्रविणम् धनं दधातु प्रयच्छतु ।

इति सप्तमे काण्डे द्वितीयेऽनुवाके प्रथमं सूक्तम् ।

'प्र नभस्व' इति द्वयृचेन वृष्टिकामो मरुद्भयो मान्त्रवर्णिकीभ्यो वा देवताभ्यः क्षीरौदनहोमः आज्यहोमः काशदिविधुवकवेतसाख्या ओषधीरेकस्मिन् पात्रे कृत्वा संपात्य अभिमन्त्र्य जलमध्ये अधोमुखं निनयनम् तासामेव काशादीनां संपातिताभिमन्त्रितानाम् अप्सु प्लावनम् दर्शशिरसो मेषशिरसश्च अभिमन्त्रितस्य अप्सु प्रक्षेपणम् मानुषकेशजरदुपानहां[8] वंशाग्रे बन्धनम् तुषसहितम् आमपात्रम् अभिमन्त्रितोदकेन संप्रोक्ष्य त्रिपदे शिक्ये निधाय अप्सु प्रक्षेपणं च इत्येतानि अभिवर्षणकर्माणि कुर्यात् । सूत्रितं हि –" 'समुत्पतन्तु' (अ ४,१५), 'प्र नभस्व' इति वर्षकामो द्वादशरात्रम्" इत्यादि 'त्रिपादेऽस्मानम् अवधायाप्सु निदधाति' ( कौसू ४१,१-७ ) इत्यन्तम् ।

तथा उपतारकादद्भुतशान्तौ अनेन सूक्तेन आज्यं जुहुयात् । सूत्रितं हि—" 'अथ यत्रैतदुपतारकाः[9]' इति प्रक्रम्य " 'समुत्पतन्तु', 'प्र नभस्व' इति [10]वार्षीजुहुयात् । ना तत्र प्रायश्चित्तिः" (कौसू १०३,१;२;४ ) इत्यन्तम् ।

---

१. जुषतां ते १,४,४४,१. २. 'निपा देवो मा ८,१७; 'निपति॰ तै.; प्रजापतिर्बृहस्पतिर्मे मै १,३,३८. ३. पूर्षा पै २०,२,६. ४. संरराणा मा. पै. ५. दधातु स्वाहा मा. ६. रूपाण्यास S'. ७. व्याप्तो S'. ८. 'पानहौ S'. ९. 'तारकम् S'. १०. वर्षो' Bl.

दर्शपूर्णमासयोः पत्नीसंयाजेषु सौम्ययागं 'न प्रंस्तताप' इत्यनया अनुमन्त्रयेत। "'न प्रंस्तताप' (अ ७,१९,२), 'सं वर्चसा' (अ ६,५३,३), 'देवानां पत्नीः' (अ ७,५१), 'सुगार्हपत्यः' (अ १२,२,४५ ) इति पत्नीसंयाजान्" ( वैताश्रौ ४,८ ) इति वैतानात्।

'प्रजापतिर्जनयतु'[1] इति ऋचा वन्ध्यायाः पुत्रलाभकर्मणि तस्या उत्सङ्गे आज्यं जुहुयात्।

तथा तत्रैव कर्मणि अनया लोहिताजमांसं संपात्य अभिमन्त्र्य भक्षयेत्।

तथा तस्मिन्नेव कर्मणि अनया ऋचा उदकुम्भं सुराकुम्भं वा संपात्य अभिमन्त्र्य प्रजाकामां स्त्रियं परिभ्राम्य अग्रे निनयेत्।

तथा अनया ओदनं सुरां प्रपां वा संपात्य अभिमन्त्र्य प्रजाकामायै दद्यात्।

सूत्रितं हि—"'प्रजापतिः' (अ ७,२०) इति प्रजाकामाया उपस्थे जुहोति। [2]लोहिताजायाः निशितान्याशयति[2] प्रपान्तानि" ( कौसू ३५,१७-१९ ) इति।

तथा अभिलषितफलकामः अनया प्रजापतिं यजेत उपतिष्ठेत वा।

'अन्वद्य नोऽनुमतिः' (अ ७,२१) इति पङ्क्तेन अभिलषितफलकामः अनुमतिं यजेत उपतिष्ठेत वा। सूत्रितं हि—'धाता दधातु[3]' ( अ ७,१८ ), 'प्रजापतिर्जनयतु[4]' (अ ७,२०), 'अन्वद्य नोऽनुमतिः[5]' ( कौसू ५९,१९ ) इति।

पूर्णमासयागे अनुमतिदेवताम् 'अन्वद्य नः' इति पङ्क्तेन परिगृह्णीयात्। उक्तं वैताने- 'देवताः परिगृह्णाति' इति प्रक्रम्य "'अन्वद्य नः' इति पौर्णमास्याम्" (वैताश्रौ १,१५) इति।

पितृमेधकर्मणि इष्टकाभिश्चितं श्मशानं 'समेत विश्वे' ( अ ७,२२ ) इत्यनया सर्वे बान्धवाः परिषिञ्चेयुः।

'अयं सहस्रम्' इति द्वाभ्यां पृश्निसवे हविर्मर्शनसंपातप्रदानादीनि कर्माणि कुर्यात्। सूत्रितं हि—"'आयं गौः पृश्निः' ( अ ६,३१ ), 'अयं सहस्रम्' (अ ७,२३) इति पृश्निगाम्" ( कौ ६६, १४ ) इति।

'प्र नंभस्व पृथिवि[6] भिन्द्धी३दं[7] दिव्यं नभः।
उद्नो[8] दिव्यस्यं नो धातरीशानो[9] वि ष्या[10] दृतिंम्[11] ॥ १ ॥

प्र। नभस्व। पृथिवि। भिन्द्धि[12]। इदम्। दिव्यम्। नभः।
उद्नः। दिव्यस्य। नः। धातः। ईशानः। वि। स्य। दृतिम्॥ १ ॥

---

१. वैतु. मंगा. द्र.　२. °ताजापिशि° Bl.　३. दधातु S'.　४. °नयति Bl.; वैतु. मंपा. द्र.　५. अनुमतिः नास्ति Bl.　६. उर्दम्भय पृथिवीं तै २,४,८,२, मै १,३, २६ पै २०,७,३.　७. भिधीदं Km; भिधीदं D,R,P³,E²,M; भिन्द्धी३दं K,V; भि३न्द्धयदों मै.　८. तु. सा. तै. पै.; वैतु. BVC उद्नो; A,D,K,Km,R,Sm,V,Cs,P,P²,J,Cp,WM. उद्नो; B,WM. उद्नो; Bp,WM. उद्नो; WM. उन्तो; मै. पै. [मूको.] उद्नो.　९. देहीशानो तै.　१०. सृजा तै.　११. बिलम् पै.　१२. भिन्द्धि Bp.

अत्र द्वितीयादिपादत्रये वृष्ट्यर्थं पर्जन्यः प्रार्थ्यते। तदर्थम् आदौ अतिवृष्ट्या भूमेर्बाधा मा भूद् इति तस्याः स्थैर्यं प्रथमपादे[1] आशास्यते— हे पृथिवि विस्तीर्णे भूमे त्वं प्र नभस्व। नभतिर्गतिकर्मा। प्रकर्षेण संगता उच्छ्वसिता भव। अयम् अर्थः— सस्यादिवृद्ध्यर्थं[2] पर्जन्यस्त्वदुपरि महतीं वृष्टिं करिष्यति तयाऽतिवृष्ट्या त्वं शिथिलावयवा मा भव किं तु दृढा भवेति। यद्वा नभ तुभ हिंसायाम्। क्रैयादिकः। व्यत्ययेन शप्। वृष्ट्या[3] प्रकर्षेण बाधिता मृदिता भव। शाल्यादिबीजवापनार्थं क्षेत्रादिकर्षणक्लेशवती भवेत्यर्थः। नह्यतेर्वा विकरणव्यत्ययः हकारस्य भकारः। प्र नह्यस्व संनद्धा भवेति। एवं पृथिवीं संस्तुभ्य[4] वृष्ट्यर्थं देवः प्रार्थ्यते — इदं पुरोवर्ति दिव्यम् दिवि भवं नभः मेघं भिन्धि विदारय इति सामर्थ्यात् पर्जन्यः संबोध्यते। तथा कृत्वा दिव्यस्य दिवि भवस्य उद्नः उदकस्य। 'पद्दन्' (पा ६,१,६३) इत्यादिना उदकस्य उदन् आदेशः। कर्मार्थे षष्ठी। उदकस्य भागम् इति वा नः अस्मभ्यं धातः[5] धेहि प्रयच्छ। दधातेर्लोटि शपो लुकि 'तिङां तिङो भवन्ति' (पावा ७,१,३९) इति हेस्तादेशः। एतदेव प्रकारान्तरेणाह— ईशानः वृष्टिप्रदानशक्तस्त्वं दृतिम् जलपूर्णां भस्त्रां मेघरूपां वि ष्य विमुञ्च। स्यतिः उपसृष्टो विमोचने। षो अन्तकर्मणि। 'ओतः श्यनि' (पा ७,३,७१) इति ओकारलोपः। यथा जलपूर्णदृतिमुखात् महज्जलं स्रवति एवं मेघेभ्यो महतीं वृष्टिं कुर्वित्यर्थः।

न घ्रंस्त॑ताप॒ न हि॒मो ज॑घान॒ प्र न॑भतां[6] पृथि॒वी जी॒रदा॑नुः।
आप॑श्चिदस्मै घृ॒तमित्[7] क्ष॑रन्ति॒ यत्र॒ सोमः॒ सद॒मित् तत्र॑ भ॒द्रम् ॥ २ ॥

न। घ्रन्। त॒ता॒प॒। न। हि॒मः। ज॒घा॒न॒। प्र। न॒भ॒ता॒म्। पृ॒थि॒वी। जी॒रऽदा॑नुः।
आप॑ः। चि॒त्। अ॒स्मै॒। घृ॒तम्। इत्। क्ष॒र॒न्ति॒। यत्र॑। सोम॑ः। सद॑म्। इत्। तत्र॑। भ॒द्रम् ॥

घ्रन्। अनुकरणशब्दोऽयम्। घर्म इत्यर्थः। 'यद्[8] घ्रा[9] इत्यपतत्[6] तद् घर्मस्य घर्मत्वम्' (तैआ ५,१,५) इति तैत्तिरीयश्रुतेः। अनेन घर्मशब्दवाच्यः कालो लक्ष्यते। स घर्मः ग्रीष्मो न तताप। अन्तर्भावितण्यर्थः। न तापयति संतापेन न बाधते। हिमः हेमन्तर्तुः न जघान। अतिशैत्येन गात्रसंकोचनरूपबाधां न करोतीत्यर्थः। पृथिवी च जीरदानुः जीवनप्रदा। जीवे रदानुप्रत्ययः (तु. पाउद १,१६३)। यद्वा रकि ज्यः प्रसारणे (तु. पाम १,१,४) जीर इति भवति। 'दाभाभ्यां नुः' (पाउ ३,३२) इति नुप्रत्यये दानुरिति। अस्यां व्युत्पत्तौ अवग्रहो युज्यते। जीरदानुः प्रवृद्धदाना सती प्र नभताम्। उक्तो नभतिशब्दार्थः। वर्षेण आप्यायिता भवन्त्वित्यर्थः। किं च अस्मै यजमानाय आपश्चित् आपोऽपि घृतम् इत् घृतमेव सत्यः क्षरन्ति घृतवत् प्रीतिकारिण्यो भवन्ति। 'आपो भद्रा

१. 'पादेष S'. २. वृष्ट्यर्थं S'. ३. वृष्ट्या S'. ४. संस्तोभ्य S'. ५. धाता S'; वैवु. मंग. द. ६. सददनतौ पै २०,३,७. ७. मदमिन् पै. ८. तद् S'. ९. प्रविरय' चा.

घृतमिद् आप आसुः' ( तै ५,६,१,२ ) इति श्रुत्यन्तरात् । यद्वा आपः घृतमेव क्षरन्ति कुर्वन्ति । वृष्ट्या गोसमृद्धौ घृतवृद्धिर्भवतीति यावत् । घर्महेमन्तजनितसंताप-शैत्यबाधाभावः पृथिव्याप्यायनं घृतक्षरणं च केन हेतुना भवतीति तद् आह — यत्र यस्मिन् देशे सोमः एतन्नामा देवः । इज्यत इति शेषः । तत्र तस्मिन् देशे सदम् इत् सर्वदैव भद्रम् कल्याणं भवति । सौम्ययागेन अनिष्टनिवृत्तिः इष्टप्राप्तिश्च[1] भवतीत्यर्थः ।

'प्रजापतिर्जनयति[†] प्रजा इमा[२] धाता[३] दधातु[४] सुमनस्यमानः ।
'संजानानाः संमनसः सयोनयो[५] मयि पुष्टं[६] पुष्टपतिर्दधातु ॥ १ ॥

प्रजाऽपतिः । जनयति । प्रऽजाः । इमाः । धाता । दधातु । सुऽमनस्यमानः ।
सम्ऽजानानाः । सम्ऽमनसः । सऽयोनयः । मयि । पुष्टम् । पुष्टऽपतिः । दधातु ॥ १ ॥

प्रजापतिः प्रजानां स्रष्टा पालयिता स देवः इमाः प्रजाः पुत्रादिका जनयतु[†] उत्पादयतु । धाता पोषको देवः सुमनस्यमानः सुमना इवाचरन् । 'कर्तुः क्यङ् सलोपश्च' ( पा ३,१,११ ) इति क्यङ् । सलोपो व्यत्ययेन न प्रवर्तते । सौमनस्यं प्राप्तो दधातु पोषयतु । प्रजा इत्यनुषङ्गः । किं च ताः प्रजाः संजानानाः समानज्ञानाः । कार्यविषये परस्परम् ऐकमत्यं प्राप्ता इत्यर्थः । 'संप्रतिभ्यामनाध्याने' ( पा १,३,४६ ) इति जानातेरकर्त्रभिप्रायेऽपि आत्मनेपदम् । संमनसः संगतमनस्काः। अन्योऽन्याविसंवादिकार्यचिन्तापरा इत्यर्थः । सयोनयः समानकारणाः । यथा प्रजा उक्तविशेषणविशिष्टा भवन्ति तथा पुष्टपतिः पोषस्य पतिः एतन्नामा देवो मयि पुष्टम् पोषं प्रजाविषयं दधातु विदधातु ।

अन्वद्य नोऽनुमतिर्यज्ञं देवेषु मन्यताम्[७] ।
अग्निश्च[८] हव्यवाहनो भवतां[१०] दाशुषे मम[११] ॥ १ ॥

अनु । अद्य । नः । अनुऽमतिः । यज्ञम् । देवेषु । मन्यताम् ।
अग्निः । च । हव्यऽवाहनः । भवताम् । दाशुषे । मम ॥ १ ॥

अनुमतिः अनुमन्त्री सर्वकर्मसु अनुज्ञात्री पौर्णमासाभिमानिनी देवता । 'कलाहीने साऽनुमतिः पूर्णे राका निशाकरे' ( अको १,४,८ ) इति हि तद्विदः । अद्य इदानीं नः अस्माकं यज्ञं देवेषु यष्टव्येषु अनु मन्यताम् अनुजानातु । ज्ञापयत्वित्यर्थः । अग्निश्च अग्निरपि

---

१. च नास्ति S'. २. प्रजापती रमयतु प्रजा इह काठ १३,१६; आ नः प्रजां जनयतु प्रजापतिर् मं २,१३,२३ आपश्रौ १४,२८,४ काठ १३,१५. † जनयतु सा. पै. १९,२२,१५. ३. त्वष्टा पै. ४. ददातु आपश्रौ. ५. संवत्सरं ऋतुभिः संविदानौ (°भिश्चाकुपानौ आपश्रौ., °भिश्चाक्लृपानौ काठ.) मं. काठ. पै. आपश्रौ. ६. पुष्टिं मं. काठ. पै. मंत्रा. २,४,७ आपश्रौ. ७. पुष्टिपति° मं. काठ. पै. मंत्रा. आपश्रौ. ८. वेङ्. मंत्रा. द. ९. यच्छताम् पै २०,३,९. १०. भवतं ऋ १,९३,१ मा ३४,९ मं ३,१६,४ आश्रौ ४,१२,२ शांश्रौ ९,२८,२. ११. मयः ऋ. मा. तै ३,३,११,३ मं. पै. आश्रौ. शांश्रौ.

दाशुषे । विभक्तिव्यत्ययः । हविर्दत्तवतो मम हव्यवाहनः हव्यं प्रापयिता यष्टव्यान् देवान् भवताम् भवतात् । व्यत्ययेनात्मनेपदम् । हव्यवाहन इति । 'हव्येऽनन्तःपादम्' ( पा ३,२, ६६ ) इति ञ्युट् ।

अन्विद॑नुमते॒ त्वं मंस॑से[1] शं च॑ नस्कृधि[2] ।
जुषस्व॑ हु॒व्यमाहु॑तं प्र॒जां दे॑वि ररास्व[3] नः ॥ २ ॥

अनु॑ । इत् । अनु॒ऽमते । त्वम् । मंस॑से । शम् । च॒ । नः॒ । कृधि॒ ।
जुषस्व॑ । हु॒व्यम् । आऽहु॑तम् । प्र॒ऽजाम् । दे॒वि । र॒रास्व॒ । नः॒ ॥ २ ॥

हे अनुमते एतन्नामिके देवते त्वम् अनु मंससे[4] अनुमन्येथाः । इत् अवधारणे । मन्यतेः पञ्चमलकारे रूपम् । किं च नः अस्माकं शम् सुखं कृधि कुरु । आहुतम् आभिमुख्येन अग्नौ प्रक्षिप्तं हव्यम् हविः जुषस्व सेवस्व । हे देवि द्योतमाने अनुमते नः अस्मभ्यं प्रजाम् पुत्रादिलक्षणां ररास्व प्रयच्छ । रातेः 'बहुलं छन्दसि' ( पा २,४,७६ ) इति शपः श्लुः । व्यत्ययेन आत्मनेपदम् ।

अनु॑ मन्यताम॒नुमन्य॑मानः[5] प्र॒जाव॑न्तं[6] र॒यिमक्षी॑यमाणम्[7] ।
तस्य॑[8] व॒यं हेड॑सि[9] माऽपि॑ भूम सुमृ॒डीके॑[10] अ॒स्य सु॑म॒तौ स्या॑म ॥ ३ ॥

अनु॑ । म॒न्य॒ताम् । अ॒नु॒ऽमन्य॑मानः । प्र॒जाऽव॑न्तम् । र॒यिम् । अक्षी॑यमाणम् ।
तस्य॑ । व॒यम् । हेड॑सि । मा । अपि॑ । भू॒म॒ । सु॒ऽमृ॒डीके॑ । अ॒स्य॒ । सु॒ऽम॒तौ । स्या॒म॒ ॥ ३ ॥

अनुमन्यमानः अनुमन्ता पुंदेवः । यद्वा लिङ्गव्यत्ययः । अत एव शाखान्तरे स्त्रीलिङ्गत्वेन पठ्यते — 'अनु मन्यताम् अनुमन्यमाना' इति, 'तस्यै वयं हेडसि' ( तै ३,३,११,४ ) इति च । अनुमन्त्री अनुमतिर्देवता रयिम् अनु मन्यताम् अनुजानातु । कीदृशम् । प्रजावन्तम् पुत्रादियुक्तम् अक्षीयमाणं च । किं च तस्य अनुमन्तुः पुंदेवस्य तस्या अनुमतेर्वा हेडसि । क्रोधनामैतत् (द्र. निघ २,१३) । क्रोधेऽपि वयं मा भूम । क्रोधविषया मा भूमेत्यर्थः । किं तु अस्य अनुमन्तुः अस्या अनुमतेर्वा सुमृळीके[11] । मृळीकम् इति सुखनाम (द्र. निघ३,६) । शोभनसुखरूपे शोभनसुखकारिण्यां वा सुमतौ अनुग्रहात्मिकायां शोभनायां बुद्धौ स्याम भवेम ।

यत् ते॒ नाम॑ सु॒हवं॑ सुप्रणी॒तेऽनु॑मते॒ अनु॑मतं सु॒दानु॑[12] ।
[13]तेना॑ नो य॒ज्ञं पि॑पृहि विश्ववारे र॒यिं नो॑ धेहि[14] सुभगे[15] सु॒वीर॑म्[15] ॥४॥

२. मंसिषे (वग्नुनः मंसिसं) S'; मन्यासै मा ३४,८ तै ३,३,११,४, काठ १३,१६, आश्रौ ४,१२,२ शांश्रौ ९,२८,२. २. नः कृधि तै. ३. दिदिड्ढि ऋ २,३२,६ मा ३४,१० मै ४,१२,६ काठ. ४. मंसिषे S'.; वेतु. मंपा. द्र. ५. °मन्यमाना तै. पै २०,४,१. ६. प्रजावती पै. ७. ?ुमतद्क्षी° पै. ८. तस्यै तै.; तस्या पै. ९. हेळसि पै. १०. मृळीके ऋ ८,४८,१२. ११. वेतु. मंपा. द्र. १२. सुदोघ पै २०,४,५. १३. तेन इदं सुमति देव्यस्मै इति नि? काठ १३,१६ पै. १४. मिद्धेवारौ (०रे पै.) काठ. पै. १५. सुवीराम् काठ.

यत् । ते । नाम॑ । सुऽह॑वम् । सुऽप्र॑नीते । अनु॑ऽमते । अनु॑ऽमतम् । सुऽदानु॑ ।
तेन॑ । नः॒ । य॒ज्ञम् । पि॒पृ॒हि॒ । वि॒श्व॒ऽवा॒रे॒ । र॒यिम् । नः॒ । धे॒हि॒ । सु॒ऽभ॒गे॒ । सु॒ऽवीर॑म् ॥ ४ ॥

हे सुप्रणीते सुप्रणयने यजमानानां धनादेः सुष्ठु प्रणेत्रि वा हे अनुमते ते तव सुहवम् सुष्ठु ह्वातव्यम् अनुमतम् सर्वेषाम् अभिमतं सुदानु शोभनदानम् अभिमतफलप्रदायकं यन्नाम नामधेयम् अनुमतिरूपम् अस्ति तेन नाम्ना नः अस्मदीयं यज्ञं पिपृहि पूरय । 'अर्तिपिपर्त्योश्च' (पा ७,४,७७) इति अभ्यासस्य इत्त्वम् । हे विश्ववारे विश्वैः सर्वैर्वरणीये किं च हे सुभगे शोभनभाग्ययुक्ते अनुमते नः अस्माकं सुवीरम् शोभनापत्यं रयिम् धनं धेहि ।

'एमं य॒ज्ञमनु॑मतिर्जगाम'[1] 'सुक्षे॒त्रता॑यै सुवी॒रता॑यै'[2] सुजा॒तम्[3] ।
भ॒द्रा ह्य॑स्याः[4] प्रम॑तिर्ब॒भूव॒ सेमं य॒ज्ञम॑वतु दे॒वगो॑पा[5] ॥ ५ ॥

आ । इ॒मम् । य॒ज्ञम् । अनु॑ऽमतिः । ज॒गा॒म॒ । सु॒ऽक्षे॒त्रता॑यै । सु॒ऽवी॒रता॑यै । सु॒ऽजा॑तम् ।
भ॒द्रा । हि । अ॒स्याः॒ । प्रऽम॑तिः । ब॒भूव॑ । सा । इ॒मम् । य॒ज्ञम् । अ॒व॒तु॒ । दे॒वऽगो॑पा ॥ ५ ॥

अनुमतिर्देवी इमम् अनुष्ठीयमानम् अस्मदीयं यज्ञम् आ जगाम आगच्छतु । छान्दसो लिट् । किमर्थम् । सुक्षेत्रतायै सुभूमित्वाय फलाय । सुवीरतायै शोभनपुत्रत्वरूपफलाय सुक्षेत्रपुत्रादिरूपं फलं दातुम् । कीदृशं यज्ञम् । सुजातम् मन्त्रद्रव्यादिना सुष्ठु निष्पन्नम् । किं च हि यस्माद् अस्या अनुमतेः भद्रा भन्दनीया कल्याणी प्रमतिः प्रकृष्टानुग्रहबुद्धिः बभूव अतः देवगोपा देवानाम् अग्न्यादीनां गोप्त्री[6] सा अनुमतिः इमं यज्ञम् अवतु रक्षतु ।

अनु॑मतिः[7] सर्व॑मि॒दं ब॑भूव[7] यत् तिष्ठ॑ति॒ चर॑ति॒ यदु॑ च॒ विश्व॒मेज॑ति ।
तस्या॑स्ते देवि सुम॒तौ स्या॒मानु॑मते॒ अनु॒ हि मंस॑से नः ॥ ६ ॥

अनु॑ऽमतिः । सर्व॑म् । इ॒दम् । ब॒भू॒व॒ । यत् । तिष्ठ॑ति । चर॑ति । यत् । ऊं॒ इति॑ । च॒ । विश्व॑म् । एज॑ति ।
तस्याः॑ । ते॒ । दे॒वि॒ । सु॒ऽम॒तौ । स्या॒म॒ । अनु॑ऽमते । अनु॑ । हि । मंस॑से । नः॒ ॥ ६ ॥

अनुमतिर्देवी इदं परिदृश्यमानं सर्वं जगद् बभूव । सर्वशब्दार्थं विविनक्ति — यत् जगत् तिष्ठति स्थावरवृक्षगुल्मादिरूपेण वर्तते । चरति यत् जगत् अबुद्धिपूर्वं चेष्टते । यदु च यदपि च विश्वम् सर्वं जगद् एजति बुद्धिपूर्वकं चेष्टते । एजृ कम्पने । स्थावरजङ्गमात्मकं सर्वं जगद् अनुमतिर्बभूव । हे देवि अनुमते तस्या-

१. आ नो देव्यनुमतिर्जगम्यात् पै २०,४,३. २. सुक्षत्रता वीरतायां पै [मूको.]. ३. सुजाता पै. ४. ह्यस्याः A,R. ५. देवजुष्टा पै. ६. एवं स्वरो न गिर्यति. ७. विश्वमिदं जजान पै.

स्तादृश्यास्तै तव सुमतौ शोभनायाम् अनुग्रहबुद्धौ स्याम भवेम । हे अनुमते हि यस्मात् नः अस्मान् अनु मंसिषे[1] अनुमन्यसे । मन्यतेः पञ्चमलकारे 'सिब्बहुलं लेटि' ( पा ३,१,३४ ) इति सिप् ।

समेत[2] विश्वे[3] वचसा[4] पतिं दिव एको[5] विभूरतिथिर्जनानाम्[6] ।
स पूर्व्यो नूतनमाविवासत्[7] तं वर्तनिरनु[8] वावृत एकमित्[9] पुरु[10] ॥ १ ॥

सम्ऽएत । विश्वे । वचसा । पतिम् । दिवः । एकः । विऽभूः । अतिथिः । जनानाम् ।
सः । पूर्व्यः । नूतनम् । आऽविवासत् । तम् । वर्तनिः । अनु । ववृते । एकम् । इत् । पुरु ॥१॥

पैतृमेधिककर्मणा संस्कृतस्य पुरुषस्य सूर्यप्रशंसापूर्वकं तदनुग्रहं प्रार्थयते — हे विश्वे[11] सर्वे बान्धवाः दिवः द्युलोकस्थ पतिम् स्वामिनं सूर्यं वचसा मन्त्ररूपेण स्तोत्रेण समेत संप्राप्नुत । संस्तुतेत्यर्थः । इण् गतौ । लोटि तस्य तबादेशः । सूर्यो विशेष्यते जनानाम् जन्मवतां प्राणिनाम् एकः मुख्यो विभूः[12] स्वामी अतिथिः संततम् अतनशीलः । अत सातत्यगमने । 'ऋतन्यञ्जि' ( पाउ ४,२ ) इत्यादिना इथिन्प्रत्ययः । अतिथिवद् अर्घ्यादिना पूज्यो वा । पूर्व्यः पुरातनः । स्वार्थिको यत् । स सूर्यः नूतनम् पितृभूतम् इमं पुरुषम् आविवासत्[13] । विवासतिः परिचरणकर्मा । परिचरतु । स्वीयोऽयम् इति अनुगृह्णात्वित्यर्थः । यद्वा पूर्व्यः । 'पूर्वैः कृतमिनयौ च' (पा ४,४,१३३) इति यप्रत्ययः । पूर्वैः पितृभिः अस्मदीयोऽयम् इति स्वीकृतः स पुरुषो नूतनम् पुनःपुनरुदयेन अभिनवं सूर्यं परिचरतु । अथ वा पूर्व्यः स पितृभूतः नूतनम् इष्टकचितम् अभिनवं प्रदेशम् अभिगच्छत्विति । तम् एकमेव सूर्यं पुरु बहुधा वर्तनिः सत्कर्ममार्गः अनु ववृते अनुवर्तते ।

अयं [14]सहस्रमा नो दृशे[15] कवीनां मतिर्ज्योतिर्विधर्मणि[16] ॥ १ ॥
अयम् । सहस्रम् । आ । नः । दृशे । कवीनाम् । मतिः । ज्योतिः । विऽधर्मणि ॥ १ ॥

ब्रध्नः समीचीरुषसः समैरयन्[17] ।
अरेपसः सचेतसः स्वसरे[18] मन्युमत्तमाश्चिते[19] गोः ॥ २ ॥

ब्रध्नः । समीचीः । उषसः । सम् । ऐरयन् ।
अरेपसः । सऽचेतसः । स्वसरे । मन्युमत्ऽतमाः । चिते । गोः ॥ २ ॥

---

१. मंशिषे S'.; वैनु. मंपा. द्र. २. समैत पै २०,५,२. ३. विश्वे कौ १,३७२ (मूको.). ४. ओजसा कौ. पै. ५. एष पै. ६. इन्द्ररतिथि° कौ. पै. ७. °भ्रो-जिगीषं° कौ. ८. वर्तनि° B^b; वर्तनी° S^m, कौ. ९. एकं इत् कौ. १० पुरुः पै. ११. वैनु. मंपा. द्र. १२. विभर्ताविभूः S'. १३. स्वरः? वैप १ पृ. ६३३ ० ह. १४. °मानं वा रेतोः कौ १,८५८. १५ °धर्मं कौ. १६. समैरयत् कौ.; समीरय पै २१,४,१०. १७. संपरे पै २०,५,१. १८. मन्युमेन्वंधिताः कौ.; °मादिचवयो? पै.

[1]अयं परिदृश्यमानः सर्वैः स्वात्मत्वेन अनुभूयमानो वा सूर्यः नः अस्माकं सहस्रम् । 'कालाध्वनोः' (पा २,३,५) इति द्वितीया । सहस्रसंवत्सरकालपर्यन्तं दृशे दर्शनाय । 'दृशे विख्ये च' (पा ३,४,११) इति केप्रत्ययान्तत्वेन निपातितः । आ इति उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । आ भवतु । अनेककालपर्यन्तं सूर्यः अस्मच्चक्षुर्गोचरो भवत्वित्यर्थः । तं विशिनष्टि— कवीनाम् क्रान्तदर्शिनां पुंसां मतिः मननीयः । कर्मणि क्तिन् । ज्योतिः प्रकाशरूपः । किं च विधर्मणि विविधे धर्मसाधने कर्मणि । निमित्तसप्तमी । ब्रध्नः सर्वेषां स्वस्वकर्मसु तत्फलेषु च बन्धकः संयोजकः सूर्यः । 'बन्धेर्ब्रधिबुधी च' (पाउ ३,५) इति नक्प्रत्ययः । उषसः उषःकालोपलक्षितानि अहानि समीचीः संगतानि अनुक्रमेण प्राप्तानि समैरयन् । वचनव्यत्ययः । सम्यक् प्रेरयतु । सत्कर्मकरणाय पुनःपुनरहानि प्रेरयत्वित्यर्थः[1] ।

उषसो विशेष्यन्ते— अरेपसः अपापाः पापहारिण्यः सचेतसः समानज्ञानाः स्वसरे । अहर्नामैतद् । अह्नि विषये मन्युमत्तमाः । मन्यतिर्दीप्तिकर्मा । अतिशयेन दीप्तिमत्यः प्रकाशयुक्ताः गोः पृश्निरूपायाः चिते । चायतेश्चितशब्दो निपातितः । पूजादानादिकर्मणि निमित्ते ब्रध्नः प्रेरयत्विति पूर्वेण संबन्धः । यद्वा । चिनोतेः संपदादिलक्षणो भावे क्विप् । गोशब्देन आदित्य उच्यते । गौः विष्टप् नभ इति षद् (निघ १,४) पदानि दिवश्चादित्यस्य च साधारणानि इति हि यास्कः(२,१३) । तस्य आदित्यस्य चिते चयनाय ज्ञापनाय । भवन्तु इति शेषः । अथ वा स्वसरे गोश्चित इति सामानाधिकरण्येन संबन्धः । चायतेर्निशामनार्थादेव चितशब्दः । गोः आदित्यस्य चिते दर्शनयोग्ये स्वसरे अह्नि विषये उषसो भवन्तु इति ।

दौष्व॑प्न्यं[2] दौर्जीवित्यं[3] रक्षो॑ अभ्वम॑राय्यः॑ ।
[4]दुर्णाम्नीः सर्वा॑ दुर्वाच॒स्ता अ॒स्मन्ना॑शयामसि[4] ॥ १ ॥

दौःऽस्व॑प्न्यम् । दौःऽजी॑वित्यम्[5] । रक्षः॑ । अ॒भ्व॒म् । अ॒रा॒य्यः॑ ।
दुः॒ऽनाम्नीः॑ । सर्वाः॑ । दुः॒ऽवाचः॑ । ताः । अ॒स्मत् । ना॒श॒या॒म॒सि॒ ॥ १ ॥

व्याख्याता (अ ४,१७,५) ।

इति द्वितीयं सूक्तम् ।

इति सप्तमे काण्डे द्वितीयोऽनुवाकः ।

---

१. सा. 'अयं सहस्रम्' इत्यारभ्य 'समैरयन्' इत्यन्तं प्रथमर्चं मत्वा व्याख्याति (तु. कौ १, ४५८ द्वयोरेकैर ऋह्). २. दुःस्वप्न्यं पै ५,२३,७. ३. दौर्जीवत्यं K,V, सा.; दुर्जीवितं पै. ४. दुर्वाचसवं दुर्भूतं तमितो ना° पै. ५. °जीवत्यम् K.

तृतीयेऽनुवाके त्रीणि सूक्तानि। तत्र 'यन्न इन्द्रः' इति प्रथमं सूक्तम्। तत्र आद्ययर्चा मन्त्रोक्ता इन्द्राद्या नव देवताः सर्वफलकामो यजेत उपतिष्ठेत वा।

तत्रैव कर्मणि 'ययोरोजसा' (अ ७,२६) इति द्वाभ्यां विष्णुवरुणौ यजेत उपतिष्ठेत वा।

सर्वसंपत्कामो 'विष्णोर्नु कम्' (अ ७,२७), इत्यष्टर्चेन विष्णुं यजेत उपतिष्ठेत वा।

तद् उक्तं कौशिकेन — 'यन्न इन्द्रः' (अ ७,२५), 'ययोरोजसा', 'विष्णोर्नु कम्' (कौसू ५९,१९) इति।

तथा 'वैष्णवीम् अन्नकामस्यान्नक्षये च' (शांक १७,३) इति विहितायां वैष्णव्याख्यायां महाशान्तौ 'विष्णोर्नु कम्' इति आवपेत्। तद् उक्तं शान्तिकल्पे — "'विष्णोर्नु कम्' इति वैष्णव्याम्" (शांक १८,५) इति।

आतिथ्येष्टौ 'विष्णोर्नु कम्' इति वैष्णवं हविरभिमृशेत्। तद् उक्तं वैताने — "आतिथ्यायां हविरभिमृशति 'यज्ञेन यज्ञम्' (अ ७,५) इति। वैष्णवं 'विष्णोर्नु कम्' इति" (वैताश्री ३,१३;१४) इति।

तथा सोमयागे औपवसथ्याहनि हविर्धानयोः उपस्तभ्यमानम् उपस्तम्भनकाष्ठम् अनया अनुमन्त्रयेत। "'विष्णोर्नु कम्' इत्युपस्तम्भनम् उपस्तभ्यमानम्" (वैताश्री ५,१२) इति वैतानसूत्रात्।

सोमयागे 'यस्योरुषु' (अ ७,२७,३) इति सोमक्रयणार्थं निष्क्रामेत्। "'यस्योरुषु' इति निष्क्रम्य" (वैताश्री १३,५) इति वैतानसूत्रात्।

पशुयागात् प्राक् क्रियमाणायाम् इष्टौ 'उरु विष्णो' (अ ७,२७,३) इत्यनया वैष्णवं पूर्णहोमं ब्रह्मा अनुमन्त्रयेत। "अथ पशुः[1]। वैष्णवं पूर्णहोमम् 'उरु विष्णो' इति" (वैताश्री १०,१) इति हि वैतानम्।

तथा अद्भुतशान्तौ 'उरु विष्णो' इत्यनया विष्णुं यजेत। उक्तं शान्तिकल्पे — "'उरु विष्णो विक्रमस्व' इति विष्णोः" (शांक १४,२) इति।

दर्शपूर्णमासयोः प्रणीताप्रणयनप्रभृति हविष्कृदुद्वादनाद् अर्वाक् अभिवदनप्रायश्चित्तार्थम् 'इदं विष्णुः' इति जपेत्। 'प्रणीतासु प्रणीयमानासु वाचं यच्छत्या हविष्कृत उद्वादनात्। यदि वदेद् वैष्णवीं जपेत्' (वैताश्री २,२;३) इति हि वैतानं सूत्रम्।

सोमयागे उत्तरवेद्यग्निप्रणयनानन्तरं दक्षिणहविर्धानस्य वर्त्महोमम् 'इदं विष्णुः' इति ब्रह्मा अनुमन्त्रयेत।

तस्मिन्नेव कर्मणि उत्तरहविर्धानस्य वर्त्महोमं 'त्रीणि पदा' इति अनुमन्त्रयेत। तद् उक्तं वैताने — "दक्षिणहविर्धानस्य वर्त्मनिहोमम् 'इदं विष्णुः' (अ ७,२७,४) इति। उत्तरस्य 'त्रीणि पदा' (अ ७,२७,५) इति" (वैताश्री १५,१०) इति।

---

1. पशौ RG.

तृतीयसवने सोमयागानन्तरम् 'इदं विष्णुः' ( अ ७,२७,४ ) इति चमसान् अप्सु प्रक्षिपेत्। 'अप्सु सोमचमसान् वैष्णव्यर्चा निनयति'[1] ( वैताश्रौ २३,१४ ) इति वैताने सूत्रितम्।

तथा 'त्वाष्ट्रीं वस्त्रक्षये' (शांक १७,५) इति विहितायां त्वाष्ट्र्याख्यायां महाशान्तौ 'इदं विष्णुः' इत्यनया त्रिवृन्मणिवन्धनं कुर्यात्। तद् उक्तं शान्तिकल्पे— "'अग्निः सूर्यः' ( अ ५,२८,२ ), 'इदं विष्णुः' इति त्रिवृतं त्वाष्ट्र्याम्" (शांक १९,७)।

पशुतन्त्रे अवटे स्थापितं यूपं 'विष्णोः कर्माणि' इति द्वाभ्याम् (अ ७,२७,६;७) ऋग्भ्यां ब्रह्मा अनुमन्त्रयेत। "'धर्ता ध्रियस्व[2]' (अ १२,३,३५) इति पादेनावटे[2] निधीयमानम्। 'विष्णोः कर्माणि' इति द्वाभ्याम् उच्छ्रितम्" ( वैताश्रौ १०,९;१० ) इति वैतानं सूत्रम्।

तथा अग्निचयने कूर्माभ्यञ्जनानन्तरम्[3] उलूखलमुसलं च 'विष्णोः कर्माणि' इति ब्रह्मा अनुमन्त्रयेत। "'विष्णोः कर्माणि' इत्युलूखलमुसलं निधीयमानम्[4]" ( वैताश्रौ २९,२ ) इति वैताने सूत्रितत्वात्।

यन्नु इन्द्रो अखनद्[5] यदग्निर्विश्वे देवा मरुतो यत् स्वर्काः।
तदस्मभ्यं सविता[6] सत्यधर्मा [7]प्रजापतिरनुमतिर्नि यच्छात् ॥ १ ॥

यत्। नुः। इन्द्रः। अखनत्[5]। यत्। अग्निः। विश्वे। देवाः। मरुतः। यत्। सुऽअर्काः।
तत्। अस्मभ्यम्। सविता। सत्यऽधर्मा। प्रजाऽपतिः। अनुऽमतिः। नि। यच्छात् ॥ १ ॥

इन्द्रः। इदि परमैश्वर्ये। 'ऋज्रेन्द्राग्र' ( पाउ २,२८ ) इत्यादिना रन्प्रत्ययान्तो निपातितः। यास्कस्तु 'इन्द्र इरां दृणाति' ( नि १०,८ ) इत्यादिना इन्द्रशब्दं वहुधा निरुवाच। परमैश्वर्यादिगुणविशिष्टो देवः नः अस्मभ्यं यत् फलम् असनत्[8] अददात्। षणु दाने। व्यत्ययेन शप्। संभजनार्थस्य भौवादिकस्य वा रूपम्। यत् फलं समभजत्। अग्निः अङ्गनादिगुणविशिष्टो देवो यत्। असनद् इति सर्वत्र क्रियानुषङ्गः। विश्वे देवाः एतन्नामका गणदेवाः। मरुतः एकोनपञ्चाशत्संख्याका मरुद्गणाः। स्वर्काः। 'अर्को देवो भवति यद् एनम् अर्चन्ति अर्को मन्त्रो भवति यद् अनेनार्चन्ति' ( नि ५,४ ) इति यास्कः। सुमन्त्राः सुदेवा वा एतन्नामानो देवाश्च। यद् असनन् इति क्रियापदस्य वहुवचनान्तत्वेन विपरिणामः। तत् फलम् अस्मभ्यं सविता सर्वस्य प्रेरकः सत्यधर्मा यथार्थकर्मा एतन्नामा देवः प्रजापतिः अनुमतिः च नि यच्छात् नियच्छतु स्थापयतु। प्रत्येकविवक्षया एकवचनम्। यम उपरमे। अस्मात् पञ्चमलकारे 'इषुगमियमां छः' ( पा ७,३,७७ )। आडागमः।

---

१. निनयन्ति RG. २. ध्रियस्वेति पदे' S'. ३. कर्माभ्यंजना' S',
४. निधनम् S'. ५. अर्धनत् E[1]: असनत् I,Bp[2], मा. ६. सयुंजा पै २०,६,१.
७. संरराणर्षेनु' पै. ८. तैतु. मं ११. द.

यर्योरोजसा स्कभिता[1] रजांसि [2]यौ वीर्यैर्वीरतमा[3] शविष्ठा[1] ।
यौ[4] पत्यैते अप्रतीतौ[5] सहोभिर्विष्णुमगन्[6] वरुणं[7] पूर्वहूतिः[8] ॥ १ ॥

यर्योः । ओजसा । स्कभिता । रजांसि । यौ । वीर्यैः । वीरऽतमा । शविष्ठा ।
यौ । पत्यैते इति । अप्रतिऽइतौ । सहःऽभिः । विष्णुम् । अगन् । वरुणम् । पूर्वऽहूतिः ।

यर्योः **विष्णुवरुणयोः** ओजसा **बलेन** रजांसि । 'लोका रजांस्युच्यन्ते' इति हि **निरुक्तम्** ( नि ४,१९ )। **रञ्जनात्मकानि पृथिव्यादीनि स्थानानि** स्कभिता **स्कम्भितानि दृढीकृतानीत्यर्थः । शेर्लोपः ।** यौ **विष्णुवरुणौ** वीर्यैः **वीरकर्मभिः शत्रुजयादिरूपैः पराक्रमैः** वीरतमा **अत्यन्तशूरौ** शविष्ठा । **शव इति बलनाम** (निघ २,९)। **अतिशयेन बलवन्तौ । शवस्विशब्दाद् इष्ठनि विनो लुक् । उभयत्र सुप आकारः । किं च** यौ **विष्णुवरुणौ** सहोभिः **बलैः** अप्रतीतौ **अप्रतिगतौ अतिरस्कृतौ सन्तौ** पत्यैते । **पत्यतिरैश्वर्यकर्मा** (निघ २,२१) । **ऐश्वर्यं सामर्थ्यं प्राप्नुतः । तादृशं** विष्णुम् **व्यापनशीलं देवं** वरुणम् **अनर्थनिवारकं देवं च** पूर्वहूतिः **पूर्वाह्वानः इतरेभ्यः फलार्थिभ्यः प्रथमाह्वानोऽयं यज्ञ** अगन् **गच्छतु । हविषा संयोजयतु इत्यर्थः । गमेश्छान्दसे लुङि** 'मन्त्रे घस॰' ( पा २,४ ८० ) **इति च्लेर्लुकि** 'मो नो धातोः' ( पा ८,२,६४ ) **इति मकारस्य नत्वे रूपम् ।**

यस्येदं[9] प्रदिशि यद् विरोचते प्र चानति वि च[10] चष्टे शचीभिः ।
पुरा[11] देवस्य[12] धर्मणा [13]सहोभिर्विष्णुमगन्[11] वरुणं पूर्वहूतिः॥ २ ॥

यस्य । इदम् । प्रऽदिशि । यत् । विऽरोचते । प्र । च । अनति । वि । च । चष्टे । शचीभिः ।
पुरा । देवस्य । धर्मणा । सहःऽभिः । विष्णुम् । अगन् । वरुणम् । पूर्वऽहूतिः ॥२॥

यस्य **विष्णोः वरुणस्य च । प्रत्येकविवक्षया एकवचनम् ।** प्रदिशि **प्रदेशने आज्ञायां यद्** इदं **विश्वं** विरोचते **विशेषेण दीप्यते ।** प्राणिति[14] च **प्रकर्षेण चेष्टते च । श्वस प्राणने । अन च इति धातुः ।** शचीभिः **कर्मभिः** वि चष्टे च । **पश्यतिकर्मैतत्** (निघ ३,१) । **स्वस्वकर्तव्यं फलं वा विशेषेण पश्यति च । किं च** देवस्य **द्योतमानस्य विष्णोर्वरुणस्य च** धर्मणा **धारकेण कर्मणा** सहोभिः **बलैश्च** पुरा **पूर्वं**

---

१. स्तभिता पै २०,१४,१०. २. वीर्येभिर्वी॰ मा ८,५९ माश ४,५,७,७ तैत्रा २,८,६,५ आश्री ५,२०,६ शांश्री ३,२१,४; वीरेभिर्वी॰ मै ४,१४,६. ३. शचीभिः पै. ४. या मा. मै. माश. तैत्रा. आश्री. शांश्री. ५. अप्रतीता मा. मै. माश. तैत्रा. आश्री. शांश्री. ६. ॰ष्णू अगन् मा. मै. माश. तैत्रा. आश्री. शांश्री. ७. वरुणा मा. मै. माश. तैत्रा. आश्री. शांश्री. ८ पूर्वहूतौ मा. तैत्रा.-माश. आश्री. शांश्री.; पूर्वहूतिम् मै. ९. यर्योरिद पै २०, १५,२. १०. चे B॰. ११. सह पै.; मद्रा पै [मु.पो.]. १२. ऋतस्य पै. १३. युवाना वि॰ पै. १४. वेनु.मंग. द.

जगद् व्यरोचिष्ट प्राणी व्यचष्टेति कालविपरिणामेन योज्यम्। पुराशब्दस्य निपातस्य रोचते इत्यादिधातुयोगे 'यावत्पुरानिपातयोर्लट्' (पा ३,३,४) इति भविष्यदर्थे लट्। देवस्य धारकेण कर्मणा बलैश्च यद् इदं विश्वं विरोचिष्यते प्राणिष्यति विख्यास्यति विशेषेण द्रक्ष्यति। एवं विष्णुवरुणयोराज्ञायां विश्वं जगद् भूतभविष्यद्वर्तमानकालेषु रोचनादिव्यापारास्पदं भवति। तादृशं विष्णुं वरुणं च पूर्वहूतिः इतरेभ्यः प्रथमाह्वानोऽयं फलार्थी जनः अगन् गच्छतु। हविषा संयोजयतु इत्यर्थः।

विष्णोर्नु कं प्रा वोचं वीर्याणि यः पार्थिवानि विममे रजांसि।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ १ ॥

विष्णोः। नु। कम्। प्र। वोचम्। वीर्याणि। यः। पार्थिवानि। विऽममे। रजांसि। यः। अस्कभायत्। उत्ऽतरम्। सधऽस्थम्। विऽचक्रमाणः। त्रेधा। उरुऽगायः ॥ १ ॥

विष्णोः व्यापनशीलस्य देवस्य वीर्याणि वीरकर्माणि नु क्षिप्रं प्रा वोचम् प्रकर्षेण ब्रवीमि। छान्दसो लुङ्। कम् इति पूरणः। विष्णुर्विशेष्यते—यो देवः पार्थिवानि पृथिवीमयानि रजांसि लोकान् विममे निर्ममे। 'तिस्रो भूमीर्धारयन् त्रीँरुत द्यून्' (ऋ २,२७,८) इति मन्त्रवर्णे एकैकस्य लोकस्य त्रित्वसंख्या श्रूयते। यद्वा 'त्रयो वा इमे त्रिवृतो लोकाः' (ऐब्रा २,१७) इति एकैकस्य त्रिवृत्करणश्रवणात् पार्थिवानीत्यत्र पृथिवीशब्देन पृथिव्यन्तरिक्षद्युलोका उच्यन्ते। 'द्वितीयस्यां पृथिव्यां तृतीयस्या पृथिव्याम्' (तु. तै १,२,१२,१) इति हि तैत्तिरीयश्रुतिः। पृथिवीषु भवानि। पृथिवीशब्दाद् भवार्थे अञ्प्रत्ययः। रजांसि ज्योतींषि अग्निविद्युत्सूर्यात्मकानि विममे निर्मितवान्। किं च यो विष्णुः उत्तरम् उद्गततरं सधस्थं स्थानम्। सह तिष्ठन्त्यस्मिन् देवा इति सधस्थम् स्वर्गम्। 'सध मादस्थयोश्छन्दसि' (पा ६,३,९६) इति सहस्य सधादेशः। अस्कभायत् अस्तभ्नात् अधारयत्। 'स्तम्भुस्तुम्भु' (पा ३,१,८२) इत्यादिना स्कभेः श्नाप्रत्यये 'शायच् छन्दसि सर्वत्र' (पावा ३,१,८४) इति शायजादेशः। किं कुर्वन्। त्रेधा त्रिधा पृथिव्याम् अन्तरिक्षे दिवि च विचक्रमाणः पादप्रक्षेपं कुर्वन्। उरुगायः उरुभिर्महात्मभिर्गीयमानः स्तूयमानः उरुगमनो वा। तस्य विष्णोर्वीर्याणि प्रब्रवीमीति संबन्धः।

प्र तद् विष्णुं स्तवते वीर्याणि मृगो न भीमः कुंचरो गिरिष्ठाः।
परावत आ जगम्यात् परस्याः ॥ २ ॥

---

१. [illegible] K,Km,V,WM. ऋ १,१५४,१ मा ५,१८ तै १,२,१३,३ मै १,२,९ पै २०,६,९. २. नुकम् तैत्रा. ३. विष्णुः R, ऋ १,१५४,२ मै. तैत्रा २,४,३,४ पै २०,६,१०. ४. वीर्येण ऋ. मा ५,२० कठ २,१० मै.; वीर्याय तैत्रा. आपश्री ११,९,१. ५. जगन्था ऋ १०,१८०,२ मा १८,७१ कौ २,१२२३ मै ४,१२,३; जगामा तै १,६,१२,५.

प्र । तत् । विष्णुः । स्तवते । वीर्याणि । मृगः । न । भीमः । कुचरः । गिरिऽस्थाः[१] । पराऽवतः । आ । जगम्यात् । परस्याः ॥ २ ॥

यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ।
उरु विष्णो वि क्रमस्वोरु क्षयाय नस्कृधि[२] ।
घृतं घृतयोने[३] पिब प्रप्र यज्ञपतिं तिर ॥ ३ ॥

यस्य । उरुषु । त्रिषु । विऽक्रमणेषु । अधिऽक्षियन्ति । भुवनानि । विश्वा ।
उरु । विष्णो इति । वि । क्रमस्व । उरु । क्षयाय । नः । कृधि ।
घृतम् । घृतऽयोने । पिब । प्रऽप्र । यज्ञऽपतिम् । तिर ॥ ३ ॥

[४]तत् । लिङ्गव्यत्ययः । स महानुभावो विष्णुः वीर्याणि वीरकर्माणि । उद्दिश्येति क्रियाध्याहारः । प्र स्तवते प्रकर्षेण स्तूयते । स्तौतेः कर्मणि व्यत्ययेन शप् । मृगो न मृग इव सिंह इव भीमः भयानकः कुचरः कुत्सितं चरन् कौ भूम्यां वा चरन् गिरिष्ठाः पर्वते तिष्ठन् भूमौ संचरन्नपि सिंहः उत्प्लवनेन पर्वतस्थितो भवति । एवं स विष्णुः परस्याः परावतः अतिदूराद् देशादपि आ जगम्यात् स्तुतिकर्मत्वेन आगच्छतु । गमेश्छान्दसः शपः श्लुः । यस्य विष्णोः उरुषु विस्तीर्णेषु त्रिषु विक्रमणेषु पादनिधानस्थानेषु[५] विश्वा विश्वानि भुवनानि भूतानि अधिक्षियन्ति अधिवसन्ति । क्षि निवासगत्योः । प्रथमे विक्रमे भौमानि द्वितीये अन्तरिक्ष्याणि तृतीये दिव्यानि भूतानि वसन्तीत्यर्थः[४] ।

हे विष्णो व्यापक उरु प्रभूतं वि क्रमस्व लोकत्रये पादत्रयं कुरु । किं च नः अस्माकं क्षयाय निवासाय । षष्ठ्यर्थे चतुर्थी । निवासस्य उरु प्रभूतं धनादिकं कृधि कुरु । अस्माकं निवासं बहुधनादियुक्तं कुर्वित्यर्थः । हे घृतयोने घृतस्य योने कारणभूत । घृतं योनिर्यस्येति वा घृतयोनिः । अत्र अग्न्यात्मना विष्णुः स्तूयते — हे विष्णो इदं हूयमानं घृतम् आज्यं पिब । अपि च यज्ञपतिम् यजमानं प्रप्र तिर प्रवर्धय । प्रपूर्वस्तिरतिर्वर्धनार्थः । 'प्रसमुपोदः पादपूरणे' (पा ८,१,६) इति प्रशब्दस्य द्विर्वचनम् ।

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदा[६] । समूढमस्य पांसुरे[७] ॥ ४ ॥
इदम् । विष्णुः । वि । चक्रमे । त्रेधा । नि । दधे । पदा । सम्ऽऊढम् । अस्य । पांसुरे ॥

---

१. °स्था P. २. नः कृधि तै १,३,४,१. ३. घृतयोने मै १,२,१३. ४. सा. प तत् इत्यारभ्य विश्वा इत्यन्तमेकमृचं मत्वा व्याख्याति. ५. पादनिधान° S'. ६. इदम् ऋ १,२२,१७ मा ५,१५ तै १,२,१३,१ कौ २,१०१९. ७. पांसुले° कौ.

विष्णुः व्यापी भगवान् इदं विश्वं वि चक्रमे विक्रान्तवान्। कतिधा विचक्रमे इति तद् आह — त्रेधा त्रिधा पदा पदानि नि दधे स्थापयामास। 'पृथिव्याम् अन्तरिक्षे दिवि च विष्णुर्वामनो भूत्वेमाँल्लोकांस्त्रिभिः क्रमैरभ्यजयत्' (तु. तै २,१,३,१) इति श्रुतेः। अस्य विक्रममाणस्य विष्णोः पांसुरे पांसुमति। रो मत्वर्थीयः। पादे लोकत्रयं समूढम् सम्यग् ऊढं समवस्थापितं समारूढं वा अभवत्। अत्र 'विष्णुर्विशतेर्वा व्यश्नोतेर्वा। XXX यद् इदं किं च तद् [1]विक्रमते विष्णुः। त्रिधा निधत्ते[1] पदम्। पृथिव्याम् अन्तरिक्षे दिवीति शाकपूणिः' (नि १२,१९) इत्यादि निरुक्तम् अनुसंधेयम्।

त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः। इतो[2] धर्माणि धारयन् ॥५॥

त्रीणि। पदा। वि। चक्रमे। विष्णुः। गोपाः। अदाभ्यः। इतः। धर्माणि। धारयन् ॥

त्रीणि पदा पदानि वि चक्रमे विक्रान्तवान्। गोपाः गोपायिता अदाभ्यः अहिंस्यः परैरनभिभाव्यो विष्णुः। अतः[3] अस्मात् लोकात्। पृथिव्या आरभ्य धर्माणि कर्माणि अग्निहोत्रादीनि धारयन्। अपि वा अतः एभ्यस्त्रिभ्यः पदेभ्यो धर्माणि भूतधारकाणि रजांसि पृथिव्यन्तरिक्षद्युलोकरूपाणि धारयन्। विचक्रमे इति संबन्धः।

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा ॥६॥

विष्णोः। कर्माणि। पश्यत। यतः। व्रतानि। पस्पशे। इन्द्रस्य। युज्यः। सखा ॥६॥

विष्णोः व्यापकस्य देवस्य कर्माणि पश्यत। हे स्तोतार इति शेषः। यतः। 'इतराभ्योऽपि दृश्यन्ते' (पा ५,३,१४) इति तृतीयार्थे तसिल्प्रत्ययः। यैः कर्मभिः व्रतानि नानाविधानि युष्मदीयानि कर्माणि। पस्पशे स्पृशति बध्नाति वा। स्पश [4]बन्धनस्पर्शनयोः। स्वरितेत्। छान्दसो लिट्। शर्पूर्वस्य खयः शेषः। पुनः कीदृशो विष्णुः। इन्द्रस्य देवस्य युज्यः योग्यः अनुगुणः सखा समानख्यानो मित्रभूतः। युज्य इति। युजेः संपदादिलक्षणे क्विपि युग् इति पदं भवति। युजि योगे साधुः। 'तत्र साधुः' (पा ४,४,९८) इति यत्।

इति तृतीयेऽनुवाके प्रथमं सूक्तम्।

'तद् विष्णोः' इति द्वितीयं सूक्तम्। तत्र आद्ययोर्ऋचोः (अ ७,२७,७;८) सर्वसंपत्कर्मणि 'विष्णोर्नु कम्' इत्यत्र विनियोगोऽभिहितः।

दर्शपूर्णमासयोः 'वेदः स्वस्तिः' (अ ७,२९) इति वेदं विमुञ्चेत्। "'वेदः स्वस्तिः' इति वेदं विवृनक्ति" (वैताश्रौ ४,१२) इति वैतानसूत्रात्।

---

1. वि चक्रमे त्रेधा निदधे शंपा.   2. अतो सा. ऋ १,२२,१८ मा ३४,४३ कौ २,१०२०; ततो तैआ २,४,६,१.   3. वेङ्क. मंपा. द्र.   4. बाधन' पाधा.

**प्रायणीयेष्टौ अनया स्वस्तियागम् अनुमन्त्रयेत** । 'प्रायणीयायां पथ्यायाः स्वस्तेः' इति प्रक्रम्य 'पथ्या रेवतीः' (अ ३,४,७), 'वेदः स्वस्तिः' (वैताश्रौ १३,२) इति सूत्रितम् ।

**सर्वव्याधिभैषज्यार्थं व्याधितशरीरं मौञ्जैः पाशैः पर्वसु बद्ध्वा** 'अग्नाविष्णू' **इति द्वाभ्यां शरपिञ्जूलीभिः सह उदकघटं संपात्य अभिमन्त्र्य व्याधितम् आ ग्लावयेद् अवसिञ्चेद् वा** । तद् उक्तं संहिताविधौ — 'अग्नाविष्णू' (अ ७,३०), 'सोमारुद्रा' (अ ७,४३) इति प्रक्रम्य 'मौञ्जैः पर्वसु बद्ध्वा पिञ्जूलीभिराप्लावयति । अवसिञ्चति' (कौसू ३२, ३:४) इति ।

**तथा सर्वसंपत्कामः अनेन द्व्यृचेन अग्नाविष्णू यजेत उपतिष्ठेत वा** (तु.कौसू ५९,१९) ।

**गोदानाख्ये संस्कारकर्मणि** 'स्वाक्तम्' **इत्यनया अञ्जनम् अभिमन्त्र्य ब्रह्मचारिणोऽक्षिणी अभ्यञ्ज्यात्** । "'आयुर्दाः' (अ २,१३) इति गोदानं कारयिष्यन्" (कौसू ५३,१) इति प्रक्रम्य "'स्वाक्तं मे' (अ ७,३१) इत्यनक्ति'" (कौसू ५४,६) इति हि सूत्रितम् ।

**पश्चाद्यज्यमानं यूपम् अनया ब्रह्मा अनुमन्त्रयेत** । "'स्वाक्तं मे' इत्यज्यमानम्" (वैताश्रौ १०,५) इति वैतानसूत्रात् ।

**अभिचारकर्मणि** 'इन्द्रोतिभिः' (अ ७,३२) **इत्यनया अशनिहतवृक्षसमिधम् आदध्यात्** (तु. कौसू ४८,३७) ।

**उपनयने आयुष्कामस्य माणवकस्य मूर्धानम्** 'उप प्रियम्' **इत्यनुमन्त्रयेत** । 'आवतस्ते' (अ ५,३०,१), 'उप प्रियम्' (अ.७,३३), 'अन्तकाय मृत्यवे' (अ ८,१,१) (कौसू ५८,११) इति सूत्रितम् ।

**पुष्टिकर्मणि तटाकादिसर्वजनसाधारणोदके मिश्रधान्यं प्रक्षिप्य** 'सं मा सिञ्चन्तु' **इत्यनया संपात्य अभिमन्त्र्य पुष्टिकामोऽश्नीयात्** । "'सं मा सिञ्चन्तु' (अ ७,३४) इति सर्वोदके मैश्रधान्यम्" (कौसू २४,८) इति कौशिकसूत्रात् ।

**तथा अग्निकार्ये अनया माणवकोऽग्निं पर्युक्षेत्** । "'सं मा सिञ्चन्तु' इति त्रि. पर्युक्षति" (कौसू ५७,२२) इति कौशिकसूत्रात् ।

**तथा अग्निचयने अभिषिच्यमानं यजमानं ब्रह्मा एनाम् ऋचं वाचयेत्** । "'सं मा सिञ्चन्तु' इत्यभिषिच्यमानं वाचयति" (वैताश्रौ २९,२१) इति वैतानसूत्रात् ।

**तद् विष्णोः परमं पदं सदा[1] पश्यन्ति सूरयः । दिवीवि[4] चक्षुराततम् ॥७॥**

---

१. इत्यान° Bl. २. इन्याज्य° RG. ३. शेच्या मं १,२,१४. ४. द्विवीदृ ते १,३,६,२.

तत् । विष्णोः । प॒रमम् । प॒दम् । सदा॑ । प॒श्य॒न्ति॒ । सू॒रयः॑ । दि॒वि॒ऽइ॑व । चक्षुः॑ । आऽत॑तम् ॥

तत् प्रसिद्धं पूर्वत्रोक्तं वा विष्णोः व्यापकस्य देवस्य परमम् उत्कृष्टं पूर्णं वा पदम् स्थानम्, पद्यते गम्यत इति पदं ज्ञातव्यं तत्त्वं वा सदा सर्वदा सूरयः मेधाविनः पश्यन्ति साक्षात्कुर्वन्ति । कीदृशम् । दिवि द्युलोके चक्षुरिव आततम् । सर्वेषां चक्षुःस्थानीयं सूर्यमण्डलम् इह चक्षुःशब्देनोच्यते । 'चक्षुर्मित्रस्य वरुणस्याग्नेः' ( ऋ १,११५,१ ) इति हि निगमः । आततम् समन्ताद् विस्तारितम् । 'गतिरनन्तरः' ( पा ६,२,४९ ) इति गतेः प्रकृतिस्वरत्वम् । सूर्यमण्डलमिव सर्वत्र प्रकाशस्वरूपं तत्त्वं पश्यन्तीत्यन्वयः ।

दि॒वो [1]विष्ण उ॒त [2]वा॑ पृथि॒व्या म॒हो [3]वि॑ष्ण उ॒रोर॒न्तरि॑क्षात् [4]।
हस्तौ॑ पृणस्व ब॒हुभि॑र्वस॒व्यै॑रा॒प्रय॑च्छ [5] दक्षि॑णा॒दोत स॒व्यात् ॥ ८ ॥

दि॒वः । वि॒ष्णो॒ इति॑ । उ॒त । वा॒ । पृ॒थि॒व्याः । म॒हः । वि॒ष्णो॒ इति॑ । उ॒रोः । अ॒न्तरि॑क्षात् ।
हस्तौ॑ । पृ॒ण॒स्व॒ । ब॒हुऽभिः॑ । व॒स॒व्यैः॑ । आ॒ऽप्रय॑च्छ । दक्षि॑णात् । आ । उ॒त । स॒व्यात् ।

हे विष्णो देव दिवः द्युलोकात् उत वा अपि वा पृथिव्याः महः महतः दिवः पृथिव्याश्च महतोऽन्यस्मात् महर्लोकादेः । महच्छब्दात् पञ्चम्येकवचने टिलोपश्छान्दसः । महतेर्वा पूजार्थात् क्विबन्तात् पञ्चम्येकवचनम् । यद्वा मह इति पदम् अन्तरिक्षस्य विशेषणम् । हे विष्णो । पुनरामन्त्रणम् आदरार्थम् । उरोः विस्तीर्णात् । भाषितपुंस्कत्वेन नुमभावः । अन्तरिक्षात् लोकात् । आनीतैरिति शेषः । बहुभिः अधिकैः वसव्यैः वसूनां समूहैः । 'वसोः समूहे च' ( पा ४,४,१४० ) इति यत्प्रत्ययः । हस्तौ त्वदीयौ पृणस्व पूरय । द्युलोकादिभ्यः आनीतैर्बहुभिर्धनैस्त्वदीयौ हस्तौ पूरय । प्रभूतं धनराशिं हस्ताभ्यां गृहाणेत्यर्थः । ततस्तं प्रभूतं धनराशिं दक्षिणात् हस्ताद् आप्रयच्छ आभिमुख्येन अस्मभ्यं देहि । उत अपि च सव्यात् वामहस्ताच्च आ । प्रयच्छेत्यनुषङ्गः । दाण् दाने । 'पाघ्रा' (पा ७,३,७८) इत्यादिना यच्छादेशः ।

इडै॒वास्माँ॑ [6] अनु॑ वस्तां व्र॒तेन॑ [7] यस्याः॑ प॒दे पु॒नते॑ दे॒वयन्तः॑ ।
घृ॒तप॑दी [8] शक्व॑री॒ सोम॑पृ॒ष्ठोप॑ [9] य॒ज्ञम॑स्थित [10] वै॑श्वदे॒वी ॥ १ ॥

इडा॑ । ए॒व । अ॒स्मान् । अनु॑ । व॒स्ता॒म् । व्र॒तेन॑ । यस्याः॑ । प॒दे । पु॒नते॑ । दे॒व॒ऽयन्तः॑ ।
घृ॒त॒ऽप॑दी । शक्व॑री । सोम॑ऽपृष्ठा । उप॑ । य॒ज्ञम् । अ॒स्थि॒त॒ । वै॒श्व॒ऽदे॒वी ॥ १ ॥

---

१. विष्णवुत तै १,२,१३,२. २. बृहतो मै १,२,९. ३. °वुत वाऽन्त° तै. ४. उभा हि हस्ता वसुना (मधुना पै.) पृणस्वा प्रयच्छ मा ५,१९ पै २०,६,८; °वसव्यैरा प्रयच्छ तै. मै. काठ २,१०; °वसव्यैरा° शंपा. RW. ५. इळेवास्मिन् पै २०,१२,६; इडेव वाम् शि ३,११,१. ६. घृतेन आपश्रौ ४,१३,४ शि. ७. घृतवती पै.; वैश्वानरी आपश्रौ. शि. ८. यातुधानोप आपश्रौ. ९. °मस्तु नो माश्रौ १,४,३,२. १०. अस्मान् P[1].

इडा धेनुरूपा। एवशब्दः अवधारणे। अस्मान् सत्कर्मकारिणः व्रतेन कर्मणा अनु वस्ताम् अनुक्रमेणाच्छादयतु। अस्माभिरनुष्ठीयमानं कर्म यथा फलप्रदं भवति तथा करोत्वित्यर्थः। वस आच्छादने। आदादिकः अनुदात्तेत्। यस्या इडायाः पदे पादे देवयन्तः देवकामा यजमानाः पुनते स्वात्मानं पुनन्ति। देवशब्दात् 'सुप आत्मनः क्यच्' (पा ३,१,८)। घृतपदी घृतं पदे यस्याः सा। 'यत्रयत्र न्यक्रामत् ततो घृतमपीड्यत तस्माद् घृतपद्युच्यते' (तै २,६,७,१) इति तैत्तिरीयश्रुतेः। शक्वरी शक्ता फलदाने समर्था। शकेः क्वनिपि 'वनो र च' (पा ४,१,७) ङीब्रेफौ। सोमपृष्ठा सोमः पृष्ठे यस्यास्तादृशी वैश्वदेवी विश्वेषां देवानाम् इयं विश्वदेवात्मिका इडा नाम धेनुः यज्ञम् अस्मदीयम् उपास्तृत सर्वत्र विस्तृतं[2] करोतु। स्तृञ् आच्छादने। छान्दसे लुङि सिचो लुकि रूपम्।

वेदः[1] स्वस्तिर्द्रुघणः[4] स्वस्तिः परशुर्वेदिः[5] परशुर्नः स्वस्ति[6]।

हविष्कृतो यज्ञिया यज्ञकामास्ते देवासो [7]यज्ञमिमं जुषन्ताम्[7] ॥१॥

वेदः। स्वस्तिः। द्रुऽघनः। स्वस्तिः। परशुः[8]। वेदिः। परशुः। नः। स्वस्ति।

हविःऽकृतः। यज्ञियाः। यज्ञऽकामाः। ते। देवासः। यज्ञम्। इमम्। जुषन्ताम्॥ १॥

वेदो नाम दर्भमुष्टिः स्वस्तिः अविनाशहेतुः अस्माकं भवतु। अयं स्वस्तिशब्दो निपातो गुणमात्रे अविनाशे वर्तते। अत्र मतुब्लोपाद् गुणिनि अविनाशहेतौ वर्तते। अत एव सुवुत्पत्तिः। यद्वा सुपूर्वात् अस्तेः क्तिनि भूभावाभावश्छान्दसः। द्रुघण. द्रुः द्रुमो हन्यते अनेनेति द्रुघणः लवित्रादिः। 'करणेऽयोविद्रुषु' (पा ३,३,८२) इति अप् घत्वं च। स च स्वस्तिः अविनाशहेतुर्भवतु। परशुः पार्श्वपङ्क्तिः तृणादिच्छेदनी वेदिः हविरासादनाधारभूता[9] परशुः वृक्षच्छेदनसाधनभूतश्च नः अस्माकं स्वस्तिः[10] अविनाशहेतुर्भवतु। किं च हविष्कृतः हविःसंपादका यज्ञिया यज्ञार्हा यज्ञकामा. यज्ञं कामयमानाः। अथ वा हविष्कृतः षष्ठ्यन्तं पदम्। हविःसंपादकस्य मम यज्ञकामास्ते प्रकृताः वेदद्रुघणादयो देवासः देवात्मका इमम् अस्मदीयं यज्ञं जुषन्ताम् सेवन्ताम्।

अग्नाविष्णू महि तद् वां महित्वं पाथो[11] घृतस्य गुह्यस्य[12] नाम।

दमेदमे [15]सप्त रत्ना दधानौ[13] प्रति वां[15] जिह्वा घृतमा चरण्यात्[15] ॥२॥

अग्नाविष्णू इति। महि। तत्। वाम्। महिऽत्वम्। पाथः। घृतस्य। गुह्यस्य। नाम।

दमेऽदमे। सप्त। रत्ना। दधानौ। प्रति। वाम्। जिह्वा। घृतम्। आ। चरण्यात्॥

---

१. वेद. मपा. द्र. २. विस्तृतां S'. ३. स्फ्यः तै ३,२,४,१. ४. °विघनः तै.; °द्रविणस् पै २०,३०,४. ५. परशु° A,B[b],D R,S[m],Cs,W M.RW.; पर्शु° तै. ६. स्वस्तिः सा. तै. ७. हविरिदं जुषध्वम् पै. ८. परशुः J,Cp. ९. °रासदना° S'. १०. स्वस्ति S'; वेद. मंपा. द्र. ११ वीतं तै १,८,२२,१; पातं पै २०,७,१ [मुको.] श्रौ २,४,२. १२. गुह्यानि तै. मै ४,१०,१ काठ ४,१६ पै. शाश्री. १३. दधानो ऋ. ५, १,५; दधाना तै. मै. काठ. शाश्री. १४. ते मा ८,२४. १५. °मा चरण्येत् तै.; °मुंचरण्यत् मा. मै ४,१०,१ काठ. शांश्रौ ७,२ शाश्री.; °मुंचरण्यात् पै २०,७,२.

हे अग्नाविष्णू । 'देवताद्वन्द्वे च' (पा ६,३,२६) इति पूर्वपदस्य आनङ् । वाम् युवयोः तत् वक्ष्यमाणं प्रसिद्धं वा महित्वम् माहात्म्यं महि महत् महनीयं पूजनीयम् । 'सर्वधातुभ्य इन्' (पाउ ४,११८) इति महेरिन्प्रत्ययः । यतः[1] गुह्यस्य गोपनीयस्य गुहारूपजुहूगतस्य वा नाम आज्यसांनाय्यादिनामवतो[2] घृतस्य क्षरणशीलस्य वस्तुनः पाथः पिबथः । पा पाने । शपो लुक् छान्दसः । कीदृशौ । दमेदमे गृहेगृहे सर्वेषु यज्वगृहेषु सप्त सप्तसंख्याकानि रत्ना रत्नानि रमणीयानि गवाश्वादिसप्तपशुरूपाणि[3] दधानौ धारयन्तौ । किं च वाम् युवयोः प्रति प्रत्येकं जिह्वा रसना घृतम् हूयमानम् आज्यम् आ चरण्यात् आभिमुख्येन प्राप्नोतु । भक्षयत्वित्यर्थः । एतत् महित्वम् इति पूर्वेण संबन्धः । चरण गतौ इति कण्ड्वादौ पठ्यते । तस्माल्लेटि आडागमः ।

अग्ना॑विष्णू म॒हि धाम॑ प्रि॒यं वां॑ वी॒थो घृ॒तस्य॒ गुह्या॑ जुषा॒णौ[4] ।
दमे॑दमे सुष्टु॒त्या वा॑वृधा॒नौ[5] प्रति॑[6] वां जि॒ह्वा घृ॒तमुच्च॑रण्यात्[7] ॥ २ ॥

अग्ना॑विष्णू॒ इति॑ । म॒हि॑ । धाम॑ । प्रि॒यम् । वा॒म् । वी॒थः । घृ॒तस्य॑ । गुह्या॑ । जु॒षा॒णौ ।
दमे॑ऽदमे । सु॒ऽस्तु॒त्या । व॒वृ॒धा॒नौ । प्रति॑ । वा॒म् । जि॒ह्वा । घृ॒तम् । उत् । च॒र॒ण्या॒त् ॥ २ ॥

हे अग्नाविष्णू वाम् युवयोः धाम स्थानं तेजो वा महि महत् महनीयं वा प्रियम् इष्टं सर्वेषां प्रीतिकारि वा भवति । किं च घृतस्य गुह्या गुह्यानि सांनाय्यचरुपुरोडाशादीनि स्वरूपाणि वीथः भक्षयथः । वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । जुषाणौ परस्परं प्रीयमाणौ दमेदमे गृहेगृहे सर्वेषु यजमानगृहेषु सुष्टुत्या शोभनया गुणिनिष्ठगुणाभिधानरूपया स्तुत्या वावृधानौ अत्यर्थं वर्धमानौ । यस्माद् एवं तस्माद् वाम् युवयोः जिह्वा प्रति प्रत्येकं घृतम् उच्चरण्यात् प्राप्नोतु भक्षयतु । चरण्यते रूपसिद्धिरुक्ता ।

स्वा॒क्तं मे॒ द्यावा॑पृथि॒वी स्वा॒क्तं मि॒त्रो अ॑क॒रय॑म् ।
स्वा॒क्तं मे॒ ब्रह्म॒ण॒स्पति॒ः स्वा॒क्तं स॑वि॒ता क॑रत् ॥ १ ॥

सु॒ऽआ॒क्तम् । मे॒ । द्यावा॑पृथि॒वी इति॑ । सु॒ऽआ॒क्तम् । मि॒त्रः । अ॒कः॒ । अ॒यम् ।
सु॒ऽआ॒क्तम् । मे॒ । ब्रह्म॑णः । पति॑ः । सु॒ऽआ॒क्तम् । स॒वि॒ता । क॒र॒त् ॥ १ ॥

द्यावापृथिवी द्यावापृथिव्यौ मे मदीयम् अक्षियुगं यूपं वा स्वाक्तम् अञ्जनेन सुष्ठु आ सर्वतः अक्तम् रञ्जितं कुरुताम् । अयं परिदृश्यमानो मित्रः सूर्यः स्वाक्तम्

---

1. ततः S'. 2. 'सांनायादिनामव S'. 3. 'श्वादिरूपाणिसप्त' S'.
4. जुषाणा तै १,८,२२,१ मै ४,११,२ काठ ४,१६ पै २०,७,२ शाश्रौ २,४,३. 5. सुष्टुतीर् ('तौ मै., 'तिर् शांश्रौ.) तै. मै. शांश्रौ. 6. वावृधाना तै. मै. काठ.; वामियाना शांश्रौ.
7. अनु मै. काठ., उप शांश्रा ७,२ शांश्रौ. 8. 'मुच्चरण्येत् तै.; 'मांचरण्यन् मै. काठ. शांश्रा. शांश्रौ.; 'तंमोचर' पै २०,७,१.

अकः करोतु । सर्वत्र अक्षियुगं यूपो वा कर्म । अकः इति करोतेश्छान्दसे लुङि 'मन्त्रे घस' (पा २,४,८०) इति च्लेर्लुकि गुणे 'हल्ङ्या' (पा ६,१,६८) इ-त्यादिना तिपो लोपे रूपम् । तथा ब्रह्मणः मन्त्रस्य पतिः पालयिता देवः मे म-दीयम् अक्षि यूपं वा स्वाक्षं करोतु । सविता सर्वस्य प्रेरयिता देवोऽपि स्वाक्षं करत् करोतु । करोतेर्लुङि 'कृमृदृरुहिभ्यश्छन्दसि' (पा ३,१,५९) इति च्लेः अङ् । "अ-माङ्योगेऽपि' (पा ६,४,७५) इति अडभावः । पञ्चमलकारे वा अडागमे रूपम् ।

इन्द्रोतिभिर्बहुलाभिर्नो अद्य 'यावच्छ्रेष्ठाभिर्मघवञ्छूर' जिन्व ।
यो नो द्वेष्ट्यधरः सस्पदीष्ट यमु द्विष्मस्तमु प्राणो जहातु ॥ १ ॥

इन्द्र । ऊतिऽभिः । बहुलाभिः । नः । अद्य । यावत्ऽश्रेष्ठाभिः । मघऽवन् । शूर । जिन्व ।
यः । नः । द्वेष्टि । अधरः । सः । पदीष्ट । यम् । ऊँ इति । द्विष्मः । तम् । ऊँ इति । प्राणः । जहातु ॥

हे इन्द्र बहुलाभिः बह्वीभिः ऊतिभिः रक्षाभिः अद्य इदानीं नः अस्मान् पालयेति शेषः । हे मघवन् धनवन् हे शूर शौर्यवन् इन्द्र श्रेष्ठाभिः[२] प्रशस्यत-मामिस्ताभिरूतिभिः यावत्[२] साकल्येन अस्मान् जिन्व प्रीणय । जिवि प्रीणने । इदित्वात् नुम् । यः शत्रुः नः अस्मान् द्वेष्टि हिनस्ति सः अधरः अधोमुखः सन् पदीष्ट पततु । सांहितिकः सकारश्छान्दसः । यं च शत्रुं वयं द्विष्मस्तं तदीयः प्राणो जहातु परित्यजतु । ओहाक् त्यागे । जुहोत्यादित्वात् शपः श्लुः । 'श्लौ' (पा ६,१,१०) इति द्विर्वचनम् । 'तिङ्ङतिङः' (पा ८,१,२८) इति निघातः ।

उप प्रियं पनिप्नतं[३] युवानमाहुतीवृधम् ।
अगन्म बिभ्रतो नमो दीर्घमायुः कृणोतु मे ॥ १ ॥

उप । प्रियम् । पनिप्नतम् । युवानम् । आहुतिऽवृधम् ।
अगन्म । बिभ्रतः । नमः । दीर्घम् । आयुः । कृणोतु । मे ॥ १ ॥

प्रियम् सर्वेषाम् इष्टं प्रीणनकारिणं वा पनिप्नतम् शब्दायमानं स्तूयमानं वा । पण व्यवहारे स्तुतौ च । पन च इत्यस्माद् यङ्लुगन्ताच्छतरि छन्दसी रूपसिद्धिः । युवानम् फलस्य मिश्रयितारं नित्यतरुणं वा आहुतिवृधम् आज्या-द्याहुतिभिर्वर्धमानम् अग्निं नमः नमस्कारम् हविर्लक्षणम् अन्नं वा बिभ्रतः धारयन्तो वयम् उपागन्म उपगच्छेम परिचरेम । गमेश्छान्दसे लुङि 'मन्त्रे घस' (पा २,४,८०) इति च्लेर्लुकि 'मो नो धातोः', 'म्वोश्च' (पा ८,२,६४;६५)

१. यावच्छ्रेष्ठाभिर्मघवञ्छूर ऋ ३,५३,२१; °वञ्छूर A; °वच्छूर R. २. वैतु. मंपा. द्र.
३. परिप्लुतं पै २०,३०,५ [मूको.].

इति नकारे रूपम्। अतः मे मम मदीयस्य वा माणवकस्य दीर्घं शतसंवत्सर-परिमितम् आयुः कृणोतु करोतु।

सं मा[1] सिञ्चन्तु मरुतः सं पूषा[2] सं बृहस्पतिः[3]।

सं मायमग्निः[4] सिञ्चतु प्रजया[5] च धनेन[6] च दीर्घमायुः कृणोतु मे[7] ॥१॥

सम्। मा। सिञ्चन्तु। मरुतः। सम्। पूषा। सम्। बृहस्पतिः।

सम्। मा। अयम्। अग्निः। सिञ्चतु। प्रऽजया। च। धनेन। च। दीर्घम्। आयुः। कृणोतु। मे॥

मरुदादयो देवताः मा मां फलार्थिनं यष्टारं प्रजया च पुत्रादिरूपया धनेन च सं सिञ्चन्तु संयोजयन्तु अभिषिञ्चन्तु वा। परस्परसमुच्चयार्थौ चशब्दौ। प्रतिदेवतं क्रियानुषङ्गद्योतनार्थं सम् इति उपसर्गः। किं च मे मम मदीयस्य माणवकस्य वा दीर्घम् आयुः कृणोतु। अग्निः संनिहितत्वाद् आयुष्करणे संबध्यते। अपि वा मरुदादयः। तदा कृणोत्विति प्रत्येकविवक्षया एकवचनम्।

इति तृतीयेऽनुवाके द्वितीयं सूक्तम्।

विद्वेषिणः पुमपत्यराहित्याय 'अग्ने जातान्' इत्यनया अश्वतरीमूत्रं पाषाणेन संघृष्य अभिमन्त्र्य ओदनेन सह विद्वेषिण्यै प्रयच्छेत्।

तथा तस्मिन्नेव कर्मणि अनया अश्वतरीमूत्रं पाषाणाभ्यां संघृष्य अभिमन्त्र्य तस्या अलंकारान् आलिम्पेत्।

तथा तस्मिन्नेव कर्मणि अनया विद्वेषिण्याः सीमन्तम् ईक्षेत।

विद्वेषिण्या वन्ध्याकरणकर्मणि 'प्रान्यान्' इति तृचेन पूर्वमन्त्रोक्तानि कर्माणि कुर्यात्।

सूत्रितं हि—"'अग्ने जातान्' इति न वीरं जनयेत् 'प्रान्यान्' (अ ७,३६) इति न [8]विजायेतेत्यश्वतरीमूत्रम् अश्ममण्डलाभ्यां संघृष्य भक्तेऽलंकारे[9]। सीमन्तम् अन्वीक्षते" (कौसू ३६,३३;३४) इति।

अभिचारकर्मणि 'अग्ने जातान्' इति द्वाभ्याम् ऋग्भ्याम् अशनिहतवृक्षसमिध आदध्यात्।

अग्निचयने पञ्चम्यां चितौ असपत्नेष्टकाम् उपधीयमानाम् 'अग्ने जातान्' इति द्वाभ्याम् ऋग्भ्याम् ब्रह्मा अनुमन्त्रयेत। "'अग्ने जातान्' इति द्वाभ्यां पञ्चम्यां चितावसपत्नेष्टका निधीयमानाः" (वैताश्री २९,६) इति हि वैतानं सूत्रम्।

---

१. चः काठ ३५,२ आपश्री १४,१८,१.　२. सं पूषा सं धाता समिन्द्रः काठ.; सं वातो पै २०,५६,४; समिन्‌ : तैआ २,१८,१ जैब्रा १,३६२ आपश्री. पाग्र ३,१२,१०.　३. रोहिणीरुत पै.　४. वोऽयं॰ काठ. आपश्री.　५. आयुषा तैआ. जैब्रा. आपश्री.　६. बलेन तैआ. जैब्रा.　७. आयुष्मन्तं कृणोत (करोत तैआ.) मा काठ. तैआ.; ॰कृणोमि ते पै.; सर्वमायुर्दधातु मे आपश्री.　८. विजायेत अश्वतरी S'.　९. भक्तालङ्कारे S'.

विवाहे चतुर्थदिवसे 'अक्ष्यौ[1] नौ' इत्यनया वरवध्वौ अन्योन्यम् अक्षिणी अञ्जाताम्। "'अक्ष्यौ[2] नौ' (अ ७,३७) इति समञ्जाते[3]" (कौसू ७९,२) इति सूत्रम्।

सौभाग्यसंवननकर्मणि 'इदं खनामि' इति पञ्चर्चेन सौवर्चलमूलं संपात्य अभिमन्त्र्य बध्नीयात्।

तथा तत्रैव कर्मणि अनेन पञ्चर्चेन शङ्खपुष्पीपुष्पम् अभिमन्त्र्य स्त्रियाः शिरसि बध्नीयात्।

"'इदं खनामि' (अ ७,३९) इति सौवर्चलम् ओषधिवत् शङ्खप्रसूनं शिरस्युपचृत्य[4] ग्रामं प्रविशति" (कौसू ३६,१२) इति सूत्रम्।

अग्ने॑ जा॒तान् प्र णु॑दा[5] मे॒[6] स॒पत्ना॒न् [7]प्रत्यजा॑तान् जातवेदो[8] नुदस्व[9]।
अ॒ध॒स्प॒दं कृ॑णुष्व॒[9] ये पृ॑त॒न्यवो॒ऽना॑गस॒स्ते[10] व॒यमदि॑तये स्याम ॥ १ ॥

अग्ने॑। जा॒तान्। प्र। नु॒द॒। मे॒। स॒ऽपत्ना॑न्। प्रति॑। अजा॑तान्। जा॒त॒ऽवे॒दः। नु॒द॒स्व॒।
अ॒धः॒ऽप॒दम्। कृ॒णु॒ष्व॒। ये। पृ॒त॒न्यवः॑। अना॑गसः। ते[11]। व॒यम्। अदि॑तये। स्या॒म॒ ॥ १ ॥

हे अग्ने मे मदीयान् जातान् निष्पन्नान् सपत्नान् शत्रून् प्र णुद प्रकर्षेण प्रेरय अतिदूरम् अपसारय। तथा हे जातवेदः जातानां वेदितः जातप्रज्ञ वा अजातान् अनुत्पन्नान् उत्पत्स्यमानान् शत्रुपुत्रान् प्रति नुदस्व विनाशय। किं च ये शत्रवः पृतन्यवः संग्रामेच्छवः। पृतनाशब्दाद् इच्छायां क्यचि 'कव्यध्वर-पृतनस्यर्चि लोपः' (पा ७,४,३९) इति अन्त्यलोपः। तान् अस्माभिः सह योद्धुम् इच्छन् सपत्नान् अधस्पदम् पादस्याधस्ताद् देशे कृणुष्व कुरु। मदीयपादाधःप्रदेशवर्तिनः कुरु। एवं शत्रुबाधा प्रार्थिता। अथ तद्दोषपरिहारश्चतुर्थपादेन प्रार्थ्यते — ते तादृशाः शत्रुपीडाकाङ्क्षिणो वयम्। पुत्रादिसाहित्यं वक्तुं बहुवचनम्। अदितये अदितिः अखण्डनीया पृथिवी अदीना वा देवमाता तस्यै। षष्ठ्यर्थे चतुर्थी। अदित्याः प्रसादाद् अनागसः स्याम पापरहिता भवेम। अयम् अर्थः — भूमिर्हि पुण्यकृतः स्वस्योपरि चिरकालम् अवस्थापयति पापकृतस्तिरस्करोति। अतः अत्र शत्रुपीडाकाङ्क्षिणोऽपि अस्मान् तत्पापपरिहारेण[12] भूमिश्चिरकालम् अवस्थापयत्विति प्रार्थ्यते। शत्रुहननार्थम् अग्नेः प्रार्थनाद् वा तन्माता अदितिः पापरहितान् अस्मान् करोत्विति आशास्यते। यद्वा अदितये अखण्डितत्वाय अदीनत्वाय अनभिशस्तये वा अनागसः स्यामेति।

---

१. वत्तु. मंचा. द.  २. अक्षी शंपा  ३. समाञ्जाते Bl.  ४. तु. Bl.; वत्तु. शंपा. शिरस्युपचृत्य, S' शिरस्यपिहत्य.  ५. णुद पै २०,८,८.  ६. नः मा १५,१ का १६,१,१ तै ४,३,१२,१ मै २,८,७ काठ १७,६ तैआ २,५,२.  ७. °जातां जात° D,RW.; °जाताञ्जात° का. तै. काठ. तैआ.  ८. नुद मा.; ष्मणीहि पै.  ९. कृणुता मा १५,५१; कृणुतं तै ४,७,१३,१.  १०. तु. J, मा.; वत्तु. A,B,B[b],D,K,K[m],R,S[m],P,P[2], Cp,RW. °नागमस्वे; Cs नागमुस्ते >नागमस्ते.  ११. ते P,P[1].  १२. धर्मोपपरि° S'.

[1]प्रान्यान्त्सपत्नान्त्सहसा [2]सहस्व[3] [2]प्रत्यजातान् जातवेदो[2] नुदस्व[3] ।
इदं राष्ट्रं पिंपृहि[4] सौभगाय [5]विश्व एनमनु मदन्तु देवाः[5] ॥ १ ॥

प्र । अन्यान् । सऽपत्नान् । सहसा । सहस्व[6] । प्रति । अजातान् । जातऽवेदः । नुदस्व ।
इदम् । राष्ट्रम् । पिपृहि[7] । सौभगाय । विश्वे । एनम् । अनु । मदन्तु[8] । देवाः ॥१॥

हे जातवेदः अन्यान् अस्मत्प्रातिकूल्यकारित्वेन विभिन्नान् सपत्नान् सहसा बलेन शीघ्रं वा प्र सहस्व प्रकर्षेण अभिभव । प्रत्यजातान् इति पादो व्याख्यातः । किं च इदम् अनुभूयमानं स्वनिवासाश्रयं राष्ट्रम् अस्मदीयं जनपदं सौभगाय सौभाग्याय पिपृहि पूरय । यस्मिन् देशे परोपद्रवकारी वर्तते स देशः सस्यादिना अभिवृद्धो न भवतीति प्रसिद्धिः । अतः अत्र राज्यस्य सौभाग्यपूर्तिः प्रार्थ्यते । किं च विश्वे सर्वे देवाः एनं शत्रुहननकर्मणः प्रयोक्तारम् अनु मदन्तु अनुमोदन्ताम् ।

इमा यास्ते शतं हिराः सहस्रं धमनीरुत ।
तासां ते [9]सर्वासामहमश्मना बिलमप्यधाम् ॥ २ ॥

इमाः । याः । ते । शतम् । हिराः । सहस्रम् । धमनीः । उत ।
तासाम् । ते । सर्वासाम् । अहम् । अश्मना । बिलम् । अपि । अधाम् ॥ २ ॥

हे विद्वेषिणि स्त्रि ते त्वदीया या इमाः शतम् शतसंख्याका हिराः नाड्यः गर्भधारणार्थम् अन्तरवस्थिताः सूक्ष्मा या नाड्यः सन्ति उत अपि च सहस्रम् सहस्रसंख्याका धमनीः धमन्यः गर्भाशयस्य अवष्टम्भिका बाह्याः स्थूला या नाड्यः सन्ति ते त्वदीयानां तासां सर्वासां नाडीनां बिलम् मुखम् अश्मना पाषाणेन अहम् वन्ध्याकरणकर्मप्रयोक्ता अप्यधाम् अपिहितवान् आच्छादितवान् अस्मि । यथा गर्भधारणक्षमा न भवन्ति तथा अकार्षम् । छान्दसो वा लुङ् । अपिदधामि ।

परं योनेरवरं ते कृणोमि मा त्वा प्रजाभि भून्मोत सूनुः[10] ।
[11]अस्वं१ त्वाप्रजसं कृणोम्यश्मानं ते अपिधानं कृणोमि ॥ ३ ॥

---

१. सहमा ज्ञातान्प्रणुदा नः सपत्नान् मा १५,२ का १६,१,२ तै ४,१,१२,१ मै २,८,७ काठ १७,६ तैआ २,५,२. † स्वरः ?. २. °जानां जात° K^m,RW.; °जाताञ्जात° मा. तै काठ. तैआ. ३. नुद का. ४. स्वरः ?; पिंपृहि > पिंशृहि Cs. ५. अनु त्वा देवा वसवो जुषन्ताम् पै २०,८,९. ६. सहस्व P,Cp. ७. पिपृहि Cp. ८. मदुन्ति P. ९. सर्वासां साकमश्मना पै २०,१०,६. १०. सूः A,B^h,D,J,Cs,WM,RW. प्रभृ., स्वरश्च; वेनुः K,K^m,R,S^m,V,Bp^s,D^s, तेरा. सा. सूनुः. ११. अस्वं > अप्स्व° B.

परम् । योनेः । अवरम् । ते । कृणोमि । मा । त्वा । प्रऽजा । अभि । भूत् । मा । उत । सूनुः[1] ।
अस्वम् । त्वा । अप्रजसम् । कृणोमि । अश्मानम् । ते । अपिऽधानम् । कृणोमि ॥ ३ ॥

हे प्रतिकूले नारि ते त्वदीयं योनेः परं पुत्रजननक्षमत्वेन उत्कृष्टं स्थानं गर्भाशयं योनेः परस्तात् प्रदेशे वर्तमानं वा स्थानम् अवरं कृणोमि निकृष्टं गर्भं धारयितुम् अक्षमं करोमि । योनिप्रदेशात् नीचीनं बहिर्भूतं वा करोमि। यत एवम् अतः प्रजा स्त्र्यपत्यरूपा त्वा त्वां मा अभि भूत् सर्वतो मा प्राप्नोतु। भवतेः प्राप्त्यर्थात् लुङि रूपम्। उत अपि च [2]सूनुः पुत्रो मा । अभि भूद् इत्यनुषङ्गः । एतदेवाह — त्वा त्वाम् अप्रजसम् न विद्यते प्रजा स्त्रीपुंसापत्य-रूपा यस्यास्ताम् । नञ्पूर्वात् प्रजाशब्दात् 'नित्यमसिच्प्रजामेधयोः' (पा ५,४,१२२) इति असिच्प्रत्ययः समासान्तः । प्रजारहिताम् [2]अश्वाम् अश्वतरीमेव कृणोमि करोमि। यथा अश्वतरी स्त्रीव्यञ्जनयुक्तापि प्रजारहिता तथा त्वां करोमीत्यर्थः। किं च ते तव संबन्धिनः । गर्भधारणस्थानस्येति शेषः । अश्मानम् पाषाणम् अपिधानम् संवरणम् आच्छादनं कृणोमि करोमि ।

अक्ष्यौ नौ मधुसंकाशे अनीकं नौ समञ्जनम् ।
अन्तः कृणुष्व मां हृदि मन इन्नौ सहासति ॥ १ ॥

अक्ष्यौ । नौ । मधुसंकाशे इति मधुऽसंकाशे । अनीकम् । नौ । समऽअञ्जनम् ।
अन्तः । कृणुष्व । माम् । हृदि । मनः । इत् । नौ । सह । असति ॥ १ ॥

[3]नौ तव[3] च मम च । 'त्यदादीनां मिथो यद्यत्परं तत्तच्छिष्यते[4]' (पाका १,२,७२) इति अस्मद् एकशेषे षष्ठीद्विवचनस्य नौ इत्यादेशः । आवयोर्दम्पत्योः [2]अक्ष्यौ अक्षिणी मधुसंकाशे मधुसदृशे । भवेताम् इति शेषः । यथा मधु मधुरं स्निग्धं च एवम् आवयोः अक्षिणी परस्परम् अनुरक्ते मधुरप्रेक्षणे अत्यन्तस्निग्धे च भवेताम् इत्यर्थः। तथा नौ आवयोः अनीकम् । अनीकशब्दः अग्रवाची। लोचनाग्रं समञ्जनम् [5]समेता-ञ्जनं भवतु । किं च माम् । जाया पतिं प्रति पतिर्जायां प्रति स्वात्मानं माम् इति निर्दिशति । हृदि हृदये अन्तः कृणुष्व । यथा तव अहं हृदयंगमा प्रिया भवामि तथा कुर्वित्यर्थः । नौ आवयोः मन इत्। इच्छब्दः अप्यर्थे । 'मनोऽपि सह[6] असति समानम् एककार्यकारि भवतु। अस्तेर्लेटि अडागमः ।

अभि त्वा मनुजातेन दधामि मम वाससा ।
यथाऽसो मम केवलो नान्यासां कीर्तयाश्चन ॥ १ ॥

---

१. तु. मंश.; वैतु. शंपा. सूनुः. २. वैतु. मंपा. द्र. ३. नौ त्वं तव S.
४. 'त्यदादीनि सर्वैर्नित्यम्' शंपा. ५. समता° S' ६. मनोह S''

अभि । त्वा । मनुऽजातेन । दधामि । मम । वाससा ।
यथा । असः । मम । केवलः । न । अन्यासाम् । कीर्तयाः । चन ॥ १ ॥

स्वपतिं प्रति स्त्रिया वाक्यम् एतत् । हे पते त्वा त्वां मनुजातेन मनुना मन्त्रेण जातेन मन्त्रपूर्वकं परिहितेन मनोर्वा जातेन निष्पन्नेन मम वाससा वस्त्रेण अभि दधामि । अभिपूर्वो दधातिर्बन्धने वर्तते । बध्नामि । किमर्थं बन्धनम् तद् आह — यथा येन प्रकारेण मम केवलः असाधारणः असः भवेः । चनेति निपातसमुदायः चार्थे । यथा च अन्यासां नारीणाम् । नामधेयम् इति शेषः । न कीर्तयाः न कीर्तयेः नोच्चरेः । तथा बध्नामीति शेषः । असः इति । अस्तेर्लेटि 'इतश्च लोपः परस्मैपदेषु' (पा ३,४,९७) इति इकारलोपः । अडागमः । कीर्तया इति । कृत संशब्दने । णिचि 'उपधायाश्च' (पा ७,१,१०१) इति इत्त्वम् । तदन्तात् लेटि आडागमः ।

इदं खनामि भेषजं मांपश्यमभिरोरुदम्[1] ।
परायतो निवर्तनमायतः प्रतिनन्दनम् ॥ १ ॥

इदम् । खनामि । भेषजम् । माम्ऽपश्यम् । अभिऽरोरुदम् ।
पराऽयतः । निऽवर्तनम् । आऽयतः । प्रतिऽनन्दनम् ॥ १ ॥

इदं वशीकरणकारि भेषजम् सौवर्चलाख्यं खनामि उद्धरामि । [2]औषधं विशिनष्टि– मांपश्यम् । पश्यतीति पश्यः । 'पाघ्राध्माधेट्दृशः शः' (पा ३,१,१३७) इति शः । शित्वात् 'पाघ्रा' (पा ७,३,७८) इत्यादिना पश्यादेशः । 'तत्पुरुषे कृति बहुलम्' (पा ६,३,१४) इत्यत्र बहुलग्रहणात् मांपश्यम् इत्यत्र द्वितीयाया अलुक्[3] । मामेव नारीं पश्यत् ममैवानुकूलम् । यद्वा पश्यतिरन्तर्णीतण्यर्थः । मामेव असाधारण्येन पत्ये प्रदर्शयत् पतिवशीकारकम् अभिरोरुदम् पत्युः अन्यनारीसंसर्गम् अभितो निरुन्धत् । रुधिर् आवरणे । यङन्तात् पचाद्यच् । 'यङोऽचि च' (पा २,४,७४) इति यङो लुक् । 'न धातुलोप आर्धधातुके' (पा १,१,४) इति लघूपधगुणनिषेधः । धकारस्य दकारश्छान्दसः । परायतः स्वस्मात् पराङ्मुखं गच्छतः पत्युः निवर्तनम् निषेधकं पुनरावर्तनकारणम् आयतः मां प्रति आगच्छतः पत्युः प्रतिनन्दनम् आनन्दकारि । एवंगुणविशिष्टं भेषजं खनामीति संबन्धः । परायत [आयतः] इति । परापूर्वाद् आङ्पूर्वाच्च इण् गतौ इत्यस्मात् शतरि 'इणो यण्' (पा ६,४,८१) इति यणादेशः । निवर्तनं प्रतिनन्दनम् इत्यत्र करणे ल्युट् ।

---

१. 'मभिनाकजम्' पै २०,३०,७. २. औष° S'. ३. शप्रत्यये द्वितीया न प्राप्नोति इति विन्त्यमिदम्, दिर्ट वेर १,५७३ a,b ठ.

येना निचक्र आसुरीन्द्रं 'देवेभ्यस्परि' ।
तेना नि कुर्वे त्वामहं यथा तेऽसानि सुप्रिया ॥ २ ॥

येन । निऽचक्रे । आसुरी । इन्द्रम् । देवेभ्यः । परि ।
तेन । नि । कुर्वे । त्वाम् । अहम् । यथा । ते । असानि । सुऽप्रिया ॥ २ ॥

आसुरी असुरस्य माया । 'असुरस्य स्वम्', 'मायायामण्' ( पा ४,४,१२३;१२४ ) इति अण्प्रत्ययः । देवेभ्यः परि । 'अपपरी वर्जने' (पा १,४,८८) इति परिः कर्मप्रवचनीयः । 'पञ्चम्यपाङ्परिभिः' (पा २,३,१०) इति पञ्चमी । देवान् वर्जयित्वा इन्द्रं येन भेषजेन निचक्रे युद्धे स्वाधीनं कृतवती । यद्वा असुरः असुमान् । रो मत्वर्थीयः । बलवान् पुलोमाख्यः । तस्येयम् आसुरी शची । शेषं पूर्ववत् । तेन भेषजेन अहम् हे पते त्वा नि कुर्वे स्वाधीनं कुर्वे । यथा येन प्रकारेण ते तव सुप्रिया अत्यन्तं प्रिया असाधारण्येन प्रीतिजननी असानि भवानि । तथा नि कुर्वे इति संबन्धः । अस्तेर्लोटि 'आडुत्तमस्य पिच्च' ( पा ३,४,९२ ) इति आडागमः ।

प्रतीची सोमंमसि प्रतीच्युत[2] सूर्यम् ।
प्रतीची विश्वान्देवान् तां[3] त्वाऽच्छावंदामसि ॥ ३ ॥

प्रतीची । सोमम् । असि । प्रतीची । उत । सूर्यम् ।
प्रतीची । विश्वान् । देवान् । ताम् । त्वा । अच्छऽआवदामसि ॥ ३ ॥

अनया प्रकृता शङ्खपुष्प्याख्या ओषधिः स्तूयते । हे ओषधे सोमम् प्रतीची वशीकरणार्थं प्रत्यगञ्चना असि भवसि । उत अपि च सूर्यम् सुष्ठु प्रेरकम् आदित्यं प्रतीची भवसि । अहोरात्राभिमानिनोः सूर्याचन्द्रमसोः अभिमुखा भवसीत्यर्थः । किं बहुना विश्वान् देवान् प्रतीची असि । प्रतिपूर्वात् अञ्चतेः क्विन् । 'अञ्चतेश्चोपसंख्यानम्' ( पावा ४,१,६ ) इति ङीप् । 'अचः' ( पा ६,४,१३८ ) इति अकारलोपः । 'चौ' ( पा ६,३,१३८ ) इति पूर्वपदस्य दीर्घः । यत एवम् अतः तां सर्वदेववशीकरणसमर्थां त्वा त्वाम् अच्छावदामसि पतिवशीकरणाय अभिमुखं स्तुमः । 'अच्छ गत्यर्थवदेषु' ( पा १,४,६९ ) इति अच्छशब्दो गतिसंज्ञकः ।

अहं वंदामि[4] नेत्[5] त्वं सभायामह त्वं वद[6] ।
ममेदसुस्त्वं केवलो नान्यासां कीर्तयांश्चन ॥४॥

---

१. रजी? केरळं पतिम् पै २०,३०,७. २. प्रतीच्यनु पै ३,२९,१. ३. तथा पै.
४. वेदानि D¹, पै ३,२९,५. ५. माह पै. ६. वेद LRW--

अहम् । वदामि[1] । न । इत् । त्वम् । सभायाम् । अह । त्वम् । वद ।
मम । इत् । असः । त्वम् । केवलः । न । अन्यासाम् । कीर्तयाः । चन ॥ ४ ॥

पतिवशीकरणाय ओषधिं संप्रार्थ्य नारी पुनः स्वपतिं ब्रूते — हे पते अहं वदामि त्वं नेत् नैव वदेः । एवं पत्युः सर्वत्र वदननिषेधे प्राप्ते स्थानान्तरे तस्य वाग्व्यापारं दर्शयति । अहशब्दो विनिग्रहार्थीयः । त्वं तु सभाया विद्वत्समाजे वद । अयम् अर्थः—हे पते यदा मत्समीपम् आगच्छसि तदा अहमेव वदामि त्वं तु मदुक्तमेव अनुवद कदापि प्रतिकूलं मा वादीः । मद्यतिरिक्तस्थानेऽपि सभायामेव यथेच्छं वद मान्यत्रेति । एतद् एव प्रकारान्तरेणाह — यथा हे पते त्वम् । इत् अवधारणे । मम एव केवलः असाधारणः असः भवेः । अन्यासां नारीणां नामधेयमपि न कीर्तयाः न कीर्तयेः ।

यदि वासि तिरोजनं[2] यदि वा नद्यस्तिरः ।
इयं ह मह्यं [3]त्वामोषधिर्बद्ध्वेव न्यानयत् ॥ ५ ॥

यदि । वा । असि । तिरःऽजनम् । यदि । वा । नद्यः[4] । तिरः ।
इयम् । ह । मह्यम् । त्वाम् । ओषधिः । बद्ध्वाऽइव । निऽआनयत् ॥ ५ ॥

हे पते यदि तिरोचनम्[5] । क्रियाविशेषणम् एतत् । तिरः तिरोभूतम् अचनं गमनं यस्मिन्[6] कर्मणि तत् तिरोचनम् । असि । तिरोभूतगतिः मच्चक्षुर्विषयो न भवेः इत्यर्थः । वाशब्दो विकल्पे । यदि वा नद्यः निम्नगाः तिरः आवयोर्व्यवधायिका भवेयुः । ह । तथापीत्यर्थः । इयं प्रस्तुता ओषधिः शङ्खपुष्प्याख्या मह्यं पतिप्रीतिकामिन्यै त्वां पतिं बद्ध्वेव निगृह्येव न्यानयत् नितराम् अभिमुखं नयतु । नयतेर्लेटि अडागमः ।

इति तृतीयं सूक्तम् ।

इति सप्तमे काण्डे तृतीयोऽनुवाकः ।

चतुर्थेऽनुवाके त्रीणि सूक्तानि । तत्र 'दिव्यं सुपर्णम्' इति आद्यसूक्ते आद्ययर्चा पुष्टिकर्मणि वृषभवपया इन्द्रं यजेत । "'दिव्यं सुपर्णम्' (अ ७,४०) इत्यृषभदण्डिनो वपयेन्द्रं यजेत" (कौसू २४,९ ) इत्यादि सूत्रम् ।

अन्वारम्भणीयेष्टौ सारस्वतं पुरोडाशं 'यस्य व्रतम्' इति अनुमन्त्रयेत । "सरस्वत्यै च चरुं सरस्वते द्वादशकपालं 'सरस्वति व्रतेषु' (अ ७,७० ), 'यस्य व्रतम्' ( अ ७,४१ ) इति" ( वैताश्रौ ८,२ ) इति वैतानं सूत्रम् ।

---

१. वदानि P,P², J. २. तिरोचनम् सा. पै ३,२९,६. ३. त्वा पै. ४. नद्यः P,J. ५. वैद्. मंपा. द्र. ६. एवं स्वरो न सिध्यति.

नवगृहकरणार्थं भूशुद्ध्यै 'अति धन्वानि' इति द्वाभ्याम् ऋग्भ्यां गृहनिर्माणस्थाने श्येनदेवताकं चरुं जुहुयात्। सूत्रितं हि—" 'अति धन्वानि' (अ ७,४२) 'इत्यवसाननिवेशनानुचरणानि निनयनेज्या[1]'" ( कौसू ४३,३ ) इति।

अग्निष्टोमे हविर्धाने पुरोडाशपिण्डावापानन्तरम् उप्तान् पिण्डान् 'श्येनो नृचक्षाः' इति अनुमन्त्रयेत। सूत्रितं वैताने—'हविर्धाने[2] यथाचमसं दक्षिणतः' इति प्रक्रम्य " 'एतं सधस्थाः' (अ ६,१२३), 'श्येनो नृचक्षाः' (अ ७,४२,२) इत्यनुमन्त्रयते" ( वैताश्रौ २२,२२;२३ ) इति।

सर्वव्याधिभैषज्यार्थं व्याधितशरीरं मौञ्जैः पाशैः पर्वसु बद्ध्वा 'सोमारुद्रा' इति द्वाभ्यां शरपिञ्जूलीभिः सह उदकघटं संपात्य अभिमन्त्र्य व्याधितम् आप्लावयेत् अवसिञ्चेद् वा। तद् उक्तं संहिताविधौ—'अमाविष्णू' (अ ७,३०), 'सोमारुद्रा' ( अ ७,४३ ) इति प्रक्रम्य 'मौञ्जैः पर्वसु बद्ध्वा पिञ्जूलीभिराप्लावयति। अवसिञ्चति' ( कौसू ३२,३;४ ) इति।

तथा सर्वसंपत्कामः अनेन द्व्यृचेन सोमारुद्रौ यजेत उपतिष्ठेत वा।

मिथ्याभिशस्तस्य लोकनिन्दानिवृत्त्यर्थं 'शिवास्ते' (अ ७,४४), इत्यनया ओदनं मन्थं वा अभिमन्त्र्य दद्यात्।

तथा अनयैव द्रुघणमणिं[3] तदाकृतिं पलाशायोलोहहिरण्यानाम् अन्यतमस्य मणिं वा संपात्य अभिमन्त्र्य बध्नीयात्।

सूत्रितं हि—" 'उतामृतासुः' ( अ ५,१,७ ) 'शिवास्ते' इत्यभ्याख्याताय[4] प्रयच्छति। द्रुघणशिरो रज्ज्वा[5] बध्नाति। प्रतिरूपं पलाशायोलोहहिरण्यानाम्" (कौसू ४६,१-३ ) इति।

सांमनस्यकर्मणि 'उभा जिग्यथुः' इत्यनया हस्त्यादियानं संपात्य अभिमन्त्र्य सांमनस्यकामान् आरोप्य सूत्रोक्तप्रकारेण स्वगृहम् आगत्य ओदनं मन्थं वा 'संपात्य अभिमन्त्र्य[6] सह भोजयेत्। सूत्रितं हि—" 'उभा जिग्यथुः'(अ ७,४५) इत्यार्द्रपाणिभ्यां सांमनस्यम्। यानेन "प्रत्यङ्गो ग्रामान्[7] प्रतिपाद्य प्रयच्छति" ( कौसू ४२,६;७ ) इति।

तथा उक्थ्ये अच्छावाकयाज्याहोमानुमन्त्रणम् अनया ब्रह्मा कुर्यात्। " एतेषां याज्याहोमान् 'इन्द्रावरुणा सुतपौ' ( अ ७,६० ), 'बृहस्पतिर्न.' ( अ ७,५३ ), 'उभा जिग्यथुः' ( अ ७,४५ ) इति" ( वैताश्रौ २५,२ ) इति हि वैतान सूत्रम्।

ईर्ष्याविनाशार्थं 'जनाद् विश्वजनीनात्' इत्येनाम् ईर्ष्यालुं पश्यन् जपेत्।

तथा तत्रैव कर्मणि अनया सक्तुमन्थम् अभिमन्त्र्य ईर्ष्यावते दद्यात्।

---

१. इत्यावसनानिवेशनानुचरणानिःश्येनेज्येति S'; °वसाननिवेशनानुचरणानिनय° पैता.
२. 'धाने RG. ३. द्रघण° S'. ४. इत्याभ्या° S'. ५. नास्ति पैता.
६. संपर्यामिम° S'. ७. प्रत्यंपाद् ग्रामान् S'; प्रत्यङ्गो ग्रामान् Bl.

तथा तस्मिन्नेव कर्मणि ईर्ष्यावन्तं स्पृशन् एनाम् ऋचं जपेत्।

सूत्रितं हि — " 'ईर्ष्याया ध्राजिम्' (अ ६,१८), 'जनाद् विश्वजनीनात्' (अ ७,४६), 'त्वाष्ट्रेणाहम्' (अ ७,७८,३) इति [1]प्रतिजापप्रदानाभिमर्शनानि" (कौसू ३६,२५) इति।

दि॒व्यं सु॑प॒र्णं[2] प॑य॒सं[3] बृ॒हन्त॑म॒पां[4] गर्भं॑[5] वृ॑ष॒भमोष॑धीनाम्[6]।
अ॒भी॒प॒तो वृ॒ष्ट्या[7] त॒र्पय॑न्त॒मा नो॑ गो॒ष्ठे[8] र॑यि॒ष्ठां[9] स्था॑पयाति[10] ॥ १ ॥

दि॒व्यम्। सु॒ऽप॒र्णम्। प॒य॒सम्। बृ॒हन्त॑म्। अ॒पाम्। गर्भ॑म्। वृ॒ष॒भम्। ओष॑धीनाम्।
अ॒भी॒पतः। वृ॒ष्ट्या। त॒र्पय॑न्तम्। आ। नः। गो॒ऽस्थे। र॒यि॒ऽस्थाम्। स्था॒प॒या॒ति॒ ॥ १ ॥

दिव्यम् दिवम् अर्हतीति दिव्यः। 'छन्दसि च' (पा ५,१,६७) इति यः। तं सुपर्णम् शोभनपतनं पयसम् पयस्वन्तम्। पयःशब्दात् मतुपो लुक्[11]। उदकवन्तं बृहन्तम् महान्तम् अपां गर्भम् मध्यभूतम् ओषधीनां वृषभम् वर्षितारं वृद्धिकरम्। उपलक्षणम् एतत्। सर्वेषामपि वृषभम्। यद्वा अपां वृषभम् ओषधीनां गर्भम्। अभीपतः। अभिगताः सर्वतः संगता आपोऽस्मिन्निति। 'ऋक्पूरब्धूः०' (पा ५,४,७४) इति अः[12] समासान्तः। 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (पा ६,३,९७)। आद्यादित्वात् तसिः। सर्वतो वृष्ट्या तर्पयन्तम्। विश्वम् इति शेषः। यद्वा। पत्लृ गतौ। क्विप्। छान्दसम् उपसर्गस्य दीर्घत्वम्। अभिपतनशीलान् वृष्टिकामान् सर्वप्राणिनो वृष्ट्या तर्पयन्तं रयिष्ठाम् धनवति प्रदेशे तिष्ठन्तम् एवंगुणकं सरस्वन्तं देवं नः अस्मदीये गोष्ठे गोनिवासस्थाने आ स्थापयाति आस्थापयतु। इन्द्र इति विनियोगाद् अवगम्यते। सरस्वांस्तु मन्त्रान्तरप्रसिद्ध्या। आस्थापनकर्तृत्वेन इन्द्रस्यैव प्राधान्यात् तस्यैव यष्टव्यत्वम्।

यस्य॑ व्र॒तं[13] प॒शवो॒ यन्ति॒[14] सर्वे॒ यस्य॑ व्र॒त[15] उ॑प॒तिष्ठ॑न्त॒ आपः॑।
यस्य॑ व्र॒ते [16]पु॑ष्ट॒पति॒र्निवि॑ष्ट॒स्तं सर॑स्वन्त॒मव॑से हवामहे[17] ॥ १ ॥

यस्य॑। व्र॒तम्। प॒शवः॑। यन्ति॑। सर्वे॑। यस्य॑। व्र॒ते। उ॒प॒ऽतिष्ठ॑न्ते। आपः॑।
यस्य॑। व्र॒ते। पु॒ष्ट॒ऽपतिः॑। निऽवि॑ष्टः। तम्। सर॑स्वन्तम्। अव॑से। ह॒वा॒म॒हे॒ ॥ १ ॥

---

१. प्रतिजापः° Bl. २. समुद्रं पै २०,९,८. ३. वायसं ऋ १,१६४,५२ काठ १९,१४; वयसा मा १८,५१; वयसं तै ३,१,११,३. ४. रुहन्तम्? अपां पै. ५. पातिं काठ. ६. दर्शतमो° ऋ.; ऋषभमो° पै. ७. वृष्टिभिः ऋ.; वृष्ण्या काठ.; रय्या पै. ८. °यन्तं सरस्वन्तम् ऋ. काठ, पै.; °यन्तं तं सरस्वन्तम् तै. ९. अवसे ऋ. तै. काठ. १०. जोहवीमि ऋ. काठ; हुवेम तै.; सादयेह पै. ११. एवं स्वरो न सिध्यति. १२. अप् शंपा. १३. व्रते काठ. पै २०,९,६ खि २,१५,१. १४. यन्तु पै. १५. व्रतम् तै. मै ४,१०,१ काठ. पै. खि. खिसा १६,१ आश्री ३,८,१ शांश्री ६,११,८. १६. पुष्टिपति° तै. मै. पै. खि. खिसा. आश्री. शांश्री. १७. हुवेम तै. मै. पै. खिसा. आश्री. शांश्री.; जोहवीमि काठ. खि.

यस्य सरस्वतो व्रतम् कर्म सर्वेऽपि पशवो यन्ति अनुगच्छन्ति । तन्निमित्तत्वात् पुष्टेः । यस्य च व्रते कर्मणि आपः उपतिष्ठन्ते परस्परं संगच्छन्ते । तन्निमित्तत्वाद् वृष्टेः । 'अकर्मकाच्च' (पा १,३,२६) इति आत्मनेपदम् । यस्य च व्रते कर्मणि पुष्टिपतिः[1] तत्तत्पोषणपतिर्निविष्टः । तदधीनत्वाद् वृष्टेः पुष्टेश्च । तं तादृशं सरस्वन्तम् एतन्नामानं देवम् अवसे रक्षणाय तृप्त्यर्थं वा हवामहे आह्वयामः ।

आ प्रत्यञ्चं दाशुषे दाश्वंसं[2] सरस्वन्तं पुष्टपतिं[3] रयिष्ठाम्[4] ।
रायस्पोषं श्रवस्युं वसाना[5] इह हुवेम सदनं रयीणाम् ॥ २ ॥ ॥

आ । प्रत्यञ्चम् । दाशुषे । दाश्वंसम्[6] । सरस्वन्तम् । पुष्टऽपतिम् । रयिऽस्थाम् ।
रायः । पोषम् । श्रवस्युम् । वसानाः । इह । हुवेम । सदनम् । रयीणाम् ॥ २ ॥

प्रत्यञ्चम् प्रत्यगञ्चनं हविर्दत्तवतः प्रीणयितुम् अभिमुखं गच्छन्तं दाशुषे हविर्दत्तवते यजमानाय दाश्वांसम्[6] इष्टफलं प्रयच्छन्तम् । 'दाश्वान्साह्वान्' (पा ६,१,१२) इति क्वसौ निपातितः । पुष्टपतिम् पोषणपतिं रयिष्ठाम् धनस्थाने तिष्ठन्तं रायस्पोषम् रायो धनस्य पोषं पोषकम् । पुष पुष्टौ । पचाद्यच् । श्रवस्युम् । 'श्रव इत्यन्ननाम । श्रूयते इति' (नि १०,३) इति यास्कः । तद् यजमानानां दातुम् इच्छन्तं रयीणाम् धनानां सदनम् नित्यनिवासस्थानम् । एवंविधं सरस्वन्तं देवं वसानाः । विवासतेः परिचरणकर्मत्वाद् अत्र केवलोऽपि वसतिः परिचरणार्थः । हविरादिना परिचरन्तः । वस्तेरादादिकात् हेत्वर्थे शानच् । परिचरणाद्धेतोः । इह अस्मिन् कर्मणि आ हुवेम आह्वयेम । ह्वयतेः 'लिङ्याशिष्यङ्' (पा ३,१,८६) । 'बहुलं छन्दसि' (पा ६,१,३४) इति संप्रसारणम् ।

अति धन्वान्यत्यपस्ततर्द श्येनो नृचक्षा अवसानदर्शः ।
तरन् विश्वान्यवरा[7] रजांसीन्द्रेण सख्या शिव आ जगम्यात्[8] ॥१॥

अति । धन्वानि । अति । अपः । ततर्द । श्येनः । नृऽचक्षाः । अवसानऽदर्शः ।
तरन् । विश्वानि । अवरा । रजांसि । इन्द्रेण । सख्या । शिवः । आ । जगम्यात् ॥ १ ॥

नृचक्षाः नृणां द्रष्टा सर्वकर्मसाक्षी सर्वैः प्राणिभिर्द्रष्टव्यो वा । तदेवाह— अवसानदर्शः अवसाने अन्तभूते द्युलोके द्रष्टव्यः । अथ वा अवसीयते निर्धार्यत इति अवसानं कर्मफलं तद् दर्शयतीति अवसानदर्शः । तादृशः श्येनः शंसनीयगतिः सूर्यः धन्वानि मरुदेशान् अति अतिक्रम्य अपः उदकानि अति ततर्द । अतिशयेन करोतीत्यर्थः । उत्तृदिर् हिंसानादरयोः । निरुदकप्रदेशेपि यथा वृष्टि-

---

१. वैतु. मंत्रा. इ. २. दाश्वांसं R,RW सा. ३. पुष्टिपतिं पै २०,१,५. ४. रयीणाम् पै. ५. वसानं पै. ६. दाश्वऽसिम् Bp[2]; दाश्वऽस्सम् Bp[3]. ७. विश्वा अवरा पै २०,१०,१. ८. जगाम पै.

भवति तथा प्रभूतं वर्षत्विति यावत् । किं च अवरा अवराणि द्युलोकाद् अधस्तनानि विश्वानि रजांसि लोकान् तरन् अवतरन् अतिक्रामन् श्येनः सख्या समानख्यानेन मित्रभूतेन इन्द्रेण। सहयोगाभावेऽपि तृतीया। तेन सह शिवः कल्याणकारी सन् आ जगम्यात् नवगृहनिर्माणस्थानम् आगच्छतु ।

श्येनो नृचक्षा दिव्यः सुपर्णः सहस्रपाच्छतयोनिर्वयोधाः ।
स नो नि यच्छाद् वसु[1] यत् पराभृतमस्माकमस्तु पितृषु स्वधावत् ॥ २ ॥

श्येनः । नृऽचक्षाः । दिव्यः । सुऽपर्णः । सहस्रऽपात् । शतऽयोनिः । वयःऽधाः ।
सः । नः । नि । यच्छात् । वसु । यत् । पराऽभृतम् । अस्माकम् । अस्तु । पितृषु । स्वधाऽवत् ॥

नृचक्षाः नृणां द्रष्टा दिव्यः दिवि भवः सुपर्णः सुपतनः सहस्रपात् सहस्रकिरणः । पादस्य लोपः समासान्तः (पा ५,४,१४०) । शतयोनिः शतस्य अपरिमितस्य कार्यस्य कारणभूतः अपरिमितफलस्य मिश्रयिता वा । अथ वा शतसंख्याकानि योनयः कारणानि प्रतिपदार्थं भिन्नानि असाधारणानि यस्येति । वयोधाः अन्नस्य धारयिता दाता स तादृशः श्येनः सूर्यः नः अस्मान् नि यच्छात् नियच्छतु। चिरकालं स्थापयत्वित्यर्थः। अपि च यद् वसु[1] धनं पराभृतम् अन्यैश्चोरादिभिः पराहृतम् अपहृतम् अस्ति, अथ वा यद् वसु[1] पुरोडाशशकलरूपं पराभृतम् पराचीनेन[2] पाणिना आहृतं प्रक्षिप्तं तद् वसु[1] अस्माकं पितृषु स्वधावत् स्वधाकारेण हुतम् अस्तु ।

सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश ।
[3]बाधेथां दूरं[3] निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुक्तमस्मत्[4] ॥ १ ॥

सोमारुद्रा । वि । वृहतम् । विषूचीम् । अमीवा । या । नः । गयम् । आऽविवेश ।
बाधेथाम् । दूरम् । निःऽऋतिम् । पराचैः । कृतम् । चित् । एनः । प्र । मुमुक्तम् । अस्मत्[5] ॥१॥

हे सोमारुद्रा । सुप आकारः । हे सोमारुद्रौ विषूचीम् विष्वग्गमनां वक्ष्यमाणम् अमीवाशब्दवाच्यं रोगं वि वृहतम् विनाशयतम्। वृहू[6] उद्यमने । तौदादिकः। या अमीवा रोगः नः अस्माकं गयम् गृहं शरीरं वा आविवेश सर्वतो व्याप्ता। तां वि वृहतम् इति संबन्धः। किं च निर्ऋतिम् निकृष्टगमनहेतुं रोगनिदानभूतां

---

१. वस्तु S'. २. पराचीने S'. ३. आरे बाधेथां ऋ ६,७४,२ तै १,८,२२,५ मै ४,११,२; बाधस्व दूरे ( द्वेषो तै ) ऋ १,२४,९ तै १,४,४५,१; बाधेथां द्वेषो पै १,१०९,१; आरे बाधस्व मै १,३,३९; आरे बाधेथां काठ ११,१२. ४. मुमुग्ध्यस्मत् ऋ. तै. मै. ५. अस्माद् P. ६. वृह् S'.

पिशाचीं पराचैः पराङ्मुखं दूरं बाधेथाम् । यथा पुनरस्मान् नागच्छति तथा पराङ्मुखं दूरं गमयित्वा नाशयतम् । पराचैरिति । निपातोऽयम् उच्चैर्नीचैरितिवत् । किं च चिच्छब्दः चेदर्थे । एनः अस्माभिः कृतं चेत् । अप्यर्थे वा चिच्छब्दः । कृतमपि एनः पापम् अस्मत् अस्मत्तः । पञ्चमीबहुवचने 'पञ्चम्या अत्' ( पा ७,१,३१ ) । प्र मुमुक्तम् प्रकर्षेण मोचयतम् । मुञ्चतेः शपः श्लुः ।

सोमारुद्रा [1]युवमेतान्यस्मद् विश्वा तनूषु भेषजानि धत्तम् ।
अव स्यतं मुञ्चतं [2]यन्नो असत् तनूषु बद्धं कृतमेनो अस्मत् ॥ २ ॥

सोमारुद्रा । युवम् । एतानि । अस्मत् । विश्वा । तनूषु । भेषजानि । धत्तम् ।
अव । स्यतम् । मुञ्चतम् । यत् । नः । असत् । तनूषु । बद्धम् । कृतम् । एनः । अस्मत् ॥ २ ॥

हे सोमारुद्रा हे सोमारुद्रौ युवम् युवाम् अस्मत् । षष्ठ्याः 'सुपां सुलुक्' ( पा ७,१,३९ ) इति लुक् । व्यत्ययो वा विभक्तेः । अस्माकं तनूषु शरीरेषु विश्वा सर्वाणि एतानि रोगनिर्हरणक्षमत्वेन प्रसिद्धानि भेषजानि धत्तम् स्थापयतम् । किं च नः अस्माकं तनूषु बद्धम् संबद्धं यत् अस्माभिः कृतम् एनः पापम् असत् स्यात् अस्ति वा तद् अस्मत् अस्मत्सकाशात् मुञ्चतम् मोचयतं विश्लेषयतम् । ततो मुक्त्वा तद् अव स्यतम् अवसाययतं विनाशयतम् । षो अन्तकर्मणि । लोटि रूपम् ।

शिवास्त एका अशिवास्त एकाः सर्वा बिभर्षि सुमनस्यमानः[3] ।
तिस्रो[4] वाचो निहिता अन्तरस्मिन् तासामेका वि पपातानु घोषम्[5] ॥१॥

शिवाः । ते । एकाः । अशिवाः । ते । एकाः । सर्वाः । बिभर्षि । सुऽमनस्यमानः ।
तिस्रः । वाचः । निऽहिताः । अन्तः । अस्मिन् । तासाम् । एका । वि । पपात । अनु । घोषम् ॥१॥

सर्वा हि वाक् परापश्यन्तीमध्यमावैखरीरूपचतुरवस्थापन्ना । तत्र पराद्यास्तिस्रोऽवस्था देहान्तरवस्थानाद् न परेभ्योऽर्थं प्रतिपादयितुं क्षमाः । वैखरी तु ताल्वोष्ठादिस्थानेषु वर्णपदवाक्यरूपेण अभिव्यज्यमाना परश्रोत्रग्रहणयोग्या भवति । एवं परावस्थापन्ना वाक् स्तुतिरूपा निन्दारूपा चेति द्विविधा भवति । तथा च अस्या ऋचः अयम् अर्थः—ते इति युष्मच्छब्देन बिभर्षीति मध्यमपुरुषेण च मिथ्याभिशस्तः पुरुषोऽभिधीयते । हे अकारणं निन्दित पुरुष ते तव विषये शिवाः स्तुतिरूपाः कल्याण्यः एकाः अन्या वाचः सन्ति । तथा

---

१. °न्युस्मे ऋ ६,७४,३ तै १,८,२२,५ मै ४,११,२ काठ ११,१२: °वमस्मास्वन्तस् पै १,१०९,४. २. किं चिदेनो अङ्गेषु बद्धमुतं यन्मृशते पै. † असत् ऋ. तै. मै. काठ. ३. अहृणीयमानः पै २०,१,४. ४. गुहा पै. ५. तिस्र एता एकेदिदं वि बभूवानु सर्वम् पै.

ते तव विषये अशिवाः अस्तुतिरूपा निन्दार्था एकाः अन्या वाचः सन्ति। सर्वास्ता उभयीर्वाचः त्वं सुमनस्यमानः। सुमना इवाचरन्। आचारार्थे 'कर्तुः क्यङ्' (पा ३,१,११) । स्तुतिवाक्यश्रवणे यथा सुमनस्कत्वं प्राप्नोषि एवं निन्दावाक्यश्रवणेऽपि सौमनस्यं प्राप्नुवन् बिभर्षि बिभृहि। लोडर्थे लट्। स्तुतिनिन्दाजातहर्षविषादयोरपि समानं सौमनस्यं प्राप्नुहीत्यर्थः । अथ वाचः पराद्यवस्थाचतुष्टयात्मकत्वेऽपि प्रथमावस्थात्रयरूपाया वाचो नार्थप्रत्यायकत्वं तुरीयावस्थापन्नायास्तु अर्थबोधकत्वम् इति उत्तरार्धेनाह — तासां पूर्वोक्तानां द्वितयीनां[1] वाचां मध्ये तिस्रो वाचः पराद्याः अस्मिन् शब्दप्रयोक्तरि पुरुषे अन्तः देहमध्ये निहिताः अवस्थिता भवन्ति। एका वैखरीरूपा घोषम् अनु ताल्वोष्ठव्यापारजन्यं ध्वनिम् अनुलक्ष्य वि पपात विशेषेण वर्णपदादिरूपेण वर्तते । यद्वा पूर्वार्धेन निन्दावाक्यस्य स्तुतिवाक्यसमानताप्रतिपत्तिम् आपाद्य निन्दावाक्यप्रयोगेऽपि प्रयोक्तुरेव महती बाधा नाभियुज्यमानस्य बाधेत्याह — तासाम् अशिवानाम् निन्दारूपाणां वाचां मध्ये तिस्रो वाचः पराद्याः अस्मिन् मिथ्यापवदितरि जने अन्तर्निहिताः । एका वाक् वैखरी घोषम् जनसंघध्वनिम् अनुलक्ष्य वि पपात निन्दात्वेन विरुद्धा पतिता। अयम् अर्थः — निन्दावाक्यस्यापि परादिचतुष्टयात्मकत्वात् तादृशवाक्यप्रयोक्तृशरीरमध्ये त्रयाणां भागानां अवस्थानात् तस्मिन्नेव निन्दा महती। मिथ्याभियुज्यमाने तु एक एव भागः पतित इति नास्ति निन्देति।

उभा[2] जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनयोः[3] ।
इन्द्रश्च[4] विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम्[5] ॥ १ ॥

उभा। जिग्युः। न। परा। जयेथे इति। न। परा। जिग्ये। कतरः। चन। एनयोः।
इन्द्रः। च। विष्णो इति। यत्। अपस्पृधेथाम्[6]। त्रेधा। सहस्रम्। वि। तत्। ऐरयेथाम् ॥१॥

हे इन्द्राविष्णू उभा उभौ युवां जिग्यथुः सर्वदा जयथ एव । छान्दसो लिट् । 'सन्लिटोर्जेः' (पा ७,३,५७) इति कुत्वम् । न कदाचिदपि परा जयेथे। अन्यैर्न जीयेथे इत्यर्थः । 'विपराभ्यां जेः' (पा १,३,१९) इति आत्मनेपदम् । किम् एतौ परस्परसाहाय्याज्जेतारौ अपराजितौ च । नेत्याह — एनयोः इन्द्राविष्ण्वोर्युवयोर्मध्ये कतरश्चन एकोऽपि । 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' (पा ५,३,९२) । न परा जिग्ये नान्यैः पराजितो भवति । हे विष्णो इन्द्रश्च त्वं च

1. द्वितीयानां S'. 2. उभौ तांब्रा २०,१५,७. 3. चनैनोः ऋ ६,६९,८ तै ३,२,११,२ मै २,४,४ काठ १२,१४ तांब्रा.; चनैव याम् पै २०,१५,३. 4. इन्द्रश्च B,D,K,Km,Sm,V,Cs,I. 5. तदैरयेथाम् पै.; यदधीर एषाम् पै [मूको.]. 6. अपऽस्पृधेथाम् P1,J,D1.

युवां यद् वस्तु प्रति अपस्पृधेथाम् अस्पर्धेथाम् असुरैः सह । 'अपस्पृधेथामानृचुः" ( पा ६,१,३६ ) इति स्पर्धतेर्लङि द्विर्वचनम् संप्रसारणं च निपात्यते। तद् वस्तु त्रेधा त्रिधा लोकवेदवागात्मना स्थितं सहस्रम् अपरिमितं व्यैरयेथाम्। व्यक्रमेथाम् इत्यर्थः । विक्रमणं च वैष्णवमपि ऐकात्म्याद् उभयोरित्युच्यते। अत्र ऐतरेयब्राह्मणम् — " 'उभा जिग्यथुः' इति उभौ हि तौ जिग्यतुः" इत्यादि 'इन्द्रश्च ह वै विष्णुश्चासुरैर्युयुधाते । तान् ह स्म जित्वोचतुः — कल्पामहा इति । ते ह तथेत्यसुरा ऊचुः। सोऽब्रवीद् इन्द्रो यावद् एवायं विष्णुस्त्रिविक्रमते तावद् अस्माकम् । अथ युष्माकम् इतरद् इति। स इमाल्लोकान् विचक्रमेऽथो वेदान् अथो वाचम्। तदाहुः — किं तत् सहस्रम् इतीमे लोका इमे वेदा अथो वाग् इति ब्रूयात्' ( ऐब्रा ६,१५ ) इत्यन्तम् अनुसंधेयम्।

जनाद् विश्वजनीनात्[1] सिन्धुतस्पर्याभृतम् ।
दूरात् त्वा[2] मन्य उद्भृतमीर्ष्याया नाम भेषजम् ॥ १ ॥

जनात् । विश्वऽजनीनात् । सिन्धुतः । परि । आऽभृतम् ।
दूरात् । त्वा । मन्ये । उत्ऽभृतम् । ईर्ष्यायाः । नाम । भेषजम् ॥ १ ॥

अत्र ईर्ष्यानिवर्तनक्षमम् औषधं संबोध्यते । विश्वजनीनात् विश्वजनहितात्। 'आत्मन्विश्वजनभोगोत्तरपदात्खः' ( पा ५,१,९ ) इति खः । तादृशात् जनात् । जनपदात् इत्यर्थः । एकदेशेन व्यपदेशो भीमसेनो भीम इतिवत् । तथा सिन्धुतः समुद्रात् । परिः पञ्चम्यर्थानुवादी। आभृतम् आहृतम्। 'हृग्रहोर्भः" (पावा ८,२,३२)। तथा दूरात् दूरदेशाद् उद्भृतम् उद्धृतं त्वा त्वां सक्तुमन्थलक्षणम् औषधम् ईर्ष्यायाः क्रोधस्य नाम खलु भेषजम् निवर्तनक्षमम् औषधं मन्ये जानामि। मन ज्ञाने । दिवादित्वात् श्यन्। लटि उत्तमैकवचने रूपम्।

इति चतुर्थेऽनुवाके प्रथमं सूक्तम्।

ईर्ष्याविनाशकर्मणि तप्तपरशुना क्वथितम् उदकम् 'अग्नेरिवास्य दहतः' इत्यनया अभिमन्त्र्य ईर्ष्यालुं पाययेत्। " 'अग्नेरिव' इति परशुफाण्टम्" (कौसू ३६,२७) इति सूत्रात्।

सर्वव्याधिभेषज्यार्थं व्याधितशरीरं मौञ्जैः पाशैः पर्वसु बद्ध्वा 'सिनीवालि' इति मन्त्रेण शरपिञ्जूलीभिः सह उदकघटं संपात्य अभिमन्त्र्य व्याधितम् आप्लावयेद् अवसिञ्चेद् वा । तद् उक्तं संहिताविधौ—" 'सोमारुद्रा' ( अ ७,४३ ), 'सिनीवालि' ( अ ७,४८ ), 'वि ते मुञ्चामि' ( अ ७,८३ ), 'शुम्भनी' ( अ ७,११७ ) इति मौञ्जैः पर्वसु बद्ध्वा पिञ्जूलीभिराप्लावयति । अवसिञ्चति" ( कौसू ३२,३;४ ) इति।

---

1. °जनीनां पै २०,१३,३. 2. त्वा Bᵇ.

तथा सर्वसंपत्कामः अनेन नवर्चेन यथालिङ्गं सिनीवाली कुहू राका देवपत्न्य इति चतस्रो देवता यजेत उपतिष्ठेत वा । 'अग्नाविष्णू' ( अ ७,३० ), 'सोमारुद्रा' ( अ ७, ४३ ), 'सिनीवालि पृथुष्टुके'' ( अ ७,४८ ), 'बृहस्पतिर्नः' ( अ ७,५३ ) इति कौशिकं सूत्रम् ( कौसू ५९,१९ ) ।

तथा दर्शयागे 'सिनीवालि' इति तृचेन सिनीवालीदेवतां परिगृह्णीयात् । तद् उक्तं वैताने—"देवताः परिगृह्णाति । 'सिनीवालि पृथुष्टुके' इति मन्त्रोक्ताम् ××× अमावास्यायाम्" ( वैताश्रौ १,१४;१६ ) इति ।

दर्शयाग एव 'कुहूं देवीम्' इति द्व्यृचेन कुहूं देवीं परिगृह्णीयात् । पूर्णमासयागे 'राकाम् अहम्' इति द्व्यृचेन राकां देवीं परिगृह्णीयात् । " 'कुहूं देवीम्' ( अ ७,४९ ), 'यत् ते देवा अकृण्वन् भागधेयम्' ( अ ७,८४ ) इत्यमावास्यायाम् 'राकाम् अहम्' ( अ ७,५० ), 'पूर्णा पश्चात्' ( अ ७,५ ) इति पौर्णमास्याम्" ( वैताश्रौ १,१६ ) इति वैतानसूत्रात् ।

दर्शपूर्णमासयोः पत्नीसंयाजेषु 'देवानां पत्नीः' इति द्व्यृचेन देवपत्नीयागम् अनुमन्त्रयेत । " 'सं वर्चसा' (अ ६,५३,३), 'देवानां पत्नीः' (अ ७,५१), 'सुगार्हपत्यः' (अ १२,२,४५) इति पत्नीसंयाजान्" ( वैताश्रौ ४,८ ) इति हि वैतानं सूत्रम् ।

अ॒ग्नेरि॑वास्य॒ दह॑तो दा॒वस्य॑[1] दह॑तः॒ पृथ॑क्[2] ।
ए॒ताम॒तस्ये॒र्ष्याम॑ु॒द्राग्निमि॑व[3] शमय ॥ १ ॥

अ॒ग्नेःऽइ॑व । अ॒स्य॒ । दह॑तः । दा॒वस्य॑ । दह॑तः । पृथ॑क् ।
ए॒ताम् । ए॒तस्य॑ । ई॒र्ष्याम् । उ॒द्ना[4] । अ॒ग्निम्ऽइ॑व । श॒म॒य ॥ १ ॥

अग्नेरिव दहतः क्रोधेन मदीयकार्याणि विनाशयतः अस्य पुरःपरिदृश्यमानस्य ईर्ष्यालोः तथा पृथक् प्रत्येकं प्रतिपदार्थं दहतः भस्मीकुर्वतो दावस्य । अत्र उपमावाचक इवशब्दोऽध्याहार्यः । दावस्य अग्नेरिव पृथक् दहतः एतस्य पुरोवर्तिनः क्रुध्यतः पुरुषस्य । पुरोवर्तिनम् ईर्ष्यालुम् इदमेतच्छब्दाभ्याम् अङ्गुल्या निर्दिशति । तादृशस्य पुरुषस्य एतां मद्विषये प्रयुज्यमानाम् ईर्ष्याम् उद्ना उदकेन । 'पद्दन्नोमास्' ( पा ६,१,६३ ) इत्यादिना उदकस्य उदन्भावः । तप्तपरशुक्वथितेनोदकेन शमय शान्तां कुर्विति ईर्ष्यानिवारको देवः संबोध्यते । तत्र दृष्टान्तः—अग्निमिव इति । यथा अग्निं ज्वलन्तम् उद्ना उदकेन शमयन्ति तद्वत् ।

---

१. नास्ति Bl.   २. क्षवस्य पै २०,१३,४.   ३. यथा पै.   ४. तु. सा.; वैतु. Km,R,WM. °मुत्ता°; Bb,WM. °मुद्रा°; A,D,K,Sm,V,WM. °मुद्रा°; Cs °मुद्रा° > °मुद्रा°; WM. °मुन्ता°; °मुत्ताग्निमिव B.   ५. उद्ना P,P²,J; उत्ता Cp.

सिनीवालि पृथुष्टुके या देवानामसि[1] स्वसा ।
जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि[2] नः ॥ १ ॥

सिनीवालि । पृथुऽस्तुके । या । देवानाम् । असि[3] । स्वसा ।
जुषस्व । हव्यम् । आऽहुतम् । प्रऽजाम् । देवि । [4]दिदिड्ढि । नः[4] ॥ १ ॥

दृष्टचन्द्रा अमावास्या सिनीवाली स्त्रीत्वेन रूप्यते । हे सिनीवालि । अत्र यास्कः 'सिनम् अन्नं भवति सिनाति भूतानि वालं पर्व वृणोतेस्तस्मिन्नन्नवती वालिनी वा [5]वालेनेवास्याम् अणुत्वाच्चन्द्रमाः सेवितव्यो भवतीति वा'(नि ११,३१) इति। पर्वण्यन्नवतीति अल्पकलचन्द्रोपेतेति वेति तस्यार्थः । तादृशि हे सिनीवालि पृथुष्टुके पृथुजघने पृथुकेशस्तुके वा । स्त्यायतेः स्तुकशब्दः । बहुभिः संस्तुते वा । स्तौतेर्निष्ठातकारस्य वर्णोपजनश्छान्दसः । या त्वं देवानां स्वसा स्वयं सारिणी वृष्ट्यादिना असि भवसि भगिनी वा समानकार्यत्वात् । सा त्वम् आहुतम् अभिमुखं प्रक्षिप्तं हव्यम् हविः जुषस्व सेवस्व । किं च हे देवि सिनीवालि नः अस्माकं प्रजाम् पुत्रादिकां दिदिड्ढि उपचिनु । देहीत्यर्थः । दिहेर्दिशतेर्वा लोटि शपः श्लुः ।

या सुबाहुः[6] स्वङ्गुरिः[7] सुषूमा[8] बहुसूवरी[9] ।
तस्यै विश्पत्न्यै[10] हविः सिनीवाल्यै जुहोतन ॥ २ ॥

या । सुऽबाहुः । सुऽअङ्गुरिः । सुऽसूमा । बहुऽसूवरी[11] ।
तस्यै । विश्पत्न्यै । हविः । सिनीवाल्यै । जुहोतन ॥ २ ॥

या सिनीवाली सुबाहुः सुपाणिः स्वङ्गुरिः शोभनाङ्गुलिः सुषूमा सुयोनिः । सूतेः सूमशब्दः । सुष्ठु प्रसवित्री वा । बहुसूवरी बह्वीनां प्रजानां सवित्री । सूतेः क्वनिप् । 'वनो र च' ( पा ४,१,७ ) इति ङीब्रेफौ । तस्यै सिनीवाल्यै विश्पत्न्यै विशां प्रजानां पालयित्र्यै । 'विभाषा सपूर्वस्य' ( पा ४,१,३४ ) इति पत्युर्नकारः । अयस्मयादित्वेन भत्वाद् विशो जश्त्वाभावः । हविः जुहोतन जुहुत हे ऋत्विग्यजमानाः । 'तप्तनप्तनथनाश्च' ( पा ७,१,४५ ) इति तस्य तनबादेशः । पित्त्वेन ङित्त्वाभावाद् गुणः ।

या विश्पत्नीन्द्रमसि[12] प्रतीची सहस्रस्तुकाभियन्ती देवी ।
विष्णोः पत्नि तुभ्यं राता हवींषि पतिं देवि राधसे[13] चोदयस्व ॥ ३ ॥

---

१. देवानां° Bᵇ,D,P³,R,S. २. दिदिढ्ढि WM. ३. असि P,Bp¹; असि > असि Cp. ४ दिदिड्ढिनः P,P³. ५. वालेनेवा° शंपा. ६. सुपाणि तै ३,१,११,४ मं ४,१२,६. ७. स्वङ्गुरिः पै २०,१०,११. ८. सुकुना पै [मूको.]. ९. बाहुसुवरी पै [मूको.]. १०. विश्पत्नियै तै. ११. ह्रा३ P. १२. विश्वत इन्द्र पै २०,१०,१२. १३. राधसा पै.

या । विऽपत्नी । इन्द्रम् । असि[1] । प्रतीची । सहस्रऽस्तुका । अभिऽयन्ती । देवी ।
विष्णोः । पत्नि । तुभ्यम् । राता । हवींषि । पतिम् । देवि । राधसे । चोदयस्व ॥ ३ ॥

या सिनीवाली विशत्नी विशां पालयित्री इन्द्रम् परमैश्वर्यसंपन्नं देवं प्रतीची प्रत्यगञ्चना असि भवसि । अमावास्यायाम् इन्द्रस्य इज्यमानत्वाद् इन्द्रं प्रतीचीत्युक्तम् । कीदृशी । सहस्रस्तुका । सहस्रशब्दो बहुवाची । बहुकेशस्तुका पृथुजघना वा सहस्रसंख्याकैः स्तोतृभिः संस्तुता वा । अभियन्ती अभिमुखं गच्छन्ती यष्टव्यान् देवान् । यद्वा फलप्रदानाय अस्मान् अभिगच्छन्ती देवी द्योतनशीला । किं च हे विष्णोः पत्नि विष्णोर्व्यापनशीलस्य देवस्य इन्द्रस्य वा पत्नि तुभ्यं हवींषि राता रातानि दत्तानि । अतः हे देवि सिनीवालि तुष्टा त्वं पतिम् त्वदीयम् इन्द्रं राधसे । राध इति धननाम (तु. निघ २,१०) । 'क्रियार्थोपपदस्य॰' (पा २,३,१४) इति चतुर्थी । अस्मभ्यं धनं दातुं चोदयस्व प्रेरयस्व ।

कुहूं देवीं[2] सुकृतं[3] विद्मनापसमस्मिन् यज्ञे सुहवा[4] जोहवीमि ।
सा नो रयिं विश्ववारं नि यच्छाद् ददातु वीरं शतदायमुक्थ्यम् ॥ १ ॥

कुहूम् । देवीम् । सुऽकृतम् । विद्मनाऽअपसम्[5] । अस्मिन् । यज्ञे । सुऽहवा । जोहवीमि ।
सा । नः । रयिम् । विश्वऽवारम्[6] । नि । यच्छात् । ददातु । वीरम् । शतऽदायम् । उक्थ्यम् ॥

कुहूम् । नष्टचन्द्रा अमावास्या कुहूः । तां देवीम् । कुहूशब्दं बहुधा यास्को निरुवाच —'कुहूर्गूहतेः क्वाभूद् इति वा क्व सती हूयत इति वा क्वाहुतं हविर्जुहोतीति वा' (नि ११,३२) इति । तादृशीं कुहूम् अस्मिन् यज्ञे दर्शयागे सर्वाभिलषितसाधने कर्मणि च जोहवीमि भृशम् आह्वयामि । ह्वयतेरिदं रूपं जुहोतेर्वा । हविषा यजामि । तां विशिनष्टि—सुकृतम् सुकर्माणं विद्मनापसम् । अप इति कर्मनाम (तु. निघ २,१) विदितकर्माणम् । विदेः औणादिको मक्प्रत्ययः । विद्मो वेदनम् । तद्वत् विद्मनम् । पामादिलक्षणो[7] नप्रत्ययः । तादृशम् अपः कर्म यस्या इति विग्रहः । सुहवाम्[8] शोभनाह्वानाम् । सा कुहूः विश्ववारम् सर्वैर्वरणीयं रयिम् धनं नः अस्मभ्यं नि यच्छात् नियमयतु स्थापयतु । प्रयच्छत्वित्यर्थः । तथा शतदायम् बहुधनं बहुप्रदं वा उक्थ्यम् प्रशस्यं स्तोत्रार्हं या वीरम् विक्रान्तं पुत्रं ददातु प्रयच्छतु ।

---

१. असि P. २. अहम् तै ३,३,११,५. मै ४,१२,६ काठ १३,१६ आश्री १,१०,८ शाश्री ९,२८,३. ३. सुभगां तै.; अमृतां पै २०,५,२; सुहूतं आश्री. शाश्री. ४. सुहवां मा. तै. मै. काठ. आश्री. शाश्री. ५. विद्मनाऽअपसम् P,Cp ; विद्मनाऽअपसम् Bp; वैत्र १,२८५६ q द. ६. विश्ववारम् P. ७. वैतु. पपा. द. ८. वैतु. मंपा. द.

कुहूर्देवानाममृतस्य पत्नी[1] हव्या नो अस्य[2] हविषो जुषेत[3]।
शृणोतु यज्ञमुशती नो अद्य रायस्पोषं चिकितुषी[4] दधातु[5] ॥ २ ॥

कुहूः । देवानाम् । अमृतस्य । पत्नी । हव्या । नः । अस्य । हविषः । जुषेत ।
शृणोतु । यज्ञम् । उशती । नः । अद्य । रायः । पोषम् । चिकितुषी । दधातु ॥ २ ॥

देवानाम् । **निर्धारणे षष्ठी । देवानां मध्ये** कुहूर्देवी अमृतस्य **अमृतत्वस्य अविनाशस्य उदकस्य वा** पत्नी **पालयित्री । यद्वा देवानां मध्ये यः अमृतः अविनश्वरो देवस्तस्य पत्नी नारी । अथवा देवानाम् इति सर्वविकारोपलक्षणम् । सर्वेषां भूतानाम् अमृतस्य च पत्नी पालयित्री** हव्या **आह्वानार्हा** नः **अस्मदीयस्य** अस्य **दीयमानस्य** हविषः । **कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी । अस्मदीयम् इदं हविः** जुषेत **सेवेत । किं च** नः **अस्मदीयं** यज्ञम् उशती **कामयमाना । वश कान्तौ । शतरि** 'ग्रहिज्या' (पा ६,१,१६) **इत्यादिना संप्रसारणम् ।** अद्य **इदानीं** शृणोतु **। अस्मदीयम् आह्वानम् इति शेषः । ततः** चिकितुषी **अस्मदीयं यज्ञं ज्ञातवती** रायः **धनस्य** पोषम् **पुष्टिं** दधातु **अस्माकं विदधातु । चिकितुषीति । कित ज्ञाने । क्वसौ ङीपि संप्रसारणे रूपम् ।**

राकामहं सुहवा[6] सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।
सीव्यत्वपः सूच्याऽच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम्[7] ॥१॥
राकाम् । अहम् । सुऽहवा[8] । सुऽस्तुती । हुवे । शृणोतु । नः । सुऽभगा । बोधतु । त्मना ।
सीव्यतु । अपः । सूच्या । अच्छिद्यमानया । ददातु । वीरम् । शतऽदायम् । उक्थ्यम् ॥१॥

राकाम् । **संपूर्णचन्द्रा पौर्णमासी राका । तां देवीं** सुहवाम्[9] **शोभनाह्वानाम् आह्वानप्रयोजनकारिणीं** सुष्टुती **शोभनया स्तुत्या** अहं हुवे **आह्वयामि । सा च** सुभगा **सुज्ञानादिका** नः **अस्माकं** शृणोतु **आह्वानम् । श्रुत्वा च** त्मना **आत्मना ।** 'मन्त्रेष्वाङ्यादेरात्मनः' (पा ६,४,१४१) **इति आकारलोपः । स्वयमेव** बोधतु **बुध्यताम् अस्मदभिप्रायम् । बुद्ध्वा च** अपः **कर्म प्रजननलक्षणं** सीव्यतु । 'अपः प्रजननकर्म' (नि ११,३१) **इति हि यास्कः । तत्** अच्छिद्यमानया सूच्या **सूचिस्थानीयया सीवन्या नाड्या** सीव्यतु **संतनोतु वध्नातु । षिवु तन्तुसन्ताने । दैवादिकः ।** 'हलि च' (पा ८,२,७७) **इति दीर्घः । यथा वस्त्रादिकं सूच्या स्यूतं चिरं कार्यक्षमं भवति एवम् इदं करोतु ।** 'राका ह वा एता पुरुषस्य सेवनीं सीव्यति

---

१. पयोद् शांश्रौ ९,२८,३. २. अस्य D[3], तै ३,३,११,५ मै ४,१२,६ काठ ११,१६ पै २०,५,४ [मूको.]. ३. चिकेतु तै.; शृणोतु मै. काठ. पै. आश्रौ.; कृणोतु शांश्रौ ९,२८,३. ४. चिकितुषे तै. मै. काठ. पै. शांश्रौ.; यजमाने आश्रौ. ५. ददातु शांश्रौ. ६. सुहवा मा. ऋ २,३२,४ तै. मै. पै २०,१०,८ मंब्रा १,५,३. ७. °दायमुक्थ्यम् मंब्रा. ८. सुहवा P. ९. वंतु. भपा. द.

यैषा शिस्नेऽधि । पुमांसोऽस्य पुत्रा जायन्ते' ( ऐब्रा ३,३७) इति ऐतरेयश्रुतेः । तथा च कृत्वा वीरम् विक्रान्तं पुत्रं शतदायम् बहुधनं बहुप्रदं वा उक्थ्यम् कर्मभिः स्तोत्रार्हं ददातु प्रयच्छतु ।

यास्ते राके सुमतयः सुपेशसो याभिर्ददासि[1] दाशुषे वसूनि ।
ताभिर्नो अद्य सुमना उपागहि सहस्रापोषं[2] सुभगे रराणा ॥ २ ॥

याः । ते । राके । सुऽमतयः । सुऽपेशसः । याभिः । ददासि[3] । दाशुषे । वसूनि ।
ताभिः । नः । अद्य । सुऽमनाः । उपऽआगहि । सहस्रऽपोषम् । सुऽभगे । रराणा ॥ २ ॥

हे राके देवि यास्ते तव सुमतयः कल्याणबुद्धयः अनुग्रहात्मिकाः सुपेशसः सुरूपाः शोभनविषया वा यास्ते सुष्टुतयः सुरूपा इति वा याभिः सुमतिभिः दाशुषे हविर्दत्तवते यजमानाय वसूनि धनानि ददासि प्रयच्छसि ताभिः सुमतिभिरुपलक्षिता तथाभूतसंकल्पा नः अस्मान् अद्य इदानीं सुमना भूत्वा उपागहि उपागच्छ । गमेः शपो लुकि मलोपः । तस्यासिद्धत्वेन हेर्लुगभावः । किं कुर्वती । हे सुभगे शोभनसौभाग्ये कल्याणधनप्रापिणि वा राके सहस्रपोषम् बहूनां धनानां पोषं पुष्टिं रराणा प्रयच्छन्ती उपागच्छेति । रातेर्व्यत्ययेन आत्मनेपदम् । शपः श्लुः ।

देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये ।
याः पार्थिवासो या अपामपि व्रते ता नो देवीः[4] सुहवाः[5] शर्म यच्छन्तु[6] ॥१॥

देवानाम् । पत्नीः । उशतीः । अवन्तु । नः । प्र । अवन्तु । नः । तुजये । वाजऽसातये ।
याः । पार्थिवासः । याः अपाम् । अपि । व्रते । ताः । नः । देवीः[4] । सुऽहवाः । शर्म । यच्छन्तु ॥

देवानां पत्नीः पत्न्यः उशतीः उशत्यः कामयमानाः नः अस्मान् अवन्तु रक्षन्तु । तथा नः अस्माकं तुजये तोकाय अपत्याय वाजसातये अन्नलाभाय च प्रावन्तु प्रकर्षेण आगच्छन्तु रक्षन्तु वा । अव रक्षणादिषु । किं च या देवपत्न्यः पार्थिवासः पार्थिव्यः । पृथिवीस्थाना इत्यर्थः । याः च । अपिशब्दः चार्थे । अपां व्रते कर्मणि कारके अन्तरिक्षे स्थिताः ता देवीः देव्यः सुहवाः शोभनाह्वाना नः अस्मभ्यं शर्म सुखं गृहं वा यच्छतु[7] । वचनव्यत्ययः । यच्छन्तु प्रयच्छन्तु इत्यर्थः ।

---

१. ददाति पै २०,१०,९ [मूको.]. २. सहस्रपोषं D.K^m,S^m, सा. ऋ २,३२,५ तै ३,३,११,५ मै ४,१२,६ पै. मंत्रा १,५,४. ३. ददाति P. ४. स्वरः?. ५. सुहवाः ऋ. मै. तैब्रा. ६. यच्छत BVC. ऋ. मै. तैब्रा.; यच्छन्तु सा. ७. वैतु.मंपा. द्र.

उत ग्ना व्यन्तु[1] देवपत्नीरिन्द्राण्य१ग्नाय्यश्विनी[1] राट् ।
आ रोदसी वरुणानी शृणोतु व्यन्तु[3] देवीर्य ऋतुर्जनीनाम् ॥ २ ॥

उत । ग्नाः । व्यन्तु । देवऽपत्नीः । इन्द्राणी । अग्नायी । अश्विनी । राट् ।
आ । रोदसी[4] । वरुणानी । शृणोतु । व्यन्तु । देवीः । यः । ऋतुः । जनीनाम् ॥२॥

उत अपि च देवपत्नीः देवाः पतयो यासां ताः देवानां पत्न्य इति वा। ग्नाः देव्यः व्यन्तु कामयन्ताम् अश्नन्तु वा । हवींषीति शेषः । ता देवपत्नीर्दर्शयति— इन्द्राणी इन्द्रस्य पत्नी । 'इन्द्रवरुण°' ( पा ४,१,४९ ) इति ङीपानुकौ । अग्नायी अग्नेः पत्नी । 'वृषाकप्यग्निकुसितकुसिदानामुदात्तः' ( पा ४,१,३७ ) इति ऐकारादेशो ङीप् च । अश्विनी अश्विनोर्जाया राट् राजन्ती । राजतेः क्विप् । रोदसी रुद्रस्य जाया वरुणानी वरुणस्य पत्नी आ शृणोतु अभिमुखं सर्वतो वा शृणोतु । अस्मदीयं हव्यं व्यन्तु अश्नन्तु कामयन्तां वा हवींषि देवीर्देव्यः । कस्मिन् काले हविःकामनं तत् आह—यः जनीना जायानाम् ऋतुः कालस्तस्मिन् । पत्नीसंयाजकाल इत्यर्थः । अत्र 'अपि च ग्ना व्यन्तु देवपत्न्यः । इन्द्राणीन्द्रस्य पत्नी । अग्नाय्यग्नेः पत्नी । अश्विन्यश्विनो पत्नी । राट् राजतेः । रोदसी रुद्रस्य पत्नी । वरुणानी च वरुणस्य पत्नी । व्यन्तु देव्यः कामयन्ताम् । य [5]ऋतुः कालो[5] जायानाम्' ( नि १२,४६ ) इति निरुक्तम् अनुसंधेयम्।

इति चतुर्थेऽनुवाके द्वितीयं सूक्तम्।

[6]द्यूतजयकर्मणि स्थलशुद्धिम् [7]अक्षाधिवासनं च कृत्वा 'यथा वृक्षम् अशनि.' इति नवर्चेन [8]अक्षान् अभिमन्त्र्य द्यूतं कुर्यात् । सूत्रितं हि—"पूर्वास्वषाढासु गर्तं खनति । उत्तरासु संचिनोति[9]। अदिवनं संस्तीर्य । 'उद्भिन्दतीं संजयन्तीम्' ( अ ४,३८, ), 'यथा वृक्षम् अशनिः' ( अ ७,५२ ), 'इदम् उग्राय' ( अ ७,११४ ) इति वासितान् अक्षान् निवपति" (कौसू ४१,१०-१३) इति । सर्वफलकामः 'बृहस्पतिर्नः' इति ऋचा बृहस्पतिं यजेत उपतिष्ठेत वा । 'बृहस्पतिर्नः' ( अ ७,५३ ), 'यत् ते देवाः' ( अ ७,८४ ) इति हि सूत्रम् ( कौसू ५९,१९ ) ।

तथा उक्थ्यक्रतौ ब्राह्मणाच्छंसिनो याज्याहोमम् अनया ब्रह्मा अनुमन्त्रयेत । उक्तं वैताने—"एतेषां याज्याहोमान् 'इन्द्रावरुणा सुतपौ' ( अ ७,६० ), 'बृहस्पतिर्नः', 'उभा जिग्यथुः' ( अ ७,४५ ) इति" ( वैताश्री २५,२ ) इति ।

---

१. वियन्तु वैग्रा ३,५,१२,१. २. °रिन्_ण्यरे° Bb,D,Sm, मे ४,१३,१०. ३. वियन्तु वैग्रा. ४. रोदसी ईर्ते ऋपा ५,४६,८. ५. ऋतुकालो ल. ६. द्यूतजय°>द्यूतक्षय° S'. ७. अजारि° S'. ८. अजान् S'. ९. संभिनत्ति शंपा.

तथा ग्रहयज्ञे अनया हविराज्यहोमसमिदाधानोपस्थानानि बृहस्पतये कुर्यात् । तद् उक्तं शान्तिकल्पे—"'भद्रादधि श्रेयः प्रेहि' ( अ ७,९ ), 'बृहस्पतिर्नः' इति बृहस्पतये" ( शाक १५? ) इति ।

तथा 'बार्हस्पत्यां [1]राज्यश्रीब्रह्मवर्चसकामस्य' ( शांक १७,१ ) इति विहितायां बार्हस्पत्याख्यायां महाशान्तौ 'बृहस्पतिर्नः' इत्येनाम् आवपेत् । उक्तं शान्तिकल्पे—"'बृहस्पतिर्नः परिपातु पश्चात्' ( अ ७,५३ ), 'अमुत्रभूयात्' ( अ ७,५५ ) इति बार्हस्पत्यायाम्" ( शाक १८,२ ) इति ।

यथा॑ वृ॒क्षम॒शनि॑र्वि॒श्वाहा॒ हन्त्य॑प्र॒ति । ए॒वाहम॒द्य[2] [3]कि॑त॒वान॒क्षैर्व॑ध्यासम॒प्रति[3] ॥१॥

यथा॑ । वृ॒क्षम् । अ॒शनिः॑ । वि॒श्वाहा॑ । हन्ति॑ । अ॒प्रति । ए॒व ।
अ॒हम् । अ॒द्य । कि॒त॒वान् । अ॒क्षैः । व॒ध्या॒स॒म् । अ॒प्र॒ति ॥१ ॥

अशनिः वैद्युतोऽग्निः अप्रति । प्रतिनिध्यर्थे प्रतिः कर्मप्रवचनीयः । न विद्यते प्रति प्रतिनिधिः समानो यस्य । अप्रतिमः सन् विश्वाहा विश्वेषु सर्वेष्वहःसु यथा वृक्षम् तरुं हन्ति बाधते । यद्वा विश्वस्य हन्ता । हन्तेः क्विप्[4] । अशनिः अप्रति अप्रतिपक्षं यथा वृक्षम् विनाशयति एव एवम् अहम् अप्रति अप्रतिनिधिः सन् । प्रतिकितवपराजये मम सदृशः अन्यो नास्तीत्यर्थः । यद्वा अप्रति अप्रतिपक्षं वध्यासम्[5] इति संम्बन्धः । अद्य इदानीं कितवान् । 'कितवः किं तवास्तीति शब्दानुकृतिः' ( नि ५,२२ ) इति यास्कः । अक्षैर्दीव्यन् पुरुषः परैरपह्रियमाणधनः किं तवास्ति न किञ्चिद् इति सर्वैर्भाष्यत इत्यर्थः । तादृशान् कितवान् अक्षैः देवनसाधनैः अप्रति अप्रतिपक्षं वध्यासं हनिष्यामि । यथा प्रतिकितवा द्यूतक्रियायां मम प्रतिस्पर्धिनो न भवन्ति तथा अक्षैः पराजितान् करिष्यामीत्यर्थः । 'हनो वध लिङि' (पा २,४,४२) इति हन्तेर्वधादेशः ।

तु॒राणा॒मतु॑राणां [6]वि॒शामव॑र्जुषीणाम्[6] ।
स॒मैतु॑ वि॒श्वतो॒ भगो॑ अन्तर्ह॒स्तं[7] कृ॒तं मम॑[8] ॥ २ ॥

तु॒राणा॑म् । अतु॑राणाम् । वि॒शाम् । अव॑र्जुषीणाम् ।
सम्ऽए॑तु । वि॒श्वतः॑ । भगः॑ । अ॒न्तःऽह॒स्तम् । कृ॒तम् । मम॑ ॥ २ ॥

तुराणाम् । तुर त्वरणे । इगुपधलक्षणः कः । द्यूतकर्मणि त्वरमाणानाम् अतुराणाम् अत्वरमाणानाम् । अहमेव प्रथमम् अक्षप्रक्षेपेण प्रतिवादिनं जेष्यामि अहमेवेति अहम-

---

१. राज्यार्थश्री° Bol. २. °ह्ममुं पै १९,९,८. ३. कितवमक्षैर्° पै.: °वध्यास° सा. पं [मुद्रो.]. ४. एव स्वरो न सिध्यति. ५. वधु. मं ११. द्र. ६. विशां वर्जुषीणाम् ( देवपत्नीनाम् पै. ) ऋ १,१३४,६ पै १९,९,९. ७. °हस्त्यं पै. ८. मनः पै.

हमिकया त्वरमाणास्तुराः। विमृश्यकारिण्यः अतुराः। तासाम् अवर्जुषीणाम् अवर्जनशीलानां प्रतिकितवैः पराजयेऽपि पुनरहमेव जेष्यामीति द्यूतक्रियाम् अपरित्यजन्तीनां पुनःपुनर्जयलाभाद् अवर्जयन्तीनां वा। सर्वदा द्यूतव्यसनवतीनाम् इत्यर्थः। विशाम् प्रजानां भगः भाग्यम् जयलक्षणं विश्वतः सर्वतः समंतु सम्यग् अभिमुखम् आगच्छतु। द्यूतजयकामिनं माम् इति शेषः। न केवलं तत एव जयप्रार्थना अपि तु मम अन्तर्हस्तम् हस्तमध्ये कृतम्। कृतशब्दवाच्यश्चतुःसंख्यायुक्तः अक्षविषयः अयः। स हस्तमध्ये स्थितो वर्तते। एकादयः पञ्चसंख्यान्ता अक्षविषया अयाः। तत्र चतुर्णां कृतम् इति संज्ञा। तथा च तैत्तिरीयकम्—'ये वै चत्वारः स्तोमाः कृतं तत्। अथ ये पञ्च कलिः सः' (तैत्रा १,५,११,१) इति। तत्र कृतस्य लाभाद् द्यूतजयो भवति। अत एव दाशतय्यां लब्धकृतायात् कितवाद् भीतिराम्नायते—'चतुरश्चिद् ददमानाद् बिभीयाद् आ निधातोः' (ऋ १,४१,९) इति। तत्र निरुक्तम्—''चतुरोऽक्षान्' धारयत इति तद् यथा कितवाद् बिभीयाद्' (नि ३,१६) इति।

ईडे अग्निं स्वावसुं नमोभिरिह प्रसक्तो[3] वि चयत् कृतं नः।
रथैरिव प्र भरे वाजयद्भिः[4] प्रदक्षिणं[5] मरुतां स्तोममृध्याम्[6] ॥ ३ ॥

ईडे। अग्निम्। स्वऽवसुम्। नमःऽभि.। इह। प्रऽसक्तः। वि। चयत्। कृतम्। नः।
रथैःऽइव। प्र। भरे। वाजयत्ऽभिः। प्रऽदक्षिणम्। मरुताम्। स्तोमम्। ऋध्याम्[7] ॥ ३ ॥

स्ववसुम् स्वकीयधनं स्वकीयेभ्यः स्तोतृभ्यो दीयमानं धनं यस्य तम् अग्निं नमोभिः स्तोत्रैः ईळे[8] स्तौमि। इह द्यूतकर्मणि प्रसक्तः प्रकर्षेण आसक्तोऽग्निः देवनकर्माधिपतिः नः अस्माकं दीव्यतां कृतम् कृतशब्दवाच्यं लाभहेतुम् अयं वि चयत् विचिनोतु। करोत्वित्यर्थः। चिनोतेर्लेटि अडागमः। वाजयद्भिः वाजम् अन्नं कुर्वद्भिः। वाजशब्दात् करोत्यर्थे णिच्। अन्नलाभकारणै रथैरिव स्थितैरक्षैः प्रभरे प्रहरे। प्रतिकितवान् इति शेषः। 'हृग्रहोर्भः' (पावा ८,२,३२) इति भत्वम्। ततः मरुताम्। देवोपलक्षणम्। सर्वेषां देवानां स्तोमम् स्तोत्रं संघं वा प्रदक्षिणम् अनुक्रमेण ऋध्याम् समर्धयेयम्।

वयं जयेम त्वया युजा[9] वृतमस्माकमंशमुदवा भरेभरे।
अस्मभ्यमिन्द्र वरीयः[10] सुगं कृधि प्र शत्रूणां मघवन् वृष्ण्या रुज ॥४॥

वयम्। जयेम। त्वया। युजा। वृतंम। अस्माकम्। अशम्। उत्। अव। भरेऽभरे।
अस्मभ्यम्। इन्द्र। वरीयः। सुऽगम्। कृधि। प्र। शत्रूणाम्। मघऽवन्[11]। वृष्ण्या। रुज ॥

१. चतुरश्चिदक्षान् ल. २. स्ववसु ऋ ५,६०,१ मै ४,१४,११ पै २०,३०,२ तैत्रा ३,७,१२,४. ३. प्रसुचो ऋ. मै. पै.; प्रमुछो तैत्रा. ४. वाजयद्भिः ऋ. मै. तैत्रा. ५. प्रदक्षिणिन् ऋ. मै. पै. तैत्रा. ६. स्तोममश्याम् मै.; °मृन्ध्याम् R[1],T. ७. ऋन्ध्याम् Bp[1]. ८. चतु. मंत्रा. द. ९. वृत° B[b]; वृता वृधो अस्मा° पै ३,३६,५. १०. वरिवः ऋ १,१०२,४. ११. मघवन् P.

हे इन्द्र त्वया युजा सहायेन वृतम्। वृणोति अक्षैः संरुणद्धीति वृत् प्रतिकितवः। वृणोतेः क्विप्। तादृशं कितवं वयं जयेम। तथा भरेभरे संग्रामेसंग्रामे द्यूतलक्षणे अस्माकं जिगीषूणाम् अंशम् जयलक्षणम् उद् अव उद्गमय। अव रक्षणादिषु। किं च अस्मभ्यं वरीयः उरुतरं धनं सुगम् सुगमनं कृधि कुरु। उरुशब्दाद् ईयसुनि 'प्रियस्थिर'' (पा ६,४,१५७) इति वरादेशः। हे मघवन् धनवन् इन्द्र शत्रूणाम् शातयितॄणां प्रतिकितवानां वृष्ण्या वृष्ण्यानि वृष्णिभवानि[1]। 'भवे छन्दसि' (पा ४,४,११०) इति यत्। इवर्णलोपः[2]। वीर्याणि जयलक्षणानि प्र रुज निवारय। रुजो भङ्गे। तौदादिकः। यथा प्रतिकितवा अस्मान् न जयेयुः यथा तान् वयं जयेम जयेन च तेभ्यो धनं स्वीकुर्याम तथा कुर्विति इन्द्रः प्रार्थ्यते।

अजै॑षं त्वा सं॒लिखि॑त॒मजै॑षमु॒त सं॒रुध॑म्[3]।
अवि॒ वृको॒ यथा॒ मथ॑देवा॒ म॑थ्नामि ते कृ॒तम् ॥ ५ ॥

अजै॑षम्। त्वा॒। सम्ऽलि॑खितम्। अजै॑षम्। उ॒त। स॒म्ऽरुध॑म्।
अवि॑म्। वृकः॑। यथा॑। मथ॑त्। ए॒व। म॒थ्नामि॑। ते॒। कृ॒तम् ॥ ५ ॥

लोके हि कितवाः अस्मिन् पदे प्रतिकितवम् अक्षशलाकादिभिः संरोत्स्यामीति अङ्कान् कुर्वन्ति तत्रैव च संरुन्धन्ति। तादृशः प्रतिकितवोऽत्र संबोध्यते — हे कितव संलिखितम् पदेषु सम्यग् अङ्कान् लिखितवन्तमपि त्वा त्वाम् अजैषम् अहमेव जयामि। उत अप्यर्थे। संरुधम्। रुधेः क्विप्। संरोद्धारमपि त्वाम् अजैषम् जयामि। यद्वा संलिखितं सम्यग् लिखितं चिह्नितं पदम् अभिलक्ष्य त्वां जयामि। उत अपि च संरुधम्। संरुन्धन्ति अत्रेति। अधिकरणे [4]कप्रत्ययः। तादृशम् स्थानम् अभिलक्ष्य त्वां जयामि। किञ्च वृकः अरण्यश्वा अविम् अजं यथा मथत् मथ्नाति एव एवं ते तव कृतं कृतशब्दवाच्यं लाभहेतुम् अयं मथ्नामि विनाशयामि।

उ॒त [5]प्र॒हाम॑तिदी॑वा[6] जयति[7] "कृ॒तमि॑व श्व॒घ्नी वि चि॑नोति का॒ले"।
यो दे॒वका॑मो न धनं॑[8] रु॒णद्धि॒ समित् तं रा॒यः[9] सृ॑जति स्व॒धाभिः॑[10] ॥६॥

उ॒त। प्र॒ऽहाम्। अति॑ऽदीवा। ज॒यति॑। कृ॒तम्ऽइ॑व। श्व॒ऽघ्नी। वि। चि॒नोति॑। का॒ले।
यः। दे॒वऽका॑मः। न। धन॑म्। रु॒णद्धि॑। सम्। इत्। तम्। रा॒यः। सृ॒जति॑। स्व॒धाभिः॑॥

उत अपि च अतिदीवा अतिशयेन दीव्यन् पुरुषः। 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः' (पाउ १,१५६) इति अतिपूर्वाद् दीव्यतेः कनिन्[4]। कित्त्वादेव गुणाभावः।

१. वृष्णि भवानि शंपा. २. टिलोपः शंपा. ३. संवृतम् पै १९,९,७. ४. एवं स्वरो न सिध्यति. ५. "मतिदीव्या ऋ १०,४२,९. ६. जयति ऋ. सा. ७. कृतं यच्छ्वघ्नी वि चिनोति" ऋ.; कृतं न श्वघ्नी वि चिनोति देवने ऋ १०,४३,५. ८. धनां ऋ. ९. राया ऋ. सा. १०. स्वधावान् ऋ.

प्रहाम् अक्षैः प्रहन्तारं प्रतिकितवं [1]जयाति । यतः श्वघ्नी । 'श्वघ्नी कितवो भवति । स्वं हन्ति । स्वं पुनराश्रितं[2] भवति' (नि ५,२२) इति यास्कः । परस्वस्य हन्ता कितवः काले द्यूतकाले कृतमिव। इवशब्द एवार्थे । कृतशब्दवाच्यं लाभहेतुम् अयमेव वि चिनोति मृगयते । हस्तस्थे-ष्वक्षेषु प्रागेव निधानात् कृतत्वम् [3]अक्षाणां लाभाय[3] अन्विष्यते अतो जयातीति सम्बन्धः । यो देवकामः देवान् कामयमानः दीव्यन् पुरुषः धनं न रुणद्धि द्यूत-लब्धं धनं न व्यर्थं स्थापयति किं तु देवतार्थं विनियुङ्क्ते तं राया[1] धनेन स्वधाभिः अन्नैर्बलैर्वा सं सृजत्येव सं योजयत्येव । इन्द्र इति देवता गम्यते । इत् अवधारणे ।

गोभिष्टरेमामतिं दुरेवां यवेन वा क्षुधं पुरुहूत विश्वे[4] ।
वयं राजसु[5] प्रथमा [6]धनान्यरिष्टासो[6] [7]वृजनीभिर्जयेम[7] ॥ ७ ॥

गोभिः । तरेम । अमतिम् । दुःऽएवाम् । यवेन । वा । क्षुधम् । पुरुऽहूत । विश्वे ।
वयम् । राजऽसु । प्रथमाः । धनानि । अरिष्टासः । वृजनीभिः । जयेम ॥ ७ ॥

हे इन्द्र दुरेवाम् दुष्प्रगमनां दारिद्र्याद् आगताम् अमतिम् दुर्बुद्धिं गोभिः पशुभिः तरेम । हे पुरुहूत बहुभिराहूत इन्द्र विश्वे सर्वे वयं यवेन वा । यवशब्दो धान्योपलक्षणम् । धान्येन वा क्षुधम् बुभुक्षां तरेम निवारयेम । राजसु नृपेषु राजमानेषु दीव्यत्सु वा पुरुषेषु । स्थितानीति शेषः । प्रथमा[8] प्रथमानि मुख्यानि प्रकृष्टतमानि धनानि वयम् अरिष्टासः अहिंसिताः प्रतिकितवैरपराजिताः सन्तः वृजनीभिः बलकारिणीभिरक्षशला-काभिः जयेम साधयेम ।

कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः ।
गोजिद् भूयासमश्वजिद् धनंजयो[9] हिरण्यजित् ॥ ८ ॥

कृतम् । मे । दक्षिणे । हस्ते । जय. । मे । सव्ये । आऽहितः ।
गोऽजित् । भूयासम् । अश्वऽजित् । धनम्ऽजयः । हिरण्यऽजित् ॥ ८ ॥

मे मम दक्षिणे हस्ते पाणौ कृतम् कृतशब्दवाच्यो लाभहेतुः अयः अस्ति । कृताय-लाभो हि महान् द्यूतजयः । तद् उक्तं द्यूतक्रियाम् अधिकृत्य आपस्तम्बेन—'कृतं यजमानो विजिनाति' (आश्रौ ५,२०,१) इति । तथा मे मम सव्ये हस्ते जय आहितः कृतायसाध्यो जयो निहितोऽस्ति । अतः अहं गोजित् परकीयानां गवां जेता भूयासम् । अश्वजित् प्रति-कितवसंबन्धिनाम् अश्वानां जेता । धनंजयः । धनशब्दः सामान्यवाची । दासीभूम्या-

---

१. वैतु. मंगा. द्र. २. °राहतं शंपा. ३. अक्षांनृणांलाभाय S'. ४. विश्वाम् ऋ १०,४२,१० पै १७,३५,६. ५. राजभिः ऋ.; राजानः पै. ६. °न्यस्मा-कैन ऋ.; धनानामरि° पै. ७. वृजनेना ज° ऋ.; °भिस्तरेम पै. ८. वैतु. पपा. द्र. ९. कृतंचयो ! पै १,८०,१.

दिधनस्य जेता। 'संज्ञायां भृतृवृजिधारिसहितपिदमः' (पा ३,२,४६) इति जयतेः खच्प्रत्ययः। 'अरुर्द्विषदजन्तस्य मुम्' (पा ६,३,६७) इति मुम्। हिरण्यजित् सुवर्णस्य जेता भूयासम्। लोके हि कितवा द्यूतकर्मणि गवादिधनं शुल्कं कृत्वा दीव्यन्ति तत्र ये जयन्ति ते तद्धनं स्वीकुर्वन्ति। अत्र जयस्य पूर्वार्धेन उक्तत्वाद् गवादिधनजयलाभः उत्तरार्धेन प्रार्थ्यते।

अक्षाः फलवतीं द्युवं दत्त गां क्षीरिणीमिव।
सं मा कृतस्य धारया धनुः स्नाव्नेव नह्यत॥ ९॥

अक्षाः। फलऽवतीम्। द्युवम्। दत्त। गाम्। क्षीरिणीम्ऽइव।
सम्। मा। कृतस्य। धारया। धनुः। स्नाव्नाऽइव। नह्यत॥ ९॥

अनया देवनसाधनभूतान् अक्षान् जयाय प्रार्थयते—हे अक्षाः द्युवम् द्यूतक्रियाम्। दीव्यतेः संपदादिलक्षणो भावे क्विप्। 'च्छ्वोः शूडनुनासिके च' (पा ६,४,१९) इति ऊठ्। तदन्ताद् द्वितीयैकवचने अमि उवङ् आदेशः। द्यूतक्रियां फलवतीं फलोपेतां दत्त प्रयच्छत। यथा द्यूतेन धनलाभो भवति तथा कुरुतेत्यर्थः। तत्र दृष्टान्तः—क्षीरिणी गामिवेति। फलं कस्माद् भवति तम् आह—कृतस्य कृतशब्दवाच्यस्य चतुःसंख्यायुक्ताक्षविषयस्य लाभहेतोः अयस्य धारया संतत्या उपर्युपरिलाभहेतुकृतायप्रवाहेण मा मां सं नह्यत संयोजयत। तत्र दृष्टान्तः— धनुः स्नाव्नेव इति। यथा धनुः कार्मुकं स्नाव्ना स्नावनिर्मितया मौर्व्या संनह्यन्ति[1]। यथा मौर्वीसंनद्धं कार्मुकं जयकारि भवति एवं मां कृतायपरंपरया जयिनं कुरुतेत्यर्थः।

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरीयः[2] कृणोतु॥१॥

बृहस्पतिः। नः। परि। पातु। पश्चात्। उत। उत्ऽतरस्मात्। अधरात्। अघऽयोः।
इन्द्रः। पुरस्तात्। उत। मध्यतः। नः। सखा। सखिऽभ्यः। वरीयः। कृणोतु॥ १॥

बृहस्पतिः बृहतां देवानां पाता हितकारित्वेन पालयिता एतन्नामा देवः नः अस्मान् परि पातु परितः सर्वतो रक्षतु। सर्वत इत्युक्तम्, कस्माद् इति तद् आह—पश्चात् प्रतीच्या दिशः। 'पश्चात्' (पा ५,३,३२) इति अस्तात्यर्थे निपातितः। उत अपि च उत्तरस्मात् ऊर्ध्वाल्लोकात् अधरात् अधस्तनाल्लोकात् अघायोः अघं हिंसालक्षणं परेषाम् इच्छतीति अघायुः। अघशब्दात् 'छन्दसि परेच्छायाम्'' (पावा ३,१,८) इति क्यच्। 'अश्वाघस्यात्' (पा ७,४,३७) इति आत्त्वम्। 'क्याच्छन्दसि' (पा ३,२,१७०) इति उप्रत्ययः। अभिजिघांसतः पुरुषात्। परि पात्विति संबन्धः।

---

१. यथा संनह्यमिति S'. २. वरिवः ऋ १०,४२,११ तै ३,३,११,१ पै १५,११,१.

तथा इन्द्रः पुरस्तात् प्राच्या दिशः उत अपि च मध्यतः मध्यात् प्रदेशात् नः अस्मान् परि पात्विति । सर्वाभ्यो दिग्भ्यो योऽघायुरागच्छति ततोऽस्मान् इन्द्राबृहस्पती परिपालयताम् इत्यर्थः। अपि च सखा सखिभूत इन्द्रः सखिभ्यः समानख्यानेभ्यः स्तोतृभ्यः अस्मभ्यं वरीयः उरुतरं धनं कृणोतु करोतु।

इति तृतीयं सूक्तम्।

समाप्तश्चतुर्थोऽनुवाकः ।

पञ्चमेऽनुवाके त्रीणि सूक्तानि । तत्र 'संज्ञानं नः' इति आद्यं सूक्तं बृहद्गणे (कौसू ९,२) पठितम्। तस्य शान्त्युदकाभिमन्त्रणादौ विनियोगः।

तथा सांमनस्यकर्मणि 'संज्ञानं नः' इति द्व्यृचेन उदकुम्भं सुराकुम्भं वा संपात्य अभिमन्त्र्य ग्रामं परिभ्राम्य ग्राममध्ये निनयेत्।

तथा तस्मिन्नेव कर्मणि अनेन द्व्यृचेन त्रिहायण्या वत्सतर्याः शुक्तयानि मांसानि संपात्य अभिमन्त्र्य भक्षयेत्।

तथा तस्मिन्नेव कर्मणि अन्नं सुरां प्रपां वा अनेन द्व्यृचेन संपात्य अभिमन्त्र्य यथायोगं भक्षणं पानं[1] वा कुर्यात्।

सूत्रितं हि — " 'सं वो मनांसि'[2] ( अ ६,९४ ), 'संज्ञानं नः' इति सांमनस्यानि। उदकुलिजं संपातवन्तं ग्रामं परिहृत्य मध्ये निनयति। एवं सुराकुलिजम्। त्रिहायण्या वत्सतर्याः शुक्तयानि[3] पिशितान्याशयति। भक्तं सुरां प्रपां संपातवत् करोति" ( कौसू १२,५-९ ) इति।

उपनयने आचार्यो माणवकस्य नाभिं संस्पृश्य 'अमुत्रभूयात्' ( अ ७,५५ ) इति षडृचं जपेत्। "दक्षिणेन पाणिना नाभिदेशेऽभिसंस्तभ्य जपति। 'आ यातु मित्रः' (अ ३,८), 'अमुत्रभूयात्" ( कौसू ५५,१६,१७ ) इति हि सूत्रम्।

तथा 'बार्हस्पत्या [4]राज्यश्रीब्रह्मवर्चसकामस्य' ( शाक १७,१ ) इति विहितायां बार्हस्पत्याख्यायां महाशान्तौ 'अमुत्रभूयात्' इति आवपेत्। उक्तं शान्तिकल्पे— " 'बृहस्पतिर्नः परि पातु पश्चात्' ( अ ७,५३ ), 'अमुत्रभूयात्' इति बार्हस्पत्यायाम्" (शाक १८,२) इति।

पुष्टयर्थे आग्रहायणीकर्मणि अग्निसमीपात् प्रातरुत्थिते 'उद्वयम्' इति उत्क्रामेत्। " 'उदायुषा' ( अ ३,३१,१० ) इत्युपोत्तिष्ठति। 'उद्वयम्' ( अ ७,५५,७) इत्युत्क्रामति" ( कौसू २४,३१,३२ ) इति हि सूत्रम्।

---

१. पाधयं S'. २. मनांसीति S'. ३. शुक्तानि Bl. ४. राज्यार्थश्री° Bol.

अन्नप्राशनकर्मणि भूमौ उपवेशितं बालम् 'उद्वयम्' इत्यनया आदित्यं प्रदर्शयेत्।

तथा सोमयागे अवभृथस्नानानन्तरम् 'उद्वयम्' इत्यनया जलाद् उत्क्रामेत्। "'संप्रोक्षति। अपां[1] सूक्तैरित्याद्युपस्पर्शनान्तम्। 'उद्वयम्' इत्युत्क्रामति" (वैताश्रौ २४,२-४) इति वैताने सूत्रितम्।

अध्यापकानाम् अर्थार्जनविघ्नशमनार्थम् 'ऋचं साम' इत्यनया आज्यं जुहुयात्। " 'ऋचं साम' (अ ७,५६) इत्यनुप्रवचनीयस्य जुहोति" (कौसू ४२,९) इति हि सूत्रम्।

संज्ञानं नः[2] स्वेभिः[3] संज्ञानमरणेभिः[4] ।
संज्ञानमश्विना युवमिहास्मासु[5] नि यच्छतम् ॥ १ ॥

सम्ऽज्ञानम्। नः। स्वेभिः। सम्ऽज्ञानम्। अरणेभिः।
सम्ऽज्ञानम्। अश्विना। युवम्। इह। अस्मासु। नि। यच्छतम् ॥ १ ॥

स्वेभिः स्वकीयैः पुरुषैः नः अस्माकं संज्ञानम् संगतं ज्ञानम् ऐकमत्यम्। भवत्विति शेषः। तथा अरणेभिः अरणैः अरमणैः अनुकूलम् अवदद्भिः। रणतिः शब्दार्थः। प्रतिकूलैः पुरुषैः। यद्वा अर्तेः अरणशब्दः। अरातिभिः सह संज्ञानम् समानज्ञानं भवतु। स्वेभिः अरणेभिः इत्युभयत्र 'बहुलं छन्दसि' (पा ७,१,१०) इति भिस ऐसोऽभावः। 'बहुवचने झल्येत्' (पा ७,३,१०३) इति एत्त्वम्। हे अश्विना अश्विनौ युवम् युवाम् इह अस्मिन् विषये इह इदानीं वा अस्मासु संज्ञानम् समानज्ञानं स्वीयैः परैश्च सह ऐकमत्यं नि यच्छतम् नियमयतम्। स्थापयतम् इत्यर्थः।

सं जानामहै[6] मनसा सं चिकित्वा[7] मा युष्महि[8] मनसा[9] दैव्येन।
मा घोषा [10]उत् स्थुर्बहुले[10] विनिर्हते मेषुः पप्तदिन्द्रस्याहन्यागते ॥ २ ॥

सम्। जानामहै। मनसा। सम्। चिकित्वा। मा। युष्महि। मनसा। दैव्येन।
मा। घोषाः। उत्। स्थुः। बहुले। विऽनिर्हते। मा। इषुः। पप्तत्। इन्द्रस्य। अहनि। आऽगते ॥२॥

मनसा अन्यदीयेन सं जानामहै समानज्ञाना भवाम। यद्वा मनः कर्म। परकीयं मनः संयोजयामः। यथा अस्मद्विषयेऽनुकूलं भवति तथा कुर्म इत्यर्थः। 'संप्रतिभ्यामनाध्याने' (पा १,३,४६) इति जानातेरात्मनेपदम्। 'संज्ञोऽन्यतरस्यां कर्मणि' (पा २,३,२२) इति मनसस्तृतीया। चिकित्वा ज्ञात्वा। सम्। उपसर्गश्रुतेर्योग्य-

---

१. संप्रोक्ष्यापां S'. २. वः खिसा ३६,२. ३. स्वेभ्यः मै २,२,६ पै १९,१५,५ खिसा.; स्वैः तैब्रा २,४,४,६. ४. अरणेभ्यः मै. पै. खिसा.; अरणैः तैब्रा. ५. हास्मभ्यं मै. ६. जानते ऋ १०,३०,६; जानतां पै १९,१५,१. ७. चिकित्रे ऋ. ८. °युस्महि A.D.Cs,RW.; °युष्महि>°युरस्महि S^m; °युछमहि V,O.D^1,R,P,P^2,J; संगच्छन्तु पै. ९. मन्युना पै. १०. उत्स्थु° D,K,Cs,RW.BVC. युक्ता बहु° पै.

क्रियाध्याहारः । संगतकार्यकारिणो भवाम । यद्वा पूर्वं मनसा संगतिरुक्ता। इदानीं निश्चयात्मकज्ञानेन संगतिः प्रार्थ्यते। चिकित्वा चिकित्वना। ज्ञानेनेत्यर्थः। सं जानामहै इत्यनुषङ्गः । स्वेषां परेषां च मनसा ज्ञानेन च संगता भवामेत्यर्थः । चिकित्वेति । कित ज्ञाने । 'समानकर्तृकयोः पूर्वकाले' (पा ३,४,२१) इति क्त्वाप्रत्ययः[1]। छान्दसं द्विर्वचनम्। 'एकाचः०' (पा ७,२,१०) इति इण्निषेधः [छान्दसः]। यद्वा 'अन्येभ्योऽपि दृश्यन्ते' (पा ३,२,७५) इति क्वनिपि पूर्ववद् द्विर्वचनम्। तृतीयाया डादेशः। किं च दैव्येन देवसंबन्धिना देवताविषयेण। 'देवाद् यञञौ' (पावा ४,१,८५) इति यञ्प्रत्ययः । तादृशेन मनसा मा युष्महि मा वियुक्ता भूम । प्रतिकूलजनितविक्षेपराहित्येन स्वकीयं मनः सर्वदा देवताविषयं भवत्वित्यर्थः । यु मिश्रणामिश्रणयोः। 'माङि लुङ्' (पा ३,३,१७५)। सिच्। 'संज्ञापूर्वको विधिरनित्यः' (द्र. पाका ६,४,१४६) इति गुणाभावः । अपि च बहुले अधिके विनिर्हुते[2] ह्वृ कौटिल्ये। 'ह्वृ ह्वरेश्छन्दसि' (पा ७,२,३१) इति निष्ठायां हु इत्यादेशः। कौटिल्ये निमित्ते घोषाः वैमनस्यनिबन्धनाः शब्दाः मा उत्स्थुः उत्थिता मा भूवन्। यद्वा बहुलशब्देन तमो विवक्ष्यते। विनिर्हुते विशेषेण स्तैन्यादिकौटिल्यनिमित्ते बहुले तमसि । रात्रावित्यर्थः। घोषाः वैमनस्यनिबन्धनाः शब्दा उत्थिता मा भूवन् । उत्पूर्वात् तिष्ठतेः 'माङि लुङ्' (पा ३,३,१७५)। वचनस्य ऊर्ध्वकर्मत्वं विवक्षित्वा आत्मनेपदाभावः । तथा अहनि अह्नि वासरे आगते च इन्द्रस्य इषुः । ऐन्द्र्या वाचः शत्रुनिवारकत्वाद् इषुत्वेन रूपणम् । 'वाग् अस्यैन्द्री सपत्नक्षयणी' (तै १,६,२,२) इति तैत्तिरीयश्रुतेः। यद्वा इन्द्रस्य इषुः अशनिः अशनिरूपा मर्मभेदिनी परकीया वाक् मा पप्तत् अस्मासु मा पततु । अहोरात्रोपलक्षितेषु सर्वेषु दिवसेष्वपि वैमनस्यनिबन्धनाः परेषां वाचः अस्मासु मा पतन्तु किं तु अनुकूला एव भवन्तु इत्यर्थः ।

अ॒मु॒त्र॒भूया॒दधि[1] यद् य॒मस्य॒ [2]बृह॑स्पते अ॒भिश॑स्ते॒रमु॑ञ्चः[3]।
[4]प्रत्यौ॑हताम॒श्विना॑ मृ॒त्युम॒स्मद्[5] दे॒वाना॑मग्ने भि॒षजा॒ शची॑भिः ॥ १ ॥

अ॒मु॒त्र॒ऽभूया॑त् । अधि॑ । यत् । य॒मस्य॑ । [6]बृह॑स्पते । अ॒भिऽश॑स्तेः । अमु॑ञ्चः[7] ।
प्रति॑ । औ॒ह॒ता॒म् । अ॒श्विना॑ । मृ॒त्युम् । अ॒स्मत् । दे॒वाना॑म् । अग्ने॑ । भि॒षजा॑ । शची॑भिः ॥

हे बृहस्पतेः[2] । संबुद्धौ सोलोपाभावश्छान्दसः । बृहतां महतां देवानां पते हविःप्रदानेन पालयितरग्ने अमुत्रभूयात् परलोके भवनम् अमुत्रभूयम् । 'भुवो भावे' (पा ३,

1. क्त्वाप्रत्यये तकारद्वयं स्यादिति चिन्त्यमिदम्. 2. वेतु. मंपा. द्र. 3. °द्रव मा २७,१, तै ४,१,७,४ मै २,१२,१५ पै २०,६,४. 4. तु. R[2],T,RW. मा. तै. मै.; वैतु. पपा. सा. शंपा. सात. बृहस्पतेरभिशस्तेरमुञ्चः; B,B[h],K,K[m],V बृहस्पते अभिशस्तेरमुञ्चः; Cs बृहस्पते अभिशस्तेरमुञ्चः>बृहस्पतेरभिशस्तेरमुञ्चः; P[a] बृहस्पतेऽभिशस्तेरमुञ्चः; बृहस्पतिरभिशस्त्या अमुञ्चत् पै. 5. प्रत्यूहतामश्विना मृत्युमस्माद् मै.; प्रति मृत्युमौहतामश्विना ते ? पै.; °मस्माद् मा. तै. 6. तु. मंपा. Cp; वैतु. शंपा. बृहस्पतेः; Bp[1] बृहस्पतेः.

१,१०७) इति भावे क्यप्प्रत्ययः। परलोकभवनरूपाद् यमस्य पितृपतेः संबन्धिनः अभिशस्तेः अभिशंसनाद् मरणहेतोः यत् यस्मात् अमुञ्चः मोचयसि। इमं माणवकम् इति शेषः। अधिशब्दः अनर्थकः। यद्वा अमुत्रभूयाद् इति ल्यब्लोपे पञ्चमी। परलोकभवनम् अभिलक्ष्य क्रियमाणाद् यमकर्तृकाद् अभिशंसनाद् मोचयसि तस्मात् कारणात् हे अग्ने त्वयि एवं कुर्वाणे त्वत्प्रसादादेव देवानां भिषजा भिषजौ वैद्यौ अश्विना अश्विनौ शचीभिः क्रियाभिः अस्मत् अस्मत्तः अस्मदीयात् माणवकाद् इत्यर्थः। मृत्युम् मरणकारणं प्रत्यौहताम्। निवारयताम् इत्यर्थः। अमुञ्चः औहताम इत्युभयत्र छान्दसो लङ्।

सं क्रा॑मतं॒ मा ज॑हीतं॒ शरी॑रं प्राणापा॒नौ ते॑ स॒युजा॑वि॒ह स्ता॑म्।
श॒तं[1] जी॑व श॒रदो॒ वर्ध॑मानो॒ऽग्निष्टे॑[2] गो॒पा अ॑धि॒पा वसि॑ष्ठः॥ २॥

सम्। क्रा॒म॒त॒म्। मा। ज॒ही॒त॒म्[3]। शरी॑रम्। प्रा॒णा॒पा॒नौ। ते॒। स॒ऽयुजौ॑। इ॒ह। स्ता॒म्। श॒तम्। जी॒व॒। श॒रदः॑। वर्ध॑मानः। अ॒ग्निः। ते॒। गो॒पाः। अ॒धि॒ऽपाः। वसि॑ष्ठः॥ २॥

हे प्राणापानौ सं क्रामतम् आयुष्कामस्य शरीरे संक्रान्तौ भवतम्। तथा शरीरम् आयुष्कामस्य देहं मा जहीतम् मा त्यजतम्। सर्वदा शरीरे तिष्ठतम् इत्यर्थः। ओहाक् त्यागे। लोटि 'ई हल्यघोः' (पा ६,४,११३) इति ईत्वम्। प्राणापानौ संबोध्य तयोः शरीरेऽवस्थानं संप्रार्थ्य आयुष्कामं प्रत्याह उत्तरेण पादत्रयेण। हे आयुष्काम ते तव इह अस्मिन् शरीरे प्राणापानौ। प्राणितीति प्राणः नासिकाविवराद् बहिर्निर्गच्छन् वायुः। अपानितीति अपानः हृदयस्य अधोभागे संचरन् वायुः। तौ सयुजौ संयुक्तौ परस्परसंयुक्तौ स्ताम् भवताम्। यावन्तं कालं प्राणापानौ परस्परसंबद्धौ देहे वर्तेते तावन्तम् आयुर्भवतीति तयोः साहित्यं प्रार्थितम्। अनन्तरम् हे आयुष्काम शतं शरदः शतवर्षपर्यन्तं जीव प्राणान् धारय। तथा जीवतस्ते तव वर्धमानः हविरादिना समृद्धिं गच्छन् अग्निः गोपाः गोपायिता भवतु। गुपू रक्षणे। क्विपि 'गुपूधूपविच्छि°' (पा ३,१,२८) इति आयप्रत्ययः। अतो लोपः। 'लोपो व्योर्वलि' (पा ६,१,६६) इति यकारलोपः। अधिपाः अधिकं पाता मदीयोऽयम् इति आदरातिशयेन अग्निः पालयिता भवतु। वसिष्ठः वासयितृतमश्चास्तु वसुमत्तमो वा भवतु। वासयितृशब्दाद् इष्ठनि 'तुरिष्ठेमेयःसु' (पा ६,४,१५४) इति तृचो लोपः। वसुमच्छब्दाद् इष्ठनि मतोर्लुकि टेर्लोपः।

'आयु॒र्यत् ते॒'[4] अति॑हितं परा॒चैर॑पा॒नः प्रा॒णः पुन॒रा तावि॑ताम्[5]।
अ॒ग्निष्टदा॑हा॒र्निर्ऋ॑तेरु॒पस्था॒त् तदा॒त्मनि॒ पुन॒रा वे॑शयामि ते॥ ३॥

---

१. संरभ्य पै २०,१०,७. २. सुवर्चा अग्नि° पै. ३. जुहि° J. ४. यत् ते भद्रम् अ १८,२,२६. ५. य उ वा ते परतः अ. पै २०,१०,६.

आयुः । यत् । ते । अतिऽहितम् । पराचैः । अपानः । प्राणः । पुनः । आ । तौ । इताम् ।
अग्निः । तत् । आ । अहाः[1] । निःऽऋतेः । उपऽस्थात् । तत् । आत्मनि । पुनः । आ । वेशयामि । ते ॥

हे आयुष्काम ते तव यद् आयुः जीवनं पराचैः पराङ्मुखम् अतिहितम् अतिक्रम्य गतम् । हि गतौ इत्यस्माद् निष्ठायां रूपं हितम् इति । यद्वा अतिहितम् अतिक्रम्य अन्यत्र निहितम् । मृत्युनेति शेषः । 'दधातेर्हिः' ( पा ७,४,४२ ) इति निष्ठायां हिभावः । तद् आयुरिति उत्तरवाक्येन सम्बन्धः । आयुषः प्राणापानागमननिमित्तत्वाद् वाक्यमध्ये तयोरागमनं प्रार्थयते — प्राणोऽपान[2] इति । तौ वायू देहधारकौ पुनः एताम् आगच्छताम् । इण् गतौ । लोटि प्रथमपुरुषद्विवचने रूपम् । तद् आयुः अतिहितं जीवनम् अग्निः निर्ऋतेः निकृष्टगमनस्य मृत्योः उपस्थात् अन्तिकाद् आहाः आहार्षीत् आहरतु आनयतु । हरतेश्छान्दसो लुङ् । सिचि वृद्धिः । 'अनित्यम् आगमशासनम्' इति इडभावः । 'रात्सस्य'[3] ( पा ८,२,२४ ) इति सिचो लोपः । 'हल्ङ्या' ( पा ६,१,६८ ) इत्यादिना तिपो लोपः । तद् अग्निना आनीतम् आयुः हे आयुष्काम ते तव आत्मनि शरीरे पुनः आ वेशयामि मन्त्रसामर्थ्येन आस्थापयामि । विश प्रवेशने ।

मेमं[4] प्राणो हासीन्मो[5] अपानोऽवहाय[5] परा गात् ।
सप्तर्षिभ्य[6] एनं[7] परि ददामि[8] त एनं[8] स्वस्ति जरसे वहन्तु[9] ॥ ४ ॥

मा । इमम् । प्राणः । हासीत् । मो इति । अपानः । अवऽहाय । परा । गात् ।
सप्तर्षिऽभ्यः । एनम् । परि । ददामि । ते । एनम् । स्वस्ति । जरसे । वहन्तु ॥ ४ ॥

इमम् आयुष्कामं प्राणः मा हासीत् मा त्यजतु । ओहाक् त्यागे । लुङि रूपम् । अपानः अवहाय अस्माच्छरीराद् निष्क्रम्य परित्यज्य वा मा परा गात् मैव परागच्छतु । अवहायेति । जिहीतेर्जहातेर्वा ल्यपि रूपम् । सप्तर्षिभ्यः । ऋषिशब्देन प्राणा उच्यन्ते । 'के त ऋषय इति । प्राणा वा ऋषयः' (शब्रा ६,१,१,१) इति वाजसनेयश्रुतेः । सप्तसंख्याकेभ्यः प्राणेभ्यः । 'सप्त वै शीर्षण्याः प्राणाः' (तैब्रा १,२,३,३) इति श्रुतेः । तेभ्यः एनम् आयुष्कामम् । 'इदमोऽन्वादेशे' ( पा २,४,३२ ) इति एनादेशः । परि ददामि ।

---

१. अहुः J. २. प्राणापान इति S'. ३. झलो झलि इत्यत्र. ४. मा त्वा पै २०,१०,७. ५. अपानोवहाय A,R; अपानोऽवि° > अपानोव° Cs. ६. सप्तऋषिभ्यै D,K[m],R,WM,RW. पै २०,१०,५; सप्तऋषिभ्यै > सप्तर्षिभ्यै Cs. ७. पुत्रं पै. ८. ६-८ दमेह पै. ९. नयन्तु पै.

रक्षार्थं दानं परिदानम् । रक्षितुं प्रयच्छामि । अथ ते सप्त प्राणा एनम् आयुष्कामं जरसे । तादर्थ्ये चतुर्थी । जरार्थं स्वस्ति क्षेमेण वहन्तु प्रापयन्तु । जरापर्यन्तं स्थापयन्तु इत्यर्थः । जराया जरस् आदेशः । अत्र प्राणापानयोः शरीरे चिरकालम् अवस्थानं सर्वेन्द्रियाणां च प्रावल्यं बहुकालं प्रार्थितम् ।

प्र विशतं प्राणापानावनड्वाहाविव व्रजम् ।
अयं जरिम्णः शेवधिररिष्ट इह वर्धताम् ॥ ५ ॥

प्र । विशतम् । प्राणापानौ । अनड्वाहौऽइव । व्रजम् ।
अयम् । जरिम्णः । शेवऽधिः । अरिष्टः । इह । वर्धताम् ॥ ५ ॥

आयुषः प्राणापानावस्थाननिबन्धनत्वात् पुनःपुनः प्राणापानयोः शरीरे प्रवेशः प्रार्थ्यते—हे प्राणापानौ प्र विशतम् आयुष्कामस्य शरीरम् । प्रवेशमात्रे दृष्टान्तः—अनड्वाहाविव अनोवहनशक्तौ बलीवर्दौ यथा व्रजम् गोष्ठं प्रविशतः तद्वत् । अयम् आयुष्कामः जरिम्णः जरायाः शेवधिः निधिर्भवतु । शेवं सुखं धीयतेऽत्रेति 'कर्मण्यधिकरणे च' (पा ३,३,९३) इति घोः किप्रत्ययः । किं च अरिष्टः अहिंसितः मृत्युबाधारहितः सर्वेन्द्रियैरहीनो वा इह अस्मिन् लोके वर्धताम् समृद्धो भवतु ।

'आ ते प्राणं सुवामसि' परा यक्ष्मं सुवामि ते ।
आयुर्नो' विश्वतो दधदयमग्निर्वरेण्यः ॥ ६ ॥

आ । ते । प्राणम् । सुवामसि । परा । यक्ष्मम् । सुवामि । ते ।
आयुः । नः । विश्वतः । दधत् । अयम् । अग्निः । वरेण्यः ॥ ६ ॥

हे आयुष्काम ते तव प्राणम् आ सुवामसि आगमयामः । षू प्रेरणे । तौदादिकः । 'इदन्तो मसि' (पा ७,१,४६) । तथा ते तव यक्ष्मम् आयुःप्रतिबन्धकं रोगं मृत्युं वा परा सुवामि पराङ्मुखं प्रेरयामि । किं च वरेण्यः वरणीयः संभजनीयः अयं हूयमानः अग्निः नः अस्मदीयस्य आयुष्कामस्य आयुः शतसंवत्सरपरिमितं जीवनं विश्वतः सर्वतः दधत् विदधातु । करोत्वित्यर्थः । दधातेर्लेटि 'घोर्लोपो लेटि वा' (पा ७,३,७०) इति लोपः । 'लेटोऽडाटौ' (पा ३,४,९४) इति अडागमः ।

---

१. पुनस्त्वे (°स्त्वा पै.) प्राण आयति (आ यातु पै. आश्री.) तै १,३,१४,४ पै २०,१३,२ आश्री २,१०,४. २. आयुष्टे तै. पै. आश्री.

उद्वयं तमसस्परि 'रोहन्तो नाकमुत्तमम्'[1] ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ ७ ॥

उत् । वयम् । तमसः । परि । रोहन्तः । नाकम् । उत्ऽतमम् ।
देवम् । देवऽत्रा । सूर्यम् । अगन्म । ज्योतिः । उत्ऽतमम् ॥ ७ ॥

तमसः । 'पाप्मा वै तमः' ( तै ५,१,८,६ ) इति हि श्रुतिः । पाप्मनः परि उपरि वयम् उत् उत्क्रान्ताः । उदुपसर्गः ससाधनां क्रियाम् आह । 'पञ्चम्याः परावध्यर्थे' ( पा ८,३,५१ ) इति सकारः । किं कुर्वन्तः । उत्तमम् उत्कृष्टं नाकम् दुःखसंस्पर्शरहितं स्वर्गं रोहन्तः आरोहन्तः । ततश्च देवत्रा देवेषु । 'देवमनुष्य°' (पा ५,४,५६ ) इति सप्तम्यर्थे त्राप्रत्ययः । उत्तमम् उद्गततमं ज्योतिः ज्योतीरूपं द्योतमानं सूर्यं देवम् अगन्म गच्छेम । गमेर्लुङि 'मन्त्रे घस°' (पा २,४,८०) इति च्लेर्लुक् । 'म्वोश्च' (पा ८,२,६५) इति मकारस्य नकारः ।

ऋचं साम यजामहे याभ्यां कर्माणि कुर्वते[2] ।
एते[3] सदसि राजतो यज्ञं देवेषु यच्छतः[4] ॥ १ ॥

ऋचम्[5] । साम । यजामहे । याभ्याम् । कर्माणि । कुर्वते ।
एते इति । सदसि । राजतः । यज्ञम् । देवेषु । यच्छतः ॥ १ ॥

ऋचम् ऋग्वेदं साम सामवेदम् अधीतं यजामहे हविषा पूजयामः । याभ्याम् ऋक्सामाभ्यां कर्माणि यज्ञरूपाणि कुर्वते ऋत्विग्यजमानाः । एते ऋक्सामे सदसि । सीदन्त्यत्रेति सदः । एतन्नामके मण्डपे[6] राजतः दीप्येते । ऋक्सामयोस्तत्रैव प्रयोगात् । तथा देवेषु यज्ञं यच्छतः प्रयच्छतः । स्तुतशस्त्राभ्यां यज्ञनिष्पत्तेः ।

इति पञ्चमेऽनुवाके प्रथमं सूक्तम् ।

अध्यापकानाम् अर्थार्जनविघ्नशमनार्थम् 'ऋचं साम यदप्राक्षम्' इति ऋचा केवलया 'ऋचं साम यजामहे' इति पूर्वमन्त्रसंहितया च आज्यं जुहुयात् । "'ऋचं साम' इत्यनुप्रवचनीयस्य जुहोति । युक्ताभ्यां तृतीयाम्" ( कौसू ४२,९;१० ) इति हि सूत्रितम् ।

मार्गस्वस्त्ययनकर्मणि 'ये ते पन्थानः' इत्येनाम् ऋचं जपन् प्रथमं दक्षिणपादप्रक्षेपपुरःसरं गच्छेत् ।

---

१. ज्योतिष् (°तिः मे., स्तुः मा.) पद्यन्त उत्तरम् ऋ १,५०,१० मा २०,२१ मै २,१३, ५ पै २०,६,९;. पद्यन्तो ज्योतिरुत्तरम् तै ४,१,७,३ काठ ३८,५ तब्रा २,४,४,९ तैआ ६, ३,१; ज्योतिः पश्यन्त उत्तरं स्वः पश्यन्त उत्तरम् छांउ ३,१७,७ लाश्री २,१२,१०.
२. कुर्वते कौ १,३६९ पै २०,२५,३. ३. °रिते कौ. पै. ४. यच्छतः>गच्छतः S°; घक्षतः कौ.; यच्छताम् पै. ५. ऋचम् P. ६. मंटपे S'.

तथा सर्वस्वस्त्ययनकर्मणि असंख्याताः शर्करास्तृणानि वा अनया अभिमन्त्र्य गृहक्षेत्रादिषु[1] प्रक्षिपेद् इन्द्रम् उपतिष्ठेत वा ।

सूत्रितं हि—" 'स्वस्तिदाः' (अ १,२१), 'ये ते पन्थानः' (अ ७,५७,२) इत्यध्वानं दक्षिणेन प्रक्रामति असंख्याताः[2] शर्करास्तृणानि [3]क्षिप्त्वोपतिष्ठते" (कौसू ५०,१-३) इति ।

[4]वृश्चिकमशकपिपीलिकाशर्कोटकादिविषभैषज्यार्थं[4] 'तिरश्चिराजेः' इत्यष्टर्चेन मधुकम् अभिमन्त्र्य वृश्चिकादिदष्टं पाययेत् ।

तथा तत्रैव कर्मणि क्षेत्रमृत्तिकां वल्मीकमृत्तिकां वा सजीवपशुचर्मावेष्टिताम् अनेन अष्टर्चेन संपात्य अभिमन्त्र्य बध्नीयात् । केवलां मृत्तिकाम् अभिमन्त्र्य उदकेन पाययेत् ।

तथा तस्मिन्नेव कर्मणि अनेनैव उदपात्रं हरिद्रामिश्रम् आज्यं वा संपात्य अभिमन्त्र्य पाययेत् ।

सूत्रितं हि—" 'तिरश्चिराजेः' (अ ७,५८) इति मन्त्रोक्तम् । आकृतिलोष्टवल्मीकौ परिलिख्य[5] । पायनानि" (कौसू ३२,५-७) इति ।

तथा उपाकर्मणि 'अरसस्य शर्कोटस्य' इत्यनया आज्यं जुहुयात् । 'अरसस्य [6]शर्कोटस्य' (अ ७,५८,५), 'इन्द्रस्य प्रथमो रथः' (अ १०,४) इति हि सूत्रितम् (कौसू १३९,८) ।

ऋचं॑ साम॑ यद॑प्राक्षं॑ ह॒विरोजो॒ यजु॒र्बल॑म् ।
ए॒ष[7] मा॒ तस्मा॒न्मा हिंसी॒द्वेदः॑ पृ॒ष्टः[8] श॑चीपते ॥ १ ॥

ऋच॑म् । साम॑ । यत् । अप्रा॑क्षम् । ह॒विः । ओजः॑[9] । यजुः॑ । बल॑म् ।
ए॒षः । मा॒ । तस्मा॑त् । मा । हिं॒सी॒त् । वेदः॑ । पृ॒ष्टः[8] । श॒ची॒ऽप॒ते ॥ १ ॥

ऋचम् ऋग्वेदं हविः अप्राक्षम् पृच्छामि स्म । साम सामवेदम् ओजः । शरीरधारकोऽष्टमो धातुरोज इत्युच्यते । तद् अप्राक्षम् । यजुः यजुर्वेदं बलम् बाह्यं वीर्यम् अप्राक्षम् । ऋचा याज्यारूपया हविर्हूयत इति ऋग्वेदं प्रति हविःप्रश्नः । माध्यन्दिनसवने गीयमानानां पृष्ठस्तोत्राणां यज्ञप्राणत्वेन ताण्डकब्राह्मणे संस्तवात् सामवेदं प्रति आन्तरबलरूपौजःप्रश्नः । यजुषा [10]यज्ञशरीरनिर्वृत्तेर्यजुर्वेदं प्रति बलप्रश्नः । 'अकथितं च' (पा १,४,५१) इति ऋगादेः कर्मता । अप्राक्षम् इति । पृच्छतेर्लुङि 'एकाचः' (पा ७,२,१०) इति इण्निषेधे 'वदव्रज' (पा ७,२,३) इति हलन्तलक्षणा वृद्धिः । यच्छब्दो

---

१. °क्षेत्रादिषु प्रदिषु S'. २. °युदस्यत्यसंख्या° Bl. ३. °छिप्त्वोप° Bl.
४. °शर्कोटिकादिविषप° S'. ५. °रिलिख्य Bl. ६. शर्कोटिकस्य S'. ७. भृ-
लिद् वे २०,५७,१. ८. पृष्टः A,K,Km,Sm,V,Cs,P,J,Cp. ९. ओजः P,
१०. °निर्वृत्ते° S'.

हेत्वर्थे । यत् यस्मात् ऋगादीन् प्रति हविरादिकम् अप्राक्षं तस्मात् कारणात् तत्तदसाधारणधर्मप्रश्नाद्धेतोः हे शचीपते इन्द्राणीपते इन्द्र । *[यद्वा] वाग्व्याकरणकर्तृत्वाद् इन्द्रः संबोध्यते । तथा च तैत्तिरीयकम्—'ताम् इन्द्रो मध्यतोऽवक्रम्य व्याकरोत् । तस्माद् इयं व्याकृता वाग् उद्यते' ( तै ६,४,७,३ ) इति । हे वागनुशासनकर्तः इन्द्र पृष्टः इत्थं विचारित एषः मया सम्यग् अधीतो वेदः ऋक्सामयजुरात्मकः मा माम् अध्यापकं मा हिंसीत् मा हिनस्तु । अध्यापननिबन्धनं प्रत्यवायं मा करोतु, अपि तु फलम् अभिमतं प्रयच्छत्वित्यर्थः ।

ये ते॒ पन्था॒नोऽव॑[1] दि॒वो [2]येभि॒र्विश्व॒मैर॑यः ।
तेभि॑ः सुम्न॒या धे॑हि नो वसो ॥ २ ॥

ये । ते॒ । पन्था॑नः । अव॑ । दि॒वः । येभि॑ः । विश्व॑म् । ऐर॑यः ।
तेभि॑ः । सु॒म्न॒ऽया । आ । धे॒हि॒ । नः॒ । व॒सो॒ इति॑ ॥ २ ॥

हे वसो वासयितः वसुमन् वसुप्रद वा इन्द्र ते तव ये पन्थानः मार्गा दिवः द्युलोकस्य अव अवस्ताद् अधोदेशे वर्तन्ते येभिः पथिभिः विश्वम् जगद् ऐरयः प्रेरयसि स्वस्वकर्मसु । ईर गतौ । छान्दसो लङ् । तेभिः तैर्विश्वप्रेरणसाधनैर्मार्गैः नः अस्मान् सुम्नया । सप्तम्या [3]याजादेशः । सुम्ने सुखे आ धेहि स्थापय ।

तिर॑श्चिराजेरसि॒तात् पृदा॑कोः॒ परि॑ संभृ॑तम् ।
तत् [4]क॒ङ्कप॑र्वणो॒ वि॒षमि॒यं वी॒रुद॑नीनशत्[5] ॥ १ ॥

तिर॑श्चिऽराजेः । अ॒सि॒तात् । पृदा॑कोः । परि॑ । सम्ऽभृ॑तम् ।
तत् । क॒ङ्कऽप॑र्वणः । वि॒षम् । इ॒यम् । वी॒रुत् । अनी॑न॒श॒त् ॥ १ ॥

तिरश्चिराजेः तिरश्च्यः तिर्यग्भूता राजयो रेखा यस्य स तिरश्चिराजिः सर्पविशेषः । तिरःशब्दोपपदाद् अञ्चतेः क्विबन्ताद् 'अञ्चतेश्चोपसंख्यानम्' ( पावा ४,१,६ ) इति ङीपि 'अचः' ( पा ६,४,१३८ ) इति अकारलोपः । पुंवद्भावाभावश्छान्दसः । 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' ( पा ६,३,६३ ) इति ङीपो ह्रस्वत्वम्[6] । तिरश्चीननानारेखोपेतात् सर्पविशेषात् असितात् सितः श्वेतः न सितः असितः

---

१. पन्था॑ अ॒थो॑ श्री १,१७२. २. येभि॒र्व्यैर॑य॒ श्री. ३. वेतु. पा. ६.
४. भप ३ १०,११,७. ५. गद्गर॰ पै. ६. वीरुदित्तूर॰ ? पै. ७. स्वरः !

तस्मात् कालोरगात् पृदाकोः। पर्द कुत्सिते शब्दे। "पर्देर्नित्संप्रसारणमलोपश्च" (पाउ ३,८०) इति आकुप्रत्ययः। तत्संनियोगेन संप्रसारणम्। पर्दते कुत्सितं शब्दयति स्वेन दष्टान् प्राणिन इति पृदाकुः सर्पविशेषः। तस्मात्। परिः पञ्चम्यर्थाऽनुवादी। तिरश्चिराजिप्रभृतेः सर्पविशेषात् संभृतम् संपादितं विषम्। तथा कङ्कपर्वणः एतन्नामकाद् दंशकविशेषात् संभृतं तद् विषम् इयं प्रयुज्यमाना वीरुत् विशेषेण रोहन्ती मधुकाख्या ओषधिः अनीनशत् नाशयतु।

> इयं वीरुन्मधुजाता[1] मधुश्चुन्मधुला मधूः।
> सा विह्रुतस्य[1] भेषज्यथो मशकजम्भनी[4] ॥ २ ॥

इयम्। वीरुत्। मधुऽजाता। मधुऽश्चुत्। मधुला। मधूः।
सा। विऽह्रुतस्य। भेषजी। अथो इति। मशकऽजम्भनी ॥ २ ॥

इयं प्रयुज्यमाना वीरुत् ओषधिः मधुजाता मधुनो निष्पन्ना अत एव [5]मधुश्च्युत् मधुरं रसं श्च्योतति क्षरतीति मधुश्च्युत् मधुररसस्राविणी मधुला मधुमती। 'सिध्मादिभ्यश्च' (पा ५,२,९७) इति लो मत्वर्थीयः। मधूः नामतः। सा एतत्संज्ञा उक्तविधगुणोपेता मधुकाख्या ओषधिः विह्रुतस्य विशेषेण कौटिल्यकारिणो विषस्य भेषजी प्रतिकर्त्री। ह्वृ कौटिल्ये। 'ह्रु ह्वरेश्छन्दसि' (पा ७,२,३१) इति निष्ठायां ह्रु इत्यादेशः। अथो अपि च मशकजम्भनी। जभतिर्हिंसाकर्मा। मशकानां दंशकानां हिंसित्री।

> यतो दष्टं यतो [6]धीतं ततस्ते निर्ह्वयामसि[6]।
> अर्भस्य [7]तृप्रदंशिनो मशकस्यारसं विषम्॥ ३ ॥

यतः। दष्टम्। यतः। धीतम्। ततः। ते। निः। ह्वयामसि।
अर्भस्य। तृप्रऽदंशिनः। मशकस्य। अरसम्। विषम् ॥ ३ ॥

विषदष्टं संबोध्य उच्यते। यतः। सप्तम्यर्थे तसिः। यस्मिन् प्रदेशे दष्टम्। सर्पादिनेति शेषः। भावे निष्ठा। तथा यतः यस्मिन् प्रदेशे धीतम् पीतं सर्पादिना। धेट् पाने। भावे निष्ठा। 'घुमास्था' (पा ६,४,६६) इति ईत्वम्। हे सर्पदष्ट पुरुष ते तव ततः

---

१. पर्देर्नित्संप्रसारणं च S'.　२. °जाता B,B[b],K,K[m]; °जाता > °जाता Cs.
३. विह्वृतस्य पै २०,१३,८.　४. °जंभनीः B.　५. वैद्. मंग. द्र.　६. प्रातं यद्स्मा-
न्निर्नयामसि पै २०,१३,९.　७. त्रिप्र° A,B[b],D,K,K[m],S[m],V,Cs,O,Cp[s], सा.; °दंशनो पै.

तस्माद् अवयवाद् निर्वयामसि[1] विषं निर्गमयामः । अय वय पय मय चय तय णय गतौ । अन्तर्भावितण्यर्थः । तथा त्रिप्रदंशिनः[1] त्रिभिर्मुखपुच्छपादरूपैरङ्गैः प्रकर्षेण दशतीति त्रिप्रदंशी । 'बहुलमाभीक्ष्ण्ये' ( पा ३,२,८१ ) इति दंशेर्णिनिः । मुखपुच्छाभ्यां पादेन च दष्टवतः अर्भस्य अर्भकस्य अल्पस्य अल्पसामर्थ्यस्य वा मशकस्य विषम् अरसम् निर्वीर्यम् । 'शृङ्गारादौ रसे वीर्ये गुणे रागे द्रवे रसः' (तु. अको ३,३,२२६) इति वचनाद् रसशब्दो वीर्यवाची । निर्वीर्यं निर्वयामसीति संबन्धः । विषं मूर्च्छनादिविकारानुत्पादकं कुर्म इत्यर्थः ।

अ॒यं यो व॒क्रो 'विप॑रु॒र्व्य॑ङ्गो मु॒खानि॑ व॒क्रा[2] वृ॑जि॒ना कृ॒णोषि॑ ।
तानि॒ त्वं ब्र॑ह्मणस्पत[3] इ॒षीका॑मिव॒ सं न॑मः[4] ॥ ४ ॥

अ॒यम् । यः । व॒क्रः । विऽप॑रुः । विऽअ॑ङ्गः । मु॒खानि॑ । व॒क्रा । वृ॒जि॒ना । कृ॒णोषि॑ ।
तानि॑ । त्वम् । ब्र॒ह्म॒णः॒ । प॒ते॒ । इ॒षीका॑म्ऽइव । सम् । न॒मः॒ ॥ ४ ॥

योऽयं सर्पादिना दष्टः पुरुषः वक्रः कुटिलावयवः संकोचितावयवः विपरुः । परुः पर्व । विश्लिष्टपर्वा विगतसंधिः व्यङ्गः विवशावयवः । एवंभूतः सन् मुखानि । आदिशब्दाध्याहारः । मुखादीनि अङ्गानि । मुखगतावयवापेक्षया वा बहुवचनम् । वक्रा वक्राणि कुटिलानि अत एव वृजिना वृजिनानि कष्टानि अनवस्थितानि । अङ्गानां यथासंनिवेशम् अनवस्थानाद् वृजिनत्वम् । तथाविधानि कृणोषि । पुरुषव्यत्ययः । कृणोति करोति । हे ब्रह्मणस्पते ब्रह्मणो मन्त्रस्य पालक विषनिर्हरणमन्त्रसामर्थ्यप्रद एतन्नामक देव त्वं तानि दष्टपुरुषसंबन्धीनि वक्रत्वाद्यवस्थापन्नानि अङ्गानि सं नमः संनमय ऋजूकुरु । तत्र दृष्टान्तः — इषीकामिवेति । यथा इषीकाम् पूर्वम् ऋजुं दीर्घां बलात् कौटिल्यं प्रापितां पश्चात् कौटिल्यपरिहारेण सहजम् आर्जवं प्रापयन्ति तद्वत् एनं सर्पादिविषेण कौटिल्यं गतं विषनिर्हरणेन यथावस्थितम् ऋजुं कुर्वित्यर्थः । नमेः अन्तर्णीतण्यर्थात् पञ्चमलकारे अडागमः ।

अ॒र॒सस्य॑ श॒र्कोट॑स्य[5] नी॒चीन॑स्योप॒सर्प॑तः ।
वि॒षं 'ह्य॑१॒स्याद्दि॒ष्यथो॑ ए॒नम॑जीजभम्[7] ॥ ५ ॥

अ॒र॒सस्य॑ । श॒र्कोट॑स्य । नी॒चीन॑स्य । उ॒प॒ऽसर्प॑तः ।
वि॒षम् । हि । अ॒स्य॒ । आऽअदि॑षि । अथो॒ इति॑ । ए॒नम् । अ॒जी॒ज॒भ॒म् ॥ ५ ॥

---

१. वैतु. मंपा. द्र. २ विक्टो विपर्वा भइ? मुखान्येषाम् पै २०,१३,१०. ३. 'स्पतं S[m]; देव सविता पै. ४. नेम B,D,K,K[m].V,Cs. ५. कर्कोटस्य पै १,४८,१. ६. ह्यु॰ B,R; हि सर्वमादि॰ पै. ७. ॰जीगमम् K[m].

अरसस्य निर्वीर्यस्य विषसामर्थ्यरहितस्य नीचीनस्य न्यग्भूतस्य अवाङ्मुखस्य उपसर्पतः समीपं गच्छतः अस्य शर्कोटस्य एतन्नामधेयस्य सर्पविशेषस्य विषम् अदिषि[1] खण्डितवान् अस्मि । हिः अवधारणे । विषम् अनीनशमेव । दो अवखण्डने । अस्मात् लुङि व्यत्ययेन आत्मनेपदम् । 'स्थाघ्वोरिच्च' (पा १,२,१७) इति धातोः इत्त्वम् । सिचः कित्त्वम् । अथो अपि च एनं विषिणं शर्कोटम् अजीजभम् अनीनशम् । शर्कोटनामकं सर्पं तद्विषं च मन्त्रसामर्थ्येन अहं प्रयोक्ता अहिंसिषम् इत्यर्थः ।

न ते॑ बा॒ह्वोर्बल॑मस्ति॒[2] न शी॒र्षे नोत म॑ध्य॒तः ।
अथ॒ किं[3] पा॒पया॑ऽमु॒या पुच्छे॑ बिभर्ष्य॒र्भ॒कम् ॥ ६ ॥

न । ते॒ । बा॒ह्वोः । बल॑म् । अ॒स्ति॒ । न । शी॒र्षे । न । उ॒त । म॒ध्य॒तः ।
अथ॑ । किम् । पा॒पया॑ । अ॒मु॒या । पुच्छे॑ । बि॒भ॒र्षि॒ । अ॒र्भ॒कम् ॥ ६ ॥

अत्र पुच्छेन दंशी वृश्चिकः संबोध्यते । हे वृश्चिक ते तव बाह्वोः हस्तयोः बलं परपीडाकारि सामर्थ्यं न अस्ति । तथा शीर्षे शिरसि बलं न अस्ति । उत अपि च मध्यतः । सप्तम्यर्थे तसिः । मध्ये मध्यावयवे बलं न अस्ति । अथेति प्रश्ने । अमुया अनया । अदःशब्दात् तृतीयैकवचने 'अदसोऽसेर्दादु दो मः' (पा ८,२,८०) इति उत्वमत्वे । पापया पापिष्ठया परपीडाकारिण्या बुद्ध्या अर्भकम् । अर्तेः औणादिके भन्प्रत्यये अर्भः । सः अल्पार्थवाची । तस्मात् 'अल्पे' (पा ५,३,८५) इति अल्पार्थे कन्प्रत्ययः । अत्यल्पं विषं पुच्छे किं बिभर्षि किमर्थं धारयसि । बाह्वादिस्थानेषु विषं नास्ति। पुच्छेऽपि वर्तमानम् अत्यल्पमेव । तदपि परपीडायै वहसि । तेनापि परपीडा न भवतीत्यर्थः ।

अ॒दन्ति॑ त्वा पि॒पीलि॑का॒ वि वृ॑श्चन्ति मयू॒र्यः[4] ।
सर्वे॑ भल ब्रवाथ॒ शार्को॑टमर॒सं वि॒षम् ॥ ७ ॥

अ॒दन्ति॑ । त्वा॒ । पि॒पीलि॑काः[5] । वि । वृ॒श्च॒न्ति॒ । म॒यू॒र्यः॑ ।
सर्वे॑ । भ॒ल॒ । ब्र॒वा॒थ॒ । शार्को॑टम् । अ॒र॒सम् । वि॒षम् ॥ ७ ॥

अत्र पूर्वार्धे सर्पः संबोध्यते । उत्तरार्धे विषनिर्हरणक्षमाः संबोध्यन्ते । हे सर्प त्वा त्वां पिपीलिका अदन्ति भक्षयन्ति । मयूर्यः मयूरस्त्रियः । 'जातेरस्त्रीविषयाद-योपधात्' (पा ४,१,६३) इति ङीष् । विवृश्चन्ति विशेषेण छिन्दन्ति सर्पम् ।

---

१. वैतु. मंत्रा. द्र.	२. बाह्वो रसो अस्ति पै १,४८,२.	३. किमिदं पै.	४. एवं सरो न गिष्यति.	५. मयूर्यः B.	६. तु. मा.WI; वैतु. P,P³,J,Cp पिपीलिका.

ओव्रश्चू छेदने । 'ग्रहिज्या' ( पा ६,१,१६ ) इत्यादिना संप्रसारणम् । हे सर्वे सर्पविपनिर्हरणक्षमा यूयं शार्कोटम् । शर्कोटो नाम सर्पविशेषः । तस्य संबन्धि । 'तस्येदम्' ( पा ४,३,१२० ) इति अण्[1] । विषम् अरसम् निर्वीर्यं [2]भलब्रवाथ साधु ब्रूत । भल भल्ल परिभाषणहिंसादानेषु । अस्मात् पचाद्यचि भल इति भवति । स साध्वर्थवाची । क्रियाविशेषणम् एतत् । 'सह' ( पा २,१,४ ) इति[3] योगविभागात् तिङन्तेन समासः । ब्रवीतेः पञ्चमलकारे 'लेटोऽडाटौ' ( पा ३,४,९४ ) इति आडागमः ।

य उभाभ्यां[4] प्रहरसि पुच्छेन चास्येन च ।
आस्ये[5] न ते विषं किमु ते पुच्छधावसत् ॥ ८ ॥

यः । उभाभ्याम् । प्रऽहरसि । पुच्छेन । च । आस्येन । च ।
आस्ये । न । ते । विषम् । किम् । ऊं इति । ते । पुच्छऽधौ । असत् ॥ ८ ॥

अत्र वृश्चिकः संबोध्यते — हे वृश्चिक यस्त्वं पुच्छेन आस्येन उभाभ्याम् । परस्परसमुच्चयार्थौ चकारौ । ताभ्यां प्रहरसि अन्यान् बाधसे तथापि आस्यपुच्छयोर्मध्ये ते तव आस्ये मुखे विषं न । अस्तीति शेषः । ते तव पुच्छधौ । पुच्छं धीयतेऽत्रेति पुच्छधिः । पुच्छशब्देन तद्गतरोमाणि विवक्ष्यन्ते । पुच्छधिशब्देन रोमवान् अवयवः । उशब्दः अप्यर्थे । तत्र पुच्छेऽपि किम् असत् विषं किं स्यात् । न भवेद् इत्यर्थः । अतो मुखपुच्छयोर्विषाभावाद् वृश्चिको न बाधत इत्यर्थः । अस्तेर्लेटि अडागमः ।

इति पञ्चमेऽनुवाके द्वितीयं सूक्तम् ।

याचकानाम् अभिलषितार्थप्राप्तये 'यदाशसा' इति द्वाभ्यां सरूपवत्साया गोर्दुग्धेन शृतं पायसं संपात्य अभिमन्त्र्य अश्नीयात् । " 'यं याचामि' ( अ ५,७,५ ), 'यदाशसा' इति याचिष्यन् । मन्त्रोक्तानि" ( कौसू ४६,५;६ ) इति हि सूत्रितम् ।

उक्थ्यक्रतौ मैत्रावरुणयाज्याहोमानुमन्त्रणम् 'इन्द्रावरुणा सुतपौ' इत्यनया कुर्यात् । उक्तं वैताने — "एतेषां याज्याहोमान् 'इन्द्रावरुणा सुतपौ' ( अ ७,६० ), 'बृहस्पतिर्नः' (अ ७,५३), 'उभा जिग्यथुः' (अ ७,४५) इति" (वैताश्रौ २५,२) इति ।

अभिचारकर्मणि 'यो नः शपात्' (अ ७,६१) इत्यनया अशनिहतवृक्षसमिध आदध्यात् ।

---

१. एवं स्वरो न सिध्यति. २. वैद्रु. मंपा. द्र. ३. सुविति S'. ४. उभयेन पै ४,१७,२. ५. आस्ये B[b].D,K,R,V,Cs; आस्ये च पै. ६. कुतः पै.

यदाशसा वदतो मे विचुक्षुभे यद् याचमानस्य चरतो जनाँ अनु ।
यद्[1] आत्मनि[2] तन्वो मे विरिष्टं[3] सरस्वती[4] तदा पृणद्[5] घृतेन ॥१॥

यत्[6] । आऽशसा । वदतः । मे । विऽचुक्षुभे । यत् । याचमानस्य । चरतः । जनान् । अनु ।
यत् । आत्मनि । तन्वः । मे । विऽरिष्टम् । सरस्वती[4] । तत् । आ । पृणत् । घृतेन ॥ १ ॥

वदतः याचितुं दातॄन् व्यक्तं भाषमाणस्य मे मम यद् अङ्गम् आशसा । शसु हिंसायाम् । संपदादिलक्षणो भावे क्विप् । आशसनेन दातृभिः कृतेन याच्ञाप्रतिघातेन भर्त्सनप्रहरणादिरूपेण हिंसनेन वा विचुक्षुभे विशेषेण क्षुभितं याच्यमानवस्त्वलाभेन विक्षिप्तम् आसीत् । तथा याचमानस्य । 'लक्षणहेत्वोः क्रियायाः' (पा ३,२,१२६) इति हेत्वर्थे शानच्प्रत्ययः । याचनाद्धेतोः जनान् दातॄन् अनु अनुलक्ष्य । 'अनुर्लक्षणे' (पा १,४,८४) इति अनुः कर्मप्रवचनीयः । वीप्सार्थे वा अनुः कर्मप्रवचनीयः । जनान्जनान् चरतः गच्छतः परिभ्राम्यतो मम यद् अङ्गं विचुक्षुभे इष्टफलप्राप्त्यभावेन पर्याकुलम् आसीत् मे मम तन्वः शरीरस्य विरिष्टम् । रिषेर्हिंसार्थान्निष्ठा । विशेषेण बाधितं क्लिष्टं तत्[1,6] अङ्गम् आत्मनि मय्येव क्षोभरहितं सरस्वती । स्थापयत्विति शेषः । यद्वा आत्मशब्दः स्वभाववाची । याच्ञायाः पूर्वं यथा क्षोभरहितं तथा स्वभावे स्थापयतु । न केवलं क्षोभराहित्यम् अपितु सरस्वती वाग्देवता तद् अङ्गं घृतेन घृतवत्सारभूतेन फलेन आ पृणत् आपूरयतु । पृण प्रीणने । लेटि अडागमः ।

सप्त क्षरन्ति[7] शिशवे मरुत्वते पित्रे पुत्रासो[8] अप्यवीवृतन्नृतानि[9] ।
[10]उभे इदस्योभे अस्य[10] राजत उभे यतेते [11]उभे अस्य[11] पुष्यतः ॥२॥

सप्त । क्षरन्ति । शिशवे । मरुत्वते । पित्रे । पुत्रासः । अपि । अवीवृतन् । ऋतानि । उभे इति ।
इत् । अस्य । उभे इति । अस्य । राजतः । उभे इति । यतेते इति । उभे इति । अस्य । पुष्यतः ॥

मरुत्वते मरुद्भिर्युक्ताय शिशवे अपां पुत्रभूताय वरुणाय सप्त नद्यः क्षरन्ति स्रवन्ति । 'सुदेवो असि वरुण यस्य ते सप्त सिन्धवः' (ऋ ८,६९,१२) इति हि दाशतय्याम् आम्नायते । 'अपां शिशुर्मातृतमास्वन्तः' (तै १,८,१२,१) इति मन्त्रान्तरम् । यद्वा मरुत्वत्पदसामर्थ्याद् इन्द्र उच्यते । मरुत्वते मरुद्भिस्तद्वते शिशवे । शो

---

१. तद् A,B^h,K,R,Bp²,W,I,O.T,K². २. रजसि पै २०,१४,२. ३. प्रत्रिंहीं पै. ४. सरस्वति P,P²,J,Bp²,E²,D²,O. ५. तदापृणद् A; °पृण E²; °पृणाद् पै. ६. वेतु. मंश. द्र. ७. स्रवन्ति पै २०,३०,२. ८. पिता पुत्रेभ्यो पै. ९. °वीवत° RW.; °वीवतन्नृतम् ऋ १०,१३,५; °वीवतपद्वतः पै. १०. °स्योभयस्य ऋ.; उभये पिप्रति? उभस्य पै. ११. उभयस्य ऋ. पै.

तनूकरणे इत्यस्माद् व्युत्पन्नः शिशुशब्दः । शत्रूणां शातयित्रे इन्द्राय । षष्ठ्यर्थे चतुर्थी । तस्याज्ञया सप्त सर्पणशीलाः स्रवणशीलाः सप्तसंख्याका वा नद्यः क्षरन्ति प्रवहन्ति । तथा च दाशतय्यां नदीवाक्यत्वेन अयं मन्त्र आम्नायते—

'इन्द्रो अस्माँ अरदद् वज्रबाहुरपाहन् वृत्रं परिधिं नदीनाम् ।
देवोऽनयत् सविता सुपाणिस्तस्य वयं प्रसवे याम उर्वीः ॥' (ऋ ३,३३,६) इति ।

किं च पित्रे । पितृशब्देन द्युलोक उच्यते । 'द्यौः पिता पृथिवी माता' (तैब्रा ३,७,५,५) इति मन्त्रवर्णात् । द्युलोकस्थिताय इन्द्राय इन्द्रप्रमुखाय देवगणाय वा । तात्स्थ्यात् ताच्छब्द्यम् । पुत्रासः । 'पुत्रः पुरु त्रायते' (नि २,११) इति निरुक्तम् । हविःप्रदानादिना पोषकाः पुत्रभूता वा मनुष्याः । अपिशब्दः चार्थे । ऋतानि सत्यभूतानि यज्ञादिरूपाणि कर्माणि अवीवृतन् वर्तयन्ति अनुतिष्ठन्ति । वर्ततेर्ण्यन्तात् लुङि चङि 'उर्ऋत्' (पा ७,४,७) इति ऋकारादेशः । उभे द्विवचनसामर्थ्याद् द्यावापृथिव्यावुच्येते । इत् अवधारणे । ते एव अस्य पितृपुत्रशब्दव्यवहृतस्य देवमनुष्यात्मकस्य संघस्य । निवासस्थाने भवतः इति शेषः । तथा उभे द्यावापृथिव्यौ अस्य देवमनुष्यसंघस्य राजतः ईश्वर्यौ भवतः । राजतिः ऐश्वर्यकर्मा (निघ २,२१) । तेषाम् आश्रयत्वेन तयोः स्वामित्वम् । उभे द्यावापृथिव्यौ यतेते प्रयत्नं कुरुतः देवमनुष्यार्थम् । यती प्रयत्ने । तथा उभे द्यावापृथिव्यौ अस्य । कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी । इमं देवमनुष्यसंघं पुष्यतः अन्नोदकैः पोषयतः । 'भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः' (ऋ १,१६४,५१) इति श्रुत्यन्तरात् । द्यावापृथिवीकर्तृकपोषणलिङ्गाद् याचकाभिलषितप्राप्तौ अस्य मन्त्रस्य विनियोगोऽभिहितः ।

इन्द्रा॑वरुणा सुतपावि॒मं सु॒तं सोमं॑ पिबतं॒ मद्यं॑[1] धृतव्रतौ॑ ।
यु॒वो॑[2] रथो॑ अध्व॒रो॑[3] दे॒ववी॑तये॒ प्रति॒ स्वस॑र॒मुप॑ यातु॑[4] पी॒तये॑[5] ॥ १ ॥

इन्द्रा॑वरुणा । सु॒त॒ऽपौ॒ । इ॒मम् । सु॒तम् । सोम॑म् । पि॒ब॒त॒म् । मद्य॑म् । धृ॒त॒ऽव्र॒तौ॒ ।
यु॒वोः । रथः॑ । अ॒ध्व॒रः । दे॒व॒ऽवी॑तये । प्रति॑ । स्वस॑रम्[6] । उप॑ । या॒तु॒ । पी॒तये॑ ॥ १ ॥

हे सुतपौ सुतस्य अभिषुतस्य सोमस्य पातारौ हे धृतव्रतौ विधृतकर्माणौ हे इन्द्रावरुणा इन्द्रावरुणौ मद्यम् मदार्हं मदकरं तृप्तिकरम् इमम् अस्मदीयं सुतम् अभि-

१. सद्यः पै २०,६,५. २. °मंवा ऋ ६,६८,१० पै. ३. अयो पै. ४. अध्वरं K, ऋ. पै.; अध्वरं > अध्वरो Km. ५. याति ऋ. पै. ६. स्वसारम् P.

पुतं सोमं पिबतम् । तदर्थं युवोः युवयोः अध्वरः हिंसारहितः शत्रुभिरपराजितो रथः पीतये युवयोः सोमपानाय देववीतये देवकामाय । षष्ठ्यर्थे चतुर्थी । यजमानस्य स्वसरम् गृहं प्रति उप यातु समीपे आगच्छतु ।

इन्द्रावरुणा मधुमत्तमस्य वृष्णः सोमस्य वृषणा वृषेथाम् ।
इदं वामन्धः 'परिषिक्तमासद्यास्मिन् बर्हिषि मादयेथाम्' ॥ २ ॥

इन्द्रावरुणा । मधुमत्ऽतमस्य । वृष्णः । सोमस्य । वृषणा । आ । वृषेथाम् ।
इदम् । वाम् । अन्धः । परिऽसिक्तम् । आऽसद्य । अस्मिन् । बर्हिषि । मादयेथाम् ॥ २ ॥

हे वृषणा वृषणौ अभिमतफलस्य वर्षकौ हे इन्द्रावरुणा इन्द्रावरुणौ युवां मधुमत्तमस्य अतिशयेन माधुर्योपेतस्य वृष्णः वर्षितुः अभिमतस्य सेक्तुः सोमस्य । भागम् इति शेषः । सोमं वा आ वृषेथाम् । आश्नीतम् इत्यर्थः । 'यथाभागम् आवृषायध्वमिति यथाभागम् अश्नीतेत्येवैतदाह' ( शब्रा २,४,२,२० ) इति वाजसनेयश्रुतेः । वाम् युवयोरर्थाय इदम् अन्धः अन्नं सोमलक्षणं परिषिक्तम् ग्रहचमसपात्रेषु अस्माभिः परितः सिक्तम् । अतः अस्मिन् स्तीर्णे बर्हिषि आसद्य उपविश्य मादयेथाम् सोमपानेन तृप्तौ भवतम् ।

यो नः शपादशपतः शपतो यश्च नः शपात् ।
वृक्ष इव विद्युता हत आ 'मूलादनु शुष्यतु' ॥ १ ॥

यः । नः । शपात् । अशपतः । शपतः । यः । च । नः । शपात् ।
वृक्षःऽइव । विऽद्युता । हतः । आ । मूलात् । अनु । शुष्यतु ॥ १ ॥

यः शत्रुः अशपतः सनिन्दम् उपालम्भम् अकुर्वाणान् नः अस्मान् शपात् निन्दावाक्यैर्भर्त्सयेत् । यश्च शपतः परुषवाक्यप्रयोक्तॄन् नः अस्मान् शपात् पुनर्निन्देत् स शत्रुः विद्युता अशन्या हतः भस्मीकृतो वृक्ष इव स यथा मूलसहितः शुष्यति एवम् आ मूलात् । अभिविधावाकारः । पितृपुत्रादिभिः सहितः अनु शुष्यतु अनुक्रमेण विनश्यतु । शुष शोषणे । दिवादिः ।

इति तृतीयं सूक्तम् ।

इति सप्तमे काण्डे पञ्चमोऽनुवाकः ।

१. 'षिक्तमस्मे आस' ऋ ६,६८,११ पै २०,६,६.　　२. मादयध्वम् ऋ ६,५२,१३; मादयस्व ऋ १०,१७,८.　　३. मूलादनुसंदह अ १२,५,६३; 'शुष्यति पै २०,१७,३.

षष्ठेऽनुवाके चत्वारि सूक्तानि। तत्र 'ऊर्जं बिभ्रत्' इति आद्ये सूक्ते आदितः पङ्चं देशान्तराद् आगतः स्वगृहं दृष्ट्वा समिधो गृहीत्वा प्रजपन् स्वगृहम् आगत्य हस्तस्थाः समिधो वामेन हस्तेन धृत्वा वलीकतृणानि दक्षिणेन हस्तेन स्पृष्ट्वा पङ्चं जपित्वा गृहं प्रविश्य आहितेऽग्नौ अनेन पङ्चेन ताः समिधः पुष्ट्यर्थम् आदध्यात्। सूत्रितं हि—"'ऊर्जं बिभ्रद्' इति गृहसंकाशे जपति। सव्येन समिधो दक्षिणेन शालावलीकं संस्तभ्य जपति। अतिव्रज्य समिध आधाय" (कौसू २४,११-१२) इति।

स्वगृहे वर्तमानानां सर्वेषां सांमनस्यार्थं च समिध आनीय 'ऊर्जं बिभ्रत्' इति सूक्तं जपित्वा ताः समिधः सकृद् आदध्यात्। तद् उक्तं संहिताविधौ—"समिध आदाय 'ऊर्जं बिभ्रद्' इति [1]अमंकल्पयन्नेत्य[1] सकृद् आदधाति" (कौसू ४२,८) इति।

तथा क्रव्याद्विसर्जनानन्तरं सर्वेऽपि एतत् सूक्तं जपन्तो यजमानगृहं प्रविशेयुः। "'निःसालाम्' (अ २,१४) इति शालानिवेशनं संप्रोक्ष्य। 'ऊर्जं बिभ्रत्' इति प्रपादयति" (कौसू ७२,४;५) इति हि कौशिकं सूत्रम्।

तथा अन्त्येष्टौ शवदहनानन्तरं संस्कर्ता 'ऊर्जं बिभ्रत्' इति पङ्चं जपन् स्वकीयान् स्वगृहं प्रवेशयेत्।

'इहैव स्त' इत्यनया प्रवासं करिष्यन् स्वकीयान् गृहान् पुत्रादींश्चावेक्षेत। "'इहैव स्त' (७) इति प्रवत्स्यन्नवेक्षते" (कौसू २४,१६) इति हि सूत्रम्।

आग्रहायण्यां 'यदग्ने तपसा' इति द्वाभ्याम् ऋग्भ्यां क्षीरौदनपुरोडाशस्तानाम् अन्यतमं संपात्य अभिमन्त्र्य मेधाकामः अश्नीयाद् अग्निम् उपतिष्ठेत वा। "'यदग्ने तपसा' (अ ७,६३) इत्याग्रहायण्या भक्षयति। अग्निम् उपतिष्ठते" (कौसू १०,२२;२३) इति सूत्रितत्वात्।

तथा उपनयने अग्निकार्ये आभ्याम् ऋग्भ्याम् अग्निं परिसमूहेत्। "'सं मा सिञ्चन्तु' (अ ७,३४) इति त्रिः पर्युक्षति। 'यदग्ने तपसा तपः', 'अग्ने तपस्तप्यामहे' इति द्वाभ्याम् (अ ७,६३) परिसमूहयति" (कौसू ५७,२२;२३) इति।

आवसथ्याधाने 'अयमग्निः' इत्येषा महाशान्तिगणे (कौसू ९,५) आवपनीया। 'निव्यम् अग्निं शामयिष्यन्' इति प्रक्रम्य "'अयमग्निः सत्पतिः' (अ ७,६४), 'नडम्'[2] आ रोह' (अ १२,२) इत्यनुवाकं महाशान्तिं च शान्त्युदके आवपति[3]" (कौसू ६९,१;७) इति कौशिकसूत्रात्।

तथा अग्निचयने आतिच्छन्दसीष्टकानुमन्त्रणानन्तरम् अनया गार्हपत्ये[4] चीयमाना नाम इष्टकां ब्रह्मा अनुमन्त्रयते। तद् उक्तं वैताने—"'अग्निं होतारं मन्ये' (अ २०,६७,१)

---

१. संकल्पयन्नेत्य S'. २. नडम् रोह. ३. आवपंत Bl. ४. गार्हपत्ये S'.

'इत्यातिच्छन्दसीः। गार्हपत्य †उक्तम्[१]। 'अयमग्निः† सत्पतिः', 'येना सहस्रम्' (अ ९,५,१७) इति" (वैताश्री २९,८;९) इति।

ऊर्जं बिभ्रद् वसुवनिः[२] सुमेधा अघोरेण चक्षुषा मित्रियेण।
गृहानैमि[३] सुमना वन्दमानो[४] रमध्वं मा बिभीत मत् ॥ १ ॥

ऊर्जम्[५]। बिभ्रत्। वसुऽवनिः। सुऽमेधाः। अघोरेण। चक्षुषा। मित्रियेण।
गृहान्। आ। एमि। सुऽमनाः। वन्दमानः। रमध्वम्। मा। बिभीत। मत् ॥ १ ॥

ऊर्जम् अन्नं बिभ्रत् धारयन् वसुवनिः अन्नादिसाधनस्य वसुनो धनस्य संभक्ता। 'छन्दसि वनसनरक्षिमथाम्' (पा ३,२,२७) इति वनतेः कर्मोपपदाद् इन्प्रत्ययः। सुमेधाः शोभनमेधायुक्तः। 'नित्यमसिच्प्रजामेधयोः' (पा ५,४,१२२) इति असिच् समासान्तः। अघोरेण अभयंकरेण न केवलम् अप्रतिकूलेन किं तु मित्रियेण मित्रं सुहृत् तदर्हेण अनुकूलेन स्निग्धेन चक्षुषा। पश्यन्निति शेषः। सुमनाः शोभनमनस्कः धनादिसाहित्येन प्राप्तसौमनस्यः वन्दमानः स्तुवन् गृहान् ऐमि आगच्छामि। 'गृहाः पुंभूम्नि' (द्र. अको २,२,५) इति वचनाद् गृहशब्दः पुंलिङ्गो बहुवचनान्तश्च। हे गृहाः यूयं रमध्वम् क्रीडत सुखिनः स्यात। मयाऽधिपतिनेति शेषः। अतः मत् मत्तः। 'एकवचनस्य च[६]' (पा ७,१,३२) इति अत् आदेशः। देशान्तराद् आगच्छतो मत्तः मा बिभीत अन्यो गृहस्वामी सन् अस्मान् प्रविशतीति भयं मा प्राप्नुत। 'भीत्रार्थानां भयहेतुः' (पा १,४,२५) इति मत् इत्यत्र[७] अपादानसंज्ञायां पञ्चमी।

इमे गृहा मयोभुव ऊर्जस्वन्तः पयस्वन्तः।
पूर्णा वामेन[८] तिष्ठन्तस्ते नो जानन्त्वायतः[९] ॥ २ ॥

इमे। गृहाः। मयःऽभुवः। ऊर्जस्वन्तः। पयस्वन्तः।
पूर्णाः। वामेन। तिष्ठन्तः। ते। नः। जानन्तु। आऽयतः ॥ २ ॥

मयोभुवः। मय इति सुखनाम (द्र. निघ ३,६)। सुखस्य भावयितारः ऊर्जस्वन्तः अन्नरसवन्तः पयस्वन्तः क्षीरादिसमृद्धाः वामेन वननीयेन धनेन पूर्णाः संपूर्णाः समृद्धास्तिष्ठन्तः ते इमे पुरतो दृश्यमाना अस्मदीया गृहाः आयतः प्रवासाद् आगच्छतो नः अस्मान्

---

१. इत्यतिच्छान्दसीर्गार्हपत्य उक्थम् RG. † उक्थ्येयमग्निः S'. २. वः सुमनां मा ३,४१ आपश्री ६,२७,५ लाश्री ३,३,१ शांगृ ३,७,२; वः सुमनिः पै ३,२६,१; वः सुवनिः आपश्री ६,२७,३; पसुमनाः आपश्री १६,१६,४. ३. गृहानागां आपश्री ६,२७,५; गृहानेमि लाश्री. हिगृ १,२९,१. ४. मनसा मोदमानः मा. पै. आपश्री. शांगृ. हिगृ.; मनसा दैवेन लाश्री. ५. ऊर्जम् P. ६. 'पञ्चम्या अत्' शंपा. ७. इत्यस्य S'. ८. वामस्य पै ३,२६,२. ९. 'न्तु जानतः पै.

जानन्तु स्वामित्वेन अवबुध्यन्ताम्। आयत इति। आङ्पूर्वाद् एतेः शतरि 'इणो यण्' (पा ६,४,८१) इति यण्।

येषा॑म॒ध्येति॑[1] प्र॒वस॑न्[2] येषु॑ सौमन॒सो[3] ब॒हुः[4] ।
गृ॒हानुप॑[5] ह्वयाम॒हे[6] ते नो॑ जान॒न्त्वाय॒तः[7] ॥ ३ ॥

येषा॑म् । अ॒धि॒ऽएति॑ । प्र॒ऽवस॑न् । येषु॑ । सौ॒म॒न॒सः । ब॒हुः ।
गृ॒हान् । उप॑ । ह्व॒या॒म॒हे॒ । ते । नः॒ । जा॒न॒न्तु॒ । आ॒ऽय॒तः ॥ ३ ॥

प्रवसन् प्रवासं कुर्वन् देशान्तरे वसन् पुरुषो येषाम् यान् गृहान् अध्येति स्मरति। इक् स्मरणे। 'अधीगर्थदयेशां कर्मणि' (पा २,३,५२) इति येषाम् इत्यत्र षष्ठी। येषु गृहेषु सौमनसः सौमनस्यवान् बहुः अधिकः पदार्थो वर्तते। सुमनःशब्दाद् भावे अण् द्रष्टव्यः। सौमनसम् अस्यास्तीति अर्शआदित्वाद् अच्प्रत्ययो मत्वर्थीयः। सुमनसोऽयम् इति वा। 'तस्येदम्' (पा ४,३,१२०) इति अण्। तान् गृहान् उक्तविशेषणान् उप ह्वयामहे प्राप्तुं प्रार्थयामहे। अनुज्ञास्वीकाराय यत् प्रार्थनं तद् उपहव इत्युच्यते। 'निसमुपविभ्यो ह्वः' (पा १,३,३०) इति आत्मनेपदम्। ते नो जानन्त्वायत इति पादो व्याख्यातः।

उप॑हूता॒ भूरि॑धनाः[8] सखा॑यः स्वा॒दुसं॑मुदः ।
अ॒क्षु॒ध्या अ॑तृ॒ष्या स्त॒ गृहा॒ मास्मद् बिभी॑तन ॥ ४ ॥

उप॑ऽहूताः । भूरि॑ऽधनाः । सखा॑यः । स्वा॒दु॒ऽसं॑मुदः ।
अ॒क्षु॒ध्याः । अ॒तृ॒ष्याः । स्त॒ । गृहाः॑ । मा । अ॒स्मत् । बि॒भी॒त॒न ॥ ४ ॥

हे गृहाः उपहूताः अनुज्ञार्थं प्रार्थिता यूयं भूरिधनाः प्रभूतधनोपेताः स्त भवत। सखायः समानख्याना मित्रभूता भवत। स्वादुसंमुदः स्वादुभिर्मधुरैः पदार्थैः संमोदमाना[9] भवत। अक्षुध्याः क्षुधं बुभुक्षाम् अर्हन्तीति क्षुध्याः न क्षुध्या अक्षुध्याः। अतृष्याः तृषं पिपासाम् अर्हन्तीति तृष्याः न तृष्या अतृष्याः क्षुत्तृष्णोपेतैर्जनैर्युक्ता मा भूत अपि तु धनादिसमृद्ध्या सर्वदा तृप्तैर्जनैर्युक्ता भवतेत्यर्थः। क्षुत्तृष्णाशब्दाभ्यां 'तदर्हति' (पा ५,१,६३) इत्यर्थे 'छन्दसि च' (पा ५,१,६७) इति यप्रत्ययः। अस्तेर्लोटि मध्यमबहुवचने रूपं स्तेति। हे गृहाः अस्मत् अस्मत्तः देशान्तराद् आगच्छद्भ्यो मा बिभीतन भयं मा प्राप्नुत। ञिभी भये। लोटि तस्य तनादेशः।

---

१. येऽध्येति माग्र १,१४,५. २. प्रवसन्येषु>प्रवसन्त्येषु B; प्रवसन्नेषु R, लाश्रौ ३, ३,१; °सन्नेति हिगृ १,२९,१. ३. सौमनसं मागृ. ४. ?बभुः हिगृ.; महत् मागृ. ५. तेनोप मागृ. ६. ह्वयाम यान् पै ३,२६,४, ह्वयामहे लाश्रौ. ७. जानन्तु जानुतः मा ३.४२ आपश्रौ ६,२७,३ शांगृ ३,७,२ हिगृ.; जानन्त्वागतम् मागृ. ८. भूरिसखाः हिगृ. ९. एवं स्वरो न सिध्यति.

उप॑हूता इ॒ह गाव॒ उप॑हूता अजा॒वय॑ः ।
अथो॒ अन्न॑स्य की॒लाल॒[1] उप॑हूतो गृ॒हेषु॑ नः[2] ॥ ५ ॥

उप॑ऽहूताः । इ॒ह । गाव॑ः । उप॑ऽहूताः । अ॒ज॒ऽअ॒वय॑ः[3] ।
अथो॒ इति॑ । अन्न॑स्य । की॒लाल॑ः । उप॑ऽहूतः । गृ॒हेषु॑ । न॒ः ॥ ५ ॥

इह एषु अस्मदीयेषु गृहेषु गावः धेनवः उपहूताः अनुज्ञार्थं प्रार्थिता भवन्तु। अजावयः अजाश्च अवयश्च उपहूताः सन्तु । अथो अपि च नः अस्माकं गृहेषु अन्नस्य कीलालः सारभूतोऽशः उपहूतो भवतु। एतद् उपलक्षणम्। यद्यद् गृहे भोग्यं वर्तते तत् सर्वम् अनुज्ञायै प्रार्थितं भवत्वित्यर्थः ।

सू॒नृता॑वन्तः सु॒भगा॑ इरा॑वन्तो हसामु॒दाः[4] ।
अ॒तृ॒ष्या[5] अ॑क्षु॒ध्या[6] स्त॒ गृहा॒ मास्मद् बि॑भीतन ॥६॥

सू॒नृता॑ऽवन्तः । सु॒ऽभगा॑ः । इरा॑ऽवन्तः । ह॒सा॒मु॒दाः ।
अ॒तृ॒ष्याः । अ॒क्षु॒ध्याः । स्त॒ । गृहा॑ः । मा । अ॒स्मत् । वि॒भी॒त॒न ॥ ६ ॥

हे गृहाः सूनृतावन्तः । प्रियसत्यात्मिका वाक् सूनृतेत्युच्यते । तद्वन्तः स्त भवत । अरिष्टादिनिमित्तवाग्राहित्येन पुत्रमित्रादिसंपत्तिनिमित्तवाक्सहिता भवतेत्यर्थः। प्रवसति यजमाने गृहे जातमप्यरिष्टं पुनरागच्छति गृहस्वामिनि तद्दिवसे न ज्ञापनीयम् इत्याश्वलायनेनोक्तम्—'विदितमपि अलीकं न तद् अहर्ज्ञापयेयुः' ( आश्रौ २,५,१८ ) इति। [7]सर्वदापि अरिष्टराहित्यम् अनेन पदेन प्रार्थ्यते। सुभगाः शोभनभाग्योपेता भवत । इरावन्तः इरा अन्नं तद्वन्तः स्त । हसामुदाः । हसे हसने। भावे क्विप्। तदन्तात् तृतीया हसेति। मोदतेः इगुपधलक्षणः कः। 'तत्पुरुषे कृति बहुलम्' ( पा ६,३,१४ ) इति बहुलग्रहणात् तृतीयाया अलुक्[8]। हासेन मोदमानाः। गृहस्थितानां हासेन तदीयः संतोषोऽभिव्यज्यते । हासाभिव्यक्तसंतोषा भवत। अतृष्या अक्षुध्या इत्यर्धर्चो व्याख्यातः (४)।

इ॒हैव स्त॒ मानु॑[9] गात॒ विश्वा॑ रू॒पाणि॑ पुष्यत ।
ऐष्या॑मि भ॒द्रेणा॑ स॒ह भूया॑सो भवता॒ मया॑ ॥ ७ ॥

---

१. यो रसः लाश्रौ ३,२,१.　　२. णः Bh,D,Km,R,Sm,V,Cs; न E१,O१,R१.
३. समापत्रा. अनवग्रहः; तैपत्रा ६,५,१०,१ अ॒जा॒ऽअ॒वय॑ः.　　४. °मुदः हिगृ १,२९,१.
५. °ष्यासो पै ३,२६,२.　　६. अनश्या हिगृ १,२९,१.　　७. ससर्वदापि S'.　　८. वैतु. पत्रा. द्र.　　९. मार्प मा ३,२१.

इह । एव । स्त । मा । अनु । गात । विश्वा । रूपाणि । पुष्यत ।
आ । एष्यामि । भद्रेण । सह । भूयांसः । भवत । मया ॥ ७ ॥

हे गृहाः इहैव अस्मिन् प्रदेश एव स्त भवत सुखिनो वर्तध्वम्। मा अनु गात प्रवसन्तं मां गृहस्वामिनं माऽनुगच्छत । एतेः 'माङि लुङ्' (पा ३,३,१७५)। 'इणो गा लुङि' (पा २,४,४५) इति गादेशः । विश्वा विश्वानि सर्वाणि रूपाणि रूपवन्ति निरूप्यमाणानि वा पुत्रादीनि वस्तूनि पुष्यत समृद्धानि कुरुत। भद्रेण भन्दनीयेन धनेन सह ऐष्यामि पुनरागमिष्यामि । ततः मया देशान्तरात् पुनरागतेन अर्जितधनेन भूयासः अतिप्रभूता भवत । भद्रेणा सह, भवता मया इत्युभयत्र छान्दसः सांहितिको दीर्घः ।

यदंग्ने तपसा तपं 'उपतप्यामहे तपः'[1] ।
प्रियाः[2] श्रुतस्यं भूयास्मायुष्मन्तः सुमेधसः ॥ १ ॥

यत् । अग्ने । तपसा । तपः । उपऽतप्यामहे । तपः ।
प्रियाः[2] । श्रुतस्य । भूयास्म । आयुष्मन्तः । सुऽमेधसः ॥ १ ॥

हे अग्ने तपसा तव संबन्धिना पर्युक्षणपरिसमूहनसमिदाधानादिरूपेण कर्मणा यत् तपो निर्वर्तयितव्यम् अस्ति तत् तपः उप[3] त्वत्समीपे तप्यामहे[3] आर्जयामः। यद्वा तपसा कृच्छ्रचान्द्रायणादिरूपेण यत् तपः तपनं शरीरक्लेशनम् । 'तपः क्लेशसहिष्णुत्वम्' इति हि तद्विदः । कृच्छ्रादिचरणेन यच्छरीरशोषणं तत् तप उप तप्यामहे। तव समीपे परिचरणेन आर्जयाम इत्यर्थः। यद्वा तपसा। तप पर्यालोचने (?) इत्यस्माद् असुन्। पर्यालोचनेन देवताविषयज्ञानेन । 'मनसश्चेन्द्रियाणां चैकाग्र्यं तप उच्यते' इति हि तद्विदः। सहार्थे तृतीया। तेन तपसा सहितं तपः कृच्छ्रचान्द्रायणादिरूपो नियमः। 'शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' इति हि पातञ्जलं योगसूत्रम् (२,३२)। तत् तपः हे अग्ने त्वत्समीपे परिचरणेन तप्यामहे आर्जयामः। 'तपस्तपःकर्मकस्यैव' (पा ३,१,८८) इति कर्मकर्तरि यगात्मनेपदे। तेन तपसा श्रुतस्य सम्यग् अधीतस्य वेदशास्त्रादेः प्रियाः प्रियतमाः सुहृदः निवासस्थानत्वेन प्रीणयितारः आयुष्मन्तः दीर्घकालजीविनः सुमेधसः शोभनधारणाशक्तिसहिता भूयास्म ।

अग्ने तपस्तप्यामह उप तप्यामहे तपः ।
श्रुतानि शृण्वन्तो वयमायुष्मन्तः सुमेधसः ॥ २ ॥

---

1. उपप्रेक्षामहे वयम् पै १९,२८,१२; ब्रह्मचर्यमुपेमसि माग १,१,१८. 2. मु. सा. वैप्र. A,B[b],K,K[m],R,V,M,P,P[2],J,Cp.Bp[2] प्रिया. 3. वैप्र. पदा. द.

अग्ने । तपः । तप्यामहे । उप । तप्यामहे । तपः ।
श्रुतानि । शृण्वन्तः । वयम् । आयुष्मन्तः । सुऽमेधसः ॥ २ ॥

हे अग्ने तपस्तप्यामहे शरीरशोषणरूपं नियमम् आर्जयामः । किम् अन्यत्र । नेत्याह—उप तप्यामहे [तपः] । तव समीपे एव तादृशं तपः साधयाम इत्यर्थः । पूर्ववत् कर्मकर्तरि यगात्मनेपदे । तेन तपसा श्रुतानि सम्यग् अधीतानि वेदशास्त्रादीनि शृण्वन्तः । हेत्वर्थे शतृप्रत्ययः । वेदशास्त्रश्रवणाद्धेतोः वयम् आयुष्मन्तः दीर्घकालजीवनवन्तः सुमेधसः समीचीनधारणाशक्तियुक्ताश्च । भूयास्मेति शेषः ।

अयमग्निः सत्पतिर्वृद्धवृष्णो[1] रथीव पत्तीनजयत्[2] पुरोहितः ।
[3]नाभा पृथिव्यां[3] निहितो दविद्युतदधस्पदं कृणुतां[4] ये पृतन्यवः ॥ १ ॥

अयम् । अग्निः । सत्ऽपतिः । वृद्धऽवृष्णः । रथीऽइव । पत्तीन्[5] । अजयत् । पुरःऽहितः ।
नाभा । पृथिव्याम् । निऽहितः । दविद्युतत् । अधःऽपदम् । कृणुताम् । ये । पृतन्यवः ॥१॥

सत्पतिः सतां महतां देवानां हविःप्रदानेन पालयिता सतो विद्यमानस्य स्थावरजङ्गमादेर्जगतः स्वामी वा वृद्धवृष्ण्यः[6] । [7]वृष्णिभवं वृष्ण्यं बलम् । प्रवृद्धबलः पुरोहितः पुरतो होमार्थम् ऋत्विग्भिर्निहितः पुरोभाविहितकारी वा । अयं पुरोवर्ती अग्निः गार्हपत्यरूपः पत्तीम्[8] पालयित्रीं प्रजाम् । पत्नीवत् पत्नी । पत्नीभूताम् इष्टकां वा अजयत् जयति स्वाधीनां करोति । तत्र दृष्टान्तः—रथी रथवान् पुरुषः पत्तीम् प्रजाम् अन्यदीयां स्वीयां वा नारीं यथा जयति स्वाधीनां करोति एवम् अग्निरिति । किं च पृथिव्याम् देवयजनलक्षणायां भूमौ तत्रापि नाभा नाभौ नाभिस्थानीयायाम् उत्तरवेद्याम् । 'यद् उत्तरवेदीनाभिः' ( ऐब्रा १,२८ ) इति ऐतरेयश्रुतेः । तत्र निहितः स्थापितः दविद्युतत् अत्यर्थं दीप्यमानः । द्योततेर्यङ्लुकि 'दाधर्ति' ( पा ७,४,६५ ) इति सूत्रे निपातनाद् रूपसिद्धिः । तादृशोऽग्निः अधस्पदम् पादस्याधोदेशे कृणुताम् कुरुताम् । कान् इति तत्राह— ये पृतन्यवः पृतनां संग्रामम् इच्छवः शत्रवस्तान् मदीयपादस्याधोदेशे निधत्तादिति ।

इति षष्ठेऽनुवाके प्रथमं सूक्तम् ।

आवसथ्याधाने मथनार्थं यजमानः अरण्यां 'पृतनाजितम्' इति ऋचा अग्निम् आह्वयेत् । "मूलत उत्तरारणिम् उपसंधाय । 'पृतनाजितम्' इत्याह्वयति" ( कौसू ६९,२१;२२ ) इति हि सूत्रम् ।

---

१. 'तिरश्चेकितानः ना १५,५१ तै ४,७,१३,३ मै २,१२,४. २. पुर्वीनं° > पुत्तीनं° A,K[m]; पुर्वीनं° D,R,P[3],M,W.E[1],I. ३. पृष्ठे पृथिव्या ना. तै. मै.; °पृथिव्या पै २०,८,६. ४. पृ. १२२ टि. ९ द्र. ५. पु. नेग.; वैदु. P[1],J,Cp.Bp[1] पुर्वीन्; P पर्वान्. ६. वैदु. मैंग. द्र. ७. वृष्णि भवं शेगा. ८. इत्याहूप Bl.

शरीरे काकाभिघातदोषशान्त्यर्थम् 'इदं यत् कृष्णः' इति द्वाभ्याम् ऋग्भ्याम् उदकम् अभिमन्त्र्य काकोपहतशरीरं प्रक्षालयेत्।

तथा [1]काकावदंशनदोषशान्तये आभ्याम् ऋग्भ्याम् उल्मुकम् अभिमन्त्र्य काकावमृष्टं शरीरं परिभ्रामयेत्।

काकस्पर्शनदोषशान्त्यर्थं 'श्यावदता' (अ ७,६७,३) इति मन्त्रोक्तरोगशान्तये च 'प्रतीचीनफलः' इति त्रिभिः अपामार्गसमिध आदध्यात्।

तद् उक्तं संहिताविधौ—" 'इदं यत् कृष्णः' ( अ ७,६६ ) इति [2]कृष्णशकुनेनाधिक्षिप्तं [3]प्रक्षालयति। अपमृष्ट[4] पर्यग्नि करोति। 'प्रतीचीनफलः' (अ ७,६७) [5]इत्यपामार्गेभ्य आपामार्गीरा-दधाति[5]" ( कौसू ४६,४७–४९) इति।

विवाहे कुमार्याः स्नापनानन्तरं 'यद् दुष्कृतम्' (अ ७,६७,२;३) इति द्वाभ्याम् ऋग्भ्याम् अङ्गानि वाससा प्रमार्जयेत्। " 'यद् दुष्कृतम्' इति वाससाऽङ्गानि प्रमृज्य" (कौसू ७६,१ ) इति हि सूत्रम्।

'यदन्तरिक्षे', 'पुनर्मैत्विन्द्रियम्' इति द्वृचस्य बृहद्गणे पाठात् शान्त्युदकाभिमन्त्रणादौ विनियोगः। सूत्रितं हि—'यदन्तरिक्षे' (अ ७,६८), 'पुनर्मैत्विन्द्रियम्'. ( अ ७,६९), 'शिवा नः' ( अ ७,७१ ) इति ( कौसू ९,२ )।

तथा 'पुनर्मैत्विन्द्रियम्' इत्यनया प्रतिग्रहदोषशान्तये प्रतिग्राह्यं वस्त्वभिमन्त्र्य गृह्णीयात्।

तथा नित्यनैमित्तिककाम्येषु कर्मसु पाकयज्ञतन्त्रे च कर्मसमापनानन्तरं न्यूनातिरेकदोषशान्तये अनया आत्मानम् अनुमन्त्रयेत।

सूत्रितं हि—" 'यदन्नम्' ( अ ६,७१ ), 'पुनर्मैत्विन्द्रियम्' इति प्रतिगृह्णाति। उत्तमा सर्वकर्मा। वशाया पाकयज्ञा व्याख्याता[6]" ( कौसू ४५,१७-१९ ) इति।

तथा गोदानाख्ये संस्कारकर्मणि वपनार्थम् अनया क्षुरं संमार्ज्य नापिताय प्रयच्छेत्। " 'पुनः प्राणः' ( अ ६,५३,२ ), 'पुनर्मैत्विन्द्रियम्' इति त्रिर्निमृज्य" ( कौसू ५४,१ ) इति हि सूत्रम्।

सवयज्ञेषु 'पुनर्मैत्विन्द्रियम्' इत्यनया इन्द्रियाणाम् अभिमर्शनम् अनुमन्त्रणं च कुर्यात्। सूत्रितं हि—" 'वाङ्म आसन्' ( अ १९,६० ) इति मन्त्रोक्तान्यभिमन्त्रयते[7]। 'बृहता' (अ ५,१०,८), 'यौश्च' (अ ६,५३), 'पुनर्मैत्विन्द्रियम्' इति प्रतिमन्त्रयते" (कौसू ६६,१;२) इति।

---

१. काकादंशन° S'. २. °शकुनिना° Bl; °नेनाविक्षि° S'. ३. क्षालयति S'.
४. उप° Bl. ५. °गेभ्येऽपामा° Bl. ६. वसायपाकयज्ञाय व्याख्यातेति S'.
७. °भिमृशते S'.

तथा ब्रह्मचारिणो दण्डभङ्गे अनया अन्यं दण्डम् अभिमन्त्र्य ब्रह्मचारी गृह्णीयात्। 'यद्यस्य दण्डो भिद्येत' इति प्रक्रम्य सूत्रितम्—"शीर्णे भग्ने[1] नष्टेऽन्यं कृत्वा 'पुनर्मैत्विन्द्रियम्' इत्याददीत[2]" ( कौसू ५७,७;८ ) इति।

अग्निष्टोमे तृतीयसवने हौत्रादिधिष्ण्येषु विहृतान् अग्नीन् 'पुनर्मैत्विन्द्रियम्' इति ऋचा ब्रह्मा अनुमन्त्रयेत। "विहृतान् अनुमन्त्रयते। उत्तरयोः सवनयोः '[3]पुनः प्राणः[3]' ( अ ६,५३,२ ), 'पुनर्मैत्विन्द्रियम्' इति" ( वैताश्रौ १८,४ ) इति हि वैतानं सूत्रम्।

आहिताग्नेः प्रेतसंस्कारे 'ओ चित् सखायम्' (अ १८,१) इति काण्डजपानन्तरं सारस्वतहोमेषु 'सरस्वति व्रतेषु' इति द्यृचेन आज्यं जुहुयात्।

तथा चातुर्मास्ये वैश्वदेवपर्वणि सारस्वतयागं 'सरस्वति व्रतेषु' इति ब्रह्मा अनुमन्त्रयेत। 'सविता प्रसवानाम्' (अ ५,२४), 'सरस्वति व्रतेषु', ( अ ७,७० ), 'प्रपथे पथाम्' ( अ ७,१० ) इति हि वैतानं सूत्रम् (वैताश्रौ ८,१३)।

तथा अन्वारम्भणीयेष्टौ सारस्वतचरुयागम् अनया अनुमन्त्रयेत। उक्तं वैताने—"सरस्वत्यै[4] चरुं सरस्वते द्वादशकपालं 'सरस्वति व्रतेषु', 'यस्य व्रतम्' (अ ७,४१) इति" ( वैताश्रौ ८,२०) इति।

पृतनाजितं सहमानमग्निमुक्थैर्हवामहे परमात् सधस्थात्।
स नः पर्षदति दुर्गाणि विश्वा क्षामद् देवोऽति दुरितान्यग्निः ॥ १ ॥

पृतनाऽजितम्। सहमानम्। अग्निम्। उक्थैः। हवामहे। परमात्। सधऽस्थात्।
सः। नः। पर्षत्। अति। दुःऽगानि। विश्वा। क्षामत्। देवः। अति। दुःऽइतानि। अग्निः॥

पृतनाजितम् शत्रुसंग्रामजेतारं तदेवाह—सहमानम् अभिभवन्तम्। षह अभिभवने इति नैरुक्तो धातुः। यद्वा षह मर्षणे। देवतागणार्थं, यजमानादिभिर्दीयमानं हविर्भारं तितिक्षमाणम् अग्निम् मथ्यमानं परमात् उत्कृष्टात् सधस्थात् सहस्थानाद् अरणिलक्षणात् 'सध मादस्थयोश्छन्दसि' ( पा ६,३,९६ ) इति सहस्य सधादेशः। सर्वस्माल्लोकात् उत्कृष्टाद् देवतानां सहनिवासस्थानाद् द्युलोकाद् वा उक्थैर्वक्तव्यैः स्तोत्रैः हवामहे आह्वयामः। ह्वयतेः 'बहुलं छन्दसि' ( पा ६,१,३४ ) इति संप्रसारणम्। स "आहुतोऽग्निः नः अस्माकं विश्वा विश्वानि दुर्गाणि दुर्गमनानि कष्टानि अरिष्टानि अति पर्षत् अतिपारयतु। यथा अस्माकम् आपदो न भवन्ति तथा करोत्विति। पॄ पालनपूरणयोः इत्य-

---

१. भिद्ये Bl. २. °दधीत Bl. ३. नास्ति RG. प्रभृ. ४. °स्वत्यै च RG. ५. °नमग्निमुग्रं ( °मुग्रमग्निं तैआ. ) हुवेम पै २०,३२,८ तैआ १०,१,१६. ६. नावेव ऋ १,९९,१; क्षामाद् पै [मूको.]. ७. सिन्धुं ऋ.; देवोऽधि पै. ८. °तात्यग्निः ऋ. पै [मूको.]. तैआ. ९. परिषत् J. १०. आहुतो° S'.

स्मात् लेटि 'सिब्बहुलं लेटि' (पा ३,१,३४) इति सिप्। अडागमः। अरिष्टहेतुपापनिवारणम् आशास्ते चतुर्थपादेन। देवः दीप्यमानोऽग्निः मथ्यमानः दुरितानि दुर्गमनानि पापानि अति क्षामत् अत्यर्थं क्षामाणि दग्धानि करोतु। अरिष्टहेतुभूतं पापसंघं निःशेषेण विनाशयत्वित्यर्थः। क्षामत् इति। क्षै क्षये। अस्मान्निष्ठायां 'क्षायो मः' (पा ८,२,५३) इति निष्ठातकारस्य मकारादेशः। क्षामशब्दात् तत् करोतीत्यर्थे णिच्। तस्मात् लेटि तिप इकारस्य 'इतश्च लोपः' (पा ३,४,९७) इति लोपः। 'लेटोऽडाटौ' (पा ३,४,९४) इति अडागमः। 'छन्दस्युभयथा' (पा ३,४,११७) इति तिप आर्धधातुकत्वात् 'णेरनिटि' (पा ६,४,५१) इति णिलोपः।

'इदं यत् कृष्णः शकुनिरभिनिष्पतन्नपीपतत्[१]।
आपो मा तस्मात् सर्वस्माद्[२] दुरितात् पान्त्वंहसः[३] ॥ १ ॥

इदम्। यत्। कृष्णः। शकुनिः। अभिऽनिष्पतन्[४]। अपीपतत्।
आपः। मा। तस्मात्। सर्वस्मात्। दुःऽइतात्। पान्तु[५]। अंहसः ॥ १ ॥

कृष्णः कृष्णवर्णः शकुनिः पक्षी। काक इत्यर्थः। अभिनिष्पतन् अभितः सर्वतः अभिमुखं वा आकाशमार्गाद् अवपतन् इदं मदीयम् अङ्गम् अपीपतत् पातयामास पक्षाभ्याम् अभिजघानेति यत् तस्मात् अभिहननजनितात् सर्वस्माद् दुरिताद् दुष्टगमनाद् अंहसः पापाद् मा माम् अभिहतावयवम् आपः अभिमन्त्रिताः पान्तु रक्षन्तु।

'इदं यत् कृष्णः शकुनिरवामृक्षन्निर्ऋते ते मुखेन[६]।
अग्निर्मा तस्मादेनसो गार्हपत्यः प्र मुञ्चतु ॥ २ ॥

इदम्। यत्। कृष्णः। शकुनिः। अवऽअमृक्षत्। निःऽऋते। ते। मुखेन।
अग्निः। मा। तस्मात्। एनसः। गार्हऽपत्यः। प्र। मुञ्चतु ॥ २ ॥

हे निर्ऋते मृत्युदेवते ते तव मुखेन कृष्णः शकुनिः काकः इदं मदीयम् अङ्गम् अवामृक्षत् अवमृष्टवान्। काकः स्वचञ्चुपुटेन मदीयम् अङ्गं नोपहतवान् किं तु मृत्युमुखेनेति काकस्पर्शनदोषः अतिकष्ट इति ज्ञापयितुं निर्ऋतिमुखेन अभिमर्शनवचनम्। मृश आमर्शने। लुङि 'शल इगुपधादनिटः क्सः' (पा ३,१,४५) इति क्सः। काकः अङ्गं मुखेन अवमृष्टवान् इति यत् तस्माद् एनसः पापाद्

---

१. यदस्मान् कृष्णशकुनिर्निम्पतित आनशे पै २०,१५,७. २. एनसः पै. लाधी २,३,११. ३. पान्त्वंहसः D,K,K[m]; पान्तु विश्वतः पै. लाधी. ४. 'निष्पतंत्व P[8]. ५. पातु P[1]; पान्तु > पातु J. ६. यद्वामृक्षत कृष्णशकुनिर्मुखेन निर्ऋते तव पै २०,१५,८.

गार्हपत्यः गृहपतिना मया होमार्थं निहितोऽग्निः एतत्संज्ञको वा मा मां प्र मुञ्चतु प्रकर्षेण मोचयतु । काकावमर्शनजनितदोषरहितं करोतु ।

'प्रतीचीनफलो हि †त्वमपामार्ग ‡रुरोहिथ'[1] ।
सर्वान् मच्छपथाँ अधि वरीयो 'यावया इतः'[2] ॥ १ ॥

प्रतीचीनऽफलः । हि । त्वम् । अपामार्ग[3] । रुरोहिथ ।
सर्वान् । मत् । शपथान् । अधि । वरीयः । यवयाः । इतः ॥ १ ॥

हे अपामार्ग पापापमार्जनसाधन एतत्संज्ञक इध्मप्रकृतिभूत काष्ठविशेष त्वं हि यस्मात् प्रतीचीनफलः प्रत्यङ्मुखानि फलानि यस्य । अग्राद् आरभ्य फलस्य मूलपर्यन्तम् आत्माभिमुखं स्पर्शने कण्टकराहित्यदर्शनात् प्रतीचीनफलत्वम् । तादृशः रुरोहिथ रूढवान् असि तस्मात् सर्वान् शपथान् दोषान् मत् मत्तः सकाशात् । अधिः पञ्चम्यर्थाऽनुवादी । इतः अस्माद् वरीयः । क्रियाविशेषणम् एतत् । उरुतरम् अत्यर्थं यावयाः[4] पृथक्कुरु । इतः इति मत् इत्यस्य विशेषणम् । अस्मात् काकाभिहतावयवाद् मत् इति । यद्वा इतः अस्मात् कारणाद् इति व्याख्येयम् । [5]यावयाः इति[5] । यु मिश्रणामिश्रणयोः । ण्यन्तात् लेटि आडागमे रूपम् ।

यद् दुष्कृतं[6] यच्छमलं[7]यद् वा चेरिम पापया[7] ।
त्वया[8] तद् विश्वतोमुखापामार्गाप मृज्महे[9] ॥ २ ॥

यत् । दुःऽकृतम् । यत् । शमलम् । यत् । वा । चेरिम । पापया ।
त्वया[8] । तत् । विश्वतःऽमुख । अपामार्ग । अप । मृज्महे[10] ॥ २ ॥

यद् दुष्कृतम् दुःखफलाय कृतं पापं दुष्टं कृतं वा दुष्कृतं यत् च शमलम् मलिनम् पापम् । वाशब्दो विकल्पवाची । यत् पापया । द्वितीयाया याजादेशः । यत् पापं चेरिम चरितवन्तः स्मः । अथ वा पापया पापप्रवृत्तिहेतुभूतया बुद्ध्या यद् एनश्चेरिम । चरतेर्लिटि उत्तमबहुवचने रूपम् । तत् पापम् हे विश्वतोमुख सर्वतः प्रसृतशाखायुक्त हे अपामार्ग त्वया साधनेन[11] अप मृज्महे अपमार्जयामः अपसारयामः । मृजू[12] शुद्धौ । आदादिकः ।

---

१. प्रत्यङ् हि संबभूविथ प्रतीचीनफलस्त्वम् अ ४,१९,७. † त्वमपा° A,B^h,D,K,K^m,S^m,V,Cs,WM. ‡ बभूविथ पै २,२६,४. २. °या इति S; °या वधम् अ.; °यास्त्वम् पै. ३. अपामार्ग P,P^2,Cp; अपामार्ग > अपामार्ग J ४. यावय S'. ५. यावयेति S'. ६. दुःकृतं A,B^h,S^m. ७. यदेनश्चकृमा वयम् पै ९,२२,५. ८. तु. सा.; वैतु. मूको. तया. ९. मृग्महे A,B,B^h,D,R,S^m. १०. मृग्महे Cp. ११. साधनेन तत्पापम् S'. १२. मृजूष् शौ.

श्यावदता कुनखिना बण्डेन[1] यत्सहासिम[2] ।
अपामार्ग त्वया वयं सर्वं तदप मृज्महे[3] ॥ ३ ॥

श्यावऽदता । कुनखिना । बण्डेन । यत् । सह । आसिम ।
अपामार्ग । त्वया । वयम् । सर्वम् । तत् । अप । मृज्महे[4] ॥ ३ ॥

श्यावदता श्यावाः[5] श्यावर्णा दन्ता यस्य तेन । 'विभाषा श्यावारोकाभ्याम्' (पा ५,४,१४४) इति श्यावपदाद् उत्तरस्य दन्तशब्दस्य दतृ इत्यादेशः । श्यावदन्तयुक्तेन पुरुषेण कुनखिना कुत्सितानि नखानि कुनखानि तद्वता च बण्डेन[6] । निर्वीर्यः पण्डो वण्ड इत्युच्यते । नपुंसकेन वा सह आशिम[6] भुक्तवन्तः स्मः । अश भोजने । तस्य लिटि उत्तमबहुवचने रूपम् । अशनं व्यवहारमात्रोप-लक्षणम् । एतैः सह व्यवहृतवन्तः स्म इति यद् अस्ति हे अपामार्ग त्वया साधनेन सर्वं तत् पापं वयम् अप मृज्महे अपमार्जयामः निवारयामः ।

यद्यन्तरिक्षे यदि[7] वात आस यदि[8] वृक्षेषु यदि वोलपेषु ।
यदश्रवन्[9] पशव उद्यमानं तद् ब्राह्मणं पुनरस्मानुपैतु ॥ १ ॥

यदि । अन्तरिक्षे । यदि । वाते । आस । यदि । वृक्षेषु । यदि । वा । उलपेषु ।
यत् । अश्रवन् । पशवः । उद्यमानम् । तत् । ब्राह्मणम् । पुनः । अस्मान् । उपऽएतु ॥१॥

मन्त्रब्राह्मणात्मको हि वेदो मेघे वाताधिक्ये वृक्षच्छायायां हरितसस्य-संनिधौ पशोश्च समीपे नाध्येतव्यः । तथाध्ययने सम्यक् पठितोऽपि वेदो निर्वीर्यो भवति । तद् उक्तम् आपस्तम्बेन स्वाध्यायधर्मप्रकरणे — 'नाभ्रे न च्छायायां न पर्यावृत्त आदित्ये न हरितयवान् प्रेक्षमाणो न ग्राम्यस्य पशोरन्ते नारण्यस्य नापाम् अन्ते' ( आपश्री १५,२१,८ ) इति । अत्र तादृशकालस्थलेषु अधीतस्यापि वेदस्य वीर्यवत्त्वम् अनेन प्रार्थ्यते । अन्तरिक्षे । मेघाच्छन्ने इति विशेषणसाहित्यं द्रष्टव्यम् । तादृशे अन्तरिक्षे यदि ब्राह्मणम् आस । कर्मविधायकं वाक्यं ब्राह्मणम् इत्युच्यते । एतद् मन्त्रस्यापि उपलक्षणम् । मन्त्रब्राह्मणात्मको वेदो यदि तत्राधीत आसीत् । 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' (आपश्री २४,१,३१) इति हि आपस्तम्बवचनम् । यद्वा ब्राह्मणम् ब्रह्मणो ब्राह्मणस्य अध्येतव्यत्वेन संबन्धि । वेदवाक्यम् इत्यर्थः । वाते वायौ । प्रभूते सतीति विशेषणं द्रष्टव्यम् । यदि आस ब्राह्मणम् अधीतम् आसीत् । अस्तेर्लिटि

---

१. स्वेनेन पै ९,२२,८. २. यच्च हासिमः पै [मूको.]. ३. मृज्महे A,B,B[b],D,R,S[m]. ४. मृज्महे Cp. ५. श्यावा S'. ६. वैतु. मंगा. द्र. ७: वा इवसि एवो पै २०,१२,९. ८. भयमुलपेषु पै. ९. द्र. P,P[a],J,D[a], सा. पै.; वैतु. B यदश्रं; A,B[b],D,K,K[m],R,S[m],V,Cs,CP,WM. यदश्रं; भवत्र' पै [मूको.].

भूभावाभावश्छान्दसः । यदि ब्राह्मणं वृक्षेषु वृक्षच्छायायाम् आस । वाशब्दो विकल्पवाची । उलपेषु । उलपशब्दः सस्यमात्रोपलक्षणम् । यदि सस्येषु ब्राह्मणम् अधीतम् आसीत् । तथा पशवः ग्राम्या आरण्याश्च उद्यमानम् अभिधीयमानम् अधीयमानं यद् ब्राह्मणम् अश्रवन् अशृण्वन् । शृणोतेर्लङि सामान्यविहितः शवेव छन्दोविषयत्वाद् अवस्थितः । उद्यमानम् इति । वद व्यक्तायां वाचि । कर्मणि यकि यजादित्वात् संप्रसारणम् । तत् तादृशेषु निमित्तेषु अधीतं ब्राह्मणम् अस्मान् अधीतवतः पुनरुपैतु निषिद्धकालस्थलेषु अध्ययनेन अस्मत्तो निष्क्रान्तं ब्राह्मणं पुनः वीर्यवत्त्वेन फलप्रदं सत् आगच्छतु ।

पुनर्मैत्विन्द्रियं[1] पुनरात्मा द्रविणं ब्राह्मणं च ।
पुनरग्नयो धिष्ण्या[2] यथास्थाम[3] कल्पयन्तामिहैव[4] ॥ १ ॥

पुनः । मा । आ । एतु । इन्द्रियम् । पुनः । आत्मा । द्रविणम् । ब्राह्मणम् । च ।
पुनः । अग्नयः । धिष्ण्याः । यथाऽस्थाम । कल्पयन्ताम् । इह । एव ॥ १ ॥

इन्द्रियम् इन्द्रेण दत्तं वीर्यम् । 'इन्द्रियमिन्द्रलिङ्गम्°' (पा ५,२,९३) इति सूत्रेण इन्द्रियशब्दो निपातितः । यद्वा इन्द्रियम् इति जातावेकवचनम् । चक्षुरादीन्द्रियाणि । मा मां पुनरैतु पुनरागच्छतु । आत्मा देहाभिमानी । पुनः ऐतु इत्यनुषङ्गः । द्रविणम् प्रतिग्राह्यं धनम् । माम् ऐतु इत्यनुषङ्गः । तथा ब्राह्मणम् मन्त्रब्राह्मणात्मको वेदः च । पुनरैतु इति संबन्धः । तथा धिष्ण्याः होत्रादिधिष्ण्येषु विहृता अग्नयः इहैव अस्मिन्नेव विहृतप्रदेशे यथास्थाम । यथास्थानम् इत्यर्थः । तिष्ठतेः 'आतो मनिन्°' (पा ३,२,७४) इति मनिन् । पुनः कल्पयन्ताम् समर्थाः प्रवृद्धा भवन्तु ।

सरस्वति व्रतेषु ते दिव्येषु 'देवि धामसु'[5] ।
जुषस्व हव्यमाहुतं प्रजां देवि ररास्व[6] नः ॥ १ ॥

सरस्वति । व्रतेषु । ते । दिव्येषु । देवि । धामऽसु ।
जुषस्व । हव्यम् । आऽहुतम् । प्रऽजाम् । देवि । ररास्व । नः ॥ १ ॥

हे सरस्वति वर्णपदादिरूपेण प्रसरणवति हे देवि ते तव संबन्धिषु व्रतेषु कर्मसु दिव्येषु दिवि भवेषु देवार्हेषु वा धामसु स्थानेषु गार्हपत्यादिरूपेषु । 'धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानि' (नि ९,२८) इति हि यास्कः । तेषु स्थानेषु

१. 'नर्मामै°' मंत्रा १,६,३३ शांश्रौ ८,१०,१ आगृ ३,६,८ मागृ १,३,१. २. धिष्ण्यासो पै ३,१३,६ शांश्रौ. आगृ. मागृ. ३. यथास्थानं शांश्रौ. आगृ. मागृ. ४. धारयन्तामि° शांश्रौ.; इह कल्पन्ताम् आगृ. ५. च वदामसि पै २०,२६,१०. ६. दिदिड्ढि अ ७,४८,१ ऋ २,३२,६ मा ३४,१० मै ४,१२,६ काठ १३,१६.

आहुतम् अभिमुखं प्रक्षिप्तं हव्यम् होतव्यं हविः जुषस्व सेवस्व । किं च हे देवि सरस्वति नः अस्मभ्यं प्रजाम् प्रकर्षेण जायमानां पुत्रादिरूपां ररास्व देहि । रातेः 'बहुलं छन्दसि' ( पा २,४,७३ ) इति शपः श्लुः । व्यत्ययेन आत्मनेपदम् ।

इदं ते हव्यं घृतवत् सरस्वतीदं पितॄणां हविरास्यं[१] यत् ।
इमानि त 'उदिता शंतमानि' तेभिर्वयं मधुमन्तः[२] स्याम ॥ २ ॥

इदम् । ते । हव्यम् । घृतऽवत् । सरस्वति । इदम् । पितॄणाम् । हविः । आस्यम् । यत् ।
इमानि । ते । उदिता । शम्ऽतमानि । तेभिः । वयम् । मधुऽमन्तः । स्याम ॥ २ ॥

हे सरस्वति ते त्वदर्थं हूयमानं घृतवत् घृतोपेतं यद् इदं हव्यम् हविः । पितॄणाम् । अर्थायेति शेषः । आस्यम् क्षेपणीयम् । असु क्षेपणे । 'ऋहलोर्ण्यत्' ( पा ३,१,१२४ ) । पित्रर्थं हूयमानं यद् इदं हविः । शंतमानि अस्माकम् अत्यर्थं सुखकराणि यानि इमानि हवींषि हे सरस्वति ते त्वदर्थम् उदिता उदितानि उक्तानि । वद व्यक्तायां वाचि । अस्मात् कर्मणि निष्ठा । यजादित्वात् संप्रसारणम् । त्वदर्थम् उक्तानि शंतमानि यानि इमानि हवींषि इति वा योज्यम् । एकत्र श्रुतो यच्छब्दः सर्वत्र संबध्यते । तृतीयपादे विभक्तिविपरिणामेन योज्यः । तेभिस्तैः त्वदर्थं हुतैर्हविर्भिर्वयं मधुमन्तः मधुररसोपेतान्नवन्तः स्याम भवेम ।

इति षष्ठेऽनुवाके द्वितीयं सूक्तम् ।

'शिवा नः', 'शं नो वातो वातु' इत्यनयोर्बृहद्गणे पाठात् शान्त्युदकाभिमन्त्रणादौ विनियोगः । "'शिवा नः' ( अ ७,७१ ), 'शं नो वातो वातु' ( अ ७,७२ ), 'अग्निं ब्रूमो वनस्पतीन्' ( अ ११,६ ) इति" इति हि सूत्रितम् ( कौसू ९,२ ) ।

अभिचारकर्मणि 'यत् किं चासौ' (अ ७,७३) इति पञ्चर्चेन मध्यमपलाशेन फलीकरणान् जुहुयात् (द्र. कौसू ४८,२७;२८) ।

दर्शपूर्णमासयोः 'परि त्वाग्ने पुरं वयम्' इत्यनया तण्डुलानां पर्यग्निकरणं कुर्यात् । "'ब्रह्मणा शुद्धाः' ( अ ११,१,१८ ) इति तण्डुलान् । 'परि त्वाग्ने पुरं वयम्' ( अ ७,७४ ) इति त्रिः पर्यग्नि करोति" ( कौसू २,९;१० ) इति हि कौशिकं सूत्रम् ।

सोमयागे माध्यन्दिनसवने धिष्ण्याग्निम् अवलोकयन् 'परि त्वाग्ने पुरं वयम्' इति ब्रह्मा यजमानश्च जपेत् । "धिष्ण्यम् अवेक्ष्य[१] 'परि त्वाग्ने' इति जपति । ब्रह्मा च" ( वैताश्रौ २१,१५;१६ ) इति ।

---

१. तुलिता सौभगानि तैत्रा २,५,४,६. २. सुभगासः मै ४,१२,६ तैत्रा.

१. अभ्येक्ष्य RG.

तथा अग्निचयने उखार्थं परिलिख्यमानं मृत्पिण्डम् अनया ब्रह्मा अनुमन्त्रयेत। "'परि त्वाग्ने' इति मृत्पिण्डं परिलिख्यमानम्" ( वैताश्रौ २८,८ ) इति वैतानं सूत्रम्।

सोमयागे प्रवर्ग्ये [1]घर्मधुग्दोहार्थम् उत्तिष्ठतः अध्वर्य्वादीन् 'उत्तिष्ठताव पश्यत' इत्यनया ब्रह्मा अनुमन्त्रयेत। [2]"घर्मधुग्दोहायोत्तिष्ठते 'उत्तिष्ठताव पश्यत'" (अ ७,७५,१) इति ( वैताश्रौ १४,३ ) इति वैतानं सूत्रम्।

शि॒वा न॒ः शंत॑मा भव[3] सुमृ॒डी॒का सर॑स्वति। मा ते॑ [4]युयोम स॒न्दृश॑ः[5] ॥१॥

शि॒वा। न॒ः। शम्ऽत॑मा। भ॒व। सु॒ऽमृ॒डी॒का। सर॑स्वति। मा। ते॒। यु॒योम॒। सम्ऽदृश॑ः ॥१॥

हे सरस्वति वर्णपदादिरूपेण प्रसरणवति वाग्देवते शिवा सर्वसुखरूपा त्वं नः अस्माकं शंतमा अत्यर्थं रोगनिर्हरणक्षमा भव। शंयोरित्यत्र यास्केन—'शमनं च रोगाणां यावनं च भयानाम्' ( नि ४,२१ ) इत्युक्तम्। यद्वा अत्यर्थं सुखप्रदा भव। सुमृळीका[*]। मृळीकम् इति सुखनाम। शोभनसुखप्रदा भव। शंतमेति सुमृळीकेति पदद्वयेन फलविशेषेण सुखदाने तारतम्यम् उक्तम् इति मन्तव्यम्। हे सरस्वति ते तव संदृशः समीचीनाद् दर्शनाद् यथार्थस्वरूपज्ञानाद् मा युयोम पृथग्भूता मा भवेम। यौतेर्लोटि उत्तमबहुवचने शपः श्लुः। 'अनित्यमागमशासनम्' इति आडभावः। व्यत्ययेन गुणः।

शं नो॒[6] [7]वातो॑ वातु॒[7] शं न॑स्तपतु[8] सूर्य॑ः।
अहा॑नि॒ शं भ॑वन्तु न॒ः[9] शं रात्री॒[10] प्रति॑ धीयतां शमु॒षा नो॒ व्यु॑च्छतु ॥१॥

शम्। न॒ः। वात॑ः। वा॒तु॒। शम्। न॒ः। त॒प॒तु॒। सूर्य॑ः।
अहा॑नि। शम्। भ॒व॒न्तु॒। न॒ः। शम्। रात्री॑। प्रति॑। धी॒य॒ता॒म्। शम्। उ॒षाः। न॒ः। वि। उ॒च्छ॒तु॒॥

वातः वहिः संचरन् वायुः नः अस्माकं शं वातु सुखकरः सन् चरतु। तथा। सूर्यः सुष्ठु सर्वस्य प्रेरक आदित्यः नः अस्माकं शम् सुखं तपतु संतापकारी मा भवतु। अहानि दिनानि च नः अस्माकं शं सुखं भवन्तु। अहस्सु सुखम् अस्माकं भवत्वित्यर्थः। रात्री। 'रात्रेश्चाजसौ' ( पा ४,१,३१ ) इति ङीप्। जातावेकवचनम्। शम् सुखं प्रति धीयताम् प्रतिदधातु संदधातु। न इत्यनुषङ्गः। दधातेर्व्यत्ययेन कर्तरि कर्मप्रत्ययः। यद्वा धीङ् आधारे इति दिवादौ पठ्यते। रात्री शम् सुखं यथा भवति तथा प्रति धीयताम्। प्रतितिष्ठत्वित्यर्थः। तथा उषाः

---

१. घर्मदुग्दोहा° S'. २. घर्मदुग्धोहा° RG. प्रभृ. ३. भवन्तु तैआ. १,१,३. ४. व्योम संदृशि ऐआ १,१,१ तैआ ४,४२,१ आश्रौ ८,१४,१८ लाश्रौ ५,३,२. ५. वैद्रु. मैसा. द्र. ६. मा पै २०,३३,१. ७. °तः पवतां मा ३६,१०; °तोऽभिवातु मे ४,९,२७; °वोऽभिवाते पै.; °तः पवतां मातरिश्वा तैआ. ८. मे तपति पै. ९. मे पै. १०. रात्रीः मा ३६,११; रात्रिः तैआ.

उपःकालः । जातावेकवचनम् । उपसः नः अस्माकं शम् सुखं यथा भवति तथा व्युच्छतु विवासिताः प्रकाशिता भवन्तु । उछी विवासे ।

यत् किं चासौ मन॑सा यच्च॑ वा॒चा य॒ज्ञैर्जु॒होति॑ 'ह॒विषा॒ यजु॑षा' ।
'तन्मृ॒त्युना॒ निर्ऋ॑तिः संवि॒दाना' पु॒रा 'स॒त्यादाहु॑तिं' ह॒न्त्वस्य ॥ १ ॥

यत् । किम् । च । अ॒सौ । मन॑सा । यत् । च । वा॒चा । य॒ज्ञैः । जु॒होति॑ । ह॒विषा॑ । यजु॑षा । तत् । मृ॒त्युना॑ । निःऽऋ॑तिः । स॒म्ऽवि॒दाना । पु॒रा । स॒त्यात् । आऽहु॑तिम् । ह॒न्तु । अ॒स्य ॥ १ ॥

असौ । अदःशब्दो विप्रकृष्टवाची । दूरस्थः शत्रुः यत् किं च कर्म शत्रुहननरूपं मनसा । कर्तुं ध्यायतीत्यध्याहारः । यच्च कर्म वाचा । करोमीति वदतीत्यध्याहारः । तथा यज्ञैः अभिचारकर्मभिः हविषा तदुचितेन द्रव्येण यजुषा मन्त्रेण जुहोति होमं करोति । अस्य प्रतिपक्षनिवारणार्थं मनोवाक्कायैरुपायं कुर्वतः शत्रोः तत् मनसा ध्यातं वाचा उक्तं कर्म आहुतिम् क्रियया निष्पाद्यमानं होमकर्म सत्यात् सत्यभूतात् कर्मफलात् पुरा पूर्वमेव निर्ऋतिः पापदेवता मृत्युना संविदाना ऐकमत्यं प्राप्ता सती हन्तु विनाशयतु । शत्रुणा करणत्रयेण अस्मद्विषये क्रियमाणम् अभिचारकर्म यावत् फलप्रदं भवति तस्मात् पूर्वमेव मृत्युसहिता पापदेवता तं शत्रुं विनाशयत्वित्यर्थः । संविदानेति । संपूर्वाद् वेत्तेः 'समो गमादिषु विदिप्रच्छि' (पा० १,३,२९) इति आत्मनेपदम् ।

या॒तु॒धाना॒ निर्ऋ॑ति॒राद् रक्ष॒स्ते अ॑स्य घ्न॒न्त्वनृ॑तेन स॒त्यम् ।
इन्द्रे॑षिता दे॒वा आज्य॑मस्य मथ्नन्तु मा तत् 'सं पा॑दि॒ यद॒सौ जु॒होति॑' ॥ २ ॥

या॒तु॒ऽधानाः॑ । निःऽऋ॑तिः । आत् । ऊं इति॑ । रक्षः॑ । ते । अ॒स्य । घ्न॒न्तु । अनृ॑तेन । स॒त्यम् । इन्द्र॑ऽइषिताः । दे॒वाः । आज्य॑म् । अ॒स्य । म॒थ्न॒न्तु । मा । तत् । सम् । पा॒दि॒ । यत् । अ॒सौ । जु॒होति॑ ॥ २ ॥

यातुधाना[४] । यातवो यातनाः पीडास्तासां धानं निधानं यस्याम् अस्तीति सा यातुधाना । परपीडाकारिणी निर्ऋतिः निकृष्टगमना पापराक्षसी । आद् । अपि चेत्यर्थः । रक्षः राक्षसः । ते निर्ऋतिराक्षसाः अस्य शत्रोः सत्यम् यथार्थं कर्मफलम् अनृतेन असत्येन फलेन घ्नन्तु विनाशयन्तु । यथा शत्रुणा अस्मद्विषये क्रियमाणम् अभिचारकर्म स्वोचितफलप्रदं न भवति किं तु विपरीतफलप्रदं

---

१. यजुषा हविर्भिः पै १९,२७,१ तैब्रा २,४,२,१. २. तन्मृत्युर्निर्ऋत्या संविदानः तैब्रा. ३. ह्दाद्याज्यं पै.; द्विषादाहुतीर् तैब्रा २,४,२,२. ४. समृद्धि यदसौ करोति तैब्रा. ५. वैतु. मंपा. द.

भवति तथा कुर्वन्तु इत्यर्थः। फलप्रतिबन्धं प्रार्थ्य तदीयकर्मणो बाधां प्रार्थयते — इन्द्रेषिताः इन्द्रेण प्रेरिता देवाः अस्य शत्रोः आज्यम् आज्यसाधनं होमकर्म मथ्नन्तु विनाशयन्तु। मन्थ विलोडने। क्र्यादिः। असौ शत्रुः यज्जुहोति अस्मद्बाधार्थं यत् कर्म करोति तत् कर्म मा सं पादि मा संपन्नं भवतु। फलप्रदं न भवत्वित्यर्थः। यद्वा अङ्गविकलं भवतु। पद गतौ। 'चिण् ते पदः' (पा ३,१,६०) इति कर्तरि च्लेश्चिण् आदेशः।

'अजि॒राधि॒राजौ॑ श्ये॒नौ सं॑पा॒तिना॑विव।
आज्यं॑ पृतन्य॒तो ह॑ताम्[२] यो नः॑ कश्चा॑भ्यघा॒यति॑[३] ॥ ३ ॥

अ॒जि॒र॒ऽअ॒धि॒रा॒जौ। श्ये॒नौ। सं॒पा॒तिनौ॑ऽइव।
आज्य॑म्। पृ॒त॒न्य॒तः। ह॒ताम्। यः। नः॒। कः। च॒। अ॒भि॒ऽअ॒घा॒यति॑[४] ॥ ३ ॥

अजिराधिराजौ। अज गतिक्षेपणयोः इत्यस्माद् 'अजिरशिशिर' (पाउ १,५३) इति सूत्रेण अजिरशब्दो निपातितः। शत्रुक्षेपणसमर्थः अजिरः। अधिको राजा अधिराजः। 'राजाहःसखिभ्यष्टच्' (पा ५,४,९१) इति टच् समासान्तः। एतन्नामानौ मृत्युदूतौ संपातिनौ आकाशमार्गाद् द्वेष्यस्य पक्षिण उपरि निष्पतनशीलौ श्येनौ एतन्नामधेयौ पक्षिणौ इव पृतन्यतः संग्राममिच्छोः पुरुषस्य आज्यम् घृतसाधनकं होमकर्म हताम् हिंस्ताम्। हन हिंसागत्योः। लोटि तसस्ताम् आदेशः। पृतन्यच्छब्दार्थम् आह। यः कश्च शत्रुः नः अस्माकम् अभ्यघायति अभिमुखं हिंसारूपं पापं कर्तुम् इच्छति तस्य आज्यं हताम् इति संबन्धः। अघशब्दात् 'छन्दसि परेच्छायाम्' (पावा ३,१,८) इति क्यचि 'अश्वाघस्यात्' (पा ७,४,३७) इति आत्वम्।

अपा॑ञ्चौ त उ॒भौ बा॒हू अपि॑[५] नह्याम्या॒स्य॑म्[६]।
अ॒ग्नेर्दे॒वस्य॑ म॒न्युना॑[७] तेन॑[८] तेऽवधिषं ह॒विः[९] ॥४॥

अपा॑ञ्चौ। ते॒। उ॒भौ। बा॒हू इति॑। अपि॑। न॒ह्या॒मि॒। आ॒स्य॑म्।
अ॒ग्नेः। दे॒वस्य॑। म॒न्युना॑। तेन॑। ते॒। अ॒व॒धि॒ष॒म्। ह॒विः ॥ ४ ॥

अनेन द्व्यृचेन शत्रुं संबोध्य ब्रूते — हे अस्मद्विषये अभिचारकर्तः ते तव उभौ बाहू होमकर्मणि व्यापृतौ पाणी अपाञ्चौ अपाञ्चनौ पृष्ठभागसंबद्धौ अपि नह्यामि

---

१. स्वरतिर्‌१ अधि॰ पै १९,२७,४. २. हंता Sᵐ; हंतान् Bᵇ,D. ३. तु. सा.; वैतु. मूको. (तु. शंपा. WM) °घायंति.; योऽस्मान् पृतनायति पै. ४. अर्प तेत्रा २,४,२,२. ५. °स्यंन् Sᵐ. ६. मह्मणा तैत्रा. ७. सर्वे तैत्रा. ८. कृतम् तैत्रा.

बध्नामि। यथा होमकरणशक्तौ न भवतः तथा करोमि। तथा आस्यम् मन्त्रोच्चारणसमर्थं मुखम् अपि नह्यामि यथा वदनात् होमसाधनभूतमन्त्रा नोद्गच्छन्ति तथा करोमि। तेन बाह्वास्यबन्धनेन कारणेन देवस्य। दीव्यतेर्विजिगीषार्थाद् पचाद्यच्। देवस्य विजयमानस्य अग्नेः मन्युना तेजसा क्रोधेन वा ते तव हविः होतव्यं द्रव्यं तत्साधनकं कर्म अवधिषम् हनिष्यामि। हन्तेश्छान्दसो लुङ्।

अपि॑ नह्यामि ते बा॒हू अपि॑ नह्याम्या॒स्य॑म् ।
अ॒ग्नेर्घो॒रस्य॑ म॒न्युना॒ तेन॑ ते॒ऽवधिषं ह॒विः ॥ ५ ॥

अपि॑। न॒ह्या॒मि॒। ते॒। बा॒हू इति॑। अपि॑। न॒ह्या॒मि॒। आ॒स्य॑म्।
अ॒ग्नेः। घो॒रस्य॑। म॒न्युना॑। तेन॑। ते॒। अ॒व॒धि॒ष॒म्। ह॒विः ॥ ५ ॥

पूर्वमन्त्रसमानार्थत्वात् पूर्वेण व्याख्यातकल्पोऽयं मन्त्रः। घोरस्य भयंकरस्य इति विशेषः।

परि॑ त्वाऽग्ने॒ पुरं॑ व॒यं विप्रं॑ सहस्य धीमहि ।
धृ॒षद्व॑र्णं॑ दि॒वेदि॑वे ह॒न्तारं॑ भङ्गु॒राव॑तः ॥ १ ॥

परि॑। त्वा॒। अ॒ग्ने॒। पुर॑म्। व॒यम्। विप्र॑म्। स॒ह॒स्य॒। धी॒म॒हि॒।
धृ॒षत्ऽव॑र्णम्। दि॒वेऽदि॑वे। ह॒न्तार॑म्। भ॒ङ्गु॒रऽव॑तः ॥ १ ॥

हे सहस्य। सह इति बलनाम (तु निघ २,९) तस्मै हित। 'तस्मै हितम्' (पा ५,१,५) इति यत्। सहसो बलाद् वा जात। मथनेन निष्पन्नत्वात्। 'भवे छन्दसि' (पा ४,४,११०) इति यत्प्रत्ययः। तादृश हे अग्ने पुरम् पूरकं कर्मफलानां विप्रम्। मेधाविनामैतत् (तु. निघ ३,१५)। मेधाविनं त्वा त्वां वयं परि धीमहि रक्षसाम् अपहननाय परितो धारयामः परिधिं वा कुर्मः। दधातेर्लिङि द्विर्वचनाभावश्छान्दसः। शपो 'वा लुक्'। अग्निं विशिनष्टि— धृषद्वर्णम् धर्षकरूपं भङ्गुरावतः भङ्गशीलकर्मवतो रक्षसः दिवेदिवे अन्वहं हन्तारम् विनाशयितारम्।

उत् ति॑ष्ठ॒ताऽव॑ पश्य॒तेन्द्र॑स्य भा॒गमृ॒त्विय॑म् ।
यदि॑ श्रा॒तं॑ जु॒होत॑न॒ यद्यश्रा॑तं॑ म॒मत्त॑न ॥ १ ॥

---

१. अर्प > अपि A,B; अपि > अर्प Cp; अर्प B[b],D,K,K[m],S[m],V,Cs,WM.,RW. तैब्रा २,४,२,३. २. अर्प तैब्रा. ३. भिपंग्वर्णं ? पै १६,८,२. ४. भ्रेत्वारं तै १,५,६,४. ५. र्वतास् ऋ १०,८७,२२ मा ११,२६ मै २,७,२; °वतम् पै. ६. तुष्ठा S'. ७. श्रातो ऋ १०,१७९,१. ८. °श्रातो ऋ.

उत् । तिष्ठत । अव॑ । पश्यत । इन्द्र॑स्य । भागम् । ऋत्वियम् ।
यदि॑ । श्रातम् । जुहोत॑न । यदि॑ । अश्रा॑तम् । ममत्त॑न ॥ १ ॥

हे ऋत्विजः उत्तिष्ठत आसनाद् ऊर्ध्वं तिष्ठत नोपविशत । ऊर्ध्वकर्मत्वाद् आत्मनेपदाभावः । उत्थाय च ऋत्वियम् ऋतौ वसन्तादिकाले भवम् इन्द्रस्य भागम् भजनीयं घर्मं पच्यमानम् अव पश्यत निरीक्षध्वम् । ऋतुशब्दात् तदस्य प्राप्तमित्यर्थे[1] 'छन्दसि घस्' ( पा ५,१,१०६ ) । 'सिति च' ( पा १,४,१६ ) इति पदसंज्ञया भसंज्ञाया बाधाद् ओर्गुणाभावः । भजेः कर्मणि घञन्तो भागशब्दः । श्रातम् । हविःपरतया नपुंसकत्वम् । यदि स भागः श्रातः पक्वस्तर्हि जुहोतन इन्द्रार्थम् अग्नौ जुहुत । 'तप्तनप्तनथनाश्च' (पा ७,१,४५) इति तस्य तनवादेशः । पित्त्वाद् गुणः । यदि अश्रातम् । अत्रापि हविःपरतया नपुंसकत्वम् । यदि अश्रातः अपक्वस्तर्हि ममत्तन पचत । ततानाम् अपां मदन्तीशब्दव्यवहारदर्शनाद् अत्र ममत्तनेति शब्दस्य ततं कुरुतेत्यर्थो युक्तः । यद्वा यदि अपक्वस्तर्हि पाकपर्यन्तं ममत्तन इन्द्रं स्तुतिभिर्मदयतेति । श्रीञ् पाके इत्यस्माद् निष्ठायाम् 'अपस्पृधेथामानृचुः॰' ( पा ६,१,३६ ) इति सूत्रे श्राभावो निपात्यते ।

श्रातं ह॒विरो ष्विन्द्र॒ प्र या॑हि ज॒गाम॒ सूरो॒ अध्व॑नो॒ 'वि मध्य॑म् ।[2]
परि॑ त्वासते नि॒धिभि॒ः सखा॑यः कुल॒पा न व्रा॒जप॑तिं[3] चर॑न्तम् ॥ २ ॥

श्रातम् । ह॒विः । ओ इति॑ । सु । इ॒न्द्र । प्र । या॒हि । ज॒गाम॑ । सूरः॑ । अध्व॑नः । वि । मध्य॑म् ।
परि॑ । त्वा । आ॒स॒ते । नि॒धिऽभिः॑ । सखा॑यः । कु॒ल॒ऽपाः । न । व्रा॒जऽप॑तिम् । चर॑न्तम् ॥ २ ॥

हे इन्द्र हविः दधिघर्माख्यं त्वदीयं श्रातम् पक्वम् । ओ आ उ सु सुष्ठु प्र याहि प्रकर्षेण शीघ्रम् आगच्छ । सूरः सूर्यः अध्वनः गन्तव्यस्य मार्गस्य विमध्यम्[3] विकलं मध्यम् ईषद् ऊनं मध्यभागं जगाम गतवान् । तव यागार्थं मध्याह्नो जात इत्यर्थः । सखायः समानख्याना ऋत्विजश्च निधिभिः निहितैः अभिषुत्य आसादितैः सोमैः सार्धं त्वा त्वां पर्यासते पर्युपासते । तत्र दृष्टान्तः — कुलपा न । कुलस्य वंशस्य रक्षकाः पुत्रा यथा व्राजपतिम् व्राजा गन्तव्या गृहास्तेषां पतिं चरन्तम् गच्छन्तम् उपासते तथेत्यर्थः । व्रज गतौ । अस्मात् कर्मणि घञ् । 'अजिव्रज्योश्च' ( पा ७,३,६० ) इति कुत्वनिषेधः ।

इति षष्ठेऽनुवाके तृतीयं सूक्तम् ।

---

१. भवार्थे शंपा. २. विर्मध्यम् ऋ १०,१७९,२ सा. ३. व्राजपतिं ऋ.
४. वेद्. मंपा. द.

अग्निष्टोमे प्रवर्ग्ये हूयमानम् आज्यं 'श्रातं मन्ये' इति सूक्तेन ब्रह्मा अनुमन्त्रयेत। "'उप ह्वये' ( अ ७,७७,७ ) इति घर्मदुघाम्। घर्मसूक्तेन ( अ ७,७७ ) घर्मं हूयमानम्" ( वैताश्रौ १४,४;५ ) इति हि वैतानं सूत्रम्।

अग्निष्टोमे माध्यन्दिनसवने दधिघर्महोमं 'श्रातं मन्ये' इति ब्रह्मा अनुमन्त्रयेत। "'श्रातं मन्ये' इति दधिघर्महोमम्। घर्मवद्भक्षः" ( वैताश्रौ २१,१८;१९ ) इति वैतानसूत्रात्।

प्रवर्ग्ये होतृकर्तृकं वषट्कारम् अनुवषट्कारं च 'स्वाहाकृतः' इति द्वाभ्यां ब्रह्मा अनुमन्त्रयेत। "'स्वाहाकृतः' इति द्वाभ्याम् (अ ७,७७,३;४)। घर्मस्य वषट्कृतेऽनुवषट्कृते" ( वैताश्रौ १४,५६ ) इति वैतानं सूत्रम्।

प्रवर्ग्ये दुह्यमानां घर्मदुघाम् 'उप ह्वये' इति ब्रह्मा अनुमन्त्रयेत। वैताने सूत्रितम्—"'उप ह्वये' (अ ७,७७,७) इति घर्मदुघाम्" ( वैताश्रौ १४,४१ ) इति।

प्रवासं करिष्यन् 'सूयवसाद्' इत्यनया स्वकीयान् पशून् अभिमन्त्रयेत। "'सूयवसाद्' (अ ७,७,११) इति सूयवसे पशून् अभिमन्त्रयते" (कौसू २४,१७) इति हि कौशिकं सूत्रम्।

मधुपर्के उत्सृष्टां गाम् अनया अभ्यागतोऽनुमन्त्रयेत। "'सूयवसाद्' इति प्रतिष्ठमानाम्" ( कौसू ९२,१५ ) इति हि कौशिकं सूत्रम्।

श्रातं म॑न्य ऊध॑नि श्रा॒तम॒ग्नौ सुश्रृ॑तं॑ मन्ये॒ तदृ॒तं नवी॑यः।
माध्यं॑न्दिनस्य॒ सव॑नस्य द॒ध्नः पिबे॑न्द्र वज्रिन् [२]पुरुकृज्जुषा॒णः ॥ १ ॥

श्रा॒तम्। म॒न्ये॒। ऊध॑नि। श्रा॒तम्। अ॒ग्नौ। सुऽश्रृ॑तम्। म॒न्ये॒। तत्। ऋ॒तम्। नवी॑यः। माध्यं॑न्दिनस्य। सव॑नस्य। द॒ध्नः। पिब॑। इन्द्र॒। व॒ज्रि॒न्। पु॒रु॒ऽकृ॒त्। जु॒षा॒णः॥१॥

ऊधनि गोरूधसि एतद् दधिघर्माख्यं हविः पयोरूपेण श्रातम् पक्वम् इति मन्ये जाने। पुनश्च दुग्धं पयः अग्नौ अपि श्रातम् पक्वम्। इदानीं दध्यवस्थमपि अग्नौ पच्यते। श्रीञ् पाके इत्यस्मात् निष्ठायाम् 'अपस्पृधेथाम्' ( पा ६,१,३६ ) इति सूत्रे श्राभावो निपात्यते। अतः सुश्रृतम् सुपक्वम् इति मन्ये जाने। श्रा पाके इत्यस्माद् आदादिकान्निष्ठायां कर्मकर्तरि 'श्रृतं पाके' ( पा ६,१,२७ ) इति निपात्यते। अत एव तत् हविः ऋतम् सत्यभूतं नवीयः नवतरं प्रत्यग्रतरं भवति। हे वज्रिन् वज्रवन् हे पुरुकृत् बहुकर्मकृद् इन्द्र जुषाणः प्रीयमाणस्त्वं माध्यन्दिनस्य मध्यन्दिने भवस्य सवनस्य सूयमानस्य सोमस्य संबन्धिनो दध्नः। कर्मणि षष्ठी। दधि दधिघर्माख्यं हविः पिब।

---

१.–निष्टापयति BL. २. सुश्रातं ऋ १०,१७९,३. ३. पुरुकृज्जुषाणः ऋ. ४. वेद्. मपा. द.

समिद्धो अग्निर्वृषणा[1] रथी[2] दिवस्तप्तो घर्मो दुह्यते वामिषे मधु ।
वयं हि वां पुरुदमासो[3] अश्विना हवामहे सधमादेषु कारवः ॥ १ ॥

सम्ऽइद्धः । अग्निः । वृषणा । रथी । दिवः । तप्तः । घर्मः । दुह्यते । वाम् । इषे । मधु ।
वयम् । हि । वाम् । पुरुऽदमासः । अश्विना । हवामहे । सधऽमादेषु । कारवः ॥१॥

एतदादीनाम् ऋचां प्रवर्ग्य एव लिङ्गानुसाराद् आश्वलायनेन विनियोग उक्तः। तत्र इयम् उत्तरा च दुह्यते इति लिङ्गेन घर्मदुघादोहनसमये विनियुक्ते। हे वृषणा वृषणौ अभिमतफलस्य वर्षितारौ हे अश्विनौ दिवः द्युलोकस्य। तात्स्थ्यात् ताच्छब्द्यम्। द्युलोकस्थितस्य देवगणस्य रथी रथिकः। नेतेत्यर्थः। 'अग्निमुखा वै देवाः' (तु. माश १३,४, १,१२) इति श्रुतेः। तादृशोऽग्निः समिद्धः सम्यग् दीप्तः। तेनाग्निना घर्मः महावीरपात्रस्थम् आज्यं तप्तः सम्यक् पक्वम्। अनन्तरं वाम् युवयोः। युष्मच्छब्दस्य षष्ठीद्विवचने वाम् इत्यादेशः। इषे अन्नाय मधु मधुररसोपेतं मधुवत् प्रीणनकारि वा पयः दुह्यते। गौरध्वर्युभिः इति शेषः। दुह प्रपूरणे। कर्मणि यक्। दुहेर्द्विकर्मकत्वाद् 'अकथितं च' (पा १,४,५१) इति मधुनः कर्मत्वे द्वितीया। हे अश्विना अश्विनौ वाम् युवाम्। युष्मदो द्वितीयाद्विवचने वाम् आदेशः। पुरुदमासः। दम इति गृहनाम (तु. निघ ३,४)। बहुगृहाः। पृणातेः पुरुशब्दः। हविःपूर्णगृहा वा। कारवः। स्तोतृनामैतत् (तु. निघ ३,१६)। करोतेः 'कृवापाजिमि°' (पाउ १,१) इति उण्प्रत्ययः। स्तुतिकर्तारो वयं हि वयं खलु होतारः सधमादेषु सह माद्यन्ति देवा अत्रेति सधमादा यज्ञाः। माद्यतेः अधिकरणे घञ्। 'सध मादस्थयोश्छन्दसि' (पा ६,३,९६) इति सहस्य सधादेशः। यज्ञेषु हवामहे आह्वयामः।

समिद्धो अग्निरश्विना तप्तो [4]वां घर्म आ गतम्[5] ।
दुह्यन्ते नूनं[6] वृषणेह धेनवो दस्रा मदन्ति वेधसः[1] ॥ २ ॥

सम्ऽइद्धः । अग्निः । अश्विना । तप्तः । वाम् । घर्मः । आ । गतम् ।
दुह्यन्ते । नूनम् । वृषणा । इह । धेनवः । दस्रा । मदन्ति । वेधसः ॥ २ ॥

हे अश्विना अश्विनौ अग्निः समिद्धः संदीप्तः। तेन वाम् युवाभ्याम्। युष्मच्छब्दस्य चतुर्थीद्विवचने वाम् इति आदेशः। युवयोरर्थाय घर्मः महावीरस्थितम् आज्यं तप्तः सम्यग्दीप्तम्। अतः आ गतम् आगच्छतम्। घर्मरूपं हविर्भोक्तुम् इति शेषः। गमेश्छान्दसे लुङि 'मन्त्रे घस°' (पा २,४,८०) इति च्लेर्लुकि 'अनुदात्तोपदेश°' (पा ६,४,३७)

---

१. °सिरश्विना पै २०,११,७. २. रथिर् आश्री ४,७,४; रथिर् शाश्री ५,१०,८.
३. पुरुतमासो आश्री. शाश्री.; पुरुतमासो पै [मूको.]. ४. घर्मो त्रिराट् सुतः मा २०,५५.
५. गातो आश्री. शाश्री. ६. कारवः पै २०,११,६ आश्री. शाश्री.

इति अनुनासिकलोपे रूपम्। लोटि वा विकरणस्य लुक्। हे वृषणा वृषणौ अभिमतफलस्य वर्षितारौ युवयोरर्थाय इह प्रवर्ग्याख्ये कर्मणि धेनवः प्रीणयित्र्यो गावो नूनम् अत्यर्थं दुह्रन्ते पयः। दुहेर्द्विकर्मकत्वात् पय इति कर्मणा अन्येन भाव्यम्। अतः दस्रा[1] दस्रौ शत्रूणाम् उपक्षपयितारौ अश्विनौ वेधसः। विध विधाने इत्यस्माद् असुन्[2]। स्तुत्या परिचरन्तो होतारः मदन्ति मदयन्ति। स्तुतिभिरिति होतॄणां परोक्षेण अभिधानम्। माद्यतेर्णिचि मदी हर्षग्लेपनयोः इति मित्त्वेन ह्रस्वत्वम्। 'छन्दस्युभयथा' (पा ३,४,११७) इति श्नेः आर्धधातुकत्वेन णिलोपः।

स्वाहाकृतः शुचिर्देवेषु यज्ञो यो अश्विनोश्चमसो देवपानः।
तमु विश्वे अमृतासो जुषाणा गन्धर्वस्य प्रत्यास्ना रिहन्ति ॥ ३ ॥

स्वाहाऽकृतः। शुचिः। देवेषु। यज्ञः। यः। अश्विनोः। चमसः। देवऽपानः।
तम्। ऊं इति। विश्वे। अमृतासः। जुषाणाः। गन्धर्वस्य। प्रति। आस्ना[5]। रिहन्ति ॥३॥

स्वाहाकृतः इति लिङ्गाद् घर्मयागानन्तरम् इयं पठनीया इति आश्वलायनेनोक्तम्। शुचिः दीप्तो यज्ञः प्रवर्ग्याख्यो देवेषु अश्विप्रभृतिषु। अथ वा देवशब्देन अश्विनावुच्येते। प्रवर्ग्ये तयोरेव यष्टव्यत्वात्। बहुवचनं तु पूजायाम्। विषयसप्तमी। देवविषये स्वाहाकृतः। स्वाहाशब्दो दानवाचकः। दत्त इत्यर्थः। न चात्र स्वाहाकारेण हविर्ह्रूयते किं तु वषट्कारेण। देवपानः देवौ अश्विनौ पिबतः अत्रेति देवपानः। अधिकरणे ल्युट्। तादृशः अश्विनोश्चमसः[6]। चमतेर्भक्षणार्थाद् औणादिकः असच्प्रत्ययः। भक्षणसाधनो य उपयमनाख्यः पात्रविशेषोऽस्ति तमु तमेव चमसं विश्वे सर्वे अमृतासः अमृताः अमरणधर्माणो देवा अग्न्यादयो जुषाणाः प्रीयमाणाः। हेत्वर्थे जुषेः शानच्प्रत्ययः। प्रीतेर्हेतोः गन्धर्वस्य। गां वेदरूपां वाचं धारयतीति गन्धर्वः आदित्यः। तथा च तैत्तिरीयके आदित्यस्य वेदसाहित्यं श्रूयते— 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते। वेदैरशून्यस्त्रिभिरेति सूर्यः' (तैब्रा ३,१२,९,१) इति। गोशब्दोपपदाद् धृञो 'गवि गन् धृञो वः' (पाउना ५,८४) इति वप्रत्ययः गोशब्दस्य गन् इत्यादेशः। तस्यादित्यस्य। रात्रावादित्यस्य अग्नावनुप्रवेशात् तदभेदेन अग्निर्वा गन्धर्वः। तस्य आस्ना आस्येन। 'पद्दन्' (पा ६,१,६३) इत्यादिना आस्यशब्दस्य आसन् आदेशः। प्रति रिहन्ति प्रत्येकं लिहन्ति आस्वादयन्ति। 'त्वामग्न आदित्यास आस्यम्' (ऋ २,१,१३) इति हि मन्त्रवर्णे अग्निरूपेण आस्येन देवा हविर्भक्षयन्तीति स्पष्टम् आम्नातम्।

---

१. पैद्ध. मैत्रा. द. २. एवं स्वरो न सिध्यति. ३. घर्मौ पै २०,१२,१ आश्रौ ४,७,४ शाश्रौ ५,१०,२३. ४. वर्मी आश्रौ. शाश्रौ. ५. आस्ना P. ६. चमस उपय S'.

यदु॑स्रियास्वाहु॑तं घृतं पयो॒ऽयं स॑ वा॑मश्विना भा॒ग आ ग॑तम् ।
माध्वी॑ धर्ता॑रा विदथस्य सत्पती त॒प्तं घ॒र्मं पि॑बतं रोच॒ने दि॒वः॑ ॥ ४ ॥

यत् । उ॒स्रिया॑सु । आऽहु॑तम् । घृ॒तम् । पयः॑ । अ॒यम् । सः । वा॒म् । अ॒श्वि॒ना॒ । भा॒गः । आ । ग॒त॒म् ।
माध्वी॒ इति॑ । ध॒र्ता॒रा॒ । वि॒दथ॑स्य । स॒त्प॒ती॒ इति॑ सत्ऽपती । त॒प्तम् । घ॒र्मम् । पि॒ब॒त॒म् ।
रो॒च॒ने । दि॒वः ॥ ४ ॥

एषा ऋक् पिबतम् इति लिङ्गाद् घर्मयागे याज्यात्वेन आश्वलायनेन विनियुक्ता। उस्रियासु । गोनामैतत् (द्र. निघ २,११) । पयोनिवासस्थानभूतासु गोषु वर्तमानं घृतम् घृतवत् क्षरणशीलं घृतोत्पादकं वा यत् पयः क्षीरम् आहुतम् महावीरपात्रे अभिमुखं प्रक्षिप्तम्। हु दानादानयोः । कर्मणि निष्ठा । हे अश्विना अश्विनौ सोऽयं तद् इदं प्रक्षिप्तं पयः भागविशेषणत्वात् तदिदंशब्दयोः पुंलिङ्गता । 'उद्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तत्तल्लिङ्गमुपाददते' (पाके. पस्पशाह्निके) इति वचनात्। इदं तत् पयः वाम् युवयोर्भागः भजनीयोंऽशः। अतः आ गतम् आगच्छतम्। आगत्य च हे माध्वी । मधुशब्दाद् अणि स्त्रियाम् 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि' ( पा ६,४,१७५ ) इति यणादेशो[3] निपात्यते। मधुसंबन्धिनी विद्या माध्वी। विद्यावेदित्रोरभेदोपचाराद् अश्विनावपि माध्वीशब्देन उच्येते । अत एव प्रगृह्यता। 'माध्वी मम श्रुतं हवम्' ( ऋ ५,७५,१ ) इति हि मन्त्रान्तरम्। अश्विनोर्मधुविद्यावेदितृत्वं दाशतय्याम् आम्नायते—'आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम् । स वां मधु प्र वोचद् ऋतायन्' ( ऋ १,११७,२२ ) इति । हे माध्वी मधुविद्यावेदितारौ विदथस्य। यज्ञनामैतत् (द्र. निघ. ३,१७)। विदन्ति जानन्ति अनेन फलम् इति विदथो यज्ञः। तस्य धर्तारा धर्तारौ धारयितारौ । यज्ञस्वरूपनिर्वर्तकावित्यर्थः। द्रव्यदेवते हि यागस्य स्वरूपम् इति हि तद्विदः । हे सत्पती सतां महतां देवानां पालयितारौ आपन्निर्हरणत्वेन रक्षकौ। 'अश्विनौ वै[4] देवानां भिषजौ' (ऐब्रा १,१८) इति श्रुतेः। तादृशौ युवां दिवः द्युलोकस्य रोचने रोचके प्रकाशके अग्नौ ततम् शृतं घर्मम् आज्यं पिबतम्।

त॒प्तो वां॑ घ॒र्मो न॑क्षतु[5] स्वहो॑ता॒ प्र वा॑मध्व॒र्युश्च॑रतु[6] पय॑स्वान्[7] ।
मधो॑र्दु॒ग्धस्या॑श्विना त॒नाया॑ वी॒तं पा॒तं पय॑स उ॒स्रिया॑याः ॥ ५ ॥

त॒प्तः । वा॒म् । घ॒र्मः । न॒क्ष॒तु॒ । स्वऽहो॑ता । प्र । वा॒म् । अ॒ध्व॒र्युः । च॒र॒तु॒ । पय॑स्वान् ।
मधोः॑ । दु॒ग्धस्य॑ । अ॒श्वि॒ना॒ । त॒नायाः॑ । वी॒तम् । पा॒तम् । पय॑सः । उ॒स्रिया॑याः ॥ ५ ॥

---

१. सु शांश्री ५,१०,२१.　२. सोम्यंमधु आश्री ४,७,४.　३. उकणं (उयणं ?)-दशो S'.　४. हि सा.　५. भक्षति पै २०,११,१; नक्षति आश्री. शांश्री ५,१०,१८.　६. पतति पै. आश्री. शांश्री.　७. प्रयस्वान् आश्री. शांश्री.

इयमपि वीतं पातम् इति लिङ्गाद् घर्मयाज्यात्वेन विनियुक्ता । हे अश्विना अश्विनौ वाम् युवां स्वहोता स्वाधीनहोतृकः । होत्रा सम्यग् अभिष्टुत इत्यर्थः । 'ऋतश्छन्दसि' ( पा ५,४,१५८ ) इति कप्प्रत्ययनिषेधः । ततः सम्यग् रुचितः घर्मः महावीरपात्रस्थम् आज्यं नक्षतु । ''नक्षतिर्व्याप्तिकर्मा' ( तु. निघ २,१८ ) इति यास्कः । नक्ष गतौ इति धातुः । व्याप्नोतु । तथा वाम् युवाभ्याम् । चतुर्थीद्विवचनस्य वाम् आदेशः । युवयोरर्थाय अध्वर्युः एतन्नामा ऋत्विक् प्रयस्वान्[2] । प्रीणातेः असुनि प्रयः । प्रीणनकारिपयोयुक्तः सन् प्र चरतु यजतु । हविर्ददातित्यर्थः । अथ अनन्तरम् हे अश्विना अश्विनौ तनायाः । तनोतेः पचाद्यजन्तात् स्त्रियां टापि तनेति भवति । पयोदध्याज्यरूपहविःप्रदानेन यज्ञं विस्तारयन्त्या उस्रियायाः । गोनामैतत् (तु. निघ २,११) । घर्मदुघाया दुग्धस्य म धोः मधुररसोपेतस्य मधुवत्प्रीणनकारिणो वा पयसः । कर्मार्थे षष्ठी । पयः वीतम् भक्षयतं पातम् पिबतं च । वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । अस्मात् लोटि अदादित्वात् शपो लुक् । पा पाने । 'बहुलं छन्दसि' ( पा २,४,७३ ) इति शपो लुक् ।

उप॑ द्रव॒ पय॑सा [3]गोधुगो॒षमा घ॒र्मे सि॑ञ्च॒ पय॑ उ॒स्रिया॑याः ।
वि नाक॑मख्यत्[4] सवि॒ता [5]वरे॑ण्योऽनुप्र॒याण॑मु॒षसो॒[6] [7]वि रा॑जति[8] ॥ ६ ॥

उप॑ । द्र॒व॒ । पय॑सा । गो॒ऽधुक्[9] । ओ॒षम् । आ । घ॒र्मे । सि॒ञ्च॒ । पयः॑ । उ॒स्रिया॑याः ।
वि । नाक॑म् । अ॒ख्य॒त् । स॒वि॒ता । वरे॑ण्यः । अ॒नु॒ऽप्र॒यान॑म्[7] । उ॒षसः॑ । वि । रा॒ज॒ति॒ ॥ ६ ॥

एषा ऋक् पयसा उपद्रवेति लिङ्गाद् घर्मदुघापयसि आह्रियमाणे होत्रा पठनीयेति आश्वलायनेनोक्तम् । हे गोधुक् घर्मदुघादोग्धरध्वर्यो त्वम् ओषं तप्तं घर्मम् । उष दाहे । अस्मात् कर्मणि घञ्[8] । रुचितं घर्मं पयसा दुग्धेन सह उप द्रव निकटम् आगच्छ । द्रु गतौ । भौवादिकः । आगत्य च उस्रियायाः घर्मदुघाया धेनोः पयः क्षीरं घर्मे तप्ते आज्ये आ सिञ्च [9]आक्षारय । यतः[6] वरेण्यः वरणीयः सविता सर्वस्य प्रेरक आदित्यः नाकम् दुःखेन असंभिन्नं सुखरूपं स्वर्गं व्यख्यत् । प्रकाशयतीत्यर्थः । चक्षिङ् व्यक्तायां वाचि । अस्मात् लुङि ख्याञादेशे 'अस्यतिवक्तिख्यातिभ्योऽङ्' ( पा ३,१,५२ ) इति च्लेः अङ् आदेशः । ख्या प्रकथने इत्यस्माद् वा लुङि पूर्ववत् अङ् । स आदित्यः उषसः प्रयाणम्[7] प्रकृष्टं गमनम् अनु[7] अनुलक्ष्य वि राजति विशेषेण दीप्यते । उषसोऽनन्तरं सूर्यः प्रादुर्भवतीत्यर्थः । तथा च आम्नातम् अन्यत्र—'सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात्'

१. नक्षयति° S'. २. वंतु. मंपा. द. ३. गोधु° A Bᵇ,P,P²,Cs,WM.; °गो धु मा द्यांश्री ५,१०,१०. ४. °मक्षरत् मं २,७,८. ५. वरेण्योनु प्र° Bᵇ,ग ५,८१,२ ना १२,२ तै ४,१,१०,४ मं.; वरेण्योनुं > वरेण्योनु° D,R; दमूना अनु द्यावापृथिवी द्यांश्री.; °ण्योऽनु द्यावापृथिवी पं २०,११,१० आश्री ४,७,४. ६. सुप्रणीतिः पं. आश्री.; सुप्रणीते द्यांश्री. ७. अनुऽप्रयानम् P; अनुऽप्रयाणम् Cp. ८. एवं स्वरो न सिध्यति. ९. आक्षारयतः S'.

( ऋ १,११५,२ ) इति । यस्माद् उदितः सूर्यः द्युलोकं स्वतेजसा प्रकाशयति अतः पयसा सह आगच्छ । आगत्य तत् पयः घर्मे आसिञ्च इति होता अध्वर्युं ब्रूते ।

उप॑ ह्वये सु॒दुघां॑ धे॒नुमे॒तां सु॒हस्तो॑ गो॒धुगु॒त दो॑हदेनाम् ।
श्रेष्ठं॑ स॒वं स॑वि॒ता सा॑विषन्नो॒ऽभी॑द्धो घ॒र्मस्तदु॒ षु 'प्र वो॑चत्' ॥ ७ ॥

उप॑ । ह्वये॒ । सु॒ऽदुघा॑म् । धे॒नुम् । ए॒ताम् । सु॒ऽह॒स्तः[1] । गो॒ऽधुक् । उ॒त । दो॒ह॒त् । ए॒नाम् ।
श्रेष्ठ॑म् । स॒वम् । स॒वि॒ता । सा॒वि॒ष॒त् । नः॒ । अ॒भिऽइ॑द्धः । घ॒र्मः । तत् । ऊं इति॑ । सु । प्र । वो॒च॒त् ॥७॥

एषा ऋक् उप ह्वये इति लिङ्गाद् दोहार्थं घर्मदुघाह्वाने विनियुक्ता । सुदुघाम् दोग्धुं सुशकाम् । दोग्धेः 'ईषद्दुःसुषु°' (पा ३,३,१२६) इति खल्प्रत्ययः । हकारस्य[3] घकारोपजनश्छान्दसः[4] । एतां पुरोवर्तिनीं धेनुम् उप ह्वये आह्वयामि । ह्वयतेः 'निसमुपविभ्यो ह्वः' (पा १,३,३०) इति आत्मनेपदम् । उत अपि च एनाम् आहूतां धेनुं सुहस्तः कल्याणहस्तः गोधुक् गोर्दोग्धा अध्वर्युः दोहत् दोग्धु । दुहेः पञ्चमलकारे 'लेटोऽडाटौ' (पा ३,४,९४) इति अडागमः । श्रेष्ठम् प्रशस्यतमम् । 'प्रशस्यस्य श्रः' (पा ५,३,६०) इति श्रादेशः । सवम् । सूयते प्रेर्यत इति सवः पयः । 'एष हि श्रेष्ठः सर्वेषां सवानां यदुदकं यद्वा पयः' (नि ११,४३) इति हि यास्कः । षू प्रेरणे इत्यस्मात् 'ग्रहवृदृनिश्चिगमश्च'...

'जवसवौ छन्दसि वक्तव्यौ' (पावा ३,३,५६) इति अच्प्रत्ययः । तं सवं सविता सर्वस्य प्रेरको देवः नः अस्माकं साविषत् प्रेरयतु । षू प्रेरणे । अस्मात् लेटि 'सिब्बहुलम्' (पा ३,१,३४) इति सिप् । इडागमः । 'सिब्बहुलं छन्दसि णित्' (पावा ३,१,३४) इति णिद्भावाद् वृद्धिः । वृद्धौ आवादेशः । घर्मः प्रवर्ग्यः अभीद्धः अभिदीप्तः अभिरुचितः । तत् । सुपो लुक् । उ इति अवधारणे । तमेव दीप्तं घर्मं सु सुष्ठु प्र वोचत् प्रब्रवीति अभिष्टौति । अथ वा यस्माद् अभीद्धो घर्मः तत् तस्माद् घर्मे पय आसेचयितुं सुष्ठु प्रब्रवीति धेनुम् इति होतुः परोक्षेण अभिधानम् । ब्रूञश्छान्दसो लुङ् । 'अमाङ्योगेऽपि' (पा ६,४,७५) इति अडभावः ।

हि॒ङ्कृ॒ण्व॒ती व॑सुप॒त्नी वसू॑नां व॒त्सम॒िच्छन्ती॒ 'मन॑सा न्याग॑न्'[5] ।
दु॒हाम॒श्विभ्यां॒ पयो॑ अ॒घ्न्येयं सा व॑र्धतां मह॒ते सौभ॑गाय ॥ ८ ॥

हि॒ङ्ऽकृ॒ण्व॒ती[6] । व॒सु॒ऽप॒त्नी । वसू॑नाम् । व॒त्सम् । इ॒च्छन्ती॑ । मन॑सा । नि॒ऽआग॑न् ।
दु॒हाम् । अ॒श्विऽभ्या॑म् । पयः॑ । अ॒घ्न्या । इ॒यम् । सा । व॒र्धता॑म् । म॒ह॒ते । सौभ॑गाय ॥ ८ ॥

---

१. प्र वो° Sm; प्र वोचम् ऋ १,१६४,२६ पै १६,६८,४. २. 'हस्ताः P¹. ३. सकारस्य S'. ४. गुणाभावश्चेति द्र. ५. मनसाभ्यागात् ऋ १,१६४,२७ पै १६,६८,५. ६. हिङ्कृ° WM.

एषा ऋक् न्यागन्नित्यागमनलिङ्गाद् धेनौ आगच्छन्त्यां पठनीयेति आश्वलायनेनोक्तम् । हिङ्कृण्वती । हिं इति शब्दानुकृतिः । हिं कुर्वन्ति हि वत्सं प्रति गावः । हिङ्कारं कुर्वती वसूनाम् धनानां वसुपत्नी वसूनां पालयित्री । वसूनां वसुपत्नीत्यत्र वृत्त्यवृत्तिभ्यां स्वामित्वं बहुत्वं च विवक्ष्यते । एतादृशी धेनुः मनसा वत्सम् इच्छन्ती कामयमाना न्यागन् नितराम् आगच्छतु । गमेश्छान्दसे लुङि 'मन्त्रे घसह्वर'' (पा २,४,८०) इति च्लेर्लुकि 'मो नो धातोः' (पा ८,२,६४) इति नत्वम् । आगता च इयम् अघ्न्या । गोनामैतत् (तु. निघ २,११) । अहन्तव्या गौः अश्विभ्याम् देवताभ्याम् । प्रवर्ग्ये अश्विनावेव यष्टव्यौ । तयोरर्थाय पयः क्षीरं दुहाम् दुग्धाम् । दुहेर्लोटि 'लोपस्त आत्मनेपदेषु' (पा ७,१,४१) इति तकारलोपः । सा धेनुः स्वयं च अस्माकं महते प्रभूताय सौभगाय सौभाग्याय सुधनत्वाय वर्धताम् समृद्धा भवतु ।

जुष्टो॒ दमू॑ना॒ अति॑थिर्दुरो॒ण इ॒मं नो॑ य॒ज्ञमुप॑ याहि वि॒द्वान् ।
विश्वा॑ अग्ने अभि॒युजो॑ वि॒हत्य॑[1] शत्रूय॒तामा भ॑रा॒ भोज॑नानि ॥९॥

जुष्टः॑ । दमू॑नाः । अति॑थिः । दु॒रो॒णे । इ॒मम् । नः॒ । य॒ज्ञम् । उप॑ । या॒हि॒ । वि॒द्वान् ।
विश्वाः॑ । अ॒ग्ने॒ । अ॒भि॒ऽयुजः॑ । वि॒ऽहत्य॑[1] । श॒त्रु॒ऽय॒ताम् । आ । भ॒र॒ । भोज॑नानि ॥९॥

हे अग्ने जुष्टः प्रीतः सर्वैः सेव्यमानो वा दमूनाः दान्तमनाः । 'दममना वा दानमना वा दान्तमना वा' (नि ४,४) इति यास्कः । तादृशः अतिथिः अतिथिवत् पूज्यः । यद्वा दुरोणे अतिथिरिति संबन्धः । 'दुरोण इति गृहनाम दुरवा भवन्ति दुस्तर्पाः' (नि ४,५) इति हि निरुक्तम् । सर्वेषु यज्वगृहेषु अतिथिः अतनशीलः विद्वान् जानन् मदीयां त्वद्विषयभक्तिं जानन् नः अस्मदीयं इमं यज्ञम् उप याहि समीपे आगच्छ । आगत्य च हे अग्ने विश्वाः सर्वाः अभियुजः अभियोक्त्रीः परसेना विहत्य विशेषेण हत्वा शत्रूयताम् शत्रून् आत्मन इच्छतां परेषां भोजनानि भुज्यमानानि धनानि आ भर आहर । अस्मभ्यम् इति शेषः । 'हृग्रहोर्भः°' (पावा ८,२,३२) इति हरतेर्हकारस्य भकारः । शत्रूयताम् इति । शत्रुशब्दात् क्यचि 'अकृत्सार्वधातुकयोर्दीर्घः' (पा ७,४,२५) इति दीर्घः ।

अग्ने॒ शर्ध॑ मह॒ते सौभ॑गाय॒ तव॑ द्यु॒म्नान्यु॑त्त॒मानि॑ सन्तु ।
सं जा॑स्पत्यं सु॒यम॒मा कृ॑णुष्व शत्रूय॒ताम॒भि ति॑ष्ठा॒ महां॑सि ॥ १० ॥

---

१. विहत्यं ऋ ५,४,५ मं ४,११,१ नि ४,५. २. °हन्त्यं P¹.

अग्ने॑ । शर्ध॑ । म॒ह॒ते । सौभ॑गाय । तव॑ । द्यु॒म्नानि॑ । उ॒त्ऽत॒मानि॑[1] । स॒न्तु॒ ।
सम् । जा॒ःऽप॒त्यम्[2] । सु॒ऽयम॑म् । आ । कृ॒णु॒ष्व॒ । श॒त्रु॒ऽय॒ताम् । अ॒भि । ति॒ष्ठ॒ । महां॑सि ॥१॥

हे अग्ने त्वम् अस्माकं महते सौभगाय सुधनत्वाय शर्ध । आर्द्रहृदयो भवेत्यर्थः । अस्मभ्यं धनं दातुं सुमना भवेति यावत् । शृधु मृधु[3] उन्दने । भौवादिकः । आमन्त्रितस्य अविद्यमानवत्त्वेन पादादित्वाद् अनिघातः । तव द्युम्नानि द्योतमानानि तेजांसि उत्तमानि उद्गततमानि सन्तु भवन्तु । किं च जास्पत्यम् । जाया च पतिश्च जास्पती तयोः कर्म जास्पत्यम् । 'पत्यन्तपुरोहितादिभ्यो यक्' (पा ५,१,१२८) इति यक् । तत् सुयमम् सुखयमम्[4] अनन्यक्लिष्टं समा कृणुष्व सम्यक्कुरु । यथा आवां जायापती त्वदेकपरिचरणवन्तौ भवाव तथा अनुगृहाणेत्यर्थः । सुयमम् इति । यमेः खल्प्रत्ययः घश्च प्रत्ययो वा[5] । अपि च शत्रूयताम् शत्रून् आत्मन इच्छतां परेषां महांसि तेजांसि अभि तिष्ठ आक्राम । अभिभवेत्यर्थः ।

सू॒य॒व॒साद् भग॑वती[6] हि भू॒या अधा॑[7] व॒यं भग॑वन्तः स्याम ।
अ॒द्धि तृण॑मघ्न्ये विश्व॒दानीं॒ पिब॑ शु॒द्धमु॑द॒कमा॒चर॑न्ती ॥ ११ ॥

[8]सु॒य॒व॒स॒ऽअत् । भग॑ऽवती । हि । भू॒याः । अध॑ । व॒यम् । भग॑ऽवन्तः । स्या॒म॒ ।
अ॒द्धि । तृण॑म् । अ॒घ्न्ये॒ । वि॒श्व॒ऽदानी॑म् । पिब॑ । शु॒द्धम् । उ॒द॒कम् । आ॒ऽचर॑न्ती ॥ ११ ॥

एषा ऋक् प्रवर्ग्ये परिधानीयात्वेन आश्वलायनेन विनियुक्ता । हे घर्मदुघे सुयवसात् शोभनतृणानि अदती । अद भक्षणे इत्यस्मात् कर्मोपपदात् 'अदोऽनन्ने' (पा ३,२,६८) इति विट्प्रत्ययः । शोभनं यवसम् अदती त्वं भगवती धनवती भाग्यवती वा भूयाः । हीति पूरणः । भवतेः आशीर्लिङि रूपम् । अध अनन्तरं वयं भगवन्तः धनवन्तः स्याम भूयास्म । हे अघ्न्ये अहिंस्ये गौः विश्वदानीम् सर्वदा । कालार्थे 'दानीं च' (पा ५,३,१८) इति तदिदंशब्दाभ्यां विहितः छन्दोविषयत्वाद् विश्वशब्दादपि उत्पन्नः । सर्वदा तृणं घासम् अद्धि भक्षय । अद भक्षणे । लोटि 'हुझल्भ्यो हेर्धिः' (पा ६,४,१०१) । तथा आचरन्ती सर्वतश्चरन्ती त्वं शुद्धम् निर्मलम् उदकं पिब च ।

इति चतुर्थं सूक्तम् ।

इत्यथर्वसंहिताभाष्ये वेदार्थप्रकाशे सप्तमकाण्डे षष्ठोऽनुवाकः ।

---

१. उत्ऽत॑° P². २. जा॒ःप॒त्यम् ऋग्पा ५,२८,३. ३. मृदु S'. ४. सुसं-यम् S'. ५. घप्रत्यये न स्वरसिद्धिः. ६. भगवति काश्रौ २५,१,१८. ७. अर्धा ऋ १,१६४,४० वै १६,६९,१० आपश्रौ ९,५,४ काश्रौ. ८. सुय॒° P,J.

सप्तमेऽनुवाके त्रीणि सूक्तानि। तत्र 'अपचिताम्' इति आद्ये सूक्ते प्रथमाभ्याम् ऋग्भ्यां प्रत्यृचं गण्डमालाभैषज्यार्थं सूत्रोक्तलक्षणेन धनुषा शरेण च गण्डमालां विध्येत्।

तथा तस्मिन्नेव कर्मणि कृष्णोर्णास्तुकावज्वालितम् उदकम् आभ्याम् अभिमन्त्र्य उषःकाले व्याधितम् अवसिञ्चेत्।

सूत्रितं हि — " 'अपचिताम्' इति वैणवेन दार्भूषेण[1] कृष्णोर्णाज्येन" ( कौसू ३२,८ ) इत्यादि।

ईर्ष्याविनाशकर्मणि 'त्वाष्ट्रेणाहम्' इत्येनाम् ईर्ष्यावन्तं दृष्ट्वा जपेत्।

तथा ईर्ष्यावते अनया सक्तुमन्थम् अभिमन्त्र्य दद्याद् ईर्ष्यावन्तं स्पृष्ट्वा वा जपेत्।

तद् उक्तं संहिताविधौ — " 'त्वाष्ट्रेणाहम्' (३) इति [2]प्रतिजापप्रदानाभिमर्शनानि" ( कौसू ३६,२५ ) इति।

दर्शपूर्णमासयोः व्रतोपायने 'व्रतेन त्वं व्रतपते' (४) इत्येषा विनियुक्ता। "व्रतमुपैति। 'व्रतेन त्वं व्रतपते' " (कौसू १,३३;३४) इति हि कौशिकं सूत्रम्।

'प्रजावतीः' ( अ ७,७९ ) इति द्व्यृचस्य गोपुष्टिकर्मणि विनियोग उक्तः ( द्र. कौसू १९,१४ )।

'आ सुस्रसः' इति द्वाभ्यां गण्डमालाभैषज्यकर्मणि शङ्खं घृष्ट्वा अभिमन्त्र्य शुनकलालां वा अभिमन्त्र्य गण्डमालां प्रलिम्पेत्।

तथा तत्रैव कर्मणि अनेन द्व्यृचेन जलूकां गृहगोधिकां वा अभिमन्त्र्य रुधिरमोक्षार्थं गण्डमालास्थाने संश्लेषयेत्।

तथा तत्रैव कर्मणि सैन्धवलवणं चूर्णयित्वा अनेन द्व्यृचेन अभिमन्त्र्य गण्डमालास्थाने विकीर्य तूष्णीं निष्ठीवेत्।

सूत्रितं हि— " 'अपचिताम्[3]', 'आ सुस्रसः' ( अ ७,८० ) इति किस्त्यादीनि। लोहितलवणं संक्षुद्याऽभिनिष्ठीवति" ( कौसू ३१,१६,१७ ) इति।

तथा गण्डमालाभैषज्यकर्मण्येव 'अपचितां लोहिनीनाम्' इत्यत्रोक्तानि कर्माण्यपि अनेन द्व्यृचेन कुर्यात्। सूत्रमपि तत्रैवोदाहृतम्।

---

१. दार्भ्यूषेण Bl.; दार्भूषेण वा S'. २. °जापः प्र° Bl. ३. 'चित Bl.

राजयक्ष्मभैषज्यार्थं 'यः कीकसाः' इति तृचेन वीणातन्त्रीखण्डं वाद्यखण्डं शङ्खखण्डं वा संपात्य अभिमन्त्र्य बध्नीयात् । सूत्रितं हि — " 'यः कीकसाः' (अ ७,८०,३-८१,१) इति वीणातन्त्रीं[1] बध्नाति" ( कौसू ३२,११ ) इत्यादि ।

अ॒प॒चितां॑ लोहि॑नीनां[2] कृ॒ष्णा मा॒तेति॑ शुश्रुम[3] ।
मु॒नेर्दे॒वस्य॑ मूले॑न॒ सर्वा॑ विध्यामि॒[4] ता अ॒हम् ॥ १ ॥

अ॒प॒ऽचिता॑म् । लोहि॑नीनाम् । कृ॒ष्णा । मा॒ता । इति॑ । शु॒श्रु॒म ।
मु॒नेः । दे॒वस्य॑ । मूले॑न । सर्वाः॑ । वि॒ध्या॒मि॒ । ताः । अ॒हम् ॥ १ ॥

दोषवशाद् अपाक् चीयमाना गलाद् आरभ्य अधस्तात् कक्षादिसंधिस्थानेषु प्रसृता गण्डमालाः अपचितः । यद्वा अपचिन्वन्ति पुरुषस्य वीर्यम् इति अपचितः । अपपूर्वात् चिनोतेः कर्तरि कर्मणि वा क्विप् । 'ह्रस्वस्य पिति कृति तुक्' ( पा ६,१,७१ ) । ताश्च लोहिन्यः लोहितवर्णाः । लोहितशब्दाद् 'वर्णादनुदात्तात् तोपधात्तो नः' ( पा ४,१,३९ ) इति ङीप् । तत्संनियोगेन तकारस्य नकारः । वर्णभेदविशिष्टा गण्डमालाप्रभेदाः षष्ठकाण्डे — 'अपचितः प्र पतत' ( अ ६,८३ ) इति सूक्ते स्पष्टम् उक्ताः । लोहितवर्णानाम् अपचितां कृष्णा कृष्णवर्णा रोगनिदानभूता पिशाची माता जननी उत्पादयित्री इति शुश्रुम श्रुतवन्तः स्मः । शृणोतेर्लिटि उत्तमबहुवचने 'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि' ( पा ७,२,१३ ) इति इण्निषेधः । मातृकीर्तनेन अपचितः रोगान्तरवत् साधारणौषधादिना परिहरणीया न भवन्तीति प्रोह्यते । ताः पूर्वोक्तदुःसाधाः सर्वा अपचितः मुनेः मननीयस्य देवस्य द्योतमानस्य । अथर्वण इत्यर्थः । मूलेन । मूल प्रतिष्ठायाम् इति धातुजोऽयं शब्दः । अथर्वसंबन्धिना सर्वकारणभूतसामर्थ्येन । तदात्मना भावितेन शरेणेत्यर्थः । तेन शरेण अहं प्रयोक्ता विध्यामि विदारयामि । यद्वा मुनेर्देवस्य इति पदद्वयेन शरप्रकृतिभूतो वृक्षविशेष उच्यते । मुनेर्मननीयस्य स्तुत्यस्य देवस्य देवरूपस्य वनस्पतेः । तस्य देवतात्मकत्वम् 'अञ्जन्ति[5] त्वामध्वरे देवयन्तः' ( ऋ ३,८,१ ) इत्यादिषु स्पष्टम् अवगम्यते । तस्य मूलेन मूलवत् सारभूतो यो वृक्षस्यांशस्तन्निर्मितेन मूलप्रदेशनिर्मितेन वा शरेण विध्यामि । अथ वा मुनेर्देवस्य इति पदद्वयेन धनुःप्रकृतिभूतो वेणुदार्भूपसंज्ञको वृक्ष उच्यते । तस्य मूलेन सामर्थ्याधायकेन शरेण विध्यामीति संबन्धः । अधिज्यस्य हि धनुषः सामर्थ्यम् इषुविसर्जनेन गम्यते

---

१. पिनीलवीणा° Bl		२. अर्जुनीनाम् पै १९,३६,२.		३. शुश्रोम पै.
४. छिनद्मि पै.		५. अंजति S'.

इति तस्य मूलभूतः शर इत्युक्तम्। केचिद् आहुः—मुनेः मन्युमतः देवस्य। दीव्यतेर्विजिगीषार्थात् पचाद्यच्। विजयमानस्य क्रोधवतः क्रूरस्य। रुद्रस्य इत्यर्थः। तस्य मूलेन प्रधानभूतवीर्यरूपेण शत्रून्मूलनसाधनेन वा शरेण विध्यामि। गण्डमालावेधनसाधनभूतोऽयं शरः लौकिकः शरो न भवति किं तु असुरपुरनिर्भेदकस्य रुद्रस्य संबन्धी शरोऽयम् इति लौकिकशरस्य रुद्रशरात्मना भावनम् इति। रुद्रस्य पुरनिर्भेदनार्थम् इषुविसर्जनं तैत्तिरीये समाम्नायते— 'त इषुं समस्कुर्वत। अग्निमनीकं सोमं शल्यं विष्णुं तेजनम्। तेऽब्रुवन् क इमामसिष्यतीति। रुद्र इत्यब्रुवन्। रुद्रो वै क्रूरः। सोऽस्यतु' (तै ६,२,३,१;२) इति। एतद् उक्तं भवति—पापदेवतानिष्पादिता गण्डमाला अहं भैषज्यकर्ता लौकिकेन शरेण न विध्यामि किं तु रुद्रस्य शरेणेति।

विध्या॑म्यासां[1] प्रथ॒मां वि॒ध्या॑म्यु॒त[2] म॑ध्य॒माम्।
इ॒दं[3] ज॑घ॒न्या॑मासा॒मा च्छि॑नद्मि॒ स्तुका॑मिव ॥ २ ॥

विध्या॑मि। आ॒सा॒म्। प्र॒थ॒माम्। विध्या॑मि। उ॒त। म॒ध्य॒माम्।
इ॒दम्। ज॒घ॒न्या॑म्। आ॒सा॒म्। आ। छि॒न॒द्मि॒। स्तुका॑म्ऽइव ॥ २ ॥

दोषप्रकर्षसाम्याल्पत्वभेदेन गण्डमालास्त्रिविधाः। तासाम् अपसारणम् अनया उच्यते। आसाम् अपचितां मध्ये प्रथमाम् मुख्यां दोषप्रकर्षेण उद्भूतां दुश्चिकित्सामपि गण्डमालां विध्यामि। मुनेर्देवस्य मूलेनेति संबन्धः। अस्या अपि ऋचः शरेण वेधने विनियुक्तत्वात्। उत अपि च मध्यमाम् दोषसाम्येन उद्भूतां नातिदुःसाधाम्[4]। सुसाधाम् इत्यर्थः। तादृशीम् अपचितं विध्यामि शरेण। तथा इदम् इदानीम् आसाम् अपचितां मध्ये जघन्याम् अल्पदोषसमुद्भूताम् ईषत्प्रयत्नेन निर्हरणीयां गण्डमालाम् आ च्छिनद्मि सर्वतो विदारयामि। छिदिर् द्वैधीकरणे। रुधादिः। छेदने दृष्टान्तः — स्तुकाम् इव इति। यथा ऊर्णास्तुका अनायासेन छिद्यते तथेति।

त्वा॒ष्ट्रेणा॒हं वच॑सा॒ वि त॑ ई॒र्ष्याम॑मीमदम्।
अथो॒ यो म॒न्युष्टे॑[5] पते॒ तमु॑ ते शमयामसि ॥ ३ ॥

त्वा॒ष्ट्रेण॑। अ॒हम्। वच॑सा। वि। ते॒। ई॒र्ष्याम्। अ॒मी॒म॒द॒म्।
अथो॒ इति॑। यः। म॒न्युः। ते॒। प॒ते॒। तम्। ऊं इति॑। ते॒। श॒म॒या॒म॒सि॒ ॥ ३ ॥

---

1. छिनद्म्यासां पै १९,३६,३. 2. छिनद्म्युत पै. 3. उतो पै. 4. नाति-दुःसाधामपि S'. 5. मन्युर्द्दे > मन्युस्त्वं A; मन्युस्तें R,W.

हे ईर्ष्योपेत पुरुष ते तव ईर्ष्याम् क्रोधं स्त्रीविषये क्रियमाणं त्वाष्ट्रेण । अवयवविभागकर्ता त्वष्टा । श्रूयते हि —'यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत् प्रजायते' ( तै १,५,९,२ ) इति । तत्संबन्धि त्वाष्ट्रम् । तेन वचसा वाक्येन मन्त्रेण अहं प्रयोक्ता स्त्री वा व्यमीमदम् विगतमदां करोमि । निवारयामीत्यर्थः । ईर्ष्याया मदो नाम उद्रेकः । ईर्ष्याम् उद्रेकरहितां करोमीति यावत् । न केवलम् ईर्ष्योद्रेकशमनम् । अथो अपि तु हे पते वल्लभ ते तव यो मन्युः क्रोधः मद्विषयः ते तव तं क्रोधं शमयामसि शमयामः । उ इत्यवधारणे । अत्रापि त्वाष्ट्रेण वचसा इति संबध्यते । यथा लोके दुर्वृत्ताः पुत्राः पितुराज्ञया दुर्व्यसनाद् निवर्तन्ते एवं पुरुषगतेर्ष्याविनाशने सर्वोत्पादकस्य त्वष्टुरुक्तिः करणत्वेनोक्ता ।

व्रतेन॒ त्वं॑[1] व्र॑तपते॒ सम॑क्तो वि॒श्वाहा॑ सु॒मना॑ दीदिही॒ह ।
तं त्वा॑ व॒यं जा॑तवेदः॒ समि॑द्धं प्र॒जाव॑न्त॒ उप॑ सदेम॒ सर्वे॑ ॥ ४ ॥

व्र॒तेन॑ । त्वम्[1] । व्र॒त॒ऽप॒ते॒ । सम्ऽअ॑क्तः । वि॒श्वाहा॑ । सु॒ऽमना॑ः । दी॒दि॒हि॒ । इ॒ह ।
तम् । त्वा॒ । व॒यम् । जा॒त॒ऽवे॒दः॒ । सम्ऽइ॑द्धम् । प्र॒जाऽव॑न्तः । उप॑ । स॒दे॒म॒ । सर्वे॑ ॥ ४ ॥

हे व्रतपते व्रतस्य कर्मणः पालयितः । कर्मफलप्रदातृत्वाद् व्रतपतित्वम् अग्नेः । 'त्वं व्रतानां व्रतपतिरसि' ( तै १,२,११,१ ) इति मन्त्रान्तरम् । व्रतेन अनुष्ठीयमानेन दर्शपूर्णमासादिकर्मणा समक्तः संस्कृतः संभावितः । सम्यग् इष्ट इत्यर्थः । अग्नेः कर्मणि निष्ठा । एवंविधस्त्वं विश्वाहा विश्वेषु अहस्सु सर्वदा सुमनाः शोभनमनस्कः अस्मद्विषये अनुग्रहबुद्धियुक्तः सन् इह अस्मिन् अस्मदीये गृहे दीदिहि । 'दीदेतिर्दीप्तिकर्मा' ( तु. निघ १,१६ ) इति यास्कः । दीप्यस्व । हे जातवेदः जातानां भूतानां वेदितः जातैर्विद्यमान ज्ञायमान वा जातप्रज्ञ जातधन वा हे अग्ने समिद्धम् सम्यग्दीप्तं तं पूर्वोक्तगुणं त्वा त्वां प्रजावन्तः । प्रजायन्त इति प्रजाः । पुत्रपौत्रादिसमेताः सर्वे वयम् उप सदेम उपसद्याम तव परिचरणं क्रियास्म । सदेः 'लिङ्याशिष्यङ्' (पा ३,१,८६) इति अङ्प्रत्ययः ।

प्र॒जाव॑तीः सू॒यव॑से[2] रु॒शन्ती॑ः[3] शु॒द्धा अ॒पः सु॑प्रपा॒णे पिब॑न्तीः ।
मा व॑ स्ते॒न ईशत॒ माघशं॑सः॒ परि॑ वो॑[4] रु॒द्रस्य॑ हे॒तिर्वृ॑णक्तु[5] ॥ ५ ॥

प्र॒जाऽव॑तीः । सु॒ऽयव॑से । रु॒शन्ती॑ः । शु॒द्धाः । अ॒पः । सु॒ऽप्र॒पा॒ने । पिब॑न्तीः ।
मा । व॒ः । स्ते॒नः । ई॒श॒त॒ । मा । अ॒घऽशं॑सः । परि॑ । व॒ः । रु॒द्रस्य॑ । हे॒तिः । वृ॒ण॒क्तु॒ ॥ ५ ॥

'प्रजावतीः' ( अ ४,२१,७ ) इत्येषा पञ्चमी व्याख्याता ।

---

१. त्वां B,Bᵇ,K,Kᵐ,R,Sᵐ,V,Cs,Cp,WM २. सूयवसे ऋ ६,२८,७ तैब्रा २,८,८,१२. ३. रिशन्तीः ऋ. तैब्रा. ४. नो मा १६,५०; णो का१७,८,४. ५. वृज्याः ऋ.; वृञ्ज्यात् तैब्रा.; वृज्यात् का.

पदज्ञा[1] स्थ रमतयः संहिता विश्वनाम्नीः । उप मा देवीर्देवेभिरेत ॥
इमं गोष्ठमिदं सदो घृतेनास्मान्त्समुक्षत ॥ २ ॥

पदऽज्ञाः । स्थ । रमतयः[2] । सम्ऽहिताः । विश्वऽनाम्नीः[3] । उप । मा । देवीः[4] । देवेभिः । आ । इत ।
इमम् । गोऽस्थम् । इदम् । सदः । घृतेन । अस्मान् । सम् । उक्षत ॥ २ ॥

हे रमतयः[5] । गोनामैतत् । तद् उक्तम् आपस्तम्बेन—'चिदसि मनासि धीरसि रन्ती रमतिः सूनुः सूनरीत्युच्चैरह्वे सत मनुष्यगवीः' ( आश्रौ ४,१०,४ ) इति । पयःप्रदानादिना रमयित्र्यो धेनवः । रमु क्रीडायाम् । औणादिकः अतिप्रत्ययः[6] । पदज्ञाः सहचरीणां गवां पदानि जानत्यः स्थ भवथ । यद्वा पद्यते गम्यत इति पदं गृहं तज्जानत्यः स्थ । गोसंचरस्थाने चरित्वा पुनरस्मदीयमेव गृहं ज्ञात्वा आगच्छन्त्यो भवतेत्यर्थः । गा विशिनष्टि—संहिताः वत्सैः सहिताः अन्यगवीभिर्वा सहिताः परस्परम् आनुकूल्यं प्राप्ताः । विश्वनाम्नीः व्याप्तनामधेयाः । 'वा च्छन्दसि' ( पा ६,१,१०६ ) इति जसः पूर्वसवर्णदीर्घः । सर्वत्र प्रसिद्धसंज्ञाः बहुविधनामधेया वा । एकस्या गोरनेकसंज्ञासद्भावस्तैत्तिरीये समाम्नायते— 'इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि' ( तै ७,१,६,८ ) इति । यद्वा विश्वं जगत् नमयन्ति स्वात्माभिमुखं कुर्वन्तीति विश्वनाम्न्यः । क्षीरादिलाभाय हि सर्वे धेनूः प्रार्थयन्ते । अत एव हे देवीः देव्यः दीव्यन्त्यो गावो यूयं देवेभिः देवैर्दीव्यद्भिः स्वकीयवत्सादिभिः सह मा मां पुष्टिकामम् उपेत[7] समीपम् आगच्छत । इण् गतौ । लोटि मध्यमबहुवचने रूपम् । आगत्य च इमम् अस्मदीयं गोष्ठम् । गावस्तिष्ठन्ति अत्रेति गोष्ठः गोनिवासस्थानम् । गोशब्दोपपदात् तिष्ठतेः अधिकरणे कः । 'अम्बाम्बगोभूमि' ( पा ८,३,९७ ) इति सकारस्य मूर्धन्यादेशः । इदम् अस्मदीयं सदः । सीदन्त्यत्रेति सदः गृहम् । अस्मान् गोष्ठगृहस्वामिनश्च घृतेन घृतोत्पादकेन पयसा घृतेन वा समुक्षत सम्यक् सिञ्चत । उक्ष सेचने । यथा गव्यसमृद्धिर्भवति तथा यूयम् अस्मद्गृहेषु समृद्धा भवतेत्यर्थः ।

आ सुस्रसः सुस्रसो असतीभ्यो असत्तराः ।
सेहोरसतरा लवणाद् विक्लेदीयसीः ॥ १ ॥

आ । सुऽस्रसः । सुऽस्रसः । असतीभ्यः । असत्ऽतराः ।
सेहोः । अरसऽतराः[8] । लवणात् । विऽक्लेदीयसीः ॥ १ ॥

---

१. पदज्ञाः B २. रमतयाः P. ३. °नाम्नी P. ४. देवीः P. ५. रंग्मेगा. ६. एवं स्वरो न सिध्यति. ७. उपैत इंगा. ८. °तरः P.

'या ग्रैव्या अपचितः' इत्युत्तरमन्त्रेऽभिधानाद् अत्रापि अपचित एवोच्यन्ते। सुस्रसः अत्यर्थं स्रवन्त्यः सर्वदा पूयादिस्रवणशीलाः । सुपूर्वात् स्रंसतेः क्विप्। 'अनिदितां हल उपधायाः क्ङिति' (पा ६,४,२४) इति नकारलोपः। अत एव असतीभ्यः सतीविरुद्धा असत्यः बाधिका रोगव्यक्तयस्ताभ्योऽपि असत्तराः अत्यर्थम् असत्यो बाधिका एवंविधा अपचिन्नामिका गण्डमालाः आसुस्रसः[1] आ समन्ताद् निरवशेषं स्रवणशीला भवन्तु । मन्त्रौषधप्रयोगेण निःशेषं स्रवणेन विनश्यन्तु इत्यर्थः। अपचितो विशिनष्टि—शेहोः[1] शेहुर्नाम विप्रकीर्णावयवः अत्यन्तं निःसारस्तूलादिरूपः पदार्थः तस्मादपि अरसतराः निःसारतराः । अपचितो हि पाकावस्थातः पूर्वम् अबाधिका इव दृश्यन्ते । पश्चात् कक्षादिसंधिप्रदेशेषु व्याप्ता व्रणरूपेण बाधन्ते। रोगप्रादुर्भावकाले स्वरूपापरिज्ञानेन अरसत्वम् उक्तम् । पाकोत्तरकालं कृत्स्नावयवव्याप्त्यनन्तरं लवणात् सर्वदा स्रवणशीलत्वेन [2]प्रसिद्धात् एतन्नामधेयात्[2] पदार्थादपि विक्लेदीयसीः अतिशयेन विविधं क्लेदनवत्यः । यथा लवणो यत्र कुत्रापि निहितोऽपि सर्वदा स्रवति तस्मादपि पाकावस्थोत्तरकालं सर्वाङ्गसंधिषु पूयादिस्रवणशीला भवन्ति । एतादृश्योऽपचितः आसुस्रसो भवन्त्विति संबन्धः । विक्लेदीयसीरिति । विविधः क्लेदो यासां ता विक्लेदाः अतिशयेन विक्लेदा विक्लेदीयस्यः। 'द्विवचनविभज्योपपदे'' (पा ५,३,५७) इति ईयसुन्प्रत्ययः । 'टेः' (पा ६,४,१५५) इति टिलोपः। 'वा च्छन्दसि' (पा ६,१,१०६) इति जसः पूर्वसवर्णदीर्घः।

या ग्रैव्या[3] अपचितोऽथो या उपपक्ष्याः ।
विजाम्नि या अपचितः स्वयंस्रसः ॥ २ ॥

याः । ग्रैव्याः । अपऽचितः । अथो इति । याः । उपऽपक्ष्याः[4] ।
विऽजाम्नि । याः । अपऽचितः । स्वयम्ऽस्रसः ॥ २ ॥

ग्रैव्याः ग्रीवायां भवाः गलप्रदेशे उत्पन्नाः । ग्रीवाशब्दात् 'ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानम्' (पावा ४,३,५९) इति तत्र भवः (पा ४,३,५३) इत्यर्थे ञ्यप्रत्ययः[5] । 'ग्रीवाभ्योऽण् च' (पा ४,३,५७) इति अण्प्रत्यये तु ङीपि यणादेशे च कृते ग्रैव्य इति भवति । ग्रीवाभवा या अपचितः । अथो अपि च उपपक्ष्याः उपपक्षे पक्षसमीपे उपकक्षे भवा या अपचितः । विजाम्नि । विशेषेण जायते अपत्यम् अत्रेति विजामा गुह्यप्रदेशः । जायतेः 'अन्येभ्योऽपि दृश्यन्ते' (पा ३,२,७५) इति मनिन्। 'विड्वनोरनुनासिकस्यात्' (पा ६,४,४१) इति प्रत्ययविशेषे विहितम् आत्त्वं छन्दोविषयत्वाद् अस्मिन्नपि भवति । विजाम्नि गुह्यप्रदेशे तदुपलक्षिते ऊरुसंधौ या अपचितः

---

१. वैतु. मंग. द्र. २. 'द्रावयेतन्नाम' S'. ३. ग्रैव्या Bᵇ. ४. 'पुक्ष्याः P³,Cp. ५. वस्तुतः 'ग्रीवाभ्योऽण् च' इत्यनेनैव ञ्यप्रत्ययश्छान्दस इति द्र.

दोषवशाद् अपाक् चीयमाना गण्डमालास्ताः सर्वाः स्वयंस्रसः स्वयं स्रवणशीलाः मन्त्रौषधप्रयोगेण निरवशेषं स्रवन्त्यो भवन्तु इति तच्छब्दाध्याहारेण वाक्यं पूरणीयम् । यद्वा स्वयंस्रसः क्षाराद्यौषधप्रक्षेपाभावेऽपि दोषातिरेकवशाद् ग्रीवोपपक्षोरुसंधिस्थानेषु व्रणरूपेण पूयादिस्रवणशीला या अपचितः सन्ति ताः सर्वाः आसुस्रसो भवन्तु इति पूर्वमन्त्रेण संबन्धः । या ग्रैव्या इत्युत्तरमन्त्रे यच्छब्दश्रुतेः आसुस्रस इति पूर्वमन्त्रे तच्छब्दं विनापि वाक्यं पूर्यते ।

यः कीकसाः[1] प्रशृणाति[2] [3]तलीद्य॒मवतिष्ठति[3] ।
निर्हास्तं[4] सर्वं जायान्यं यः कश्च[5] ककुदि श्रितः ॥ ३ ॥

यः । कीकसाः । प्रऽशृणाति[6] । तलीद्य॒म् । अवऽतिष्ठति ।
[7]निः । हाः[7] । तम्[7] । सर्वम् । जायान्यम्[8] । यः । कः । च । ककुदि । श्रितः ॥ ३ ॥

यो राजयक्ष्माख्यो रोगः कीकसाः अस्थीनि प्रशृणाति[9] प्रसरति व्याप्नोति । अस्थिपर्यन्तं व्याप्नोतीत्यर्थः । सरतेर्विकरणव्यत्ययः । यश्च रोगः तलीद्यम् । तलिद् इति अन्तिकनाम (तु. निघ २,१६) । अन्तिके भवं तलीद्यम् । 'भवे छन्दसि' (पा ४,४,११०) इति यत् । इकारस्य दीर्घश्छान्दसः । अस्थिसमीपगतं मांसम् अवतिष्ठति अवकृष्य तिष्ठति । मांसं शोषयतीत्यर्थः । यः कश्चित्[5] दुःसाधो राजयक्ष्माख्यो रोगः ककुदि ककुद्नाम ग्रीवापरभागः तस्मिन् श्रितः संश्रितः ककुत्स्थानं तनूकुर्वन् यो रोगोऽस्ति तं सर्वं शरीरगतसर्वधातुशोषकं जायान्यम् निरन्तरजायासंभोगेन जायमानं क्षयरोगं निर्हाः निर्हरतु । मन्त्रसंस्कृतम् औषधम् अग्न्यादिसंज्ञको वा देवः विनाशयतु । हरतेश्छान्दसे लुङि रूपम् । जायान्यशब्दो रोगविशेषपरः । स च जायासंबन्धेन प्राप्नोतीति तैत्तिरीयके समाम्नायते — 'प्रजापतेस्त्रयस्त्रिंशद् दुहितर आसन् । ताः सोमाय राज्ञेऽददात् । तासां रोहिणीमुपैत्' इति प्रक्रम्य समाम्नायते — 'तासां रोहिणीमिवोपैत् । तं यक्ष्म आरदिति[10] । तद् राजयक्ष्मस्य जन्म । यत् पापीयानभवत् तत् पापयक्ष्मस्य । यज्जायाभ्योऽविन्दत् तज्जायेन्यस्य । य एवम् एतेषां यक्ष्माणां[11] जन्म वेद नैनमेते यक्ष्मा विन्दन्ति' (तै २,३,५,२) इति । तत्र जायेन्य इति पठ्यते अत्र तु जायान्य इति आकारवत्त्वेन इति विशेषः ।

पक्षी जायान्यः पतति स[12] आ विशति पूरुषम्[13] ।
तदक्षितस्य भेषजमुभयोः सुक्षतस्य च ॥ ४ ॥

---

१. कीकस्रा B,R. २. प्रसृणाति D,Cs, सा. ३. तलीद्यम॑° B; °मुपतिष्ठति पै १९,४०,७. ४. तु. सा.; वैतु. मूको. RW. च निरास्तं; ततास्तर्वं पै.; ह्विट्नि सं १,१८२७ द्र. ५. कश्चित् पै. सा. ६. प्रऽस्मृणाति J. ७. निः । आस्तम् P; निः । आस्तम् P¹,J Cp. ८. जायान्यम् P. ९. वैतु. मंगा. द्र. १०. आर्च्छद् संग. ११. नास्ति संग. १२. यः पै १९,४०,८. १३. पौरुषम् पै.

पक्षी । जायान्यः । पतति । सः । आ । विशति । पुरुषम् ।
तत् । अक्षितस्य । भेषजम् । उभयोः । सुऽक्षतस्य । च ॥ ४ ॥

जायान्यः क्षयरोगः पक्षी पक्षवान् पतत्री भूत्वा पतति सर्वत्र चरति । स रोगः पुरुषम् पुरुषम् आ विशति सर्वतः प्रविशति । पुरुषस्य कृत्स्नं शरीरं व्याप्नोतीत्यर्थः । अक्षितस्य । क्षि निवासगत्योः । शरीरे चिरकालावस्थानरहितस्य । सुक्षितस्य[1] चिरकालम् अवस्थितस्य । यद्वा क्षणु हिंसायाम् इति धातुः । इकारोपजनश्छान्दसः । अक्षितस्य[2] अहिंसकस्य शरीरम् अशोषयतः सुक्षितस्य शरीरगतसर्वधातून् सुष्ठु निःशेषं शोषयतः । चशब्दः समुच्चये । उभयोः अक्षितसुक्षितयोः क्षयरोगयोः तत् प्रसिद्धं मन्त्राभिमन्त्रितं वीणातन्त्रीखण्डादिरूपं भेषजम् निवर्तनौषधं भवति ।

इति सप्तमेऽनुवाके प्रथमं सूक्तम् ।

'विद्म वै ते' इत्यस्या ऋचो राजयक्ष्मभैषज्ये 'यः कीकसाः' ( अ ७,८०,३;४ ) इति द्व्यृचेन सह उक्तो विनियोगः ।

सोमयागे माध्यन्दिनसवने 'धृषत् पिब' इत्यनया द्रोणकलशस्थं सोमं ब्रह्मा अनुमन्त्रयेत । "द्रोणकलशस्थमनुमन्त्रयते । 'धृषत्पिब' (२) इति माध्यन्दिने" ( वैताश्रौ १६, १३;१४ ) इति हि वैतानं सूत्रम् ।

अभिचारकर्मणि 'सातपनाः' इति तृचेन विद्युद्धतवृक्षसमिध आदध्यात् ।

तथा चातुर्मास्येषु साकमेधपर्वणि मध्यन्दिने काले सांतपनमरुद्यागं 'सांतपनाः' इति ब्रह्मा अनुमन्त्रयेत । तद् उक्तं वैताने—"मध्यन्दिने सांतपनानां मरुतां 'सांतपना इदम्' ( अ ७,८२ ) इति" ( वैताश्रौ ९,२ ) इति ।

सर्वव्याधिभैषज्यकर्मणि 'वि ते मुञ्चामि' इत्यनया उदकघटं संपात्य अभिमन्त्र्य सूत्रोक्तप्रकारेण व्याधितम् आप्लावयेद् अवसिञ्चेद् वा । सूत्रितं हि—" 'सिनीवालि' ( अ ७,४८ ), 'वि ते मुञ्चामि' ( अ ७,८३ ), 'शुम्भनी' ( अ ७,११७ ) इति मौञ्जैः पर्वसु बद्ध्वा पिञ्जूलीभिराप्लावयति । अवसिञ्चति" ( कौसू ३२,३;४ ) इति ।

तथा दर्शपूर्णमासयोः मुच्यमानयोक्त्रां पत्नीम् अनया ब्रह्मा अनुमन्त्रयेत । तद् उक्तं वैताने—" 'वि ते मुञ्चामि', 'अहं वि ष्यामि' ( अ १४,१,५७ ), 'प्र त्वा मुञ्चामि' ( अ १४,१,१९ ) इति पत्नीं योक्त्रेण विमुच्यमानामनुमन्त्रयेत" ( वैताश्रौ ४,११ ) इति ।

---

१. वैतु. मंपा. द्र. २. भक्षव° S'.

दर्शपूर्णमासयोः 'अस्मै क्षत्राणि' **इत्यनया हविरासादनानन्तरम् इध्मम् उपसमादध्यात्** । " 'अग्निर्भूम्याम्' ( अ १२,१,१९ ) इति तिसृभिरुपसमादधाति 'अस्मै क्षत्राणि' ( अ ७,८३,२ ), 'एतमिमम्' ( अ १०,६,३५ ) इति वा" ( कौसू २,४१ ) **इति सूत्रात्**।

'यत् ते देवा अकृण्वन्' **इति चतसृभिः स्वाभिलषितफलकामः अमावास्यां यजेत उपतिष्ठेत वा**। 'बृहस्पतिर्न' ( अ ७,५३ ), 'यत् ते देवा अकृण्वन्' ( अ ७,८४ ), 'पूर्णा पश्चात्' ( अ ७,८५ ) **इति हि कौशिकं सूत्रम्** ( कौसू ५९,१९ ) ।

**तथा दर्शयागे पार्वणहोमं** 'यत् ते देवा अकृण्वन्' **इत्यनया कुर्यात्**। " 'यत् ते देवा [१]अकृण्वन् भागधेयम्' इत्यमावास्यायाम्" ( कौसू ५,६ ) **इति कौशिकसूत्रात्**।

**तथा श्रौतदर्शयागे** 'यत् ते देवा अकृण्वन्' **इति कुहूदेवतां परिगृह्णीयात्**। " 'कुहूं देवीं' ( अ ७,४९ ), 'यत्ते देवा अकृण्वन् भागधेयम्' इत्यमावास्यायाम्" ( वैताश्री १,१६ ) **इति वैतानं सूत्रम्** ।

विद्म[२] वै ते॑ जायान्य जानं॒ यतो॑ जायान्य॒ जाय॑से ।
क॒थं ह॒ तत्र॒ त्वं [३]ह॑नो॒ यस्य॑ कृ॒ण्मो ह॒विर्गृ॒हे ॥ १ ॥

वि॒द्म । वै । ते॒ । जा॒या॒न्य॒ । जान॑म् । यतः॑ । जा॒या॒न्य॒ । जाय॑से ।
क॒थम् । ह॒ । तत्र॑ । त्वम् । ह॒नः॑[४] । यस्य॑ । कृ॒ण्मः । ह॒विः । गृ॒हे ॥ १ ॥

**हे** जायान्य **जायाख्य आगत राजयक्ष्माख्य रोग** ते **तव** जानम् **जन्म उत्पत्तिनिदानं वा** विद्म वै **जानीमः खलु। वैशब्दः श्रुत्यन्तरप्रसिद्धिद्योतनार्थः**। 'यज्जायान्योऽविन्दत् तज्जायेन्यस्य' ( तै २,३,५,२ ) **इति तैत्तिरीयश्रुतिः उदाहृता। हे** जायान्य **जायासंबन्धाद् आगत रोग** यतः **यस्मान्निदानात्** जायसे **उत्पद्यसे तन्निदानं जानीम इति संबन्धः। एवं तवोत्पत्तिं जानाना वयं** यस्य **यजमानस्य** गृहे हविः **रोगनिर्हरणक्षमेन्द्रादिदेवतासंबन्धि आज्यादिरूपं** कृण्मः **कुर्मः**† **देवतोद्देशेन तदुचितं हविः प्रक्षिपामः**[५] तत्र **तस्मिन् यजमाने । विषयसप्तमी। तद्विषये हे क्षयरोग** त्वं कथं हनः **केन प्रकारेण हन्याः । यद्रोगनिर्हरणार्थं यत्र देवता इज्यते तत्र स रोगो न बाधत इत्यर्थः। हन इति। हन्तेः पञ्चमलकारे अडागमः। कृण्म इति।** 'लोपश्चास्यान्यतरस्यां म्वोः' ( पा ६,४,१०७ ) **इति उप्रत्ययलोपः** ।

धृ॒षत् पि॑ब क॒लशे॒ सोम॑मिन्द्र वृत्र॒हा शू॑र सम॒रे वसू॑नाम् ।
माध्यं॑दिने॒ सव॑न॒ आ वृ॑षस्व रयि॒ष्ठानो॑[६] र॒यिम॒स्मासु॑ धेहि ॥ २ ॥

---

१. नास्ति RG. २. विद्मा Sm. ३. हन्या यत्र कुर्यान्मद्धविः पै १९,४०,८. ४. हनः P,J,Cp. ५. प्रक्षिपामतः S'. ६. रयिस्थानो
† कुर्मो मा १७,५२.
ऋ ६,४७,६ पै २०,३१,७ सा.

धृषत् । पिब । कुलशे । सोमम् । इन्द्र । वृत्रऽहा । शूर । समऽअरे । वसूनाम् ।
माध्यन्दिने । सवने । आ । वृषस्व । रयिऽस्थानः । रयिम् । अस्मासु । धेहि ॥ २ ॥

हे इन्द्र धृषत् धृष्टः धर्षको वा शत्रूणाम् । ञिधृषा प्रागल्भ्ये । शतरि व्यत्ययेन शः । कलशे द्रोणकलशाख्ये स्थितं सोमं पिब । किंनिमित्तम् । हे शूर विक्रान्त वृत्रहा वृत्रं हतवान् त्वं वसूनाम् धनानां समरे संगमे निमित्ते । अस्मान् धनं संयोजयितुं पिबेत्यर्थः । संपूर्वाद् अर्तेः 'ऋदोरप्' (पा ३,३,५७) । 'थाथ' (पा ६,२,१४४) इत्यादिस्वरेण अन्तोदात्तः । सोमपानस्य कालम् आह — माध्यन्दिने मध्यन्दिनसंबन्धिनि सवने । सूयते अभिषूयते सोमः अत्रेति सवनः कालः । तत्र आ वृषस्व सर्वतः सिञ्च । जठरे सोमम् इति शेषः । यद्वा आवृषतिर्भक्षण-कर्मा इति यास्कः(?) । भक्ष च । सोमम् इति शेषः । ततः रयिस्थानः[1] । तिष्ठन्ति अस्मिन् धनानि इति स्थानः । अधिकरणे ल्युट्प्रत्ययः । धननिवासस्थानभूतः स त्वं रयिम् धनम् अस्मासु धेहि धारय ।

सांतपना इदं हविर्मरुतस्तज्जुजुष्टन । अस्माकोती[2] रिशादसः ॥ १ ॥
साम्ऽतपनाः । इदम् । हविः । मरुतः । तत् । जुजुष्टन । अस्माक । ऊती । रिशादसः ॥ १ ॥

हे सांतपनाः । संतापकारी संतपनः सूर्यः । तत्संबन्धिनः । मध्यन्दिने हि सूर्यः संतपति । संतपनस्य इमे इति 'तस्येदम्' (पा ४,३,१२०) इति अण् । 'आमन्त्रितस्य च' (पा ६,१,१९८) इति पाष्ठिकम् आद्युदात्तत्वम् । यद्वा संतपनं संतापः । तस्येमे इति पूर्ववद् अण् । उभयत्रापि मध्यन्दिनकाले यष्टव्या इत्यर्थः । हे मरुतः इदं हविः । युष्मभ्यं कल्पितम् इति शेषः । हे मरुतः तत् हविः जुजुष्टन सेवध्वम् । जुषतेर्व्यत्ययेन श्लुः । अस्माक अस्माकम् ऊती । 'सुपां सुलुक्' (पा ७,१,३९) इति चतुर्थ्याः पूर्वसवर्णदीर्घः । ऊतये अस्मद्रक्षणार्थम् हे रिशादसः । रिशन्ति हिंसन्तीति रिशाः । तेषाम् उपक्षपयितारः । दस्यतेः अन्तर्णीतण्यर्थात् क्विप् । यद्वा रिशानाम् अत्तारः । अद भक्षणे इत्यस्माद् असुन् । दस्यतेरत्तेर्वा रूपम् इति अनवधारणाद् अनवग्रहः । अपादादित्वाद् आष्टमिकं सर्वानुदात्तत्वम् । अस्मान् रक्षितुं शत्रूणां बाधका यूयं हविः सेवध्वम् इति संबन्धः ।

---

१. वेंदु. संसा. द्र. २. युष्माकोती ऋ ७,५९,९ तै ४,३,१३,३ मै ४,१०,५.

यो नो मर्तो मरुतो 'दुर्हृणायुस्तिरश्चित्तानि' वसवो' जिघांसति' ।
द्रुहः' पाशान्' प्रति 'मुञ्चतां सस्तपिष्ठेन' तपसा" हन्तना' तम् ॥ २ ॥

यः । नः । मर्तः । मरुतः । दुःऽहृणायुः । तिरः । चित्तानि । वसवः । जिघांसति ।
द्रुहः । पाशान् । प्रति । मुञ्चताम्' । सः । तपिष्ठेन । तपसा । हन्तन । तम् ॥ २ ॥

हे वसवः वासकाः । प्रशस्या इत्यर्थः । वसुप्रदा वा हे मरुतः यो मर्तः मरणधर्मा मनुष्यः दुर्हृणायुः दुष्टं क्रुध्यन् तिरः तिरोभूतः अन्तर्हितः दृष्टिविषयम् अप्राप्तः सन् नः अस्माकं चित्तानि जिघांसति हन्तुम् - इच्छति । क्षोभयतीत्यर्थः । स शत्रुः द्रुहः पापानां द्रोग्धुर्वरुणस्य पाशान् प्रति मुञ्चताम् धारयतु । वरुणपाशैर्बद्धो भवत्वित्यर्थः । तं जिघांसन्तं जनं तपिष्ठेन तापयितृतमेन तपसा तापकेन आयुधेन हन्तन हिंस्त हे मरुतः । हन्तेर्लोटि तस्य तनबादेशः । पित्त्वाद् अनुनासिकलोपाभावः ।

संवत्सरीणा मरुतः स्वर्का उरुक्षयाः सगणा मानुषासः[10] ।
ते[11] अस्मत् पाशान् प्र[12] मुञ्चन्त्वेनसः[13] सांतपना मत्सरा[14] मादयिष्णवः ॥३॥

समऽवत्सरीणाः । मरुतः । सुऽअर्काः । उरुऽक्षयाः । सऽगणाः । मानुषासः ।
ते । अस्मत् । पाशान् । [15]प्र । मुञ्चन्तु[15] । एनसः । सामऽतपनाः । मत्सराः । मादयिष्णवः ॥३॥

संवत्सरीणा संवत्सरं भाविनः वर्षेवर्षे प्रादुर्भविष्यन्तः । 'तमधीष्टो भृतो भूतो भावी' (पा ५,१,८०) इत्यर्थे 'संपरिपूर्वात्ख च' (पा ५,१,९२) इति संपूर्वाद् वत्सरात् खप्रत्ययः । स्वर्काः । अर्कशब्दं यास्को बहुधा निरुवाच — 'अर्को देवो भवति । यदेनमर्चन्ति । अर्को मन्त्रो भवति । यदनेनार्चन्ति । अर्कमन्नं भवति' (नि ५,४) इत्यादि । सुमन्त्राः । मन्त्रैः सम्यक् स्तूयमाना इत्यर्थः । सूर्यरूपदेवसंबन्धिनो वा अन्नप्रदत्वेन शोभनान्ना वा । उरुक्षयाः । क्षयशब्दो निवासवाची । उरुर्विस्तीर्णः क्षयः अन्तरिक्षरूपो निवासो येषां ते । अन्तरिक्षसंचारिण[16] इत्यर्थः । सगणाः । 'सप्तगणा वै मरुत' (तै २,२,५,७) इति श्रुतेः स्वीयस्वीयसंघयुक्ताः । मानुषासः वृष्टिनिमित्तत्वेन मनुष्यहितकारिणः । सांतपनाः शत्रूणां संतापकारिणः । मत्सराः माद्यन्तः मादयिष्णवः सर्वस्य संतोषकरणशीलाः । ते एवंगुणविशिष्टा मरुतः अस्मत् अस्मत्तः सकाशाद् एनसः पापकारिणः पाशान् बाधकान् प्र मुञ्चन्तु प्रमोचयन्तु ।

---

१. °तिरः सत्यानि तै ४,३,१३,३ अभि दुर्हृ° ऋ ७,५९,८ मै ४,१०,५. २. बहुधा पै २०,३१,५. ३. जिघांसात् तै ४,३,१३,४ पै.; जिघांसत् पै [मूको.]. ४. तस्मिन् तान्, पै. ५. पाशं तै. काठ २१,१३. ६. स (पू काठ.) मुचीष्ट तपि° ऋ. तै. मै. काठ.; मुञ्चता यूयं तपि° पै; ९. मुचतान्° स तपि° Bᵇ,D,Sᵐ,Cs,R,W. ७ हन्मना ऋ. मै. ८. मश्विना? पै. १२. प्रति पै. Pᵃ. १० मानुषेषु तै.; मानुषेभ्यः पै २०,३१,६. ११. प्र पै. १३. °न्त्वंहसः तै., °न्तु सर्वान् पै. १४. मंदिरा तै. १५. प्रति ।° P; प्र । निमुञ्चन्तु Pᵃ; प्रति ।° > प्र ।° J. १६. °रिक्षे सं° S'.

वि ते॑ मुञ्चामि रश॒नां[1] वि योक्त्रं॒[2] वि नि॒योज॑नम्[3] ।
इ॒हैव त्वमज॑स्र एध्यग्ने ॥ १ ॥

वि । ते॒ । मु॒ञ्चा॒मि॒ । र॒श॒नाम् । वि । योक्त्र॑म् । वि । नि॒ऽयोज॑नम् ।
इ॒ह । ए॒व । त्वम् । अज॑स्रः । ए॒धि॒ । अ॒ग्ने॒ ॥ १ ॥

हे अग्ने ते तव त्वत्कर्तृकां[4] रशनाम् व्यापिकां रज्जुम् । 'अशे रश च' ( पाउ २,७५ ) इति युच्प्रत्ययः । त्वत्कर्तृकां रुग्णविषयां कक्ष्यावस्थितां कण्ठबन्धनसाधनभूतां वा बाधिकां रज्जुं वि मुञ्चामि विमोचयामि प्रयोक्ता अहम् । तथा योक्त्रम् योजनोपयुक्तं रज्जुविशेषं मध्यप्रदेशबन्धनसाधनम् वि । मुञ्चामीति क्रियानुषङ्गः । तथा नियोजनम् नितरां योजनसाधनम् नीचीनं वा बन्धनसाधनं सर्वावयवबन्धकं रज्जुविशेषम् वि । मुञ्चामीत्यनुषङ्गः । सर्वत्र क्रियानुषङ्गं द्योतयितुं वीत्युपसर्गश्रुतिः । अतः बन्धनमोचनात् हे अग्ने त्वम् इहैव अस्मिन्नेव रोगार्ते । विषयसप्तमी । रुग्णविषये अजस्रः । जसु हिंसायाम् इति धातुः । 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' ( पा ३,२,१६७ ) इति ताच्छीलिको रप्रत्ययः । अबाधनशीलः एधि भव । अस्तेर्लोटि हेर्धिभावे 'घ्वसोरेद्धौ' ( पा ६,४,११९ ) इति एकारादेशः । यद्वा रोगार्त एव संबोध्यते । हे रोगार्त ते तव संबन्धिनीं रशनाम् हननसाधनभूतं मृत्युपाशं वि मुञ्चामि । एवं [5]योक्त्रनियोजनशब्दौ व्याख्येयौ । अतो रशनादिविमोकात् हे अग्ने । अग्निवद् अग्निः । अग्निवद् दीप्यमान रोगान्मुक्त पुरुष त्वम् इहैव अस्मिन्नेव लोके अजस्रः परैर्मृत्युना वा अबाधितः एधि भव । अस्मिन् पक्षे कर्मणि रप्रत्ययो द्रष्टव्यः । पत्नी वा संबोध्यते ।

अ॒स्मै क्ष॒त्राणि॑ धा॒रय॑न्तमग्ने युन॒ज्मि॑ त्वा॒ ब्रह्म॑णा॒ दैव्ये॑न ।
[6]दी॒दि॒ह्य१॒॑स्मभ्यं॑[7] द्रवि॑णे॒ह[8] भ॒द्रं प्रेमं[9] वो॑चो हवि॒र्दां दे॒वता॑सु ॥ २ ॥

अ॒स्मै । क्ष॒त्राणि॑ । धा॒रय॑न्तम् । अ॒ग्ने॒ । यु॒न॒ज्मि॑ । त्वा॒ । ब्रह्म॑णा । दैव्ये॑न ।
दी॒दि॒हि । अ॒स्मभ्य॑म् । द्रवि॑णा । इ॒ह । भ॒द्रम् । प्र । इ॒मम् । वो॒चः॒ । ह॒वि॒ःऽदाम् । दे॒वता॑सु ॥ २ ॥

हे अग्ने अस्मै यजमानाय क्षत्राणि । बलनामैतत् । बलानि धारयन्तम् । प्रयच्छन्तम् इत्यर्थः । तादृशं त्वा त्वां दैव्येन देवसंबन्धिना ब्रह्मणा मन्त्रेण युनज्मि हविर्वहनार्थं योजयामि । अथ अस्मभ्यं द्रविणा द्रविणानि धनानि भद्रम् भन्दनीयं सुखं पुत्रादिलाभादिनिमित्तं च इह इदानीं दीदिहि । देहीति यावत् । ददातेश्छा-

---

१. रश॒ना तै १,६,४,३. २. योक्त्रा तै.; योक्त्राणि मै १,४,१ काठ ५,२ पै १८,१८,६.– ३. दु॒ष्मीन् तै. मं. पै. ४. त्वत्कर्तृ॰ S'. ५. योक्त्र॰ S'. ६. दीदि॒ह्य॒ A,B; धु॒त्तादु॒स्मासु तै.; धत्तादस्मे॰ मं.; दैदिव्यौ भस्म॰ पै २०,११,८. ७. 'र्ण॒ यच्छ तै. ८. प्र णो तै.; प्रे मा मं. ९. मूलाद् भागधां तै. मं.

न्द्रसं रूपम् । अथवा दीदेतिर्दीप्तिकर्मा ( तु. निघ १,१६ ) इति यास्कः । अस्मभ्यं धनादिकं संदीपय । समर्धयेत्यर्थः । यद्वा धनं सुखं च अस्मभ्यं दातुम् इह इदानीं दीदिहि । इध्मेन दीप्यस्वेत्यर्थः । ततः हविर्दाम् चरुपुरोडाशादिरूपं हविः प्रयच्छन्तम् । ददातेः क्विप् । तादृशम् इमं यजमानं देवतासु अग्नीन्द्रादिषु प्र वोचः प्रब्रूहि । असौ यजमानो हविषा देवता यजत इति तस्यै तस्यै यष्टव्यदेवतायै कथयेत्यर्थः ।

यत् ते॑ दे॒वा अकृ॑ण्वन्[1] भाग॒धेय॒ममा॑वास्ये सं॒वस॑न्तो[2] महि॒त्वा ।
ते॒ना[3] नो॑[4] य॒ज्ञं पि॑पृहि[4] विश्ववारे र॒यिं नो॑ धेहि सुभगे[5] सु॒वीर॑म् ॥ १ ॥

यत् । ते॒ । दे॒वाः । अकृ॑ण्वन् । भा॒ग॒ऽधेय॑म् । अमा॑ऽवास्ये । स॒म्ऽवस॑न्तः । म॒हि॒ऽत्वा । तेन॑ । नः॒ । य॒ज्ञम् । पि॒पृ॒हि॒ । वि॒श्व॒ऽवा॒रे॒ । र॒यिम् । नः॒ । धे॒हि॒ । सु॒ऽभ॒गे॒ । सु॒ऽवीर॑म् ॥ १ ॥

अमा सह वसतः सूर्यचन्द्रावस्याम् इति अमावास्या । 'अमावस्यदन्यतरस्याम्' ( पा ३,१,१२२ ) इति ण्यत्प्रत्ययः । णित्त्वात् पक्षे उपधावृद्धिः । तस्याः संबुद्धिः । हे अमावास्ये ते तव महित्वा महत्त्वेन । तृतीयाया आकारादेशः । यद्वा महित्वा महत्त्वे । सप्तम्या आकारः । कर्मकालव्याप्तिपर्यन्तं संवसन्तः सम्यग्वसन्तः । हविरपेक्षया तिष्ठन्तो देवाः अग्नीन्द्रसोमादयः भागधेयम् हविषो भागम् अकृण्वन् अकुर्वन् स्वीकृतवन्त इति यत् । 'यत् ते देवा अदधुर्भागधेयम्' ( तै ३,५,१,१ ) इति तैत्तिरीये श्रूयते । यद्वा हे अमावास्ये ते तुभ्यं यद् भागधेयं हविषो भागम् अमावास्यायां यष्टव्यत्वेन संवसन्तो देवा अकृण्वन् अकुर्वन् प्रायच्छन् । दर्शे अमावास्याया अपि हविषो भागोऽस्ति । भागधेयम् इति । 'भागरूपनामभ्यो'[6] (पावा ५,४,३६) इति धेयप्रत्ययः । तेन हविर्भागस्वीकरणेन नः अस्मदीयं यज्ञं पिपृहि पूरय साङ्गं कुरु । हे विश्ववारे विश्वैः सर्वैर्वरणीये । किं च हे सुभगे शोभनभाग्ययुक्ते अमावास्ये नः अस्मभ्यं सुवीरम् । वीराः कर्मणि कुशलाः पुत्रादयः । शोभनपुत्रादियुक्तं रयिम् धनं धेहि प्रयच्छ ।

अ॒हमे॒वास्म्य॑मा॒वास्या॒३॑[7] मामा व॑सन्ति सु॒कृतो॒ मयी॒मे ।
मयि॑ दे॒वा उ॒भये॑ सा॒ध्याश्चेन्द्र॑ज्येष्ठाः स॒मग॑च्छन्त॒ सर्वे॑ ॥२॥

अ॒हम् । ए॒व । अ॒स्मि॒ । अ॒मा॒ऽवा॒स्या॒ । माम् । आ । व॒स॒न्ति॒ । सु॒ऽकृतः॑ । मयि॑ । इ॒मे । मयि॑ । दे॒वाः । उ॒भये॑ । सा॒ध्याः । च॒ । इन्द्र॑ऽज्येष्ठाः । सम् । अ॒ग॒च्छ॒न्त॒ । सर्वे॑ ॥ २ ॥

---

१. अकृण्वद् B[b],K,V; अदधुर् तै ३,५,१,१. २. संवदन्तो पै २०,१३,१. ३. सा नो तै.; सेम पै. ४. पपुरी पै. ५. सुभगं पै. ६. रूपनामभागेभ्यो धेयः. ७. °स्यां D,K,K[m],R,S[m],V,Cs. ७. वसन्तु पै १,१०३,४.

न्दर्स रूपम् । अथवा दीदेतिर्दीप्तिकर्मा ( द्र. निघ १,१६ ) इति यास्कः । अस्म
धनादिकं संदीपय । समर्धयेत्यर्थः । यद्वा धनं सुखं च अस्मभ्यं दातुम् ३
इदानीं दीदिहि । इध्मेन दीप्यस्वेत्यर्थः । ततः हविर्दाम् चरुपुरोडाशादिरूपं ह
प्रयच्छन्तम् । ददातेः क्विप् । तादृशम् इमं यजमानं देवतासु अग्नीन्द्रादिषु प्र बोच
प्रब्रूहि । असौ यजमानो हविषा देवता यजत इति तस्यै तस्यै यष्टव्यदेवता
कथयेत्यर्थः ।

यत् ते॑ दे॒वा अकृ॑ण्वन्[1] भाग॒धेय॒ममा॑वास्ये सं॒वस॑न्तो[2] महि॒त्वा ।
ते॒ना॑ नो[3] य॒ज्ञं पि॑पृहि[4] विश्ववारे र॒यिं नो॑ धेहि सुभगे[5] सु॒वीर॑म् ॥ १ ॥

यत् । ते॒ । दे॒वाः । अकृ॑ण्वन् । भा॒ग॒ऽधेय॑म् । अमा॑ऽवास्ये । स॒म्ऽवस॑न्तः । म॒हि॒ऽत्वा ।
तेन॑ । नः॒ । य॒ज्ञम् । पि॒पृ॒हि॒ । वि॒श्व॒ऽवा॒रे॒ । र॒यिम् । नः॒ । धे॒हि॒ । सु॒ऽभ॒गे॒ । सु॒ऽवीर॑म् ॥ १ ॥

अमा सह वसतः सूर्यचन्द्रावस्याम् इति अमावास्या । 'अमावस्यदन्यतरस्याम्'
( पा ३,१,१२२ ) इति ण्यत्प्रत्ययः । णित्त्वात् पक्षे उपधावृद्धिः । तस्याः संबुद्धिः ।
हे अमावास्ये ते तव महित्वा महत्त्वेन । तृतीयाया आकारादेशः । यद्वा महित्वा
महत्त्वे । सप्तम्या आकारः । कर्मकालव्याप्तिपर्यन्तं संवसन्तः सम्यग्वसन्तः । हविर-
पेक्षया तिष्ठन्तो देवाः अग्नीन्द्रसोमादयः भागधेयम् हविषो भागम् अकृण्वन् अकुर्वन्
स्वीकृतवन्त इति यत् । 'यत् ते देवा अदधुर्भागधेयम्' ( तै ३,५,१,१ ) इति तैत्तिरीये
श्रूयते । यद्वा हे अमावास्ये ते तुभ्यं यद् भागधेयं हविषो भागम् अमावास्यायां
यष्टव्यत्वेन संवसन्तो देवा अकृण्वन् अकुर्वन् प्रायच्छन् । दर्शे अमावास्याया
अपि हविषो भागोऽस्ति । भागधेयम् इति । 'भागरूपनामभ्यो°[6]' (पावा ५,४,३६) इति
धेयप्रत्ययः । तेन हविर्भागस्वीकरणेन नः अस्मदीयं यज्ञं पिपृहि पूरय साङ्गं कुरु ।
हे विश्ववारे विश्वैः सर्वैर्वरणीये । किं च हे सुभगे शोभनभाग्ययुक्ते अमावास्ये
नः अस्मभ्यं सुवीरम् । वीराः कर्मणि कुशलाः पुत्रादयः । शोभनपुत्रादियुक्तं रयिम्
धनं धेहि प्रयच्छ ।

अ॒हमे॒वास्म्य॑मावा॒स्या॒३॑[7] मामा व॑सन्ति सु॒कृतो॒ मयी॒मे ।
मयि॑ दे॒वा उ॒भये॑ सा॒ध्याश्चेन्द्र॑ज्येष्ठाः स॒मग॑च्छन्त॒ सर्वे॑ ॥२॥

अ॒हम् । ए॒व । अ॒स्मि॒ । अ॒मा॒ऽवा॒स्या॒ऽ३ । माम् । आ । व॒स॒न्ति॒ । सु॒ऽकृतः॑ । मयि॑ । इ॒मे ।
मयि॑ । दे॒वाः । उ॒भये॑ । सा॒ध्याः । च॒ । इन्द्र॑ऽज्येष्ठाः । सम् । अ॒ग॒च्छ॒न्त॒ । सर्वे॑ ॥ २ ॥

---

१. अकृण्वन् B^h,K,V; अदधुर् तै ३,५,१,१. २. संवदन्तो पै २०,१२,१.
३. सा नो तै.; सेमं पै. ४. पपुरी पै. ५. सुभगं पै. ६. रूपनामभागेभ्यो
धेयः.; °स्यां D,K,K^m,R,S^m,V,Cs. ७. वसन्तु पै १,१०३,४.

अत्र देवतावासस्थानभूतत्वेन अमावास्याशब्दनिष्पत्तिरिति देवता स्वयमेव स्वनाम निर्वक्ति — अहमेव अमावास्या अमावास्याभिमानिनी देवता अस्मि। न केवलं शब्दतः अपि तु अर्थतोऽपि एतन्नामिका भवामि। तद् दर्शयति पादत्रयेण — सुकृतः सुकर्माणो देवा मां मयि आ वसन्ति निवसन्ति यप्व्यत्ययेन अवतिष्ठन्ते। 'उपान्वध्याङ्वसः' (पा १,४,४८) इति आङ्पूर्ववसिप्रयोगे माम् इत्यस्य कर्मता। आ मा वसन्ति देवा इति अमावास्याशब्दनिरुक्तिः। आङ्वसत्योर्मध्ये मा इति अस्मदो द्वितीयैकवचनस्य प्रयोगः। आङुपसर्गस्य ह्रस्वत्वम्। इति अमावास्याशब्दनिष्पत्तिः प्रदर्शिता। प्रत्ययस्तु पूर्वमेव उक्तः। माम् इति द्वितीयार्थमेव विवृणोति — मयीमे इति। इमे देवाः मयि निवसन्ति इति आवासपदस्य अर्थकथनद्वारेणापि अमावास्याशब्दो निरुच्यते। साध्याः। चशब्दः अनुक्तसमुच्चयार्थः। सिद्धाश्च साध्यसिद्धनामका उभये द्विप्रकारा इन्द्रज्येष्ठाः इन्द्रप्रमुखाः सर्वे देवाः मयि समगच्छन्त संगच्छन्ते यप्व्यत्ययेन मिलिता भवन्ति। एतद् उक्तं भवति— माम् आ वसन्ति देवा मयि निवसन्ति यप्व्यत्ययेन मयि संगच्छन्ते इति अन्वर्थम् अमावास्याशब्दवाच्या भवामीति। अमा सह वसुरूप इन्द्रो वसति अस्यां तिथौ इति अमावास्याशब्दनिरुक्तिरिति तैत्तिरीये श्रूयते — 'अमा वै नोऽद्य वसु वसतीति। इन्द्रो हि देवानां वसु। तद् अमावास्याया अमावास्यत्वम्' (तै २,५,३,६) इति।

'आगन् रात्री[1] सङ्गमनी[2] वसूनामूर्जं[3] पुष्टं वस्वावेशयन्ती[4]।
अमावास्यायै[5] हविषा विधेमोर्जं दुहाना[6] पयसा न आगन्॥ ३॥

आ। अगन्। रात्री। सम्ऽगमनी। वसूनाम्। ऊर्जम्। पुष्टम्। वसु। आऽवेशयन्ती। अमाऽवास्यायै। हविषा। विधेम। ऊर्जम्। दुहाना। पयसा। नः। आ। अगन्॥ ३॥

रात्री अमावास्याकालयुक्ता तिथिः वसूनाम् धनानां संगमनी संयोजयित्री। विधेयविशेषणम् एतत्। अस्मान् धनं संयोजयितुम् आगन् आगच्छतु। गमेश्छान्दसे लुङि 'मन्त्रे घस॰' (पा २,४,८०) इति च्लेर्लुक्। 'मो नो धातोः' (पा ८,२,६४) इति नत्वम्। तथा ऊर्जम् अन्नरसं पुष्टम् पोषं वसु धनं च आवेशयन्ती अस्मदभिमुखं प्रयच्छन्ती। आगन्निति संबन्धः। अमावास्यां गोरूपेणाह — नः अस्माकम् ऊर्जम् अन्नरसं पयसा क्षीरेण सह दुहाना आगन् आगच्छतु। 'अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना' (तैब्रा ३,७,५,१३) इति शाखान्तरे श्रूयते। तादर्थ्ये अमावास्यायै तदर्थम्। यद्वा कर्मणः संप्रदानत्वाच्चतुर्थी। अमावास्यां देवतां हविषा आज्यादिरूपेण विधेम परिचरेम।

इति सप्तमेऽनुवाके द्वितीयं सूक्तम्।

---

१. निवेशनी तै ३,५,१,१; निवेशनः मा १२,६६.　२. सङ्गमनी मा. ... ३. °नां विश्वा (°श्वं पै.) तै. पै १,१०३,१.　४. रूपाणि वसून्यावे° तै. ... ५. °वास्यां पै. ६. वसाना पै.



'अमावास्ये न' इत्यस्याः सर्वाभिलषितकर्मणि 'यत् ते देवा अकृण्वन्' इत्यत्र विनियोग उक्तः।

सर्वफलकामः 'पूर्णा पश्चात्' इति द्वाभ्याम् 'पौर्णमासी प्रथमा यज्ञियासीत्' इत्यनया च पौर्णमासीं यजेत उपतिष्ठेत वा।

तस्मिन्नेव कर्मणि 'प्रजापते न त्वत्' इत्यनया प्रजापतिं यजेत उपतिष्ठेत वा।

'यत् ते देवा अकृण्वन्', ( अ ७,८४,१ ), 'पूर्णा पश्चात्' 'प्रजापते' ( अ ७,८५,१;३ ) इति सूत्रात् ( कौसू ५९,१९ )।

पूर्णमासयागे 'पूर्णा पश्चात्' इति पूर्णमासीं देवतां परिगृह्णीयात्। " 'राकामहम्' ( अ ७,५० ), 'पूर्णा पश्चात्' ( अ ७,८५ ) इति पौर्णमास्याम्" ( वैताश्री १,१६ ) इति वैतानसूत्रात्।

तत्रैव कर्मणि 'पूर्णा पश्चात्' इति पार्वणहोमं जुहुयात्। " 'पूर्णा पश्चात्' इति पौर्णमास्याम्" ( कौसू ५,५ ) इति हि कौशिकं सूत्रम्।

दर्शपूर्णमासयोः 'संनतिहोमानन्तरं 'प्रजापते न त्वत्' इत्यनया आज्यं जुहुयात्। " 'पृथिव्याम् अग्नये समनमन्' ( अ ४,३९ ) इति संनतिभिश्च[2] 'प्रजापते न त्वदेतान्यन्यः' ( अ ७,८५,३ ) इति च" ( कौसू ५,९ ) इति सूत्रात्।

तथा सर्वेषु श्रौतकर्मसु अनुमन्त्रणमन्त्रानादेशे 'प्रजापते न त्वत्' इत्यनया अनुमन्त्रणं कुर्यात्। तद् उक्तं वैताने—"मन्त्रानादेशे लिङ्गवतेति भागलिः। 'प्रजापते न त्वदेतान्यन्यः' इति युवा कौशिकः। यथादेवतम् इति माठरः" ( वैताश्री १,३ ) इति।

तथा दर्शपूर्णमासयोः प्राजापत्यम् आघारम् अनया ब्रह्मा अनुमन्त्रयेत। " 'प्रजापते न त्वदेतान्यन्यः' इति प्राजापत्यम् आघारम्" ( वैताश्री २,१२) इति सूत्रात्।

तथा 'मारुद्गणी बलकामस्य' ( शाक १७,५ ) इति विहितायां महाशान्तौ 'प्रजापते न त्वत्' इत्येनाम् ऋचम् आवपेत्। तद् उक्तं शान्तिकल्पे—" 'मरुतां मन्वे' ( अ ४,२७ ), 'प्रजापते न त्वदेतान्यन्यः' इति मारुद्गण्याम्" (शाक १८,७) इति।

विवाहे 'पूर्वापरम्' इति ऋचेन आज्यसमित्पुरोडाशादीनि जुहुयात्। सूत्रितं हि—" 'सत्येनोत्तभिता' (अ १४,१), 'पूर्वापरम्' (अ ७,८६) इत्युपदधीत" (कौसू ७५,६) इति।

महाशान्तौ ग्रहयज्ञे 'सोमस्यांशो युधां पते' इति चतुर्ऋचेन हविराज्यहोमसमिदाधानोपस्थानानि बुधाय कुर्यात्। तद् उक्तं शान्तिकल्पे—" 'यद् राजानः' ( अ ३,२९ ), 'सोमस्यांशो युधां पते' ( अ ७,८६,३-६ ) इति बुधाय" (शाक १५?) इति।

---

१. संनिति S'. २. संनतिभ्यश्च S'.

अमावास्ये[1] न त्वदेतान्यन्यो विश्वा रूपाणि परिभूर्जजान ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ ४ ॥

अमाऽवास्ये । न । त्वत् । एतानि । अन्यः । विश्वा । रूपाणि । परिऽभूः । जजान ।
यत्ऽकामाः । ते । जुहुमः । तत् । नः । अस्तु । वयम् । स्याम । पतयः । रयीणाम् ॥ ४ ॥

हे अमावास्ये त्वत् त्वत्तः अन्यः कश्चिद् देवः एतानि इदानीं वर्तमानानि विश्वा विश्वानि सर्वाणि । 'शेश्छन्दसि बहुलम्' (पा ६,१,७०) इति शेर्लोपः । रूपाणि रूप्यमाणानि भूतजातानि परिभूः[2] । कृद्योगलक्षणषष्ठ्यभावश्छान्दसः । परिभूः । परिपूर्वो भवतिः परिग्रहार्थः । परिग्राहको व्यापको न जजान नोत्पन्नः । त्वमेव एतानि परिगृह्यासीत्यर्थः । जन जनने । लिटि रूपम् । यद्वा एतानि भूतजातानि त्वत्तः अन्यो देवः परिभूः व्यापकः सन् न जजान नोत्पादयामास । त्वमेव एतानि परिगृह्य स्रष्टुं शक्नोषीति भावः । जनी प्रादुर्भावे । ण्यन्तस्य लिटि मन्त्रविषयत्वाद् आमभावः । 'णेरनिटि' (पा ६,४,५१) इति णिलोपः । वयं च यत्कामाः यत्फलं कामयमानाः ते तुभ्यं जुहुमः हवींषि प्रयच्छामः तत् फलं नः अस्माकम् अस्तु भवतु । तथा वयं च रयीणाम् धनानां पतयः ईश्वराः स्याम भवेम ।

पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय ।
तस्यां[3] देवैः[4] संवसन्तो[5] महित्वा 'नाकस्य पृष्ठे समिषा मदेम'[6] ॥१॥

पूर्णा । पश्चात् । उत । पूर्णा । पुरस्तात् । उत् । मध्यतः । पौर्णऽमासी । जिगाय ।
तस्याम् । देवैः । सम्ऽवसन्तः । महिऽत्वा । नाकस्य । पृष्ठे । सम् । इषा । मदेम ॥ १ ॥

पूर्णा पूर्णचन्द्रोपेता पौर्णमासी पश्चात् प्रतीच्यां दिशि जिगाय जयति सर्वोत्कर्षेण वर्तते । उत अपि च पूर्णा पौर्णमासी पुरस्तात् पूर्वस्यां दिशि जिगाय । तथा मध्यतः प्राक्प्रतीच्योर्दिशोर्मध्ये आकाशमध्ये पौर्णमासी । पूर्णः संपूर्णो माश्चन्द्रः अस्मिन् पर्वणीति पौर्णमासी तिथिः । 'साऽस्मिन्पौर्णमासीति' (पा ४,२,२१) इति अणन्तत्वेन निपातितः । उज्जिगाय उज्जयति । पूर्णकलचन्द्रोपेता पौर्णमासी प्राच्यां प्रतीच्यां च दिशि मध्ये च प्रकाशयुक्ता वर्तत इत्यर्थः । अत्र जेतऽस्याश्रवणाज्जयतिः उत्कर्षवाची । 'सन्लिटोर्जेः' (पा ७,३,५७) इति अभ्यासाद् उत्तरस्य जयतेः कवर्गादेशः । तस्यां पौर्णमास्यां देवैः यष्टव्यैरग्नीषोमादिभिः सह महित्वा महत्त्वेन

१. प्रजापते अ ७,८५,३. २. भूः परि S'. ३. तयोर् आपश्रौ ७,५,१; यस्यां माश्रौ १,२,३. ४. देवा अधि तैं ३,५,१,१ तैब्रा ३,१,१,१२ आपश्रौ.; देवा अभि माश्रौ. ५. संविशन्तः माश्रौ. ६. उत्तमे नाकं इह मादयन्ताम् तैं. तैब्रा.

संवसन्तः संभूय निवसन्तो वयम् । यष्ट्रयष्टव्ययोः एकप्रदेशावस्थानात् संवसन्त इत्युक्तम् । नाकस्य दुःखरहितस्य स्वर्गस्य पृष्ठे उपरि भागे इषा अन्नेन सं मदेम संमाद्येम। माद्यतेः 'लिङ्याशिष्यङ्' ( पा ३,१,८६ ) । पौर्णमास्याम् अग्नीषोमादियागेन स्वर्गभोगप्राप्तिर्भवतीत्यर्थः ।

वृष॒भं॑ वा॒जिनं॑ व॒यं पौ॑र्णमा॒सं॑ य॑जामहे ।
स नो॑ ददा॒त्वक्षि॑तां र॒यिमनु॑पदस्वतीम् ॥ २ ॥

वृ॒ष॒भम् । वा॒जिन॑म् । व॒यम् । पौ॒र्ण॒ऽमा॒सम् । य॒जा॒म॒हे॒ ।
सः । नः॒ । द॒दा॒तु॒ । अक्षि॑ताम् । र॒यिम् । अनु॑पऽदस्वतीम् ॥ २ ॥

वृषभम् वर्षितारम् अभिमतफलानां प्रधानभूतं वा वाजिनम् अन्नवन्तम् अन्नसाधनत्वात् हविर्भिर्वा युक्तं पौर्णमासम् । पूर्णो माश्चन्द्रः अस्मिन्निति पूर्णमाः । प्रज्ञादित्वात् स्वार्थिकः अण् । पौर्णमासम् पर्व वयं यजामहे आहुत्या । स च अस्माभिरिष्टः पौर्णमासः नः अस्माकम् अक्षिताम् अविनाशितां परैरबाधिताम् अनुपदस्वतीम् उपभोगेऽपि क्षयरहितां रयिम् रायं धनं ददातु । अक्षिताम् इत्यनेन परकृतः क्षयो निरस्यते। अनुपदस्वतीम् इत्यनेन उपभोगेन व्ययेऽपि क्षयराहित्यम् उच्यते । अक्षिताम् इति। क्षि क्षये । कर्मणि क्तः । 'निष्ठायामण्यदर्थे' ( पा ६,४,६० ) इति पर्युदासाद् दीर्घाभावः। अत एव 'क्षियो दीर्घात्' ( पा ८,२,४६ ) इति निष्ठानत्वाभावश्च । अनुपदस्वतीम् इति। दसु उपक्षये । संपदादिलक्षणो भावे क्विप् । तदन्तान्मतुप् । 'मादुपधायाः०' (पा ८,२,९) इति वत्वम् । 'तसौ मत्वर्थे' ( पा १,४,१९ ) इति भसंज्ञायां पदसंज्ञानिबन्धनरुत्वाभावः। अनुपदस्वतीम् इति 'नञ्' (पा २,२,६) इति तत्पुरुषसमासः । 'तत्पुरुषे तुल्यार्थ०' ( पा ६,२,२ ) इति अव्ययपूर्वपदप्रकृतिस्वरत्वम् ।

प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑ रू॒पाणि॑ परि॒भूर्ज॑जान ।
यत्का॑मास्ते जुहु॒मस्तन्नो॑ अस्तु व॒यं स्या॑म॒ पत॑यो रयी॒णाम् ॥ ३ ॥

प्रजा॑ऽपते । न । त्वत् । ए॒तानि॑ । अ॒न्यः । विश्वा॑ । रू॒पाणि॑ । प॒रि॒ऽभूः । ज॒जा॒न॒ ।
यत्ऽका॑माः । ते॒ । जु॒हु॒मः । तत् । नः॒ । अ॒स्तु॒ । व॒यम् । स्या॒म॒ । पत॑यः । र॒यी॒णाम् ॥ ३ ॥

एषा ऋक् 'अमावास्ये न त्वदेतानि' (अ ७,८४,४) इत्यनेन व्याख्याता । अमावास्यापदस्थाने प्रजापतिपदं विशिष्यते ।

---

१. ऋषुभं तैब्रा ३,७,५,१३ आपश्री २,२०,५. २. पूर्णमासं तैब्रा. आपश्री. ३. चैतु. मैसा. द्र. ४. नहि मै ४,१४,१ काठ १५,८ पै २०,३१,२०. ५. त्वत्तांन्य° मै.; ह्यन्यं एतां काठ. ६. जजान ऋ १०,१२१,१० तै १,८,१४,२ मं. काठ. तैब्रा २,८,१,२ मैश्रा २,५,६ तैआ १०,५४,१ नि १०,४३. ७. परि ता बभूव ऋ. मा १०,२० तै. प्रजा; महिना जजान पै. ८. यस्मै कं मं.

पौर्णमासी प्रथमा यज्ञियासीदह्नां रात्रीणामतिशर्वरेषु[1] ।
ये त्वां यज्ञैर्यज्ञिये अर्धयन्त्यमी[2] ते[3] नाके[4] सुकृतः प्रविष्टाः[5] ॥ ४ ॥

पौर्णऽमासी । प्रथमा । यज्ञिया । आसीत् । अह्नाम् । रात्रीणाम् । अतिऽशर्वरेषु ।
ये । त्वाम् । यज्ञैः । यज्ञिये । अर्धयन्ति । अमी इति । ते[3] । नाके । सुऽकृतः । प्रऽविष्टाः ॥

पौर्णमासी पूर्णचन्द्रवती एतन्नामिका तिथिः अह्नां रात्रीणाम् अहोरात्राणां मध्ये प्रथमा आदिभूता मुख्या वा यज्ञिया यज्ञार्हा आसीत् भवति । 'यज्ञर्त्विग्भ्यां घखञौ' ( पा ५,१,७१ ) इति घप्रत्ययः । कस्मिन् विषय इति तद् आह — अतिशर्वरेषु । अतिक्रान्तानि शर्वरीम् अतिशर्वराणि । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' ( पावा २,२,१८ ) इति समासः । रात्रिम् अतीत्य वर्तमानेषु सोमादिहविष्षु । यद्वा अतिशयिता शर्वरी येषु हविष्षु इति अतिशर्वराणि । तृतीयसवनव्यापिषु हविष्षु । यज्ञियासीद् इति संबन्धः । अयम् अर्थः — इष्टिपशुसोमानां दर्शपूर्णमासौ प्रकृतिभूतौ । तत्रापि पूर्णमासयागः प्रथमानुष्ठेयः । स च पौर्णमास्यामेव तिथौ क्रियत इति सर्वेषाम् अहोरात्राणां प्रथमत्वेन यज्ञार्हेति । हे यज्ञिये यज्ञार्हे पौर्णमासि त्वा ये ऋत्विग्यजमाना यज्ञैः दर्शपूर्णमासादिभिः अर्दयन्ति[6] अभिमतफलं याचन्ते । अर्द गतौ याचने च । अमी इष्टवन्तस्ते सुकृतः सुकर्माणो यजमानाः नाके दुःखरहिते स्वर्गलोके प्रविष्टाः स्थिता भवन्ति ।

पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परि यातोऽर्णवम्[7] ।
विश्वान्यो[8] भुवना विचष्ट[9] ऋतूँरन्यो[10] विदधज्जायसे[11] नवः[12] ॥ १ ॥

पूर्वऽअपरम् । चरतः । मायया । एतौ । शिशू इति । क्रीडन्तौ । परि । यातः । अर्णवम् ।
विश्वा । अन्यः । भुवना । विऽचष्टे । ऋतून् । अन्यः । विऽदधत् । जायसे । नवः ॥ १ ॥

कश्चित् पूर्वां गच्छति सूर्यः । अन्यस्तम् अनुचरति चन्द्रमाः । एवम् एतौ सूर्यचन्द्रौ पूर्वापरम् । क्रियाविशेषणम् एतत् । पौर्वापर्येण मायया सह चरतः द्युलोके गच्छतः । तौ शिशुवद् भ्रमणात् जायमानत्वाद् वा शिशू इत्युच्येते । शिशू सन्तौ क्रीडन्तौ विहरन्तौ अर्णवम् । अन्तरिक्षनामैतत् । अर्णांसि उदकानि अस्मिन् सन्तीति अर्णवः । 'अर्णसो लोपश्च' (पावा ५,२,१०९) इति वप्रत्ययः सकारलोपश्च । अन्तरिक्षं परि यातः परि गच्छतः । तयोः अन्यः आदित्यो विश्वा विश्वानि भुवना

---

१. °णामुत द° पै १,१०२,१. २. यज्ञियैर्यज्ञैर्वर्धं° पै. ३. ते D.T.K[1].P.Bp[2], RW. ४. नाकं पै. ५. परेताः पै. ६. वैद्व. मंग. द. ७. यातो अर्ण° R; यातो अध्वरम् ऋ १०,८५,१८ मै ४,१२,२ पै १८,३,२ तैब्रा २,७,१२,२. ८. विश्वान्यन्यो ऋ. मै. पै. तैब्रा. ९. °भिचष्ट ऋ. तैब्रा. १०. °तृण्यो A.B[b]; °तूरन्यो R; °तूनन्यो तैब्रा. ११. °धत्तु D,S[m], ऋ. मै. पै. तैब्रा. १२. पुनः ऋ. मै. पै. तैब्रा.

भुवनानि भूतजातानि विचष्टे पश्यति । 'एकान्याभ्यां समर्थाभ्याम्' ( पा ८,१,६५ ) इति निघातनिषेधः । 'तिङि चोदात्तवति' ( पा ८,१,७१ ) इति गतेर्निघातः । अन्यः चन्द्रमाः ऋतून् वसन्तादीन् तदवयवभूतान् मासान् अर्धमासांश्च विदधत् कुर्वन् नवः नूतनः जायते[1] उत्पद्यते । यद्यपि उभयोर्जनिरस्ति तथापि सूर्यस्य सर्वदा प्रवृद्धेः उदयो नाभिप्रेतः । चन्द्रस्य तु कलाह्रासवृद्धिसद्भावाद् नवो जायत इत्युक्तिर्युक्ता । 'चन्द्रमा जायते पुनः' ( मा २३,१० ) इत्यादिश्रुतेश्च ।

नवोनवो भवसि[2] जायमानोऽह्नां केतुरुपसामेष्यग्रम्[3] ।
भागं देवेभ्यो वि दधास्यायन्[4] प्र चन्द्रमस्तिरसे[5] दीर्घमायुः ॥ २ ॥

नवःऽनवः । भवसि । जायमानः । अह्नाम् । केतुः । उषसाम् । एषि । अग्रम् ।
भागम् । देवेभ्यः । वि । दधासि । आऽयन् । प्र । चन्द्रमः । तिरसे । दीर्घम् । आयुः ॥ २ ॥

हे चन्द्रमः त्वं जायमानः शुक्लपक्षप्रतिपदादिषु एकैककलाधिक्येन उत्पद्यमानः सन् नवोनवः पुनःपुनरभिनवो भवसि प्रतिदिनं नूतन एव भवसि । 'अनुदात्तं च' ( पा ८,१,३ ) इति द्वितीयो नवशब्दः अनुदात्तः । किं च अह्नां तिथीनां केतुः केतुवत् केतयिता ज्ञापयिता प्रतिपदादीनां तिथीनां चन्द्रकलाह्रासवृद्ध्यधीनत्वात् । तादृशस्त्वम् उषसाम् रात्रीणाम् अग्रम् एषि अग्रणीर्भवसि । रात्रीणां कर्तृत्वात् । यद्वा अह्नां केतुः अहरवसाने शुक्लपक्षे प्रतीच्यां दिशि दृश्यसे कृष्णपक्षे तु उषसाम् रात्रीणाम् अग्रम् अवसानम् एषि । प्राच्यां दिशि दृश्यस इत्यर्थः । केचन एतं पादम् आदित्यदैवत्यम् आहुः । तस्मिन् पक्षे अह्नां केतुत्वम् उषसाम् अग्रगतिश्च सूर्यस्य प्रसिद्धे । एवम् आयन् आगच्छन् प्रतिदिनं ह्रासवृद्धिभ्यां पक्षान्तम् अभिगच्छन्[6] हे चन्द्रमः त्वं देवेभ्यो भागं हविर्भागं वि दधासि करोषि । तिथिविशेषरूपपर्वनिबन्धनत्वात् सर्वयागानाम् । एवमुक्तलक्षण हे चन्द्रमः त्वं दीर्घम् आयुः प्र तिरसे । प्रपूर्वस्तिरतिर्वर्धनार्थः । प्रवर्धयसि । अत्र निरुक्तम्— " 'नवोनवो भवति' जायमानः' इति पूर्वपक्षादिमभिप्रेत्य । 'अह्नां केतुरुषसामेत्यग्रम्' इति अपरपक्षान्तमभिप्रेत्य । आदित्यदैवतो द्वितीयः पाद इत्येके । 'भागं देवेभ्यो विदधात्यायन्' इति अर्धमासेज्यामभिप्रेत्य । प्रवर्धयते चन्द्रमा दीर्घमायुः" ( नि ११,६ ) इति ।

सोमस्यांशो युधां पतेऽनूनो नाम वा असि ।
अनूनं दर्श मा कृधि प्रजया च धनेन च ॥ ३ ॥

---

१. पैपु. मंपा. द्र. २. भवति ऋ १०,८५,१९ तै २,४,१४,१ मै ४,१२,२ तै १८, ३,१. ३. °मेत्यग्रम् ऋ. मं. पै.; °मेत्यग्रं तै. ४. दधात्या° ऋ. तै. मै. पै. ५. चन्द्रमास्तिरते (°रति तै.) ऋ. तै. मै. पै. ६. अभिग° S'. ७. भवसि S'.

सोम॑स्य । अं॒शो इति॑ । यु॒धा॒म् । प॒ते॒ । अनू॑नः । नाम॑ । वै । अ॒सि॒ ।
अनू॑नम् । द॒र्श॒ । मा॒ । कृ॒धि॒ । प्र॒ऽजया॑ । च॒ । धने॑न । च॒ ॥ ३ ॥

हे सोमस्यांशो सोमस्य चन्द्रमसः अंशभूत सोमपुत्र हे बुध हे युधां पते युद्धानां योधानां वा पालक । बुधग्रहबलेन हि युद्धजयो भवतीति प्रसिद्धम् । आमन्त्रितद्वयेऽपि 'सुबामन्त्रिते पराङ्गवत्स्वरे' (पा २,१,२) इति सोमस्येति युधाम् इति च पदद्वयस्य आमन्त्रितानुप्रवेशः । तत्र सोमस्यांशो इत्यत्र 'आमन्त्रितस्य च' (पा ६,१,१९८) इति पाष्ठिकम् आद्युदात्तत्वम् । युधां पते इत्यस्य 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' (पा ८,१,७३) इति पूर्वामन्त्रितस्य अविद्यमानवत्त्वनिषेधात् 'आमन्त्रितस्य च' (पा ८,१,१९) इति आष्टमिकं सर्वानुदात्तत्वम् । एवंगुणविशिष्ट सोमपुत्र हे बुध त्वम् अनूनः संपूर्णो नाम असि वै भवसि खलु । सर्वदा तेजस्वित्वेन अनूनत्वम् । अतः हे दर्श द्रष्टव्य बुध मा मां हविरादिना त्वां प्रीणयन्तं प्रजया पुत्रादिकया धनेन । परस्परसमुच्चयार्थौ चशब्दौ । अनूनम् संपूर्णं समृद्धं[1] कृधि कुरु । एवं विनियोगानुसारेण बुधग्रहपरतया व्याख्यातः । मन्त्रार्थपर्यालोचनया सोम एव प्रतीयते । तस्मिन् पक्षे अयम् अर्थः—हे सोमस्यांशो सोमस्य संपूर्णकलस्य चन्द्रस्य अंशो अंशभूत[2] एककलावच्छिन्न शुक्लप्रतिपदि दृश्यमान चन्द्र हे युधां पते त्वं नाम नाम्ना अनूनोऽसि संपूर्णकल इति प्रसिद्धोऽसि । चन्द्रस्य संपूर्णकलत्वमेव सहजो धर्मः । तत्र कलाह्रासवृद्धी सूर्यमरीचिसमाश्लेपतारतम्येनेति ज्योतिःशास्त्रविद आहुः । यतः संपूर्णकलः अतो हे दर्श द्रष्टव्य सर्वैरभिनन्दनीय त्वं [3]मा मां तुभ्यं हविः प्रयच्छन्तं प्रजाधनाभ्यां संपूर्णं कुरु इति । सोमदेवत्योऽपि मन्त्रो जन्यजनकयोरभेदोपचाराद् बुधग्रहविषयहविर्दानादिषु विनियुज्यते । कृधीति । डुकृञ् करणे । लोटि हेः 'श्रुशृणुपृकृवृभ्यश्छन्दसि' (पा ६,४,१०२) इति धिरादेशः । विकरणस्य लुक् छान्दसः[3] ।

द॒र्शो॑ऽसि द॒र्श॒तो॑ऽसि[4] सम॑ग्रो॒ऽसि॒ सम॑न्तः[5] ।
सम॑ग्रः॒ सम॑न्तो भूया॒सं गोभि॒रश्वैः॑ प्र॒जया॑ प॒शुभि॑र्गृ॒हैर्धने॑न ॥ ४ ॥

द॒र्शः । अ॒सि॒ । द॒र्श॒तः । अ॒सि॒ । सम्ऽअ॑ग्रः । अ॒सि॒ । सम्ऽअ॑न्तः । सम्ऽअ॑ग्रः ।
सम्ऽअ॑न्तः । भू॒या॒स॒म् । गोभिः॑ । अश्वैः॑ । प्र॒ऽजया॑ । प॒शुऽभिः॑ । गृ॒हैः । धने॑न ॥ ४ ॥

हे सोम त्वं दर्शोऽसि सूर्येण सहैव द्रष्टव्यो भवसि । अमावास्यायां सूर्येण सह चन्द्रमा दृश्यते इति सा तिथिर्दर्शशब्देन उच्यते । यद्वा दर्शोऽसि शुक्लप्रतिपदि एक-

---

१. समृद्धिं S'.　२. अंशुभूत S'.　३. मा मां सोमदेवत्योपि मंत्रो जन्यजनकयोरभेदोपचाराद्बुधग्रहविषयहविर्दानादिषु विनियुज्यते । प्रजाधनाभ्यां संपूर्णं कुरु इति । कृधीति । डुकृञ्...छांदसः तुभ्यं हविः प्रयच्छंतम् S'.　४. दर्शतोऽसि A,D,R,O; दर्शितोऽसि पै २०,४१,४.　५. विदग्धसंदृष्टः पै.

कलात्मना द्रष्टव्यो भवसि। अनन्तरं दर्शतः तृतीयादिषु ततोपि स्फुटं दर्शनीयो भवसि। अथ समग्रः अष्टम्यादिषु ततोऽपि स्फुटतरं कलासमृद्धो भवसि। अनन्तः समन्तः पौर्णमास्यां संगतान्तप्रदेशः सर्वकलापूर्णमण्डलो भवसि। यत एवम् अतोऽहं गवादिभिः समग्रः समृद्धः समन्तः संपूर्णश्च भूयासम्।

योऽ३स्मान्[1] द्वेष्टि यं वयं द्विष्मस्तस्य त्वं प्राणेना प्यायस्व।
आ वयं प्यासिषीमहि[2] गोभिरश्वैः प्रजया पशुभिर्गृहैर्धनेन ॥ ५ ॥

यः। अस्मान्। द्वेष्टि। यम्। वयम्। द्विष्मः। तस्य। त्वम्। प्राणेन। आ। प्यायस्व। आ। वयम्। प्यासिषीमहि। गोभिः। अश्वैः। प्रऽजया। पशुऽभिः। गृहैः। धनेन ॥

यः शत्रुः अस्मान् द्वेष्टि प्रातिकूल्यम् आचरति यं वा शत्रुं वयं द्विष्मः तस्य प्राणेन हे सोम त्वम् आ प्यायस्व आप्यायितो भव। शत्रोः प्राणम् अपहरेत्यर्थः। वयं च गवादिभिः आ प्यासिषीमहि[3] आप्यायिता भूयास्म। स्फायी ओप्यायी वृद्धौ। आशिषि लिङि 'सिब्बहुलम् लेटि' (पा ३,१,३४) इति बहुलवचनाद् अलेट्यपि सिप्। 'लोपो व्योर्वलि' (पा ६,१,६६) इति यकारलोपः। 'लिङः सीयुट्' (पा ३,४,१०२)। इडागमः।

[4]यं देवा अंशुमाप्याययन्ति[5] यमक्षितमक्षिता[6] भक्षयन्ति।
[7]तेनास्मानिन्द्रो वरुणो बृहस्पतिरा प्याययन्तु भुवनस्य गोपाः ॥ ६ ॥

यम्। देवाः। अंशुम्। आऽप्याययन्ति। यम्। अक्षितम्। अक्षिताः। भक्षयन्ति। तेन। अस्मान्। इन्द्रः। वरुणः। बृहस्पतिः। आ। प्याययन्तु। भुवनस्य। गोपाः ॥६॥

यम् अंशुम् एककलात्मकं सोमं देवा आप्याययन्ति शुक्लपक्षे प्रतिदिनम् एकैककलाप्रदानेन वर्धयन्ति यं च सोमम् अक्षितम् अविच्छिन्नं सर्वेष्वपि अहस्सु क्षयरहितं अक्षिताः अक्षीणाः पित्रादयः भक्षयन्ति पिबन्ति। 'वाऽऽक्रोशदैन्ययोः' (पा ६,४,६१) इति पक्षे दीर्घाभावः। तेन सोमेन सह इन्द्रः परमैश्वर्यसंपन्नो देवानाम् अधिपतिः वरुणः पापनिवारको देवः बृहस्पतिः बृहतां महतां देवानां हितकारित्वेन पतिः पालयिता च देवः भुवनस्य भूतजातस्य गोपाः गोपायितारः प्रवृद्धिप्रदा इन्द्रादयः अन्ये वा विश्वे देवाः

१. योस्मान् A,D,S^m,Cs; यो॑ऽ३स्मान् K,R,V. २ द्र. सा. RW.PW.; वैतु. K^m प्यायिषी°, शंपा. WM. प्यासिषी°. ३. प्यासिषी° S' ४. यमा (यथा मै. पै.) दित्या अंशु° ते २,४,१४,१ मै ४,९,२७ पै १,१०२,४ शौ ५,८,८; यथादित्यमादित्या आप्या° काठ १०,१२; °यन्तु पै २०,६१,८. ५ यथा (यम ते. शौ.) क्षिति (°तु ते. पै.) मक्षितयः ते. मै. काठ. पै. शौ; सं त्वा महान्तमक्षितयं पै २०,४१,४. ६. पिबन्ति ते. मं. पै. शौ.; मदन्ति काठ. ७. तेन नो राजा ते.; एवास्मा° मै.; एवा मामिन्द्रो काठ. पै.

अस्मान् हविरादिना प्रीणयितॄन् आ प्याययन्तु वर्धयन्तु ।

इति सप्तमेऽनुवाके तृतीयं सूक्तम् ।

इति श्रीमद्राजाधिराजराजपरमेश्वरश्रीवीरहरिहरमहाराजप्रवर्तिते
अथर्वसंहिताभाष्ये सप्तमकाण्डे सप्तमोऽनुवाकः ।

अष्टमेऽनुवाके द्वे सूक्ते । तत्र 'अभ्यर्चत' इति आद्ये सूक्ते आद्येन पङ्क्तेन संपत्कामः सर्वफलकामो वा अग्निं यजेत उपतिष्ठेत वा । " 'समास्त्वाग्ने' (अ २,६) 'अभ्यर्चत' ( अ ७, ८७) इत्याग्निं संपत्कामः" इति " 'अभ्यर्चत', 'को अस्या नः' (अ ७,१०८) इति" इति च कौशिकं सूत्रम् ( कौसू ५९,१५;१९ ) ।

अग्निचयने समिदाधानानन्तरम् 'अभ्यर्चत' इति ब्रह्मा जपेत् । तद् उक्तं वैताने — " 'उदेनमुत्तरं नय' (अ ६,५) इति समिध आधीयमानाः । 'चत्वारि शृङ्गा' (ऋ ४,५८,३), 'अभ्यर्चत' इति जपति" ( वैताश्रौ २९,१५;१९ ) इति ।

तथा 'आग्नेयीम् अग्निभये सर्वकामस्य च' ( शांक १७,१ ) इति विहितायां महाशान्तौ 'अभ्यर्चत' इति आवपेत् ।

तथा वास्तोष्पत्याख्यायां महाशान्तौ 'अभ्यर्चत' इत्यनेन औदुम्बरमणिं बध्नीयात् ।

तद् उक्तं शान्तिकल्पे – " 'अभ्यर्चत' इत्याग्नेय्याम्" (शांक १८,१) इति " 'अभ्यर्चत' इत्यौदुम्बरम्" ( शांक १९,५ ) इति च ।

ब्रह्मचारिणः स्वाग्निनाशप्रायश्चित्तार्थं 'मय्यग्ने' इति पञ्चर्चेन पञ्च समिध आदध्यात् । सूत्रितं हि— " 'मय्यग्ने' (अ ७,८७,२-६) इति पञ्चप्रश्नेनादधाति[1]" (कौसू ५७,२१) इति ।

तथा आधाने मथिताग्निं 'मय्यग्ने' इत्यनेन आज्येनाक्तं कुर्यात् । " 'मय्यग्ने' (२) इत्येतयानक्ति[2]" ( वैताश्रौ ४,०६ ) इति वैतानं सूत्रम् ।

दर्शपूर्णमासयोः 'घृतं ते अग्ने' इत्यनया आज्यनिर्वापकाले अग्निं ब्रह्मा अनुमन्त्रयेत । " 'घृतं ते अग्ने' (३) इत्याज्ये निरुप्यमाणेऽग्निम्" ( वैताश्रौ २,७) इति वैतानं सूत्रम् ।

जलोदरभैषज्यार्थं नद्योः संगमे मण्डपं[3] कृत्वा 'अप्सु ते राजन्' इति चतुर्ऋचेन उष्णोदकं संपात्य अभिमन्त्र्य पिञ्जूलीभिस्तस्मिन् मण्डपे[3] व्याधितम् आप्लावयेत् ।

तथा अनेन चतुर्ऋचेन अभिमन्त्रितशीतोदकेन तस्मिन् मण्डपे[3] व्याधितम् पिञ्जूलीभिः सह अवसिञ्चेद् वा ।

---

१. °श्नेन जुहोति Bl.   २. °यापानक्ति RG.   ३. मंट° S'.

सूत्रितं हि— " 'अप्सु ते' ( अ ७,८८ ) इति वहन्त्योर्मध्ये विमिते पिञ्जूलीभिराप्लावयति। अवसिञ्चति। अत्युग्णाः[1] संपातवतीरसंपाताः" ( कौसू ३२,१४-१६ ) इति।

तथा धूमकेतुदर्शनलक्षणाद्भुतप्रायश्चित्तार्थं वारुणपशोरवदानानि 'अप्सु ते राजन्' इति चतुर्ऋचेन प्रत्यृचं जुहुयात्। तद् उक्तं कौशिकेन—" 'अप्सु ते राजन्' इति चतसृभिर्वारुणस्य जुहुयात्" ( कौसू १२७,४ ) इति।

पशुतन्त्रे हृदयशूलोद्वासनानन्तरम् 'अप्सु ते राजन्' इत्यस्य जपे विनियोगः। " 'अप्सु ते राजन्' इति जपन्ति" ( वैताश्रौ १०,२२) इति वैतानं सूत्रम्।

तथा अद्भुतमहाशान्तौ 'अप्सु ते राजन्' इति वरुणं यजेत। तद् उक्तं शान्तिकल्पे—" 'इन्द्रेमं प्रतरं कृधि' ( अ ६,५,२ ) इति इन्द्रस्य 'अप्सु ते राजन्' इति वरुणस्य" ( शाक १४,२ ) इति।

तथा शवसंस्कारानन्तरम् उदकसमीपे ब्रह्मा 'उदुत्तमम्' (अ ७,८८,३) इति जपेत्।[2]
अन्त्येष्ट्यादिषु स्वस्त्ययनार्थं 'प्रास्मत् पाशान्' (अ ७,८८,४) इति जपेत्।

अभ्यर्चत[3] सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त।
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत् पवन्ताम्[4] ॥ १ ॥

अभि। अर्चत। सुऽस्तुतिम्। गव्यम्। आजिम्। अस्मासु। भद्रा। द्रविणानि। धत्त।
इमम्। यज्ञम्। नयत। देवता। नः। घृतस्य। धाराः। मधुऽमत्। पवन्ताम् ॥ १ ॥

सुष्टुतिम् सुस्तोत्रम् अग्निम्। 'नञ्सुभ्याम्' (पा ६,२,१७२) इति उत्तरपदान्तोदात्तत्वम्। अभ्यर्चत। अर्चतिः स्तुतिकर्मा (तु. निघ ३,१४)। अभिष्टुत। आपो गावो वा संबोध्यन्ते। कीदृशम्। गव्यम् गोसम्बन्धिनम् आजिम् संघम् अभिलक्ष्य सुस्तुतिम्। गोसंघादिलाभार्थं स्तूयमानम् इत्यर्थः। 'सर्वत्र गोरजादिप्रसङ्गे यत्' (पावा ४,१,८५) इति यत्प्रत्ययः। 'वान्तो यि प्रत्यये' (पा ६,१,७९) इति वान्तादेशः। 'यतोऽनावः' (पा ६,१,२१३) इति आद्युदात्तत्वम्। यद्वा गव्यम् गोभ्यो हितम्। हितार्थे यत्। आजिम् अभिगन्तव्यं यज्ञैः। अथवा आजिशब्देन विजिगीषूणां लक्ष्यदेशगमनम् उच्यते। आजिम् आजिधावनं प्रति सुस्तुतिम् इति संबन्धः। सर्वेभ्यो देवेभ्यः पूर्वम् अग्नेरेव निर्दिष्टदेशगमनात्। तथा च ऐतरेयके श्रूयते—'तासां वै देवतानामाजिं धावन्तीनामभिसृष्टानामग्निर्मुखं प्रथमः प्रत्यपद्यत' ( ऐब्रा ४,८ ) इति। किं च भद्रा भद्राणि भन्दनीयानि द्रविणानि धनानि अस्मासु धत्त निधत्त। तथा

---

१. उग्णाः Bl. २. इतः परम् उत्तचतुर्विंशवर्णानां स्थानं रिक्तम् S'. ३. अभ्यर्चत ऋ ४,५८,१० मा १७,९८ तै ८,११,१०. ४. पवन्ते ऋ, मा. तै,

नः अस्मदीयम् इमं यज्ञं देवताः[1] अग्न्यादिकाः नयत प्रापयत । अत एव घृतस्य क्षरणशीलस्य आज्यस्य धाराः प्रवाहा मधुमत् । क्रियाविशेषणम् एतत् । मधुररसोपेतं यथा तथा पवन्ताम् । पवतिर्गतिकर्मा (तु निघ २,१४) । गच्छन्तु यष्टव्या देवता इति । यद्वा मधुमत् मधुमत्यो धारा इति । ङीब्जसोर्लुक् छान्दसः ।

मय्यग्रे[2] अग्निं गृह्णामि सह क्षत्रेण[3] वर्चसा बलेन[4] ।
मयि प्रजां[5] मय्यायुर्दधामि[6] स्वाहा मय्यग्निम् ॥ २ ॥

मयि । अग्रे । अग्निम् । गृह्णामि । सह । क्षत्रेण । वर्चसा । बलेन ।
मयि । प्रऽजाम् । मयि । आयुः । दधामि । स्वाहा । मयि । अग्निम् ॥ २ ॥

अग्रे प्रथमम् अग्निम् आहुताधारं मथ्यमानम् अग्निं मयि गृह्णामि धारयामि । मदधीनं करोमीत्यर्थः । केन सहेति तद् आह — क्षत्रेण बलेन वर्चसा तेजसा । यद्वा क्षत्रेण क्षतात् त्रायकेण वर्चसा बलेन शारीरेण सामर्थ्येन सह अग्निं गृह्णामि । क्षत्रतेजोबलार्थम् अग्निं स्वाधीनं करोमीत्यर्थः । तथा अग्निस्वाधीनीकरणेन प्रजाम् पुत्रादिलक्षणां मयि दधामि पुत्रादिकं लभेयेत्यर्थः । आयुः जीवनं मयि दधामि । आयुष्मान् भूयासम् इति यावत् । तथा अग्निम् जाठरं वैश्वानरम् अग्निं मयि दधामि अन्नपाकादिजनितारोग्यार्थम् अग्निं धारयामि । स्वाहा इदं समिदादिरूपम् अग्नौ स्वाहुतम् अस्तु ।

इहैवाग्ने अधि धारया रयिं मा त्वा नि क्रन्[7] पूर्वचित्ता[8] निकारिणः ।
क्षत्रेणाग्ने[9] सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः[10] ॥ ३ ॥

इह । एव । अग्ने । अधि । धारय । रयिम् । मा । त्वा । नि । क्रन् । पूर्वऽचित्ताः । निऽकारिणः ।
क्षत्रेण । अग्ने । सुऽयमम् । अस्तु । तुभ्यम् । उपऽसत्ता । वर्धताम् । ते । अनिःऽस्तृतः[11] ॥ ३ ॥

हे अग्ने इहैव अस्मास्वेव त्वां परिचरत्सु रयिम् धनम् अधि धारय अधिकं स्थापय । 'अन्येषामपि दृश्यते' (पा ६,३,१३७) इति दीर्घः । ये पूर्वचित्ताः अस्मत्तः पूर्वं [12]त्वद्विषयमनस्का निकारिणः अस्मदपकारिणः ते त्वा त्वां मा नि क्रन् स्वाधीनं मा कार्षुः । एवं वा योजना — निकारिणः अस्मदपकारिणः पूर्वचित्ताः अस्मत्तः पूर्वमपि त्वद्विषययागकरणमनसोऽपि त्वां यागेन स्वाधीनं मा कार्षुरिति । करोतेः 'मन्त्रे घस°' (पा २,४,८०) इति च्लेर्लुक् । हे अग्ने तुभ्यं तव । षष्ठ्यर्थे चतुर्थी ।

---

१. वेतु. पपा. द्र. २. मय्यग्नें B,K^m. ३. प्रजया मे १,६,१०. ४. धनेन मे. ५. क्षत्रं मे. ६. मयि वर्चो (रायो मे.) द° ते ५,७,९,१ मे. ७. दभन् पै ३,३३,४. ८. 'चित्तो मा २७,४ तै ४,१,७,२ काठ १८,१६; 'चित्तो मे २,१२,५. ९. क्षत्रमग्ने मा. तै. मे. काठ.; क्षत्रम् पै. १०. अनिष्कृतः पै. ११. अनिःऽस्तृतः P,P^s,J,Cp,WM. द्र. ऋपा ८,३३,९. १२. त्वद्विषय° S'.

क्षत्रेण बलेन सह । स्वरूपम् इति शेषः । सुयमम् अस्तु सुस्थितम् अस्तु येन अस्मान् अनुगृह्णासि । यमेः खलि 'लिति' ( पा ६,१,१९३ ) इति प्रत्ययात्पूर्वस्य उदात्तत्वम् । 'तुभ्यमह्यौ ङयि' ( पा ७,२,९५ ) इति तुभ्यादेशो 'ङयि च' ( पा ६,१,२१२ ) इति आद्युदात्तत्वम् । अपि च ते तव उपसत्ता उपसदनशीलः परिचारकोऽयं यजमानः वर्धताम् पूर्यतां कामैः । अनिस्तृतः केनचिदपि अहिंसितः अतिरस्कृतप्रभावः । स्तृणातिर्हिंसाकर्मा छादनकर्मा वा । उपसत्तेति । षद्लृ विशरणगत्यवसादनेषु । अस्मात् तृचि 'एकाचः' ( पा ७,२,१० ) इति इण्निषेधः ।

'अन्वग्निरुषसामग्रमख्यदन्वहानि' प्रथमो जातवेदाः ।
'अनु सूर्य उषसो अनु रश्मीननु द्यावापृथिवी आ विवेश' ॥ ४ ॥

अनु । अग्निः । उषसाम् । अग्रम् । अख्यत् । अनु । अहानि । प्रथमः । जातऽवेदाः ।
अनु । सूर्यः । उषसः । अनु । रश्मीन् । अनु । द्यावापृथिवी इति । आ । विवेश ॥ ४ ॥

अग्निः अङ्गनादिगुणयुक्तो देवः उषसाम् अग्रम् प्रादुर्भावम् अनु अख्यत् ख्याति प्रकाशते । दृश्यते इति यावत् । प्रथमं तावद् उषसां मुखे अग्निः प्रकाशते । 'लक्षणेत्थंभूता' ( पा १,४,९० ) इत्यादिना अनोः कर्मप्रवचनीयत्वम् । 'छन्दसि लुङ्लङ्लिटः' ( पा ३,४,६ ) इति ख्यातेर्लुङ् । 'अस्यतिवक्तिख्यातिभ्योऽङ्' ( पा ३,१,५२ ) । अहानि च । अनु । अख्यत् इति क्रियानुषङ्गः । अहान्यनु प्रतिप्रकाशते । प्रथमो मुख्यः । प्रथमानो वा । प्रथेरमच्प्रत्ययः । महान् जातवेदाः जातानि वस्तूनि वेदयतीति जातवेदाः जातानां वेदिता जातप्रज्ञो वा प्रकाशते । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' ( पाउद ९,८७ ) इति वेत्तेरसुन् । सूर्यात्मना अग्निः उत्तरार्धेन स्तूयते— सूर्यः सूर्यात्मकः । श्रूयते हि तैत्तिरीयके—'उद्यन्तं वावादित्यमग्निरनुसमारोहति । तस्माद् धूम एवाग्नेर्दिवा ददृशे' ( तैब्रा २,१,२,१० ) इति । सूर्यात्मकोऽग्निः उषसोऽनु प्रकाशते । ततो रश्मीन् व्यापनशीलान् किरणान् अनु प्रकाशते । इत्थम् अनेन क्रमेण द्यावापृथिवी द्यावापृथिव्यौ अन्वा विवेश सर्वत्र द्यावापृथिव्योराविष्टः प्रकाशत इति । 'दिवसश्च पृथिव्याम्' ( पा ६,३,३० ) इति द्यावादेशः । द्वितीयाद्विवचनस्य 'वा च्छन्दसि' ( पा ६,१,१०६ ) इति पूर्वसवर्णदीर्घः । 'देवताद्वन्द्वे च' (पा ६,२,१४१) इति पूर्वोत्तरपदयोर्युगपत् प्रकृतिस्वरत्वम् ।

प्रत्यग्निरुषसामग्रमख्यत् प्रत्यहानि प्रथमो जातवेदाः ।
'प्रति सूर्यस्य पुरुधा च रश्मीन् प्रति द्यावापृथिवी आ ततान' ॥ ५ ॥

---

१. 'प्रमवतर्द' मै १,८,९. २. अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आ ततन्थ (ततान तै. तैब्रा.) मा ११,१७ तै ४,१,२,२;१ मै १,८,९ काठ १६,२ तैब्रा १,२,१,२२.

प्रति । अग्निः । उषसाम् । अग्रम् । अख्यत् । प्रति । अहानि । प्रथमः । जातऽवेदाः ।
प्रति । सूर्यस्य । पुरुऽधा । च । रश्मीन् । प्रति । द्यावापृथिवी इति । आ । ततान ॥ ५ ॥

पूर्वार्धं पूर्वमन्त्रेण व्याख्यातम् । अनोः स्थाने प्रतिपदं विशिष्यते । 'लक्षण' ( पा १,४,९० ) इत्यादिना प्रतेः कर्मप्रवचनीयत्वम् । किं च पुरुत्रा[1] पुरून् बहुरूपत्वाद् बहुधा प्रवृत्तान् । 'देवमनुष्य[2]' ( पा ५,४,५६ ) इत्यादिना त्राप्रत्ययः । सूर्यस्य रश्मींश्च प्रति अख्यत् प्रकाशते । सूर्यस्य रश्मीन् प्रति स्वयमेव प्रकाशते अग्निसूर्ययोः अत्यन्तभेदाभावात् । इत्थम् अनेन क्रमेण द्यावापृथिवी प्रत्या ततान सर्वत्र द्यावापृथिव्योराततो भवति । प्रकाशम् आत्मीयम् आतनोतीति यावत् ।

घृतं ते अग्ने दिव्ये सधस्थे घृतेन त्वां[3] मनुरद्या समिन्धे ।
घृतं ते [4]देवीर्नप्त्य१ आ[4] वहन्तु घृतं तुभ्यं दुह्रतां[5] गावो अग्ने ॥ ६ ॥

घृतम् । ते । अग्ने । दिव्ये । सधऽस्थे । घृतेन । त्वाम् । मनुः । अद्य । सम् । इन्धे ।
घृतम् । ते । देवीः । नप्त्यः । आ । वहन्तु । घृतम् । तुभ्यम् । दुह्रताम् । गावः । अग्ने ॥ ६ ॥

हे अग्ने ते तव संबन्धि घृतम् आज्यं दिव्ये दिवि भवे सधस्थे सहस्थाने देवैः सह निवासस्थाने । वर्तत इति शेषः । अद्य इदानीं मनुः एतत्संज्ञकः त्वां घृतेन क्षरणशीलेन दीपकेन वा आज्येन समिन्धे सम्यग् दीपयति । मनुर्नाम राजर्षिः इदानीमपि अग्निम् आज्याहुतिभिः समर्धयतीत्यर्थः । हे अग्ने ते तुभ्यं देवीः द्योतमानाः नप्त्यः न पातयित्र्यः नप्तृसंज्ञापत्यभूता वा । आप इत्यर्थः । घृतम् आज्यम् आ वहन्तु अभिमुखं प्रापयन्तु । उदकैरेव ओषध्यादिवृद्ध्या अपां न पातयितृत्वम् । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः' ( मस्मृ ३,७६ ) इति स्मृतेः अपां नप्तृसंज्ञकापत्यभूतत्वम् । किं च हे अग्ने तुभ्यं त्वदर्थं गावः धेनवः घृतं दुह्रताम् दुहताम् । 'बहुलं छन्दसि' ( पा ७,१,८ ) इति रुडागमः ।

[6]अप्सु ते राजन् वरुण[6] गृहो हिरण्ययो मिथः[7] ।
ततो[8] धृतव्रतो राजा [9]सर्वा धामानि मुञ्चतु[9] ॥ १ ॥

अप्ऽसु । ते । राजन् । वरुण । गृहः । हिरण्ययः । मिथः ।
ततः । धृतऽव्रतः । राजा । सर्वा । धामानि । मुञ्चतु ॥ १ ॥

---

१. वतु. मंपा. द्र. २. °मनुष्येभ्य S'. ३ त्वा पै २०,३२,२. ४. देवा अप्या° पै.; नेप्त्युइ आ A,B,Bᵇ,D,Sᵐ,Cs; °नप्त्यं आ R. ५. दुह्रते पै. ६. दीर्घं राज्ञो वरुणस्य काठ ३,८ आश्रौ ३,६,२४. ७. मितः RW. काठ.पै २०,३२,४ [मूको.]. आश्रौ ३,६,२४ ८. स नो आश्रौ. ९. धाम्नो धाम्न इह मु° काठ. आश्रौ.; °दामानि° RW.; °धामा वि नो मुञ्चत् पै.

हे राजन् सर्वेषां देवानां स्वामिन् वरुण पापनिवारक देव ते तव अप्सु उदकेषु उदकमध्ये मिथः अनन्यसाधारणः परेषाम् अनभिगम्यो वा हिरण्ययः हिरण्मयः । 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि' ( पा ६,४,१७५ ) इति मयटो मकारलोपो निपात्यते। सुवर्णमयो गृहः निवासस्थानम् अस्ति यतः ततः तस्मात् कारणाद् धृतव्रतः । व्रतम् इति कर्मनाम (तु. निघ २,१)। नियतकर्मा सत्यकर्मा राजा वरुणः सर्वा सर्वाणि धामानि स्थानानि अस्मदीयानि मुञ्चतु त्यजतु । 'धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानि' ( नि ९,२८ ) इति हि यास्कः । जलोदरादयो रोगा हि वरुणकर्तृकाः । तस्य हि जलमध्ये निवासस्थानम् अस्ति । अतः स्वेन गृहीतानि अस्मदीयावयवरूपाणि स्थानानि त्यक्त्वा स्वगृहे निवसत्वित्यर्थः ।

धाम्नोधाम्नो[1] राजन्नितो[2] वरुण मुञ्च नः ।
यदापो[3] अघ्न्या[4] इति वरुणेति यदूचिम[5] ततो वरुण मुञ्च नः ॥ २ ॥

धाम्नःऽधाम्नः । राजन् । इतः । वरुण । मुञ्च । नः ।
यत् । आपः । अघ्न्याः । इति । वरुण[6] । इति । यत् । ऊचिम । ततः । वरुण । मुञ्च । नः ॥

हे राजन् हे वरुण इतः अस्माद् धाम्नोधाम्नः सर्वस्माद् रोगस्थानात् नः अस्मान् मुञ्च मोचय । धाम्नोधाम्न इति । वीप्सायां द्विर्वचनम् । 'अनुदात्तं च' ( पा ८,१,३ ) इति आम्रेडितस्य अनुदात्तत्वम् । किं च हे वरुण ततोऽपि पापात् नः अस्मान् मुञ्च मोचय । हे आपः इति हे अघ्न्याः[7] इति हे वरुण इति यद् ऊचिम यच्छापवाक्यम् अवोचाम । यच्छापवाक्यवचनेन पापम् आर्जितं तस्मादपि मुञ्चेति संबन्धः । शापो हि प्रशस्तदेवतानामसंकीर्तनेन परेषाम् अनर्थाशंसनम् । यद्वा सत्यसति वा विषये 'आपो वै सर्वा देवताः' ( ऐब्रा २,१६ ) इति सर्वदेवतात्मिकानाम् अपां साक्षित्वेन प्रमाणीकरणम् । हविराधारभूताया गोर्वा जलाधिपतेर्वरुणस्य वा । उपलक्षणम् एतत् प्रशस्तदेवतानाम् अन्यासामपि । हे आपः यूयम् अस्मिन् सत्ये असत्ये वा विषये साक्षिभूता भवथ हे आपः युष्मभ्यं शपामहे इदम् इत्थम् इत्येवंविधं प्रशस्तदेवतानामधेयपुरःसरं यद् वाक्यं तेन पापम् आर्ज्यते । सत्येऽपि हि विषये शपथकरणेन धर्मस्यार्धं वैवस्वतो निकृन्तति किल असत्ये किमु वक्तव्यम् । अतो देवतानामधेयकीर्तनरूपशपथकरणजनितपापाद् अस्मान् मोचयेरित्यर्थः । अत्र ऊचिमेति पदेन वचनमात्रं न विवक्षितं किं तु शपथरूपमेव । अत एव तैत्तिरीये—'यदापो अघ्निया इति वरुणेति शपामहे

---

१. दाम्नोंदाम्नो RW २. राजैंस्ततो मा ६.२२ शाश्री ८,१२,११ लाश्री ५,४,६। राजयतो पै २०,३२,५. ३. यदाहुर् मा. ४ अघ्निया तै १,३,११,१ तैब्रा २,६,६,२. ५. शपामहे मा. तै. काठ. तैब्रा. आश्री ३,६,२४ शाश्री. लाश्री.; शपामहे मं १,२,१८. ६. वरुण: P,P³,J. ७. वेद्र. मरा. द.

(तैब्रा २,६,६,२) इति समाम्नायते । आपो अघ्न्या वरुणेति श्रुताद्युदात्तानां मन्त्रपदानाम् इदम् अनुकरणम् । ततश्च सत्यपि पदात् परत्वे आमन्त्रितनिघातो न प्रवर्तते । अघ्न्याशब्दो यप्रत्ययान्तः अन्तोदात्तः । यथा 'दुहामश्विभ्यां पयो अघ्न्येयम्' (ऋ १,१६४,२७) इति । तस्य आमन्त्रिताद्युदात्तत्वम्[1] । वरुणेति । षाष्ठिकम् आद्युदात्तत्वम् । ऊचिमेति । ब्रूञो लिटि वच्यादेशः । यजादित्वात् संप्रसारणम् ।

उदु॑त्त॒मं व॑रुण॒ पाश॑म॒स्मदवा॑ध॒मं वि म॑ध्य॒मं श्र॑थाय ।
अथा॑[2] व॒यमा॑दित्य व्र॒ते तवाना॑गसो॒ अदि॑तये स्याम ॥ ३ ॥

उत् । उ॒त्ऽत॒मम् । व॒रु॒ण॒ । पाश॑म् । अ॒स्मत् । अव॑ । अ॒ध॒मम् । वि । म॒ध्य॒मम् । श्र॒थ॒य॒ ।
अथ॑[3] । व॒यम् । आ॒दि॒त्य॒ । व्र॒ते । तव॑ । अना॑गसः । अदि॑तये । स्या॒म॒ ॥ ३ ॥

हे वरुण उत्तमम् ऊर्ध्वकायस्थितं पाशम् अस्मत् अस्मत्तः सकाशाद् उत् श्रथय ऊर्ध्वम् उत्कृष्य नाशय । अधमम् अधःकायस्थितं पाशम् अव श्रथय अधस्ताद् अवकृष्य नाशय । मध्यमम् मध्यदेहस्थितं पाशं वि श्रथय विकृष्य नाशय । श्रथ दौर्बल्ये । चुरादिरदन्तः । वर्णव्यत्ययेन उपान्त्यस्य दीर्घत्वम् । यद्वा श्रन्थ विमोचनप्रतिहर्षयोः । अस्मात् लोटि 'शायच्छन्दसि सर्वत्र' (पावा ३,१,८४) इति श्नाप्रत्ययस्य शायजादेशः । 'अतो हेः' (पा ६,४,१०५) इति हेर्लुक् । अथ अनन्तरम् हे आदित्य अदितेः पुत्र । 'दित्यदित्यादित्य'[5] (पा ४,१,८५) इति ण्यप्रत्ययः । हे आदित्य वरुण तव व्रते कर्मणि । विषयसप्तमी । कर्मार्थे यागयोग्यतासिद्ध्यर्थम्[4] अनागसः विमुक्तसर्वपाशा वयम् अदितये अखण्डितत्वाय अनभिशस्तये स्याम भवेम । अनागस इति । बहुव्रीहौ 'नञ्सुभ्याम्' (पा ६,२,१७२) इत्येष स्वरो व्यत्ययेन न प्रवर्तते[४] ।

प्रास्मत् पाशा॑न् वरुण मुञ्च॒ सर्वा॒न् य उ॑त्त॒मा अ॑ध॒मा वा॑रु॒णा ये ।
दु॒ष्वप्न्यं॑[6] दुरि॒तं नि॒[7] ष्वास्मदथ॑ गच्छेम सुकृ॒तस्य॑ लो॒कम् ॥ ४ ॥

प्र । अ॒स्मत् । पाशा॑न् । व॒रु॒ण॒ । मु॒ञ्च॒ । सर्वा॑न् । ये । उ॒त्ऽत॒माः । अ॒ध॒माः । वा॒रु॒णाः । ये ।
दुः॒ऽस्वप्न्य॑म् । दुः॒ऽइ॒तम् । निः । स्व॒ । अ॒स्मत् । अथ॑ । ग॒च्छे॒म॒ । सु॒ऽकृ॒तस्य॑ । लो॒कम् ॥ ४ ॥

---

१. पंवृ. मंरा. २. अथा B,K, ऋ १,२४,१५ मा १२,१२ तै १,५,११,३ मं १, २,१८ काठ ३,८ कौ ३,१,४ हिग १,९,१०; आप मंत्रा १,७,१०. ३. अर्थ K. ४. सिद्ध्यर्थमित्यम् S'. ५. पै २ १,१६७ g द. ६. दुः॰ B. ७. पृ ८३२ टि १२ द.

हे वरुण अस्मत् अस्मत्तः सर्वान् पाशान् प्र मुञ्च। ये वारुणाः वरुणस्य भवतः सबंन्धिनः उत्तमा अधमाश्च ये पाशाः सन्ति । उद्भूताभिभूतशक्तिभेदाद् अधर्मपाशानां द्वैविध्यम्। 'उत्तमशश्वत्तमौ सर्वत्र' इति उञ्छादिषु (पा ६,१,१६०) पाठाद् उत्तमशब्दः अन्तोदात्तः। किं च दुःष्वप्न्यम्[1] दुष्टे स्वप्ने भवं दुरितम् पापम् अरिष्टम् अस्मत् अस्मत्तः निः ष्व निस्सुव । निर्गमयेत्यर्थः । षू प्रेरणे । अस्मात् लोटि तुदादित्वात् शः। यणादेशो व्यत्ययेन । अथ पाशदुरितविमोचनानन्तरं सुकृतस्य सुष्ठु कृतस्य पुण्यस्य लोके गच्छेम प्राप्नुयाम ।

इति अष्टमेऽनुवाके प्रथमं सूक्तम्।

'अनाधृष्यो जातवेदाः' इति प्रथमाया ऋचः अग्न्युपस्थाने लैङ्गिको विनियोगः।

इन्द्रमहाख्ये उत्सवे 'इन्द्र क्षत्रम्' इत्यनया हविर्जुहुयात्। "'इन्द्र क्षत्रम्' (२) इति हविषो हुत्वा" ( कौसू १४०,१७ ) इति हि सूत्रम्।

अग्निचयने पुरीषाच्छन्नां चितिं 'मृगो न भीमः' इति ब्रह्मा अनुमन्त्रयेत। "'मृगो न भीमः' (३), 'वैश्वानरो न ऊतये' ( अ ६,३५ ) इति चितिं[2] पुरीषाच्छन्नाम्[3]" ( वैताश्रौ २९,५ ) इति हि वैतानं सूत्रम्।

स्वस्त्ययनार्थं 'त्यमू षु', 'त्रातारम्' इत्याभ्यां प्रत्येकम् इन्द्रं यजेत उपतिष्ठेत वा। "'त्यमू षु' ( अ ७,९० ), 'त्रातारम्' ( अ ७,९१ ), 'आ मन्द्रैः' ( अ ७,१२२ ) इति स्वस्त्ययनकामः" ( कौसू ९,१४ ) इति हि सूत्रम् ।

तथा 'त्यमू षु', 'त्रातारम्' इत्यनयोः स्वस्त्ययनगणे पाठाद् उपाकर्मणि आज्यहोमे विनियोगः। 'स्वस्त्ययनैराज्यं जुहुयात्' ( कौसू १३९,७ ) इति सूत्रात्।

तथा अन्त्येष्ट्यादिषु स्वस्त्ययनार्थं 'त्यमू षु', 'त्रातारम्' इति जपेत्।

तथा इन्द्रमहाख्योत्सवे 'त्रातारमिन्द्रम्' इत्यनया आज्यं जुहुयात्। "'त्रातारम् इन्द्रम्[4]' ( अ ७,९१ ), 'इन्द्रः सुत्रामा' ( अ ७,९६ ) इत्याज्यं हुत्वा" ( कौसू १४०,६ ) इति हि सूत्रम्।

स्वस्त्ययनकामः 'यो अग्नौ' इति ऋचा रुद्रान् यजेत उपतिष्ठेत वा। "'यो अग्नौ' (अ ७,९२) इति रुद्रान् स्वस्त्ययनकामः" ( कौसू ५९,२९ ) इति हि सूत्रम्।

---

१. दुष्वप्नियं S'. २. चितिंचितिं RG. ३. पुरीषछन्ना° S'. ४. नास्ति BL

तथा अन्त्येष्ट्यादिषु स्वस्त्ययनार्थम् एताम् ऋचं जपेत्।

तथा दर्शपूर्णमासयोः 'यो अग्नौ' इत्यनया आग्नीध्रः संमार्गम् अग्नौ निक्षिपेत्। उक्तं वैताने — "आग्नीध्रः संमार्गं[1] प्रहरति 'यो अग्नौ' इति" (वैताश्रौ ४,१०) इति।

तथा चातुर्मास्येषु साकमेधपर्वणि त्र्यैम्बककर्मणि[2] अस्या विनियोगः। उक्तं वैताने — "अथोदञ्चश्चतुष्पथे त्र्यैम्बकं[3] 'यो अग्नौ' इति" (वैताश्रौ ९,१८) इति।

तथा अग्निष्टोमे शालादहनानन्तरं 'यो अग्नौ' इत्यनेन अग्नये नमस्कारं कुर्यात्। "'यो अग्नौ' इति नमस्कृत्य तेनैव निष्क्रामन्ति" (वैताश्रौ २४,१७) इति हि वैतानं सूत्रम्।

सर्पविषभैषज्यार्थम् 'अपेहि' इत्यनया तृणानि प्रज्वाल्य सर्पाभिमुखं प्रक्षिपेत्। दष्टस्थाने निक्षिपेद् वा। सूत्रितं हि — "'अपेहि' (अ ७,९३) इति तृणानि प्रघृत्य[4] अहिमभि निरस्यति। यतो दष्टः" (कौसू २९,६;७) इति।

परिमोक्षविधौ 'अपो दिव्याः' इति चतसृभिः शान्त्युदकम् अभिमन्त्रयेत।

तथा वेदव्रतादिषु 'अपो दिव्याः' इति त्र्यृचेन 'एधोऽसि' (अ ७,९४,४) इत्यनया च तिस्रः समिध आदध्यात्।

सूत्रितं हि — "'अपो दिव्याः' (अ ७,९४) इति पर्यवेतव्रत[5] उदकान्ते शान्त्युदकमभिमन्त्रयते। अस्तमिते समित्पाणिरेत्य तृतीयावर्जं समिध आदधाति" (कौसू ४२,१३;१४) इति।

तथा आचार्यमरणे तत्संस्कारानन्तरम् 'अपो दिव्याः' इति चतसृभिः ब्रह्मचारी स्नायात्। तद् उक्तं कौशिकेन — 'त्रिरात्रमपर्यावर्तमानः शयीत। नोपरिशयीतेति[6] कौशिकः। स्नानीयाभिः[7] स्नायात्' (कौसू ४६,१५-१७) इति।

तथा दर्शपूर्णमासयोः इडाभागप्राशनानन्तरम् 'अपो दिव्याः' इति तिसृभिः प्रस्तरे मार्जनं कुर्यात्। तद् उक्तं वैताने — "'अपो दिव्याः' इति तिसृभिः पवित्रवति[8] मार्जयते[9]" (वैताश्रौ ३,१८) इति।

तथा अग्निष्टोमे अवभृथस्नानान्तरम् 'अपो दिव्याः' इति आहवनीयाग्निम् उपतिष्ठेत। "'अपो दिव्याः' इत्याहवनीयमुपतिष्ठते[10]" (वैताश्रौ २४,६) इति हि वैतानं सूत्रम्।

अग्निकार्ये ब्रह्मचारी 'इदम् आपः' इति हस्तौ प्रक्षालयेत्। "'इदम् आपः प्रवहत' (अ ७,९४,३) इति पाणी प्रक्षालयते" (कौसू ५७,२४) इति हि कौशिकं सूत्रम्।

तथा चातुर्मास्येषु वरुणप्रघासपर्वणि 'इदम् आपः' इति मार्जनं कुर्यात्। 'आपाद्यां वरुणप्रघासेषु[11]' इति प्रक्रम्य "'इदम् आपः प्र वहत' इति मार्जयते[12]" (वैताश्रौ ८,१७;२०) इति वैताने सूत्रितम्।

---

१. °संमर्गौ RG. २. त्रैय्य° S'. ३. त्रिय° S'. ४. दंश्म तृणैः प्रकल्प्य Bl. ५. वेदव्रत S'. ६. नोपरिश° S'. ७. कौशिकस्ना° S'. ८. पवित्र इति S'. ९. मार्जयन्ते RG. १०. °तिष्ठन्ते RG. ११. °घासः सं ग. १२. मार्जयन्ति RG.

दर्शपूर्णमासयोः दक्षिणाप्रतिग्रहानन्तरम् 'एधोऽसि' इति मन्त्रेण आग्नीध्रः समिधम् आदध्यात्। तद् उक्तं वैताने—"संप्रेषित[1] आग्नीध्रः। 'एधोऽसि' इति समुद्धृत्य "समिधमाधाय" (वैताश्रौ ३,२२;४,१) इति।

तथा स्मार्तदर्शपूर्णमासयोः संस्रावहोमानन्तरम् 'एधोऽसि' इति मन्त्रेण द्वितीयां 'समिदसि' इति मन्त्रेण तृतीयां समिधम् आदध्यात्। 'तेजोऽसि' इति मन्त्रेण मुखं विमृज्यात्। सूत्रितं हि—"'अग्नये स्वाहा' इति समिधमादधाति। 'एधोऽसि³' इति द्वितीया 'समिदसि³' इति तृतीयाम् 'तेजोऽसि³' इति मुखं विमार्ष्टि" (कौसू ६,११-१३) इति।

तथा अग्निकार्ये ब्रह्मचारी 'एधोऽसि' इति हस्तम् अग्नौ प्रताप्य उष्माणं भक्षयेत्। "'एधोऽसि' इत्युष्मभक्षं[4] भक्षयति" (कौसू ५७,२७) इति हि सूत्रम्।

जारोच्चाटनार्थं 'अपि वृश्च' इति तृचेन जारं दृष्ट्वा वदेत्।

तथा अनेन पाषाणम् अभिमन्त्र्य जारसंगमस्थाने प्रक्षिपेत्।

सूत्रितं हि—"'अपि वृश्च' (अ ७,९५) इति जायार्थे[5] जारमन्वाह। क्लीबादि बाधकं धनुर्विध्यति। आशयेऽश्मानं प्रहरति" (कौसू ३६,३५ ३७) इति।

अनाधृष्यो जातवेदा अमर्त्यो[6] विराडग्ने क्षत्रभृद् दीदिहीह।
विश्वा अमीवाः[7] प्रमुञ्चन् मानुषीभिः[8] शिवाभिरद्य[9] परि पाहि नो गयम्[10]॥१॥

अनाधृष्यः। जातऽवेदाः। अमर्त्यः। विऽराट्। अग्ने। क्षत्रऽभृत्। दीदिहि। इह। विश्वाः। अमीवाः। प्रऽमुञ्चन्। मानुषीभिः। शिवाभिः। अद्य। परि। पाहि। नः। गयम्॥

हे अग्ने अनाधृष्यः ईषदपि धर्षयितुम् अशक्यः[11]। ञिधृषा प्रागल्भ्ये। 'ऋदुपधाच्चाक्लृपिचृतेः' (पा ३,१,११०) इति क्यप्। 'कृत्योकेष्णुच्' (पा ६,२,१६०) इत्यादिना उत्तरपदान्तोदात्तत्वम्। जातवेदाः जातानां वेदिता जातधनो वा अमर्त्यः अमरणधर्मा विराट् विविधं राजमानः क्षत्रभृत् क्षत्रस्य बलस्य भर्ता धारयिता ईदृशः सन् इह अस्मिन् कर्मणि स्थाने वा दीदिहि दीप्यस्व। दीदेतिर्दीप्तिकर्मा (द्र. निघ १,१६)। दीव्यतेर्वा 'बहुलं छन्दसि' (पा २,४,७६) इति शपः श्लुः। तथा दीप्तश्च त्वं विश्वाः सर्वा अमीवाः रोगान् प्रमुञ्चन् प्रकर्षेण मोचयन् विनाशयन् मानुषीभिः मानुषहिताभिः। 'मनोर्जातावञ्यतौ' (पा ४,१,१६१) इति अञ्प्रत्ययान्तो मानुषशब्दः। तस्मात् 'तस्येदम्' (पा ४,३,१२०) इति अण्[12]।

---

१. संप्रेषित S'. २. समिद्वत्या RG. ३. अ ७,९४,४. ४. इत्यूष्म° Bl. ५. जारार्थे S'. ६. अनिर्धृतो मा २७,७ तै ४,१,७,३ मै २,१२,५ काठ १८,१६ पै ३,३३,७. ७. विश्वा आशाः मा. तै.; व्यमीवाः मै. ८. मानुषीभिर्वयः मा. तै.; मानुषाणां मै.; मानुषेभ्यः काठ.; मनुष्येभ्यः पै. ९. शिवेभि° मा. मै. काठ. पै. १०. वृधे मा. तै. मै. काठ; गयैः पै. ११. अशक्यम् S'. १२. एवं स्वरो न सिध्यति.

'टिड्ढाणञ्' ( पा ४,१,१५ ) इत्यादिना ङीप् । शिवाभिः कल्याणकारिणीभिः ऊतिभिः अथ इदानीं नः अस्माकं गयम् गृहं परि पाहि सर्वतो रक्ष ।

इन्द्रं क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनाम् ।
अपानुदो जनममित्रायन्तमुरुं देवेभ्यो अकृणोरु लोकम् ॥ २ ॥

इन्द्र । क्षत्रम् । अभि । वामम् । ओजः । अजायथाः । वृषभ । चर्षणीनाम् ।
अप । अनुदः । जनम् । अमित्रऽयन्तम् । उरुम् । देवेभ्यः । अकृणोः । ऊं इति । लोकम् ॥

हे इन्द्र क्षत्रम् क्षतात् त्रायकं वामम् वननीयम् ओजः बलम् अभि अभिलक्ष्य अजायथाः उत्पन्नोऽसि । हे वृषभ कामानां वर्षितः चर्षणीनाम् मनुष्याणाम् अस्माकम् । 'नामन्यतरस्याम्' ( पा ६,१,१७७ ) इति नाम उदात्तत्वम् । उत्पत्त्यनन्तरम् अमित्रयन्तम् अमित्रः शत्रुः स इवाचरन्तं जनम् अपानुदः अपागमयः । अपगमय्य च देवेभ्यः उरुम् विस्तीर्णं लोकम् स्वर्गाख्यम् अकृणोः अकार्षीः सुखनिवासाय । उशब्दः समुच्चये ।

मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगम्यात्[1] परस्याः ।
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून्ताढि[2] वि मृधो नुदस्व ॥ ३ ॥

मृगः । न । भीमः । कुचरः । गिरिऽस्थाः । पराऽवतः । आ । जगम्यात् । परस्याः ।
सृकम् । सम्ऽशाय । पविम् । इन्द्र । तिग्मम् । वि । शत्रून् । ताढि । वि । मृधः । नुदस्व ।

कुचरः कुत्सितचरणः गिरिष्ठाः पर्वतनिवासी । तिष्ठतेर्विच्प्रत्ययः । मृगो न सिंह इव भीमः भयंकरो भवति इन्द्रः । स च परस्याः परावतः अतिशयेन दूराद् द्युलोकाद् आ जगम्यात् आगच्छतु । गमेर्विधिलिङि व्यत्ययेन शपः श्लुः । अथ प्रत्यक्षकृत उत्तरोऽर्धर्चः । आगत्य च हे इन्द्र सृकम् सरणशीलं तिग्मम् तीक्ष्णं पविम् वज्रं संशाय सम्यक् तीक्ष्णीकृत्य । शो तनूकरणे । ल्यपि रूपम् शत्रून् अस्मदीयान् वैरिणः वि ताळिह[3] तेन वज्रेण विशेषेण विविधं वा ताडय । विनाशयेत्यर्थः । तड आघाते । अस्माण्ण्यन्तात् लोटि 'छन्दस्युभयथा ( पा ३,४,११७ ) इति हेः आर्धधातुकत्वात् णिलोपः । तथा मृधः संग्रामोद्युक्तान् युयुत्सून् अन्यानपि शत्रून् वि नुदस्व विशेषेण प्रेरय । तिरस्कुर्वित्यर्थः ।

त्यमू षु वाजिनं देवजूतं सहोवानं[5] तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजिमाशुं[6] स्वस्तये तार्क्ष्यमिहा हुवेम ॥ १ ॥

---

१. 'मित्रयन्त' ऋ १०,१८०,३ ते १,६,१२,४ काठ ८,१६ वै १,७७,१. २ जगन्था ऋ १०,१८०,२ मा १८,७१ मै ४,१२,३ काठ. कौ २,१२२३; जगामा तै १,६,१२,५.

३. शत्रू'रं ताढि' कौ. ४. वैदु. मंग. ५. सहोवानं कौ १,३३२; सहावानं ऋ १०, १७८,१. ६. पृतनाजमाशुं ऋ. कौ. सा.

त्यम् । ऊं इति । सु । वाजिनम् । देवऽजूतम् । सहःऽवानम् । तरुतारम् । रथानाम् । अरिष्टऽनेमिम् । पृतनाऽजिम्[1] । आशुम् । स्वस्तये । तार्क्ष्यम् । [2]इह । आ[2] । हुवेम ॥ १ ॥

त्यमु तं प्रसिद्धमेव तार्क्ष्यम् तृक्षपुत्रं सुपर्णम् । तृक्षशब्दो गर्गादिषु पठ्यते (?) । इह अस्मिन् कर्मणि स्वस्तये क्षेमाय सु सुष्ठु आ हुवेम आह्वयेम । 'बहुलं छन्दसि' (पा ६,१,३४) इति ह्वयतेः संप्रसारणम् । 'लिङ्याशिष्यङ्' ( पा ३,१,८६ )। यद्वा प्रार्थनायां लिङि व्यत्ययेन शः । कीदृशम् । वाजिनम् अन्नवन्तं बलवन्तं वा देवजूतम् देवैः सोमाहरणाय प्रेरितम् । जु इति गत्यर्थः सौत्रो धातुः । अस्मात् कर्मणि निष्ठा । 'तृतीया कर्मणि' ( पा ६,२,४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । यद्वा देवैः प्रीयमाणं तर्प्यमाणम् । यद् आह यास्कः — 'जूतिर्गतिः प्रीतिर्वा देवजूतं देवगतं देवप्रीतं वा' ( नि १०,२८ ) इति । सहोवानम् सहस्वन्तं बलवन्तम् अभिभवनशक्तिमन्तं वा । 'छन्दसीवनिपौ' ( पावा ५,२,१०९ ) इति वनिप् । अत एव रथानाम् अन्यदीयानां तरुतारम् संग्रामे तरीतारम् । यद्वा रंहणशीला इमे लोका रथाः । तेषां[3] सोमाहरणसमये शीघ्रं तरीतारम् । श्रूयते हि — 'एष हीमाँल्लोकान्त्सद्यस्तरति' ( ऐब्रा ४,२० ) इति । तरतेस्तृचि 'प्रसितस्कभित' ( पा ७,२,३४ ) इत्यादिसूत्रे उडागमो निपात्यते । अरिष्टनेमिम् । नेमिशब्देन तद्वान् रथो लक्ष्यते । अहिंसितरथम् । यद्वा नेमिः नमनशीलम् आयुधम् अतिरस्कृतायुधम् । अथ वा उपचाराज्जनके जन्यशब्दः । अरिष्टनेमेर्मम ऋपेर्जनकम् । पृतनाजम्[4] पृतनानां शत्रुसेनानां प्राजितारं प्रगमयितारं जेतारं वा । अज गतिक्षेपणयोः । अस्मात् क्विप् । 'वलादावार्धधातुके विकल्प इष्यते' (पाका २,४,५६) इति वचनाद् वीभावाभावः । जयतेर्वा डप्रत्ययः । आशुं शीघ्रगामिनम् ।

त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम् ।
[5]हुवे नु[5] शक्रं पुरुहूतमिन्द्रं [6]स्वस्ति न[6] [7]इन्द्रो मघवान् कृणोतु[7] ॥ १ ॥

त्रातारम् । इन्द्रम् । अवितारम् । इन्द्रम् । हवेऽहवे । सुऽहवम् । शूरम् । इन्द्रम् । हुवे । नु । शक्रम् । पुरुऽहूतम् । इन्द्रम् । स्वस्ति । नः । इन्द्रः । मघऽवान् । कृणोतु ॥

त्रातारम् रक्षकम् इन्द्रं हुवे ह्वयामि । अवितारम् इन्द्रम् इति पुनरुक्तिः [8]पालतमत्वख्यापनार्था । यद्वा त्राणं नाम उपस्थितेभ्यो भयहेतुभ्यो रक्षणम् । अवनं तु उत्प्रेक्ष्यतां निरोध इति विशेषः । अथ वा पारमैश्वर्यलक्षणम् अवनम् । हवे-

१. पृतनाजम् ऋ. पपा १०, १७८,१ कौ. पपा १,३३२. २. इह ऋ.पपा. ३. तपेतान् S'. ४. वैद्य. मंपा. ५. ह्वयामि ऋ ६,४७,११ मा २०,५० काठ १७,१८; हुवेम पै ५,४,११. ६. इदं[1] [1]हविर् कौ १,३३३. ७. मघवा धात्विन्द्रः (धेत्विं[7] कौ.) ऋ. मा. तै १,६,१२,५ मै ४,९,२७ काठ. कौ.; मघवानु पात्विन्द्रः पै. ८. त्रातृ[8] S'.

हवे सर्वेषु ह्वानेषु सुहवम् ह्वातुं सुशकं शूरम् समर्थम् इन्द्रं ह्वयामि । तथा शक्रम् शक्तं सर्वत्र पुरुहूतम् इन्द्रं नु क्षिप्रं हुवे ह्वयामि । स च मघवान् धनवान् इन्द्रः स्वस्ति क्षेमम् अविनाशं नः अस्माकं कृणोतु करोतु । कृवि हिंसाकरणयोश्च । 'धिन्विकृण्व्योर च' ( पा ३,१,८० ) इति उप्रत्ययः ।

यो अग्नौ रुद्रो यो अप्स्व१न्तर्य [1]ओषधीर्वीरुध आविवेश।
य इमा[2] विश्वा [3]भुवनानि चाक्लृपे[3] तस्मै रुद्राय नमो अस्त्वग्नये[4] ॥१॥

यः । अग्नौ । रुद्रः । यः । अप्ऽसु । अन्तः । यः । ओषधीः । वीरुधः । आऽविवेश ।
यः । इमा । विश्वा । भुवनानि । चक्लृपे[5] । तस्मै । रुद्राय । नमः । अस्तु । अग्नये ॥ १ ॥

यो रुद्रः । रोदयति शत्रून् इति रुद्रः । 'रोदेर्णिलुक् च' ( पाउ २,२२ ) इति रक्प्रत्ययः । णेर्लुक् । एतन्नामा देवः अग्नौ अन्तः मध्यम् आविवेश यष्टव्यत्वेन अग्निमध्यं प्रविष्टः । यश्च अप्सु अन्तः आविवेश वरुणात्मना प्रविष्टः । 'ऊडिदम्' ( पा ६,१,१७१ ) इत्यादिना अप्शब्दाद् उत्तरस्या विभक्तेरुदात्तत्वम् । यश्च वीरुधः विशेषेण विविधं वा रोहन्तीः ओषधीः ओषः फलपाको धीयते निधीयते आस्विति ताः फलपाकान्ता लताः आविवेश सोमात्मना आविष्टः । वीरुध इति । विपूर्वाद् रोहतेः क्विपि 'नहिवृति' ( पा ६,३,११६ ) इत्यादिना उपसर्गस्य दीर्घः । हकारस्य धकारादेशश्छान्दसः । किं बहुना यो रुद्रः इमा इमानि नामरूपात्मना परिदृश्यमानानि विश्वा विश्वानि सर्वाणि भुवनानि भवन्ति भूतानि । स्रष्टुम् इति शेषः । चाक्लृपे समर्थो भवति । कृपू सामर्थ्ये । लिटि 'कृपो रो लः' ( पा ८,२,१८ ) इति लत्वम् । अभ्यासस्य छान्दसः सांहितिको दीर्घः । तस्मै सर्वजगत्स्रष्ट्रे सर्वं जगद् अनुप्रविष्टाय रुद्राय रुद्रात्मने अग्नये नमः नमस्कारोऽस्तु । यद्वा अग्नये अङ्गनादिगुणविशिष्टाय रुद्राय नमोऽस्तु ।

अपेह्यरिरस्यरिर्वा असि । विषे विषमपृक्था [6]विषमिद् वा अपृक्थाः ।
अहिमेवाभ्यपेहि तं जहि[6] ॥ १ ॥

अप । इहि । अरिः । असि । अरिः । वै । असि । विषे । विषम् । अपृक्थाः । विषम् ।
इत् । वै । अपृक्थाः । अहिम् । एव । अभिऽअपेहि । तम् । जहि ॥ १ ॥

---

१. ओषधीषु तै ५,५,९,२ काठ ४०,५.   २. रुद्रो तै. काठ.   ३. भुवना विवेश तै. काठ.   ४. अस्त्वस्य पै २०,३२,६.   ५. चक्लृपे P.P[3].   ६. विषं वा अप्रचितं जहि पै २०,३२,७.

अत्र सर्पविषं संबोध्यते । हे विष अपेहि अपगच्छ अस्माद् दष्टात् पुरुषात् । यतस्त्वम् अरिः शत्रुः असि भवसि । न केवलम् अस्यैव अरिरसि वै सर्वस्य शत्रुर्भवसि खलु । अतो विषे विषवति सर्पे । अर्शआदित्वाद् अच्प्रत्ययः । विषम् अपृक्थाः संपर्चय संयोजय । एतदेव पुनराह — विषमित् विषमेव अपृक्थाः संयोजय । वैशब्दः अवधारणे । विषवति सर्प एव पुनर्विषमेव संयोजयेत्यर्थः । पृची संपर्के । छान्दसे लुङि 'एकाचः' ( पा ७,२,१० ) इति इण्निषेधः । 'झलो झलि' ( पा ८,२,२६ ) इति सिचो लोपः । उक्तार्थमेव विशदयति — हे विष त्वं यस्य विषं भवसि तम् अहिम् आहन्तारं सर्पम् एव अभ्युदेहि अभिलक्ष्य समीपं गच्छ । गत्वा च तम् अहिं जहि विनाशय ।

अपो[1] दिव्या अचायिषं[2] रसेन समपृक्ष्महि[3] ।
पयस्वानग्न आगमं[4] तं मा सं सृज वर्चसा ॥ १ ॥

अपः । दिव्याः । अचायिषम् । रसेन । सम् । अपृक्ष्महि ।
पयस्वान् । अग्ने । आ । अगमम् । तम् । मा । सम् । सृज । वर्चसा ॥ १ ॥

दिव्याः दिवि भवा अपः उदकानि । 'ऊडिदम्०' ( पा ६,१,१७१ ) इति शस उदात्तत्वम् । अचायिषम् पूजयामि । स्नानार्थम् अभिप्रैमीत्यर्थः । चायृ पूजानिशामनयोः । लुङि रूपम् । तासाम् अपां रसेन समपृक्ष्महि संगताः स्मः । रसेन संसिक्ता भवाम इत्यर्थः । वचनव्यत्ययो वा । समपृक्षि संगतोऽस्मि । पृची संपर्के । 'लिङ्सिचावात्मनेपदेषु' ( पा १,२,११ ) इति सिचः कित्त्वम् । हे अग्ने अहं त्वां पयस्वान् अन्नवान् हविर्भिस्तद्वान् आगमम् आगतोऽस्मि । हविषा युक्तं तव समीपम् आगतोऽस्मीत्यर्थः । गमेर्लुङि लृदित्वाद् अङ् । तं तादृशं त्वत्समीपं प्राप्तं मा मां वर्चसा । वर्चो ग्रहणकेः । तेजोविशेषेण सं सृज संयोजय । 'अग्ने यत् ते दिवि वर्चः पृथिव्याम्' ( ऋ ३,२२,२ ) इति हि निगमः ।

सं माग्ने वर्चसा सृज सं प्रजया समायुषा ।
विद्युर्मे अस्य[6] देवा इन्द्रो विद्यात्[9] सह ऋषिभिः[7] ॥ २ ॥

सम् । मा । अग्ने । वर्चसा । सृज । सम् । प्रऽजया । सम् । आयुषा ।
विद्युः । मे । अस्य[8] । देवाः । इन्द्रः । विद्यात्[9] । सह । ऋषिऽभिः ॥ २ ॥

---

१. वैतु. मंत्रा. २. आपो ऋ १,२३,२३ पै १,३३,१. ३. अद्यान्वचारिषं ऋ. मा २०,२२ मै १,३,३९ काठ ४,१३ आश्री २,१२,१३; अद्यान्वचार्यं जैत्रा २,६८; अन्वचारिषं तै १,४,४५,३. ४. समगस्महि ऋ.; समसृक्ष्महि मा.; समगन्महि काठ ४,१३ आश्री. ५. आगहि ऋ. ६. अस्य K,R, ऋ १,२३,२४ सा. ७. सहर्षिं पै १,३३,२. ८. अस्य Bp[2]. ९. विद्यात् P,Cp.

हे अग्ने मा मां वर्चसा तेजसा बलेन वा[1] सं सृज संयोजय । प्रजया पुत्रादिकया सं सृज । आयुषा जीवनेन च सं सृज । किं च अस्य एनम् । अन्वादेशे इदमः अशादेशोऽनुदात्तः । विभक्तिः सुप्त्वाद् अनुदात्ता । अतः सर्वानुदात्तं[2] पदम् । एनं मे माम् । कर्मार्थे षष्ठ्यौ । देवा विद्युः असौ पूत इति जानीयुः । तथा ऋषिभिः अतीन्द्रियदर्शिभिर्मुनिभिः सह इन्द्रश्च विद्यात् मां पूतं जानीयात् । यद्वा अस्य एतादृशस्य मे अभिमतफलं साधयितुम् इन्द्रादयो विद्युरिति ।

इदमापः[3] प्र वहतावद्यं च मलं च यत् ।
यच्चाभिदुद्रोहानृतं[4] यच्च[5] शेपे अभीरुणम्[6] ॥ ३ ॥

इदम् । आपः[7] । प्र । वहत । अवद्यम् । च । मलम् । च । यत् ।
यत् । च । अभिऽदुद्रोह । अनृतम् । यत् । च । शेपे । अभीरुणम् ॥ ३ ॥

हे आपः इदं पापं प्र वहत अपनयत । यद् अवद्यम् गर्ह्यं निन्दारूपं यच्च मलम् दुरितं च मयि वर्तते यच्च अनृतम् असत्यम् अभिदुद्रोह पित्रादिभ्यः अयथार्थनिर्बन्धेन द्रोहम् अकार्षम् यच्च अभीरुणम्[8] । उत्तमर्णाय देयं वस्तु रुणम् इत्युच्यते । तद् ऋणम् अभिप्राप्य शेपे अपलापाय शपथं कृतवान् अस्मि । तत् पापम् अपनयतेति संबन्धः । अभिदुद्रोहेति । द्रुह जिघांसायाम् । लिटि उत्तमणलि रूपम् । 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघातनिषेधः । 'तिङि चोदात्तवति' ( पा ८,१,७१ ) इति गतेर्निघातः । शेपे इति । शप आक्रोशे । अस्माल्लिटि उत्तमैकवचने इटि 'शप उपालम्भने' ( पावा १,३,२१ ) इति आत्मनेपदम् । वाचा शरीरस्पर्शनम् उपालम्भः । यद्वृत्तयोगाद् अनिघातः ।

एधोऽस्येधिषीय[9] समिदसि समेधिषीय[10] । तेजोऽसि तेजो मयि धेहि[11] ॥४॥

एधः । असि । एधिषीय[12] । सम्ऽइत् । असि । सम् । एधिषीय । तेजः । असि । तेजः । मयि । धेहि ॥ ४ ॥

हे अग्ने त्वम् एधः इद्धः दीप्तः असि भवसि । ञिइन्धी दीप्तौ । घञि 'अवोदैधौद्मप्रश्रथहिमश्रथाः' ( पा ६,४,२९ ) इति उपधानकारलोपो निपात्यते । यतस्त्वं समिदाधानेन दीप्तो भवसि अतः यद्वा एध वृद्धौ इत्यस्माद् उत्पन्न एधशब्दः । हविषा प्रवृद्धो भवसि अतोऽहम् एधिषीय फलेन समृद्धो भूयासम् । ञिइन्धी दीप्तौ । आशीर्लिङि व्यत्ययेन नकारलोपे गुणे च रूपम् । यद्वा एध

---

१. वा मा मां S'. २. वेद्ध. मंपा. ३. °मापुः WM. ४. यद्वाहमभिदुद्रोह ऋ १,२३,२२; यद्वाभि° आपश्री ७,२१,६. ५. यद्वा ऋ. आपश्री. ६. अभीरुणम् मा ६,१७; उतानृतम् ऋ. ७. आपः P,J,Cp,WM. ८. वैर १, ३७०; द्र. ९. °धिषीय K,Km; °धिषीमहि मा ३८,२५ काठ ९,७ आश्री ३,६,२६ शाश्री २,१२,१२ माग़ृ १,१,१६. १०. °धिषीमहि काठ. आश्री. शाश्री. माग़ृ. ११. देहि आश्री. १२ पुधिषीय P,P'.

वृद्धौ इत्यस्मात् आशीर्लिङि रूपम् । उभयत्र लिङः सीयुट् । वलादिलक्षण इट्। 'इटोऽत्' (पा ३,४,१०६ ) इति अदादेशः । तथा हे अग्ने समित् समिद्धः समित्संबन्धिनी वा संदीपनी शक्तिः असि। इन्धेः कर्मणि करणे वा क्विपि उपधानकारलोपः । यतः अग्ने त्वं समिदसि अतोऽहं समेधिषीय फलैः समिद्धः संपूर्णो भूयासम् । अत्र इन्धेः आशीर्लिङि छान्दसं रूपं प्रदर्शितं भवति। हे अग्ने त्वं तेजोऽसि दीप्तिः तेजःसाधनं वा भवसि । अतस्त्वं तेजः तादृशं मयि धेहि स्थापय।

अपि॑ वृश्च पुराण॒वद् व्र॒तते॑रिव गुष्पि॒तम्। ओजो॑ दा॒सस्य॑ दम्भय[1] ॥१॥

अपि॑ । वृ॒श्च॒ । पु॒रा॒ण॒ऽवत् । व्र॒तते॑ःऽइव । गु॒ष्पि॒तम् । ओज॑ः । दा॒सस्य॑ । द॒म्भ॒य ॥ १ ॥

हे अग्ने त्वं पुराणवत्। व्यत्ययेन द्वितीयार्थे वतिः । पुराणान् पुरातनान् शत्रूनिव इदानींतनम् अपि जाररूपं शत्रुं वृश्च छिन्धि । 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (पा ४,३,१०५ ) इति निपातनात् तुडभावः । ओव्रश्चू छेदने । तुदादित्वात् शः । 'ग्रहिज्या' (पा ६,१,१६ ) इत्यादिना संप्रसारणम् । यद्वा पुराणवदिति 'तत्र तस्येव' (पा ५,१,११६ ) इति षष्ठ्यर्थे वतिः । पुराणानां पुरातनानां शत्रूणामिव नूतनस्यापि जाररूपशत्रोर्बलं वृश्च इति बलशब्दाध्याहारेण योजना। छेदने दृष्टान्तः— व्रततेरिव गुष्पितम् इति । गुष्पतिर्गुल्फतिपर्यायो द्रष्टव्यः। यथा व्रततेर्लताया गुल्फं कुब्जं शाखासमूहं वृश्चन्ति तद्वदिति। तदेवाह तृतीयपादेन— दासस्य उपक्षपयितुः शत्रोर्जारस्य ओजः बलं प्रजननसमर्थं वीर्यं वा दम्भय विनाशय। दम्भयतिर्वधकर्मा इति यास्कः (तु.निघ २,१९)।

व॒यं तद॑स्य॒[2] सम्भृ॑तं॒ वस्विन्द्रे॑ण[3] वि भ॑जामहै[4] ।
म्ला॒पया॑मि[5] भ्र॒जः[6] शि॒भ्रं[7] वरु॑णस्य व्र॒तेन॑ ते ॥ २ ॥

व॒यम् । तत् । अ॒स्य॒ । सम्ऽभृ॑तम् । वसु॑ । इन्द्रे॑ण । वि । भ॒जा॒म॒है॒ ।
म्ला॒पया॑मि । भ्र॒जः । शि॒भ्रम् । वरु॑णस्य । व्र॒तेन॑ । ते॒ ॥ २ ॥

अस्य पुरोवर्तिनो जारस्य शत्रोः संभृतम् एकत्र संपादितं तद् वसु धनम् इन्द्रेण सहायभूतेन वयं वि भजामहे विभक्तम् अपगतं करवामहे । यद्वा तस्य धनं वयं विशेषेण भजामहे । तस्य धनस्य वयं भागिनो भवाम इत्यर्थः। उत्तरार्धे जारः संबोध्यते— हे जार ते तव शुभ्रम्[8] श्वेतवर्णं भ्रजः दीप्तम् अपत्य-

---

१. जम्भय पै २०,२९,१. २. यद्वेदं तु पै २०,२९,२. ३. मरुत्व? इन्द्रस्य पै. ४. भजेमहि ऋ ८,४०,६; भजावहि पै. ५. म्लापयां पै. ६. शुक्र पै. ७. शभ्रं W.. ८. वैतु. मंत्र.

प्रजननसमर्थं रेतः वरुणस्य वारकस्य देवस्य व्रतेन कर्मणा म्लापयामि क्षीणं करोमि । ग्लै म्लै हर्षक्षये । ण्यन्तात् पुगागमः । [1]भ्राजतेर्दीप्त्यर्थाद् असुनि रूपं भ्रज इति ।

यथा शेपो अपायातै[2] स्त्रीषु चासदनावयाः[3] ।
अवस्थस्य क्नदीवतः शाङ्कुरस्य[4] नितोदिनः ।
यदाततमव तत्तनु यदुत्ततं नि[5] तत्तनु ॥ ३ ॥

यथा । शेपः । अपऽअयातै । स्त्रीषु । च । असत् । अनावयाः । अवस्थस्य । क्नदिऽवतः[6] । शाङ्कुरस्य । निऽतोदिनः । यत् । आऽततम् । अव । तत् । तनु । यत् । उत्ऽततम् । नि । तत् । तनु ॥

शेपः पुंस्प्रजननस्य नाम । 'वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च' (पाउ ४,२००) इति असुन् । पुडागमः । यथा येन प्रकारेण शेपः जारस्य व्यञ्जनम् अपायातै अपगच्छेत् । भोग्यायाः पतिवत्न्या नार्याः सकाशाद् अपगतं भवेत् । अय पय गतौ । लेटि 'लेटोऽडाटौ' (पा ३,४,९४) इति आडागमः । 'वैतोऽन्यत्र' (पा ३,४,९६) इति एकारस्य ऐकारादेशः । च यथा च स्त्रीषु भोग्यासु अनावयाः । वेतेर्गत्यर्थाद् असुन् । लिङ्गव्यत्ययः । अनागच्छद् असत् भवेत् । यथा जारस्य व्यञ्जनं स्त्रीषु संसक्तं न भवेदित्यर्थः । असत् इति अस्तेर्लेटि रूपम् । यद्वा आवयतिः अत्तिकर्मा (द्र. निघ २,८) । आङ्पूर्वाद् वेतेर्भक्षणार्थाद् असुन् । अत्र भक्षणं भोगमात्रोपलक्षणम् । यथा च जारः स्त्रीषु परकीयासु अनावयाः अभोक्ता संभोगरहितः असत् भवेत् । अयम् अर्थः — यथा जारस्य शेपो भोग्यायाः स्त्रियाः सकाशाद् अपगच्छेत् भोक्तुं न क्षमेत यथा च स्त्रीव्यञ्जने संसक्तं जारो वा संभोक्ता न भवेत् तथा कुर्विति देवः प्रार्थ्यते । कस्य शेप इति तम् आह उत्तरेणार्धेन — अवस्थस्य स्त्रीसमीपे अवतिष्ठमानस्य । अवपूर्वात् तिष्ठतेः 'स्थः क च' (पा ३,२,७७) इति कप्रत्ययः । अथ वा अवः अवस्तात् स्त्रिया अधःप्रदेशे संभोगाय तिष्ठतः । 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (पा ५,३,३९) इति अवरशब्दस्य असिप्रत्यये अवादेशः । अवोपसृष्टात् तिष्ठतेः असिप्रत्ययान्तावरशब्दपूर्वाद् वा तिष्ठते रूपम् इति व्युत्पत्त्यनवधारणाद् अनवग्रहः । क्नदिवतः । क्नदेः आह्वानार्थाद् औणादिको भावे इप्रत्ययः । रेफस्य नकारोपजनश्छान्दसः । संभोगार्थम् आह्वानवतः शाङ्कुरस्य शङ्कुरिव शङ्कुः पुंव्यञ्जनं तद्वान् शङ्कुरः । रो मत्वर्थीयः । शङ्कुर एव शाङ्कुरः । प्रज्ञादित्वाद् अण् । पुंव्यञ्जनवतः नितोदिनः नितरां संभोगेन नारीं व्यथयतः । तुद व्यथने इत्यस्माद् 'बहुलमा-

---

१. भ्रजते' सा. २. यगु ? पै २०,२९,३. ३. चासग्रामद्वः पै. ४. भङ्गुरस्य पै. ५. भव पै. ६. क्नदि° Bp³.

भीक्ष्ण्ये' ( पा ३,२,८१ ) इति णिनिः । एतादृशस्य जारस्य आततम् आयामवत् यत् शेपोऽस्ति तत् शेपः अव तनु अवततं दैर्घ्यरहितं कुरु। तथा उत्ततम् ऊर्ध्वं विस्तृतम् उन्नतं यत् शेपः तत् नि तनु नितत नीचीनं कुरु।

इति अष्टमेऽनुवाके द्वितीयं सूक्तम् ।

श्रीमद्राजाधिराजराजपरमेश्वरश्रीवीरमहाराजराज्यधुरंधरसायणार्यविरचिते माधवीये अथर्वसंहिताभाष्ये वेदार्थप्रकाशे सप्तमकाण्डे अष्टमोऽनुवाकः।

नवमेऽनुवाके द्वे सूक्ते । तत्र 'इन्द्रः सुत्रामा' इत्याद्ये सूक्ते आद्येन तृचेन ग्रामकामः इन्द्रं यजेत उपतिष्ठेत वा।

तथा तस्मिन्नेव कर्मणि उदुम्बरपलाशकर्कन्धूनां समिदाधानसभोपस्तरणहोमादीनि कर्माणि अनेन कुर्यात्।

सूत्रितं हि—"'इन्द्रः सुत्रामा' इति ग्रामकामः । ग्रामसापदानामप्ययः" ( कौसू ५९,७;८ ) इति।

तथा इन्द्रमहाख्ये उत्सवे 'इन्द्रः सुत्रामा' इत्यनया आज्यं जुहुयात् । सूत्रितं हि—"'अर्वाञ्चमिन्द्रम्' ( अ ५,३,११ ), 'त्रातारमिन्द्रम्' ( अ ७,९१ ), 'इन्द्रः सुत्रामा' इत्याज्यं हुत्वा" ( कौसू १४०,६ ) इति।

अग्निष्टोमे 'ध्रुवं ध्रुवेण' इति ऋचा आसन्दीं नीयमानं सोमराजम् अनुमन्त्रयेत। उक्तं वैताने—"'ध्रुवं ध्रुवेण' (अ ७,९९) इति राजानं राजवहनादासन्द्यां[1] नीयमानमनुमन्त्रयते" ( वैताश्रौ १३,१२ ) इति।

तथा अग्निष्टोमे आग्निमारुतशस्त्रावसाने अवनीयमानं ध्रुवपात्रस्थसोमम् अनया ब्रह्मा अनुमन्त्रयेत। "'ध्रुवं ध्रुवेण' इति ध्रुवमवनीयमानमनुमन्त्रयते" (वैताश्रौ २३,७) इति हि सूत्रम्।

आभिचारिके कर्मणि 'उदस्य श्यावौ' (अ ७,१००) इति तृचेन आज्यं जुहुयात् (तु· कौसू ४८,४०)।

तथा तस्मिन्नेव कर्मणि सूत्रोक्तरीत्या अनेन तृचेन मण्डूकमुखम् अपनुदेत् (तु· कौसू ४८,४०)।

अभिचारकर्मणि 'अमदन् गावः' (अ ७,१०१) इति ऋचा रक्तशालितण्डुलैः क्षीरौदनं[2] कृत्वा संपात्य अभिमन्त्र्य द्वेष्याय दद्यात् (तु· कौसू ४८,४१)।

दर्शपूर्णमासयोः 'यदद्य त्वा प्रयति' इत्यष्टर्चेन संस्थितहोमान् जुहुयात्। "'यदद्य त्वा प्रयति' ( अ ७,१०२ ) इत्यष्टर्चेन संस्थितहोमाः। 'मनसस्पते' ( अ ७,१०२,८ ) इत्युत्तमं चतुर्गृहीतेन" ( कौसू ६,३;४ ) इति सूत्रात्।

---

१· आसंदीं S'.   २· क्षीरोदनं S'.

उपनयनकर्मणि ब्रह्मचारिणं 'समिन्द्र नः'[1] (अ ७,१०,२) इत्यनया अष्टर्चेनाभिमन्त्रितम् उदपात्रम् अवेक्षयेत्। उपनयनं प्रक्रम्य सूत्रितम्—"उदपात्रे[2] समवेक्षयेत्। 'समिन्द्र नः'" (कौसू ५५,१९;२०) इति।

इन्द्रः॑ सु॒त्रामा॒ स्ववाँ[3] अवो॑भिः सुमृडी॒को भ॑वतु वि॒श्ववे॑दाः।
बाध॑तां॒ द्वेषो॒ अभ॑यं नः कृणोतु सु॒वीर्य॑स्य॒ पत॑यः स्याम ॥ १ ॥

इन्द्रः॑। सु॒ऽत्रामा॑[4]। स्व॒ऽवान्। अवः॑ऽभिः। सु॒ऽमृ॒डी॒कः। भ॒व॒तु॒। वि॒श्वऽवे॑दाः।
बाध॑ताम्। द्वेषः॑। अभ॑यम्। नः॒। कृ॒णो॒तु॒। सु॒ऽवीर्य॑स्य। पत॑यः। स्या॒म॒ ॥ १ ॥

सुत्रामा सुष्ठु त्राता। 'आतो मनिन्क्वनिब्वनिपश्च' (पा ३,२,७४) इति मनिन्। कृदुत्तरपदप्रकृतिस्वरत्वम्। स्ववान् धनवान् हितात्मा वा इन्द्रः अवोभिः रक्षणैः सुमृळीकः[5] सुसुखः सुष्ठु सुखयिता भवतु। कीदृशः। विश्ववेदाः बहुधनः विदवं विद्वान् वा। द्वेषः। द्विष अप्रीतौ। असुन्। शेर्लुक्। द्वेषांसि द्वेष्टॄन् बाधताम् हिनस्तु। अभयं च नः अस्माकं कृणोतु करोतु। वयं सुवीर्यस्य शोभनवीर्योपेतस्य धनादिकस्य पतयः स्वामिनः स्याम भूयास्म। सुवीर्यस्येति। 'वीरवीर्यौ च' (पा ६,२,१२०) इति उत्तरपदाद्युदात्तत्वम्।

स सु॒त्रामा॒ स्ववाँ[6] इन्द्रो॑ अ॒स्मदा॑रा॒च्चिद्[7] द्वेषः॑ सनु॒तर्यु॑योतु।
तस्य॑ व॒यं सु॑म॒तौ य॒ज्ञिय॒स्यापि॑ भ॒द्रे सौ॑मन॒से स्या॑म ॥ १ ॥

सः। सु॒ऽत्रामा॑। स्व॒ऽवान्। इन्द्रः॑। अ॒स्मत्। आ॒रात्। चि॒त्। द्वेषः॑। स॒नु॒तः। यु॒यो॒तु॒।
तस्य॑। व॒यम्। सु॒ऽम॒तौ। य॒ज्ञिय॑स्य। अपि॑। भ॒द्रे। सौ॒म॒न॒से। स्या॒म॒ ॥ १ ॥

सुत्रामा सुष्ठु त्राता स्ववान् धनवान् स[8] प्रसिद्ध इन्द्रः अस्मत् अस्मत्तः आराच्चित् दूरादेव द्वेषः द्वेष्टॄन्। द्विषतेर्व्यत्ययेन विच्प्रत्यये गुणः। द्वितीयाबहुवचनं शस्। सनुतः। अन्तर्हितनामैतत् (द्र. निघ ३,२५)। तिरोहितान् गूढान् युयोतु पृथक् करोतु। यु मिश्रणामिश्रणयोः। 'बहुलं छन्दसि' (पा २,४,७३) इति शपः श्लुः। यज्ञियस्य यज्ञार्हस्य तस्य इन्द्रस्य सुमतौ शोभनायाम् अनुग्रहबुद्धौ वर्तमाना वयं तस्यैव भद्रे कल्याणे सौमनसे सुमनसो भावे अपि स्याम विषयभूता भवेम। सौमनस इति। सुमनःशब्दाद् भावे अण्प्रत्ययः।

---

१. णः S. २. पात्रे Bl. ३. स्ववाँ Bᵇ,D,Cs,S; स्ववाँ > स्वयाँ Sᵐ; स्ववं मै ४,१२,५. ४. सुत्रामा P. ५. वेतु मेधा. ६. स्ववाँ D,Sᵐ,Cs; स्ववाँ > स्ववाँ A; स्ववं S, मै. ७. अस्मे आरा° ऋ. १०,१३१,७ मा २०,५२ तै १,७,१३,५. ८. यद् S'.

इन्द्रेण 'मन्युना वयमभि ष्याम' पृतन्यतः । घ्नन्तो वृत्राण्यप्रति ॥ १ ॥

इन्द्रेण । मन्युना । वयम् । अभि । स्याम । पृतन्यतः । घ्नन्तः । वृत्राणि । अप्रति ॥ १ ॥

इन्द्रेण सहायेन मन्युना तदीयेन कोपेन । यद्वा मन्यतिर्दीप्तिकर्मा । मन्युमता इन्द्रेण सहायेन वयं पृतन्यतः पृतनां संग्रामम् इच्छतः युयुत्सून् शत्रून् अभि ष्याम अभिभवेम । 'कव्यध्वरपृतनस्यर्चि लोपः' (पा ७,४,३९) इति क्यचि पृतनाशब्दस्य अन्त्यलोपः । अभि ष्यामेति । 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (पा ८,३,८७) इति षत्वम् । किं कुर्वन्तः वयम् । वृत्राणि आचारकाणि पापानि । शत्रून् इत्यर्थः । अप्रति अप्रतिपक्षं घ्नन्तः यथा प्रतिपक्षशेषो न भवति तथा घ्नन्तः । निःशेषं हिंसन्त इत्यर्थः ।

ध्रुवं ध्रुवेण हविषाऽव सोमं नयामसि ।
'यथा न' इन्द्रः 'केवलीर्विशः' संमनसस्करत् ॥ १ ॥

ध्रुवम् । ध्रुवेण । हविषा । अव । सोमम् । नयामसि ।
यथा । नः । इन्द्रः । केवलीः । विशः । सम्ऽमनसः । करत् ॥ १ ॥

ध्रुवेण स्थिरेण सुप्रतिष्ठितेन हविषा पुरोडाशादिना युक्तं ध्रुवम् ध्रुवग्रहस्थं सोमम् अव नयामसि अवाङ्मुखं निनयामः । यद्वा ध्रुवम् स्थिरं सोमं राजवहनाद् अनसः सकाशाद् आसन्दीं प्रति अवतारयामः । यथा येन प्रकारेण इन्द्रो नः अस्माकं विशः प्रजाः केवलीः असाधारणाः संमनसः संगतमनस्काः समानमनस्काश्च करत् करोतु । तथा अव नयामसीति संबन्धः । 'केवलमामकभागधेय°' (पा ४,१,३०) इति केवलशब्दाद् ङीप् । करत् इति । करोतेर्लेटि अडागमः ।

उदस्य श्यावौ विथुरौ 'गृध्रौ द्यामिव पेततुः' ।
उच्छोचनप्रशोचनावस्योच्छोचनौ हृदः ॥ १ ॥

उत् । अस्य । श्यावौ । विथुरौ । गृध्रौ । द्यामऽइव । पेततुः ।
उच्छोचनऽप्रशोचनौ । अस्य । उत्ऽशोचनौ । हृदः ॥ १ ॥

अस्य मण्डूकात्मना भावितस्य शत्रोः संबन्धिनौ विथुरौ । व्यथ भयचलनयोः इत्यस्माद् औणादिकः कुरच्प्रत्ययः । छान्दसं संप्रसारणम् । संततं चलनशीलौ श्यावौ श्याववर्णौ ओष्ठौ उत्पेततुः उत्पतताम् उद्गच्छताम् । मण्डूकमुखापनोदनेन शत्रोरोष्ठौ

---

१. सुयुजो वयं सासह्याम ते ३,५,३,१; °ना युजाऽवधाधे मै १,३,१२; 'स्याम A,B,B', K,W,O २. घ्नतो मं. ३. °षाभि ऋ १०,१७३,६ पै १९,६,४; °षा व:। मै १,१,१५; मनसा वाचा मा ७,२५; °षा हविरव काठ ३५,७. ४. मृशामसि ऋ. पै.; भवनयामि मा. ५. अथो न ऋ.; यथा न मा.; अथा व पै. ६. इद्दिशोऽसपत्नाः मा. ७. बलिहृतस्क° ऋ. काठ. पै ; समनस्क° (°सः क° तै.) मा. तै. ८. दिवं गृध्राविवेताम् पै १९,२६,११. ९. शोचनाधतिशोचनावस्यो° पै.

विदारितौ भवताम् इत्यर्थः। यद्वा श्यैङ् गतौ इत्यस्माद् उत्पन्नः श्यावशब्दः। श्यावौ परस्परसंसक्तौ शत्रुरूपेण भावितस्य मण्डूकस्य प्राणापानौ विथुरौ व्यथनशीलौ भयवन्तौ सन्तौ उत्पतताम् इति। श्याववर्णौ वा प्राणापानौ। तौ हि वायोर्वृत्तिभेदौ। वायोर्हि धूम्रवर्णत्वं मन्त्रशास्त्रप्रसिद्धम्। उद्गमने दृष्टान्तः — गृध्रौ द्यामिव इति। यथा गृध्रौ तार्क्ष्यौ द्याम् दिवम् उत्पततः। 'औतोऽम्शसोः' (पा ६,१,९३) इति द्योशब्दस्य अमि परत आकारादेशः। पेततुरिति। छान्दसो लिट्। किं च उच्छोचनप्रशोचनौ। उच्छोचयति ऊर्ध्वम् उत्क्रम्य उत्कृष्टं वा शोकं करोतीति उच्छोचनः। प्रकर्षेण शोचयतीति प्रशोचनः। एतत्संज्ञकौ मृत्युदूतौ अस्य पुरोवर्तिमण्डूकरूपेण भावितस्य शत्रोः हृदः हृदयस्य उच्छोचनौ उत्कर्षेण शोचयितारौ। भवत इति शेषः। शोचयतेर्नन्द्यादित्वात् ल्युः।

अ॒हमे॑ना॒वुद॑तिष्ठिपं॒ गावौ॑ श्रान्त॒सदा॑विव।
कु॒र्कु॒रावि॑व॒ कूज॑न्तावु॒दव॑न्तौ॒ वृका॑विव ॥ २ ॥

अ॒हम्। ए॒नौ। उत्। अ॒ति॒ष्ठि॒प॒म्। गावौ॑। श्रा॒न्त॒सदौ॒ऽइव।
कु॒र्कु॒रौऽइ॑व। कूज॑न्तौ। उ॒त्ऽअव॑न्तौ। वृकौ॑ऽइव ॥ २ ॥

एनौ पूर्वमन्त्रोक्तौ श्यावौ ओष्ठौ प्राणापानौ वा शत्रुसंबन्धिनौ। इदंशब्दस्य अन्वादेशे 'द्वितीयाटौस्स्वेनः' (पा २,४,३४) इति एनादेशः अनुदात्तः। अहं प्रयोक्ता उदतिष्ठिपम् उत्थापयामि उद्गमयामि। बलान्निःसारयामीत्यर्थः। तिष्ठतेर्ण्यन्तात् लुङि चङि 'तिष्ठतेरित्' (पा ७,४,५) इति इत्त्वम्। बलात्कारेण उत्थापने दृष्टान्तत्रयं गावाविवेत्यादि। यथा श्रान्तसदौ श्रान्तौ[1] श्रमवन्तौ सीदन्तौ गोष्ठे श्रमेण निषीदन्तौ गावौ बालदण्डमूलनितोदनादिना[2] बलाद् उत्थापयन्ति। यथा च कूजन्तौ ध्वनिं कुर्वन्तौ कुर्कुरौ श्वानौ पाषाणप्रहरणादिना बलाद् अपसारयन्ति। यथा च वृकौ। अरण्यश्वा वृक इत्युच्यते। उदवन्तौ गोयूथमध्ये वत्सान् उद्गृह्य गच्छन्तौ धावन्तौ वृकौ यथा गोपालाः बलाद् यूथाद् अपसारयन्ति तद्वत्। ओष्ठयोः प्राणापानयोर्वा द्वित्वाद् द्वित्वसंख्यावन्तौ गावौ श्वानौ वृकौ दृष्टान्तत्वेन उपन्यस्तौ। अवतेर्धातो रक्षणाद्यनेकार्थस्मरणाद् अत्र गत्यर्थः अवतिः।

आ॒तो॒दिनौ॑[3] नि॒तो॒दिना॒वथो॑ सं॒तो॒दिना॑वु॒त।
अपि॑ नह्याम्यस्य॒ मेढ्रं॒ य इ॒तः[4] स्त्री पुमा॑न् ज॒भार॑[5] ॥ ३ ॥

---

१. यथा श्रान्तौ S'. २. °दंडबलांमूलनि S'. ३. अ॒तो° K; अ॒वो° K^m; आ॒तो° R. ४. इ॒व A,B^b,K,K^m,R,V,RW. ५. °मां जु॒° R,RW.

आऽतोदिनौ । निऽतोदिनौ । अथो इति । सम्ऽतोदिनौ । उत ।
अपि । नह्यामि । अस्य । मेढ्रम् । यः । इतः । स्त्री । पुमान् । जभार ॥ ३ ॥

अत्र शत्रोरोष्ठौ प्राणापानौ वा उत्क्रमणवेलायाम् एतदेतदवस्थापन्नौ करोतीति पूर्वार्धेन उच्यते । आतोदिनौ सर्वतो व्यथनशीलौ शत्रोः सर्वावयवसंक्लेशकारिणौ । उत्थापयामीति पूर्वमन्त्रोक्तक्रियानुषङ्गः । तथा नितोदिनौ नितरां निकृष्टं वा व्यथयन्तौ अतिकष्टं बाधाकारिणौ । अथो अनन्तरम् उत अपि च संतोदिनौ संभूय व्यथाकारिणौ । उद्गमयामीति संबन्धः । किं च यः स्त्री पुमान् वा द्वेष्यः इतः अस्मदीयात् स्थानात् जभार जहार । आस्माकीनं धनम् इति शेषः । यद्वा इतः अस्मिन् प्रदेशे जहार प्रहृतवान् अस्मान् बाधितवान् । अस्य शत्रोः मेढ्रम् मर्मस्थानोपलक्षणम् एतत् । अपि नह्यामि बध्नामि । यथा मर्मस्थानबन्धनेन मरिष्यति तथा करोमीत्यर्थः ।

असदन्[1] गावः सदनेऽपप्तद्[2] वसतिं वयः ।
आस्थाने पर्वता अस्थुः[3] स्थाम्नि वृक्कावतिष्ठिपम् ॥१॥

असदन् । गावः । सदने । अपप्तत्[5] । वसतिम् । वयः ।
आऽस्थाने । पर्वताः । अस्थुः । स्थाम्नि । वृक्कौ[6] । अतिष्ठिपम् ॥ १ ॥

सदने । सीदन्ति अत्रेति सदनम् । अधिकरणे ल्युट् । यथा गावः गोष्ठे असदन् सीदन्ति निषीदन्ति । "सदेश्छान्दसे लुङि लृदित्त्वात् च्लेः अङ् आदेशः"[7] । यथा च वयः पक्षी वसतिम् स्वकीयं नीडम् अपप्तत् पतति गच्छति । प्रविशतीत्यर्थः । पतेर्लुङि पूर्ववत् अङ् । 'पतः पुम्' (पा ७,४,१९) इति पुम् आगमः । यथा च पर्वताः गिरयः स्थाने[8] स्वकीये आस्थुः[8] आतिष्ठन्ति । तिष्ठतेर्लुङि 'गातिस्था' (पा २,४,७७) इति सिचो लुक् । 'आतः' (पा ३,४,११०) इति झेर्जुस् । यथा गवादिकाः स्वेस्वे सदने सुखेन निवसन्ति तथा स्थाम्नि । तिष्ठन्ति अत्रेति स्थाम गृहम् । तिष्ठतेः अधिकरणे मनिन्प्रत्ययः । शत्रोर्गृहे वृकौ[9] वृकश्च 'वृकी च एतौ'[6] । 'पुमान्स्त्रिया' (पा १,२,६७) इति पुंस एकशेषः । दम्पतिभूतौ वृकौ अतिष्ठिपम् स्थापयामि निदधामि । शत्रुगृहं वृकावासस्थानं करोमि । आगन्तुकवृकप्रवेशाशङ्कानिरासाय वृकाविति स्त्रीपुंसौ निर्दिष्टौ । यथा वृकः स्त्रीपुत्रादिभिः शत्रोर्गृहे वर्तते तथा करोमीति । अनेन शत्रुं निःशेषं हत्वा तद्गृहम् अरण्यं करोमीत्यर्थं उक्तो भवति ।

---

१. असदन् पै २०,३३,४. २. °दनमप° पै. ३. अस्थु A.RW. ४. वृकावं° D.E°; वृक्कावं° O. ५. अपतत् P; अपप्तत् P°. ६. वृक्कौ Bp°. ७. सदेर्छ°न्दसे लुङि च्लेरङादेशः S'. ८. वेतु. मैरा. ९. वृकावर्तते S'.

यद॒द्य[1] त्वा॑ प्रय॒ति[2] य॒ज्ञे [3]अ॒स्मिन् होत॑श्चिकित्व॒न्नवृ॑णीमही॒ह[3] ।
[4]ध्रु॒वम॑यो ध्रु॒वमु॒ता श॑विष्ठ[4] [5]प्रवि॒द्वान् य॒ज्ञमुप॑[5] याहि॒ सोम॑म्[6] ॥ १ ॥

यत् । अ॒द्य । त्वा॒ । प्र॒ऽय॒ति[7] । य॒ज्ञे । अ॒स्मिन् । होत॒रिति॑ । चि॒कि॒त्वन् । अवृ॑णीमहि । इ॒ह ।
ध्रु॒वम् । अयः॑ । ध्रु॒वम् । उ॒त । श॒वि॒ष्ठ॒ । प्र॒ऽवि॒द्वान् । य॒ज्ञम् । उप॑ । या॒हि॒ । सोम॑म् ॥ १ ॥

हे होतः देवानाम् आह्वातः यष्टर्वा । ह्वयतेर्जुहोतेर्वा रूपम् एतत् । हे चिकित्वन् ज्ञानवन् । कित ज्ञाने । अस्माद् यङ्लुगन्तात् मतुप्[8] । अभ्यासस्य गुणाभावश्छान्दसः । 'नामन्त्रिते समानाधिकरणे' (पा ८,१,७३) इति पूर्वामन्त्रितस्य अविद्यमानवत्त्वनिषेधेन पदात् परत्वात् सर्वानुदात्तत्वम् । एवंगुणक हे अग्ने त्वा त्वाम् अद्य इदानीं प्रयति प्रवर्तमाने । विच्छेदेन विना क्रियमाण इत्यर्थः । अस्मिन् यज्ञे इह अस्मिन् प्रयोजने यत् यस्माद् अवृणीमहि होतृत्वेन वयं वृतवन्तः । वृङ् संभक्तौ । क्र्यादित्वात् श्नाप्रत्ययः । यद्वृत्तयोगाद् अनिघातः । प्रयतीति । प्रपूर्वाद् एतेः शतरि यणादेशः । 'शतुरनुमो नद्यजादी' (पा ६,१,१७३) इति सप्तम्या उदात्तत्वम् । यस्माद् वयं होतृत्वेन त्वां वृतवन्तः तस्माद् ध्रुवम् सर्वथा अयः अयाक्षीः यज । यष्टव्यान् देवान् इति शेषः । 'ऋधगयाड्ढ्यगुताशमिष्ठाः' (तै १,४,४४,२) इति तैत्तिरीयश्रुतेः । यजतेः 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति लङि छान्दसी रूपसिद्धिः । उत अपि च ध्रुवम् अशमिष्ठाः[6] शमय । कर्मणो वैगुण्यम् इति शेषः । किं च प्रविद्वान् प्रकर्षेण जानन् सोमम् सोमवन्तं यज्ञम् उप याहि समीपम् आगच्छ । यद्वा यज्ञं प्रविद्वान् अस्मदभिमतफलोपायत्वेन प्रजानन् सोमम् अस्माभिर्दीयमानं हविः उप याहि उपगच्छेति । अथ वा यत् यस्मात् त्वां वृतवन्तः तस्माद् यज्ञम् उप याहि । आगत्य च ध्रुवम् अयाक्षीः यष्टव्यान् देवान् । ध्रुवम् अशमिष्ठाः यज्ञं संस्थापितवान् असीति । भूतार्थे एव लुङ्प्रत्ययः ।

समि॑न्द्र नो॒[9] मन॑सा[10] नेष[11] गोभि॒ः सं [12]सू॒रिभि॑र्हरिव॒न्त्सं[12] स्व॒स्त्या[13] ।
सं ब्रह्म॑णा[14] दे॒वहि॑तं॒[15] यदस्ति॒ सं दे॒वानां॑ सुम॒तौ[16] य॒ज्ञिया॑नाम् ॥ २ ॥

---

१. व॒यं हि मा ८,२०. २. °युती Bb,K,P,J ३. 'कि॒त्वोऽवृ॑णी' ऋ ३,२९,१६; अ॒स्मिन्न॑ग्ने॒ होता॑र॒मवृ॑° मा. तै १,४,४४,२ मै १,३,३८ काठ ४,१२. ४. ध्रु॒वम॑या ध्रु॒वमु॒ताश॑मिष्ठाः ऋ.; ऋधंगया॒ड् (°या ऋ° मा.) धंगु॒ताश॑मिष्ठाः (°ष्ठ मै. °ष्ट काठ.) मा. तै. मै. काठ. ५. प्र॒जा॒नन् वि॒द्वाँ (°द्वान् पै.) उप॑ ऋ. पै २०,३३,९; प्र॒जा॒नन् य॒ज्ञमुप॑ मा. तै.; वि॒द्वाँन् प्र॒जान॒न्नुप॑ मै. काठ. ६. वि॒द्वान् मा. तै.; य॒ज्ञम् मै. काठ. ७. वेप १,१११२ं द्र. ८. वेतु. मंरा. ९. णो R,S, ऋ ५,४२,४ मा ८,१५ तै १,४,४४,१ पै २०,३३,१० तैब्रा २,८,२,६. १०. मेधसा पै. ११. नेषि ऋ. मा. तै. मै, काठ. पै. तैब्रा. १२. ह॑रिवः सं (°वस्सं काठ.) ऋ. मै. काठ. सा.; °मघवन्त्सं मा. तै. तैब्रा. १३. स्व॒स्त्यां K; स्व॒स्ति ऋ. १४. तु. A. ऋ. प्रनृ.; वैतु. B,Bb,D,K,Km,R,Sm,V,Cs मह्मणां. १५. दे॒वकृ॑तं मा. तै. मै. काठ. पै. तैब्रा. १६. सुम॒त्या ऋ. तै. काठ. पै. तैब्रा.

सम् । इन्द्र । नः । मनसा । नेष । गोभिः । सम् । सूरिऽभिः । हरिऽवन् । सम् । स्वस्त्या ।
सम् । ब्रह्मणा[1] । देवऽहितम् । यत् । अस्ति । सम् । देवानाम् । सुऽमतौ । यज्ञियानाम् ॥ २ ॥

हे इन्द्र नः अस्मान् मनसा गोभिः शब्दैः स्तुतिलक्षणैश्च सं नेष संनय संयोजय । मनस्विनो वाग्मिनश्च कुरु । त्वां स्तोतुम् इत्यर्थः । यद्वा गोभिः पशुभिः संनय । नयतेर्लोटि शप् । 'सिब्बहुलम्°' (पा ३,१,३४) इति सिप् । 'अतो हेः' (पा ६,४,१०५) इति हेर्लोपः । किं च हे हरिवः[2] । हरिसंज्ञकौ अश्वौ । 'हरी इन्द्रस्य' (निघ १,१५) इति यास्कवचनात् । तद्वन् हे इन्द्र सूरिभिः विद्वद्भिः सम् । नयेति क्रियानुषङ्गः । स्वस्त्या अविनाशेन सं नय । किं च ब्रह्मणा वेदेन वेदार्थज्ञानेन तदर्थानुष्ठानेन वा सं नय । यत् च देवहितम् देवेभ्यो हितम् अस्ति अग्निहोत्रादि कर्म तेनापि संनय । 'के च' (पा ६,२,४५) इति चतुर्थ्यन्तपूर्वपदप्रकृतिस्वरत्वम् । तथा यज्ञियानाम् यज्ञार्हाणां देवानाम् अग्न्यादीनां सुमतौ शोभनायां बुद्धौ अनुग्रहात्मिकायां सं नय अस्मान् । सुमतौ इति । 'मन्त्रे वृषेष°' (पा ३,३,९६) इति क्तिन उदात्तत्वम् । 'मन्क्तिन्व्याख्यान°' (पा ६,२,१५१) इति उत्तरपदान्तोदात्तत्वम् ॥

इति नवमेऽनुवाके प्रथमं सूक्तम् ।

दर्शपूर्णमासयोः संस्थितहोमेषु 'यान् आवहः' इत्यादीनां षण्णाम् ऋचाम् 'यदद्य त्वा प्रयति' इत्यत्र विनियोग उक्तः ।

तथा श्रौतदर्शपूर्णमासयोः 'यान् आवहः' इति षड्ऋचेन संस्थितहोमान् जुहुयात् । उक्तं वैताने — " 'यानावहः' इति षड्भिः (३-८) संस्थितहोमाञ्जुहोति 'मनसस्ते' (८) इत्यासाम् उत्तमा" ( वैताश्रौ ४,१३ ) इति ।

दर्शपूर्णमासयोः प्रह्रियमाणप्रस्तरानुमन्त्रणं 'सं बर्हिरक्तम्' इत्यनया ब्रह्मा कुर्यात् । " 'सं बर्हिरक्तम्' (अ ७,१०३) इति प्रस्तरं प्रह्रियमाणम्" ( वैताश्रौ ४,६ ) इति ।

स्मार्तदर्शपूर्णमासयोः 'सं बर्हिरक्तम्' इत्यनया बर्हिःप्रहरणं कुर्यात् । 'बर्हिराज्यशेषेणानक्ति' इति प्रकृत्य सूत्रितम् — " 'सं बर्हिरक्तम्' इत्यनुप्रहरति" ( कौसू ६,७ ) इति ।

श्रौतदर्शपूर्णमासयोः वेदिं परिस्तृणन्तमध्वर्युम् 'परि स्तृणीहि' इत्यनया ब्रह्मा अनुमन्त्रयेत । " 'परि स्तृणीहि' इति वेदिं परिस्तृणन्तम्" ( वैताश्रौ २,७ ) इति वैतानसूत्रात् ।

दुःस्वप्नदर्शननिमित्तदोषपरिहारार्थम् 'पर्यावर्ते' (अ ७,१०५) इति ऋचं जपन् पर्यावर्तेत ।

स्वप्ने अन्नभक्षणनिमित्तदोषपरिहारार्थं 'यत् स्वप्ने' (अ ७,१०६) इति ऋचं जपेत् । सूत्रितं हि — " 'पर्यावर्ते' इति पर्यावर्तते । 'यत्स्वप्ने' इत्यदनात्यवेक्षते"[3] (कौसू ४६,११;१२) इति ।

स्वस्त्ययनार्थं 'नमस्कृत्य' इत्यनया मान्त्रवर्णिकीभ्यो देवताभ्यो नमस्कारम् उपस्थानं वा कुर्यात् । " 'नमस्कृत्य' (अ ७,१०७) इति मन्त्रोक्तम्" (कौसू ५२,१५) इति हि सूत्रम् ।

---

१. तु. मश.; वैतु. P,P[2]J,Cp ब्रह्मणाम्. २. वैतु. मंपा. ३. इत्यशित्वा पीअवे Bl.

यानावह[1] उशतो देव देवांस्तान् प्रेरय स्वे अग्ने सधस्थे ।
[2]जक्षिवांसः पपिवांसो मधून्यस्मै[3] धत्त वसवो वसूनि[4] ॥ ३ ॥

यान् । आऽअवहः । उशतः । देव । देवान् । तान् । प्र । ईरय । स्वे । अग्ने । सधऽस्थे ।
जक्षिऽवांसः । पपिऽवांसः । मधूनि । अस्मै[3] । धत्त । वसवः । वसूनि ॥ ३ ॥

हे देव दीप्यमान हे अग्ने त्वम् उशतः हवींषि कामयमानान् यान् देवान् आवहः आवाहितवान् आहूतवान् असि । वहेर्लङि यद्वृत्तयोगाद् अनिघातः । उशत इति । वशेः शतरि अदादित्वात् शपो लुक् । 'ग्रहिज्या' (पा ६,१,१६) इत्यादिना संप्रसारणम् । 'शतुरनुमो नद्यजादी' (पा ६,१,१७३) इति शसः उदात्तत्वम् । तान् आहूतान् देवान् स्वे स्वकीये सधस्थे सहस्थाने यत्र ते सह तिष्ठन्ति तत्र प्रेरय प्रस्थापय । 'सुपि स्थः' (पा ३,२,४) इति तिष्ठतेः अधिकरणार्थेऽपि को द्रष्टव्यः । 'सध मादस्थयोः०' (पा ६,३,९६) इति सहस्य सधादेशः । ते देवाः संबोध्यन्ते[4] । जक्षिवांसः[8] पुरोडाशादीन् भक्षितवन्तः मधूनि मधुररसोपेतानि आज्यादीनि पपिवांसः[8] पीतवन्तः हे वसवः लोकानां वासयितारः यूयं वसूनि धनानि अस्मै यजमानाय धत्त । प्रयच्छतेत्यर्थः । जक्षिवांस इति । लिडादेशे क्वसौ 'लिट्यन्यतरस्याम्' (पा २,४,४०) इति अदेर्घस्लादेशः । 'गमहन०' (पा ६,४,९८) इति उपधालोपः । पपिवांस इत्यत्रापि लिटः क्वसुः । उभयत्र 'वस्वेकाजाद्घसाम्' (पा ७,२,६७) इति इडागमः । वसव इति । 'आमन्त्रितस्य च' (पा ८,१,१९) इति आष्टमिकं सर्वानुदात्तत्वम् ।

सुगा[5] वो देवाः [6]सदना अकर्म[6] य [7]आजग्म सवने मा[7] जुषाणाः ।
[8]वहमाना भरमाणाः† स्वा वसूनि वसुं घर्मं दिवमा रोहतानु[8] ॥ ४ ॥

सुऽगा । वः । देवाः । सदना[9] । अकर्म । ये । आऽजग्म । सवने । मा । जुषाणाः ।
वहमानाः । भरमाणाः† । स्वा । वसूनि । वसुम् । घर्मम् । दिवम् । आ । रोहत । अनु ॥४॥

---

१. याँ२ आवह मा ८,१९.   २. °संभ्च विश्वेऽसुं घर्मं स्वरातिष्ठतानु मा.; वहमाना भरमाणा हवींषि वसु (हवींष्यसुं मै. काठ.) घर्मं दिवमा तिष्ठतानु तै १,४,४४,२ मै १,३,३८ काठ ४,१२.   ३. अस्मै P.   ४. वैतु. मंपा.   ५. स्वगा तै.   ६. सदनमकर्म तै. नि १२,४२; सदना कृणोमि मै. पै २०,१२,२; सदनेदमस्तु काठ.; सदनानि सन्तु काश्री २,२,१० कौपू १२७,११.   ७. आजग्म सवनेदं तै. काठ.; आजग्मेदं सवनं मा ८,१८ मै.; आचष्टेदं सवनं पै.; आजग्मुः सवनमिदं नि.; 'सत्रनेमा S'.   ८. जक्षिवांसः (यक्षिवांसः मै.) पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि तै. श्रसू.; वहमाना भरमाणा दध ? वसुं (भरमाणा वहमाना हवींष्यस्मे मा.) घर्मं वसुदानिष्ठतानु पै.   †. तु. P³ Cp, वैतु. अन्ये मूको. (तु.शंपा. WM.) विसर्गाभावाः.
९. सदनाः Bp².

हे देवाः वः युष्माकं सदना सदनानि स्थानानि सुगा सुगानि सुगमनानि सुखेन गन्तव्यानि अकर्म अकार्ष्म । सुपूर्वाद् गमेः 'सुदुरोरधिकरणे' ( पावा ३,२,४८ ) इति डः । अत्र सदनेत्यत्रापि 'शेश्छन्दसि बहुलम्' ( पा ६,१,७० ) इति शेर्लोपः । अकर्मेति। करोतेः 'मन्त्रे घस°' (पा २,४,८०) इति च्लेर्लुक् । 'छन्दस्युभयथा' (पा ३,४,११७) इति तिङ आर्धधातुकत्वेन ङित्त्वाभावाद् गुणः । देवा विशेष्यन्ते — जुषाणाः हवींषि सेवमानाः तैः प्रीयमाणा वा ये यूयम् इमा इमानि सवना सवनानि आजग्म आगताः स्थ । गमेर्लिटि मध्यमबहुवचने 'गमहन' ( पा ६,४,९८ ) इति उपधालोपः । यतः युष्मदर्थं सदनानि अकार्ष्म अतः यूयं स्वा स्वानि स्वकीयानि वसूनि धनानि वहमानाः प्रापयन्तः अस्मान् । तथा भरमाणाः पोषयन्तः अस्मदर्थं धनानि हस्तैः धारयन्तो वा वसुम् सर्वस्य लोकस्य वासयितारं घर्मम् आदित्यम् आ रोहत आतिष्ठत । अनु अनन्तरं दिवम् द्युलोकम् आ रोहत आतिष्ठत । रुह बीजजन्मनि प्रादुर्भावे च । अस्मभ्यं धनानि दत्त्वा स्वीयं स्थानं गच्छतेत्यर्थः ।

यज्ञं य॒ज्ञं ग॑च्छ य॒ज्ञप॑तिं गच्छ । स्वां योनिं॑ गच्छ॒ स्वाहा॑ ॥ ५ ॥

यज्ञं । य॒ज्ञम् । ग॒च्छ॒ । य॒ज्ञऽप॑तिम् । ग॒च्छ॒ । स्वाम् । योनि॑म् । ग॒च्छ॒ । स्वाहा॑ ॥ ५ ॥

हे यज्ञ त्वं यज्ञम् यष्टव्यं परमात्मानं विष्णुं गच्छ येन त्वं प्रतिष्ठितो भवेः । अनन्तरं यज्ञपतिम् यज्ञस्य पालयितारं यजमानं गच्छ फलप्रदानेन प्राप्नुहि । 'पत्यावैश्वर्ये' ( पा ६,२,१८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । अनन्तरं स्वाम् आत्मीयां योनिं गच्छ । योनिः कारणम् सर्वजगत्कारणभूता पारमेश्वरी शक्तिः । तां प्राप्नुहि । स्वाहा स्वाहुतम् इदम् आज्यं तवास्त्विति ।

ए॒ष ते॑ य॒ज्ञो 'य॑ज्ञपते स॒हसू॑क्तवाकः[1] । सु॒वीर्यः॑[2] स्वाहा॑ ॥ ६ ॥

ए॒षः । ते॒ । य॒ज्ञः । य॒ज्ञ॒ऽप॒ते॒ । स॒हऽसू॑क्तवाकः । सु॒ऽवीर्यः॑ । स्वाहा॑ ॥ ६ ॥

हे यज्ञपते यजमान एष यज्ञः सहसूक्तवाकः । सूक्तं वक्तीति सूक्तवाकः यथाक्रमं यष्टव्यदेवतानामकीर्तनपरः प्रैषः । तत्सहित एष यज्ञः । अथ वा सूक्तवचनसहितः विविधस्तोत्रकः सुवीर्यः सुबलः शोभनपुत्रपौत्रादिकर्मयुक्तो वा ते तव । श्रेयसे कल्पताम् इत्यर्थः । स्वाहा स्वाहुतम् इदम् आज्यम् अग्नयेऽस्तु ।

'वष॑ड्ढुतेभ्यो॒ वष॒डहु॑तेभ्यः[3] । देवा॑ गातुविदो गा॒तुं वि॒त्त्वा[4] गा॒तुमि॑त ॥७॥

वष॑ट् । हु॒तेभ्यः॑ । वष॑ट् । अहु॑तेभ्यः । देवाः॑ । गा॒तु॒ऽवि॒दः॒ । गा॒तुम् । वि॒त्त्वा । गा॒तुम् । इ॒त॒ ॥ ७ ॥

हुतेभ्यः इष्टेभ्यो देवेभ्यः वषट् । प्रदानवाची वषट्शब्दः । इदम् आज्यं हुतम् अस्तु । अहुतेभ्यः पूर्वम् अनिष्टेभ्यो देवेभ्यो वषट् इदम् आज्यं वषट्

---

१. यजमान सहसूक्तो नमोवाकः पै २०,३४,६. २. सर्ववीरः मा ८,२२; सुवीरः मै १,४,४४,२ मै १,३,३८ काठ ४,१२ पै. ३. स्वाहाहुतेभ्यो वषड्ढुतेभ्यः पै २०,३४,८. ४. ज्ञात्वा पै.

हुतम् अस्तु । अस्य संस्थितहोमत्वात् पूर्वं हविःप्रदानेन प्रीणिता अपि देवा हूयन्ते किल किमुत पूर्वम् अहुता देवा इत्युभयत्र. वषट्कारप्रयोगः । 'नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च' (पा २,३,१६) इति हुताहुतशब्दाभ्यां चतुर्थी । हे गातुविदः गातुर्मार्गस्तं जानाना हे देवाः यूयम् । 'विभाषितं विशेषवचने बहुवचनम्' (पा ८,१,७४) इति पूर्वस्यामन्त्रितस्य अविद्यमानत्वनिषेधाद् द्वितीयस्य निघातः। गातुम् मार्गं वित्वा लब्ध्वा अस्मदीयं यज्ञं प्रति आगमनकाले येन मार्गेण आगतास्तमेव मार्गं लब्ध्वा गातुम् इत समाप्ते कर्मणि पुनः स्वकीयगृहगमनाय 'तमेव मार्गं तेनैव मार्गेण'[1] प्रतिनिवर्तध्वम् । वित्वेति । विदेर्लाभार्थात् क्त्वाप्रत्यये 'एकाचः'' (पा ७,२,१०) इति इट्प्रतिषेधः। ज्ञानार्थात् तु निषेधाभावाद् इड् भवत्येव । तस्मादेव वा 'अनित्यमागमशासनम्' इति इडभावः । गातुं वित्त्वा विदित्वा ज्ञात्वेति तत्रार्थः। इतेति । इण् गतौ । लोटि मध्यमबहुवचने अदादित्वात् शपो लुक् ।

[2]मन॑सस्पत इ॒मं नो॑ दि॒वि दे॒वेषु॑ य॒ज्ञम् ।
स्वाहा॑ दि॒वि स्वाहा॑ पृथि॒व्यां स्वाहा॒ऽन्तरि॑क्षे॒ स्वाहा॒ वाते॒ धां॒ स्वाहा॑ ॥८॥

मन॑सः । प॒ते॒ । इ॒मम् । न॒: । दि॒वि । दे॒वेषु॑ । य॒ज्ञम् ।
स्वाहा॑ । दि॒वि । स्वाहा॑ । पृ॒थि॒व्याम् । स्वाहा॑ । अ॒न्तरि॑क्षे । स्वाहा॑ । वाते॑ । धा॒म् । स्वाहा॑ ॥ ८ ॥

हे मनसस्पते सर्वभूतानाम् अन्तरात्मतया मनसोऽपि पते हे देव । 'सुबामन्त्रिते पराङ्गवत् स्वरे' (पा २,१,२) इति मनस इति शब्दस्य आमन्त्रितानुप्रवेशाद् मनसस्पत इति [3]षष्ठ्यामन्त्रितसमुदायस्य 'आमन्त्रितस्य च' (पा ६,१,१९८) इति षाष्ठिकम् आद्युदात्तत्वम् । नः अस्मदीयम् इमं यज्ञं दिवि द्युलोके वर्तमानेषु देवेषु अग्न्यादिषु धाम्। पुरुषव्यत्ययः। धाः धेहि स्थापय। इति स्वाहा सरस्वती। अब्रवीद् इत्यर्थः। मन्त्रमध्यवर्तिनां स्वाहाशब्दानां प्रदानार्थत्वाभावात् । वस्तुतश्च स्वाहाशब्दस्य वाक्कर्तृकवचनरूपेऽर्थे निरुक्तत्वात् स्वा स्वकीया प्रजापतिसंबन्धिनी वाग् आह अब्रवीत् इति स्वाहाशब्दस्य अर्थ उक्तः । तथा च तैत्तिरीयके—वाक्प्रजापत्योरुक्तिप्रत्युक्तिरूपं वाक्यम् एवं श्रूयते—'तं वाग् अभ्यवदज्जुहुधीति । [4]'सोऽब्रवीत् कस्त्वमसीति' । स्वैव ते वाग् इत्यब्रवीत् । सोऽजुहोत् स्वाहेति तत् स्वाहाकारस्य जन्म' (तैब्रा २,१,२,३) इति । एवम् उत्तरे त्रयः स्वाहाशब्दा व्याख्येयाः । अनन्तरं द्युपृथिव्यन्तरिक्षलोकेषु अस्मदीयं यज्ञं धाः स्थापयेति सर-

१. तव मार्गं मार्गता तवैव S'. २. मनस्पत इमं देव यज्ञं स्वाहा वाते धाः मा ८, २१; मनसस्पत इमं नो देव देवेषु यज्ञं स्वाहा वाचि स्वाहा वाते धाः तै १,४,४४,२; मनसस्पते सुधातिवमं यज्ञं दिवि देवेषु वाते धा स्वाहा मै १,३,३८; मनसस्पत इमं देवयज्ञं स्वाहा वाचि स्वाहा वाते धा स्वाहा पै २०,३४,७. ३. समुदायषष्ठ्या' S'. ४. कस्त्वमित्यब्रवीत् S''

स्वत्याहेति। ततः इमम् अस्मदीयं यज्ञं वाते सर्वकर्माधारे धाः स्थापय। यस्माद् अयं यज्ञः[1] प्रयुक्तः तत्रैव वाते स्थापय। 'वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते' (तैब्रा ३,३,९,११) इति श्रुतेः, 'मनसस्पतिना देवेन वातायज्ञः[2] प्रयुज्यताम्' (तैब्रा ३,७,४,१) इति च। स्वाहा इदम् आज्यं स्वाहुतम् अस्तु इति अन्तिमस्वाहाशब्दस्य प्रदानार्थता। दिवीति। 'ऊडिदम्°' (पा ६,१,१७१) इति सप्तम्या उदात्तत्वम्। पृथिव्याम् इति। 'उदात्तयणो हल्पूर्वात्' (पा ६,१,१७४) इति विभक्तेरुदात्तत्वम्। धाम् इति। दधातेः लेटि 'बहुलं छन्दसि' (पा २,४,७३) इति शपो लुक्। 'तिङां तिङो भवन्ति' (पावा ७,१,३९) इति सिपो मिबादेशः। 'इतश्च लोपः परस्मैपदेषु' (पा ३,४,९७) इति इकारलोपः।

सं बर्हिर॒क्तं[3] ह॒विषा॑ घृ॒तेन॒ समि॑न्द्रेण[4] वसु॑ना[5] सं म॒रुद्भिः॑ ।
[6]सं दे॒वैर्विश्वदे॑वेभिर॒क्तमिन्द्रं॑ †गच्छतु ह॒विः‡ स्वाहा॑[6] ॥ १ ॥

सम्। ब॒र्हिः। अ॒क्तम्। ह॒विषा॑। घृ॒तेन॑। सम्। इन्द्रे॑ण। वसु॑ना। सम्। म॒रुत्ऽभिः॑। सम्। दे॒वैः। वि॒श्वऽदे॑वेभिः। अ॒क्तम्। इन्द्र॑म्। ग॒च्छ॒तु॒। ह॒विः। स्वाहा॑ ॥ १ ॥

बर्हिः स्रुगाद्यासादनस्थानभूतं हविषा पुरोडाशादिना घृतेन आज्येन च समक्तम् सम्यग् अभ्यक्तम् अभूत्। अञ्जू व्यक्तिम्रक्षणादिषु। कर्मणि निष्ठा। तथा वसुना वासकेन वस्वाख्यदेवसहितेन वा इन्द्रेण सम्। अक्तम् इत्यनुषङ्गः। मरुद्भिः च सम् अक्तम्। तथा विश्वदेवेभिः विश्वदेवैः एतत्संज्ञकैः [7]देवैः गणदेवैः सम् अक्तम् अभूत्। तादृशं सर्वदेवाधिष्ठितं हविरासादनाधारभूतं बर्हिः[8] इन्द्रम् सर्वदेवप्रमुखं गच्छतु प्राप्नोतु। स्वाहा इदं बर्हिः स्वाहुतम् अस्तु।

परि॑ स्तृणीहि॒ परि॑ धेहि॒ वेदिं॒ मा जा॒मिं [10]मोषीरमु॒या शया॑नाम्[10] ।
[11]हो॒तृ॒षद॑नं॒ हरि॑तं हिर॒ण्ययं॒ नि॒ष्का ए॒ते यज॑मानस्य लो॒के[11] ॥१॥

परि॑। स्तृ॒णी॒हि॒। परि॑। धे॒हि॒। वेदि॑म्। मा। जा॒मिम्। मो॒षीः। अ॒मु॒या। शया॑नाम्। हो॒तृ॒ऽसद॑नम्। हरि॑तम्। हि॒र॒ण्यय॑म्। नि॒ष्काः। ए॒ते। यज॑मानस्य। लो॒के ॥ १ ॥

अत्र आस्तीर्यमाणो दर्भस्तम्बः संबोध्यते। हे दर्भस्तम्ब परि स्तृणीहि वेदिं परित आस्तीर्णो भव आच्छादय वा। स्तृञ् आच्छादने। क्र्यादिः। एतदेवाह—

---

१. यज्ञं S'. २. स्थातायज्ञं S'. ३. °रङ्क्तां मा २,२२; समङ्क्तां बर्हिर तैब्रा ३,७,५,१०. ४. समादित्यैर् मा. तैब्रा. ५. वसुभिः मा. पै २०,२४,१ तैब्रा. ६. समिन्द्रो (°न्द्रेण तैब्रा.) विश्वदेवेभि(विश्वेभिर्देवेभि° तैब्रा.)रङ्क्तां दिव्यं नभो गच्छतु यत् स्वाहा मा. तैब्रा. † देवेभिर्वि° पै. ‡ गच्छति यत् पै. ७. देवगणदेवैः S'. ८. बर्हि. मग. ९. अभि तैब्रा ३,७,५,११ आपश्रौ ३,११,५. १०. हिंसीरमुया शयाना तैब्रा. आश्रौ. ११. होतृषदना हरिताः सुवर्णाः। निष्का इमे यजमानस्य ब्रध्ने तैब्रा. आपश्रौ.

वेदिं परि धेहि वेदिम् आच्छादय । अमुया अनया वेद्या सह शयानाम् तिष्ठन्तीम्। वेद्या यजमानसंमितत्वात् तत्समानाकृतित्वं यजमानस्यास्तीति शयानाम् इत्युक्तम्। शीङः शानच्। लसार्वधातुकानुदात्तत्वे धातुस्वरः । अथ वा सप्तम्या याजादेशः। अमुष्यां वेद्याम्। विषयसप्तमी। वेदिविषये शयानाम्। परिचरन्तीम् इत्यर्थः। यद्वा द्वितीयाया याजादेशः । अमूं वेदिं शयानाम् । उपवसन्तीम् इत्यर्थः । जामिम्। जायत इति जामिः प्रजा। तां बन्धुभूतां यजमानं मा मोषीः। मा हिंसीरित्यर्थः। मुष स्तेये। 'माङि लुङ्' (पा ३,३,१७५)। कीदृशो दर्भः संबोधितः तं दर्शयति— होतृषदनम् । होता सीदति अत्रेति अधिकरणे ल्युट्। दर्भरूपवस्त्वपेक्षया नपुंसकत्वम् । दर्भकदम्बकापेक्षया वा । हरितम् हरिद्वर्णं हिरण्ययम् हिरण्मयं शोभनवर्णं हितरमणीयं वा एतादृशम् हे दर्भरूप वस्तु। त्वं परि स्तृणीहीति पूर्वत्र संबन्धः। अथ परोक्षकृतश्चरमः पादः । एते आस्तीर्यमाणा दर्भाः यजमानस्य लोके पुण्यभोगस्थाने निष्काः सुवर्णमया अलंकारा भवन्तु।

पर्यावर्ते 'दुष्वप्न्यात् पापात् स्वप्न्यादभूत्याः[१] ।
ब्रह्माहमन्तरं कृण्वे[२] परा[३] स्वप्नमुखाः[४] शुचः[५] ॥ १ ॥

परिऽआवर्ते । दुःऽस्वप्न्यात् । पापात् । स्वप्न्यात् । अभूत्याः ।
ब्रह्म । अहम् । अन्तरम् । कृण्वे । परा[†] । स्वप्नऽमुखाः । शुचः ॥ १ ॥

दुष्वप्न्यात् दुष्टस्वप्नप्रभवात् पापात् पर्यावर्ते प्रतिनिवृत्तो भवामि । अपसरामीत्यर्थः। वृतु वर्तने। लटि उत्तमे रूपम्। तथा स्वप्न्यात्[६]। पापाद् इति अनुषज्यते। तथा दुष्टात् स्वप्नात्। जनिताया इति शेषः । अभूत्याः असंपदः अश्रेयसः। पर्यावर्त इति संबन्धः। किं च अहं ब्रह्म मन्त्रम् अन्तरम् दुःस्वप्ननिवारकं व्यवधायकं[७] कृण्वे कुर्वे । यथा दुःस्वप्नजनितं दुरितं मां न प्राप्नोति तथा तन्निर्हरणसमर्थं मन्त्रसंघं कवचं करोमीत्यर्थः। तेन व्यवधिकरणेन स्वप्नमुखाः। मुखशब्द उपाये वर्तते। स्वप्नद्वारिकाः दुःस्वप्ननिबन्धनाः शुचः शोकाः परा । भवन्तु इति क्रियाध्याहारः।

'यत् स्वप्ने अन्नमश्नामि[‡] न प्रातरधिगम्यते ।
सर्वं तदस्तु मे[†] शिवं नहि तद् दृश्यते[*] दिवा[८] ॥१॥

१. दुःस्वप्नात् पापः स्वप्नादभूत्यं काश्री २५,११,२१. † स्वप्नाद॰ पै २०,३५,४ [मूको.] सा. २. करवे काश्री. ३. पराः B,B[b].K,K[m],R,S[m]; पर काश्री. ४. 'मुखा पै. काश्री. ५. सुचे पै.; कृधि काश्री. ६. वैद्रु. मंपा. ७. 'धारकं S'. ८. यदन्नमद्म्यनृतेन (सायं हिर.) न तत् प्रात. क्षुधोऽजति (भवति क्षुधः हिर.) सर्वं तस्मान्मा हिंसीद् (हिंसीन् हिर.) नहि तद् ददृशे दिवा (तद् दिवा ददृशे दिवः हिर.) आश्री १०,११,११ हिर १,१७,४. ‡ 'मश्नन्मि पै २०,३५,५. † नः पै. * ददृशे पै.

यत् । स्वप्ने । अन्नम् । अश्नामि । न । प्रातः । अधिऽगम्यते ।
सर्वम् । तत् । अस्तु । मे । शिवम् । नहि । तत् । दृश्यते । दिवा ॥ १ ॥

यद् अन्नं स्वप्ने अश्नामि भक्षयामि । अश भोजने । क्र्यादिः । तद् अन्नं प्रातर्नाधिगम्यते न दृश्यते । हि[1] यस्मात् तद् अन्नं दिवा अहनि न[1] दृश्यते अतः तत् स्वप्ने अन्नभोजनं सर्वम् अन्नभोजनसदृशम् अखाद्यभक्षणादिकं मे मम शिवम् मङ्गलकारि अस्तु भवतु । स्वप्ने अन्नभोजनेन यद् अरिष्टं भवति तद् अनेन मन्त्रजपेन शाम्यतु प्रत्युत कल्याणकारि भवत्वित्यर्थः ।

नमस्कृत्य द्यावापृथिवीभ्यामन्तरिक्षाय मृत्यवे ।
मेक्षाम्यूर्ध्वस्तिष्ठन्[2] मा मां हिंसिषुरीश्वराः ॥ १ ॥

नमःऽकृत्य । द्यावापृथिवीभ्याम् । अन्तरिक्षाय । मृत्यवे ।
मेक्षामि । ऊर्ध्वः । तिष्ठन्[3] । मा । मा । हिंसिषुः । ईश्वराः ॥ १ ॥

द्यावापृथिव्यादिभ्यो नमस्कृत्य नमस्कारं कृत्वा तिष्ठन् आसीनोऽहम् ऊर्ध्वः ऊर्ध्ववत् ऊर्ध्वमुखो मैष्यामि[1] । ऊर्ध्वलोकं मा गमिष्यामीत्यर्थः । यद्वा नमस्कारेण ऊर्ध्वो मा गमिष्यामि । किं तु तिष्ठन् इह लोके चिरकालावस्थायी । भवामीति शेषः । मैष्यामीति । 'अमानोनाः (१°नोनाः) प्रतिषेधे' इति प्रतिषेधवाचिनो मा इति निपातस्य ग्रहणं न तु ङितो माशब्दस्य । यदि माङस्तर्हि 'माङि लुङ्' (पा ३,३,१७५) स्यात् । तस्य सर्वलकाराणाम् अपवादत्वात् । एतेर्लृट् । 'स्यतासी' (पा ३,१,३३) इति स्यः । ईश्वराः स्वामिनः द्युपृथिव्यन्तरिक्षदेवता अग्निवायुसूर्या मृत्युश्च मा मां मा हिंसिषुः मा वधिषुः । चिरकालम् इह लोके माम् अवस्थापयन्तु इत्यर्थः ।

इति नवमेऽनुवाके द्वितीयं सूक्तम् ।

इति माधवीये अथर्वसंहिताभाष्ये वेदार्थप्रकाशे सप्तमकाण्डे नवमोऽनुवाकः ।

दशमेऽनुवाके त्रीणि सूक्तानि । तत्र 'को अस्या नः' इति आद्ये सूक्ते आद्याभ्याम् ऋग्भ्यां सर्वफलकामः प्रजापतिं यजेत उपतिष्ठेत वा । " 'को अस्या नः' इति प्रजापतिम्" (कौसू ५९,१९) इति हि सूत्रम् ।

'कः पृश्निम्' इत्येषा उर्वराख्ये सवयज्ञे विनियुक्ता । " 'कः पृश्निम्' (अ ७,१०९) इत्युर्वराम्" (कौसू ६६,१७) इति सूत्रात् ।

---

१. चेत्. मेग. २. मेक्ष्याम्यू° RW.; मैष्याम्यू° सा.; मेष्या° > मेक्षा° A. °क्षित्रु° A,B,B^b,K,R^m,D,R,V,Cs,WM. ३. तिष्ठन् P,J,Cp,WM.

उपनयने आदित्यवीक्षणानन्तरम् 'अपक्रामन्' इत्यनया माणवकं प्राङ्मुखम् उपवेशयेत्। सूत्रितं हि—"'अपक्रामन् पौरुषेयाद् वृणानः' (अ ७,११०) इत्येनं[1] बाहुगृहीतं प्राञ्चम् अवस्थाप्य" (कौसू ५५,१६) इति।

ग्रामगृहादिषु अन्योक्तसंदेशाकथने तत्प्रायश्चित्तार्थं 'यदस्मृति' इत्यनया अग्निम् उपतिष्ठेत। "'यदस्मृति' (अ ७,१११) इति संदेशम् [2]अपर्याप्य" (कौसू ४६,१४) इति[2] हि सूत्रम्।

तथा दर्शपूर्णमासयोः 'यदस्मृति' इत्यनया कर्मविस्मरणप्रायश्चित्तार्थं जुहुयात्। "'यन्मे स्कन्नम्' (कौसू ६,१), 'यदस्मृति' इति च स्कन्नास्मृतिहोमौ" (कौसू ६,२) इति सूत्रितम्।

अग्निष्टोमे दीक्षानियमलोपप्रायश्चित्तार्थम् अनया अग्निम् उपतिष्ठेत। "व्रतलोपे 'यदस्मृति' इत्यग्निमुपतिष्ठते" (वैताश्रौ १२,५) इति हि वैतानं सूत्रम्।

कासश्लेष्मभैषज्यार्थम् 'अव दिवस्तारयन्ति' इति ऋचा अन्नं सक्तुमन्थं वा अभिमन्त्र्य भक्षयेद् उदकं वा अभिमन्त्र्य आचामयेत् सूर्योपस्थानं वा कुर्यात्। "'यथा मनः' (अ ६,१०५), 'अव दिवः' (अ ७,११२) इत्यरिष्टैः" (कौसू ३१,२७) इति सूत्रात्।

अभिचारकर्मणि 'यो न स्तायत्' (अ ७,११३) इति द्यृचेन अशनिहतवृक्षसमिध[3] आदध्यात् (तु. कौसू ४८,३७)।

द्यूतजयकर्मणि 'इदमुग्राय' इति सप्तर्चेन दधिमधुनोस्त्रिरात्रं वासितान् अक्षान् अभिमन्त्र्य द्यूतक्रीडां कुर्यात्। "'इदम् उग्राय' (अ ७,११४) इति वासितानक्षान् निवपति" (कौसू ४१,१३) इति हि कौशिकं सूत्रम्।

अग्न्याधाने 'इदमुग्राय' इति घृतेनाऽभ्यक्तानक्षानध्वर्यवे दद्यात्। तदुक्तं वैताने—"'इदमुग्राय' इत्यन्वक्तान्[4] अक्षान् विदेवनायाध्वर्यवे प्रयच्छति" (वैताश्रौ ६,१०) इति।

को अस्या नो [5]द्रुहोऽवद्यवत्या उन्नेष्यति क्षत्रियो वस्य इच्छन्।
को यज्ञकामः क उ पूर्तिकामः को देवेषु वनुते दीर्घमायुः ॥ १ ॥

कः। अस्याः। नः। द्रुहः। अवद्यऽवत्याः। उत्। नेष्यति। क्षत्रियः। वस्यः। इच्छन्। कः। यज्ञऽकामः। कः। ऊं इति। पूर्तिऽकामः। कः। देवेषु। वनुते। दीर्घम्। आयुः॥

अस्मिन् द्यृचे प्रश्नवाचिना किंशब्देन प्रजापतिरुच्यते। अनिरुक्तत्वात् तस्य। श्रूयते हि तैत्तिरीयके—'कोऽहं स्यामित्यब्रवीत् एतत् प्रब्रूयेति। एतत् स्या इत्यब्रवीद् यदेतद् ब्रवीषीति[6]। को ह वै नाम प्रजापतिः' (तैब्रा २,२,१०,२) इति प्रश्नवाचिन एव किंशब्दस्य प्रजापतिवाचकत्वं युक्तम्। अन्यथा 'कस्मै देवाय हविषा विधेम' (ऋ १०, १२१,१) इत्यत्र स्मै इति आदेशो न स्यात्। अयम् अस्या ऋचोऽर्थः—वस्यः वसीयः

१. इत्येवं S'. २. पर्याहेति S'. ३. अशनिहतसमिधवृक्ष° S'. ४. इत्यन्यान्केरयन्वकान् S'. ५. द्रुहोवृ° A,B[a],R. ६. इति नास्ति S'.

प्रशस्तं फलम् । वसुशब्दाद् ईयसुनि ईकारलोपश्छान्दसः । इच्छन् अस्मभ्यं प्रदातुं कामयमानः कः क्षत्रियः क्षत्रियजात्यभिमानी को राजा । 'क्षत्राद् घः' ( पा ४,१,१३८ ) इति घः । अस्याः इदानीं बाधिकाया अवद्यवत्याः । गर्ह्याम् अवद्यम् । 'अवद्यपण्यवर्याः°'( पा ३, १,१०१ ) इति गर्ह्यार्थे अवद्यशब्दो यत्प्रत्ययान्तत्वेन निपातितः । निन्द्यरूपादियुक्ताया द्रुहः द्रोग्ध्र्याः । द्रुह जिघांसायाम् । क्विप् । अहितकारिण्याः पिशाच्या दुर्गतेः सकाशात् नः अस्मान् उन्नेष्यति उद्धरिष्यति । को वा यज्ञकामः अस्माभिरनुष्ठीयमानं यज्ञं कामयमानो भवति । 'उशब्दः वार्थे'[1] । कः पूर्तिकामः अस्माकं धनादिपूर्तिम् अभिवाञ्छन् भवति । को वा देवेषु मध्ये दीर्घम् चिरकालभावि आयुः जीवनं वनते[2] संभजते । वन षण संभक्तौ । व्यत्ययेन आत्मनेपदम् । यद्वा वनतिर्दानार्थवाची धातूनाम् अनेकार्थत्वात् । देवेषु मध्ये को वा दीर्घम् आयुः प्रयच्छति । अत्रोक्तानां प्रश्नवाक्यानां कः प्रजापतिरेव अस्मान् दुर्गताद् उद्धरिष्यति अस्मदीयं यज्ञं पूर्तिं च कामयते आयुश्च प्रयच्छति इत्युत्तरं भवति । किंशब्देन प्रजापतिरुच्यते इत्युक्तत्वात् ।

कः पृश्निं धेनुं वरुणेन दत्तामथर्वणे सुदुघां नित्यवत्साम्[3] ।
बृहस्पतिना 'सख्यं[4] जुषाणो' यथावशं 'तन्वः[5] कल्पयाति ॥ १ ॥

कः । पृश्निम् । धेनुम् । वरुणेन । दत्ताम् । अथर्वणे । सुऽदुघाम् । नित्यऽवत्साम् । बृहस्पतिना । सख्यम्[6] । जुषाणः । यथाऽवशम् । तन्वः । कल्पयाति ॥ १ ॥

पृश्निम् प्राष्टवर्णाम् । 'पृश्निः प्राश्नुत एनं वर्णः[7] इति नैरुक्ताः' ( नि २,१४ ) इति हि यास्कः । लोहितादिवर्णोपेतां सुदुघाम् सुष्ठु दोग्ध्रीम् । 'दुहः कब्घश्च' ( पा ३, २,७० ) इति कप्प्रत्ययः घकारश्च अन्तादेशः । दोग्धुं सुशकां वा । 'ईषद्दुःसुषु°' (पा ३,३,१२६) इति खल् । गुणाभावो घश्चान्तादेशः छान्दसः । 'लिति' (पा ६,१,१९३) इति प्रत्ययात् पूर्वस्य उदात्तत्वम् । नित्यवत्साम् सर्वदा वत्सोपेताम् । अनेन सर्वदा नवप्रसूतत्वम् उक्तं भवति । अथर्वणे वरुणेन दत्ता धेनुम् । वरुणेनाथर्वणे गौर्दत्तेति पञ्चमकाण्डे स्पष्टम् आम्नातम्—

'कथं महे असुरायाब्रवीरिह कथं पित्रे हरये त्वेषनृम्णः ।
पृश्निं वरुण दक्षिणां ददावान्पुनर्मघ त्वं मनसाऽचिकित्सीः ॥' ( अ ५,११,१ ) इति ।

एतादृशीं धेनुं बृहस्पतिना बृहतां महतां देवानां पालकेन देवेन सख्यम् सौहार्दं जुषाणः सेवमानः को देवः यथावशम् यथाकामम् । पदार्थानतिवृत्तौ अव्ययीभावः । तन्वः तनूः कल्पयाति कल्पयेत् समर्थानि कुर्यात् । कल्पयतेर्लेटि आडागमः । कः कल्पयेत् इति प्रश्नस्य प्रजापतिरेव कल्पयतीत्युत्तरं भवति ।

---

१. उशब्दोऽर्थे वा S' २. वैद्. मंगा. ३. धेनुमेताम् पै २०,३,६. ४. सुख्यं जु° D,K,Km,V,RW ; सख्या १ [मूको.] ५. तन्वं पै. ६. सुख्यम् P² ७. वर्णम् S'.

अपुक्राम॒न् पौरु॑षेयाद् 'वृणा॒नो दैव्यं॒ वच॑ः'[1] ।
प्रणी॑तीर॒भ्याव॑र्तस्व 'विश्वे॑भिः॒ सखि॑भिः स॒ह'[2] ॥ १ ॥

अ॒प॒ऽक्राम॑न् । पौरु॑षेयात् । वृ॒णा॒नः । दैव्य॑म् । वच॑ः ।
प्रऽनी॑तीः । अ॒भि॒ऽआव॑र्तस्व । विश्वे॑भिः । सखि॑ऽभिः । स॒ह ॥ १ ॥

हे माणवक त्वं पौरुषेयात् पुरुषेभ्यो हितं तत्र वर्तमानं कामवादभक्षणादिकं लौकिकं कर्म तस्मात् । 'सर्वपुरुषाभ्यां णढञौ' ( पा ५,१,१० ) इति ढञ्प्रत्ययः । ढस्य एयादेशः । तस्मात् लौकिकात् कर्मणः अपक्रामन् अपगच्छन् दैव्यम् देवसंबन्धि । 'देवाद्यञञौ' ( पावा ४,१,८५ ) इति यञ्प्रत्ययः । तद् वचः वाक्यं वेदलक्षणं वृणानः संभजमानः । वृङ् संभक्तौ । क्र्यादिः । हेतौ शानच्प्रत्ययः । स्वाध्यायसंभजनाद्धेतोः प्रणीतीः प्रकृष्टनयनादिवेदब्रह्मचर्यनियतीः[3] अभ्यावर्तस्व अभिगच्छ । विश्वेभिः सर्वैः सखिभिः समानख्यानैः सब्रह्मचारिभिः सह । अभ्यावर्तस्वेति ।

यद॒स्मृ॑ति 'च॒कृ॒म किं चि॑दग्न उपारि॒म चर॑णे'[4] जातवेदः ।
तत॑ः[5] पाहि॒ त्वं नः॑ प्रचेतः शु॒भे सखि॑भ्यो अमृत॒त्वम॑स्तु नः ॥ १ ॥

यत् । अ॒स्मृ॑ति । च॒कृ॒म । किम् । चि॒त् । अ॒ग्ने॒ । उ॒प॒ऽआ॒रि॒म । चर॑णे । जा॒त॒ऽवे॒दः॒ ।
तत॑ः । पा॒हि॒ । त्वम् । नः॒ । प्र॒ऽचे॒तः॒ । शु॒भे । सखि॑ऽभ्यः । अ॒मृ॒त॒ऽत्वम् । अ॒स्तु॒ । नः॒ ॥ १ ॥

हे अग्ने वयम् अस्मृति स्मरणरहितं पूर्वोत्तरकर्मानुसंधानरहितं यत् किंचित् कर्म चकृम अकार्ष्म । सांतत्येन क्रियमाणे कर्मणि मध्ये यत् किंचित् कर्म अनुष्ठेयं विस्मृतवन्तः अन्योक्तं वा संदेशादिकं तदीयाय जनाय न कथितवन्तो वा । तथा हे जातवेदः जातानां वेदितः जातैः भूतैर्ज्ञायमान वा चरणे अनुष्ठाने उपारिम यत् कर्म उपार्तं लुप्तम् अकार्ष्म । यत्कर्मानुष्ठाने मूढा अभूमेत्यर्थः । चकृमेति । करोतेर्लिटि क्रादिनियमात् इण्निषेधः ( पा ७,२,१३ ) । उपारिमेति । उपपूर्वाद् अर्तेः 'इडत्यर्तिव्ययतीनाम्' (पा ७,२,६६) इति इडागमः(?)[6] । यद्वृत्तयोगाद् अनिघाते 'तिङि चोदात्तवति' ( पा ८,१,७१ ) इति गतेर्निघातः । हे प्रचेतः प्रकृष्टज्ञान अग्ने त्वं ततः तस्माद् विस्मरणनिबन्धनात् पापात् नः अस्मान् पाहि पालय । ततः सखिभ्यः समानख्यानेभ्यः प्रियभूतेभ्यो नः अस्मभ्यं त्वदनुग्रहात् शुभे शोभने साङ्गे कर्मणि । संपन्ने इति शेषः । अमृतत्वम् अविनाशित्वम् अस्तु ।

'अव॑ दि॒वस्ता॒रय॑न्ति'[7] स॒प्त सूर्य॑स्य र॒श्मय॑ः ।
आप॑ः समु॒द्रिया॒ धारा॒स्तास्ते॑ श॒ल्यम॑सिस्रसन्[8] ॥ १ ॥

---

१. गृणानो दैव्यं सहः पै २०,७,४. २. देवो देवानां सख्या जुषाणः पै. ३. 'नयनादेवेद' S'. ४. यत्स्मा कि च येनोपारिम चरणे पै २०,७,९.. ५. तस्मात् पै. ६. वस्तुनः क्रादिनियमाद् इट्. ७. दिवि या नो उत ? दर्शं पै २०,३१,१ ८. शल्यमुविच्युवुः पै.

अव । दिवः । तारयन्ति । सप्त । सूर्यस्य । रश्मयः ।
आपः । समुद्रियाः । धाराः । ताः । ते । शल्यम् । असिस्रसन् ॥ १ ॥

एकस्य हि सूर्यस्य अंशभूताः सप्त सूर्या विद्यन्ते । प्रधानभूतः कश्यपसंज्ञकः सर्वदा महामेरौ वर्तते । इतरे तदंशभूता आरोगादिनामानो विश्वस्य प्रकाशकाः प्रकर्षकाश्च भवन्ति । श्रूयते हि तैत्तिरीयके— 'आरोगो भ्राजः पटरः पतङ्गः स्वर्णरो ज्योतिषीमान् विभासः । ते अस्मै सर्वे दिवमातपन्ति' इति, 'कश्यपोऽष्टमः । स महामेरुं न जहाति' इति, 'यस्मिन् सूर्या अर्पिताः सप्त साकम्' ( तैआ १,७,१ ) इति च । तथा चास्या ऋचः अयम् अर्थः—सूर्यस्य कश्यपनाम्नः संबन्धिनः सप्त सप्तसंख्याका रश्मयः व्यापकाः किरणा आरोगादयः सूर्याः समुद्रियाः । समुद्रः अन्तरिक्षम् । 'समुद्द्रवन्त्यस्मादापः' ( नि २,१० ) इति हि यास्कः । तत्र भवाः । 'समुद्राभ्राद् घः' ( पा ४,४,११८ ) इति घः । अन्तरिक्षभवा धारा धारारूपा आपः । द्वितीयार्थे प्रथमा । अपः दिवः द्युलोकाद् अव तारयन्ति अवपातयन्ति । प्रवर्षन्तीत्यर्थः । ताः सूर्यरश्मिभिरवतारिता आपः हे रुग्ण ते तव शल्यवत् शल्यम् पीडाकारिणं कासश्लेष्मादिरोगम् असिस्रसन् स्रंसयन्तु विनाशयन्तु । स्रंसु गतौ । ण्यन्तात् लुङि चङि 'अनिदिताम्°' ( पा ६,४,२४ ) इति उपधानकारलोपः । 'सन्वल्लघुनि°' ( पा ७,४,९३ ) इति सन्वद्भावात् 'सन्यतः' ( पा ७,४,७९ ) इति अभ्यासस्य इत्वम् ।

यो नः स्तायद्[१] दिप्सति यो न आविः[२] स्वो विद्वानरणो वा नो अग्ने ।
प्रतीच्येत्वरणी दत्वती तान्[३] मैषामग्ने वास्तु भून्मो अपत्यम् ॥ १ ॥

यः । नः । स्तायत्[४] । दिप्सति । यः । नः । आविः । स्वः । विद्वान् । अरणः । वा । नः । अग्ने । प्रतीची । एतु । अरणी । दत्वती । तान्[५] । मा । एषाम् । अग्ने । वास्तु । भूत् । मो इति । अपत्यम् ॥

हे अग्ने यः शत्रुः नः अस्मान् तायत्[६] । अन्तर्हितनामैतत् (?) । अन्तर्हितम् अप्रकाशं दिप्सति दम्भितुं हिंसितुम् इच्छति । 'दम्भ इच्च' ( पा ७,४,५६ ) इति सन्प्रत्यये इकारादेशः । 'अत्र लोपोऽभ्यासस्य' ( पा ७,४,५८ ) इति अभ्यासलोपः । यः च शत्रुः नः अस्मान् आविः प्रकाशं दिप्सति । तथा विद्वान् परबाधनोपायं जानन् स्वः स्वीयः बन्धुर्वा नः अस्मान् दिप्सति । अरणः । अर्तेः अरणः । अरातिर्वा नः अस्मान् हन्तुम् इच्छति । तान् अप्रकाशहननोद्युक्तादीन् शत्रून् दत्वती दन्तोपेता । 'छन्दसि च' ( पा ५,४,१४२ ) इति दन्तशब्दस्य दत् आदेशः । अरणी आर्ति-

१. स्तायुद् Bʰ. २. आवि Bʰ,K,Kᵐ,R,Sᵐ,Cs,W,I. ३. तां A,K,Kᵐ,R,Bp¹,WM. ४. तु. P,P²,J,Cp; वेद्यु. दीपा. सा. तायत्. ५. ताम् Bp². ६. वेतु. पश.

कारिणी राक्षसी प्रतीची प्रत्यगञ्चना एतु प्राप्नोतु । दन्ताभ्यां तान् भक्षयितुम् अभिगच्छत्वित्यर्थः । निःशेषहननाय दत्वतीति विशेषणम् । किं च हे अग्ने एषां पूर्वोक्तानाम् अन्तर्हितघातकादीनां वास्तु गृहं मा भूत् । अपत्यम् पुत्रादिकं मो मैव भूत् ।

यो नः सुप्तान्[1] जाग्रतो वाभिदासात् तिष्ठतो वा चरतो जातवेदः ।
वैश्वानरेण सयुजा सजोषास्तान् प्रतीचो निर्दह जातवेदः ॥ २ ॥

यः । नः । सुप्तान्[2] । जाग्रतः । वा । अभिऽदासात् । तिष्ठतः । वा । चरतः । जातऽवेदः ।
वैश्वानरेण । सऽयुजा । सऽजोषाः । तान् । प्रतीचः । निः । दह । जातऽवेदः ॥ २ ॥

यः शत्रुः सुप्तान् निद्राणान् नः अस्मान् अभिदासात् अभिदासयेत् अभितः उपक्षपयेत् अभिमुखं वा हिंस्यात् । दसु उपक्षये । ण्यन्तात् लेटि आडागमः । 'छन्दस्युभयथा' (पा ३,४,११७) इति तिप आर्धधातुकत्वाद् णिलोपः । यः शत्रुः जाग्रतः प्रबुध्यमानान् वा नः अस्मान् अभिदासयेत् । जागृ निद्राक्षये । शतरि अदादित्वात् शपो लुक् । 'जक्षित्यादयः षट्' (पा ६,१,६) इति अभ्यस्तसंज्ञायाम् 'अभ्यस्तानामादिः' (पा ६,१,१८९) इति आद्युदात्तत्वम् । तथा हे जातवेदः जातप्रज्ञ हे अग्ने तिष्ठतः सुखेन एकत्रासीनान् अस्मान् यो हिंस्यात् । चरतः कार्येषु व्याप्रियमाणान् वा अस्मान् यः शत्रुः उपक्षपयेत् । तिष्ठतश्चरतः इत्युभयत्र लसार्वधातुकानुदात्तत्वे धातुस्वरः । हे जातवेदः जातानां वेदितरग्ने त्वं वैश्वानरेण विश्वनरसंबन्धिना एतत्संज्ञकेन जाठराग्निना । 'नरे संज्ञायाम्' (पा ६,३,१२९) इति विश्वशब्दस्य दीर्घः । तेन अग्निना सयुजा सहयोक्त्रा सहायेन सजोषाः समानप्रीतिः सन् प्रतीचः स्वप्नजागरणाद्यवस्थापन्नान् अस्मान् उपक्षपयितुं प्रतिमुखम् आगच्छतः तान् शत्रून् निर्दह निःशेषेण भस्मसात् कुरु । जाठराग्निः अन्तर्दहतु त्वं तु बहिर्दहेत्यर्थः ।

इदमुग्राय बभ्रवे नमो यो अक्षेषु तनूवशी ।
घृतेन [3]कलिं शिक्षामि स नो मृडातीदृशे ॥ १ ॥

इदम् । उग्राय । बभ्रवे । नमः । यः । अक्षेषु । तनूऽवशी ।
घृतेन । कलिम् । शिक्षामि । सः । नः । मृडाति । ईदृशे ॥ १ ॥

---

१. सुप्तां A,K^m,R,D². २. सुप्ताम् P,P²,J,Cp. ३. कल्वं शिक्षाम पै ४,९,२.

उग्राय उद्गूर्णबलाय बभ्रव बभ्रुवर्णाय पतत्संक्षकाय द्यूतजयकारिणे देवाय इदं नमः नमस्करणम् । भवतु इति शेषः । 'नमःस्वस्ति°' (पा २,३,१६) इति नमःशब्दयोगे बभ्रव इति चतुर्थी । यो बभ्रुः अक्षेषु देवनसाधनेषु तनूवशी यथाकामी । स्वेच्छाधीनजय इत्यर्थः । घृतेन आज्येन मन्त्राभिमन्त्रितेन कलिम् । पराजयहेतुः पञ्चसंख्यायुक्तोऽक्षविषयोऽयः कलिरित्युच्यते । तं शिक्षामि ताडयामि । हन्मीत्यर्थः । एकादयः पञ्चसंख्यान्ता अक्षविषया अयाः । तत्र पञ्चानां कलिरिति संज्ञा । तथा च तैत्तिरीयकम्—'ये वै चत्वारः स्तोमाः कृतं तत् । अथ ये पञ्च कलिः सः' (तैब्रा १,५,११,१) इति । तत्र कलिशब्दवाच्यस्य अयस्य आगमने पराजयो भवति । तम् अनेन आज्येन विनाशयामि । अहम् अन्यैर्न पराजीये किं तु अन्यान् अहमेव जयामीत्यर्थः । शिक्षतिर्विद्योपादानवाची । तच्च विद्याग्रहणम् अध्यापककर्तृककशाताडनं विना न भवतीति अत्र लक्षणया ताडनमात्रं विवक्ष्यते। व्यत्ययेन परस्मैपदम् । यद्वा शकेः सनि प्रत्यये 'सनि मीमा°' (पा ७,४,५४) इति इसादेशः । 'अत्र लोपः°' (पा ७,४,५८) इति अभ्यासलोपः । कलिं शिक्षामि[1] शक्तं समर्थं कर्तुम् इच्छामि । यथा कलिः स्वयं[2] पराजयसमर्थः पराजयवान् भवति तथा करोमीत्यर्थः । अस्मिन्नर्थे देवतानुग्रहम् आशास्ते । स नमस्कृतः अक्षद्यूतदेवता बभ्रुः ईदृशे देवननिबन्धने कलिपराभावनरूपे जयलक्षणे च फले नः अस्मान् मृळाति[3] मृडयतु सुखयतु । मृड सुखने । लेटि आडागमः ।

घृतमप्सराभ्यो वह त्वमग्ने [4]पांसूनक्षेभ्यः सिकता अपश्च ।
यथाभागं हव्यदातिं जुषाणा[5] मदन्ति[6] देवा उभयानि हव्या ॥ २ ॥

घृतम् । अप्सराभ्यः । वह । त्वम् । अग्ने । पांसून्[7] । अक्षेभ्यः । सिकताः । अपः । च ।
यथाऽभागम् । हव्यऽदातिम् । जुषाणाः । मदन्ति[6] । देवाः । उभयानि । हव्या[8] ॥ २ ॥

हे अग्ने त्वम् अप्सराभ्यः । अप्सु सरन्त्यश्चरन्त्यः अन्तरिक्षचारिण्यो वा । ताभ्यः तदर्थं घृतम् अक्षाभ्यञ्जनसाधनम् आज्यं वह प्रापय । अस्माकं जयार्थम् इति शेषः । तथा अक्षेभ्यः । अक्षशब्देन तैर्दीव्यन्तः प्रतिकितवा उच्यन्ते । अक्षहस्तेभ्यः प्रतिकितवेभ्यः पांसून् सूक्ष्मान् भूरजःकणान् सिकताः शर्कराः अपः उदकानि च प्रापय । यथा तेषां पराजयो भवति तथा तन्मुखेषु पांस्वादीन् प्रक्षिपेत्यर्थः । किं च यथाभागम् भागम् अनतिक्रम्य स्वीयस्वीयभागानुसारेण हव्यदातिम् हविषः प्रदानं जुषाणाः सेवमाना देवाः इन्द्राद्या उभयानि द्विप्रकाराणि औषधपाशुकभेदेन

---

१. शिक्षयामि S' २. ययं S'. ३. वैतु. मंपा, ४. पांसून्° B[b], D,D[k],S[m],Cs. ५. जुषाणो पै ४,९,३. ६. मदन्तु R,D[k],K,P,P[k],J, पै, ७. पांसून् P,P[k],J. ८. हव्यां P.

सोमाज्यभेदेन श्रौतस्मार्तकर्मभेदेन वा द्विविधानि हव्या हव्यानि हवींषि। आस्वाद्येति शेषः। मदन्ति माद्यन्ति तृप्ता भवन्ति। ते देवा अपि अस्माकं द्यूतजयं कुर्वन्तु इति प्रार्थना।

अप्सरसः सधमादं मदन्ति हविर्धानमन्तरा सूर्यं च।
ता मे हस्तौ सं सृजन्तु घृतेन सपत्नं मे कितवं रन्धयन्तु ॥ ३ ॥

अप्सरसः। सधऽमादम्। मदन्ति। हविःऽधानम्। अन्तरा। सूर्यम्। च।
ताः। मे। हस्तौ। सम्। सृजन्तु। घृतेन। सऽपत्नम्। मे। कितवम्। रन्धयन्तु ॥३॥

अप्सरसः द्यूतक्रियादेवताः सधमादम् सह संभूय मादः मादनं यस्मिन् मदनकर्मणि तत्। माद्यतेर्घञ् व्यत्ययेन। 'सध मादस्थयोश्छन्दसि' (पा ६,३,९६) इति सहस्य सधादेशः। सहमदनं यथा भवति तथा मदन्ति माद्यन्ति। कुत्रेति तद् उच्यते—हविर्धानम्। हविर्धीयते अत्रेति हविर्धानो भूलोकः। अधिकरणे ल्युट्। तं सूर्यम् सूर्याधिष्ठितं द्युलोकं च अन्तरा। 'अन्तरान्तरेण युक्ते' (पा २,३,४) इति द्वितीया। द्यावापृथिव्योर्मध्ये अन्तरिक्षलोके माद्यन्ति। ताः अप्सरसः मे मम हस्तौ देवनसाधनौ पाणी घृतेन घृतवत् सारभूतेन जयलक्षणेन फलेन सं सृजन्तु संयोजयन्तु। तथा सपत्नम् प्रतिदीव्यन्तं कितवं मे मम रन्धयन्तु। 'रध्यतिर्वशगमने' (नि १०,४०) इति यास्कः। वशयन्तु स्वाधीनं कुर्वन्तु। रध हिंसासंराध्योः। णिचि 'रधिजभोरचि' (पा ७,१,६१) इति नुमागमः।

इति दशमेऽनुवाके प्रथमं सूक्तम्।

'आदिनवं प्रतिदीव्ने' इति चतुर्ऋचस्य द्यूतजयकर्मणि 'इदम् उग्राय' इत्यनेन सह उक्तो विनियोगः।

परसेनाजयार्थम् 'अग्न इन्द्रश्च' इति द्वाभ्यां नवरथं संपात्य अभिमन्त्र्य ससारथिं राजानम् आरोहयेत्। तद् उक्तं कौशिकेन—"'अग्न इन्द्रः' (अ ७,११५), 'दिव्यश्वतसः' (अ ८,८,२२) इति [3]नवं रथं[3] राजानं ससारथिमास्थापयति" (कौसू १५,११) इति।

तथा सर्वफलकामः 'अग्न इन्द्रश्च' इति तिसृभिः अग्नीन्द्रौ यजेत उपतिष्ठेत वा। "'अग्न इन्द्रश्च' इति मन्त्रोक्तान्[4] सर्वकामः" (कौसू ५९,२०) इति हि सूत्रम्।

आग्रयणेष्टौ 'अग्न इन्द्रश्च' इति आग्नेन्द्रपुरोडाशयागम् अनुमन्त्रयते। "'अग्न इन्द्रः' इत्याग्नेन्द्रम्[5]" (वैताश्रौ ८,६) इति हि वैतानं सूत्रम्।

---

१. नो हस्तं कृतेन सं सृजन्तु पै ४,९,५. २. सपत्नान् नः कितवं पै.; सपत्नं नः कितवं पै. [मूको.]. ३. नवरथं S'. ४. मन्त्रोक्तां S'. ५. इन्द्राग्नेन्द्रम् S'.

वृषोत्सर्गे 'इन्द्रस्य कुक्षिः' इत्यनया वृषभं संपात्य अभिमन्त्र्य विसृजेत्। "'इन्द्रस्य कुक्षिः' (अ ७,११६), 'साहस्रः' (अ ९,४) इत्यृषभं संपातवन्तमतिसृजति" (कौसू २४,१९) इति कौशिकसूत्रात्।

अग्निष्टोमे प्रातःसवने सोमसहितं पूतभृत्पात्रम् 'इन्द्रस्य कुक्षिः' इति ब्रह्मा अनुमन्त्रयेत। "'इन्द्रस्य कुक्षि.' इत्यासिक्ते सोमे पूतभृतम्" (वैताश्रौ १७,९) इति हि वैतानं सूत्रम्।

सर्वव्याधिभैषज्यार्थं 'शुम्भनी' इति द्व्यृचेन उदकघटं संपात्य अभिमन्त्र्य मौञ्जैः पाशैः संधिषु बद्धं व्याधितं दर्भपिञ्जूलीभिः आप्लावयेद् अवसिञ्चेद् वा। सूत्रितं हि— "'शुम्भनी' (अ ७,११७) इति मौञ्जैः पाशैः' पर्वसु बद्ध्वा पिञ्जूलीभिराप्लावयति। अवसिञ्चति" (कौसू ३२,३;४) इति।

तथा 'शुम्भनी' इत्यस्या अंहोलिङ्गगणे पाठात् 'ओषधिवनस्पतीनामनूक्तान्यप्रतिषिद्धानि भैषज्यानाम्। अंहोलिङ्गाभिः' (कौसू ३२,२६;२७) इत्यादौ विनियोगो द्रष्टव्यः।

विवाहे 'शुम्भनी' इत्यनया आज्यं हुत्वा वरवध्वोर्मूर्ध्नोः संपातान् आनयेत्।

तथा तस्मिन्नेव कर्मणि अनयर्चा वरवध्वोरञ्जल्योः उदपात्रोदकं निनयेत्।

सूत्रितं हि—"'तुभ्यम् अग्रे' (अ १४,२) 'शुम्भनी', 'अग्निर्जनवित्' (कौसू.) XXX। XX इति मूर्ध्नोः संपातानानयति। उदपात्र उत्तरान्। शुम्भन्याऽञ्जल्योर्निनयति" (कौसू ७८,१०-१२) इति।

आ॒दि॒न॒वं प्र॑ति॒दीव्ने॑ घृ॒तेना॒स्माँ अ॒भि क्ष॑र ।
वृ॒क्षमि॑वा॒शन्या॑ ज॒हि यो अ॒स्मान् प्र॑ति॒दीव्य॑ति ॥ ४ ॥

आ॒दि॒न॒वम्[1] । प्र॒ति॒ऽदीव्ने॑ । घृ॒तेन॑ । अ॒स्मान् । अ॒भि । क्ष॒र ।
वृ॒क्षम्ऽइ॑व । अ॒शन्या॑ । ज॒हि । यः । अ॒स्मान् । प्र॒ति॒ऽदीव्य॑ति ॥ ४ ॥

प्रतिदीव्ने प्रतिकूलं दीव्यते प्रतिकितवाय। 'क्रियार्थोपपदस्य' (पा २,३,१४) इति चतुर्थी। प्रतिदिवानं जेतुम् आदिनवम् आदीव्यामि अक्षैः आदेवनं[3] करोमि। आङ्पूर्वाद् दीव्यतेश्छान्दसे लङि व्यत्ययेन श्नुः[2]। 'लोपो व्योर्वलि' (पा ६,१,६६) इति वकारलोपः। 'तन्वन्यमिताम्' (पा ३,४,१०१) इति अमादेशो गुणश्च। यद्वा लङि व्यत्ययेन श्नम्[2]। प्रतिपूर्वाद् दीव्यतेः 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः' (पाउ १,१५६) इति कनिन्प्रत्ययः। चतुर्थ्येकवचने अल्लोपे कृते 'हलि च' (पा ८,२,७७) इति दीर्घः। अस्मान् आदीव्यतः घृतेन घृतवत्सारभूतेन जयलक्षणेन फलेन अभि क्षर संयोजय। देवनक्रियाभिमानी देवः संबोध्यते। यः कितवः अस्मान्

---

१. नास्ति Bl. २. आदिऽनवम् P,P², J,Cp,WM; शिष्टं वेप १,६४७ द्र.
३. आदी (दे ?) वनं शंपा.

प्रतिदीव्यति जेतुं प्रतिकूलं द्यूतं करोति तम् अशन्या विद्युता वृक्षम् शुष्कं तरुम् इव जहि तिरस्कुरु। 'हन्तेर्जः' (पा ६,४,३६) इति जादेशः।

यो नो॑ द्यु॒वे॑[1] धन॑मि॒दं च॒कार॑[2] यो अ॒क्षाणां॑ ग्लह॑नं॒ [3]शेष॑णं च।
स नो॑ दे॒वो॑[4] ह॒विरि॒दं जु॑षा॒णो ग॑न्ध॒र्वेभिः॑[5] सध॒मादं॑ मदेम ॥ ५ ॥

यः। नः॒। द्यु॒वे। धन॑म्। इ॒दम्। च॒कार॑। यः। अ॒क्षाणा॑म्। ग्लह॑नम्। शेष॑णम्। च॒।
सः। नः॒। दे॒वः। ह॒विः। इ॒दम्। जु॒षा॒णः। ग॒न्ध॒र्वेभिः॑। स॒ध॒ऽमाद॑म्। म॒दे॒म ॥ ५ ॥

यो देवः नः अस्माकं द्युवे द्यूताय तदर्थम्। यद्वा द्युवे दीव्यते नः। वचनव्यत्ययः। मह्यम्। अथ वा नः अस्मदीयाय द्युवे दीव्यते पुरुषाय इदं प्रतिकितवसंबन्धि धनं चकार जयेन संपादितवान्। द्युव इति। दीव्यतेः कर्तरि भावे वा क्विप्। 'च्छ्वोः शूडनुनासिके च' (पा ६,४,१९) इति वकारस्य ऊठ्। यण् आदेशः। यश्च देवः अक्षाणां परकीयाणां ग्लहनम् ग्रहणं स्वकीयैरक्षैर्जित्वा स्वीकरणं शेषणम् स्वीयानाम् अक्षाणां जयाद्धस्थाने अवशेषणं च कृतवान्। ग्लहनम् इति। ग्लहु ग्लहे इति धात्वन्तरम् अन्यैर्भूवादौ पठ्यते। तस्मात् ल्युट्। गृह्णातेर्वा। रेफस्य लत्वं छान्दसम्। स देवः द्यूताभिमानी नः अस्मदीयम् इदं हविः जुषाणः सेवमानो भवतु। वयं च गन्धर्वेभिः गन्धर्वैः अक्षाधिष्ठायकैः सधमादम् सहमदनं यथा तथा मदेम हृष्यास्म। मायतेः 'लिङ्याशिष्यङ्' (पा ३,१,८६) इति अङ्प्रत्ययः।

संव॑सव॒ इति॑ वो नाम॒धेय॑मुग्रंप॒श्या रा॑ष्ट्र॒भृतो॒ ह्य१॒॑क्षाः।
[6]तेभ्यो॑ व इन्दवो[7] ह॒विषा॑ विधेम व॒यं स्या॑म॒ पत॑यो र॒यी॒णाम् ॥ ६ ॥

सम्ऽव॑सवः। इति॑। वः॒। ना॒म॒ऽधेय॑म्। उ॒ग्र॒म्ऽप॒श्याः[8]। रा॒ष्ट्र॒ऽभृतः॑। हि। अ॒क्षाः।
तेभ्यः॑। वः॒। इ॒न्द॒वः॒[9]। ह॒विषा॑। वि॒धे॒म॒। व॒यम्। स्या॒म॒। पत॑यः। र॒यी॒णाम् ॥ ६ ॥

हे गन्धर्वाः अक्षा वा यूयं सवसव इति संप्राप्तधनाः संप्रापितधना यतो भवथ अतो वः युष्माकं संवसव इति नामधेयं भवति। हि यस्माद् उग्रपश्या[10]। पष्ठ्या लुक्। उग्रपश्यायाः राष्ट्रभृतः। इदं द्वयम् अप्सरोविशेषनामधेयम्। तयोः संबन्धिनो भवन्ति अक्षाः। अक्षाणाम् एतत्संबन्धित्वं तैत्तिरीये श्रूयते—'उग्रम्पश्ये

---

१. देवो पै ४,९,४.　२. दिदेश पै.　३. ग्रहणं पै.　४. अन्नु पै.
५. गन्धर्वैः पै.　६. जयाद्धस्थाने S'.　७. तस्मै त इन्दो पै ४,९,१.　† इदं वो V.
८. उग्रम्। प॰ P¹.　९. इन्दुवः P¹; इदम्। वः V.　१०. वैतु. मंगा.; 'पश्याः S'.

राष्ट्रभृत् किल्विषाणि[1] यदक्षवृत्तमनुवृत्तमेतत्[2]' ( तैआ २,४,१ ) इति । तेभ्यः गन्धर्वाप्सरोभ्यः तदधिष्ठितेभ्यः अक्षेभ्यो वा वः युष्मभ्यं युष्मदर्थम् इन्दवः । लुप्तमत्वर्थीयः । इन्दुमन्तः[3] सोमवन्तः सोमोपलक्षितहविर्युक्ता वयं हविषा उचितेन विधेम परिचरेम । विध विधाने तौदादिकः । अनन्तरं वयं दीव्यन्तः रयीणाम् धनानां पतयः स्वामिनः स्याम भवेम । द्यूते प्रतिकितवजयेन धनवन्तः स्यामेत्यर्थः ।

दे॒वान् यन्ना॑थि॒तो हु॒वे ब्र॑ह्म॒चर्यं॒ यदू॑षि॒म ।
अ॒क्षान् यद् ब॒भ्रूना॒लभे॒ ते नो॑ मृडन्त्वी॒दृशे॑ ॥ ७ ॥

दे॒वान् । यत् । ना॒थि॒तः । हु॒वे[4] । ब्र॒ह्म॒ऽच॒र्यम् । यत् । ऊ॒षि॒म ।
अ॒क्षान् । यत् । ब॒भ्रून् । आ॒ऽल॒भे । ते । नः॒ । मृ॒ड॒न्तु॒ । ई॒दृशे॑ ॥ ७ ॥

नाथितः उपतप्तः । नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु । अस्मात् निष्ठा । देवान् अग्न्यादीन् हुवे आह्वयामि धनलाभार्थम् इति यत् । ह्वयतेर्व्यत्ययेन शपः श्लुः । ब्रह्मचर्यम् वेदग्रहणार्थं ब्रह्मचारिनियमम् ऊषिम ऊषितवन्त इति यत् । वसेर्निवासार्थात् लिटि उत्तमबहुवचने धातोरभ्यासस्य च संप्रसारणे 'शासिवसिघसीनां च' ( पा ८,३,६० ) इति षत्वे रूपम् । बभ्रून् बभ्रुवर्णान् बभ्रुणा अक्षाभिमानिना देवेन अधिष्ठितान् वा अक्षान् देवनसाधनभूतान् आलभे देवितुं स्पृशामीति यत् । आङ्पूर्वो लभिः स्पर्शार्थः । तस्माद् वर्तमाने लटि उत्तमे रूपम् । तेन कारणेन ते देवादयः ईदृशे जयलक्षणे फले नः अस्मान् मृडन्तु सुखयन्तु ।

अग्न॑ इन्द्र॑श्च दा॒शुषे॑[5] ह॒तो[6] वृ॒त्राण्य॑प्र॒ति । उ॒भा[7] हि वृ॑त्र॒हन्त॑मा ॥ १ ॥

अग्ने॑ । इन्द्रः॑ । च॒ । दा॒शुषे॑ । ह॒तः । वृ॒त्राणि॑ । अ॒प्र॒ति । उ॒भा । हि । वृ॒त्र॒हन्ऽत॑मा ॥१॥

हे अग्ने इन्द्रश्च युवां दाशुषे हविर्दत्तवते यजमानाय तदर्थं वृत्राणि आवरकाणि शत्रुरूपाणि दुरितानि अप्रति अप्रतिपक्षम् । निःशेषम् इत्यर्थः । हथः[3] हिंस्थः । हन्तेर्वर्तमाने लटि मध्यमद्विवचने रूपम् । हि यस्माद् उभा उभौ अग्नीन्द्रौ वृत्रहन्तमा वृत्रहन्तमौ अतिशयेन वृत्रं हतवन्तौ । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' ( पा ३,२,८७ ) इति क्विप् । तदन्ताद् आतिशायनिकस्तमप् । 'नाद्घस्य' ( पा ८,२,१७ ) इति नुडागमः ।

---

१. याचयामि S'. २. 'मनुवृत्त' आन. ३. चेतु. मेपा. ४. हुवे P.
५. मेदिनो तैब्रा २,४,५,७. ६. हथो ऐ २०,१६,७ तैब्रा. मा. ७. उभा पै.; मुर्चे तैब्रा.

[1]याभ्यामजयन्त्स्वऽ१रग्रे[2] एव [3]यावातस्थतुर्भुवनानि[3] विश्वा[4] ।
प्र चर्षणी[5] वृषणा[6] वज्रबाहू[7] अग्निमिन्द्रं[8] वृत्रहणा[9] हुवेऽहम्[10] ॥२॥

याभ्याम् । अजयन् । स्वः । अग्रे । एव । यौ । आऽतस्थतुः । भुवनानि । विश्वा । [10]प्र । चर्षणी इति[10] । वृषणा । वज्रबाहू इति वज्रऽबाहू । अग्निम् । इन्द्रम् । वृत्रऽहना । हुवे । अहम् ॥ २ ॥

अग्रे पूर्वं याभ्याम् अग्नीन्द्राभ्याम् एव स्वः स्वर्गम् अजयन् स्वाधीनीकृतवन्तो देवाः । यौ च अग्नीन्द्रौ विश्वा विश्वानि भुवनानि भवन्ति भूतजातानि आतस्थतुः स्वमहिम्ना आक्रान्तवन्तौ व्याप्तवन्तौ । यौ च प्रचर्षणी[11] प्रकर्षेण द्रष्टारौ । स्वोपासकसंबन्धिकर्मफलस्येति शेषः । यद्वा चर्षणय इति मनुष्यनाम । प्रकृष्टाश्चर्षणयो मनुष्या ययोर्यष्टृत्वेन सन्तीति तौ । वृषणा वृषणौ वर्षितारौ अभिमतफलस्य । वज्रबाहू । वज्रो बाह्वोर्ययोरिति व्यधिकरणबहुव्रीहिः । वज्रः वर्जकम् आयुधम् । आयुधपाणी अत एव वृत्रहणा वृत्रहणौ वृत्रं हतवन्तौ । तादृशम् अग्निम् इन्द्रं च अहं जयकामः हुवे आह्वयामि ।

[12]उप त्वा[12] देवो अग्रभीच्चमसेन बृहस्पतिः ।
इन्द्र[13] गीर्भिर्न आ विश यजमानाय सुन्वते ॥ ३ ॥

उप । त्वा । देवः । अग्रभीत् । चमसेन । बृहस्पतिः ।
इन्द्र । गीःऽभिः । नः । आ । विश । यजमानाय । सुन्वते ॥ ३ ॥

हे इन्द्र त्वा त्वां बृहस्पतिः बृहतां महतां देवानां पतिः हिताचरणेन पालयिता एतन्नामा देवः चमसेन । चमन्ति अदन्ति अत्र सोमम् इति चमसः सोमपात्रम् । तेन उपाग्रभीत् उपगृहीतवान् । अन्यत्र यथा न गच्छसि तथा स्वाधीनं कृतवान् इत्यर्थः । ग्रहेर्लुङ् । 'हृग्रहोर्भः°' ( पावा ८,२,३२ ) । अतो बृहस्पतिपरिग्रहात् हे इन्द्र सुन्वते सोमम् अभिषुण्वते यजमानाय । 'क्रियार्थोपपदस्य°' ( पा २,३,१४ ) इति चतुर्थी । यजमानं धनादिना पोषयितुं नः प्रयोक्तॄणाम् अस्माकं गीर्भिः स्तुतिभिः आ विश । स्तूयमान आगच्छेत्यर्थः ।

---

१. याभ्यां ३स्वर्रजनन्नग्र मै ४,१२,६; याभ्यां स्वरितो यन्त्यग्रे पै २०,१८,९; याभ्युं सुवुरजयुन्नग्रे तैव्रा २,४,५,७; °स्वऽ३ँ° A,B; °स्वर° R. २. या आत° मै.; °र्भुवनस्य तैव्रा. ३. मध्ये तैव्रा. ४. तु. मै. तैव्रा.; वैतु. मुको. शंपा. RW. प्रचर्षणी. ५. वृषणा तैव्रा. ६. °बाहुम् मै. ७. अग्नी इन्द्रा तैव्रा. ८. °हणं मै. ९. हुवेम मै.; हुवाम पै.; हुवे वाम् तैव्रा. १० तु. मंगा.; वैतु. मुको. शंपा. प्रचर्षणी इति प्रऽचर्षणी. ११. वैतु. मंगा. १२. उपैनं पै २०,१२,४. १३. इन्द्रं P³,O.

इन्द्र॑स्य कुक्षिर॑सि सोम॒धान॑ आ॒त्मा 'दे॒वाना॑मु॒त मानु॑षाणाम्'[1] ।
इ॒ह प्र॒जा ज॑नय॒ यास्त॑ आ॒सु या अ॒न्यत्रे॒ह तास्ते॑ रमन्ताम्[2] ॥ १ ॥

इन्द्र॑स्य । कु॒क्षिः । अ॒सि॒ । सो॒म॒ऽधान॑ः । आ॒त्मा । दे॒वाना॑म् । उ॒त । मानु॑षाणाम् ।
इ॒ह । प्र॒ऽजाः । ज॒न॒य॒ । याः । ते॒ । आ॒सु[3] । याः । अ॒न्यत्र॑ । इ॒ह । ताः । ते॒ । र॒म॒न्ता॒म् ॥ १ ॥

अत्र अतिसृज्यमानो वृषभः पूतभृत्पात्रं वा संबोध्यते । हे वृषभ हे पूतभृत्कलश वा त्वं सोमधानः । सोमो धीयते निधीयतेऽत्रेति सोमधानः । अधिकरणे ल्युट् । सोमाधारभूतः इन्द्रस्य कुक्षिः जठरम् असि । तथा । उतशब्दः चार्थे । देवानां मानुषाणां च आत्मा शरीरम् असि । किं च इह लोके प्रजाः पुत्रादिका जनय उत्पादय । आसु पुरोवर्तिनीषु गोषु यजमानादिरूपासु वा विक्षु ते त्वदर्थं या विद्यन्ते अन्यत्र अन्यस्मिन् देशे या गावो यजमानादिरूपा वा प्रजा विद्यन्ते ताः प्रजा इह अस्मिन् लोके ते त्वदर्थं रमन्ताम् सुखेन विहरन्तु । यद्वा इह आसु गोषु प्रजासु वा प्रजाः जनय यास्त्वदर्थम् आसु[4] बभूवुः । तथा अन्यत्र च या भवन्ति ता इह अस्मिन् प्रदेशे त्वदर्थं रमन्ताम् । आसु । 'ऊडिदम्[5]' ( पा ६,१,१७१ ) इति विभक्तेरुदात्तत्वम् । यद्वा अस्तेर्लिटि प्रथमपुरुषबहुवचने उसि अन्त्यलोपश्छान्दसः । भूभावो व्यत्ययेन न प्रवर्तते । यद्वृत्तयोगाद् अनिघाते प्रत्ययस्वरेण अन्तोदात्तत्वम् । अस गतिदीप्त्यादानेषु । अस्माद् वा लिट् । सुबन्तपक्षे तिङन्तपक्षे च स्वरः समानः ।

शुम्भ॑नी॒ द्यावा॑पृथि॒वी अन्ति॑सुम्ने॒ महि॑व्रते ।
आपः॑ स॒प्त 'सु॑स्रुवुर्दे॒वीस्ता' नो॑ मुञ्च॒न्त्वंह॑सः ॥ १ ॥

शुम्भ॑नी॒ इति॑ । द्यावा॑पृथि॒वी इति॑ । अन्ति॑सुम्ने॒ इत्यन्ति॑ऽसुम्ने । महि॑व्रते॒ इति॑ महि॑ऽव्रते । आप॑ः । स॒प्त । सु॒स्रु॒वुः । दे॒वीः । ताः । नः॒ । मु॒ञ्च॒न्तु॒ । अंह॑सः ॥ १ ॥

शुम्भनी शुम्भन्यौ । शुभ शुम्भ शोभार्थे । अस्मात् ल्युट् । सर्वस्य शोभाकारिण्यौ । द्यावापृथिव्योर्मध्ये विश्वस्यावस्थानात् अन्तःस्वप्ने[6] । स्वपन्तीति स्वप्नाः अज्ञानावृता जनाः । 'स्वपो नन्' ( पा ३,३,९१ ) इति नन्प्रत्ययः कर्तरि व्यत्ययेन भवति । स्वप्नाः अचेतनाश्चेतनाश्च ययोरन्तः मध्ये वर्तन्ते तादृश्यौ महिव्रते महद् व्रतं कर्म ययोस्ते द्यावापृथिवी द्यावापृथिव्यौ । वर्तेते इति शेषः । तथा

---

१. °नामसि विश्वरूप. पै २०,९,९. २. स्वधिता गृणन्तु पै. ३. आ॒सु P[a].
४. आसु. S'. ५. सुंसुवुर्दे॒वी° K,K[m],V; सवन्तीरसा पै १८,११,५. ६. वैद्य. मेसा.

सप्त सर्पणस्वभावाः सप्तसंख्याका वा देवीः देव्यः द्योतमाना आपः मुहुः स्रवन्ति। स्रु गतौ। ताः द्यावापृथिव्यौ आपश्च अंहसः पापाद् नः अस्मान् मुञ्चन्तु मोचयन्तु पृथक् कुर्वन्तु।

'मुञ्चन्तु मा शपथ्या३दथो वरुण्यादुत।
अथो यमस्य पड्वीशाद् विश्वस्माद् देवकिल्बिषात्॥ २॥

मुञ्चन्तु। मा। शपथ्यात्। अथो इति। वरुण्यात्। उत।
अथो इति। यमस्य। पड्वीशात्। विश्वस्मात्। देवऽकिल्बिषात्॥ २॥

'मुञ्चन्तु मा शपथ्यात्' इत्येषा पूर्वमेव (अ ६,९६,२) व्याख्याता।

इति दशमेऽनुवाके द्वितीयं सूक्तम्।

स्त्रीपुरुषयोः परस्परविद्वेषणार्थं [2]बाणापर्ण्याख्यौषधिचूर्णं लोहिताजायाः क्षीरद्रप्सेन संमिश्र्य 'तृष्टिके' इति द्व्यृचेन अभिमन्त्र्य शय्यायां परिकिरेत्।

तथा दौर्भाग्यकरणार्थम् 'आ ते ददे' इत्यनया मन्त्रोक्तान् अवयवान् स्पृशन् अभिमन्त्रयेत विद्वेषिणं दृष्ट्वा जपेद् वा।

सूत्रितं हि—"'तृष्टिके' इति बाणापर्णाम्[2]। 'आ ते ददे' (अ ७,११९.) इति मन्त्रोक्तानि संस्पृशति[3]। अपि चान्वाह" (कौसू ३६,३८-४०) इति।

रक्षोग्रहादिभैषज्यार्थं 'प्रेतो यन्तु' इत्यनया आज्यसमित्पुरोडाशादिशष्कुल्यन्तद्रव्याणां त्रयोदशानाम् अन्यतमं जुहुयात्। "'प्राग्नये' (अ ६,३४), 'प्रेतः' (अ ७,११९,१) इत्युदर्धात" (कौसू ३१,४) इति हि सूत्रम्।

नैर्ऋतकर्मसु चतुर्थे कर्मणि काकस्य जङ्घायां सपुरोडाशं लोहकण्टकं बद्ध्वा 'प्र पतेतः' (अ ७,१२०,१) इत्यनया तं काकं विसृजेत्।

पञ्चमे नैर्ऋतकर्मणि सूत्रोक्तलक्षणैर्वस्त्रैः परिधानाच्छादनशिरोवेष्टनानि कृत्वा कर्ता 'या मा लक्ष्मीः' (अ ७,१२०,२) इत्यनया लोहितखण्डसहितम् उष्णीषम् उदके प्रक्षिपेत्।

'एकशतं लक्ष्म्यः' (अ ७,१२०,३) इत्यनया आच्छादनवस्त्रं लोहखण्डेन सह अप्सु प्रक्षिपेत्।

'एता एनाः' (अ ७,१२०,४) इत्यृचा परिधानीयं लोहेन सह अप्सु प्रक्षिपेत्।

तद् उक्तं संहिताविधौ—'कृष्णचैलपरिहितो[4] निर्ऋतिकर्माणि [5]प्रयुङ्क्ते' इति[5] प्रक्रम्य "कृष्णशकुनेः सव्यजङ्घायामश्ममनुप्रब्ध्य[6] अङ्के पुरोडाशं 'प्र पतेतः' इत्यनाहृत प्रपातयति[7]। नीले

१. ६,९६,२ द्रि. द्र. २. बाणप° S'. ३. 'स्पृशं° S'. ४. 'परिहृतो S'.
५. प्रयुङ्क्त इति S'. ६. 'नुबध्य Bl. ७. प्रपादयति Bl.

संधाय लोहितमाच्छाद्य शुक्रं[1] परिगृह्य द्वितीययोर्णीपमङ्केनोपसाद्य सव्येन सहाङ्केनावाङ् अप्सु प्रविध्यति[2]। तृतीययाच्छन्नं चतुर्थ्या संवीनम्" (कौसू १८,१;१६-१८) इति।

काम्यकर्मसु विघ्नरूपदुःस्वप्नदर्शनदोषपरिहारार्थं[3] 'प्र पतेतः पापि लक्ष्मि' इति चतसृभिर्दुःस्वप्नदर्शनम् अभिषिञ्चेत्। 'चत्वारः खलु विनायका भवन्ति' (शाक ४?) इति प्रक्रम्य शान्तिकल्पेऽभिहितम्[4] — 'ताभिष्ट्वाम् अभिषिञ्चामि पावमानीः पुनन्तु त्वा। प्र पतेतः पापि लक्ष्मीति चतस्रः' (शांक ६,१६?) इति।

सर्वज्वरभैषज्यार्थं सूत्रोक्तप्रकारेण मण्डूकं बद्ध्वा खट्वाया अधः संस्थाप्य तस्या उपरि स्थितं व्याधितं 'नमो रूराय' इति द्व्यृचाभिमन्त्रितोदकेन अवसिञ्चेत्। सूत्रितं हि— "'नमो रूराय' (अ ७,१२१) इति [5]शयने निवेश्य इषीकाञ्जितं मण्डूकं[5] नीललोहिताभ्यां सूत्राभ्यां सकक्षं बद्ध्वा" (कौसू ३२,१७) इति।

स्वस्त्ययनकामः 'आ मन्द्रैः' इति द्व्यृचेन इन्द्रस्य यागम् उपस्थानं वा कुर्यात्। "'त्युमू षु' (अ ७,९०), 'त्रातारम्' (अ ७, ९१), 'आ मन्द्रैः' (अ ७,१२२) इति स्वस्त्ययनकामः" (कौसू ५९,१४) इति हि सूत्रम्।

शवसंस्कारानन्तरं कर्ता प्रतिदिनं स्वस्त्ययनार्थम् 'आ मन्द्रैः' इति जपेत्।

तथा अग्निष्टोमे हारियोजनग्रहहोमानुमन्त्रणम् 'आ मन्द्रैः' इति कुर्यात्। "हारियोजनहोमम् 'आ मन्द्रैः'" (वैताश्रौ २३,९) इति वैतानसूत्रात्।

परसेनात्रासनार्थं 'मर्माणि ते' इत्यनया कवचम् अभिमन्त्र्य धारणार्थं राज्ञे दद्यात्। "'मर्माणि ते' (अ ७,१२३) इति 'क्षत्रियं संनाहयति[6]'" (कौसू १६,७) इति हि सूत्रम्।

महाव्रते दुन्दुभ्याहननानन्तरं 'मर्माणि ते' इति राजानं संनाहयेत्। उक्तं वैताने—"तीर्थदेशे[7] राजानमन्यं वा 'मर्माणि ते' इति संनद्धम्" (वैताश्रौ ३४,१२;१३) इति।

तृष्टिके तृष्टवन्दन उदमूं छिन्धि तृष्टिके।
यथा कृतद्विष्टासोऽमुष्मै[8] शेप्यावते[9] ॥१॥

तृष्टिके। तृष्टऽवन्दने। उत्। अमूम्। छिन्धि[10]। तृष्टिके।
यथा। कृतऽद्विष्टा। असः। अमुष्मै। शेप्याऽवते[11] ॥ १ ॥

हे तृष्टिके। कुत्सिता तृष्टा तृष्टिका। 'कुत्सिते' (पा ५,३,७४) इति कप्रत्ययः। ञितृष पिपासायाम् इत्यस्मात् तृष्टशब्दः। अतिपिपासया अन्तः शरीरे दाहो जन्यते। अत्र जन्ये

---

१. शुक्लं S'. २. तु. S', दा.; चेतु. Bl. अपविध्यति. ३. 'प्रदोष' S'.
४. 'कल्पोदितम् S'. ५. शकुर्नानिवेषीकाञ्जिमण्डूकं Bl. ६. क्षत्रियसंनाह° S'.
७. तीर्थदेशे S'. ८. गृ द ष प च म स्त्वी अमुष्मै पै २०,१६,१. ९. शेप्या° K,K$^{m}$,V; शप्या° WM. १०. छिंधि P. ११. शेप्यां° P$^{x}$.

जनकशब्दः। अतः तृष्टशब्दस्य दाहजनकत्वमात्रमेव अत्रार्थो विवक्षितः। हे कुत्सिते दाहजनिके हे वाणापर्ण्याख्यौषधे[1] हे तृष्टवन्दने। वन्दना नाम लतानां वृक्षाणां चोपरि प्ररूढास्तदीयशाखाम् आवेष्टमाना विभिन्नपर्णलताविशेषाः। तृष्टाः दाहजनिका वन्दना लताविशेषा यस्याः सा ओषधिः स्वयमपि दाहजनिका दाहकलतोपेता च। एतादृशि अतिरूक्षे ओषधे त्वम् अमूं स्त्रियम् उच्छिन्धि उद्गृह्य विभिन्नां कुरु। भोक्तुः पुरुषाद् बलात्कारेण पृथक्कुर्वित्यर्थः। उच्छेदनप्रकारमेवाह—हे तृष्टिके कोपजनिके हे ओषधे शेप्यावते। शेप इति पुंस्प्रजननस्य नाम। तत्र भवं शेप्यं वीर्यं तद्वते प्रजननसामर्थ्यवते संभोगक्षमाय अमुष्मै पुरुषाय यथा कृतद्विष्टा कृतं संपादितं द्विष्टं द्वेषणं क्रोधो यया सा द्वेषकारिणी यथा येन प्रकारेण असः भवेः। अस्तेर्लेटि अडागमः। योषिदोषध्योः अभेदविवक्षया भवेरिति मध्यमपुरुषप्रयोगः। यद्वा अस इति। तिप्स्थाने व्यत्ययेन सिप्। यथा असौ योषित् पुरुषाय द्विष्टा भवेत् तथा अमूम् उच्छिन्धीति।

तृ॒ष्टासि॑ तृष्टि॒का 'वि॒षा वि॑षात॒क्य॑सि[2]।
परि॑वृक्ता यथास॑स्यृष॒भस्य॑[3] व॒शेव॑[4] ॥ २ ॥

तृ॒ष्टा। अ॒सि॒। तृ॒ष्टि॒का। वि॒षा। वि॒षा॒त॒की। अ॒सि॒।
परि॑ऽवृक्ता। यथा॑। अस॑सि। ऋ॒ष॒भस्य॑। व॒शाऽइ॑व ॥ २ ॥

हे ओषधे तृष्टिका कुत्सिता दाहजनिका त्वं तृष्टा दाहजनकस्वभावा असि भवसि। तृतीयपादगतो यथाशब्दः अत्रापि अनुषज्यते। यथा तृष्टासि। यथा च विषा विषस्वरूपा त्वं विषातकी। तकि कृच्छ्रजीवने। विषम् आतङ्कयति संयोजयतीति विषातकी। विषस्य संयोजयित्री असि। यथा च परिवृक्ता सर्वैः परिवर्जिता अससि भवसि। स्प्रष्टुम् अयोग्याऽसि। चरमः पादो दृष्टान्तः। ऋषभस्य पुंगवस्य वशेव। यथा वशा वन्ध्या गौः पुंगवस्य परिवर्जनीया भवति एवम् इयं योषिदपि भोगयोग्या च न भवेत्। यद्वा एकं विशेषणम् ओषधिपरतया द्वितीयं योषित्परतया व्याख्येयम्। यथा ओषधे त्वं तृष्टासि एवम् इयं योषित् तृष्टिका पुरुषस्य क्रोधरूपदाहजनिका भवेत्। यथा च ओषधे त्वं विषातक्यसि एवम् इयं योषित् विषा पुरुषस्य विषरूपिणी स्यात्। यथा विषम् अभोज्यम् एवम् इयम् इति विषेत्युक्तम्। यथा च ओषधे त्वं परिवृक्ता सर्वैः प्राणिभिः परिवर्जिता अससि भवसि एवम् इयं योषित् स्वपुरुषस्य परिवृक्ता संभोगेन त्यक्ता भवेत्। तत्र दृष्टान्तः— ऋषभस्य वशेवेति। यथा पुंगवस्य वन्ध्या गौर्भोग्या न भवति एवम् इयं पुरुषस्य भोग्या न स्याद् इति।

---

१ याणप° S'. २. वृषा वृषा° पै २०,१६,२. ३. °षभेण पै. ४. वशा यथा पै.

आ ते॑ ददे व॒क्षणा॑भ्य॒ आ॑ ते॒ऽहं हृद॑याद् ददे॑ ।
आ ते॒ मुख॑स्य॒ 'सङ्का॑शा॒त् सर्वं॑ ते॒ वर्च॒ आ द॑दे' ॥ १ ॥

आ । ते॒ । द॒दे॒ । व॒क्षणा॑भ्यः । आ । ते॒ । अ॒हम् । हृद॑यात् । द॒दे॒ ।
आ । ते॒ । मुख॑स्य । सम्ऽका॑शात् । सर्व॑म् । ते॒ । वर्चः॑ । आ । द॒दे॒ ॥ १ ॥

हे नारि ते तव वक्षणाभ्यः । ऊरुसंधिर्वङ्क्षणो *[वक्षणः] इत्युच्यते । तेन स्त्रीप्रजननं लक्ष्यते । स्त्रीलिङ्गत्वं योनिशब्दापेक्षया बहुवचनं तु अवयवबहुत्वापेक्षया । यद्वा वक्ष रोषे इति धातुः । रुध्यते पुरुषो यैरिति । वक्षणाः व्यत्ययेन टाप् । कटिविकटयूरुपादेभ्य इत्यर्थः । तेभ्योऽङ्गेभ्यः वर्चः सौभाग्यलक्षणं तेजः आ ददे स्वीकरोमि । अपहरामीत्यर्थः । तथा हे नारि ते तव हृदयात् समीचीनपदार्थध्यायिनो धीरान्मनसः सकाशाद् वर्चः साधुपुरुषध्यानरूपं तेजः अहम् आ ददे । नारीविषयदौर्भाग्यकामोऽहम् अपहरामीत्यर्थः । तथा ते तव मुखस्य विश्वाह्लादकस्य वदनस्य संकाशाद् वर्चः विश्वसंमोहनरूपं तेजः । आ इति उपसर्गश्रुतेर्ददे इत्यनुषङ्गः । किं बहुना ते तव सर्वम् सर्वावयववर्ति वर्चः सौभाग्यलक्षणं तेजः आ ददे अपहरामि । 'आङो दोऽनास्यविहरणे' (पा १,३,२०) इति आत्मनेपदम् । अयं मन्त्रः प्रकरणात् स्त्रीविषयदौर्भाग्यकरणे विनियुज्यते ।

प्रेतो य॑न्तु॒ व्या॒ध्यः॒ प्रानु॒ध्याः॒ प्रो अश॑स्तयः ।
अ॒ग्नी र॑क्ष॒स्विनी॑र्हन्तु॒ सोमो॑ हन्तु दुर॒स्यतीः॑ ॥ २॥

प्र । इ॒तः । य॒न्तु॒ । विऽआ॑ध्यः । प्र । अ॒नुऽध्याः[3] । प्रो इति॑ । अश॑स्तयः ।
अ॒ग्निः । र॒क्ष॒स्विनीः॑ । ह॒न्तु॒ । सोमः॑ । ह॒न्तु॒ । दु॒र॒स्यतीः॑ ॥ २ ॥

व्याध्यः आधयो मानस्यः पीडाः । विविधा मनोनिष्ठाः पीडा व्याधयः रोगा वा । इतः अस्माद् रक्षोग्रहादिगृहीतात् पुरुषात् प्र यन्तु प्रगच्छन्तु । व्याङ्पूर्वाद् दधातेः किः । 'संज्ञापूर्वको विधिरनित्यः' इति 'जसि च' (पा ७,३,१०९) इति विहितस्य गुणस्याभावे यणादेशः । यद्वा विविधानि आध्यानानि दुश्चिन्तनानि प्रगच्छन्तु । व्याङ्पूर्वाद् ध्यायतेः 'अन्येभ्योऽपि दृश्यते' (पा ३,२,१७८) इति क्विपि संप्रसारणे[4] च यण् आदेशः । तथा अनुध्याः अनुध्यानानि रक्षोग्रहादिविषयाणि अनुगतानि संततानि स्मरणानि प्र । यन्तु इति अनुषङ्गः । तथा अशस्तयः अस्तुतयः परकृता निन्दाः हिंसा वा प्रो प्रेव यन्तु । किं च अग्निर्देवः

1. दंदे हृदयादधि पै २०,१६,३. 2 यद् वर्चं आत्मंस अम्या नुप्यति ? पै.
3. अनुध्याः P. 4. 'ध्यायतेः संप्रसारणं च' (पावा ३,२,१७८) इति.

रक्षस्विनीः रक्षो राक्षसः तद्वतीः तत्सहिताः पिशाचीः हन्तु विनाशयतु। सोमश्च दुरस्यतीः दुष्टं परेषाम् इच्छन्तीः हन्तु। 'दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति' ( पा ७,४,३६ ) इति दुष्टशब्दस्य क्यचि दुरस्भावो निपात्यते। तदन्तात् शतृप्रत्ययः। 'उगितश्च' ( पा ४,१,६ ) इति ङीप्।

प्र पतेतः 'पापि लक्ष्मि' नश्येतः प्रामुतः पत।
अयस्मयेनाङ्केन 'द्विषते त्वा सजामसि' ॥ १ ॥

प्र। पत। इतः। पापि। लक्ष्मि। नश्य। इतः। प्र। अमुतः। पत।
अयस्मयेन। अङ्केन। द्विषते। त्वा। आ। सजामसि ॥ १ ॥

हे पापि पापरूपिणि लक्ष्मि। अलक्ष्मीत्यर्थः। 'केवलमामक' ( पा ४,१,३० ) इत्यादिना पापशब्दात् ङीप्। पापि लक्ष्मि इत्युभयत्र 'अम्बार्थनद्योर्ह्रस्वः' ( पा ७,३,१०७ ) इति ह्रस्वत्वम्। इतः अस्मात् प्रदेशात् प्र पत प्रगच्छ। तथा इतः अस्मिन् प्रदेशे। सप्तम्यर्थे तसिः। नश्य अदृष्टा विनष्टा भव। णश अदर्शने। दैवादिकः। किं च अमुतः। अदःशब्दो विप्रकृष्टवाची। अतिदूराद् देशादपि प्र पत प्रगच्छ। अपि च हे अलक्ष्मि अतिदूराद् देशादपि प्रगच्छन्तीं त्वा त्वाम् अयस्मयेन अयोमयेन अङ्केन कण्टकेन सह द्विषते शत्रवे सचामसि[3] संबध्नीमः। षच समवाये। अयस्मयेनेति। 'अयस्मयादीनि च्छन्दसि[4]' ( पा १,४,२० ) इति निपातनाद् भसंज्ञायां पदसंज्ञानिबन्धनरुत्वाभावः।

या मा[5] लक्ष्मीः 'पतयालूरजुष्टाऽभिचस्कन्द' वन्दनेव वृक्षम्।
अन्यत्रास्मत् सवितस्तामितो धा हिरण्यहस्तो वसु नो रराणः ॥ २ ॥

या। मा। लक्ष्मीः। पतयालूः[7]। अजुष्टा। अभिऽचस्कन्द। वन्दनाऽइव[8]। वृक्षम्।
अन्यत्र। अस्मत्। सवितरिति। ताम्। इतः। धाः। हिरण्यऽहस्तः। वसु। नः। रराणः ॥ २ ॥

पतयालूः पातयित्री दौर्गत्यकारिणी। पत गतौ वा इति चुरादौ अदन्तः पठ्यते। तस्माद् आलुच्प्रत्ययः। स्त्रियामूङ्। अजुष्टा अप्रिया निन्द्या या लक्ष्मीः सा मा माम् अभिचस्कन्द अभितो व्याप्ता वर्तते। तत्र दृष्टान्तः — वन्दनेव वृक्षम् इति। वन्दना लताविशेष इति 'तृष्टिके तृष्टवन्दने' (अ ७,११८,१) इत्यत्र उक्तम्। सा यथा

---

१. पापलक्ष्मि पै २०,१७,७. २. यं द्विष्मस्तस्मिन् त्वा सजामः पै. ३. वैतु. मेरा. ४. च S'. ५. त्वा पै २०,१७,८. ६. °ष्टा हृदि च° पै. ७. तु. WM. सा.; वैतु. P पतय। लूः; P[1],J,Cp पतय। लूः. ८. तु. सा.; वैतु. मूको. (तु. शंपा. WM.) वन्दनाऽइव.

वृक्षम् अभित आवेष्ट्य वर्तते । स्कन्दिर् गतिशोषणयोः । अलक्ष्मीः मा मां शोषयामास वा । यथा वृक्षं वन्दना शोषयति । प्ररूढवन्दनस्तरुः शुष्यतीति प्रसिद्धम् । हे सवितः सर्वस्य प्रेरक देव ताम् अलक्ष्मीम् अस्मत् अस्मत्तः इतः अस्माद् अन्यत्र प्रदेशे धाः धेहि स्थापय । दधातेर्लेटि 'इतश्च' लोपः" ( पा ३,४,९७ ) इति सिप इकारलोपः । किं कुर्वन् । हिरण्यहस्तः सुवर्णयुक्तपाणिः हिरण्मयपाणिर्वा नः अस्माकं वसु धनं रराणः प्रयच्छन् । रा दाने । लिटः कानच् । 'हिरण्यपाणिमूतये सवितारमुप ह्वये' ( ऋ १,२२,५ ) इत्यादौ सवितुर्हिरण्यहस्तत्वम् आम्नायते ।

एकंशतं लक्ष्म्यो३[1] मर्त्यस्य साकं तन्वा॒ जनुषोऽधि[2] जाताः ।
तासां पापिष्ठा निरितः[3] प्र हिण्मः शिवा अस्मभ्यं[4] जातवेदो नि यच्छ ॥३॥

एकऽशतम् । लक्ष्म्यः । मर्त्यस्य । साकम् । तन्वा । जनुषः । अधि । जाताः ।
तासाम् । पापिष्ठाः । निः । इतः । प्र । हिण्मः । शिवाः । अस्मभ्यम् । जातऽवेदः । नि । यच्छ ॥३॥

एकशतम् एकाधिकशतसंख्याका लक्ष्म्यः मर्त्यस्य मरणधर्मणः मनुष्यस्य तन्वा शरीरेण साकम् सह जनुषः अधि । अधिः पञ्चम्यर्थाऽनुवादी । जन्मनः उत्पत्तिप्रभृति जाताः उत्पन्नाः । मनुष्यस्य शरीरोत्पत्तिसमकाल एव एकशतं लक्ष्म्य उत्पन्नाः । तासां लक्ष्मीणां मध्ये पापिष्ठाः अतिशयेन पापीः अलक्ष्मीः इतः अस्मात् प्रदेशाद् निः निःशेषं प्र हिण्मः प्रेषयामः अपसारयामः । हि गतौ वृद्धौ च । स्वादित्वात् श्नुः । 'हिनुमीना' ( पा ८,४,१५ ) इति णत्वम् । 'लोपश्चास्यान्यतरस्यां म्वोः' ( पा ६,४,१०७ ) इति उकारलोपः । हे जातवेदः जातानां वेदितः अग्ने तासां मध्ये याः शिवाः मङ्गलकारिण्यो लक्ष्म्यः ताः अस्मभ्यं नि यच्छ नियमय । स्थापयेत्यर्थः । यमेः 'इषुगमियमां छः' ( पा ७,३,७७ ) इति छादेशः । यद्वा नि यच्छ नितरां प्रयच्छ । दाण् दाने । 'पाघ्रा' ( पा ७,३,७८ ) इत्यादिना यच्छादेशः ।

एता एना व्याकरं खिले 'गा विष्ठिता' इव ।
रमन्तां पुण्या[6] लक्ष्मीर्याः पापीस्ता अनीनशम्[7] ॥ ४ ॥

एताः । एनाः । विऽआकरम् । खिले । गाः । विस्थिताःऽइव ।
रमन्ताम् । पुण्याः । लक्ष्मीः । याः । पापीः । ताः । अनीनशम् ॥ ४ ॥

---

१. नास्ति S'. २. लक्ष्म्यो३ B[b],D,K,K[m],R,S[m],V,Cs; लक्ष्मीः पै २०,१७,१०.
३. या जनुष इह पै. ४. उदवः पै.; वदतः पै [गुको.]. ५. अस्यं पै २०,२०,१.
६. गर्दभीर् पै २०,१७,७. ७. दन्त्रिया पै. ८. 'नशं A,K[m],R.

एताः निर्दिष्टा एनाः एकशतं लक्ष्म्य इत्यन्वादिष्टा लक्ष्मीः व्याकरम् विविच्य आकरोमि द्विधा करोमि । करोतेर्लुङि 'कृमृदृरुहिभ्यः' (पा ३,१,५९) इति च्लेः अङ् । 'ऋदृशोऽङि गुणः' (पा ७,४,१६) इति गुणः । तत्र दृष्टान्तः—यथा खिले व्रजे विष्ठिताः विशेषेण संभूय स्थिता एकत्र प्रदेशेऽवस्थिता गा विविञ्जन्ति गोपालास्तत्तत्कार्यकरणाय । तत्र पुण्याः कल्याण्यो लक्ष्मीः लक्ष्म्यः रमन्ताम् मयि सुखेन निवसन्तु । याः पापीः पापकारिण्यो दुर्लक्ष्म्यः ताः सर्वा अनीनशन्[1] । नश्यन्तु इत्यर्थः । स्वार्थिको णिच् । नाशयन्तु वा देवाः ।

नमो॑ रू॒राय॒ च्यव॑नाय॒ नोद॑नाय[2] धृ॒ष्णवे॑ ।
नम॑ः शी॒ताय॑ पूर्वकाम॒कृत्व॑ने ॥ १ ॥

नम॑ः । रू॒राय॑[3] । च्यव॑नाय । नोद॑नाय[2] । धृ॒ष्णवे॑ ।
नम॑ः । शी॒ताय॑ । पू॒र्व॒का॒म॒ऽकृत्व॑ने ॥ १ ॥

च्यवनाय । च्युङ् प्लुङ् गतौ । 'अनुदात्तेतश्च हलादेः' (पा ३,२,१४९) इति युच् । च्यावयित्रे शारीरस्वेदपातयित्रे नोदनाय । नुद प्रेरणे । इतस्ततः प्रेरकाय विक्षेपयित्रे धृष्णवे । धृष प्रसहने इति चुरादौ पठ्यते । आधृषाद्वा इति विकल्पितो णिच् । 'त्रसिगृधिधृषिक्षिपेः क्नुः' (पा ३,२,१४०) इति क्नुः । प्रसहनकारिणे रूराय उष्णज्वराय ज्वराभिमानिने देवाय नमः नमस्कारोऽस्तु । तथा पूर्वकामकृत्वने पूर्वेषाम् अभिलाषाणां कर्तित्रे छेत्त्रे शीताय ज्वराय शीतज्वराभिमानिने नमः नमस्कारोऽस्तु । शीतज्वरो हि इदं करोमि इदं करोमीति पूर्वं काम्यमानम् अभिलाषं निकृन्तति चिरकालं बाधाकारित्वात् । कृती छेदने । 'अन्येभ्योऽपि दृश्यन्ते' (पा ३,२,७५) इति क्वनिप् । 'नेड्वशि कृति' (पा ७,२,८) इति इण्निषेधः ।

यो अ॒न्ये॒द्युरु॒भ॒य॒द्युर॒भ्येती॒मं म॒ण्डूक॑म॒भ्ये॑त्वव्र॒तः ॥ २ ॥

यः । अ॒न्ये॒द्युः । उ॒भ॒य॒ऽद्युः । अ॒भि॒ऽएति॑ । इ॒मम् । म॒ण्डूक॑म् । अ॒भि । ए॒तु॒ । अ॒व्र॒तः ॥ २ ॥

यो ज्वरः अन्येद्युः अन्यस्मिन् दिवसे इमं पुरुषम् अभ्येति[4] अभिगच्छति । यश्च उभयेद्युः[1] उभयोर्दिवसयोः । अतीतयोरिति शेषः । अभ्येति । चातुर्थिकज्वर इत्यर्थः । इदम् अनियतकालागामिनो ज्वरस्य उपलक्षणम् । 'सद्यःपरुत्परार्यैषमः'

---

१. वेतु. मंपा. २. चोद॑ A,B[b],K,K[m],R,Cs,P,P[s],J,V,WM.RW.
३. रुराय॑ P. ४. अभ्यैति S'.

( पा ५,३,२२ ) इति सूत्रे अन्येद्युरुभयेद्युरिति शब्दौ निपातितौ । अव्रतः । व्रतशब्दो नियमवाची । अनियतकालः स ज्वरः मण्डूकम् भेकम् अन्येतु अभिगच्छतु ।

आ मन्द्रैरिन्द्र हरिभिर्याहि[1] मयूररोमभिः ।
मा त्वा केचिद् [2]वि यमन् विं न पाशिनोऽति धन्वेव ताँ[3] इहि ॥१॥

आ । मन्द्रैः । इन्द्र । हरिऽभिः । याहि[4] । मयूररोमऽभिः ।
मा । त्वा । के । चित् । वि । यमन् । विम् । न । पाशिनः । अति । धन्वऽइव । तान् । इहि ॥ १ ॥

हे इन्द्र मन्द्रैः मदशीलैः स्तुत्यैर्वा मयूररोमभिः मयूररोमसदृशरोमयुक्तैः श्यामवर्णैः हरिभिः अश्वैः आ याहि आगच्छ । हे इन्द्र त्वा त्वां के चित् स्तोतारः मा वि यमन् स्तुतिभिर्मां विशेषेण नियच्छन्तु । मा निरौत्सुरित्यर्थः । तत्र दृष्टान्तः — वि न पाशिनः इति । नशब्द उपमार्थे । यथा विम् पक्षिणं पाशिनः पाशवन्तो व्याधाः पाशैर्बध्नन्ति तद्वत् । तान् अन्यान् स्तोतॄन् अति । अतिक्रमणे अतिः कर्मप्रवचनीयः । अतीत्य इहि गच्छ अस्मान् । तत्र दृष्टान्तः— धन्वेव इति । यथा धन्व निर्जलं मरुप्रदेशं पिपासिताः पान्थाः शीघ्रम् अतियन्ति तद्वत् । मद्यतिरिक्तान् अन्यान् स्तोतॄन् अतीत्य अस्मान् एव शीघ्रम् आगच्छेत्यर्थः ।

मर्माणि ते वर्मणा[4] छादयामि सोमस्त्वा राजाऽमृतेनानु[5] वस्ताम् ।
उरोर्वरीयो [6]वरुणस्ते कृणोतु[7] जयन्तं त्वाऽनु[7] देवा मदन्तु ॥ २ ॥

मर्माणि । ते । वर्मणा । छादयामि । सोमः । त्वा । राजा । अमृतेन । अनु । वस्ताम् ।
उरोः । वरीयः । वरुणः । ते । कृणोतु । जयन्तम् । त्वा । अनु । देवाः । मदन्तु ॥ २ ॥

हे जयकाम राजन् ते त्वदीयानि मर्माणि मर्मस्थानानि वर्मणा कवचेन छादयामि प्रयोक्ता अहं संवृणोमि । सोमो राजा त्वा त्वाम् अमृतेन अविनाशिना तेजसा वा अनु वस्ताम् मर्मच्छादनानन्तरम् आच्छादयतु । वस आच्छादने । आदादिकः । अनुदात्तेत् । लोटि 'आमेतः' ( पा ३,४,९० ) इति आमादेशः । तथा उरोः बहोरपि वरीयः उरुतरं सुखं वरुणः शत्रुनिवारकः एतन्नामा देवः ते तुभ्यं कृणोतु करोतु । वरीय इति । उरुशब्दाद् ईयसुन् । 'प्रियस्थिर' (पा ६,४,१५७)

---

१. यु॰ P,J; येत्तु॰ A,Bᵇ,D,K,Kᵐ,R,Sᵐ,Cs,WM. °याहि. २. नि[1] यमुरिव[3] वौ १,२४६; न्येमुरिव पाशिनः । दृधन्वेव ता तैआ १,१२,२. † नि अ ३,४५,१ मा २०,५३. ३. याहि P⁸,Cp. ४. यमैभिन् तं ४,६,४,५. ५. °तेनाभि तं. ६. वरिवस्ते अग्नु तं. ७. त्वामनु तं.

इत्यादिना वरादेशः । तथा देवाः इन्द्राद्याः सर्वे जयन्तम् परसेनां त्रासयन्तं त्वा 'त्वाम् अनु' मदन्तु अनुहृष्यन्तु । जहि भिन्धि इत्येवंविधैर्वाक्यैः प्रोत्साहयन्तु इत्यर्थः ।

इति तृतीयं सूक्तम् ।

इति सप्तमकाण्डे दशमोऽनुवाकः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

श्रीमद्राजाधिराजराजपरमेश्वरश्रीवीरहरिहरमहाराजधुरंधरेण
सायणार्येण विरचिते अथर्वसंहिताभाष्ये
सप्तमकाण्डः समाप्तः ।



१. त्वाम् इन्द्राद्या अनु S'.

अथ

# अष्टमं काण्डम्

श्रीगणाधिपतये नमः ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अष्टमकाण्डे पञ्चानुवाकाः । तत्र आद्येऽनुवाके पञ्च सूक्तानि । तेषु 'अन्तकाय मृत्यवे' इत्यादिसूक्तद्वयम् अर्थसूक्तम् इत्युच्यते । अनेन उपनयनकर्मणि माणवकस्य नाभिं संस्पृश्य आचार्यो जपं कुर्यात् । उपनयनम् प्रक्रम्य सूत्रितम् — 'दक्षिणेन पाणिना 'नाभिदेशेऽभिसंस्तभ्य'[1] जपति । ××× 'अन्तकाय मृत्यवे', 'आ रभस्व' (अ ८,२)" इति (कौसू ५५,१६;१७) ।

तथा [2]आयुष्कामस्य 'अन्तकाय' इति[2] सूक्तद्वयेन शरीरम् अभिमन्त्रयेत ।

तथा ऋषिहस्तेन आयुष्कामस्य शरीरम् अभिमन्त्रयेत ।

सूत्रितं हि — 'उप प्रियम्' (अ ७,३३), 'अन्तकाय मृत्यवे', 'आ रभस्व' इति (कौसू ५८,३) ।

तथा अस्य अर्थसूक्तस्य आयुष्यगणे पाठाद् 'विश्वकर्मभिरायुष्यैः स्वस्त्ययनैराज्यं जुहुयात्' (कौसू १३९,७) इत्यादिषु विनियोगोऽनुसंधेयः ।

तथा त्रिंशन्महाशान्तितन्त्रभूतायां महाशान्तौ 'अन्तकाय' इत्यनेन जपं कुर्यात् । उक्तं शान्तिकल्पे — "पुनस्तदेव जप्यं तु शंतातीयम् अथ 'आ व्रतः' (अ ५,३०,१) । 'अन्तकाय', 'आ रभस्व' इति" (नाक २३,३) इति ।

अन्तकाय मृत्यवे नमः प्राणा अपाना इह ते रमन्ताम् ।
इहायमस्तु पुरुषः सहासुना सूर्यस्य भागे अमृतस्य लोके ॥ १ ॥

अन्तकाय । मृत्यवे । नमः । प्राणाः । अपानाः । इह । ते । रमन्ताम् ।
इह । अयम् । अस्तु । पुरुषः । सह । असुना । सूर्यस्य । भागे । अमृतस्य । लोके ॥१॥

---

१. 'देशतं' S'; 'देशेऽभिसं' Bl. २. आयुष्कामांतकायेति S'. ३. प्राणापाना पै १९,१,१ [मूको.].

आयुष्कामस्य आयुर्वृद्धिः मृत्यावधीनेति तन्नमस्कार आदौ क्रियते— अन्तकाय अन्तं करोतीत्यन्तकस्तस्मै सर्वप्राणिनाशकर्त्रे मृत्यवे प्राणिवियोजकाय एतन्नामकाय देवाय नमः नमस्कारः । अस्त्विति शेषः । हे आयुष्काम माणवकादे ते तव प्राणाः । प्राणन्तीति प्राणाः बहिर्मुखसंचारिणो वायवः । अपानाः । अपानन्तीत्यपानाः अवाङ्मुखसंचारिणः । ते च अन्तकानुग्रहाद् इह अस्मिन् शरीरे रमन्ताम् क्रीडन्तु । प्राणापहर्तुर्मृत्योर्नमस्कारेण प्रीतत्वात् तद्विषयभीतिम् अपहाय सुखेन संचरन्तु इत्यर्थः । प्राणापानयोर्व्यापारवृत्तेर्बहुत्वाद्[1] बहुवचनप्रयोगः । एवं प्राणापानयोरनपगमम् आशास्य इदानीं तत्सहितस्य पुरुषस्य अनपगतिम्[2] आशास्ते— अयं प्राणप्रच्युतिं शङ्कमानः पुरुषः असुना प्राणेन । [3]वृत्तिबहुत्वानपेक्ष्यात् सामान्याभिप्रायेण[3] एकवचनम् । तेन सह सर्वदा अविनाभूतः सन् इह भूलोक एव अस्तु भवतु । इह अस्त्विति यद् उक्तं तद् विशिनष्टि— सूर्यस्य आदित्यस्य भागे प्रदेशविशेषे भूलोके । सूर्यव्याप्तेर्विषयभूतास्त्रयो भागाः द्यौरन्तरिक्षं भूश्च । तत्र अपेक्षितत्वाद् इह भागशब्देन भूलोकः परिगृह्यते । तम् एव विशिनष्टि— अमृतस्य लोके । अमृतशब्देनात्र पौत्रादिरूपेणावस्थानम्[4] अभिधीयते मनुष्यैराशास्यमानत्वात् । श्रूयते हि— 'प्रजामनु प्रजायसे[5] तदु ते मर्त्यामृतम्' (तैब्रा १,५,५,६) इति । तथाविधस्य अमृतस्य लोके । लोक्यत इति लोकः स्थानं भूलोक इत्युक्तं भवति ।

उदे॑नं॒ भगो॑ अग्रभी॒दुदे॑नं॒ सोमो॑ अंशु॒मान् ।
उदे॑नं म॒रुतो॑ दे॒वा उदि॑न्द्रा॒ग्नी स्व॒स्तये॑ ॥ २ ॥

उत् । ए॒न॒म् । भगः॑ । अ॒ग्र॒भी॒त् । उत् । ए॒न॒म् । सोमः॑ । अं॒शु॒ऽमान् ।
उत् । ए॒न॒म् । म॒रुतः॑ । दे॒वाः । उत् । इ॒न्द्रा॒ग्नी इति॑ । स्व॒स्तये॑ ॥ २ ॥

भगो नाम आदित्यमूर्तिविशेषः । 'अंशश्च भगश्च' (तैआ १,१३,३) इति अदितिपुत्राणां मध्ये श्रवणात् । सर्वप्राणिभिर्भजनीयो भगो देवः एनं मूर्च्छालक्षणे अन्धे तमसि प्रविशन्तं पुरुषम् उद् अग्रभीत् उद्धृतवान् । 'हृग्रहोर्भश्छन्दसि हस्य' (पावा ८,२,३२) इति भत्वम् । तथा अंशुमान् अमृतमयैरंशुभिस्तद्वान् सोमो देवः । एनम् उत् । अग्रभीत् इत्यनुषज्यते । एवं मरुतः एकोनपञ्चाशत्संख्याका देवा एनम् उत् । अग्रभीषुरिति वचनविपरिणामेन अनुषङ्गः कर्तव्यः । एवम् इन्द्राग्नी इन्द्रश्च अग्निश्च उभावपि मुख्यौ देवौ उद् अग्रहीष्टाम् । अत्र द्विवचनविपरिणामः । किमर्थम् उद्ग्रहणम् इति तत्राह— स्वस्तये । सु अस्तीति स्वस्तिः । क्षेमायेत्यर्थः ।

---

१. 'पारार्वृत्ते' S'. २. नपगतिम् S'. ३. 'बहुत्वानपेक्षाः स्सामान्या' S'.
४. 'वस्थानावस्थानम् S'. ५. प्रजायस्व S'.

इह तेऽसुरिह प्राण इहायुरिह ते मनः ।
उत् त्वा निर्ऋत्याः पाशेभ्यो दैव्या वाचा भरामसि ॥ ३ ॥

इह । ते । असुः । इह । प्राणः । इह । आयुः । इह । ते । मनः ।
उत् । त्वा । निःऽऋत्याः । पाशेभ्यः । दैव्या । वाचा । भरामसि ॥ ३ ॥

हे आयुरर्थयमान पुरुष ते असुः मुख्यः प्राणश्चक्षुरादिः इह शरीरे अस्तु । तथा ते प्राणः पञ्चवृत्त्यात्मको वायुरपि इह अस्तु । एवं ते आयुः अपि इह अस्तु । तथा ते मनः अपि इह अस्तु । एते सर्वेऽपि त्वां विहाय अन्यत्र माऽपसरन्तु । हे गतासो पुरुष त्वा त्वां निर्ऋत्याः एतन्नामिकायाः पापदेवतायाः पाशेभ्यः बन्धनरज्जुभ्यः सकाशाद् दैव्या देवसंबन्धिन्या वाचा मन्त्ररूपया उद्भरामसि ऊर्ध्वं भरामः हरामः नयामः ।

उत् क्रामातः पुरुष माव पत्था मृत्योः [1]पड्वीशमवमुञ्चमानः ।
मा च्छित्था [2]अस्माल्लोकादग्नेः सूर्यस्य संदृशः[3] ॥ ४ ॥

उत् । क्राम । अतः । पुरुष । मा । अव । पत्थाः[4] । मृत्योः । पड्वीशम् । अवऽमुञ्चमानः ।
मा । छित्थाः । अस्मात् । लोकात् । अग्नेः । सूर्यस्य । सम्ऽदृशः ॥ ४ ॥

हे पुरुष त्वम् अतः अस्माद् मृत्युपाशनिचयाद् उत्क्राम उत्क्रमणं कुरु । माव पत्थाः अवपतनं मा कार्षीः । पद् गतौ इत्यस्मात् लुङि 'एकाच उपदेशेऽनुदात्तात्' ( पा ७,२,१० ) इति इट्प्रतिषेधः । 'झलो झलि' ( पा ८,२,२६ ) इति सिचो लोपः । बद्धस्य कथम् उत्क्रमणं घटत इत्यत आह — मृत्योः हिंसकस्य देवस्य पड्वीशम्[5] पादबन्धनपाशम् अवमुञ्चमानः विच्छिन्दन् अस्माद् लोकाद् भूलोकाद् मा छित्थाः छिन्नो मा भूः । छिदेर्लुङि पूर्ववद् इट्प्रतिषेधः । किमर्थम् इति चेद् उच्यते — अग्नेः सूर्यस्य च संदृशः संदर्शनाद्धेतोः अग्निसूर्ययोश्चिरकालसंदर्शनाय । चिरजीवनायेत्यर्थः । 'ज्योक्च सूर्यं दृशे' ( ऋ १०,९,७ ) इति हि श्रुतिः । संपूर्वाद् दृशेः संपदादित्वाद् भावे क्विप् ।

तुभ्यं वातः पवतां मातरिश्वा तुभ्यं वर्षन्त्वमृतान्यापः ।
सूर्यस्ते तन्वे३ शं तपाति त्वां मृत्युर्दयतां मा प्र मेष्ठाः ॥ ५ ॥

तुभ्यम् । वातः । पवताम् । मातरिश्वा । तुभ्यम् । वर्षन्तु । अमृतानि । आपः ।
सूर्यः । ते । तन्वे । शम् । तपाति । त्वाम् । मृत्युः । दयताम् । मा । प्र । मेष्ठाः ॥ ५ ॥

---

१. पड्वी° B; पड्विं° K,V; पड्वी° A,R,S$^{m}$,W,M,R,W. सा. पै १६,१,४. २. अस्माल्लो° B$^{b}$,D,S$^{m}$,V,Cs. ३. संदृशा पै [मूको.]. ४. पृथाः P,P$^{2}$; पृत्थाः > पृथाः J. ५. वेबु. मंपा.

पुनः मरणाभावं सोपपत्तिकम् आशास्ते। हे मुमूर्षो पुरुष तुभ्यं त्वदर्थं मातरिश्वा। माता अन्तरिक्षम् निर्मीयन्तेऽस्मिन् भूतानीति व्युत्पत्तेः। तस्मिन् श्वसितीति मातरिश्वा। तादृशो वातः वायुस्तव सुखाय पवताम्। पवतिर्गतिकर्मा (तु. निघ २,१४)। संचरतु। तथा आपः च तुभ्यं त्वदर्थम् अमृतानि वर्षन्तु सिञ्चन्तु। तथा सूर्यो देवः ते तव तन्वे शरीराय शम् सुखं यथा भवति तथा तपाति तपतु। तप संतापे। अस्मात् लेट्। 'लेटोऽडाटौ' (पा ३,४,९४) इति आडागमः। एतत् सर्वं मृत्योरनुग्रहम् अन्तरेण न घटत इति तदनुग्रहमाशास्ते—हे पुरुष त्वा मृत्युर्देवो दयताम् रक्षां करोतु। अतस्त्वं मा प्र मेष्ठाः मृतिं मा गाः। मीङ् हिंसायाम्। लुङि पूर्ववद् इट्प्रतिषेधः।

उद्यानं ते पुरुष नावयानं जीवातुं ते दक्षतातिं कृणोमि।
आ हि रोहेममृतं सुखं रथमथ 'जिर्विर्विदथमा वदासि' ॥६॥

उत्ऽयानम्। ते। पुरुष। न। अवऽयानम्। जीवातुम्। ते। दक्षऽतातिम्। कृणोमि। आ। हि। रोह। इमम्। अमृतम्। सुऽखम्। रथम्। अथ। जिर्विः[2]। विदथम्। आ। वदासि ॥ ६ ॥

हे पुरुष ते तव उद्यानम् उद्गमनमेव। मृत्युपाशाद् इति शेषः। अवयानम् अवाग्गमनं न एवास्ति। तत् कथम् एतत् संपत्स्यत इति तत्राह— ते तव जीवातुम् जीवनौषधं कृणोमि करोमि। केवलं जीवनमेव न किं तु दक्षतातिम्। स्वार्थिकस्तातिः। दक्षं बलं च कृणोमि। त्वं च आ रोह अधितिष्ठ इमम् अमृतम् अमरणधर्मकं सुखम् इन्द्रियेभ्योऽनुकूलं रथम् यानम्। देहो वा रथत्वेन उपचर्यते। अतो जीवात्मनो देहेऽवस्थानं प्रार्थ्यते। आरुह्य च अजिर्विः[3] अजीर्णः सन्। जॄष् वयोहानौ। औणादिकः क्विन्प्रत्ययः[4] (पाउ ४,५४)। 'ॠत इद्धातोः' (पा ७,१,१००) इति इत्त्वम्। विदथम् वेदनम् आ वदासि आवद। लब्धसंज्ञोऽस्मीति आचक्ष्वेत्यर्थः।

मा ते मनस्तत्र गान्मा तिरो भून्मा जीवेभ्यः प्र मदो मानुगाः पितॄन्।
विश्वे देवा अभि रक्षन्तु त्वेह ॥ ७ ॥

मा। ते। मनः। तत्र। गात्। मा[5]। तिरः। भूत्। मा। जीवेभ्यः। प्र। मदः। मा। अनु। गाः। पितॄन्। विश्वे। देवाः। अभि। रक्षन्तु। त्वा। इह ॥ ७ ॥

---

१. अथा जिर्वी विदथमा वदाथः ऋ १०,८५,२७; 'जिर्विर्वि॰ P³,M; 'जिर्विर्वि॰ RW; रथमजिर्विर्वि॰ S. २. जिर्विः Bp⁴. ३. वैतु. मंपा. ४. क्विन्प्रत्ययः शंपा. ५. मा P.

तत्र तस्मिन् यमविषये ते मनो मा गात् गतं मा भूत्। तथा मा तिरो भूत् अन्तर्हितं विलीनमपि मा भूत्। किं च त्वं जीवेभ्यः बन्धुभ्यस्तेषाम् अर्थाय मा प्र मदः अनवधानं माप्नुहि। मदी हर्षे। पुषादित्वाद् अङ्। मदिः प्रोपसृष्टः अनवधाने वर्तते। पितॄन् मृतान् पूर्वपुरुषान् मानु गाः अनुगतिं मा कार्षीः। विश्वे देवाः इन्द्राद्या इन्द्रियाणि वा त्वा त्वाम् अभि रक्षन्तु सर्वतः पालयन्तु। कुत्रेति चेद् उच्यते। इह अस्मिन्नेव शरीरे इह भूतले वा।

मा गतानामा दीधीथा ये नयन्ति[1] परावतम्।
आ रोह तमसो ज्योतिरेह्या[2] ते हस्तौ[3] रभामहे ॥ ८ ॥

मा। गतानाम्। आ। दीधीथाः। ये। नयन्ति। पराऽवतम्।
आ। रोह। तमसः। ज्योतिः। आ। इहि। आ। ते। हस्तौ। रभामहे ॥ ८ ॥

गतानाम् पितृलोकं प्राप्तानाम्। मार्गम् इति शेषः। मा दीधीथाः तं प्रति देवनं मा कार्षीः। दीधीङ् दीप्तिदेवनयोः। लुङ्। छान्दसः सिचो लुक्। अथवा गतमार्गं मा ध्याय। ध्यै चिन्तायाम्। छान्दसी रूपसिद्धिः। अथवा गतानाम् इति कर्मणि षष्ठी। मृतान् मा चिन्तयेत्यर्थः। ते विशेष्यन्ते—ये गतास्त्वामपि परावतम् दूरदेशं नयन्ति। यथा त्वं पुनर्नायासि तथा प्रापयन्तीत्यर्थः। अतस्त्वं तमसः। म्रियमाणस्य पुरुषस्य समस्तस्यापि ज्ञानस्य नाशात् तमःप्रवेश इव भवति अतस्तमसः सकाशात् ज्योतिः। ज्योतिः प्रकाशः। प्रकाशं ज्ञानम् आ रोह अधितिष्ठ। आश्रयेत्यर्थः। अन्धकारप्रविष्टस्य कथम् आरोहणम् इति तत्राह — ते तव हस्तौ आ रभामहे गृह्णीमः। आरोहणानुकूलमयत्नं कुर्म इत्यर्थः।

श्यामश्च त्वा मा शबलश्च प्रेषितौ[4] यमस्य यौ पथिरक्षी श्वानौ।
अर्वाङेहि[5] मा वि[5] दीध्यो[5] मात्र तिष्ठः पराङ्मनाः[6] ॥ ९ ॥

श्यामः। च। त्वा। मा। शबलः। च। प्रऽइषितौ। यमस्य। यौ। पथिरक्षी इति पथिऽरक्षी[7]। श्वानौ। अर्वाङ्। आ। इहि। मा। वि। दीध्यः। मा। अत्र। तिष्ठः। पराक्ऽमनाः ॥ ९ ॥

---

१. नेयन्ति Bʰ,Sᵐ; नेयन्ति>नयन्ति Cs. २. एहि नास्ति S. ३. हस्तं पै १६,१,८. ४. नास्ति S. ५. माव पै १६,१,९ [मूको.]. ६. मा वारिणः प्रजा नः पै. ७. पथिऽ° P,P⁵,Cp.

हे मुमूर्षो त्वा त्वां श्यामश्च[1] एतन्नामा श्वा। वर्णप्रयुक्तेयं संज्ञा। मा। बाधताम् इति शेषः। एवं शवलश्च श्वा मा बाधताम्। चित्रवर्णत्वात् शवल इति संज्ञा। तौ विशेष्येते — यमस्य सर्वप्राणिप्राणापहर्तुर्देवस्य पथिरक्षी मार्गरक्षकौ यौ श्वानौ स्तः। तत्र श्यामश्च[1] शवलश्चेति संबन्धः। श्वभ्याम् असंदष्टः[2] सन् अर्वाङ् अस्मदभिमुखः एहि आगच्छ। मा वि दीध्यः ध्यानं मा कार्षीः। किम् इत्याशङ्कायां मृतानां मार्गम् इत्यवतिष्ठते। तदेव भङ्ग्यन्तरेणाह — अत्र अस्मिन् भूलोके वर्तमानः सपदि पराङ्मनाः अप्रतिनिवृत्तिचित्तविषयध्यानोपेतः[3] सन् मा तिष्ठः मा वर्तस्व।

मैतं पन्थामनु गा भीम एष येन पूर्वं नेयथ[4] तं ब्रवीमि।
तमं[5] एतत् पुरुष मा प्र पत्था भयं परस्तादभयं ते अर्वाक्॥ १०॥

मा। एतम्। पन्थाम्। अनु। गाः। भीमः। एषः। येन। पूर्वम्। न। इयथ। तम्। ब्रवीमि।
तमः। एतत्। पुरुष। मा। प्र। पत्थाः। भयम्। परस्तात्। अभयम्। ते। अर्वाक्॥

हे गतासो पुरुष त्वम् एतं[6] पूर्वोक्तं पन्थाम् पन्थानं मृता येन गच्छन्ति तं माऽनु गाः अनुसृत्य मा याहि। अनुगमननिषेधस्य कारणम् आह — एष मार्गो भीमो भयहेतुः। एतच्छब्दार्थम्[7] आह — येन मार्गेण पूर्वम् मृतेः प्राक्काले नेयथ न गच्छसि। वचनव्यत्ययः। तं मार्गं ब्रवीमि। मानु गा इति निषेधप्रतियोगितया वच्मीत्यर्थः। एतत् मरणलक्षणं तमः अन्धकारम् अज्ञानं मा प्र पत्थाः प्रपदनं मा कार्षीः। परस्तात्[8] पूर्वदेशे यमपुरप्रदेशे भयम्। भवतीति शेषः। अर्वाक् अस्मदभिमुखागमनमार्गे ते तव अभयम् भयाभावः। क्षेमं भवतीत्यर्थः।

इत्यष्टमकाण्डे प्रथमेऽनुवाके प्रथमं सूक्तम्।

'रक्षन्तु त्वा' इत्यस्य सूक्तस्य उपनयनकर्मादिषु पूर्वसूक्तेन सह उक्तो विनियोगः।

तथा हिरण्यगर्भाख्ये महादाने 'रक्षन्तु त्वा' इत्यनेन [9]कर्तू रक्षां[9] कुर्यात्। 'हिरण्यगर्भविधिम् अनुक्रमिष्यामः' इति प्रक्रम्य उक्तं परिशिष्टे—"'यदाबध्नन्' (अ १,३५) इति हिरण्यस्रजम् आमुच्य 'रक्षन्तु त्वा' (अ ८,१,११-२१) इति रक्षां कृत्वा" (अप १३,१,१,७) इति।

---

१. श्यामश्च S'. २. °दुष्टः S'. ३. 'विषम° S'. ४. नयतु पै १६,१,१० [मुद्रे.]. ५. तम् पै. ६. एवं S'. ७. यच्छब्दा° S'. ८. वैतु. मंपा. ९. कर्तुरक्षा S'.

तथा अश्वरथाख्यमहादाने अनेन यजमानम् अभिमन्त्रयेत । "अथाश्वरथदानविधिः" इति प्रक्रम्य उक्तं परिशिष्टे—" 'पुनन्तु मा' ( अ ६,१९ ) इत्यात्मानम् आलभ्य जपेत् । 'रक्षन्तु त्वाग्नयः' ( अ ८,१ ) इति यजमानम् अभिमन्त्र्य" ( अप १५,१,१;५;६ ) इति ।

रक्षन्तु त्वाऽग्नयो ये अप्स्वन्ता[१] रक्षतु[२] त्वा मनुष्या३[३] यमिन्धते ।
वैश्वानरो रक्षतु जातवेदा दिव्यस्त्वा मा प्र[५] धाग्[६] विद्युता सह ॥ ११ ॥

रक्षन्तु । त्वा । अग्नयः । ये । अप्ऽसु । अन्तः । रक्षतु[७] । त्वा । मनुष्याः । यम् । इन्धते ।
वैश्वानरः । रक्षतु । जातऽवेदाः[८] । दिव्यः । त्वा । मा । प्र । धाक् । विऽद्युता । सह ॥ ११ ॥

अप्सु अन्तः उदकेषु मध्ये ये अग्नयो वाडवादिरूपेण वर्तन्ते तेऽग्नयः त्वा त्वाम् हे रक्षाकाम राजादे रक्षन्तु पालयन्तु । उदकेष्वग्निसद्भावम् आह मन्त्रः 'अप्स्वग्ने सधिष्टव' ( ऋ ८,४३,९ ), 'अग्निं च विश्वशंभुवम्' ( ऋ १०,९,६ ) इत्यादिकः, 'सोऽपः प्राविशत्' ( तै २,६,६,१ ) इति च । अवधिस्थानबहुत्वम् अपेक्ष्य अग्नीनां बहुत्वाभिधानम् । यद्वा अग्नीषोमयोरखिलजगत्कारणत्वेन विकारेषु सर्वेष्वपि अग्निसंभवाद् बहुत्वाभिधानम् । तथा यम् अग्निं मनुष्या आहवनीयादिरूपेण वर्तमानं वा पाकाद्यर्थम् अवस्थापितं वा इन्धते दीप्तं कुर्वन्ति सोऽपि त्वां रक्षतु । अन्ता रक्षत्वित्यत्र 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' ( पा ६,३,१११ ) इति दीर्घः । एवं वैश्वानरः विश्वेषां नराणां संबन्धी जाठरोऽग्निः स च जातवेदाः जातप्रज्ञो जातधनो वा त्वां रक्षतु । तथा दिव्यः दिवि भवो वैद्युतो विद्युता स्वशरीरेण सह सहितः सन् त्वा मा प्र धाक् प्रकर्षेण मा दहतु । दह भस्मीकरणे । 'मन्त्रे घस°' ( पा २,४,८० ) इति च्लेर्लुक् ।

मा त्वा क्रव्यादभि मंस्तारात् [९]संकसुकाच्चर । रक्षतु त्वा द्यौ रक्षतु
पृथिवी सूर्यश्च त्वा रक्षतां[१०] चन्द्रमाश्च । अन्तरिक्षं रक्षतु देवहेत्याः ॥१२॥

मा । त्वा । क्रव्यऽअत् । अभि । मंस्त[११] । आरात् । सम्ऽकसुकात् । चर । रक्षतु । त्वा । द्यौः । रक्षतु ।
पृथिवी । सूर्यः । च । त्वा । रक्षताम्[१२] । चन्द्रमाः । च । अन्तरिक्षम् । रक्षतु । देवऽहेत्याः ॥

क्रव्यात् मांसाशनोऽग्निः 'क्रव्ये च' ( पा ३,२,६९ ) इति अदेर्विट् । स च त्वा त्वां माभि मंस्त [१३]"मम त्वम्"[१३] आहार इत्यभिमानं मा करोतु । 'नास्य दद्रः पद्यन-

१. तथा° S'. २. अप्स्व१न्ता B. रक्षन्तु वै १६,२,१ [मुम्बे.]. ४. मनुष्यां३ B[b],D,R,S[m],Cs. ५. मा B. ६. दहाद् वै. ७. रक्षन्तु P[२]. ८. °वेदः P. ९. संकुसुका° S. १०. रक्षतां P[२],M,RW. ११. मंस्त P[1] मंस्त Cp १२. रक्षताम् Bp[२]. १३ ममरयम् S'.

भिमन्यते' (तै १,६,७,४) इत्यादौ तथा दर्शनात्। मन ज्ञाने। लुङि सिचि 'एकाच उपदेशेऽनुदात्तात्' (पा ७,२,१०) इति इट्प्रतिषेधः। त्वं च संकुसुकात्[1] शवभक्षकाद् एतन्नामकाद् अग्नेः आरात् दूरदेश एव चर। तथा द्यौः पृथिवी सूर्यश्चन्द्रमाश्च प्रत्येकं स्वस्वसंबन्धिनो भयात् त्वा त्वां रक्षतु। अन्तरिक्षम् अपि त्वां देवहेत्याः देवप्रेरिताद् आयुधाद् रक्षतु।

बोधश्च॑ त्वा[2] प्रतीबोधश्च॑ [3]रक्षतामस्वप्नश्च॑ त्वाऽनवद्राणश्च॑[4] रक्षताम्[5]।
गोपायंश्च॑[6] त्वा[7] जागृविश्च रक्षताम्[8] ॥ १३ ॥

बोधः। च। त्वा। प्रतिऽबोधः। च। रक्षताम्। अस्वप्नः। च। त्वा। अनवऽद्राणः। च। रक्षताम्। गोपायन्। च। त्वा। जागृविः। च। रक्षताम् ॥ १३ ॥

बोधप्रतीबोधौ नाम ऋषी। 'ऋषी बोधप्रतीबोधौ' (अ ५,३०,१०) इति प्रागुक्तत्वात्। तत्सहप्रपाठाद् अत्रोक्ताः षडपि ऋषयः। बोधः सर्वदा प्रतिबुध्यमानः। प्रतीबोधः प्रतिवस्तु प्रतिक्षणं वा बुध्यमानः। अस्वप्नः स्वप्नरहितः। अनवद्राणः निद्रारहितः। गोपायन् सर्वदा देहस्य गोपायिता। जागृविः जागरणशीलः। एते सर्वे देहाश्रयाः प्राणापानमनोबुद्धिचक्षुर्हृदयरूपा इन्द्रियाभिमानिदेवा यथोचितं बोद्धव्याः। ते युग्मशस्त्वां रक्षन्त्वित्यर्थः[7]।

ते त्वा॑ रक्षन्तु ते त्वा॑ गोपायन्तु तेभ्यो नमस्तेभ्यः स्वाहा॑ ॥ १४ ॥

ते। त्वा। रक्षन्तु। ते। त्वा। गोपायन्तु। तेभ्यः। नमः। तेभ्यः। स्वाहा॑ ॥ १४ ॥

ते बोधाद्याः त्वा त्वां रक्षन्तु पालयन्तु [8]ते त एव[8] त्वा गोपायन्तु। गोपायनं सर्वतो रक्षणम्। तेभ्यः बोधादिभ्यो देवेभ्यो नमः नमस्कारोऽस्तु। तेभ्यः स्वाहा। इदं द्रव्यं स्वाहुतम् अस्तु।

जीवेभ्यस्त्वा समुदे॑ वायुरिन्द्रो॑ धाता द॑धातु सविता त्रायमाणः।
मा त्वा॑ प्राणो बलं॑ हासीदसुं॑ [9]तेऽनु ह्वयामसि[9] ॥ १५ ॥

जीवेभ्यः। त्वा। समुऽउदे॑। वायुः। इन्द्रः। धाता। दधातु। सविता। त्रायमाणः। मा। त्वा। प्राणः। बलम्। हासीत्। असुम्। ते। अनु। ह्वयामसि ॥ १५ ॥

---

१. वैद्य. मंरा. २. मा काठ ३७,१० माग्र २,१५,१. ३. गोपायताम्° काठ. माग्र. ४. °द्राणिश्च पै १६,२,३ [मूको.]. ५. गोपायताम् काठ. माग्र.; गोपायेताम् पाग्र ३,४,१५. ६. गोपायमानश्च काठ.; गोपायमानं च माग्र. पाग्र. ७. °क्षन्त्वित्यर्थः S'. ८. एव एव S'. ९. तेनु ह्व° B$^{b}$; ते निर्ह्व° पै १६,२,५.

जीवेभ्यः । अत्र जीवोपयुक्तानि इन्द्रियाणि जीवशब्दव्यपदेशं भजन्ते । तेषाम् अर्थाय । अथवा जीवाः पोषणीयाः पुत्रभार्यादासादयः । तेषाम् अर्थाय । तादर्थ्यं विशिनष्टि—समुदे तेषां [1]संमोदाय [त्वा] त्वां [2]धाय्यादयः प्रत्येकं समुदायो वा[2] दधातु स्थापयतु मृत्योराकृष्य प्रयच्छतु । त्रायमाण इति सवितुर्विशेषणम् । त्वां पालयमानः । किं च त्वा त्वां प्राणः बलं शरीरबलं च मा हासीत् मा त्याक्षीत् । ते अमुम् अनु ह्वयामसि आनुकूल्येन आह्वयामः ।[3]

मा त्वा जुम्भः संहनुर्मा तमो विदन्मा जिह्वा बर्हिः प्रमयुः कथा स्याः ।
उत् त्वादित्या वसवो भरन्तूदिन्द्राग्नी स्वस्तये ॥ १६ ॥

मा । त्वा । जुम्भः । सम्ऽहनुः । मा । तमः । विदत्[4] । मा । जिह्वा । आ[5] । बर्हिः । प्रऽमयुः । कथा । स्याः । उत् । त्वा । आदित्याः । वसवः । भरन्तु । उत् । इन्द्राग्नी इति । स्वस्तये ॥१६॥

किं च त्वा त्वां संहनुः संहतदन्तो जम्भः असुरः । अथवा संहनुः संहतहनुर्जम्भः अस्थूलदन्तो मा विदत् मा विन्दतु । भक्षयितुम् इति शेषः । 'तं वो जम्भे दधामि' (तै ४,५,११,२) इत्यादिमन्त्रदर्शनात्[6] । तथा तमः अज्ञानमपि मा विदत् । एवं बर्हिः [आ] बर्हिरिव आयामविस्तारोपेता उह्यमाना जिह्वा[7] रक्षःप्रभृतेः संबन्धिनी मा विदत् । किमर्थम् एवं प्रार्थ्यत इति चेत् तत्राह—कथा केन प्रकारेण त्वं प्रमयुः प्रगतहिंसः[8] प्रगतहिंसको वा स्याः भवेः[9] । एवमर्थं जम्भादि मा विदद् इत्यर्थः । [3]आदित्याः अदितेः पुत्रा देवा धात्रादयः त्वा त्वाम् उद्भरन्तु ऊर्ध्वं हरन्तु मृत्योर्मुखात् । तथा [10]वसवः अष्टसंख्याका[10] धरादयः उद्भरन्तु । इन्द्राग्नी । इन्द्रश्च अग्निश्च देवौ उत् उद्भरताम् । किमर्थम् । स्वस्तये क्षेमाय ।

उत् त्वा द्यौरुत् पृथिव्युत् प्रजापतिरग्रभीत् ।
उत् त्वा मृत्योरोषधयः सोमराज्ञीरपीपरन् ॥ १७ ॥

उत् । त्वा । द्यौः । उत् । पृथिवी । उत् । प्रजाऽपतिः । अग्रभीत् ।
उत् । त्वा । मृत्योः । ओषधयः । सोमऽराज्ञीः । अपीपरन् ॥ १७ ॥

तथा द्यौः द्युदेवता[11] त्वाम् उत् उद्भरतु पृथिवी च उत् उद्भरतु । किं बहुना । प्रजापतिः सर्वेषां देवानां पिता उदग्रभीत् उद्ग्रहणम् अकार्षीत् । सोमराज्ञीः सोमस्य पत्न्यः ओषधयो देव्यो मृत्योः सकाशात् त्वा त्वाम् उदपीपरन् अपालयन्[3] ।

---

१. वैतु. पपा. २. वायारयोसमुदयंयत्रा प्रत्येकं S'. ३. सा. 'जीवेभ्यस्त्वा' इत्यारभ्य 'कथा स्याः' इत्यन्तमेकम् 'उत् त्वादित्याः' इत्यारभ्य 'सोमराज्ञीरपीपरन्' इत्यन्तं चापरं मन्त्रं मत्वा व्याख्याति. ४. विदुन् P. ५. वैप १,६१३ a द्र. ६. इत्यादिभिर्मन्त्रै S'. ७. बर्हिर्दिरव्यायामविस्तारोरेता उह्यमानजिह्वा इत्यादि S'. ८. प्रमत° S'. ९. भवेत् S'. १०. स्वर्गोमसंख्याका S'. ११. द्यु° नास्ति S'.

अयं देवा इहैवास्त्वयं माऽमुत्र गादितः ।
इमं सहस्रवीर्येण मृत्योरुत् पारयामसि ॥ १८ ॥

अयम् । देवाः । इह । एव । अस्तु । अयम् । मा । अमुत्र । गात्[1] । इतः ।
इमम् । सहस्रऽवीर्येण । मृत्योः । उत् । पारयामसि ॥ १८ ॥

हे देवाः आदित्याद्या अयं पुरुषः इहैव भूलोके अस्तु भवतु । एतदेव व्यतिरेकमुखेनाह — अयम् इतः अस्माद् भूलोकाद् अमुत्र स्वर्गे मा गात् । वयं रक्षाकर्तारः इमं पुरुषं सहस्रवीर्येण अपरिमितसामर्थ्येन रक्षाविधानेन मृत्योः सकाशाद् उत्पारयामसि उत्पारयामः ।

उत् त्वा मृत्योरपीपरं सं धमन्तु वयोधसः ।
मा त्वा व्यस्तकेश्यो३ मा त्वाऽघरुदो रुदन् ॥ १९ ॥

उत् । त्वा । मृत्योः । अपीपरम् । सम् । धमन्तु । वयःऽधसः ।
मा । त्वा । व्यस्तऽकेश्यः । मा । त्वा । अघऽरुदः । रुदन् ॥ १९ ॥

हे आयुष्काम पुरुष त्वा त्वां मृत्योरुदपीपरम्[3] पालयन्तु वयोधसः अन्नस्य आयुष्यस्य वा धातारो देवाः सं धमन्तु संधानं कुर्वन्तु च । धमतिर्गतिकर्मा (द्र निघ २,१४) । त्वा त्वां प्रति व्यस्तकेश्यः कीर्णकेशा बन्धुयोषितो मा रुदन् अश्रुविमोकं मा कार्षुः । तथा अघरुदः अघे व्यसने दुःखे बान्धवेन रोदनकर्तारो मा रुदन् ।

आहार्षमविदं त्वा[4] पुनरागाः पुनर्णवः[5] ।
सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेविदम्[6] ॥ २० ॥

आ । अहार्षम् । अविदम् । त्वा । पुनः । आ । अगाः । पुनःऽनवः ।
सर्वऽअङ्ग । सर्वम् । ते । चक्षुः । सर्वम् । आयुः । च । ते । अविदम् ॥ २० ॥

हे मृत्युग्रस्त पुरुष त्वा त्वाम् आहार्षम् मृत्युमुखाद् आहृतवान् अस्मि । आहृत्य च त्वा[3] त्वाम् अविदम् लब्धवानस्मि । हे पुनर्नव[3] पुनरुत्पन्न त्वं पुनरागाः पुनरागतोऽसि । पुनर्जीवलाभात् पुनर्नवत्वव्यपदेशः । हे सर्वाङ्ग केनचिदपि चक्षुराद्यङ्गेन अविकल संपूर्णाङ्ग । मृत्यभावेऽपि प्रायेण अङ्गवैकल्यं दृढरोगग्रस्तस्य भवतीत्यभिप्रायेण एवम्

---

१. गात् P². २. °केश्यो३ R. ३. वैतु. मंगा. ४. आहार्षं त्वाविदं त्वा S', सा. अ २०,९६,१० ऋ १०,१६१,५. ५. पुनर्णव S', RW. २०,९६,१० S' च; पुनर्नव ऋ. पै १६,२,९ [मूको.]. ६. °विदन् B^b,D.

आह । ते तव सर्वं चक्षुः । चक्षुर्विषयम् इत्यर्थः । सर्वमपि इन्द्रियजातं स्वविषयप्रकाशकम् । भवत्विति शेषः । ते तव सर्वम् शतसंवत्सरलक्षणम् आयुः अविदम् लब्धवान् अस्मि ।

व्युवात् ते ज्योतिरभूदप त्वत् तमो अक्रमीत् ।
अप त्वन्मृत्युं निर्ऋतिमप यक्ष्मं नि दध्मसि ॥ २१ ॥

वि । अवात् । ते । ज्योतिः । अभूत् । अप । त्वत् । तमः । अक्रमीत् ।
अप । त्वत् । मृत्युम् । निःऽऋतिम् । अप । यक्ष्मम् । नि । दध्मसि ॥ २१ ॥

हे विसंज्ञ पुरुष ते व्यवात् व्यौच्छत् तमोविवासनम् अभूत् । अत एव ज्योतिः संज्ञानम् अभूत् । तथा त्वत् त्वत्तः सकाशात् तमः क्रूरत्वम् अपाक्रमीत् अपक्रान्तम् अभूत् । कुतो हेतोरिति तत्राह—त्वत् त्वत्तः मृत्युम् प्राणापहर्त्रीं देवतां निर्ऋतिम् पापदेवताम् अप[1] । नि दध्मसीति उत्तरक्रियानुषङ्गः । तथा यक्ष्मम् बाह्यम् आभ्यन्तरं च रोगम् अप[1] नि दध्मसि अपनिदध्मः त्वत्तः प्रच्यावयामः ।

इत्यष्टमकाण्डे प्रथमेऽनुवाके द्वितीयं सूक्तम् ।

'आ रभस्व' ( अ ८,२ ) इति सूक्तत्रयम् अर्थसूक्तम् । तेन उपनयनकर्मणि माणवकस्य नाभिं संस्पृश्य आचार्यो जपं कुर्यात् । उपनयनं प्रक्रम्य सूत्रितम् — "दक्षिणेन पाणिना [2]नाभिदेशे संस्तभ्य[2] जपति । ××× 'अन्तकाय मृत्यवे' ( अ ८,१ ), 'आ रभस्व'" ( कौसू ५५,१६;१७ ) इति ।

तथा आयुष्कामः 'आ रभस्व' इति सूक्तत्रयेण शरीरम् अभिमन्त्रयेत ।

तथा ऋषिहस्तेन आयुष्कामस्य शरीरम् अनेनाभिमन्त्रयेत ।

सूत्रितं हि— "'आ रभस्व', 'प्राणाय नमः' ( अ ११,४ ), 'विषासहिम्' (अ १७,१) इत्यभिमन्त्रयते" ( कौसू ५८,३ ) इति ।

तथा अस्यार्थसूक्तस्य आयुष्यगणे पाठाद् 'विश्वकर्मभिरायुष्यैः स्वस्त्ययनैराज्यं जुहुयात्' ( कौसू १३९,७ ) इत्यादिषु विनियोगो द्रष्टव्यः ।

तथा नामकरणाख्ये कर्मणि अनेनार्थसूक्तेन कुमारस्य हस्ते अविच्छिन्नाम्[3] उदकधारां निनयेत् ।

---

१. अपि S'.　　२. °देशसंस्तभ्य S'; °देशेऽभिसंस्तभ्य Bl.　　३. °भव° S'.

तथा तस्मिन्नेव कर्मणि अनेनार्थसूक्तेन देवदारुमणिं संपात्य अभिमन्त्र्य बध्नीयात्। तस्यैव मणेः निघृष्य पायनं च कुर्यात्। तद् उक्तं कौशिकेन— "अथ नामकरणम्[1]। 'आ रभस्वेमाम्' इत्यविच्छिन्नाम् उदकधाराम् आलम्भयति[2]। पूतिदारुं[3] बध्नाति। पाययति" (कौसू ५८,१३–१६) इति।

अन्त्येष्टौ 'आ रभस्व' इति त्रिभिः प्रेताग्निम् आदीपयेत्।

त्रिंशन्महाशान्तितन्त्रभूतायां महाशान्तौ 'आ रभस्व' इत्येतज्जपेत्। उक्तं शान्तिकल्पे– 'पुनस्तदेव जप्यं तु शंतातीयमथाग्रतः। अन्तकायारभस्वेति' (शांक २३,३) इति।

तथा 'वैश्वदेवीं गतायुषाम्' (शांक १७,१) इति विहितायां महाशान्तौ देवदारुमणिबन्धनम् अनेन कुर्यात्। तद् उक्तं शान्तिकल्पे— "'आरभस्व' इति [4]पूतिदारुं वैश्वदेव्याम्" (शांक १९,१) इति।

आ रंभस्वेमामृतंस्य [5]श्नुष्टिमच्छिद्यमाना जरदंष्टिरस्तु ते।
असुं त आयुः पुनरा भंरामि रजस्तमो मोपं गा मा प्र मेंष्ठाः ॥ १ ॥

आ। रभस्व। इमाम्। अमृतस्य। श्नुष्टिम्। अच्छिद्यमाना। जरतऽअंष्टिः। अस्तु। ते। असुम्। ते। आयुः। पुनः। आ। भरामि। रजः। तमः। मा[6]। उपं। गाः। मा। प्र। मेष्ठाः॥१॥

हे आयुष्काम पुरुष इमाम् अस्माभिः क्रियमाणाम् अमृतस्य अमरणत्वस्य श्नुष्टिम् प्रस्तुतिम् आ रभस्व उपक्रमस्व। अनुभवितुम् इति शेषः। यद्वा कुमारस्य हस्ते अविच्छिन्नाम् उदकधारां निनयेदिति विनियोगाद् अमृतशब्देन उदकम् उच्यते। तस्य श्नुष्टिम्[7]। उदकधाराम् इत्यर्थः। अच्छिद्यमाना[8] परैर्विच्छेत्तुम् अनर्हा जरदष्टिः। जरावस्थापर्यन्तम् अष्टिः अशनं जरदष्टिः[9]। सा ते अस्तु भवतऽस्तु। तदर्थं ते तव असुम् प्राणं मृत्युना अपहृतम् आयुश्च पुनः आ भरामि आहरामि। त्वं च रजः रागम्[10] अस्माकं सत्त्वगुणप्रतिबन्धकं मोप गाः मा प्राप्नुहि। इण् गतौ। 'इणो गा लुङि' (पा २,४,४५) इति गादेशः। एवं तमः आवरकं हिताहितविवेकप्रतिरोधकं तमआख्यगुणं[11] मोप गाः। न केवलं रजस्तमसोरप्राप्तिरेव प्रार्थ्यते किं तु मृतिनिवारणमपि मा प्र मेष्ठा इति। हिंसां[12] च मा प्राप्नुहि। मीङ् हिंसायाम्। लुङि रूपम्।

---

१. अथान्नामकरण° S'. २. आलिंपयति S'. ३. पुतुदारुं Bl.
४. पुतदारुं Bol. ५. स्नु° R; श्रुष्टि° RW; द्र० पृ १४६ टि ५. ६. मा P,P²,J.
७. स्नुष्टिम् S'. ८. एषा अमृतस्नुष्टिम् अच्छि° S'. ९. एवं स्वरो न सिध्यति.
१०. रागः S'. ११. °आख्यागुणं S'. १२. हिंसा S'.

जीवतां ज्योतिरभ्येह्यर्वाङा[1] त्वा हरामि शतशारदाय ।
अवमुञ्चन् मृत्युपाशानशस्तिं द्राघीय आयुः प्रतरं ते दधामि[2] ॥२॥

जीवताम् । ज्योतिः । अभिऽएहि । अर्वाङ् । आ । त्वा । हरामि । शतऽशारदाय ।
अवऽमुञ्चन् । मृत्युऽपाशान् । अशस्तिम् । द्राघीयः । आयुः । प्रऽतरम् । ते । दधामि ॥२॥

हे पुरुष त्वं जीवताम् मनुष्याणां ज्योतिः दीप्तिं ज्ञानम् अर्वाङ् अस्मदभिमुखः अभ्येहि अभ्यागच्छ । अहं तु त्वा त्वाम् आ हरामि । मृत्युसकाशाद् इति शेषः । किमर्थम् । शतशारदाय । शतसंख्याकशरदवधिकम् आयुः शतशारदम् । शतायुषे । चिरकालजीवनायेत्यर्थः । मृत्युपाशबद्धस्य कथम् आगमनम् इति तत्राह—मृत्युपाशान् मृत्योः ज्वरशिरोरोगादिनानाविधान् पाशान् अवमुञ्चन् उत्सृजन् । तथा अशस्तिम् निन्दाम् अवमुञ्चन् । सा हि कोश इव आच्छादयति । एतत् सर्वं सत्यायुषि संभवतीत्याशङ्क्याह—द्राघीयः अतिदीर्घं शतसंवत्सरलक्षणम् आयुः । 'प्रियस्थिर' (पा ६,४,१५७) इत्यादिना दीर्घशब्दस्य द्राघादेशः । ते त्वदर्थं प्रतरम् प्रकृष्टतरं दधामि स्थापयामि ।

वातात् ते प्राणमविदं सूर्याच्चक्षुरहं तव ।
यत् ते मनस्त्वयि तद् धारयामि सं [3]वित्स्वाङ्गैर्वद जिह्वयाऽलपन् ॥३॥

वातात् । ते । प्राणम् । अविदम् । सूर्यात् । चक्षुः । अहम् । तव । यत् । ते ।
मनः । त्वयि । तत् । धारयामि । सम् । वित्स्व[4] । अङ्गैः । वद । जिह्वया । अलपन् ॥३॥

हे गतासो पुरुष ते तव प्राणं वातात् स्वाश्रयभूताद् बाह्यवायोः सकाशाद् अविदम् लब्धवान् अस्मि । प्राणवायोर्मरणावस्थायां वायुप्राप्तेः उत्पत्त्यवस्थायां तत एवोत्पत्तेश्च एवम् उच्यते । तथा च श्रूयते—'वातं प्राणमन्ववसृजतात्' (ऐब्रा २,६) इति, 'वायुः प्राणो भूत्वा नासिके प्राविशत्' (ऐआ २,४,२) इति च । अहं तव चक्षुः च सूर्याद् अविदम् । पूर्ववन्मृतिसमये चक्षुषः सूर्यप्राप्तेः उत्पत्तिसमयेऽपि सूर्यादेवोत्पत्तेश्च एवम् उच्यते । "सूर्यं चक्षुर्गमयतात्" (ऐब्रा २,६) इति, 'आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्' (ऐआ २,४,२) इति च । किं च यत् ते मनः उत्क्रमणसमये निर्गतं तत् त्वयि एव धारयामि स्थापयामि । त्वं तु यत एवम् अतो विश्वाङ्गैः[5] कृत्स्नैरङ्गैरुपेतः सन् जिह्वया आलपन्[6] व्यक्तम् उच्चरन् वद वाचम् उदीरय । जीवनस्य अभिवदनं स्पष्टं लिङ्गम् इति तत् प्रार्थ्यते ।

---

१. ॰रभ्येह्य॰ A,B,B^h,R; ॰रभ्येह्य॰ Cs; ॰रभ्येहि लोकमा पै १६,३,२. २. कृणोमि पै. ३. विश्वाङ्गै॰ S', वृहुक्षा॰ पै १६,३,३. ४. विल्स्व P,J. ५. वेतु. मंत्रा. ६. वेतु. पाठः.

प्राणेन॑ त्वा॑[1] द्वि॒पदां॒ चतु॑ष्पदाम॒ग्निमि॑व जा॒तम॒भि सं ध॑मामि ।
नम॑स्ते मृत्यो॒ चक्षु॑षे॒ नम॑: प्रा॒णाय॑ तेऽकरम् ॥ ४ ॥

प्रा॒णेन॑ । त्वा॒ । द्वि॒ऽपदा॑म् । चतु॑:ऽपदाम् । अ॒ग्निम्ऽइ॑व । जा॒तम् । अ॒भि । सम् । ध॒मा॒मि॒ ।
नम॑: । ते॒ । मृ॒त्यो॒ इति॑ । चक्षु॑षे । नम॑: । प्रा॒णाय॑ । ते॒ । अ॒क॒र॒म् ॥ ४ ॥

हे निर्यत्प्राण त्वा त्वां द्विपदाम् पुरुषादीनां [2]चतुष्पदाम् गवाश्वादीनां च प्राणेन । सर्वप्राणिनां प्राणेनेत्यर्थः । तेन जातम् मथनाद् उत्पन्नम् अग्निमिव तं यथा अणीयांसं सन्तं [3]नाल्यादिसाधनेन मुखवायुना अभिसंधमति तद्वद् अल्पप्राणं सन्तं सर्वप्राणिप्राणेन अभि सं धमामि संयोजयामि प्रभूतप्राणं करोमि । हे मृत्यो ते तव चक्षुषे क्रूराय नमः अकरम् । तथा ते प्राणाय प्रकृष्टाय बलायापि नमः अकरम् करोमि । करोतेर्लुङि 'कृमृदृरुहिभ्यश्छन्दसि' ( पा ३,१,५९ ) इति अङ् ।

अ॒यं जी॑वतु॒ मा मृ॑ते॒मं समी॑रयामसि[4] ।
कृ॒णोम्य॑स्मै भेष॒जं मृत्यो॒[5] मा पुरु॑षं वधीः ॥ ५ ॥

अ॒यम् । जी॒व॒तु॒ । मा । मृ॒त॒ । इ॒मम् । सम् । ई॒र॒या॒म॒सि॒ ।
कृ॒णोमि॑ । अ॒स्मै॒ । भे॒ष॒जम् । मृत्यो॒[6] इति॑ । मा । पुरु॑षम् । व॒धीः ॥५॥

अयं गतासुः पुरुषो जीवतु । मा मृत मरणं मा प्राप्नुयात् । मृङ् प्राणत्यागे । 'लुङ्' ( पा ३,२,११० ) । 'उश्च' ( पा १,२,१२ ) इति सिचः कित्त्वम् । 'ह्रस्वादङ्गात्' ( पा ८,२,२७ ) इति सिचो लोपः । इमं पुरुषं समीरयामसि सम्यक् प्रेरयामः । यथा चेष्टते तथा प्रयतामहे । तद् एव एकवद् आह— अस्मै मुमूर्षवे पुरुषाय भेषजम् चिकित्सां कृणोमि करोमि । हे मृत्यो त्वं तु पुरुषम् अमुं मा वधीः मा जहि ।

जी॒व॒लां न॑घारि॒षां[7] जी॒वन्ती॒मोष॑धीम॒हम् ।
त्रा॒य॒मा॒णां सह॑मानां॒ सह॑स्वतीमि॒ह हु॑वे॒ऽस्मा[8] अ॑रि॒ष्टता॑तये ॥ ६ ॥

जी॒व॒लाम् । न॒घ॒ऽरि॒षाम्[9] । जी॒वन्ती॑म् । ओष॑धीम् । अ॒हम् ।
त्रा॒य॒मा॒णाम् । सह॑मानाम् । सह॑स्वतीम् । इ॒ह । हु॒वे॒ । अ॒स्मै॑ । अ॒रि॒ष्टऽता॑तये ॥ ६ ॥

---

१. त्वां पै १६,३,४. २. चतुष्प॰ S'. ३. नाल्पा॰ S'. ४. मु वीरया॰ पै १६,३,५ [मूको.]. ५. मृत्यो॒ A,B,B^b,D,K^m,Cs,O. ६. मृत्यो P,P^2,Cp,Bp^2. ७. 'घारुषां S'. ८. 'हस्वतीमरुन्धतीमिह ह्वये अस्मा पै १६,३,६. ९. 'घ्रषाम् P,P^2, J,K,WM.; 'ऋिषाम् Bp^2.

जीवलाम् । मत्वर्थीयो लः । जीववतीम्[1] । जीवप्रदाम् इत्यर्थः । नघरुषाम्[2] । न हन्तीति नघा । नघा रुषा[3] रोषोऽस्यां सा नघरुषा[4] । यस्याः कोपोऽपि न घातकस्ता- दृशीम् इत्यर्थः । अथवा घर्षरहिताम् अघकारिरोषरहितां वा । स्वयं जीवन्तीम् । कदाचिदपि अशुष्काम् इत्यर्थः । अथवा सजीवाम् । त्रायमाणाम् रक्षन्तीं स्वसेविनां रोगपरिहारेण रक्षाकर्त्रीम् । सहमानाम् रोगस्याभिभवित्रीम् । सहस्वतीम् सहो बलं तद्वतीम् । एवंमहिमोपेताम् ओषधीम् पाठाख्याम् अहं व्याधिनाशकामः इह अस्मिन् शान्तिकर्मणि हुवे आह्वयामि । कस्मै प्रयोजनाय । उच्यते— अस्मै संनिहिताय पुरुषाय । अरिष्टतातये रिष्टं हिंसा तदभावाय अरिष्टकरणाय[5] । 'शिवशमरिष्टस्य करे' (पा ४,४,१४३ ) इति करोत्यर्थे तातिल् । अथवा जीवलादयः प्रत्येकम् ओषधिविशेषाः । ओषधीम् इत्येतत् प्रत्येकं संबध्यते । इह हुवे इति सर्वत्रान्वयः ।

अधि॑ ब्रूहि॒ मा र॑भथाः सृ॒जेमं तवै॒व 'सन्त्सर्व॑हाया' इ॒हास्तु॑ ।
भवा॑शर्वौ मृ॒डतं॒ शर्म॑ यच्छतमपसि॒ध्य॑[6] दुरि॒तं ध॑त्त॒मायुः॑ ॥ ७ ॥

अधि॑ । ब्रू॒हि॒ । मा । आ । र॒भ॒थाः॒ । सृ॒ज । इ॒मम् । तव॑ । ए॒व । सन् । सर्व॑ऽहायाः । इ॒ह । अ॒स्तु॒ । भवा॑शर्वौ । मृ॒डत॑म् । शर्म॑ । य॒च्छ॒त॒म् । अ॒प॒ऽसिध्य॑ । दुः॒ऽइ॒तम् । ध॒त्त॒म् । आयुः॑ ॥

[7]उत्तरमन्त्रे 'अस्मै मृत्यो अधि ब्रूहि' इति मृत्युशब्दश्रवणाद् अत्रापि मृत्युः [8]संबो- ध्यः[9] । हे मृत्यो त्वम् अधि ब्रूहि । पक्षपातेन वचनम् अधिवचनम् । मदीयोऽयम् इति वद । मा आ रभथाः आरम्भं मा कार्षीः । हन्तुम् इति शेषः । हननोद्योगो निषिध्यते । तवैव अयं जनस्तवैव । स्वम् इति शेषः । अतः इमं [10]सं सृज । प्राणैरिति शेषः । अयम् इह अस्मिन् भूलोके सर्वहायाः सर्वगतिरस्तु । 'वहिहाधाञ्भ्यश्छन्दसि' ( पाउ ४,२२१ ) इति असुनि णिद्वद्भावाद् युगागमः । किं च हे भवाशर्वौ भवश्च शर्वश्च भवाशर्वौ ईश्वरमूर्तिभेदौ । 'आनङृतो द्वन्द्वे' ( पा ६,३,२५ ) इति आनङ् । युवाम् मृडतम् सुखयतम् अमुष्मै शर्म सुखं यच्छतम् दत्तम् । 'पाघ्रा' ( पा ७,३,७८ ) इत्यादिना यच्छादेशः । शर्म यच्छतम् इत्युक्तम् अर्थं विवृणोति— दुरितम् उपस्थितं व्याध्यादिलक्षणं पापम् अपसिध्य निराकृत्य आयुः धत्तम् स्थापयतं प्रयच्छतम् ।

अ॒स्मै मृ॑त्यो॒ अधि॑ ब्रूही॒मं द॑यस्वोदि॒तो॒३॒॑ऽयमे॑तु ।
अरि॑ष्टः॒ सर्वा॑ङ्गः सु॒श्रुज्ज॒रसा॑ श॒तहा॑यन॒ आत्म॑ना॒ भुज॑मश्नुताम्[10] ॥८॥

---

१. जीववतीम् S'. २. वैतु. मगा.; नघरुषाम् S'. ३. रुषा S'. ४. एवं स्वरो न सिध्यति. ५. S'. अरिष्टकरणाय इति संबोध्यः इत्यस्यानन्तरं पठति. ६. सं सर्व S'. गा. ७. °समुद्रजित्य पै १६,३,७. ८. इयानंशः पठपामृचि 'अरिष्टकरणाय' इत्यस्या- नन्तरं प्रक्षिप्तः, शाग. ९. वैतु. मंग. १०. °मश्नवत् पै १६,३,८.

अस्मै । मृत्यो इति । अधि । ब्रूहि । इमम् । दयस्व । उत् । इतः । अयम् । एतु ।
अरिष्टः । सर्वऽअङ्गः । सुऽश्रुत् । जरसा । शतऽहायनः । आत्मना । भुजम् । अश्नुताम् ॥

हे मृत्यो त्वम् अस्मै त्वत्तो मृतिम् आशङ्कमानाय अधि ब्रूहि असौ मदनुग्रहार्ह इति शब्दं कुरु । इमं प्रति दयस्व दयां कुरु इमं रक्ष वा । अयम् इतः अस्माद् मृत्योः उदेतु उद्गच्छतु । उक्तम् अर्थं स्पष्टम् आह — अरिष्टः अहिंसितः सर्वाङ्गः सर्वैरङ्गैश्चक्षुरादिभिः संपन्नः सुश्रुत् सुष्ठु श्रोता जरसा वार्धकावस्थया शतहायनः शतं हायना अस्य स तथोक्तः शतसंवत्सरं जीवन् आत्मना अनन्यापेक्षः सन् भुजम् भोगम् अश्नुताम् प्राप्नोतु ।

देवानां हेतिः परि त्वा वृणक्तु पारयामि त्वा रजस उत् त्वा मृत्योरपीपरम् ।
आरादग्निं क्रव्यादं निरूहं[1] जीवातवे ते परिधिं दधामि ॥ ९ ॥

देवानाम् । हेतिः । परि । त्वा । वृणक्तु । पारयामि । त्वा । रजसः । उत् । त्वा । मृत्योः । अपीपरम् । आरात् । अग्निम् । क्रव्यऽअदम् । निःऽऊहन् । जीवातवे । ते । परिऽधिम् । दधामि ॥ ९ ॥

देवानाम् रुद्रादीनां हेतिः आयुधं त्वा त्वां परि वृणक्तु परिवर्जयतु हिंसां मा कुर्यात् । त्वा त्वां रजसः मूर्छालक्षणाद् आवरणात् पारयामि पालयामि वा । किं च त्वा त्वां मृत्योः सकाशाद् उदपीपरम् उद्धरामि । पृ पालनपूरणयोः । ण्यन्तस्य लुङि रूपम् । आरात् दूरदेश एव क्रव्यादम् मांसाशनम् अग्निं निरौहम्[2] निरूहामि निर्गमयामि च । ते तव जीवातवे जीवनाय परिधिं प्राकारम् । देवयजनम् अग्निम् इति शेषः । दधामि स्थापयामि च ।

यत् ते नियानं रजसं[3] मृत्यो अनवधर्ष्यम् ।
पथ इमं तस्माद् रक्षन्तो ब्रह्मास्मै वर्म कृण्मसि ॥ १० ॥

यत् । ते । निऽयानम् । रजसम् । मृत्यो[4] इति । अनवऽधर्ष्यम् ।
पथः । इमम् । तस्मात् । रक्षन्तः । ब्रह्म । अस्मै । वर्म । कृण्मसि ॥ १० ॥

हे मृत्यो ते तव संबन्धि यत् नियानम् नियान्त्यत्रेति नियानं मार्गः । कीदृक् । रजसम् रजोमयम् अनवधर्ष्यम्[4] केनापि धर्षितुम् अशक्यम् । तस्माद् उक्तलक्षणात् पथः

1. निरौहम् S'. 2. वैतु. मंत्रा. 3. रजसो पै १६,३,१०. 4. मृत्यो Bp[2],P; मृत्यो P[5].

मार्गाद् इमं मुमूर्षुं पुरुषं रक्षन्तो वयम् अस्मै मुमूर्षवे ब्रह्म परिवृढं शान्तिरूपं कर्म उदीरितलक्षणं मन्त्रसमूहं वा वर्म तनुत्रं कृण्मसि कृण्मः कुर्मः ।

इत्यष्टमकाण्डे प्रथमेऽनुवाके तृतीयं सूक्तम् ।

'कृणोमि ते प्राणापानौ' (११-२०) इति सूक्तस्य 'आ रभस्व' इत्यनेन सह उक्तो विनियोगः ।

कलहरूपनिर्ऋतिगृहीते कुले तच्छान्त्यर्थम् 'आरादरातिम्' इति द्व्यृचेन आज्यं जुहुयात् । सूत्रितं च—"अथ यत्रैतत्कुलं कलहि भवति तन्निर्ऋतिगृहीतमित्याचक्षते । तत्र जुहुयाद् । 'आरादरातिम्' (१२,१३) इति द्वे" ( कौसू ९७,१-३ ) इति ।

नैर्ऋतकर्मणि अनेन द्व्यृचेन इङ्गिडाज्यादीनि शर्करामिश्राणि कृत्वा जुहुयात् । 'अथातो नैर्ऋतं कर्म' इति प्रक्रम्य शान्तिकल्पे सूत्रितम्—"'आरादरातिम्' इति द्वे । 'अपेत एतु निर्ऋतिः' (कौसू ९७,८) इत्येतैः [1]सममासम् इङ्गिडम् आज्यम्" ( शांक १५,५ ) इत्यादि ।

गोदानादिषु संस्कारकर्मसु 'शिवे ते स्ताम्' इति द्व्यृचेन (१४,१५) व्रीहियवशमीरभिमन्त्र्य कुमारस्य मूर्ध्नि दद्यात् । सूत्रितं हि—"'[2]शिवे ते स्ताम्' इति द्यावापृथिवीभ्यां परिददाति[3]" इति, 'शिवे ते स्ताम्' इति परिदानान्तानि" (कौसू ५४,१७) इति च ।

बालकस्य निष्क्रमणकर्मणि 'शिवे ते स्ताम्' इति द्व्यृचेन बालकं निष्क्रमयेत् । सूत्रितं हि —"'शिवे ते स्ताम्' इति कुमारं प्रथमं निर्णयति" ( कौसू ५८,१८) इति ।

अद्भुतमहाशान्तौ 'शिवास्ते सन्त्वोषधयः' इत्यृचा सूर्याचन्द्रमसौ यजेत् । तद् उक्तं शान्तिकल्पे—"'उरु विष्णो वि क्रमस्व' ( अ ७,२७,३ ) इति विष्णोः 'शिवास्ते सन्त्वोषधयः' (१७) इति सूर्याचन्द्रमसोः[5]" ( शाक २४,२ ) इति ।

तथा मिथ्याभिशापनिवृत्त्यर्थं 'शिवास्ते' इत्यनया सक्तुमन्थम् ओदनं वा अभिमन्त्र्य अभ्याख्याताय दद्यात् ।

तथा तस्मिन्नेव कर्मणि द्रुघणमणिं पलाशायोलोहहिरण्यानाम् अन्यतमं वा मणिम् अनया संपात्य अभिमन्त्र्य निन्दिताय बध्नीयात् ।

सूत्रितं हि—"'उतामृतासुः' ( अ ५,१,७ ), 'शिवास्ते' इत्यभ्याख्याताय प्रयच्छति । '[6]द्रुघणशिरो रज्ज्वा' बध्नाति । प्रतिरूपं पलाशायोलोहहिरण्यानाम्" ( कौसू ४६,१-३) इति ।

नामकरणे 'यत् ते वासः' इत्यनया बालकं वस्त्रेण आच्छादयेत् । "'यत् ते वासः' (१६) इत्यहतेनाच्छादयेत्"[7] ( कौ[ ५८,१७ ) इति सूत्रम् ।

---

१. एतो S'. २. समपा(°प)मांस° Bol. ३. तु. के.; वेतु. कौसू. अभावः. ४. निर्नयति S'. ५. °मसौ शांग. टि. ६. द्रघणं शिरो S'. ७. °हतेनोत्तरमित्र प्रच्छादयति Bl.

गोदानाख्यसंस्कारकर्मणि[1] चौले उपनयने च 'यत् क्षुरेण' इत्यनया क्षुरस्य अभ्युक्षणं मार्जनं च कुर्यात् । "'यत् क्षुरेण' (१७) इत्युदकपात्रं क्षुरम् अभ्युक्ष्य[2] त्रिः प्रमार्ष्टि" (कौसू ५३,१९) इति " 'यत् क्षुरेण' इत्युक्तम्" ( कौसू ५५,३ ) इति च कौशिकसूत्रम्[3] ।

अन्नप्राशनकर्मणि 'शिवौ ते स्ता व्रीहियवौ' इति द्वाभ्याम् ( १८,१९ ) ऋग्भ्यां व्रीहियवौ पिष्ट्वा अभिमन्त्र्य बालकं प्राशयेत् । " 'शिवौ ते स्ताम्' इति व्रीहियवौ प्राशयति" ( कौसू ५८,१९ ) इति सूत्रम् ।

तथा आभ्याम् ऋग्भ्यां व्रीहियवावभिमन्त्र्य गोदानादिषु कुमारस्य मूर्ध्नि परिदध्यात् । " 'शिवौ ते स्ताम्' इति व्रीहियवाभ्याम्[4]" इति ।

गोदानादिषु संस्कारकर्मसु 'अह्ने च त्वा' इत्यनया व्रीहियवावभिमन्त्र्य कुमारस्य मूर्ध्नि दध्यात् । " 'अह्ने च त्वा' (२०) इत्यहोरात्राभ्यां [5]परिददाति" ( कौसू ५८,२० ) इति हि सूत्रम् ।

कृणोमि ते प्राणापानौ जरां मृत्युं दीर्घमायुः स्वस्ति ।
वैवस्वतेन प्रहितान् यमदूतांश्चरतोऽप[6] सेधामि सर्वान् ॥ ११ ॥

कृणोमि । ते । प्राणापानौ । जराम् । मृत्युम् । दीर्घम् । आयुः । स्वस्ति ।
वैवस्वतेन । प्रऽहितान् । यमऽदूतान् । चरतः । अप । सेधामि । सर्वान् ॥ ११ ॥

हे आयुष्काम पुरुष ते तव प्राणापानौ शरीरे ऊर्ध्वाधःसंचारिणौ वायू कृणोमि । प्रतिपदं[7] "कृणोमि त इति[8]" यथोचितं तत्तद्वाक्यशेषोऽध्याहर्तव्यः । ते प्राणापानौ स्थिरौ कृणोमि । जरा मृत्युं च । त्वां यथा न स्पृशतस्तथा कृणोमि । दीर्घम् आयुश्च ते कृणोमि । तथा कृत्वा स्वस्ति । [7]अविनाशिनामैतत् । अविनाशं कृणोमि । कथम् एतत् सर्वं घटते यमदूतेष्वासन्नेषु इति तत्राह — वैवस्वतेन यमेन प्रहितान् प्रेषितान् चरतः आनयनाय व्यापारयतः सर्वान् यमदूतान् अप सेधामि दूरे निराकरोमि । मन्त्रसामर्थ्याद् इत्यभिप्रायः ।

आराद॑राति॑ निर्ऋ॑तिं पुरो ग्राहिं॑ क्रव्यादः॑ पिशाचान् ।
रक्षो॒ यत् सर्वं॑ दुर्भूतं॒ तत् तम॑ इवाप॑ हन्मसि ॥ १२ ॥

आरात् । अरातिम् । निःऽऋतिम् । पुरः । ग्राहिम् । क्रव्यऽअदः । पिशाचान् ।
रक्षः । यत् । सर्वम् । दुःऽभूतम् । तत् । तमःऽइव । अप । हन्मसि ॥ १२ ॥

---

१. संस्काराख्यकर्मणि S'. २. अद्भि इत्येत्य Bl. ३. सूत्रम् > सूत्रितम् S'.
४. तु. के.; वैतु. कौसू. अभावः. ५. °दधाति S'. ६. चरत आरादप पै १६,४,१.
७. अविनाशिनामैतद् इति प्रतिपदम् इत्यतः पूर्वं पठति S'. ८. कृणोमीत्यंवेति S'.

अरातिम् अदात्रीं शत्रुभूतां वा पुरोग्राहिम्[1] पुरस्ताद् ग्रहणशीलाम् एवंविधां निर्ऋतिम् पापदेवतां कलहोत्पादिकाम् । 'यत्रैतत् कुलं कलहि भवति तन्निर्ऋतिगृहीतमित्याचक्षते' ( कौसू ९७,१ ) इति सूत्रकारवचनात् । आरात् हन्मसि इति संबन्धः । निकृष्टं हन्मः । तथा क्रव्यादः मांसाशनान् पिशाचान् अप हन्मसि । एवं दुर्भूतम् दुष्टत्वम् आपन्नं यत् सर्वं रक्षोऽस्ति राक्षसजातिरस्ति । अथवा दुष्टं च तद् भूतं च दुर्भूतं तादृग् रक्षः तत् तम एव[1] तमोवद् आवरकमेव । तद् अप हन्मः ।

अ॒ग्नेष्टे॑ प्रा॒णम॒मृता॒दायु॑ष्मतो वन्वे जा॒तवे॑दसः ।
यथा॑[2] न रिष्या॑[3] अ॒मृतः॑ स॒जूरसु॒स्तत् ते॑ कृणोमि॒ तदु॑ ते॒ समृ॑ध्यताम् ॥१३॥

अ॒ग्नेः । ते॒ । प्रा॒णम् । अ॒मृता॑त् । आयु॑ष्मतः । व॒न्वे॒ । जा॒तऽवे॑दसः । यथा॑ । न । रिष्याः॑[4] ।
अ॒मृतः॑ । स॒ऽजूः । असुः॑ । तत् । ते॒ । कृ॒णो॒मि॒ । तत् । ऊं॒ इति॑ । ते॒ । सम् । ऋ॒ध्य॒ता॒म् ॥१३॥

अमृतात् अमरणाद् देवाद् आयुष्मतः चिरजीविनः । 'अग्निरायुष्मान्' ( तै २,३,१०,३ ) इति हि श्रुतिः । तथाविधमाहात्म्यवतः अग्नेः सकाशात् हे निर्ऋत्यादिना अपहतप्राण पुरुष ते प्राणं वन्वे याचे । पुनः कीदृशाद् अग्नेः । जातवेदसः जातप्रज्ञात् जातधनाद् वा । हे पुरुष त्वं च यथा न रिष्याः हिंसितो न भवेः । रुष रिष हिंसायाम् । अस्माद् दैवादिकात् लेटि आडागमः । अमृतः अमरणः सजूः सह प्रीयमाणश्च असः भवेः । अस्तेर्लेटि अडागमः । तत् तादृक् शान्तिकर्म ते त्वदर्थं कृणोमि करोमि । तदु तदेव ते तव समृध्यताम् समृद्धं भवतु ।

शि॒वे ते॑ स्तां॒ द्यावा॑पृथि॒वी अ॑संता॒पे अ॑भि॒श्रियौ॑[5] ।
शं ते॒ सूर्य॒ आ त॑पतु॒ शं वातो॑ वातु ते हृ॒दे ।
शि॒वा अ॒भि क्ष॑रन्तु॒ त्वापो॑ दि॒व्याः पय॑स्वतीः ॥ १४ ॥

शि॒वे इति॑ । ते॒ । स्ता॒म् । द्यावा॑पृथि॒वी इति॑ । अ॒स॒न्ता॒पे इत्य॑सम्ऽता॒पे[6] । अ॒भि॒ऽश्रियौ॑ ।
शम् । ते॒ । सूर्यः॑ । आ । त॒प॒तु॒ । शम् । वातः॑ । वा॒तु॒ । ते॒ । हृ॒दे । शि॒वाः । अ॒भि । क्ष॒र॒न्तु॒ ।
त्वा॒ । आपः॑ । दि॒व्याः । पय॑स्वतीः ॥ १४ ॥

हे कुमार ते तव निष्क्रमणसमये । यद्वा गोदानादिभिः कर्मभिः संस्क्रियमाण पुरुष । ते तव द्यावापृथिवी द्यावापृथिव्यौ देव्यौ शिवे मङ्गले कल्याणकारिण्यौ

---

१. वैदु. मंगा. २. यथा पै १६,४,३. ३. ऋष्यां D[2],E[2]. ४. ऋष्याः Bp[2],P,P[6],J. ५. भिद्यू ? पै १६,४,४. ६. इत्यसम्ऽतापे P.

स्ताम् भवताम् । तथा असंतापे संतापम् अकुर्वत्यौ स्ताम् । अधिश्रियौ[1] प्राप्तश्रीके श्रीप्रदे स्ताम् । तथा सूर्यश्च ते त्वदर्थं शम् सुखं यथा भवति तथा आ तपतु प्रकाशयतु । एवं ते हृदे हृदयाय मनोऽनुकूलतायै वातः वायुः शम् सुखं यथा भवति तथा वातु संचरतु । तथा त्वा त्वां प्रति दिव्याः दिवि भवाः पयस्वतीः बहुभिः पयोभिः स्वादुरसैरुपेता आपः शिवाः सत्यः अभि क्षरन्तु अभि स्रवन्तु ।

शिवास्ते सन्त्वोषधय उत् त्वाहार्षमधरस्या[2] उत्तरां पृथिवीमभि ।
तत्र त्वादित्यौ रक्षतां सूर्याचन्द्रमसावुभा ॥ १५ ॥

शिवाः । ते । सन्तु । ओषधयः । उत् । त्वा । अहार्षम् । अधरस्याः । उत्तराम् । पृथिवीम् । अभि ।
तत्र । त्वा । आदित्यौ । रक्षताम् । सूर्याचन्द्रमसौ । उभा ॥ १५ ॥

हे कुमार ते तव ओषधयः आहारार्थम् उपयुज्यमाना व्रीह्यादयः शिवाः सुखकराः सन्तु भवन्तु । त्वा त्वाम् अधरस्याः पृथिव्याः सकाशाद् उत्तरां पृथिवीम् अभि अभिलक्ष्य उदहार्षम् उद्धरणम् अकार्षम् । पृथिव्या एकस्या अपि अधरोत्तरभावः अंशभेदेन त्रित्वाद् उपपद्यते । 'तिस्रो भूमीर्धारयन् त्रीँरुत द्यून्' ( ऋ २,२७,८ ), 'तिस्रो मह्रीरुपराः' ( ऋ ३,५६,२ ) इत्यादिमन्त्रेषु त्रित्वस्याम्नानात् । अवममध्यमोत्तमभेदेन पृथिव्यास्त्रैविध्यम् आम्नायते मन्त्रान्तरे—'यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः' ( ऋ १,१०८,९ ) इति । अतः अवमस्याः सकाशात् परमाम् पृथिवीम् अभिलक्ष्य उद्धरणम् अत्र अभिधीयते । तत्र उत्तरस्यां पृथिव्याम् हे बालक त्वा त्वाम् आदित्यौ अदितेः पुत्रौ देवौ रक्षताम् पालयताम् । कौ तावादित्यौ इति तौ दर्शयति—उभा उभौ सूर्याचन्द्रमसौ । 'देवताद्वन्द्वे च' ( पा ६,३,२६ ) इति आनङादेशः ।

यत् ते वासः परिधानं यां नीविं कृणुषे त्वम् ।
शिवं ते तन्वे३ तत् कृण्मः संस्पर्शेऽद्रूक्ष्णमस्तु[3] ते ॥ १६ ॥

यत् । ते । वासः । परिऽधानम् । याम् । नीविम् । कृणुषे । त्वम् ।
शिवम् । ते । तन्वे । तत् । कृण्मः । सम्ऽस्पर्शे । अद्रूक्ष्णम् । अस्तु । ते ॥ १६ ॥

हे बालक ते तव[4] परिधानम् उपरि आच्छादनीयं यद् वासोऽस्ति त्वं च यां नीविं कृणुषे । नाभिदेशे संबद्धं वस्त्रं नीविरित्युच्यते । मध्यदेशाच्छादनम् इत्यर्थः । नीव्यपे-

---

१. वैतु. मंगा. २. °हारिष° पै १६,४,५ [मुको.]. ३. °र्शेऽद्रुक्ष्ण°, °र्शेऽदूक्ष्ण° WM.; °र्शेऽरूक्ष्ण° WM. RW. ४. यत् S'.

क्षया याम् इति स्त्रीलिङ्गव्यपदेशः । तत् द्विप्रकारकं वस्त्रं ते तव तन्वे शरीराय शिवम् सुखकरं कृण्मः । तच्च वस्त्रं संस्पर्शे विषये अरूक्षणम् अरूक्षं यथा मार्दवम् अश्नुते[1] व्याप्नोति गच्छति तथा कृण्मः ।

यत् क्षुरेण मर्चयता[2] सुतेजसा[3] वप्ता[4] वपसि[5] केशश्मश्रु[6] ।
शुभं[7] मुखं[8] मा न[9] आयुः प्र[10] मोषीः ॥ १७ ॥

यत् । क्षुरेण । मर्चयता । सुऽतेजसा । वप्ता । वपसि । केशऽश्मश्रु ।
शुभम्[11] । मुखम् । मा । नः । आयुः । प्र । मोषीः ॥ १७ ॥

यत् यदा हे देव सवितः संस्कारक पुरुष वा त्वं वप्ता केशानां छेत्ता नापितः सन् मर्चयता व्यापारयता सुतेजसा शोभनतेजोयुक्तेन क्षुरेण केशश्मश्रु शिरोरोमाणि मुखरोमाणि च वपसि । यद्यपि वपतिधातुर्बीजसंतानार्थस्तथापि केशसमभिव्याहाराद् छेदने वर्तते । तदा वपनं कुर्वन् मुखम् गोदानचौलोपनयनैः संस्क्रियमाणस्य बालस्य मुखं शुभम् दीप्तं तेजस्वि कुरु । वपने सति मुखविकाराभावाद् एवं प्रार्थ्यते । नः अस्माकं पुत्रस्य आयुर्मा प्र मोषीः ।

शिवौ ते स्तां व्रीहियवावबलासावदोमधौ ।
एतौ यक्ष्मं वि बाधेते एतौ मुञ्चतो अंहसः[12] ॥ १८ ॥

शिवौ । ते । स्ताम् । व्रीहिऽयवौ । अबलासौ । अदोमधौ ।
एतौ । यक्ष्मम् । वि । बाधेते इति । एतौ । मुञ्चतः । अंहसः ॥ १८ ॥

हे अश्नम् अश्नन् बालक ते तव व्रीहियवौ अन्नत्वेन कल्पितौ शिवौ स्ताम् मङ्गलौ सुखकरौ भवताम् । अबलासौ शारीरबलस्य अक्षेप्तारौ । बलकरावित्यर्थः । तथाविधौ स्ताम् । तथा अदोमधू[1] उपयोगानन्तरं मधुरौ । एवम् इष्टप्राप्तिम् आशास्य अनिष्टपरिहारम् आशास्ते— एतौ व्रीहियवौ यक्ष्मम् शरीरगतं रोगं वि बाधेते विशेषेण पीडयतः । एतौ एव व्रीहियवौ कुमारम् अंहसः पापाद् मुञ्चतः मोचयतः ।

यदश्नासि यत् पिबसि धान्यं कृष्याः[13] पयः ।
यदाद्यं[14] यदनाद्यं सर्वं ते अन्नमविषं कृणोमि ॥ १९ ॥

---

१. वेतु. मंपा. २. वर्चयता पै १६,४,७; मज्जयता पाग्र २,१,१९; वर्त्तयता माग्र १,२१,७. ३. सुपेशसा आश्रं २,१,७ आग्र १,१७,१६ पाग्र. हिग्र १,९,१६. ४. वप्ता आपमं.; वसद् हिग्र. माग्र. ५. वपति पाग्र. ६. केशान् आपमं. पाग्र. माग्र. ७. शुंभं B[b],D,R,Cs,WM.,RW; शुम्भन् W. पै.; शुन्धि आपम.; शुन्धि आग्र. पाग्र. माग्र.; वर्चसा हिग्र.; शिरं पैप १ सरथ. टि. द. ८. शिरो आपमं. आग्र. पाग्र. माग्र. ९. मैनं पै; माऽस्य आपमं. आग्र. पाग्र. माग्र. १०. आयुष्प B[b],D,K[m],S[m],Cs,R[s]. ११. शुंभम् J,Cp. १२. मांहसः पै १६,४,८. १३. कृष्याण S, सा. १४. °द्यं B,B[b],D,S[m],Cs.

यत् । अ॒श्नासि॑ । यत् । पिब॑सि । धा॒न्य॑म् । कृ॒ष्याः[1] । पय॑ः ।
यत् । आ॒द्य॑म् । यत् । अ॒ना॒द्य॑म्[2] । सर्व॑म् । ते॒ । अन्न॑म् । अ॒वि॒षम् । कृ॒णो॒मि॒ ॥ १९ ॥

हे कुमार त्वं यद् धान्यं कृच्छ्राद्[3] अश्नासि अभ्यवहरसि । तथा यद् धान्यं कृच्छ्रात् पयः पयोवत्सारभूतं पिष्टमयम् अन्नं पयोमिश्रितं वा धान्यम् व्रीह्यादिरूपं पिबसि । यद् आद्यम् अदनीयं सुखेन भक्षणीयम् यत् च अनाद्यम् अदनानर्हं कठिनद्रव्यम् । अत्यन्तकटु-तिक्तत्वाद् वा अनाद्यम् । सर्वम् यद् अश्नासीत्यादिना उक्तम् अन्नम् [ते] अविषम् निर्विषम् अमृतं कृणोमि करोमि ।

अह्ने॑ च त्वा रात्र॑ये चो॒भाभ्यां॒ परि॑ दद्मसि[4] ।
अ॒रायेभ्यो॑ जिघ॒त्सुभ्य॑ इ॒मं मे॑[5] परि॑ रक्षत[6] ॥ २० ॥

अह्ने॑ । च॒ । त्वा॒ । रात्र॑ये । च॒ । उ॒भाभ्या॑म् । परि॑ । द॒द्म॒सि॒ ।
अ॒रायेभ्य॑ः । जि॒घ॒त्सुऽभ्य॑ः । इ॒मम् । मे॒ । परि॑ । र॒क्ष॒त॒ ॥ २० ॥

हे कुमार त्वा त्वाम् अह्ने अहर्देवतायै रात्रये रात्रिदेवतायै च उभाभ्यां देवताभ्यां परि दध्मसि[3] परिदद्मः रक्षार्थं प्रयच्छामः । उक्तकालद्वयव्यतिरेकेण कालान्तराभावात् तदुभयाभिमानिदेवताके[7] रक्षणे सति सर्वदा बालस्य रक्षा भवतीत्यभिप्रायः । परिदानप्रकार उच्यते—अरायेभ्यः अधनेभ्यो धनापहर्तृभ्यो वा जिघत्सुभ्यः अदनेच्छा-वद्भ्यो भक्षकेभ्यः रक्षःपिशाचादिभ्यः सकाशाद् इमं मे मदीयं बालं परि रक्षत परितः पालयत हे विश्वे देवाः अह्नि संचरद्भ्यो रात्रौ संचरद्भ्यश्च । जिघत्सुभ्य इति । अदेः 'लुङ्सनोर्घस्लृ' ( पा २,४,३७ ) इति घस्लादेशे 'एकाच उपदेशेऽनुदात्तात्' ( पा ७,२,१० ) इति इट्प्रतिषेधः । 'सः स्यार्धधातुके' ( पा ७,४,४९ ) इति तत्वम् ।

इत्यष्टमकाण्डे प्रथमेऽनुवाके चतुर्थं[8] सूक्तम् ।

'शतं तेऽयुतम्' इत्यस्य सूक्तस्य 'आ रभस्व' (अ ८,२) इत्यनेन सह उक्तो विनियोगः ।

गोदानादिषु कर्मसु व्रीहियवौ 'शरदे त्वा' इत्यभिमन्त्र्य कुमारस्य मूर्ध्नि दद्यात् । "'शरदे त्वा' (२२) इत्यृतुभ्यः" ( कौसू ५८,२१ ) इति हि सूत्रम् ।

श॒तं ते॑ऽयु॒तं हा॑य॒नान् द्वे यु॒गे त्रीणि॑ च॒त्वारि॑ कृण्मः[9] ।
इ॒न्द्रा॒ग्नी विश्वे॑ दे॒वास्तेऽनु॑[10] मन्यन्ता॒मह॑णीयमानाः ॥ २१ ॥

---

१. कृष्याः P. २. अनाद्यम् P,J,Cp. ३. वैतु. मंपा. ४. दध्मसि B,D,Km,R, सा. पै १६,४,१०; दध्मसि > दद्मसि Cs. ५. नः पै. ६. रक्षता पै. ७. 'देवताकं S' ८. तृतीयं S'. ९. सन्तु पै १६,५,१. १०. देवा अनु पं.

शतम् । ते । अयुतम् । हायनान् । द्वे इति । युगे इति । त्रीणि । चत्वारि । कृण्मः ।
इन्द्राग्नी इति । विश्वे । देवाः । ते । अनु । मन्यन्ताम् । अहृणीयमानाः ॥ २१ ॥

हे बालक ते तव शतं हायनान् शतसंख्याकान् संवत्सरान् । 'शतायुः पुरुषः' (तैत्रा १,७,६,२) इति श्रुतिविहितान् अयुतम् अयुतसंख्याकान् कृण्मः कुर्मः । तथा ते द्वे युगे । जायापतिलक्षणम् एकं युगम् । स्त्र्यपत्यपुमपत्यलक्षणम् अपरं युगम् । एवं द्वे युगले । त्रीणि युगानि चत्वारि युगानि च कुर्मः । उपलक्षणम् एतत् । पुत्रपौत्रादिद्वारा अनेकयुगलानि कुर्मः । यद्यपि एकशतपर्यन्तं जीवनमपि मनुष्याणां न संभवति तथापि आकल्पं जीव कल्पायुष्यम् अस्तु इत्याद्याशीर्दर्शनाद् दीर्घायुषि तात्पर्यं न विरुध्यते । अथवा एवं योजना—हे बालक ते शतं हायनान् कृण्मः । तानेव अयुतं च हायनान् कृण्मः । तानेव द्वे युगे कृण्मः । त्रीणि च युगानि कृण्मः । चत्वारि युगानि कृण्म इति । अयम् अभिप्रायः—तव प्रथमं क्रियमाणेन संस्कारविशेषेण सर्वमनुष्यसाधारणान् शतसंवत्सरान् कुर्मः । तानेव अयुतसंख्याकान् कुर्मः । चतुर्णां युगानां संधिसंवत्सरान् विहाय युगचतुष्टयस्य मिलित्वा[2] अयुतं संवत्सराः स्युः । तान् विभज्य द्वे कलिद्वापराख्ये । त्रीणि त्रेतासहितानि । चत्वारि कृतयुगसंहितानि कुर्म इति आशास्यते । एवंरूपां प्रार्थनां ते प्रसिद्धा इन्द्राग्नी विश्वे च देवा अहृणीयमानाः ईदृक्प्रार्थना कथं कर्तुं युज्यत इति हृणीयां लज्जां क्रोधं वा अकुर्वाणाः सन्तः अनुमन्यन्ताम् अनुमतिं कुर्वताम् ।

शरदे त्वा हेमन्ताय वसन्ताय ग्रीष्माय परि दद्मसि[3] ।
वर्षाणि तुभ्यं स्योनानि येषु वर्धन्त ओषधीः ॥ २२ ॥

शरदे । त्वा । हेमन्ताय । वसन्ताय । ग्रीष्माय । परि । दद्मसि ।
वर्षाणि । तुभ्यम् । स्योनानि । येषु । वर्धन्ते । ओषधीः ॥ २२ ॥

हे बालक त्वा त्वां शरदे ऋतवे परि दद्मसि परिदद्मः । परिदानं रक्षार्थं दानम् । हे शरदृतो अमुं रक्षेति प्रयच्छाम इत्यर्थः । तावत्पर्यन्तं जीवन्तं हेमन्ताय परिदद्मः । ततो वसन्ताय । ततो ग्रीष्माय च परिदद्मः । उपलक्षणम् एतत् । सर्वेभ्योऽपि ऋतुभ्यः प्रयच्छामीत्युक्तं भवति । सर्वेष्वपि ऋतुषु जीवनस्य अपेक्षितत्वात् । हे बालक तुभ्य वर्षाणि जीवनकालमध्यपातीनि षष्ठ्युत्तरशतत्रयदिनसंख्याकानि प्रभवादिरूपाणि स्योनानि सुखकराणि । भवन्त्विति शेषः । येषु वर्षेषु ओषधीः ओषध्यः भोगसाधनभूता व्रीह्यादयो वर्धन्ते अभिवृद्धिं प्राप्नुवन्ति । तानि वर्षाणीति पूर्वत्र संबन्धः । वर्षाणि स्वीयाभिरभिवृद्धाभिरोषधीभिस्तव सुखकराणि सन्तु इत्यर्थः ।

---

१. बालयाम् S'. २. मिलता S'. ३. दध्मसि पै १६,५,२.

मृत्युरीशे द्विपदां मृत्युरीशे चतुष्पदाम् ।
तस्मात् त्वां[1] मृत्योर्गोपतेरुद्भरामि[2] स मा बिभेः[3] ॥२३॥

मृत्युः । ईशे । द्विऽपदाम् । मृत्युः । ईशे । चतुःऽपदाम् ।
तस्मात् । त्वाम् । मृत्योः । गोऽपतेः । उत् । भरामि । सः । मा । बिभेः ॥२३॥

द्विपदाम् पदद्वयभूतानां मनुष्यपक्ष्यादीनां मृत्युः सर्वप्राणिसंहर्ता देवः ईशे ईष्टे स्वामी भवति । तथा चतुष्पदाम् गवाश्वादीनां मृत्युः एव ईष्टे । न हि मृत्युमपलपन् कश्चिदपि प्राणन् दृश्यते ऋते मुमुक्षोः । यस्मादेवं तस्मात् त्वां गोपतेः[4] । गावः पराधीनत्वाद् यथा गोपालं नातियन्ति एवम् एतेऽपि मृत्योर्वशगा इति मृत्युर्गोपतिरित्युच्यते । अथवा गोशब्देनात्र पशवोऽभिधीयन्ते । पशवो द्विपादश्चतुष्पादश्च । तेषाम् उभयेषां पतिः । तादृशाद् मृत्योः सकाशाद् उद्भरामि उद्धरामि । मन्त्रवीर्याद् इत्यभिप्रायः । स मृत्युभीतस्त्वं मा बिभेः भीतिं मा कार्षीः ।

सोऽरिष्ट[5] न मरिष्यसि न मरिष्यसि मा बिभेः ।
न वै तत्र म्रियन्ते[6] नो [7]यन्त्यधमं तमः[8] ॥ २४ ॥

सः । अरिष्ट । न । मरिष्यसि । न । मरिष्यसि । मा । बिभेः ।
न । वै । तत्र । म्रियन्ते । नो इति । यन्ति । अधमम् । तमः ॥ २४ ॥

हे अरिष्ट । न विद्यते रिष्टं दैवं यस्य सः अरिष्टः । दैवविमुख इत्यर्थः । स संबोध्यते । अथवा रिष्टं रेषो हिंसा सा यस्य नास्ति सः अरिष्टः । निरस्तहिंस इत्यर्थः । मृत्युकर्तृकहिंसारहित इति यावत् । [9]तादृश स त्वं[8] न मरिष्यसि मृतिं न प्राप्नोषि । दार्ढ्याय पुनराह — न मरिष्यसि त्वम् अतो मा बिभेः मरिष्यामीति भीतिं मा प्राप्नुहि । भीत्यभावे कारणम् आह — न वै तत्र इति । तत्र तस्मिन् शान्तिकर्मविषये[9] तस्मिन् शान्तिकर्मयुक्ते देशे वा । उत्तरमन्त्रे 'यत्रेदं ब्रह्म क्रियते' इति वक्ष्यमाणत्वात् । न म्रियन्ते वै न प्राणं त्यजन्ति खलु । वैशब्दः प्रसिद्धौ । सा च महाशान्तिकृत्सु पुरुषेषु सर्वजनीना । मा भून्मृतिः । अधमतमःप्राप्तिः किमस्ति, सापि नेत्याह नो यन्त्यधमं तम इति । अधमं तमः मरणकालीना दुःसहा मूर्छा । तामपि नैव प्राप्नुवन्ति । यद्वा मृत्यनन्तरं दुष्कर्मभिः प्राप्तव्यं "सवितृप्रकाशशून्यम् अधोलोकस्थं तमिस्रम्" । तस्य प्राप्तिर्नैवेत्यर्थः ।

---

१. त्वा पै १६,५,२. २. °द्धरामि पै. ३. मृथाः पै. ४. गोपतेर्गाव इव S'. ५. °रिष्टे पै १६,५,४. ६. प्र मीयन्ते पै. ७. °धरं रजः पै. ८. तादृशस्त्वं S'. ९. शान्तिकर्मपिविषये S'. १०. शून्यमध्ये लोकस्थतमिस्रं S'.

'सर्वो वै तत्र जीवति' गौरश्वः पुरुषः पशुः ।
यत्रेदं ब्रह्म क्रियते परिधिर्जीवनाय कम् ॥ २५ ॥

सर्वः । वै । तत्र । जीवति । गौः । अश्वः । पुरुषः । पशुः ।
यत्र । । इदम्[1] । ब्रह्म । क्रियते । परिऽधिः । जीवनाय । कम् ॥ २५ ॥

पूर्वमन्त्रे 'सोऽरिष्ट न मरिष्यसि', 'न वै तत्र [3]म्रियन्ते' ( अ ८,२,२४ ) इति[3] यद् उक्तं तदेव अस्मिन् मन्त्रे सोपपत्तिकं विस्पष्टीक्रियते । अर्थस्तु स्पष्ट एव । सर्वशब्दस्य विवरणं गौरश्व इत्यादि । ब्रह्म परिवृढं महाशान्त्याख्यं कर्म । परिधिः रक्षःपिशाचादिनिवारकः प्राकारः । यथा यज्ञे अग्निः परिधिः एवम् । तच्च परिधानं किमर्थम् इति तत्राह—जीवनाय कम् इति । जीवनायेत्येतावतो नाधिकम् कम् इत्यस्य पूरणार्थत्वात् । तथा च यास्कः 'मिताक्षरेष्वनर्थकाः कमीमिद्विति' इत्युक्त्वा उदाजहार—"'शिशिरं जीवनाय कम्' शिशिरं जीवनाय" (नि १,१०) इति ।

परि त्वा पातु समानेभ्योऽभिचारात् सबन्धुभ्यः[4] ।
अमम्रिर्भवामृतोऽतिजीवो[5] मा ते हासिषुरसवः शरीरम् ॥ २६ ॥

परि । त्वा । पातु । समानेभ्यः । अभिऽचारात् । सबन्धुऽभ्यः ।
अमम्रिः[6] । भव । अमृतः । अतिऽजीवः । मा । ते । हासिषुः । असवः । शरीरम् ॥२६॥

हे शान्त्यर्थिन् पुरुष त्वा त्वां मया कृतं शान्तिकर्म परि परितः पातु पालयताम् । कुतः सकाशात् । समानेभ्यः विद्यैश्वर्यपराक्रमैः सदृशेभ्योऽन्येभ्यः । तथा सबन्धुभ्यः समानबन्धुभ्यः । अभिचारात् तत्कृतात् हिंसाप्रयोगात् । त्वं च अमम्रिः अमरणशीलो भव । तथा अमृतः मृतिरहितः अतिजीवः अतिशयितजीवो भव । ते तव शरीरम् असवः प्राणाः चक्षुरादीन्द्रियरूपा अमुख्यप्राणाः प्रसिद्धा मुख्यप्राणाश्च मा हासिषुः मा जह्युः ।

ये मृत्यव एकशतं या नाष्ट्रा अतितार्याः[7] ।
मुञ्चन्तु तस्मात् त्वां[8] देवा अग्नेर्वैश्वानरादधि ॥२७॥

ये । मृत्यवः । एकऽशतम् । याः । नाष्ट्राः । अतिऽतार्याः ।
मुञ्चन्तु । तस्मात् । त्वाम् । देवाः । अग्नेः । वैश्वानरात् । अधि ॥२७॥

---

१. न वै तत्र प्रमीयते तैआ ६,११,२. † जीवतु पै १६,५,५. २. इमम् P.
३. म्रियन्त इति S'. ४. सुबन्धुभ्यः पै १६,५,६. ५. अमम्रि° B,B[k],D,K,K[m],S[m],Cs.
६. अमम्रिः P,Cp. ७. अतिजीव्याः पै १६,५,८. ८. त्वा पै.

ये प्रसिद्धा मृत्यवः हिंसका यमस्य हेतयः[1] ज्वरशिरोव्यथादयः एकशतम् एक-शतसंख्याका मुख्यभूताः सन्ति। [2]याश्च नाष्ट्राः[2] नाशकारिण्यः अतितार्याः अतितरीतव्या लङ्घनीया हिंसिकाः सन्ति। तस्मात् उक्ताद् द्विविधाद् मृत्युरूपाद् नाष्ट्रारूपाच्च त्वां देवाः इन्द्रादयो मुञ्चन्तु मोचयन्तु। तथा वैश्वानराद् अग्नेरधि। अधिः[3] पञ्चम्यर्थानुवादी। अग्नेः सकाशात् त्वां मुञ्चन्तु।

अ॒ग्नेः शरी॑रमसि पारयि॒ष्णु[4] र॑क्षो॒हाऽसि॑ सपत्न॒हा।
अथो॑ अमीव॒चात॑नः पूतु॒द्रुर्नाम॑[5] भेष॒जम्॥ २८॥

अ॒ग्नेः। शरी॑रम्। अ॒सि॒। पा॒र॒यि॒ष्णु। र॒क्षः॒ऽहा। अ॒सि॒। स॒प॒त्न॒ऽहा।
अथो॒ इति॑। अ॒मी॒व॒ऽचात॑नः। पू॒तु॒द्रुः। नाम॑। भे॒ष॒जम्॥ २८॥

अनेन मन्त्रेण पूतद्रुनामकः सर्वारिष्टनिवर्तको रक्षामण्युपादानभूतो वृक्षविशेषः कथ्यते। हे पूतद्रो त्वम् अग्नेः पारयिष्णु पारप्रापकं शरीरम् असि। वृक्षस्यान्तः अग्नेरवस्थानात् शरीरत्वव्यपदेशः। विशेषतः अस्य वृक्षस्य शरीरत्वाभिधानम्। अथवा पारयिष्णुः[6] इति पृथग्विशेषणम्। स्वनिर्दिष्टव्यापारस्य पारप्रापकः रक्षोहा रक्षसां हन्ता असि भवसि। सपत्नहा शत्रुहन्ता च असि। अथो अपि च अमीवचातनः रोगस्य प्रच्यावकः। एवंमहिमा त्वं पूतद्रुर्नाम[6] पूतद्रुसंज्ञकं भेषजम् औषधम्। तादृशस्त्वम् अभिमतं साधयेति शेषः।

इत्यथर्वसंहिताभाष्ये अष्टमकाण्डे प्रथमोऽनुवाकः।

द्वितीयेऽनुवाके षट् सूक्तानि। अस्यानुवाकस्य चातनगणे पाठात् 'चातनानाम् अपनोदनेन व्याख्यातम्' (कौसू २५,२२) इत्युक्तेषु कर्मसु विनियोगः। तानि कर्माणि कथ्यन्ते। [7]रक्षोग्रहपिशाचादिभैषज्यार्थम् अनेनानुवाकेन [8]फलीकरणतुषवृक्षशकलानाम् अन्यतमं जुहुयात्। एतैरेव धूपयेद् वा।

तथा अनेनानुवाकेन पिशाचादिग्रस्तं पुरुषम् अनुमृयात्।

तथा तस्मिन्नेव कर्मणि अनेनानुवाकेन त्रपुसमुसलखदिरसर्षपाणाम् अन्य-तमस्य समिध आदध्यात्।

तथा तस्मिन्नेव कर्मणि खादिरान् शङ्कून् लोहमयान् ताम्रमयान् वा विषमसंख्यान् निखननार्थं 'रक्षोहणम्' इत्यनुवाकेन अभिमन्त्रयेत। तत्तशर्करा[9] अभिमन्त्र्य शयनादौ परिकिरेद् वा।

---

१. तयः S′. २. याश्च तानाष्ट्राः S′. ३. अयं S′. ४. 'यिष्णु> 'यिष्णु A; 'यिष्णु R,P³,M,E³, RW. ५. पूतुद्रु॰ A; पूतद्रु॰ Sm. ६. वैतु. मंपा. ७. परोक्षो॰ S′. ८. फलीकरणं तुष॰ S′. ९. सक्ष॰ S′.

तथा तस्मिन्नेव कर्मणि अनेनानुवाकेन सूत्रोक्तरीत्या यवसक्तून् जुहुयात् ।

तथा असाध्यग्रहवशीकरणार्थम् अनेनानुवाकेन वीरणतूलसहितम् इङ्गिडाज्यम् पलाशपर्णपृष्ठभागेन जुहुयात् ।

तथा गृहादौ ग्रहपिशाचादिसद्भावासद्भावशङ्कायाम् अनेनानुवाकेन सर्षपेध्मं शरमयं बर्हिश्च अभिमन्त्र्य गृहस्योपरि स्थापयेत् । प्रभाते इध्माबर्हिषोर्विकारे ग्रहास्तित्वं जानीयात् ।

तस्मिन्नेव कर्मणि वैश्रवणनमस्कारानन्तरम् अनेनानुवाकेन उदकम् अभिमन्त्र्य ग्रहगृहीतम् आचामयेत् प्रोक्षयेद् वा रात्रौ उल्मुकद्वयम् अभिमन्त्र्य संघर्षयेद् वा ।

तद् उक्तं कौशिकेन — "चातनानाम् अपनोदनेन व्याख्यातम् । त्रपुसमुसलखदिरतार्ष्टाघानाम्[1] आदधाति । अयुग्मान् खादिरान् शङ्कून् 'अश्वौ[2] नि विध्य' (५,२९,६) इति पश्चाद् अग्नेः समं [3]भूमिं निखनति[3] । एवम् आयसलोहान् । [4]तप्तशर्कराभिः शयनं राशिपल्यानि[4] [5]परिकिरति । अमावास्यायां[5] सकृद्गृहीतान् [6]यवान् अनपहतान्[6] अप्रतीहारविघ्नान्[7] आभिचारिकं परिस्तीर्य तार्ष्टाघेध्म[8] आवपति । य आगच्छेत् तं ब्रूयाच्छरणशुल्वेन[9] जिह्वा[10] निर्मृजानः शालाया. प्रस्कन्देति[11] । [12]तथाऽकुर्वन्नना(?) । अघे हुवाने[12] । वीरिणतूलमिश्रम् इङ्गिडं प्रपुटेन जुहोति । इध्माबर्हिः शालायाम् आसजति । अपरेद्युर्विकृतौ[13] [14]पिशाचतो रुजति[14] । उक्तो होमः । वैश्रवणायाञ्जलिं कृत्वा जपन्नाचामयत्यभ्युक्षति[15] । निरुल्मुके [16]सघर्षति" ( कौसू २५,२२-३४ ) इति ।

तथा शान्त्युदकाभिमन्त्रणे 'चातनैर्मातृनामभिर्जुहुयात्' ( शाक १६? ) इत्यादिषु च अस्यानुवाकस्य गणप्रयुक्तो विनियोगोऽनुसंधेयः ।

तथा वशाशमनकर्मणि पशुसंज्ञपनानन्तरं 'रक्षोहणम्' इत्यनुवाकं जपेत् । सूत्रितं हि — "अथ प्राणान् आस्थापयति 'प्रजानन्तः' ( अ २,३४,५) इति । दक्षिणतस्तिष्ठन्[17] 'रक्षोहणम्' ( अ ८,३ ) जपति" ( कौसू ४४,१५;१६ ) इति ।

तथा घृतकम्बलाख्ये महाभिषेके अभिषेकानन्तरं 'रक्षोहणम्' इत्यनुवाकं जपेत् । 'बृहस्पतिर्महेन्द्राय चकार घृतकम्बलम्' (अप ३३,१,२) इति प्रक्रम्य उक्तम् अथर्वपरिशिष्टे —

'ब्राह्मणान्[18] स्वस्तिवाच्याथ प्राङ्मुखः संविशेत् ततः ।
रक्षोहणम् अनुवाकं जपेत् कर्ताऽथ ऋत्विजः ॥' (अप ३३,७,३) इति ।

रक्षोहणं वाजिनमा जिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म ।
शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स [19]रिषः पातु[19] नक्तम् ॥१॥

---

१. °दिरत्याप्ष्टाघानाम् S'. २. वृक्षौ S'. ३. °भूमि निहन्ति Bl. ४. सत्वशर्कराभिशयनराशि° S'; °शयनराशि° के.; °पल्याणि Bl. ५. परिचरत्यमा° S'. ६. यवाननपहितान् S'. ७. °हारं S'. ८. त्वाप्ष्टाघेध्म S'. ९. °च्छरगशु° S'. १०. जुह्वा S'. ११. प्रस्कंनिति S'. १२. °कुर्वन्नघानेनवाने S'; तथा कुर्वन्ननाघे हुवु° Bl. १३. °कृते Bl. १४. पिशाचा आगुरिति S'. १५. °प्राचमय° Bl. १६. संकर्षति Bl. १७. °नास्ति° S'. १८. तु. BN.; वेसु. शंग. ब्राह्मणाः. १९. रिषस्पा° मा १८,७१.

रक्षःऽहनम् । वाजिनम् । आ । जिघर्मि । मित्रम् । प्रथिष्ठम्[1] । उप । यामि । शर्म ।
शिशानः । अग्निः । क्रतुऽभिः । सम्ऽइद्धः । सः । नः । दिवा । सः । रिषः[2] । पातु । नक्तम् ॥ १ ॥

एतदनुवाकविनियोजकसूत्रोक्तफलकामोऽहं रक्षोहणम् रक्षसाम् अपहन्तारं वाजिनम् वाजो बलं तत्साधनम् अन्नं वा तद्वन्तम् अग्निम् आ जिघर्मि घृतं सर्वतः क्षारयामि । जुहोमीत्यर्थः । यद्वा दीपयामि [3]समिन्धे । आज्यादिनेति[3] शेषः । तथा कृत्वा मित्रम् सखिभूतं प्रथिष्ठम् पृथुतरं तम् अग्निम् शर्म शरणम् उप यामि उपगच्छामि । अथ वा शर्म सुखम् । लब्धुम् इति शेषः । सोऽग्निः शिशानः ज्वालास्तीक्ष्णी[4]-कुर्वन् । 'बहुलं छन्दसि' (पा २,४,७६) इति शपः श्लौ अभ्यासस्य इत्वम् । आत्वम् । शानच् । क्रतुभिः क्रत्वङ्गभूतैराज्यादिभिः कर्मभिर्वा समिद्धः सम्यग्दीप्तः । भवत्विति शेषः । स तादृशो रक्षोहा अग्निः नः अस्मान् रिषः हिंसकाद् दिवा अहनि पातु रक्षतु । स एव अग्निः नक्तम् रात्रौ रिषः सकाशात् पातु । सर्वेष्वहःसु सर्वासु च रात्रिषु पात्वित्यर्थः ।

अयोदंष्ट्रो[5] अर्चिषा यातुधानानुप स्पृश जातवेदः समिद्धः ।
आ जिह्वया मूरदेवान् रभस्व क्रव्यादो वृष्ट्वाऽपि[6] धत्स्वासन् ॥ २ ॥

अयःऽदंष्ट्रः । अर्चिषा । यातुऽधानान् । उप । स्पृश । जातऽवेदः । सम्ऽइद्धः ।
आ । जिह्वया । मूरऽदेवान् । रभस्व । क्रव्यऽअदः । वृष्ट्वा[7] । अपि । धत्स्व । आसन् ॥२॥

हे जातवेदः जातानां वेदितरग्ने समिद्धः अस्मद्दत्तैराज्यादिभिः सम्यग्दीप्तस्त्वम् अयोदंष्ट्रः अयोमयदन्तयुक्तः सन् अर्चिषा ज्वालया क्रूरया यातुधानान् यातवो यातनास्ता एषु धीयन्ते यातुधानाः तान् उप स्पृश । संदहेत्यर्थः । तथा मूरदेवान् मूलेन औषधेन दीव्यन्ति परेषां हननाय क्रीडन्तीति मूरदेवाः तान् । अभिचरत इत्यर्थः । अथवा 'मूरा अमूर' (ऋ १०,४,४) इत्यत्र यास्केन — 'मूढा वयं स्मोऽमूढस्त्वम् असि' (नि ६,८) इत्युक्तत्वात् मूढाः कार्याकार्यविभागबुद्धिशून्याः सन्तो ये दीव्यन्ति ते मूरदेवाः तान् जिह्वया ज्वालया आ रभस्व स्पृश । दहेत्यर्थः । तथा क्रव्यादः मांसभक्षकान् रक्षःपिशाचादीन् धृष्ट्वा[8] धर्षित्वा । इडभावश्छान्दसः । आसन् तव आस्ये । 'पद्दन्' (पा ६,१,६३) इत्यादिना आस्यशब्दस्य आसन् आदेशः । अपि धत्स्व अपिधानं कुरु ओष्ठाभ्याम् आच्छादय । भक्षयेत्यर्थः ।

---

१. प्रथिष्ठम् P. २. रूपः P,P[5],J,Cp. ३. समेधय्याज्या' S'. ४. 'क्ष्ण' S'. ५. अयोदंष्ट्रान् पै १६,६,२; ६. वृक्त्व्यपि ऋ १०,८७,२. ७. दृष्ट्वा P[2]. ८. वैद्यु. संपा.

उभोर्भयाविन्नुप धेहि दंष्ट्रौ[1] हिंस्रः [2]शिशानोऽवरं परं च ।
उतान्तरिक्षे परि याह्यग्ने[3] जम्भैः सं धेह्यभि यातुधानान् ॥ ३ ॥

उभा । उभयाविन् । उप । धेहि । दंष्ट्रौ । हिंस्रः । शिशानः[4] । अवरम् । परम् । च ।
उत । अन्तरिक्षे । परि । याहि[5] । अग्ने । जम्भैः । सम् । धेहि । अभि । यातुऽधानान् ॥

हे उभयाविन् उभयवन् अयं रक्षणीयः अयं हन्तव्यः इत्युभयविधजनपरिज्ञानवन् । यद्वा अवरं परं चेति वक्ष्यमाणौ अवरपरौ उभयशब्देन उच्येते[6] । तदुभयवन् हिंस्रः हिंसनशीलः शिशानः तीक्ष्णज्वालस्तीक्ष्णदन्तो वा अवरम् अस्मत्तो निकृष्टं द्वेष्यं परं च अस्मत्तोऽधिकं द्वेष्यं च उभा दंष्ट्रौ उभे दंष्ट्रे उप धेहि उपहिते कुरु दंष्ट्रान्तर्वर्तिनौ कुरु । खादेत्यर्थः । उत अपि च अन्तरिक्षे आकाशे परि याहि संचर । हे अग्ने संचर्य[7] च मम बाधनाय तत्र संचरतो यातुधानान् रक्षःप्रभृतीन् जम्भैः दन्तैः अभि सं धेहि अभिसंहितान् संदष्टान् कुरु । यद्वा यातुधानान् अभि अन्तरिक्षे परि याहि । तान् एव जम्भैः सं धेहि ।

अग्ने त्वचं यातुधानस्य भिन्धि हिंस्राऽशनिर्हरसा हन्त्वेनम् ।
प्र पर्वाणि जातवेदः शृणीहि क्रव्यात् क्रविष्णुर्वि चिनोत्वेनम्[8] ॥ ४ ॥

अग्ने । त्वचम् । यातुऽधानस्य । भिन्धि । हिंस्रा । अशनिः । हरसा । हन्तु । एनम् ।
प्र । पर्वाणि । जातऽवेदः । शृणीहि । क्रव्यऽअत् । क्रविष्णुः । वि । चिनोतु । एनम्[9] ॥४॥

हे अग्ने त्वं यातुधानस्य रक्षआदेः त्वचम् बाह्यधातुं भिन्धि छिन्धि भिन्नां कुरु । तव च हिंस्रा अशनिः हिंसको वज्रो हरसा तापेन एनं यातुधानं हन्तु हिनस्तु । पूर्वं त्वचः कर्तनं प्रार्थ्य तावता अपरितुष्टमना आह— प्र पर्वाणि इति । हे जातवेदः जातधन जातप्रज्ञ वा अग्ने यातुधानस्य पर्वाणि शरीरग्रन्थीन् प्र शृणीहि प्रकर्षेण भिन्नानि कुरु । तथा क्रते क्रव्यात् मांसभक्षको वृकादिः क्रविष्णुः क्रव्यम् इच्छन् एनं यातुधानं वि चिनोतु इतस्ततो भक्षणाय आकृष्य विप्रकीर्णं करोतु ।

यत्रेदानीं[10] पश्यसि जातवेदस्तिष्ठन्तमग्न उत वा चरन्तम् ।
[11]उतान्तरिक्षे पतन्तं यातुधानं[11] तमस्ता[12] विध्य शर्वा[13] शिशानः ॥५॥

---

१. दंष्ट्रौ ऋ १०,८७,३ पै १६,६,३. २. हिंस्रा° K. ३. याहि राजन् ऋ. ४. शिशानः P. ५. याहि P. ६. उच्यते S'. ७. संचरित्वा S'. ८. विनोतु वृक्णम् ऋ १०,८७,५. ९. एनम् P[2]. १०. उतेदानीं पै १६,६,६. ११. यद्वान्तरिक्षे पथिभिः पतन्तं ऋ १०,८७,६. १२. °स्ता पै. १३. सर्वा D,E[2],O,T,W, पै [मूको.].

यत्रं । इदानीम् । पश्यसि । जातऽवेदः । तिष्ठन्तम् । अग्ने । उत । वा । चरन्तम् ।
उत । अन्तरिक्षे । पतन्तम् । यातुऽधानम् । तम् । अस्ता । विध्य । शर्वा[1] । शिशानः ॥५॥

हे जातवेदः अग्ने त्वं यत्र यस्मिन् देशे इदानीम् अस्मिन् काले अस्मदुपद्रवकाले पश्यसि यातुधानम् अस्मदुपद्रवकारिणं राक्षसादिकम् । कथंभूतम् इति तत्राह— तिष्ठन्तम् कस्मिंश्चिद् देशे स्थितिं कुर्वाणम् उत वा अपि वा चरन्तम् एकत्र अवस्थितिम् अकुर्वाणम् उत अपि च अन्तरिक्षे आकाशे पतन्तम् गच्छन्तं तं यातुधानम् अस्ता क्षेप्ता त्वं शिशानः तीक्ष्णः सन् शर्वा शरुणा विध्य ताडय ।

यज्ञैरिषूः संनममानो अग्ने वाचा शल्याँ[2] अशनिभिर्दिहानः ।
ताभिर्विध्य हृदये यातुधानान् प्रतीचो बाहून् प्रति भङ्ग्ध्येषाम् ॥ ६ ॥

यज्ञैः । इषूः । सम्ऽनममानः । अग्ने । वाचा । शल्यान् । अशनिऽभिः । दिहानः ।
ताभिः । विध्य । हृदये । यातुऽधानान्[3] । प्रतीचः । बाहून् । प्रति । भङ्ग्धि । एषाम् ॥

हे अग्ने यज्ञैः अस्मदनुष्ठितैर्यागैः प्रयोगैः इषूः तव बाणान् संनममानः ऋजूकुर्वन्[4] वाचा स्तुत्यात्मकमन्त्ररूपया शल्यान् बाणाग्राणि दिहानः दिग्धान् कुर्वन् तीक्ष्णीकुर्वन् वा । अशनिभिरित्येतद् व्यवहितमपि सामर्थ्याद् यज्ञविशेषणम् । अशनिसदृशै रक्षोघातुकैर्यज्ञैरित्यर्थः । अथ वा वाचा अशनिभिः वाङ्मयैर्दीप्तैः शाणैः[5] दिहानः तीक्ष्णीकुर्वन् ताभिः इषुभिर्बाणैः यातुधानान् हृदये हृदयप्रदेशे[6] विध्य ताडय । ततः एषां यातुधानानां बाहून् भुजान् प्रतीचः प्रति भङ्ग्धि अस्माकं वधाय प्राचः सतः प्रतीचः कृत्वा भङ्ग्धि मर्दय भग्नान् कुरु ।

[7]उतारब्धान्त्स्पृणुहि[7] जातवेद [8]उतारेभाणाँ ऋष्टिभिर्यातुधानान्[8] ।
अग्ने पूर्वो नि जहि[9] शोशुचान आमादः क्ष्विङ्कास्तमदन्त्वेनीः ॥ ७ ॥

उत । आऽरब्धान् । स्पृणुहि । जातऽवेदः । उत । आऽरेभाणान् । ऋष्टिऽभिः । यातुऽधानान् ।
अग्ने । पूर्वः । नि । जहि । शोशुचानः । आमऽअदः । क्ष्विङ्काः[10] । तम् । अदन्तु । एनीः ॥

---

१. तु. मंत्रा.; वेद्र. Bp², P, P², J, Cp सर्वा. २. शल्यम् पै १६,६,५ [मूको.]. ३. °धानाम् P². ४. ऋजुकुर्वन् S'. ५. शानै° S'. ६. प्रदेशेन S'. ७. °रब्धां स्तृ° A, Bh, K, Km. R, V, P³, M, W, I; °रब्धान्त्स्तृ° > °रब्धां स्तृ° B; °रब्धान्स्तृ° Cs; उतालब्धं स्तृ° ऋ १०,८७,७. ८. भालेभानानृष्टिभिर्यातुधानान् ऋ. ९. निजहि S'. १०. क्षिङ्काः P.

'उत अपि च हे जातवेदः अग्ने त्वम्' आरब्धान् त्वां स्तोतुं प्रक्रान्तान् अस्मान् स्तृणुहि पालय। उत अपि च आरभाणान् शब्दं कृतवतो यातुधानान् ऋष्टिभिः आयुधैर्घातय[2]। किं च हे अग्ने त्वं पूर्वः शत्रुतः प्रथमभागः सन् शोशुचानः ज्वलन् तान् यातुधानान् [3]नि जहि[3] मारय। अथ एकवद् अभिधानम् — तं हतम् आमादः अपक्वमांसाशना एनीः एतवर्णाः शुभ्रवर्णाः संध्यावर्णा वा श्वङ्काः[4] पक्षिविशेषाः अदन्तु भक्षयन्तु।

इह प्र ब्रूहि यतमः सो अग्ने यातुधानो य इदं कृणोति[5]।
तमा रभस्व समिधा यविष्ठ नृचक्षसश्चक्षुषे रन्धयैनम्[6] ॥ ८ ॥

इह। प्र। ब्रूहि। यतमः। सः। अग्ने। यातुऽधानः। यः। इदम्। कृणोति।
तम्। आ। रभस्व। सम्ऽइधा। यविष्ठ। नृऽचक्षसः। चक्षुषे। रन्धय। एनम् ॥८॥

हे अग्ने इह अस्मिन् प्रकृते शान्तिविषये यो यातुधानः राक्षसः इदं शरीरपीडनादिकं कृणोषि[5]। कृणोतीत्यर्थः। अथवा यस्त्वम् इदं प्रहरणं कृणोषि करोषि सः प्रहारविषयः [7]प्रहारकर्ता वा यातुधानो यतम इति प्र ब्रूहि आचक्ष्व। अथ वा किं तेन तत्स्वरूपपरिज्ञानेन। तं घातकं पापिनम् हे यविष्ठ[8] युवतम। स्वार्थिको यत्। समिधा दाहिकया ज्वालया आ रभस्व स्पृश। दहेत्यर्थः। एतदेव भङ्ग्यन्तरेणाह—हे अग्ने एनं पापिनं नृचक्षसः। नॄन् पश्यतीति नृचक्षाः। सुकृतिनां पापिनां च प्राणिनां साक्षितया द्रष्टुस्तव चक्षुषे चक्षुषः रन्धय वशं प्रापय। दहेत्यर्थः।

तीक्ष्णेनाग्ने चक्षुषा रक्ष यज्ञं प्राञ्चं वसुभ्यः प्र णय प्रचेतः।
हिंस्रं[8] रक्षांस्यभि शोशुचानं[9] मा त्वा दभन् यातुधाना नृचक्षः ॥९॥

तीक्ष्णेन। अग्ने। चक्षुषा। रक्ष। यज्ञम्। प्राञ्चम्[10]। वसुऽभ्यः। प्र। नय। प्रऽचेतः।
हिंस्रम्। रक्षांसि। अभि। शोशुचानम्। मा। त्वा। दभन्। यातुऽधानाः। नृऽचक्षः ॥९॥

हे अग्ने त्वं तीक्ष्णेन क्रूरेण चक्षुषा भयंकरेण दर्शनेन उक्तविधेन तेजसा या यज्ञम् अस्मदीयं रक्ष पालय। हे प्रचेतः प्रकृष्टमनः अस्मासु कृपाचित्त त्वम् अस्मदीयं तं यज्ञं वसुभ्यः वासकेभ्यो देवेभ्यः प्राञ्च प्र णय प्रगमय। हे नृचक्षः नृणां द्रष्टः अग्ने यज्ञरक्षासमये हिंस्रम् हिंसाशीलं रक्षांसि राक्षसान् वा अभिशोशुचानम्[9] अभितो भृशं

---

१. हे जातवेदः अग्ने त्वम् उत अपि च S'. २. 'तये S'. ३. निजिहि S'. ४. वैङ्क• मंत्रा. ५. कृणोषि S', शा. वै १६,६,८. ६. 'यैनम् पै. ७. प्रहार' नास्ति S'. ८. हिंस्रो वै १६,६,९. ९. 'चानो वै. १०. प्राञ्चम् P.

दीपयन्तं दहन्तम् । शुचेर्यङ्लुगन्ताच्छानचि[1] रूपम् । तादृशं त्वा त्वां यातुधानाः राक्षसा मा दभन् मा हिंसिषुः ।

**नृचक्षा रक्षः परि[2] पश्य विक्षु तस्य त्रीणि प्रति शृणीह्यग्रा ।**
**तस्याग्ने [3]पृष्टीर्हरसा शृणीहि त्रेधा मूलं यातुधानस्य वृश्च ॥ १० ॥**

नृऽचक्षाः । रक्षः । परि । पश्य । विक्षु । तस्य । त्रीणि । प्रति । शृणीहि । अग्रा । तस्य । अग्ने[4] । पृष्टीः[5] । हरसा । शृणीहि । त्रेधा । मूलम् । यातुऽधानस्य । वृश्च[6] ॥१०॥

हे अग्ने नृचक्षाः नृणाम् अनुग्राह्याणां निग्राह्याणां च द्रष्टा त्वं विक्षु प्रजासु मध्ये पीडयद्[7] रक्षः राक्षसं परि पश्य परितः अवलोकय । तथा कृत्वा तस्य रक्षसः त्रीणि अग्रा अग्राणि उपरिभागान् प्रति शृणीहि । प्रत्येकं छिन्धीत्यर्थः । तस्य एव पृष्टीः पार्श्वास्थीनि हे अग्ने हरसा तेजसा शृणीहि छिन्धि । तथा तस्य यातुधानस्य मूलम् पादप्रदेशं त्रेधा वृश्च छिन्धि । पादस्य[8] त्रीणि पर्वाणीत्यर्थः ।

इत्यष्टमकाण्डे द्वितीयेऽनुवाके प्रथमं सूक्तम् ।

'त्रिर्यातुधानः' इति सूक्तस्य 'रक्षोहणम्' इत्यनेन उक्तो विनियोगः ।

गवां लोहितदोहलक्षणाद्भुतशान्त्यर्थं 'यः पौरुषेयेण' (अ ८,३,१५-१८) इति चतुर्ऋचेन आज्यं जुहुयात् । सूत्रितं हि – "अथ यत्रैतद् धेनवो लोहितं दुहते 'यः पौरुषेयेण'[9] इत्येताभिश्चतसृभिर्जुहुयात्" (कौसू ११२,१) इति ।

**त्रिर्यातुधानः प्रसितिं त एत्वृतं यो अग्ने[10] अनृतेन हन्ति ।**
**तमर्चिषा स्फूर्जयन्[11] जातवेदः समक्षमेनं गृणते नि युङ्ग्धि[12] ॥११॥**

त्रिः । यातुऽधानः । प्रऽसितिम् । ते । एतु । ऋतम् । यः । अग्ने । अनृतेन । हन्ति । तम् । अर्चिषा । स्फूर्जयन्[13] । जातऽवेदः । समऽअक्षम् । एनम् । गृणते । नि । युङ्ग्धि ॥

हे अग्ने यातुधानः राक्षसः ते तव प्रसितिम् ज्वालां त्रिः त्रिवारम् एतु प्राप्नोतु । तावता निःशेषेण दग्धो भवतीत्यभिप्रायः । यातुधानं विशिनष्टि— यः ऋतम् मम सत्यवचनं यज्ञं वा अनृतेन असत्यवचनेन छद्मना [14]"वा हन्ति" विनाशयति । हे

---

१. °च्छतरि शंपा. २. प्रति पै १६,६,१०. ३. पृष्टी° K,V. ४. अग्ने P.
५. तु. मंपा.; चेतु. P,P², J,Cp पृष्टीः. ६. वृश्च P². ७. पीडयंतं S'. ८. पदपा S'.
९. °येण ऋचिषा समङ्क्ते Bl. १०. अग्ने A,B,Bᵇ,D,R,Sᵐ,J,Cs,WM.
११. °यं Bᵇ,Kᵐ. १२. वृङ्ग्धि A, ऋ १०,८७,११ पै १६,७,७; युङ्ग्धि सा.
१३. स्फूर्जयं° P. १४. यहंति S'.

जातवेदः जातप्रज्ञ अग्ने तम् एनं यातुधानम् अर्चिषा स्वकीयया ज्वालया स्फूर्जयन् गृणते तव स्तोत्रं कुर्वते मह्यं गृणतो मम समक्षम् दृष्टिसंमुख एव नि वृङ्ग्धि[1] निगृह्य वर्जय विनाशय ।

यदग्ने अद्य मिथुना शपातो यद् वाचस्तृष्टं जनयन्त रेभाः ।
मन्योर्मनसः शरव्या३[2] जायते या तया विध्य हृदये यातुधानान् ॥१२॥

यत् । अग्ने । अद्य । मिथुना । शपातः । यत् । वाचः । तृष्टम् । जनयन्त । रेभाः ।
मन्योः । मनसः । शरव्या । जायते । या । तया । विध्य । हृदये । यातुऽधानान् ॥ १२ ॥

हे अग्ने अद्य अस्मिन्नहनि यत् यस्मात्[3] मिथुना स्त्रीपुंसौ शपातः शपतः परस्परम् आक्रोशतः यत् च वाचस्तृष्टम् तृषायुक्तम् । कटुकम् इत्यर्थः । जनयन्त जनयन्ति उत्पादयन्ति । के । रेभाः स्तोतारः । यातुधानेभ्यो निमित्तेभ्य इत्यभिप्रायः । मन्योः तव क्रोधयुक्ताद् दीप्ताद् वा मनसः सकाशाद् या शरव्या इषुः ज्वालारूपा जायते तया इष्वा यातुधानान् हृदये हृदयदेशे विध्य ताडय ।

परा शृणीहि तपसा यातुधानान् पराग्ने रक्षो हरसा शृणीहि ।
परार्चिषा मूरदेवान् छृणीहि[4] परासुतृपः शोशुचतः शृणीहि[5] ॥१३॥

परा । शृणीहि । तपसा । यातुऽधानान् । परा । अग्ने । रक्षः । हरसा । शृणीहि ।
परा । अर्चिषा । मूरऽदेवान् । शृणीहि । परा । असुऽतृपः । शोशुचतः । शृणीहि ॥ १३ ॥

हे अग्ने यातुधानान् राक्षसान् तपसा तापकेन तेजसा परा शृणीहि पराङ्मुखं विनाशय । तथा रक्षः राक्षसं हरसा प्राणापहारकेण तेजसा परा शृणीहि । तथा मूरदेवान् मारणेन कर्मणा दीव्यन्तीति मूरदेवाः तान् अर्चिषा दीप्यमानया ज्वालया परा शृणीहि । असुतृपः असुभिः परप्राणैरात्मानं तर्पयन्तो ये तान् शोशुचतः[6] भृशं दीप्तान् राक्षसान् परा शृणीहि । अथवा शोशुचतः भृशं दीप्यमानान् । तव ज्वालयेति शेषः ।

पराद्य देवा वृजिनं शृणन्तु प्रत्यगेनं शपथा यन्तु सृष्टाः[7] ।
वाचास्तेनं शरव ऋच्छन्तु मर्मन् विश्वस्यैतु प्रसितिं यातुधानः ॥ १४ ॥

---

१. वृङ्ग्धि मंत्रा. २. °र्व्या३ R ३. यस्मिन् S'. ४. 'देवां छृ' A,K$^{m}$. 'देवाञ्छृ' ऋ १०,८७,१४; 'देवान् शृ' पै १६,७,३. ५. अभि शोशुचानः ऋ. ६. शोशुचानः S'. ७. तृष्टाः A. सा. ऋ १०,८७,१५.

परा । अद्य । देवाः । वृजिनम् । शृणन्तु । प्रत्यक् । एनम् । शपथाः । यन्तु । सृष्टाः ।
वाचाऽस्तेनम् । शरवः । ऋच्छन्तु । मर्मन् । विश्वस्य । एतु । प्रऽसितिम् । यातुऽधानः ॥

अद्य अस्मिन्नहनि देवाः सर्वे वह्निप्रमुखा वृजिनम् प्राणानां वर्जकं राक्षसं 'पापं वा परा शृणन्तु यथा न प्रतिगच्छति तथा हिंसन्तु । एनं वृजिनं तृष्टाः[1] कटुकाः शपथाः अस्मान् प्रति तेन प्रयुक्तानि शपनानि प्रत्यक् प्रतिमुखं यन्तु गच्छन्तु । किं च वाचास्तेनम् । मृषावचनेन यः प्रहरति स वाचास्तेनः । शरवः देवशराः मर्मन् मर्मणि प्रदेशे[2] ऋच्छन्तु गच्छन्तु । स यातुधानः विश्वस्य सर्वस्यापि देवस्य प्रसितिम् प्रकर्षेण अभिभवित्रीं हेतिम् एतु गच्छतु । अथवा विश्वस्य व्याप्तस्याग्नेः प्रसितिम् ज्वालाम्[3] एतु । 'प्रसितिः प्रसयनात्[4] तन्तुर्वा जालं वा' (नि ६,१२) इति यास्कः ।

यः पौरुषेयेण क्रविषा समङ्क्ते यो अश्व्येन[5] पशुना यातुधानः ।
यो अघ्न्याया भरति क्षीरमग्ने तेषां शीर्षाणि हरसाऽपि वृश्च ॥ १५ ॥

यः । पौरुषेयेण । क्रविषा । सम्ऽअङ्क्ते । यः । अश्व्येन । पशुना । यातुऽधानः[6] । यः ।
अघ्न्यायाः । भरति । क्षीरम् । अग्ने । तेषाम् । शीर्षाणि । हरसा । अपि । वृश्च ॥ १५ ॥

यो यातुधानः पौरुषेयेण पुरुषसंबन्धिना । क्रविषा मांसेन । 'सर्वपुरुषाभ्यां णढञौ' (पा ५,१,१०) इति ढञ् । समङ्क्ते[7] सम्यग् अभिव्यनक्ति पोषयति आत्मानम् । यश्च यातुधानः अश्व्येन अश्वसंबन्धिना अश्वरूपेण क्रविषा पशुना अजादिरूपेण च समङ्क्ते । हे अग्ने यश्च अघ्न्यायाः । गोनामैतत् (तु. निघ २,११)। अहन्तव्याया गोः क्षीरं भरति हरति । तेषाम् उक्तप्रकाराणां सर्वेषां यातुधानानां शीर्षाणि शिरांसि हरसा तेजसा ज्वालया अपि वृश्च छिन्धि ।

विषं गवां यातुधाना 'भरन्तामा वृश्चन्तामदितये' दुरेवाः ।
परैणान्[8] देवः सविता ददातु परा भागमोषधीनां जयन्ताम् ॥ १६ ॥

विषम् । गवाम् । यातुऽधानाः । भरन्ताम् । आ । वृश्चन्ताम् । अदितये । दुःऽएवाः ।
परा । एनान् । देवः[10] । सविता । ददातु । परा । भागम् । ओषधीनाम् । जयन्ताम् ॥१६॥

---

१. वैतु. मंपा. २. चदेशे S'. ३. ज्वालम् S'. ४. प्रसहनात् S'.
५. अश्वेन B; अश्वियेन R. ६. °धानाः P. ७. समङ्क्ते S'. ८. पिबन्त्वा वृश्च्यन्ता° ऋ १०,८७,१८; पिबन्त्वा मृषन्ता° पै १६,७,८. ९. परैनान् ऋ. १० देवाः P.

यातुधानाः राक्षसाः गवां क्षीरं कामयमानास्तासां विषं भरन्ताम् संगृह्णन्तु । तथा दुरेवाः दुष्टं गन्तारः अदितये सर्वानुग्राहिकायै देव्यै । यद्वा 'इयं वा अदितिः' ( तै २,२,६,१) इति श्रुतेः सर्वाश्रयभूतायै भूम्यै तस्या अर्थाय आ वृश्चन्ताम् छिन्ना भवन्तु । भूमौ यानि लब्धव्यानि तैर्विरहिता भवन्तु इत्यर्थः । किं च एनान् यातुधानान् सविता सर्वानुज्ञाता देवः परा ददातु निरस्यतु घातकेभ्यः प्रयच्छतु । ओषधीनाम् व्रीह्यादीनां भागं परा जयन्ताम् अभागिनो जयन्तु ।

सं॒व॒त्स॒री॒णं पय॑ उ॒स्रिया॑या॒स्तस्य॒ माशी॑द् यातु॒धानो॑ नृचक्षः ।
पी॒यूष॑मग्ने य॒तम॑स्तितृ॑प्सा॒त् तं प्र॒त्यञ्च॑म॒र्चिषा॑ विध्य॒ मर्मा॑णि[1] ॥ १७ ॥

स॒म्ऽव॒त्स॒री॒णम् । पयः॑ । उ॒स्रिया॑याः । तस्य॑ । मा[2] आ॒शी॒त्[3] । या॒तु॒ऽधानः॑ । नृ॒ऽच॒क्षः॒ । पी॒यूष॑म् । अ॒ग्ने॒ । य॒त॒मः । तितृ॑प्सात् । तम् । प्र॒त्यञ्च॑म् । अ॒र्चिषा॑ । वि॒ध्य॒ । मर्मा॑णि ॥

हे नृचक्षः नृणां द्रष्टः अग्ने यातुधानः राक्षसः उस्रियायाः अस्मदीयाया गोः संबन्धि संवत्सरीणम् संवत्सरे भवम् । 'संपरिपूर्वात्ख च' ( पा ५,१,९२ ) इति खः । गर्भाधानादिप्रसवपर्यन्तम् ऊधस्युपचितम् इत्यर्थः । अथवा प्रायेण प्रसवदिनप्रभृति संवत्सरपर्यन्तं गावो दुहन्ति तदभिप्रायेणेदम् अभिधानम् । तथाविधं पयः क्षीरं यद् अस्ति तस्य तत् क्षीरम् मा आशीत् मा भक्षयतु पिबतु । तथा यतमः यातुधानः पीयूषम् हविर्लक्षणम् अमृतं गोरेव घृतलक्षणं पीयूषं वा तितृप्सात् तर्पयितुम् इच्छेद् आत्मानम् । तृप्यतेः सनि 'रधादिभ्यश्च'[4] (पा ७,२,४५) इति पक्षे इण्निषेधः । तदन्तात् लेटि आडागमः । तं राक्षसम् अर्चिषा स्वकीयया ज्वालया प्रत्यञ्चम् प्रतिमुखं विध्य ताडय । कुत्र देशे इति । मर्मणि मर्मप्रदेशे । यस्मिन् देशे वेधनेन शीघ्रं म्रियते तत्रेत्यर्थः ।

स॒नाद॑ग्ने मृणसि यातु॒धाना॒न् न त्वा॒ रक्षां॑सि॒ पृत॑नासु जिग्युः[5] ।
स॒हमू॑रा॒ननु॑ दह क्र॒व्यादो॒[6] मा ते॑ हे॒त्या मु॑क्षत॒ दैव्या॑याः ॥ १८ ॥

स॒नात् । अ॒ग्ने॒ । मृ॒ण॒सि॒ । या॒तु॒ऽधाना॑न् । न । त्वा॒ । रक्षां॑सि । पृत॑नासु । जि॒ग्युः॒ । स॒हऽमू॑रान् । अनु॑ । द॒ह॒ । क्र॒व्य॒ऽअदः॑ । मा । ते॒ । हे॒त्याः । मु॒क्ष॒त॒ । दैव्या॑याः ॥ १८ ॥

यद्यपि एषा प्राग् ( अ ५,२९,११ ) व्याख्याता[7] तथापि व्यवहितत्वात् पुनर्व्याख्यायते । हे अग्ने त्वं सनात् चिरकालप्रभृति यातुधानान् राक्षसान्

---

१. मर्माणि ऋ १०,८७,१७ पै १६,७,७. २. मा P,J. ३. आशीत् P,J; अशीत् म. पवा. ४. 'एकाच उपदेशेऽनुदात्तात्' इंपा. ५. जह्रुः पै १६,७,५. ६. क्रव्यादो[2] की १,८०. ७. पूर्वे व्याख्यानमस्या नोपलभ्यते.

मृणसि हंसि । तथापि त्वा त्वां रक्षांसि केऽपि राक्षसाः पृतनासु संग्रामेषु न जिग्युः न जितवन्तः । अतस्त्वं क्रव्यादः मांसाशनान् राक्षसान् सहमूरान् मूलसहितान् अनु दह क्रमेण भस्मीकुरु । तेऽपि दैव्यायाः देवस्य तव संबन्धिन्याः ते तव हेत्याः आयुधाद् मा मुक्षत मुक्ता मा भूवन् तद्वशं प्राप्नुवन्तु ।

त्वं नो॑ अग्ने अध॒राद्ुद॒क्तस्त्वं[1] प॒श्चादु॒त र॑क्षा पु॒रस्ता॑त् ।
प्रति॒ त्ये[2] ते॑ अ॒जरा॑स॒स्तपि॑ष्ठा[3] अ॒घशं॑सं॒ शोशु॑चतो दहन्तु ॥ १९ ॥

त्वम् । नः॒ । अग्ने॑ । अ॒ध॒रात् । उ॒द॒क्तः । त्वम् । प॒श्चात् । उ॒त । र॒क्ष॒ । पु॒रस्ता॑त् ।
प्रति॑ । त्ये । ते॒ । अ॒जरा॑सः । तपि॑ष्ठाः । अ॒घऽशं॑सम् । शोशु॑चतः । द॒ह॒न्तु॒ ॥ १९ ॥

हे अग्ने त्वं नः अस्मान् अधरात् अधोदिशः सकाशात् तत्रस्थेभ्यः पीडकेभ्यो राक्षसेभ्यः रक्ष पाहि । तथा उदक्तः उदग्दिशः सकाशात् तत्रत्येभ्यो रक्ष[4] । एतद्दक्षिणदिशोऽप्युपलक्षणम् । अथवा अधरादित्यनेन अवाची[5] दक्षिणा दिग् विवक्ष्यते । किं च त्वं पश्चात् प्रतीच्या दिशः सकाशाद् रक्ष । उत अपि च पुरस्तात् पूर्वस्या दिशः सकाशाद् रक्ष । तेषु तत्तद्देशेष्ववस्थितेषु कथं रक्षा भवतीत्याशङ्क्याह—प्रति ते[6] त इति । ते तव[7] संबन्धिनः ते[6] प्रसिद्धास्तत्रतत्र वर्तमानाः स्फुलिङ्गाः । ज्वालारूपा इति शेषः । अघशंसम् अघं हिंसां शंसन्तं राक्षसं प्रति दहन्तु विनाशं कुर्वन्तु । कीदृशाः । अजरासः अजरा अजीर्णाः । तपिष्ठाः अतिशयेन तापकाः । शोशुचतः भृशं दीप्ताः ।

प॒श्चात् पु॒रस्ता॑दध॒रादु॒तोत्त॒रात्[8] क॒विः काव्ये॑न॒ परि॑ पाह्यग्ने[9] ।
सखा॒[10] सखा॑यम॒जरो॑ [11]जरि॒म्णे अग्ने॒[11] मर्ता॑[12] अम॑र्त्य॒स्त्वं नः॑ ॥ २० ॥

प॒श्चात् । पु॒रस्ता॑त् । अ॒ध॒रात् । उ॒त । उ॒त्त॒रात् । क॒विः । काव्ये॑न । परि॑ । पा॒हि॒ । अग्ने॑ ।
सखा॑ । सखा॑यम् । अ॒जरः॑ । ज॒रि॒म्णे । अग्ने॑ । मर्ता॑न् । अम॑र्त्यः । त्वम् । नः॒ ॥ २० ॥

हे अग्ने त्वम् अस्मान् पश्चात् इत्यादिना उक्ताभ्यश्चतसृभ्यो दिग्भ्यः सकाशात् कविः क्रान्तप्रज्ञः । तत्र तत्र बाधमानान् राक्षसान् जानन्नित्यर्थः । काव्येन कवेः कर्म काव्यम् तेन कवेस्तव रक्षणव्यापारेण परि पाहि सर्वतो रक्ष । रक्षकं

---

१. °दक्तात्त्वं ऋ १०,८७,२०.　२. ते ऋ.　३. °पिष्ठा B[b],K,P[1],V.　४. नास्ति S'.　५. अवनतो S'.　६. वेतु. मंपा.　७. तव रक्ष S'.　८. °दुदंकात् ऋ १०,८७,२१; °दुदक्तः पै १६,७,१०.　९. पाहि राजन् ऋ.　१०. मखे ऋ.　११. °ऽग्ने ऋ.　१२. मर्त्यां पै.

रक्षणीयं च उभावपि विशिनष्टि—सखा मम सखिभूतस्त्वं सखायम् तव सखिभूतं रक्ष। अजरः जरारहितः जरिम्णे अत्यन्तजीर्णाय मह्यम्। रक्षां कुर्विति शेषः। हे अग्ने अमर्त्यस्त्वं मर्त्यान्[1] मरणधर्मणः नः अस्मान्। पाहीत्यन्वयः।

इत्यष्टमकाण्डे द्वितीयेऽनुवाके द्वितीयं सूक्तम्।

'तदग्ने चक्षुः' इति सूक्तस्य 'रक्षोहणम्' इत्यत्रोक्ता विनियोगा अनुसंधेयाः।

अग्निरहितप्रदेशे अग्निदर्शनलक्षणे अद्भुते तच्छान्त्यर्थम् 'अग्नी रक्षांसि' इत्यनया आज्यं जुहुयात्। 'अथ यत्रैतद् अनग्नावाभासो[2] भवति तत्र जुहुयात्' इति प्रक्रम्य सूत्रितम्—"'अग्नी रक्षांसि सेधति' (अ ८,३,२६) इति प्रायश्चित्तिः" (कौसू १३०,१;३) इति।

सशब्देऽग्नौ तच्छान्त्यर्थम् अनया अग्निम् उपतिष्ठेत। "'अग्नी रक्षांसि सेधति' इति सेधन्तम्" (कौसू ४६,२३) इति तत्र सूत्रम्।

अग्न्याधाने पावकगुणकाग्नियागम् अनया ब्रह्मा अनुमन्त्रयेत। तद् उक्तं वैताने—"'अग्नी रक्षांसि', 'अदितिर्द्यौः' (अ ७,६,१) इति" (वैताश्रौ ६,११) इति।

तद॑ग्ने॒ चक्षु॒ः प्रति॑ धेहि रे॒भे श॑फा॒रुजो॒[3] येन॒ पश्य॑सि[4] यातु॒धाना॑न्[5]।
अ॒थ॒र्व॒वज्ज्योति॑षा॒ दैव्ये॑न स॒त्यं धूर्व॑न्तम॒चित॑[6]॒ न्यो॑ष॒ ॥ २१ ॥

तत्। अ॒ग्ने॒। चक्षुः॑। प्रति॑। धे॒हि॒। रे॒भे। श॒फ॒ऽआ॒रुजः॑। येन॑। पश्य॑सि। या॒तु॒ऽधाना॑न्। अ॒थ॒र्व॒ऽवत्। ज्योति॑षा। दैव्ये॑न। स॒त्यम्। धूर्व॑न्तम्। अ॒चित॑म्। नि। ओ॒ष॒ ॥ २१ ॥

हे अग्ने त्वं रेभे शब्दं कुर्वते रक्षसे तत् चक्षुः प्रति धेहि स्थापय। दहेत्युक्तं भवति वह्निदृष्टेर्दाहकत्वात्। शफारुजः शफवत् शफाः। नखा इत्यर्थः। अथ वा पशुरूपधारिणां शफा अपि संभवन्ति। तैरारुजन्तीति[8] शफारुजः। तादृशान् यातुधानान् येन पश्यसि तच्चक्षुरित्यर्थः। किं च अथर्ववत् अथर्वाख्यो महर्षिरिव। स एव प्रजापतिरिति ग्रन्थादौ च तस्य माहात्म्यं प्रतिपादितम्। स यथा तपोमन्त्रप्रभावाभ्यां[9] क्रूरान् असुरान् निर्ददाह तद्वत् त्वमपि दैव्येन देवसंबन्धिना ज्योतिषा तेजसा सत्यम् यथार्थं धूर्वन्तम् हिंसन्तम् अचितम् अचेत्तारं[10] संज्ञारहितं[11] न्योष नितरां दह। उष दाहे। लोण्मध्यमरूपम्।

---

१. वेद्. मेपा. २. 'ववभासो Bl. ३. 'रुजं ऋ १०,८७,१२ पै १६,८,१ [मुको.]. ४ पद्यासि ? पै. ५. 'धानम् ऋ. ६. 'मचितं Bb,Sm. ७. शफा' P. ८. वेररुजंति S'. ९. 'प्रभवाभ्यां S' १० अचेतारं S'. ११. संज्ञानहितं S'.

परि॑ त्वाग्ने पुरं॑ व॒यं विप्रं॑ सहस्य धीमहि ।
धृ॒षद्व॑र्णं[1] दि॒वेदि॑वे ह॒न्तारं॑[2] भङ्गु॒राव॑तः[3] ॥२२॥

परि॑ । त्वा॒ । अ॒ग्ने॒ । पुर॑म् । व॒यम् । विप्र॑म् । स॒ह॒स्य॒ । धी॒म॒हि॒ ।
धृ॒षत्ऽव॑र्णम् । दि॒वेऽदि॑वे । ह॒न्तार॑म् । भ॒ङ्गु॒रऽव॑तः ॥ २२ ॥

व्याख्यातेयं प्राक् ( अ ७,७४ ) । हे अग्ने सहस्य सहसे हित । अभिभवनशीले-त्यर्थः । अथवा सहो बलम् तस्माद् जात । मथनाद् उत्पन्नत्वात् । वयं त्वा त्वां परि परितो धीमहि ध्यायेम परिधिं कुर्मो वा । कीदृशम् । पुरम् कामानां पूरकम् । विप्रम्[4] मेधाविनं विविधं प्रीणयितारं वा । धृषद्वर्णम् धर्षकवर्णयुक्तम् । दिवेदिवे प्रतिदिनं भङ्गुरावताम्[5] भङ्गस्वभावोपेतबलयुक्तानां[6] राक्षसानां हन्तारम् [7]प्रविनाशयितारम् । अग्नेर्दर्शनेनैव असुराणां बलानि भङ्गुराणि भवन्तीत्यभिप्रायः । यद्वा सर्वप्राणिबलानां भङ्गुरीकरणसामर्थ्यवताम् इत्यर्थः ।

वि॒षेण॑ भङ्गु॒राव॑तः [8]प्रति॑ स्म[9] र॒क्षसो॑ जहि ।
अग्ने॑ ति॒ग्मेन॑[10] शो॒चिषा॒ तपु॑रग्राभिर्॒चिर्भिः॑[11] ॥ २३ ॥

वि॒षेण॑ । भ॒ङ्गु॒रऽव॑तः । प्रति॑ । स्म॒ । र॒क्षसः॑ । ज॒हि॒ ।
अग्ने॑ । ति॒ग्मेन॑ । शो॒चिषा॑ । तपुः॑ऽअग्राभिः । अ॒र्चिऽभिः॑ ॥ २३ ॥

हे अग्ने विषेण विषवद्विनाशकेन व्यासेन वा । एतत् शोचिषेत्यस्य विशेषणम् । तिग्मेन तीक्ष्णेन शोचिषा तेजसा भङ्गुरावतः । उक्तो भङ्गुरावच्छब्दार्थः । उक्तरूपान् रक्षसः राक्षसान् प्रति जहि । स्म इति पूरणः । तथा तपुरग्राभिः तापकाग्रोपेताभिः अर्चिभिः ज्वालाभिरपि जहि ।

वि ज्योति॑षा बृह॒ता भा॑त्य॒ग्निरा॒विर्विश्वा॑नि कृणुते महि॒त्वा ।
प्रादे॑वीर्मा॒याः स॑हते दु॒रेवाः॒ शिशी॑ते॒ शृङ्गे॒ रक्षो॑भ्यो[12] वि॒निक्षे॑[13] ॥२४॥

१. भिपग्वर्णं ? पै १६,८,२. २. भेत्तारं तै १,५,६,४. ३. °वताम् ऋ १०,८७,२२ मा ११,२६ मै २,७,२ सा.; °वतम् पै. ४. त्वाविप्रं S'. ५. वैतु. मंगा. ६. पेतंबलयुक्तास्या S'. ७. तंप्रवि S'. ८. प्रति स्म ऋ १०,८७,२; समिन्द्रो पै १६,८,७. ९. दह ऋ. पै. १०. शुक्रेण पै. ११. °भिर्ऋष्टिभिः ऋ. १२. रक्षसे ऋ ५,२,९ तै १,२,१४,७ काठ २,१५ पै १६,८,३. १३. द्र. RW. ऋ. तै. पै; वैतु. शंपा. सात. विनिक्ष्वे; विनिक्ष्ये B; विनक्षे काठ.

वि । ज्योतिषा । बृहता । भाति । अग्निः । आविः । विश्वानि । कृणुते । महिऽत्वा ।
प्र । अदेवीः । मायाः । सहते । दुःऽएवाः । शिशीते । शृङ्गे इति । रक्षःऽभ्यः । विऽनिक्षे[1] ॥२४॥

अयम् अग्निः बृहता महता ज्योतिषा तेजसा वि भाति प्रकाशते । अथ प्रत्यक्षकृतः— हे अग्ने महित्वा महत्त्वेन तेजसाम् आधिक्येन विश्वानि सर्वाण्यपि भूतजातानि आविष्कृणुषे[2] स्पष्टानि करोषि । विश्वानि प्रति आत्मानं वा आविष्कुरुषे प्रभूतेन तेजसा । अयम् अग्निः अदेवीः आसुरीः दुरेवाः दुःखेन गन्तव्या मायाः प्र सहते प्रकर्षेण अभिभवति । तथा रक्षोभ्यो विनिक्षे[3] विनाशाय । णिक्ष चुम्बने । तुमर्थे केन्प्रत्ययः । वकारोपजनश्छान्दसः । शृङ्गे विषाणे शिशीते तीक्ष्णे करोति ।

ये ते शृङ्गे अजरे जातवेदस्तिग्महेती[4] ब्रह्मसंशिते ।
ताभ्यां दुर्हार्दमभिदासन्तं किमीदिनं प्रत्यञ्चमर्चिषा[5] जातवेदो वि निक्ष्व ॥२५॥

ये इति । ते । शृङ्गे इति । अजरे इति । जातऽवेदः । तिग्महेती इति तिग्मऽहेती । ब्रह्मसंशिते इति ब्रह्मऽसंशिते । ताभ्याम् । दुःऽहार्दम् । अभिऽदासन्तम् । किमीदिनम् । प्रत्यञ्चम् । अर्चिषा । जातऽवेदः । वि । निक्ष्व ॥ २५ ॥

हे जातवेदः अग्ने ये प्रसिद्धे ते तव शृङ्गे विषाणे स्तः ताभ्याम् अर्चिषा प्रत्यञ्चं वि निक्ष्व विनाशयेत्युत्तरत्र संबन्धः । किंगुणके शृङ्गे इति तत्राह— अजरे जरारहिते अविनश्वरे तिग्महेती तीक्ष्णायुधभूते तीक्ष्णहननसाधने ब्रह्मसंशिते ब्रह्मणा मन्त्रेण अस्माभिः प्रयुक्तेन तीक्ष्णभूते । उक्तलक्षणाभ्यां शृङ्गाभ्यां हन्तव्यः क इति तं सविशेषम् आह—दुर्हार्दम् दुष्टहृदयम् अभिदासन्तम् सर्वत उपक्षपयन्तं किमीदिनम् किम् इदानीम् इति वदन्तं किम् इदं किम् इदम् इत्यन्विष्य चरन्तं वा राक्षसादिकम् ।

अग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्यः ॥ २६ ॥

अग्निः । रक्षांसि । सेधति । शुक्रऽशोचिः । अमर्त्यः । शुचिः । पावकः । ईड्यः ॥२६॥

अनया सूक्तत्रयोक्तम् अर्थं संगृह्य अभिधत्ते । अयम् अग्निः रक्षांसि सर्वप्रकारेण बाधमानान् नानाप्रकारान् राक्षसान् सेधति निवारयति विनाशयति । अग्निर्विशेष्यते— शुक्रशोचिः दीप्तप्रकाशः । अमर्त्यः मरणधर्मरहितः शुचिः शुद्धः पावकः पावयिता शोधयिता ईड्यः स्तुत्यः ।

इत्यष्टमकाण्डे द्वितीयेऽनुवाके तृतीयं सूक्तम् ।

---

१. पु. मंगा.; वैकु. मंगा. विऽनिक्षे, २. वैकु. मंगा. ३. विनिक्षे S', ४. तिग्म° शांसां पै १६,८,६ [मुको.]. ५. °ञ्चं यातुधानं पै.

'इन्द्रासोमा' इति सूक्तस्य 'रक्षोहणम्' ( अ ८,३ )इत्यनेन सह उक्तो विनियोगः।

अत्र ऋक्संहिताया बृहद्देवतानुक्रमणी—

'संवत्सरं तु 'मण्डूकान् ऐन्द्रासोमं' परं तु यत्।
ऋषिर्ददर्श राक्षोघ्नं पुत्रशोकपरिप्लुतः ॥
हते पुत्रशते क्रुद्धः[२] सौदासैर्दुःखितस्तदा[३]।' (बृदे ६,२७;२८) इति।

इन्द्रा॑सोमा॒ तप॑तं॒ रक्ष॑ उ॒ब्जतं॒ न्य॑र्पयतं वृषणा तमो॒वृधः॑।
परा॑ शृणीतम॒चितो॒ न्यो॑षतं ह॒तं नु॒देथां॒ नि शि॑शीतम॒त्रिणः॑ ॥ १ ॥

इन्द्रा॑सोमा। तप॑तम्। रक्षः॑। उ॒ब्जत॑म्। नि। अ॒र्प॒य॒त॒म्। वृ॒ष॒णा॒। त॒मः॒ऽवृधः॑।
परा॑। शृ॒णी॒त॒म्। अ॒चितः॑[४]। नि। ओ॒ष॒त॒म्। ह॒त॒म्। नु॒देथा॑म्[५]। नि। शि॒शी॒त॒म्। अ॒त्रिणः॑ ॥

हे इन्द्रासोमा इन्द्रासोमौ इन्द्रश्च सोमश्च। 'देवताद्वन्द्वे च' ( पा ६,३,२६ ) इति आनङ्। आमन्त्रितायुदात्तः। रक्षः। जातावेकवचनम्। रक्षांसि तपतम् संतापयतम्। 'आमन्त्रितं पूर्वम्°' (पा ८,१,७२) इत्यविद्यमानत्वात् तपतम् इत्यस्य निघाताभावः। तथा उब्जतम् हिंस्तम्। उब्जतिर्हिंसाकर्मा। वाक्यादित्वान्निघाताभावः। हे वृषणा कामानां वर्षितारौ युवां न्यर्पयतम् नीचैर्गमयतम्। कान्। तमोवृधः तमसि रात्रौ अन्धकारे तमसा मायया वा वर्धमानान्। एवम् अचितः[६] अचित्तान् अज्ञानिनो राक्षसान् परा शृणीतम् पराङ्मुखं हिंस्तम्। तथा न्योषतम् नितरां दहतम्। उष दाहे। तथा अत्रिणः भक्षकान् राक्षसान् हतम्। तथा नुदेथाम् हतांस्तान् अस्मत्तः प्रेरयेथाम्। तिङः परत्वात् निघाताभावः। एवं नि शिशीतम् नितरां तनूकुरुतम्।

इन्द्रा॑सोमा॒ सम॒घशं॑सम॒भ्य१॒॑घं[७] तपु॑र्ययस्तु च॒रुर॒ग्निमाँ॑[८] इव।
ब्र॒ह्म॒द्विषे॑ क्र॒व्याद्रे॑ घो॒रच॑क्षसे॒ द्वेषो॑ धत्तमनवा॒यं कि॑मी॒दिने॑ ॥ २ ॥

इन्द्रा॑सोमा। सम्। अ॒घऽशं॑सम्। अ॒भि। अ॒घम्। तपुः॑। य॒य॒स्तु॒। च॒रुः[९]। अ॒ग्निमा॑न्ऽइव।
ब्र॒ह्म॒ऽद्विषे॑। क्र॒व्य॒ऽअदे॑। घो॒रऽच॑क्षसे। द्वेषः॑। ध॒त्त॒म्। अ॒न॒वा॒यम्। कि॒मी॒दिने॑ ॥ २ ॥

हे इन्द्रासोमा इन्द्रासोमौ अघशंसम् अघस्य अनर्थस्य शंसितारम् अघं पापिनं सम् सम्यग् अभि। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। भवतम् इति शेषः। तिरस्कुरुतम्

---

१. मण्डूकोनैन्द्रा° S'. २. वस्मिन् Macdonell. ३. सौदासचेतुं° S'. ४. अचित्तः P[१]. ५. नुदेथाम् P. ६. अचित्ता S'. ७. °समभ्य१घं A,B,B[b],D,R,S[m],Cs. ८. °ग्निर्वा ऋ ७,१०४,२ पै १६,९,२. ९. चरुः P[१].

इत्यर्थः । स राक्षसः तपुः तापं ययस्तु गच्छतु । चरुः ओदनः । कीदृशः । अग्निमान् इव अग्निसंयुक्त इव । अग्नौ क्षिप्तश्चरुरिव तापं प्राप्नोतु । किं च युवां ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे क्रव्यादे मांसाशनाय घोरचक्षसे भयंकरदर्शनाय किमीदिने किम् इदानीम् इति, किम् इदं किम् इदम् इति वा चरते राक्षसाय । यास्केन उक्तोऽयम् अर्थः ( नि ६,११ )। तादृशाय द्वेषः अप्रीतिम् अनवायम् अव्यवधानं यथा भवति तथा धत्तम् धारयतम्। सर्वदा तस्मिन्निहितं कुरुतम् ।

इन्द्रासोमा दुष्कृतो[1] वव्रे अन्तरनारम्भणे तमसि प्र विध्यतम् ।
यतो नैषां[2] पुनरेकश्चनोदयत् तद् वामस्तु सहसे मन्युमच्छवः ॥ ३ ॥

इन्द्रासोमा । दुःऽकृतः । वव्रे । अन्तः । अनारम्भणे । तमसि । प्र । विध्यतम् । यतः । न । एषाम् । पुनः । एकः । चन । उत्ऽअयत् । तत् । वाम् । अस्तु । सहसे । मन्युऽमत् । शवः ॥

हे इन्द्रासोमा इन्द्रासोमौ दुष्कृतः दुष्टकारिणो राक्षसान् वव्रे आवरके अनारम्भणे अनालम्बने तमसि अन्तः प्र विध्यतम् प्रवेश्य ताडयतम् । यतः यस्माद् अन्धकाराद् एषां पतितानां राक्षसानां दुष्कृतां मध्ये पुनः एकश्चन[3] एकोऽपि न उदयत् नोद्गच्छेत् । एतेर्लेटि अडागमः । 'इतश्च लोपः' ( पा ३,४,९७ ) इति इकारलोपः । गुणायादेशौ । तथा वाम् युवयोः तत् शवः बलं सहसे तेषाम् अभिभवाय मन्युमत् अस्तु क्रोधोपेतं भवतु ।

इन्द्रासोमा वर्तयतं[4] दिवो वधं सं पृथिव्या अघशंसाय तर्हणम् ।
उत् तक्षतं स्वर्यं[5] पर्वतेभ्यो येन रक्षो वावृधानं निजूर्वथः ॥ ४ ॥

इन्द्रासोमा । वर्तयतम् । दिवः । वधम् । सम् । पृथिव्याः । अघऽशंसाय । तर्हणम् । उत् । तक्षतम् । स्वर्यम् । पर्वतेभ्यः । येन । रक्षः । ववृधानम् । निऽजूर्वथः[6] ॥ ४ ॥

हे इन्द्रासोमा इन्द्रासोमौ दिवः अन्तरिक्षाद् द्युलोकाद् वा वधम् हननसाधनम्[7] आयुधं सम् एकधैव वर्तयतम् । तथा पृथिव्याः सकाशादपि सं वर्तयतम् । किमर्थम् । अघशंसाय अघं शंसतीति अघशंसो[8] राक्षसः तदर्थं तद्वधार्थम् । कीदृशं वधम् । तर्हणम् हिंसकम् । तद् वज्रम् उत्तक्षतम् उत्तेजनं तीक्ष्णं कुरुतम् । स्वर्यम् स्वरणार्हम् आयुधम् पर्वतेभ्यः मेघेभ्यः सकाशाद् येन वज्रेण वधशब्दवाच्येन वावृधानं वर्धमानं[9] रक्षः राक्षसं निजूर्वथः हथः ।

---

१. दुःकृतो A,D,Sᵐ. २. यथा नानुः ऋ ७,१०४,३; अंथैषां नोदः वे १६,९,१. ३. एकश्च S' ४. म हरतं वै १६,९,५. ५. स्वर्यं A,D,Sᵐ; स्वर्यं Bᵇ. ६. निजूर्वथः P³. ७. 'साधनमायुधम् S'. ८. एवं स्वरो न विद्यते. ९. वर्धमानं S.

इन्द्रा॑सोमा व॒र्तय॑तं दि॒वस्पर्य॑ग्नित॒प्तेभि॑र्यु॒वमश्म॑हन्मभिः[1]।
तपु॑र्वधेभिर॒जरे॑भिर॒त्रिणो॒ नि पर्शा॑ने विध्यतं॒ यन्तु॑ निस्व॒रम्[2] ॥ ५ ॥

इन्द्रा॑सोमा । व॒र्तय॑तम् । दि॒वः । परि॑ । अ॒ग्नि॒ऽत॒प्तेभि॑ः । यु॒वम् । अश्म॑हन्मऽभिः ।
तपु॑ःऽवधेभिः । अ॒जरे॑भिः । अ॒त्रिण॑ः । नि । पर्शा॑ने । वि॒ध्य॒त॒म् । यन्तु॑ । नि॒ऽस्व॒रम् ॥ ५ ॥

हे इन्द्रासोमा इन्द्रासोमौ युवम् युवां वर्तयतम् इतस्ततः प्रेरयतम् । सामर्थ्याद् आयुधानीति गम्यते । कस्मिन् देशे । दिवस्परि द्युलोकस्य अन्तरिक्षस्य परितः । किं च अग्नितप्तेभिः अग्निना संततैः अश्महन्मभिः । अश्मा अयःसारः । अयःसारमयैर्हननसाधनैः तपुर्वधेभिः संतापकैरायुधैः । पुनः कीदृशैः । अजरेभिः जरारहितैर्दृढैः अत्रिणः भक्षकान् असुरान् पर्शाने पार्श्वास्थिप्रदेशे नि विध्यतम् । ते च निःस्वरम्[3] निःस्वनं निःशब्दं यथा भवति तथा यन्तु गच्छन्तु । म्रियन्ताम् इत्यर्थः ।

इन्द्रा॑सोमा॒ परि॑ वां भूतु वि॒श्वत॑ इ॒यं म॒तिः क॒क्ष्याश्वे॑व वा॒जिना॑ ।
यां वां॒ होत्रां॑ परिहि॒नोमि॑[4] मे॒धये॒मा ब्रह्मा॑णि नृ॒पती॑ इव[5] जिन्वतम्[6] ॥६॥

इन्द्रा॑सोमा । परि॑ । वा॒म् । भू॒तु॒ । वि॒श्वत॑ः । इ॒यम् । म॒तिः । क॒क्ष्या॑ । अश्वा॑ऽइव । वा॒जिना॑ । याम् ।
वा॒म् । होत्रा॑म् । प॒रि॒ऽहि॒नोमि॑ । मे॒धया॑ । इ॒मा । ब्रह्मा॑णि । "नृ॒पती॑ इ॒वेति॑ नृ॒पती॑ऽइव । जि॒न्व॒त॒म् ॥

हे इन्द्रासोमा इन्द्रासोमौ वाम् युवाम् इयम् अस्माभिः कृता मतिः । मन्यत इति मतिः स्तुतिः विश्वतः सर्वतः परि भूतु परिगृह्णातु । विषयीकरोत्वित्यर्थः । तत्र दृष्टान्तः— कक्ष्या कक्षबन्धनसाधनभूता रज्जुः वाजिना वाजिनौ बलवन्तौ अश्वेव अश्वाविव । तौ यथा रज्जुर्गृह्णाति तद्वत् । मतिं विशिनष्टि— या होत्राम् आह्वानार्हां मेधया धारणयुक्तया बुद्ध्या वाम् युवाभ्यां युवयोरर्थाय परिहिनोमि प्रेरयामि । इदानीम् अवयवश आह— इमा इमानि ब्रह्माणि मन्त्रान्[8] नृपतीव[3] राजानाविव तौ यथा बन्दिकृतवाक्यानि श्रुत्वा प्रीणयतस्तद्वत् जिन्वतम् प्रीणयतम् ।

प्रति॑ स्मरेथां तु॒जय॑द्भि॒रेवै॑र्ह॒तं द्रु॒हो र॒क्षसो॑ भङ्गु॒राव॑तः ।
इन्द्रा॑सोमा दु॒ष्कृते॑[9] मा सु॒गं भू॒द्यो मा॑[10] क॒दा चि॑दभि॒दास॑ति द्रु॒हुः[11] ॥७॥

---

१. °तप्तेभिर्दिवो अश्म° पै १६,९,४. २. निस्स्वरम् पै. ३. वैतु. संपा.
ऋ ७,१०४,६ पै. सा.
४. °हिणोमि पै १६,९,६. ५. नृपतीव K,K^m,V,P³,M,W,R³.T,K²,S'.RW. ऋ
६. हिन्वतम् पै. ७. नृपतीवेति Bp², Bp³. ८. मन्त्रा S'.
९. दुःकृते A,D,S^m. १०. नः ऋ ७,१०४,७. ११. द्रुहः K^m; द्रुहा ऋ.

प्रति । स्मरेथाम्[1] । तुजयत्ऽभिः । एवैः । हतम् । द्रुहः । रक्षसः । भङ्गुरऽवतः ।
इन्द्रासोमा । दुःऽकृते । मा । सुऽगम् । भुत् । यः । मा । कदा । चित् । अभिऽदासति । द्रुहः ॥७॥

हे इन्द्रासोमौ युवां तुजयद्भिः बलवद्भिः एवैः गमनसाधनैरश्वैः प्रति स्मरेथाम्। स्मृतिरत्र[2] आगमनपर्यन्तव्यापारा । प्रतिगच्छतम् इत्यर्थः । आगत्य च द्रुहः द्रोहकारिणो भङ्गुरावतः भञ्जनशीलान् रक्षसः राक्षसान् हतम् हिंस्तम् । किं च हे इन्द्रासोमा इन्द्रासोमौ दुष्कृते दुष्टकारिणे राक्षसाय सुगम् सुगमनं जीवद्गमनं सुखं वा मा भूत्। दुष्कृतं विशिनष्टि — यो दुष्कृत् द्रुहः द्रोहशीलः सन् कदाचित् एकवारमपि मा माम् अभिदासति उपक्षपयति बाधते । तस्मा इति ।

यो मा पाकेन मनसा चरन्तमभिचष्टे अनृतेभिर्वचोभिः ।
आप इव काशिना संगृभीता असन्नस्त्वासत इन्द्र वक्ता ॥ ८ ॥

यः । मा । पाकेन । मनसा । चरन्तम् । अभिऽचष्टे । अनृतेभिः । वचःऽभिः ।
आपःऽइव । काशिना । समऽगृभीताः । असन्[3] । अस्तु । असतः । इन्द्र । वक्ता ॥८॥

हे इन्द्र यो राक्षसादिः पाकेन परिपक्वेन मनसा । अन्यायाचरणस्यापि मनोमूलत्वात् मन एव अत्राभिधीयते । चरन्तम् प्रवर्तमानं मा माम् अनृतेभिः अनृतरूपैः अयं ब्राह्मणं हतवान् अयं ब्रह्मस्वं हृतवान् इत्येवमाद्यात्मकैः वचोभिः वचनैः अभिचष्टे अभिशापं करोति स राक्षसादिः काशिना मुष्टिना संगृभीताः संगृहीता आप इव ता यथा अङ्गुलिविवरेभ्यो गलन्ति तद्वत् असतः अविद्यमानस्य अकृतस्यार्थस्य वक्ता स्वयमपि असन्नस्तु शून्यो भवतु ।

ये पाकशंसं विहरन्त एवैर्ये वा भद्रं दूषयन्ति स्वधाभिः ।
अहये वा तान् प्रददातु सोम आ वा दधातु निर्ऋतेरुपस्थे ॥ ९ ॥

ये । पाकऽशंसम् । विऽहरन्ते । एवैः । ये । वा । भद्रम् । दूषयन्ति । स्वधाभिः ।
अहये । वा[4] । तान् । प्रऽददातु । सोमः । आ । वा । दधातु । निःऽऋतेः[5] । उपऽस्थे ॥

ये राक्षसाः पाकशंसम् परिपक्वशंसनं सत्यभाषिणं माम् एवैः प्राप्तव्यैरात्मीयैः कामैर्हेतुभिः विहरन्ते विशेषेण हरन्ति उपक्षपयन्ति । यथाकामं परिवदन्तीत्यर्थः । ये च भद्रम् कल्याणवर्तनं मां मदीयं भद्रं कर्म वा स्वधाभिः । स्वधेत्य-

---

१. स्मरेथाम् P. २. स्मृथितत्र S'. ३. असम् P'. ४. वातान् P.
५. °ऋते P.

त्वनाम (तु. निघ २,७)। अग्नेर्निमित्तभूतैः दूषयन्ति तान् उभयविधान् अहये । 'सर्पे वृत्रासु-रेऽप्यहिः' इत्यभिधानम् । वृत्राय सर्पाय वा प्रददातु प्रयच्छतु सोमः । वा अथवा निर्ऋतेः । निर्ऋतिः पापदेवता[1] । हिंसित्र्याः पापदेवताया उपस्थे उत्सङ्गे आ दधातु आस्थापयतु ।

यो नो रसं दिप्सति पित्वो अग्ने [2]अश्वानां गवां[2] यस्तनूनाम् ।
[3]रिपु स्तेन[3] स्तेयकृद् दभ्रमेतु [4]नि ष हीयतां[4] तन्वा३[5] तना च ॥१०॥

यः । नः । रसम् । दिप्सति । पित्वः । अग्ने । अश्वानाम् । गवाम् । यः । तनूनाम् ।
रिपुः । स्तेनः । स्तेयऽकृत् । दभ्रम् । एतु । नि । सः । हीयताम् । तन्वा । तना । च ॥१०॥

हे अग्ने यो राक्षसादिः नः अस्माकं रसम् मम शरीरसारं दिप्सति जिघांसति [6][यश्च पित्व. अस्मदीयस्य अन्नस्य रसं दिप्सति] यश्च अश्वानां मदीयानां रसं दिप्सति यश्चापि गवां यो वा तनूनाम् आत्मीयपुत्रादिशरीराणां रसं दिप्सति स पूर्वोक्तप्रकारो रिपुः शत्रुः स्तेनः तस्करः स्तेयकृत् मोषकर्ता दभ्रम् एतु । दम्भु दम्भने[1] । हिंसां प्राप्नोतु । स एव तन्वा स्वकीयेन शरीरेण तना च तनयेन च [7]नि हीयताम् वियुक्तो[7] भवतु ।

इत्यष्टमकाण्डे द्वितीयेऽनुवाके चतुर्थं सूक्तम् ।

'परः सो अस्तु' इति सूक्तस्य 'रक्षोहणम्' इत्यनुवाकप्रयुक्तो विनियोगो द्रष्टव्यः ।

परः सो अस्तु तन्वा३[5] तना च तिस्रः पृथिवीरधो अस्तु विश्वाः ।
प्रति शुष्यतु[8] यशो अस्य देवा यो मा[9] दिवा दिप्सति यश्च नक्तम् ॥११॥

परः । सः । अस्तु । तन्वा । तना । च । तिस्रः । पृथिवीः । अधः । अस्तु । विश्वाः ।
प्रति । शुष्यतु । यशः । अस्य[10] । देवाः[11] । यः । मा । दिवा । दिप्सति । यः । च । नक्तम् ॥११॥

हे देवाः स राक्षसादिः तन्वा स्वकीयेन शरीरेण तना च पुत्रेण च । उभयत्र व्यत्ययेन तृतीया । तनोः पुत्रस्य चेत्यर्थः । उभयोः परः [12]अन्यः विरोधी[12] अथवा परस्ताद् वर्तमानो वियुक्तः अस्तु । तथा विश्वाः व्याप्ताः तिस्रः पृथिवीः त्रिप्रकारा भूमीः । भूमेर्द्युलोकस्य च त्रैविध्यं मन्त्रान्तरेषु प्रसिद्धम् — 'तिस्रो भूमीर्धारयन् त्रीँरुत द्यून्' (ऋ २,२७,८), 'तिस्रो द्यावो निहिता अन्तरस्मिन् तिस्रो भूमीरुपराः

---

१. देवता S'. २. ये अश्वानां ये गवां S; यो अश्वानां यो गवां ऋ ७,१०४,१० पै १६,९,१०. ३. रिपुः स्तेनः ऋ. ४. अनु विष्यतां पै.; नि ष° P³,M,W,R²,K¹; नि स° A. ५. तन्वा३ K,R ६. हिंसायां सा. ७. निग्रहीयतांवियुक्तो S'. ८. शुष्यति पै १६,१०,१ [मुको.]. ९. नो ऋ ७,१०४,११. १०. अस्य P. ११. देवाः P¹. १२. अन्यविरोधी S'.

पङ्क्तिविधानाः' ( ऋ ७,८७,५ ) इति । अधः अस्तु । तिसृणामपि पृथिवीनाम् अधस्तात् नरके वर्तमानोऽस्त्वित्यर्थः । अस्य पापिनो यशः अन्नं कीर्तिर्वा प्रति शुष्यतु विनश्यतु । यस्य ईदृशो विनाशः[1] तं दर्शयति—यो द्वेष्टा दिवा अहनि मा माम् दिप्सति हन्तुम् इच्छति यश्च नक्तम् रात्रौ दिप्सति । तस्येति संबन्धः ।

सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते[2] ।
तयोर्यत् सत्यं यतरदृजीयस्तदित् सोमोऽवति हन्त्यासत् ॥ १२ ॥

सुऽविज्ञानम् । चिकितुषे । जनाय । सत् । च । असत् । च । वचसी इति । पस्पृधाते इति ।
तयोः । यत् । सत्यम् । यतरत् । ऋजीयः । तत् । इत् । सोमः । अवति । हन्ति । असत् ॥१२॥

अस्य 'इन्द्रासोमा' इत्यादिसूक्तत्रयस्य ऋक्संहितायामपि समानत्वात् तदीयबृहद्देवतानुक्रमण्याम् उदाहृतं वचनम् एतत्—

[3]'हत्वा पुत्रशतं पूर्वं† वसिष्ठस्य महात्मनः ।
वसिष्ठं राक्षसोऽसि त्वं वासिष्ठं रूपमास्थितः ॥
अहं वसिष्ठ इत्येवं जिघांसू राक्षसोऽब्रवीत् ।
अत्रोत्तरा‡ ऋचो दृष्टा वसिष्ठेनेति नः श्रुतम् ॥'[13] इति ।

चिकितुषे विदुषे जनाय इदं सुविज्ञानम् विज्ञातुं सुशकं भवति । किं तत् । सच्च सत्यं च असच्च अनृतं च वचसी सत्यासत्यरूपे वचने पस्पृधाते मिथः स्पर्धेते । तयोः सदसतोर्मध्ये यत् सत्यम् यथार्थवचनं यतरत् च ऋजीयः ऋजुतरम्[4] अकुटिलं तदित् तदेव सोमो देवः अवति रक्षति । असत् उक्तविलक्षणम् असत्यं हन्ति हिनस्ति । एवं सति आवयोर्मध्ये कोऽनृतवादीति विद्वद्भिः सुज्ञानम् इत्यर्थः । अतः अस्मासु असत्यभूतम् आरोपयन्तं राक्षसम् हे सोम त्वं घातयेत्यभिप्रायः ।

न वा उ सोमो वृजिनं हिनोति[5] न क्षत्रियं मिथुया धारयन्तम् ।
हन्ति रक्षो हन्त्यासद् वदन्तमुभाविन्द्रस्य[6] प्रसितौ शयाते ॥ १३ ॥

न । वै । ऊं इति । सोमः । वृजिनम् । हिनोति । न । क्षत्रियम् । मिथुया । धारयन्तम् ।
हन्ति । रक्षः । हन्ति । असत् । वदन्तम् । उभौ । इन्द्रस्य । प्रऽसितौ । शयाते इति ॥

सोमो देवः वृजिनम् । पापवाचिना वृजिनशब्देन तद्वान् लक्ष्यते । पापवन्तं राक्षसं न हिनोति वा उ । वैशब्दः प्रसिद्धौ । उशब्दः अवधारणे । नैव

---

१. विनाश इति S'. २. पस्पृशाते पै १६,१०,२ [मूको.]. ३. बृदे. नोपलभ्यते.
† पूर्वं S'. ‡ राघोत्तरा S'. ४. ऋजुतरं S'. ५. शृणोतु पै १६,१०,१.
६. 'विन्द्रस्य D.

मुञ्चति अयं जीवत्विति न परित्यजति । मिथुया मिथ्याभूतम् अनृतं धारयन्तं क्षत्रियम् क्षत्रं बलम् तद्वन्तं बलिनं राक्षसादिकं च सोमो न हिनोति । तर्हि सोमः किं करोति । उच्यते—रक्षः राक्षसं वृजिनरूपं हन्ति हिनस्ति । तथा असत् अनृतं वदन्तं हन्ति । उभौ उक्तविधौ दुष्टौ इन्द्रस्य प्रसितौ बन्धनसाधने पाशे शयाते । अथवा प्रसितौ । निष्ठान्तं पदम् । प्रकर्षेण बद्धौ सन्तौ शयाते। षिञ् बन्धने इत्यस्मात् कर्मणि निष्ठा । 'गतिरनन्तरः' (पा ६,२,४९) इति गतेः प्रकृतिस्वरत्वम् । क्तिन्पक्षे 'तादौ च निति कृत्यतौ' (पा ६,२,५०) इति गतेः प्रकृतिस्वरत्वम् ।

यदि॑ वा॒ऽहमनृ॑तदेवो॒[1] अस्मि॒[2] मोघं॑ वा दे॒वाँ अ॑प्यू॒हे अ॑ग्ने ।
किम॒स्मभ्यं॑ जातवेदो हृणीषे द्रोघ॒वाच॑स्ते[3] निर्ऋ॒थं स॑चन्ताम् ॥ १४ ॥

यदि॑ । वा॒ । अ॒हम् । अनृ॑तऽदेवः । अस्मि॑[4] । मोघ॑म् । वा॒ । दे॒वान् । अ॒पि॒ऽऊ॒हे । अग्ने॑ । किम् । अ॒स्मभ्य॑म् । जात॒ऽवे॒दः । हृ॒णी॒षे॒ । द्रो॒घ॒ऽवा॒चः॑ । ते॒ । निः॒ऽऋ॒थम् । स॒च॒न्ता॒म् ॥१४॥

हे अग्ने अहं यदि वा यद्यपि अनृतदेवः अनृतेन दीव्यतीत्यनृतदेवः अथ वा अनृताः असत्यभूता देवा अस्य सः । देवशून्य इत्यर्थः । तादृशोऽस्मि । वा अथवा मोघम् व्यर्थं देवान् स्तोतव्यान् यष्टव्यांश्च अप्यूहे वहामि । [5][तदा मां बाधस्व अहं तु] उभयविधोऽपि न भवामीत्यर्थः । अतः कारणात् किम् कथंकारम् अस्मभ्यम् हे जातवेदः जातानां वेदितरग्ने हृणीषे क्रुध्यसि । क्रोधो न कार्यः । अस्मद्विलक्षणा द्रोघवाचः देवताद्रोहविषयवचनोपेताः ते[4] राक्षसाः[6] निर्ऋथम् निकृष्टाम् आर्तिं नाशं सचन्ताम् समवयन्तु गच्छन्तु ।

अ॒द्या मु॑रीय[7] यदि॑ यातु॒धानो॒ अस्मि॒ यदि॒ वायु॑स्त॒तप॒ पूरु॑षस्य[8] ।
अधा॒ स वी॒रैर्द॒शभि॒र्वि यू॑या॒ यो मा॒ मोघं॒ यातु॑धाने॒त्याह॑ ॥ १५ ॥

अ॒द्य । मु॒री॒य॒ । यदि॑ । या॒तु॒ऽधानः॑ । अस्मि॑ । यदि॑ । वा॒ । आयुः॑ । त॒तप॑ । पुरु॑षस्य । अध॑[9] । सः॒ । वी॒रैः॑ । द॒श॒ऽभिः॑ । वि । यू॒याः॒ । यः॒ । मा॒ । मोघ॑म् । यातु॑ऽधान । इति॑ । आह॑ ॥१५॥

प्रायेण अयं मन्त्रः पूर्वश्च अराक्षसम् अहिंसकं त्वं हिंसको राक्षसोऽसीत्येवं यो मिथ्याभियुक्तं करोति तं प्रति मिथ्याभिशस्तस्य शपथरूपः ।

---

१. °दे॒वो B,S[m]. २. आसु ऋ ७,१०४,१४. ३. °वाचेष्ट A,R; °चेष्ट B[b]. ४. अ॒स्मि॒ P. ५. वैतु. मंपा. ६. निराक्षसाः S'. ७. मरीयु K[m]; मुरीयु K,V. ८. पुरु॑षस्य A. ९. अर्धा P.

हे आरोपक पुरुष अहं यदि यातुधानः यातनानां विधायकः[1] पीडाकृद् अस्मि। यदि वा पुरुषस्य आयुः जीवनं ततप संतापं हिंसाम् अकार्षम् । तर्हि अद्य अस्मिन्नेव दिने मुरीय म्रियेय । अध अथ मा अनागसं मां यः त्वं मोघम् व्यर्थं यातुधानेति आह । पुरुषव्यत्ययः[2] । स त्वं च दशभिः दशसंख्याकैः वीरैः पुत्रैः वि यूयाः वियुक्तो भवेः ।

यो मायातुं यातुधानेत्याह यो वा रक्षाः शुचिरस्मीत्याह ।
इन्द्रस्तं हन्तु महता वधेन विश्वस्य जन्तोरधमस्पदीष्ट ॥ १६ ॥

यः । मा । अयातुम् । यातुऽधान । इति । आह । यः । वा । रक्षाः । शुचिः । अस्मि । इति । आह ।
इन्द्रः । तम् । हन्तु । महता । वधेन । विश्वस्य । जन्तोः । अधमः । पदीष्ट ॥ १६ ॥

यः अध्यारोपयिता मा माम् अयातुम् अराक्षसं सन्तम् हे यातुधान राक्षस इत्याह यो वा यश्च परमार्थतो रक्षाः राक्षसः शुचिः शुद्धोऽहम् अयातुः *[अस्मि] इत्याह ब्रूते तम् उभयविधम् असत्यवादिनम् इन्द्रो देवः महता अतिशयितप्रभाववता वधेन हननसाधनेन वज्रेण हन्तु हिनस्तु । स उभयविधो जनः विश्वस्य सर्वस्यापि जन्तोः प्राणिनः अधमः निकृष्टः सन् पदीष्ट पततु नश्यतु ।

प्र या जिगाति खर्गलेव नक्तमप [3]द्रुहुस्तन्वं१ गूहमाना[3] ।
वव्रमनन्तमव सा पदीष्ट ग्रावाणो घ्नन्तु रक्षस उपब्दैः ॥ १७ ॥

प्र । या । जिगाति[4] । खर्गलाऽइव । नक्तम् । अप । द्रुहुः । तन्वम् । गूहमाना ।
वव्रम्[5] । अनन्तम् । अव । सा । पदीष्ट । ग्रावाणः । घ्नन्तु । रक्षसः । उपब्दैः ॥ १७ ॥

या राक्षसी नक्तम् रात्रौ खर्गलेव उलूकीव प्र जिगाति प्रकर्षं गच्छति अस्मान् हन्तुम् । या च द्रुहुः द्रोहकारिणी राक्षसी तन्वम् स्वकीयां तनुं गूहमाना संवृण्वती अप्रकाशयन्ती उप[6] । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । उपगच्छति । सा उक्तलक्षणा दुष्टराक्षसी अनन्तम् अन्तरहितम् अनवधिकम् असंख्यातं वा वव्रम् गर्तम् अव अवाङ्मुखं पदीष्ट पततु । किं च ग्रावाणः सोमम् अभिषुण्वन्तः पाषाणाः उपब्दैः स्वकीयैः सोमाभिषवध्वनिभिः रक्षस. राक्षसान् घ्नन्तु विनाशयन्तु ।

---

१. नियामकः S'. २. पुरुषवचनव्यत्ययः S'. ३. द्रुह° R, पं १६,१०,३ [मुको.]; द्रुहा त° ऋ ७,१०४,१७; °स्तन्वं१ A,B,Bb,D,Sm,Cs; °स्तन्वांगू° S ४. जिगाति P. ५. वव्रिम् P,P[1]; वव्रम्>वव्रिम् Cs. ६. पंजु. मंपा.

वि तिष्ठध्वं मरुतो विक्ष्वी३च्छत[1] गृभायत रक्षसः सं पिनष्टन ।
वयो ये भूत्वा[2] पतयन्ति नक्तभिर्ये वा रिपो दधिरे देवे अध्वरे ॥ १८ ॥

वि । तिष्ठध्वम् । मरुतः । विक्षु । इच्छत । गृभायत । रक्षसः । सम् । पिनष्टन ।
वयः । ये । भूत्वा । पतयन्ति । नक्तऽभिः । ये । वा । रिपः । दधिरे । देवे । अध्वरे ॥ १८ ॥

हे मरुतः यूयं विक्षु प्रजासु मध्ये वि तिष्ठध्वम् विविधं तिष्ठत । रक्षसः राक्षसान् इच्छत हन्तुम् इच्छां कुरुत । तदनन्तरं गृभायत गृह्णीत । गृहीत्वा च सं पिनष्टन सम्यक् चूर्णं यथा भवति तथा पेषणं कुरुत । ये वा राक्षसाः वयः पक्षिणो भूत्वा नक्तभिः रात्रिभिः रात्रिषु पतयन्ति गच्छन्ति संचरन्ति । ये वा ये च देवे दैवे देवसंबन्धिनि दीप्ते प्रकाशमाने वा अध्वरे यागे रिपः हिंसाः दधिरे धारयन्ति । तान् राक्षसान् संपिनष्टनेति संबन्धः ।

प्र वर्तय [3]दिवोऽश्मानमिन्द्र सोमशितं मघवन्त्सं शिशाधि ।
[4]प्राक्तो अपाक्तो अधरादुदक्तो३भि जहि रक्षसः पर्वतेन ॥ १९ ॥

प्र । वर्तय । दिवः । अश्मानम् । इन्द्र । सोमऽशितम् । मघऽवन् । सम् । शिशाधि ।
प्राक्तः । अपाक्तः । अधरात् । उदक्तः । अभि । जहि । रक्षसः । पर्वतेन ॥ १९ ॥

हे मघवन् इन्द्र दिवः द्युलोकाद् अन्तरिक्षाद् अश्मानम् अशनिलक्षणं वज्रं प्र वर्तय परिस्फारय । तदेव सोमशितम् सोमेन तीक्ष्णीकृतं यथा भवति तथा सं शिशाधि सम्यक् तीक्ष्णीकुरु । तादृशेन पर्वतेन पर्ववता वज्रेण प्राक्तः अपाक्तः अधरात् उदक्तः प्राक्पश्चाद्दक्षिणोत्तराभ्यो दिग्भ्यः । सर्वस्माद् देशाद् इत्यर्थः । रक्षसः राक्षसान् अभि जहि मारय ।

एत उ त्ये पतयन्ति श्वयातव इन्द्रं दिप्सन्ति दिप्सवोऽदाभ्यम् ।
शिशीते शक्रः पिशुनेभ्यो वधं नूनं सृजदशनिं यातुमद्भ्यः ॥ २० ॥

एते । ऊं इति । त्ये । पतयन्ति[5] । श्वऽयातवः । इन्द्रम् । दिप्सन्ति[6] । दिप्सवः । अदाभ्यम् ।
शिशीते । शक्रः । पिशुनेभ्यः । वधम् । नूनम् । सृजत् । अशनिम् । यातुमतऽभ्यः ॥ २० ॥

---

१. तु. B,Bᵇ,Kᵐ,D,Sᵐ,R,Cs,S, WM.; वेतु. A,RW. ऋ ७,१०४,१८ विक्षि१°; V विक्ष्वी१°; विश्वीप्स्व पै १६,१०,८. २. भूत्वी ऋ. ३. दिवो अश्मा° A,Kᵐ,R,S ऋ ७,१०४,१९. ४. प्राक्तादपाक्तादधरादुदक्तादभि ऋ.; °दुक्तो१° K,Kᵐ,R,V. ५. पतयन्ति P². ६. दिप्सन्ति P².

त्ये । तच्छब्दसमानार्थस्त्यच्छब्दः । त्ये ते एते उक्तप्रकाराः श्वयातवः श्ववत् खादन्तो यातुधानाः श्वरूपधारिणः[1] श्वसहिता[2] वा पतयन्ति गच्छन्ति संचरन्ति। आगत्य च दिप्सवः हिंसेच्छवः सन्तः अदाभ्यम् अहिंस्यम् इन्द्रं दिप्सन्ति जिघांसन्ति । स च शक्रः शक्त इन्द्रः पिशुनेभ्यः राक्षसेभ्योऽर्थाय तान् हन्तुं वधम् वज्रं शिशीते निशितं करोति । स एवेन्द्रः यातुमद्भ्यः हिंसावद्भ्यो[3] राक्षसेभ्यो नूनम् निश्चयम् अशनिम् वज्रं सृजत् सृजतु सृजति वा ।

इत्यष्टमकाण्डे द्वितीयेऽनुवाके पञ्चमं सूक्तम् ।

'इन्द्रो यातूनाम्' इति सूक्तस्य 'रक्षोहणम्' (अ ८,३) इत्यनुवाकेन उक्तो विनियोगः ।

इन्द्रो॑ यातू॒नाम॑भवत् पराश॒रो ह॑वि॒र्मथी॑नाम॒भ्या॒३॒॑विवा॑सताम्[4] ।
अ॒भीदु॑ श॒क्रः प॑र॒शुर्यथा॒ वनं॒ पात्रे॑व भि॒न्दन्त्स॒त ए॑तु[5] र॒क्षसः॑ ॥ २१ ॥

इन्द्रः॑ । या॒तू॒नाम् । अ॒भ॒व॒त् । प॒रा॒ऽश॒रः[6] । ह॒वि॒ःऽमथी॑नाम् । अ॒भि । आ॒ऽविवा॑सताम् । अ॒भि । इत् । ऊं॒ इति॑ । श॒क्रः । प॒र॒शुः । यथा॑ । वन॑म् । पात्रा॑ऽइव । भि॒न्दन्[7] । स॒तः । ए॒तु[8] । र॒क्षसः॑ ॥२१॥

इन्द्रो देवः यातूनाम् हिंसकानां राक्षसानां पराशरः पराशातयिता प्रक्षिप्तशरो वा अभवत् भवतु । कीदृशाम् । हविर्मथीनाम् हवींषि देवतार्थानि पुरोडाशादीनि मथ्नतां तथा अभ्याविवासताम्[9] अभिमुखं गच्छताम् । उ अपि च । इत् इति पूरणः । शक्रः इन्द्रः राक्षसान् हन्तुम् अभ्येतु । यथा परशुः कुठारो वनम् वृक्षसमूहं छेत्तुम् एति । पात्रेव पात्राणि मृन्मयानीव भिन्दन् यथा लकुट एति । तद्वत् सतः प्राप्तान् रक्षसः राक्षसान् भिन्दन् । 'तिरः सत इति प्राप्तस्य' ( नि ३,२०) इति यास्कः । एतु गच्छतु ।

उलू॑कयातुं शुशु॒लूक॑यातुं ज॒हि श्वया॑तुमु॒त कोक॑यातुम् ।
सु॒प॒र्णया॑तुमु॒त गृध्र॑यातुं दृ॒षदे॑व[10] प्र मृ॑ण॒ रक्ष॑ इन्द्र ॥ २२ ॥

उलू॑कऽयातुम् । शु॒शु॒लूक॑ऽयातुम् । ज॒हि । श्वऽया॑तुम् । उ॒त । कोक॑ऽयातुम् । सु॒प॒र्णऽया॑तुम् । उ॒त । गृध्र॑ऽयातुम् । दृ॒षदा॑ऽइव । प्र । मृ॒ण॒ । रक्षः॑ । इ॒न्द्र॒ ॥२२॥

हे इन्द्र उलूकयातुम् उलूकैर्घूकैः परिवारैः सह यातयतीति वा उलूकैर्यातीति वा उलूकयातुः[11] तं जहि विनाशय। तथा शिशुलूकयातुम्[12] अल्पोलूकाकारेण यान्तम् अल्पोलूकैः

---

१. स्वरूप° S'. २. स्वसहिता S'. ३. हिंसारक्षो S'. ४. °नामुभ्याः' K,R,V. ५. पुंति A,D,K,Km,Sm,P³,R¹,V, ऋ ७,१०४,२१. ६. °शुराः P. ७. भिंदन् P,P¹. ८. पुति D¹,Kp,P,P¹,J. ९. 'मिवसताम् S'. १०. °धृ° A,D,Sm, दृषदेव पै १६,११,२. ११. एवं स्वरो न सिध्यति. १२. वैतु. मंत्र.

उलूकजातिविशेषपर्यन्तं वा जहि । एवं श्वयातुम् इत्यादीनि व्याख्येयानि । श्वा प्रसिद्धः। कोकश्चक्रवाकः । सुपर्णो गरुत्मान् पक्षिराट्। गृध्रस्तदवान्तरजातीयः । सर्वत्र जहीति संबन्धः । किं बहुना । दृषदा पाषाणेन मृत्पात्रम् इव रक्षः नानाकारेण वर्तमानं राक्षसं प्र मृण प्रकर्षेण मारय । अत्र ऋक्संहिताबृहद्देवतानुक्रमणिका—

'उलूकयातुं जह्येतान् नानारूपान् निशाचरान् ।' (बृदे ६,३२)

'स्त्रीपुंरूपांश्च[1] जह्येतान्[2] जिघांसून् इन्द्र मे जहि ।' इति ।

मा नो रक्षो अभि नड् यातुमावदपोच्छन्तु[3] मिथुना ये[4] किमीदिनः[5] ।
पृथिवी नः पार्थिवात् पात्वंहसोऽन्तरिक्षं[6] दिव्यात् पात्वस्मान् ॥२३॥

मा । नः । रक्षः । अभि । नट् । यातुऽमावत् । अप । उच्छन्तु । मिथुनाः । ये । किमीदिनः ।
पृथिवी । नः । पार्थिवात् । पातु । अंहसः । अन्तरिक्षम् । दिव्यात् । पातु । अस्मान् ॥

नः अस्मान् यातुमावत् यातुमत् हिंसकं रक्षः[7] राक्षसजातिः मा अभिनट् मा प्राप्नोतु। नशतिर्व्याप्तिकर्मा ( तु. निघ २, १८ ) । तस्माद्[8] लुङि 'मन्त्रे घस'' ( पा २,४,८० ) इति च्लेर्लुक् । 'न माङ्योगे' ( पा ६,४,७४ ) इति अडभावः । तथा किमीदिनः किम् इदानीम् इति वा किम् इदं किम् इदम् इति वा चरन्तो राक्षसा ये मिथुनाः मिथुनभूताः स्त्रीपुंसाः सन्ति ते अपोच्छन्तु अपगच्छन्तु । किं च पृथिवी देवी नः अस्मान् पार्थिवात् पृथिवीसंबन्धात् स्वसंबन्धिनः अंहसः रक्षःपिशाचादिकृतात् पीडनात् पापाद् वा पातु रक्षतु । एवम् अन्तरिक्षम् अन्तरिक्षदेवता अस्मान् दिव्यात् दिवि भवात् स्वसंबद्धाद् अंहसः पातु ।

इन्द्र जहि पुमांसं यातुधानमुत स्त्रियं मायया शाशदानाम् ।
विग्रीवासो मूरदेवा ऋदन्तु मा ते[9] दृशन्त्सूर्यमुच्चरन्तम् ॥ २४ ॥

इन्द्र । जहि । पुमांसम् । यातुऽधानम् । उत । स्त्रियम् । मायया । शाशदानाम् ।
विऽग्रीवासः । मूरऽदेवाः । ऋदन्तु । मा । ते[9] । दृशन्[10] । सूर्यम् । उत्ऽचरन्तम् ॥२४॥

हे इन्द्र त्वं पुमांसम् पुंरूपधारिणं यातुधानम् यातनाकारिणं राक्षसं जहि नाशय । उत अपि च मायया परव्यामोहिन्या क्रियया शाशदानाम् हिंसतीं स्त्रियम् राक्षसीं जहि । किं च मूरदेवाः मारणक्रीडाः मूलेन विषौषध्या दीव्यन्तीति वा मूरदेवाः ते विग्रीवासः विच्छिन्नग्रीवाः[11] सन्तः ऋदन्तु नश्यन्तु । ते मूरदेवाः उच्चरन्तं सूर्यं मा दृशन् मा द्राक्षुः ।

---

१. तु. सा. ऋ ७,१०४,२२; वैद्ध. S' स्त्रीरूपांश्च. २. तिर्यञ्चो सा. ऋ. ३. °मावं-नुमपो° ऋ ७,१०४,२३; °छतु A,K$^{m}$, ऋ.; °छन्तां पै १६,११,३. ४. या ऋ. ५. °द्रिना ऋ.; °दिनाम् पै. ६. °हसो अन्त° पै. ७. रक्षः यातयता S'. ८. तस्य S'. ९. ते P,Cp. १०. दृशन् P[1]. १२. विगतछिन्न° S'.

प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम् ।
रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यः ॥ २५ ॥

प्रति । चक्ष्व । वि । चक्ष्व । इन्द्रः । च । सोम । जागृतम् ।
रक्षःऽभ्यः । वधम् । अस्यतम् । अशनिम् । यातुमत्ऽभ्यः ॥२५॥

हे सोम त्वम् इन्द्रश्च प्रत्येकं हिंसकराक्षसान् प्रति चक्ष्व प्रतिकूलं प्रत्येकं वा पश्य। तथा वि चक्ष्व विविधं विपरीतं वा राक्षसान् पश्य । युवां जागृतम् अस्मद्रक्षाविषये अपनिद्रौ भवतम् । किं च रक्षोभ्यो यातुमद्भ्यः हिंसावद्भ्यः अशनिम् अशनिलक्षणं वधम् हननसाधनम् आयुधम् अस्यतम् क्षिपतम्[1] ।

इत्यष्टमकाण्डे द्वितीयेऽनुवाके षष्ठं सूक्तम् ।

समाप्तश्च द्वितीयोऽनुवाकः ।

तृतीयेऽनुवाके पञ्च सूक्तानि । तत्र 'अयं प्रतिसरः' इति सूक्तद्वयम् अर्थसूक्तम् अभिलपितार्थसिद्ध्यर्थम् । अनेनार्थसूक्तेन दध्नि मधुनि च त्रिरात्रं वासितं तिलकमणिं संपात्य अभिमन्त्र्य बध्नीयात् । सूत्रितं हि—" 'आयमगन्' (अ ३,५ ), 'अयं प्रतिसरः', 'अयं मे वरणः' (अ १०,३ ), 'अरातीयोः' (अ १०,६ ) इति मन्त्रोक्तान् वासितान्[2] बध्नाति" ( कौसू १९,२२ ) इति ।

तथा अस्य सूक्तद्वयस्य कृत्याप्रतिहरणगणे पाठात् शान्त्युदकाभिमन्त्रणहोमादौ विनियोगः । सूत्रितं हि—" 'अयं प्रतिसरः', 'यां कल्पयन्ति' (अ १०,१ ) इति महाशान्तिम् आवपते" ( कौसू ३९,७ ) इति । 'अथ शान्तिकृत्यादूषणेश्चातनैर्मातृनामभिः' ( शांक १६? ) इति । 'कृत्यादूषण एव च । चातनो मातृनामा च' ( शांक २३,१ ) इति ।

तथा 'रौद्रीं रोगार्तस्य' ( शांक १७,३ ) इति विहितायां रौद्र्याख्यायां महाशान्तौ तिलकमणिबन्धने एतत् सूक्तं विनियुक्तम् । तदुक्तं शान्तिकल्पे — " 'अयं प्रतिसरः' इति मन्त्रोक्तं रौद्र्याम्" (शांक १९,५) इति ।

पिष्टरात्रीविधाने प्रतिसरबन्धनेऽपि एतत् सूक्तम् । 'अथातः पिष्टरात्र्याः कल्पं व्याख्यास्यामः' (अप ६,१,१) इति उपक्रम्य उक्तम् अथर्वपरिशिष्टे—" 'अयं प्रतिसरः' इति प्रतिसरम् आवध्य" ( अप ६,१,१०) इति ।

अयं प्रतिसरो मणिर्वीरो वीराय बध्यते ।
वीर्यवान्त्सपत्नहा शूरवीरः परिपाणः सुमङ्गलः ॥ १ ॥

---

१. क्षिप्तम् S'.  २. द्र. कौसू.; वेद्र. S' नास्ति.

अयम् । प्रतिऽसरः । मणिः । वीरः । वीराय । बध्यते ।
वीर्यऽवान् । सपत्नऽहा । शूरऽवीरः । परिऽपानः । सुऽमङ्गलः ॥ १ ॥

अयं तिलकवृक्षनिर्मितो मणिः प्रतिसरः प्रतिसरणसाधनः । यः कृत्याः करोति तं प्रति सरतीति प्रतिसरस्तादृशः । वीरः विविधम् ईरयति अपसारयति शत्रुप्रभृतीनि इति वीरः वीराय वीर्याय 'वीर्याख्याय सामर्थ्याय'[1] विक्रान्ताय पुरुषाय वा बध्यते । मणिर्विशेष्यते — वीर्यवान् वीरस्य कर्म वीर्यम् तद्वान् अतिशयितवीर्यः । सपत्नहा शत्रुघातकः । शूरवीरः शूरान् वीरयति संग्रामे इति वा शूरश्चासौ वीरश्चेति वा शूरवीरः[2] । परिपाणः परिपात्यनेन साधनेन प्रयोक्ता[3] यजमानम् इति परिपाणः परिरक्षासाधनभूतः परितो रक्षिता वा । परिपूर्वात् पातेः करणे ल्युट् । 'वा[4]भावकरणयोः' ( पा ८,४,१० ) इति णत्वविकल्पः[5] । नन्द्यादित्वात् ल्युर्वा । सुमङ्गलः शोभनेन मङ्गलेन उपेतः ।

अयं मणिः सपत्नहा सुवीरः सहस्वान् वाजी सहमान उग्रः ।
प्रत्यक्कृत्या दूषयन्नेति[6] वीरः ॥ २ ॥

अयम् । मणिः । सपत्नऽहा । सुऽवीरः । सहस्वान् । वाजी । सहमानः । उग्रः ।
प्रत्यक् । कृत्याः । दूषयन् । एति । वीरः ॥ २ ॥

अयं स्रात्त्यो मणिः सपत्नहा वैरिघातकः सुवीरः शोभनैर्वीरैरुपेतः । पुत्रादिप्रदातेत्यर्थः । सहस्वान् बलवान् वाजी वेजनवान्[7] सहमानः शत्रूणाम् अभिभविता उग्रः उद्गूर्णबलः कृत्याः परोत्पादिताः प्रत्यक् कर्त्रभिमुखं दूषयन् विनाशयन् एति गच्छति बाहुदण्डम् आरोहति । अथवा प्रत्यक् अस्मदभिमुखम् एति वीरः विविधम् ईरयिता शत्रूणाम् ।

अनेनेन्द्रो मणिना वृत्रमहन्ननेनासुरान् पराभावयन्मनीषी ।
अनेनाजयद् द्यावापृथिवी उभे इमे अनेनाजयत् प्रदिशश्चतस्रः ॥ ३ ॥

अनेन । इन्द्रः । मणिना । वृत्रम् । अहन् । अनेन । असुरान् । परा । अभावयत् । मनीषी । अनेन ।
अजयत् । द्यावापृथिवी इति । उभे इति । इमे इति । अनेन । अजयत् । प्रऽदिशः । चतस्रः ॥३॥

अनेन स्रात्त्येन मणिना पूर्वम् इन्द्रः वृत्रम् असुरम् अहन् केनापि उपायेन जेतुम् अशक्यमपि अमुं मणिं बद्ध्वा तत्सामर्थ्येन हतवान् । तथा अनेन एव

---

१. वीराख्याय सामर्थ्यात्माय S'. २. एवं स्वरो न सिध्यति. ३. प्रयोक्ता S'.
४. घञि च S'. ५. वस्तुतः 'कृत्यचः' ( पा ८,४,२९ ) इति नित्यं णत्वम्. ६. 'ब्रेनु' पं १६,२७,२. ७. वेजनवानवान् S'.

मणिना मणिबन्धनसामर्थ्येन मनीषी जयोपायज्ञानवान् इन्द्रः असुरान् अन्यान् पराभावयत् पराभूतान् विनष्टान् अकरोत् । किं च अनेन एव मणिना इमे प्रसिद्धे उभे द्यावापृथिवी द्यावापृथिव्यौ अजयत् । 'द्यावापृथिव्योर्विजयो नाम तदाधिपत्यम्। किंच अनेन एव मणिना चतस्रः प्रदिशः प्रकृष्टा दिशः प्रागाद्याः अजयत् स्वाधीनाः कृतवान् ।

अयं स्राक्त्यो मणिः प्रतीवर्तः[1] प्रतिसरः ।
ओजस्वान् विमृधो वशी[3] सो अस्मान् पातु सर्वतः[4] ॥ ४ ॥

अयम् । स्राक्त्यः । मणिः । प्रतिऽवर्तः । प्रतिऽसरः ।
ओजस्वान् । विऽमृधः । वशी । सः । अस्मान् । पातु । सर्वतः ॥ ४ ॥

अयं स्राक्त्यः तिलकविकारो मणिः प्रतीवर्तः प्रतिकूलं प्रतिमुखं वर्तयत्यनेनेति प्रतीवर्तः । प्रतिपूर्वाद् वृतेः ण्यन्तात् करणे घञ् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' ( पा ६,३,१२२ ) इति दीर्घः । 'थाथघञ्' ( पा ६,२,१४४ ) इत्यादिना उत्तरपदान्तोदात्तत्वम् । प्रतिसरः रोगादेः प्रतिसरणसाधनभूतः ओजस्वान् शत्रुनिरासक्षमतेजोयुक्तः विमृधः विगतसंग्रामः मणिधारकदर्शनेनैव शत्रूणां पलायनात् संग्रामस्यैव अभावात् । विमृधो विमर्दयिता वा । वशी सर्वस्य वशयिता स तादृशो मणिः अस्मान् सर्वतः सर्वस्मात् अभिभवात्[5] पातु रक्षतु ।

तदग्निराह तदु सोम आह बृहस्पतिः सविता तदिन्द्रः ।
ते मे[6] देवाः पुरोहिताः प्रतीचीः कृत्याः प्रतिसरैरजन्तु[7] ॥ ५ ॥

तत् । अग्निः । आह । तत् । ऊं इति । सोमः । आह । बृहस्पतिः । सविता । तत् । इन्द्रः ।
ते । मे । देवाः । पुरःऽहिताः । प्रतीचीः । कृत्याः । प्रतिऽसरैः । अजन्तु ॥ ५ ॥

तत् वक्ष्यमाणं प्रतीचीः कृत्या इत्यादिकम् अग्निर्देवो मे आह उक्तवान् । प्राणिनः प्रतिसरैः प्रतिसरणसाधनैर्मणिभिः कृत्याः प्रतीचीः "अजन्ति इत्येतत्[8] मे मह्यम् अस्माकम् अग्निराहेत्यर्थः । तदु तदेव सोमः अपि आह । एवं बृहस्पतिः बृहतो मन्त्रजातस्य स्वामी एतन्नामको देवोऽप्याह । तथा सविता सर्वप्राणिनां प्रेरकः एतन्नामको देवोऽप्याह । किं बहुना । तत् साधनम् इन्द्रः मे आह । ते प्रसिद्धा अन्येऽपि देवाः पुरोहिताः पुरतः

---

१. ते द्यावा° S'. २. प्रतीवर्धतुम ? पै १६,२७,४. ३. मणिः पै. ४. विश्वतः पै. ५. अभिभयात् S'. ६. ते पै १६,२७,५. ७. °सरेणाजन्तु पै. ८. अर्थाभि- रंचकाः S'.

संनिधापिताः पुरोहितवत् हितकारिणो वा। आहुरिति विपरिणामः कर्तव्यः। अथ वा तत् स्राक्त्यमणिवन्धनस्य सर्वसंपत्साधनत्वम्[1] अग्निराह। तदु तद् एव सोमोऽप्याह। एवं बृहस्पत्यादिष्वपि योज्यम्। ते ये अग्न्यादयो मणेः सर्वफलसाधनत्वम् आहुः त एव पुरोहिताः फलनिष्पादनविषये पुरतः स्थापिताः सन्तो मे मदर्थम् अन्यैरुत्पादिताः कृत्याः प्रतिसरैः फलसाधनत्वेन अभिहितैर्मणिभिः साधनैः प्रतीचीः अजन्तु गमयन्तु इति व्याख्येयम्।

अन्तर्दधे द्यावापृथिवी उताहरुत सूर्यम्।
ते मे[2] देवाः पुरोहिताः प्रतीचीः कृत्याः प्रतिसरैरजन्तु[3] ॥ ६ ॥

अन्तः। दधे। द्यावापृथिवी इति। उत। अहः। उत। सूर्यम्।
ते। मे। देवाः। पुरःऽहिताः। प्रतीचीः। कृत्याः। प्रतिऽसरैः। अजन्तु ॥ ६ ॥

द्यावापृथिवी दिवं च पृथिवीं च अन्तर्दधे कृत्यायाश्च मम च अन्तरालदेशे दधे स्थापयामि व्यवधानं करोमि। उत अपिच अहः अपि अन्तर्दधे। उत अपिच सूर्यम् अपि अन्तर्दधे। ते मे देवाः द्यावापृथिव्यादयः। शिष्टं पूर्ववत्।

ये स्राक्त्यं मणिं जना वर्माणि कृण्वते।
सूर्य इव दिवमारुह्य वि कृत्या बाधते वशी ॥ ७ ॥

ये। स्राक्त्यम्। मणिम्। जनाः। वर्माणि। कृण्वते।
सूर्यःऽइव। दिवम्। आऽरुह्य। वि। कृत्याः। बाधते। वशी ॥ ७ ॥

ये जनाः कृत्यापरिहारार्थिनो मनुष्याः स्राक्त्यम् मणि वर्माणि तनुत्राणि कृण्वते कुर्वते। स मणिः सूर्य इव दिवम् आरुह्य दिवम् आरूढः सूर्यो यथा तमांसि बाधते एवं वशी वशयिता सन् कृत्याः अन्योत्पादिता वि बाधते विशेषेण नाशयति।

स्राक्त्येन मणिन[4] ऋषिणेव मनीषिणा।
अजैषं सर्वाः पृतना वि मृधो हन्मि रक्षसः ॥ ८ ॥

स्राक्त्येन। मणिना। ऋषिणाऽइव। मनीषिणा।
अजैषम्। सर्वाः। पृतनाः। वि। मृधः। हन्मि। रक्षसः ॥ ८ ॥

---

१. 'साधनमित्वम् S'. २. ते पै १६,२७,६. ३. 'सरेणाजन्तु पै. ४. मणिना B, B^b, K^m, S; मणिना > मणिन Cs.

अहं साधकः स्रात्त्येन तिलकवृक्षविकारेण मणिना मनीषिणा विपश्चिता ऋषिणेव अतीन्द्रियार्थद्रष्ट्रा अथर्वाख्येन महर्षिणा यथा तथा । अथवा ऋषिर्मन्त्रः । उक्तरूपेण मन्त्रेणेव यथा तथा सर्वाः पृतना अजयम् जितवान् अस्मि जयानि वा । तथा मृधः प्रमाथिनो रक्षसः राक्षसान् स्रात्त्येन मणिनेव वि हन्मि घातयामि ।

याः कृत्या आङ्गिरसीर्याः कृत्या आसुरीर्याः[1]
कृत्याः स्वयंकृता या उ चान्येभिराभृताः ।
उभयीस्ताः परा यन्तु परावतो नवतिं नाव्या३[2] अति[3] ॥ ९ ॥

याः । कृत्याः । आङ्गिरसीः । याः । कृत्याः । आसुरीः । याः । कृत्याः । स्वयम्ऽकृताः[4] ।
याः । ऊं इति । च । अन्येभिः । आऽभृताः ।
उभयीः । ताः । परा । यन्तु । पराऽवतः । नवतिम् । नाव्याः । अति ॥ ९ ॥

आङ्गिरसीः आङ्गिरस्यः अङ्गिरसा प्रयुक्ता याः प्रसिद्धाः[5] कृत्याः सन्ति । अङ्गिरसो महर्षेः कृत्याप्रयोगविधातृत्वम्[6] आङ्गिरसकल्पाख्यसूत्रनिर्माणादेव प्रसिद्धम् । तथा आसुरीः आसुर्यः असुरैर्निर्मिता याः कृत्याः सन्ति । एवं स्वयंकृताः परार्थप्रयोगे सति केनचिद् वैकल्येन[7] स्वस्मिन्नेव पर्यवसिताः स्वयंकृताः इत्युच्यन्ते । स्वस्मिन्नेव कृत्यापर्यवसानम् 'यथेन्द्रशत्रुः स्वरतोऽपराधात्' (पाणिनीयशिक्षा ५२) इत्यादिषु प्रसिद्धम् । या उ च याः काश्चन अन्येभिः अन्यैर्मत्सरिभिः आभृताः आहृताः प्रयुक्ताः कृत्याः सन्ति ता उक्तरूपा उभयीः उभय्यः उभयप्रकारा अपि परावतः दूरदेशात् परा यन्तु परागच्छन्तु[8] । ननु चतुष्प्रकारा निर्दिष्टाः कथम् उभयविधत्वम् इति चेत् उच्यते । आङ्गिरस्यः आसुर्यश्च अमानुष्यः इति एका कोटिः । स्वयंकृता अन्यैः कृताश्च मानुष्यः इत्यपरा इत्युभयविधत्वम् । परागमनस्य अवधिं दर्शयति — नवतिम् इत्यादिना । नाव्याः नावा तार्याः महानद्यः । ताश्च नवतिसंख्याकाः । ता अति । अतिक्रम्येत्यर्थः ।

अस्मै[10] मणिं वर्म बध्नन्तु देवा इन्द्रो विष्णुः सविता रुद्रो अग्निः ।
प्रजापतिः परमेष्ठी विराड् वैश्वानर ऋषयश्च सर्वे ॥ १० ॥

अस्मै । मणिम् । वर्म । बध्नन्तु । देवाः । इन्द्रः[11] । विष्णुः । सविता । रुद्रः । अग्निः ।
प्रजाऽपतिः । परमेऽस्थी । विऽराट् । वैश्वानरः । ऋषयः । च । सर्वे ॥ १० ॥

---

१. आसुरीः । याः कृत्याः S,RW. २. नाव्या३ A. ३. अनु ऋ १,८०,८.
४. °कृत्याः P. ५. प्रतिसिद्धाः S'. ६. 'त्रिविधान् त्वम् S'. ७. वैकल्प्येन S'.
८. परागच्छंतं S' ९. [illegible] S' १०. [illegible] ११. इन्द्रं P.

अस्मै यजमानाय कृत्यापरिहारादिफलकामाय मणिम् स्रात्त्यं वर्म परकृतकृत्यादिप्रहारपरिहारकं कवचं तत्स्थानीयं कृत्वा देवाः बध्नन्तु । के देवास्तान् विशिनष्टि—इन्द्रो विष्णुरित्यादिना । प्रजापतिः प्रजानां स्रष्टा स च परमेष्ठी परमे निरतिशये स्थाने वर्तमानः विराट् कृत्स्नब्रह्माण्डाभिमानी देवः वैश्वानरः विश्वेषां नराणां हितो जाठरोऽग्निः हिरण्यगर्भो वा । स्पष्टम् अन्यत् ।

इत्यष्टमकाण्डे तृतीयेऽनुवाके प्रथमं सूक्तम् ।

'उत्तमो असि' इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ।

उत्तमो 'अस्योषधीनामनड्वान्' जगतामिव व्याघ्रः श्वपदामिव ।
यमैच्छामाविदाम तं प्रतिस्पाशनमन्तितम्' ॥ ११ ॥

उत्ऽतमः । असि । ओषधीनाम् । अनड्वान् । जगताम्ऽइव । व्याघ्रः । श्वपदाम्ऽइव ।
यम् । ऐच्छाम । अविदाम[3] । तम् । प्रतिऽस्पाशनम् । अन्तितम् ॥ ११ ॥

हे मणे मण्युपादान वृक्ष वा त्वम् उत्तमोऽसि सर्वाभिमतफलसाधनत्वेन कतिपयफलसाधिकानाम् ओषधीनां मध्ये श्रेष्ठोऽसि । उत्तमत्वे दृष्टान्तम् आह—अनड्वान् अनोवहनसमर्थः पुंगवो जगतामिव गच्छतां चतुष्पदां मध्ये यथा उत्तमस्तद्वत् । अनडुह उत्तमत्वम् 'अनड्वान् दाधार पृथिवीम्' (अ ४,११) इत्यत्र प्राग् उक्तम् । उपकारकत्वे दृष्टान्तम् अभिधाय शत्रुहिंसादिक्रूरकर्मणि दृष्टान्तम् आह—व्याघ्रः श्वपदामिव इति । श्वपदः वृकशृगालाद्या अरण्यदुष्टमृगाः[4] । तेषां मध्ये व्याघ्र इव । 'व्याघ्रो व्याघ्राणाद् व्यादाय हन्तीति वा' (नि ३,१८) इति यास्कः । यम् ईदृग्विधं सर्वपुरुषार्थसाधनाय ऐच्छाम तम् अविदाम लब्धवन्तः स्मः । अथवा यं त्वया साध्यं पुरुषार्थम् ऐच्छाम तम् अविदाम । विन्दतेर्लुङि च्लेः अङ् । तं विशिनष्टि—प्रतिस्पाशिनम्[5] अभिचरतः प्रतिमुखं बाधकम् । अन्तितम् अत्यन्तसंनिहितम् । अथवा तं[6] तमेव प्रतिकूलं बाधनावन्तं[7] द्वेष्टारम् [8]अन्ति अन्तिके अविदाम ।

स इद् व्याघ्रो भवत्यथो सिंहो अथो वृषा' ।
[10]अथो सपत्नकर्शनो[10] यो बिभर्तीमं मणिम् ॥ १२ ॥

---

१. अस्योष° R; °नड्वां K^m,RW. २. °मन्ति तम् RW.; °नमभुवन् पै १६,२८,१. ३. अविदाम् P. ४. °दष्ट° S'. ५. वैतु. मंत्र. ६. बाधमावंतं S'. ७. वृका पै १६,२८,२ [मूको.]. ८. °कर्षणो सात.°; सर्वा दिशो विराजति पै.

सः । इत् । व्याघ्रः । भवति । अथो इति । सिंहः । अथो इति । वृषा ।
अथो इति । सपत्नऽकर्शनः । यः । बिभर्ति । इमम् । मणिम् ॥ १२ ॥

उपमाप्रधाना व्याघ्रादिनिर्देशाः । व्याघ्र इव सिंह इव च पराभिभवनशीलो भवति स इत् । स एवेत्यर्थः । अथो अपि च वृषा इव स यथा गोषु स्वच्छन्दसंचारी भवति तद्वत् स भवतीत्यर्थः । अथो अपि च स एव सपत्नकर्शनः[1] शत्रुविनाशकश्च भवति । स इत्युक्तम् क इत्याह — यः पुरुषः इमम् उक्तमहिमोपेतं मणिं बिभर्ति धारयति स इद् इति संबन्धः ।

नैनं घ्नन्त्यप्सरसो न गन्धर्वा न मर्त्याः ।
सर्वा दिशो वि राजति यो बिभर्तीमं मणिम् ॥ १३ ॥

न । एनम् । घ्नन्ति । अप्सरसः । न । गन्धर्वाः । न । मर्त्याः ।
सर्वाः । दिशः । वि । राजति । यः । बिभर्ति । इमम् । मणिम् ॥ १३ ॥

सर्वा दिशः प्रति । सर्वासु दिक्षित्यर्थः । वि राजति । सर्वदिक्स्वामी भवतीत्यर्थः । स्पष्टम् अन्यत् ।

[2]कश्यपस्त्वामसृजत[3] कश्यपस्त्वा[4] समैरयत् ।
अबिभस्त्वेन्द्रो मानुषे बिभ्रत् संश्रेषिणेऽजयत्[5] ।
मणिं सहस्रवीर्यं वर्म देवा अकृण्वत[6] ॥ १४ ॥

कश्यपः । त्वाम् । असृजत । कश्यपः । त्वा । सम् । ऐरयत् ।
अबिभः । त्वा । इन्द्रः । मानुषे । बिभ्रत् । सम्ऽश्रेषिणे । अजयत् ।
मणिम् । सहस्रऽवीर्यम् । वर्म । देवाः । अकृण्वत ॥ १४ ॥

कश्यपः प्रजापतिः हे मणे त्वाम् असृजत सृष्टवान् । अनेन जन्मतः प्राशस्त्यम् उक्तम् । तथा स एव कश्यपः त्वा त्वां समैरयत् सर्वोपकारकत्वाय प्रेरितवान् । अनेन प्रयोक्तृगौरवद्वारा प्राशस्त्यम् उक्तं भवति । अथ धारयितृगौरवादपि प्राशस्त्यं दर्शयति — अबिभस्त्वेन्द्रः इति । हे प्रशस्तमणे त्वा त्वाम् इन्द्रः सर्वदेवाधिपतिः स्वकीयवृत्रहननादिसिद्धये स्वाराज्यप्राप्तये च अबिभः भरणं कृतवान् । यस्मात् एवं तस्मात् त्वां मानुषे । जातावेकवचनम् । मानुषेषु मध्ये बिभ्रत् पुरुषः संश्रेषिणे परस्परसंश्लेषणसाधने संग्रामे अजयत् जयति । सहस्रवीर्यम् ।

---

१. वेसु. मेधा. २. गा. आद्यं पादचतुष्टयमेकम्, अन्त्यं पादद्वयं चापरं मन्त्रं मन्यमानो व्याचष्टाति.
३. °सृजत् पै १६,२८,४. ४. °स्त्वां पै. ५. °णेऽजयत् K[m]. ६. अकारम पै.

अपरिमितसामर्थ्यं मणिम् एतत्यं देवाः पुरा वर्म कवचम् अकृण्वत कृतवन्तः वर्मवद् रक्षाकरम् अकुर्वन्।

यस्त्वा कृत्याभिर्यस्त्वा दीक्षाभिर्यज्ञैर्यस्त्वा जिघांसति ।
प्रत्यक् त्वमिन्द्र तं जहि वज्रेण शतपर्वणा ॥ १५ ॥

यः । त्वा । कृत्याभिः । यः । त्वा । दीक्षाभिः । यज्ञैः । यः । त्वा । जिघांसति ।
प्रत्यक् । त्वम् । इन्द्र । तम् । जहि । वज्रेण । शतऽपर्वणा ॥ १५ ॥

हे शान्तिकाम पुरुष यः पुमान् त्वा त्वां कृत्याभिः हिंसाभिः क्रियाभिः जिघांसति हन्तुम् इच्छति यः च त्वा त्वां दीक्षाभिः यज्ञियैर्वाग्यमनादिनियमविशेषैः जिघांसति। तथा यः च त्वा त्वां यज्ञैः हिंसासाधनैः श्येनेष्वादिभिर्यागैः जिघांसति तं पुमांसं घातकम् हे इन्द्र इन्द्रात्मक त्वं शतपर्वणा शतसंधिकेन वज्रेण प्रत्यक् प्रतिमुखं जहि घातय।

अयमिद् वै प्रतीवर्त ओजस्वान् संजयो मणिः ।
प्रजां धनं च रक्षतु परिपाणः सुमङ्गलः ॥ १६ ॥

अयम् । इत् । वै । प्रतिऽवर्तः । ओजस्वान् । सम्ऽजयः । मणिः ।
प्रऽजाम् । धनम् । च । रक्षतु । परिऽपानः । सुऽमङ्गलः ॥ १६ ॥

अयं मणिः प्रतीवर्त इद् वै कृत्याप्रतिवर्तनसाधन एव खलु। प्रतिपूर्वाद् वृतेः ण्यन्तात् करणे घञ्। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (पा ६,३,१२२) इति दीर्घः। 'थाथघञ्क्ताजबित्रकाणाम्' (पा ६,२,१४४) इति उत्तरपदान्तोदात्तत्वम्। ओजस्वान् अतिशयितौजाः संजयः संगतजयः सम्यग् जेता वा। स मणिः प्रजाम् पुत्रादिरूपां धनं च रक्षतु पालयतु। पुनर्विशेष्यते—परिपाणः परिपातीति परिपाणः मां परितो रक्षकः। नन्द्यादित्वात् ल्युः। "कृत्यचः' (पा ८,४,२९) इति णत्वम्[2]। सुमङ्गलः शोभनमाङ्गल्यसाधनभूतः।

असपत्नं नो अधरादसपत्नं न उत्तरात् ।
इन्द्रासपत्नं[1] नः पश्चाज्ज्योतिः शूर पुरस्कृधि ॥ १७ ॥

असपत्नम् । नः । अधरात् । असपत्नम् । नः । उत्तरात् ।
इन्द्र ।असपत्नम् । नः । पश्चात् । ज्योतिः । शूर । पुरः । कृधि ॥ १७ ॥

---

१. इन्द्र पिशाचान् पै १६,२८,५. २. णत्वं छान्दसम् सा.

हे इन्द्र शूर त्वम् । मणिर्वा इन्द्रशब्देन उच्यते । नः अस्माकम् अधरात् । उत्तरसाहचर्याद् अत्र अधरशब्दो दक्षिणदेशवाची । 'पश्चात्पुरस्तादधरात्' (अ ८,३,२०) इति हि प्रागुक्तम् । दक्षिणदिग्भागाद् । असपत्नम् सपत्नविघातकम् । ज्योतिः इति संबन्धः । तत् पुरः पुरोदेशे कृधि कुरु । एवम् उत्तरात् पश्चात् इति वाक्यद्वयमपि व्याख्येयम् । अथवा अधरात् उत्तरतः पश्चात् इति देशत्रयस्य उपादानात् पुरो ज्योतिरिति पूर्वदेशो विवक्षितः । अथवा दिक्त्रयदेशेभ्योऽपि असपत्नम् सपत्नाभावम् पुरोदेशे ज्योतिश्च हे इन्द्र शूर त्वं कृधि कुर्विति व्याख्येयम् ।

वर्म मे द्यावापृथिवी वर्माऽहर्वर्म[1] सूर्यः ।
वर्म म[2] इन्द्रश्चाग्निश्च वर्म धाता दधातु मे ॥ १८ ॥

वर्म । मे । द्यावापृथिवी इति । वर्म । अहः । वर्म । सूर्यः ।
वर्म । मे । इन्द्रः । च । अग्निः । च । वर्म । धाता । दधातु । मे ॥ १८ ॥

मे मह्यं द्यावापृथिवी द्यावापृथिव्यौ देवते वर्म तनुत्रं धत्ताम् कुरुताम् । तथा अहः अहरभिमानिदेवताऽपि मे वर्म दधातु । एवं सूर्येन्द्राग्निधातृवाक्यान्यपि योज्यानि[3] ।

ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नाति विध्यन्ति सर्वे ।
तन्मे[4] तन्वं त्रायतां सर्वतो बृहदायुष्मां[5] जरदष्टिर्यथाऽसानि[5] ॥ १९ ॥

ऐन्द्राग्नम्[6] । वर्म । बहुलम् । यत् । उग्रम् । विश्वे । देवाः । न । अतिऽविध्यन्ति । सर्वे ।
तत् । मे । तन्वम् । त्रायताम् । सर्वतः । बृहत् । आयुष्मान् । जरत्ऽअष्टिः । यथा । असानि ॥

यत् मणिलक्षणम् ऐन्द्राग्नम् इन्द्राग्निदेवताकम् इन्द्राग्निभ्याम् अभिमानितं बहुलम् प्रभूतम् उग्रम् उद्गूर्णबलं वर्म कवचम् विश्वे देवाः एतत्संज्ञया व्यवह्रियमाणा देवाः सर्वेऽपि नातिविध्यन्ति अतिवेधनं न कुर्वन्ति । किं तु सर्वेऽपि पालयन्तीत्यर्थः । तत् तथाविधं मणिलक्षणं वर्म मे तन्वम् तनूं शरीरं सर्वतः त्रायताम् पालयतु । कीदृक् तत् । बृहत् प्रभूतम् । अहं च यथा आयुष्मान् शतसंवत्सरेण आयुष्येण तद्वान् जरदष्टिः जीर्णावस्थापर्यन्तम् अशनवान् असानि भूयासं तथा त्रायताम् ।

---

१. वर्माग्निर्वर्म आश्रौ १,२,१ आपश्रौ १४,२६,१. २. नास्ति S'. ३. °न्या-ण्येयोज्यानि S'. ४. तंस्ते ª १६,२८,८. ५. °ष्मान्जरदष्टिर्यथासम् मा १४,५३; °यथासः पै. ६. ऐन्द्रा अग्निम् P.

आ मा॑रुक्षद्[1] देवम॒णिर्म॒ह्या अ॑रि॒ष्टता॑तये ।
इ॒मं मे॒थिम॑भि॒संवि॑शध्वं तनू॒पानं॑ त्रि॒वरू॑थ॒मोज॑से ॥ २० ॥

आ । मा॒ । अ॒रु॒क्ष॒त् । दे॒व॒ऽम॒णिः । म॒ह्यै । अ॒रि॒ष्टऽता॑तये ।
इ॒मम् । मे॒थिम् । अ॒भि॒ऽसंवि॑शध्वम् । त॒नू॒ऽपान॑म् । त्रि॒ऽवरू॑थम् । ओज॑से ॥ २० ॥

देवमणिः देवेन इन्द्रेण धृतत्वाद् वा देवैः इन्द्राग्न्यादिभिरभिमानितत्वाद् वा देवमणिः । स मा माम् आरुक्षत भुजादिप्रदेशम् आरूढवान् । किमर्थम् । मह्यै महत्यै । मह्यम् इति वा । अरिष्टतातये । रिष्टं नाशस्तदभावः अरिष्टम् । अरिष्टकरणाय । क्षेमायेत्यर्थः । किं च हे नराः यूयमपि इमं मेथिम् शत्रूणां विलोडयितारं विनाशयितारम् । यद्वा मेथी खले यथा उच्छ्रिता वर्तते एवम् अयमपीति मेथीवत् मेथिः । तम् अभिसंविशध्वम् अभितः सम्यग् आश्रयध्वम् । अथवा इमं मेथीस्थानीयं मणिम् हे इन्द्रादिदेवा यूयम् अभिसंविशध्वम् अधितिष्ठत । कीदृशम् । तनूपानम् तन्वाः[3] शरीरस्य पातारम्[4] त्रिवरूथम् त्रिविधावरणोपेतम् आद्यन्तमध्यभागैस्त्र्यात्मकं वा । किमर्थम् अभिसंवेशनम् इति उच्यते — ओजसे बलाय बलाभिवर्धनाय ।

अ॒स्मिन्निन्द्रो॒ नि द॑धातु नृ॒म्णमि॒मं दे॑वासो अभि॒संवि॑शध्वम् ।
दी॒र्घा॒यु॒त्वाय॑ श॒तशा॑रदा॒यायु॑ष्मान्[5] ज॒रद॑ष्टि॒र्यथाऽस॑त् ॥ २१ ॥

अ॒स्मिन् । इन्द्रः॑ । नि । द॒धा॒तु॒ । नृ॒म्णम् । इ॒मम् । दे॒वा॒सः॒ । अ॒भि॒ऽसंवि॑शध्वम् ।
दी॒र्घा॒यु॒ऽत्वाय॑ । श॒तऽशा॑रदाय । आयु॑ष्मान् । ज॒रत्ऽअ॑ष्टिः । यथा॑ । अस॑त् ॥ २१ ॥

अस्मिन् मणौ इन्द्रो देवो नृम्णम् सुखम् अस्मदभिमतं नि दधातु स्थापयतु । इमं मणिम् हे देवासः देवा यूयम् अभिसंविशध्वम् अभितः अधितिष्ठत । किमर्थम् एवं प्रार्थनेति चेत् उच्यते — दीर्घायुत्वाय प्रभूतस्य आयुषः प्राप्तये । एतस्यैव व्याख्यानं शतशारदायेति । शरच्छब्देन तदुपलक्षितः संवत्सरोऽभिधीयते । शतसंख्याकाः शरदः शतशरदः । शतशरत्संख्यायुः शतशारदम् तस्मै । तस्यैव तात्पर्यम् आह — आयुष्मान् उक्तशतसंवत्सरलक्षणेन आयुष्येण युक्तः । न केवलम् आयुर्वृद्धिरेव पर्याप्ता किंतु तावत्कालम् अशिष्टेनापि[6] भवितव्यम् इत्यभिप्रेत्याह — जरदष्टिः इति । उक्तो जरदष्टिशब्दार्थः (१९ मन्त्रे) । उक्तगुणद्वयविशिष्टो यथा येन प्रकारेण असत् भवेत् तथाऽस्मिन्निन्द्रो नृम्णं दधातु । देवा अपि इमम् अभिसंविशध्वम् इति संबन्धः ।

---

१. त्वा रक्षतु पै १६,२८,९. २. एन्यमभि॰ पै. ३. तन्वः S'. ४. धाता॰ S'. ५. ॰युष्मां Km, पै १६,२८,१० [मुको.]. ६. आशिष्टेन S'.

स्वस्तिदा विशां[1] पतिर्वृत्रहा विमृधो वशी ।
इन्द्रो बध्नातु ते मणिं जिगीवाँ अपराजितः[2] सोमपा[3] अभयङ्करो वृषा ।
स त्वा रक्षतु सर्वतो[3] दिवा नक्तं च विश्वतः ॥२२॥

स्वस्तिऽदाः । विशाम् । पतिः । वृत्रऽहा । विऽमृधः । वशी ।
इन्द्रः । बध्नातु । ते । मणिम् । जिगीवान् । अपराऽजितः । सोमऽपाः । अभयम्ऽकरः ।
वृषा । सः । त्वा । रक्षतु[4] । सर्वतः । दिवा । नक्तम् । च । विश्वतः ॥ २२ ॥

इन्द्रो देवः ते तव उक्तमहिमोपेतं मणिं बध्नातु इति वाक्यार्थः । कीदृश इन्द्र इति तं विशिनष्टि—स्वस्तिदाः स्वभक्तानाम् अविनाशिलक्षणक्षेमप्रदाता । स्वयं च विशाम् देवमनुष्यादिलक्षणानां प्रजानां पतिः पालयिता स्वामी । वृत्रहा वृत्रस्य असुरस्य हन्ता । विमृधः विगतयुद्धः विविधं शत्रुविनाशकारी वा । वशी सर्वस्य वशयिता । जिगीवान् जयशीलः । अपराजितः स्वयम् अन्यैरनभिभूतः । सोमपाः सर्वेष्वपि सोमयागेषु स्वयमेव मुख्यत्वेन सोमस्य पाता । अभयंकरः अभयं भयराहित्यं तस्य कर्ता । वृषा सेक्ता अतिशयितपुंस्त्वस्य[5] अभिमतफलस्य वर्षिता वा । स तादृशो देवो मणिं बद्ध्वा त्वा त्वां सर्वतः सर्वस्मादपि भयनिमित्ताद् रक्षतु । किम् एकदा । नेत्याह । दिवा नक्तं च । सर्वदेत्यर्थः । सर्वत इत्युक्तमेवार्थम् आदरार्थं पुनराह विश्वत[6] इति ।

इत्यष्टमकाण्डे तृतीयेऽनुवाके द्वितीयं सूक्तम् ।

'यौ ते माता' इति सूक्तत्रयम् अर्थसूक्तम् । अस्य अर्थसूक्तस्य "'दिव्यो गन्धर्वः' (अ २,२), 'इमं मे अग्ने' (अ ६,१११), 'यौ ते माता' (अ ८,६) इति मातृनामानि" (कौसू ८,२४) इति मातृगणे पाठात् शान्त्युदकाभिमन्त्रणाद् भुतहोमशान्तिहोमादौ गणप्रयुक्तो विनियोगोऽवगन्तव्यः । सूत्रितं हि— "'वास्तोष्पत्यादीनि महाशान्तिमावपते" (कौसू ४३,५) इति, "'दिव्यो गन्धर्वः' इति मातृनामभिर्जुहुयात्" (कौसू ९४,१५) इति, 'चातनैर्मातृनामभिर्वास्तोष्पत्यैराज्यं जुहुयात्' ( शांक १६? ) इत्यादि ।

सीमन्तोन्नयनकर्मणि अनेन अर्थसूक्तेन श्वेतपीतसर्षपान् संपात्य अभिमन्त्र्य गर्भिण्या बध्नीयात् । तथा च सूत्रम्—"'यौ ते माता' इति मन्त्रोक्तौ बध्नाति" (कौसू ३५,२०) इति ।

यौ ते मातोन्ममार्ज जातायाः पतिवेदनौ ।
दुर्णामा तत्र मा गृधदलिंश उत वत्सपः ॥ १ ॥

---

1. १,२१,१ टि. द्र. 2. 'जितः । A,R,RW. 3. सर्वदा पै १६,२८,११.
4. रक्षन्तु P,P[1]; रक्षन्तु > रक्षतु J. 5. 'पुंस्त्वम् S'. 6. विश्वस्त S'. 7. 'स्त्यादिमहा' S'.

यौ । ते । माता । उत्ऽमुमार्ज । जातायाः । पतिऽवेदनौ ।
दुःऽनामा । तत्र । मा[1] । गृधत् । अलिंशः । उत । वत्सऽपः ॥ १ ॥

हे गर्भिणि जातायाः उत्पन्नाया उत्पत्तिसमनन्तरमेव ते तव माता जनयित्री यौ प्रसिद्धौ दुर्नामसुनामाख्यौ[2] दुर्नामवत्सपाख्यौ वा पतिवेदनौ तव पत्युर्दुःखवेदनोत्पादकौ परिह्रियमाणौ सन्तौ पतिलम्भकौ वा। दुर्नामसुनामानाविति पक्षे सुनामा अनुकूलत्वात् पतिलम्भकः। दुर्नामा तु प्रतिक्रियया पतिलम्भक इति। पक्षान्तरे अलीश[3] इत्येतद् वत्सपविशेषणम्। उक्तस्वरूपौ यौ उन्ममार्ज ऊर्ध्वमुखं मार्जनम् उन्मार्जनम् तत् कृतवती परिहृतवती। पत्युः परिग्रहायेति[4] शेषः। तत्र तयोर्मध्ये दुर्नामा स्वग्दोपाख्यः[5] मा गृधत् अभिकाङ्क्षां मा करोतु। गृधु अभिकाङ्क्षायाम्। माङि लुङि पुषादित्वाद् अङ्। तथा अलीशः[3] अलयो भ्रमराकारेण वर्तमानाः केचन रोगाः तदभिमानिदेवा वा तेषाम् ईशः स्वामी वत्सपः वत्सानां पाता संवर्तव्याध्यभिमानिदेवः[6]। सोऽपि त्वां मा गृधत्। दुर्नामसुनामानौ "यदि यच्छब्दार्थौ" तदा उक्तव्यतिरिक्तः अलीशोऽपि त्वां मा गृधत्। उत अपि च वत्सपोऽपि मा गृधत् इति व्याख्येयम्।

पलालानुपलालौ शर्कुं[8] कोकं 'मलिम्लुचं पलीजकम्' ।
आश्रेषं[10] वव्रिवाससमृक्षग्रीवं प्रमीलिनम् ॥ २ ॥

पलालऽअनुपलालौ । शर्कुम् । कोकम् । मलिम्लुचम्[11] । पलीजकम् ।
आऽश्रेषम् । वव्रिऽवाससम् । ऋक्षऽग्रीवम् । प्रऽमीलिनम् ॥ २ ॥

पलालानुपलालौ पलालवत् पलालः। अतितुच्छाङ्ग इत्यर्थः। अनुपलालोऽपि तादृशः। तौ द्वावपि नाशयामीति शेषः। शर्कुम्। एकः शर् शर् इति कौति शब्दयत इति शर्कुः। तं च विनाशयामि। एवम् उत्तरत्रापि। कोकम्। कोकश्चक्रवाकः। तदाकारेण वर्तमानः कोकः। यद्वा कुक वृक आदाने। पचाद्यजन्तः। बलादेः आदातारं संहर्तारम्। मलिम्लुचम् मलिम्लुचः अत्यन्तमलिनः तं च। पलीचकम्[3]। पल्या पलितेन चकत इति पलीचकैः जरठवद् वर्तमानः पलितकारी[14] वा। आश्रेषम्। आश्लिष्यतीत्याश्रेषः। आश्लिष्य हन्तारं पीडयितारम्। वव्रिवाससम्। वव्रिः रूपनाम (तु. निघ.३,७)। रूपोपेतवसनवन्तम्। ऋक्षग्रीवम् ऋक्षस्य वानरविशेषस्य ग्रीवेव ग्रीवा यस्य तादृशम्। प्रमीलिनम्। प्रमीलः अक्षिसंकोचः। प्रतिक्षणं संकुचन्नेत्रम् इत्यर्थः। एते सर्वे गर्भिण्यादीनां पीडकाः। तान् प्रत्येकं नाशयामीत्यर्थः[15]।

---

१. मा P. २. 'सुमनाख्यौ S'. ३. वैतु. मंपा. ४. 'ग्राहा' S'. ५. 'ख्य S'. ६. द्रु. S'; वैतु. संपा. 'मानी देवः. ७. यदिछनुदार्थौ S'. ८. शुर्कुं S∞; शुल्कं पै १६, ७९,२. ९. मलीमृतं पलीतकम् ? पै. १०. अश्लेपं ? पै. ११. मलिम्लुंचम् P. १२. स्वरानुरोधात् युयादित्वं द्र. १३. एवं स्वरो न सिध्यति. १४. 'कारि S', १५. नास्त्यवीरपर्वः.

मा सं वृ॑तो मोप॑ सृप ऊरू माव॑ सृपोऽन्तरा ।
कृणोम्य॑स्यै भेषजं बजं दु॑र्णामचात॑नम् ॥ ३ ॥

मा । सम् । वृ॒तः । मा । उप॑ । सृ॒पः । ऊरू इति॑ । मा[1] । अव॑ । सृ॒पः । अ॒न्तरा ।
कृ॒णोमि॑ । अ॒स्यै॑ । भे॒षजम् । ब॒जम् । दु॒र्नाम॒ऽचात॑नम् ॥ ३ ॥

हे दुर्नामाख्यरोगाभिमानिन् अस्याः[2] ऊरू अन्तरा ऊर्वोर्मध्ये । 'अन्तरान्तरेण युक्ते' ( पा २,३,४ ) इति द्वितीया । मा सं वृतः संवृतिं संकोचं वा मा कार्षीः । वृतु वर्तने । 'द्युद्भ्यो लुङि' ( पा १,३,९१ ) इति परस्मैपदम् । द्युतादित्वाद् अङ् । तथा मोप सृपः उपसर्पणम् अन्तःप्रवेशं मा कार्षीः । गम्लृ सृप्लृ गतौ । माङि लुङि लृदित्वात् च्लेः अङ् । तथा ऊरू अन्तरा माव[3] सृपः अवाक् सर्पणं मा कार्षीः । किमर्थम् एवम् इति चेद् उच्यते — अस्यै गर्भिण्यै दुर्नामचातनम् दुर्नामाख्यस्य दोषस्य विनाशकं बजम् श्वेतसर्षपरूपं भेषजम् औषधं कृणोमि करोमि । उत्तरत्र बजः[4] पिङ्ग इति विशेष्यमाणत्वात् अत्र केवलबजग्रहणेऽपि श्वेतोऽभिमतः । श्वेतपीतोभयविधसर्षपाणां गर्भिण्या बन्धनं सूत्र उक्तम् ।

दु॒र्णामा॑ च सु॒नामा॑ [5]चो॒भा सं॒वृत॑मिच्छतः[5] ।
अ॒राया॒नप॑[6] हन्मः सु॒नामा॒ स्त्रैण॑मिच्छताम् ॥ ४ ॥

दुः॒ऽनामा॑ । च॒ । सु॒ऽनामा॑ । च॒ । उ॒भा । स॒म्ऽवृ॑तम् । इ॒च्छ॒तः॒ ।
अ॒राया॑न् । अप॑ । ह॒न्म॒: । सु॒ऽनामा॑[7] । स्त्रैण॑म् । इ॒च्छ॒ता॒म् ॥४॥

दुःखेन नमयितुं शक्यो दुर्नामा । सुखेन अल्पप्रयत्नेन नमयितुं वशीकर्तुं शक्यः सुनामा । सुभगो दुर्भगश्चेत्यर्थः । तौ उभा उभौ संवृतम् संवर्तनं सहैव प्राप्ति संचरणं वा इच्छतः । वृणोतेः संपदादिलक्षणः क्विप् । तत्र अरायान् न विद्यन्ते[8] रायो येषां ते अराया अलक्ष्मीकास्तान् दुर्नामप्रभृतीन् अप हन्मः विनाशयामः । सुनामा द्वितीयः स्त्रैणम् स्त्रियाः[9] संबन्ध्यङ्गं स्त्रीसमूहं वा इच्छताम् इच्छतु । स्त्रीशब्दात् 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' ( पा ४,१,८७ ) इति नञ् । इच्छताम् इति । 'इषुगमियमां छः' (पा ७,३,७७) । व्यत्ययेन आत्मनेपदम् ।

यः कृ॒ष्णः के॒शयसु॑र स्तम्ब॒ज उ॒त तु॒ण्डि॑कः ।
अ॒राया॑नस्या मु॒ष्काभ्यां॒[10] भंस॒सोप॑ हन्मसि ॥ ५ ॥

---

१. मा P. २. अस्य S'. ३. अव S'. ४. बजः S'. ५. चोभौ संभृत' वै १६,७६,४. ६. 'यांनप B^b. ७. नाम P ८. विद्यंत S', ९. स्त्रियः S'. १०. मुष्कयोर् वै १६,७६,५.

यः । कृष्णः । केशी । असुरः । स्तम्बऽजः । उत । तुण्डिकः[1] ।
अरायान् । अस्याः[2] । मुष्काभ्याम् । भंससः । अप । हन्मसि ॥ ५ ॥

यः प्रसिद्धः कृष्णः कृष्णवर्णः केशी केशवान् प्रकृष्टकेशः एतन्नामा असुरः । तथा स्तम्बजः स्तम्बे जातः असुरः । उत अपि च तुण्डिकः । तुण्डं मुखम् । कुत्सितमुखः एतन्नामा असुरः एते सर्वे अरायाः दुर्भगास्तान् अरायान् अस्या गर्भिण्याः मुष्काभ्याम् । स्त्रीणामपि मुष्कम् अस्ति । 'व्यक्तं पुंसो न तु स्त्रियाः' इति स्मरणात् । मुष्काख्यप्रदेशाभ्यां तत्रापि भंससः कटिसंधिप्रदेशाद् अप हन्मसि अपहन्मः ।

अनुजिघ्रं प्रमृशन्तं क्रव्यादमुत रेरिहम् ।
अरायाँछ्वकिष्किणो[3] वजः पिङ्गो अनीनशत् ॥ ६ ॥

अनुऽजिघ्रम् । प्रऽमृशन्तम् । क्रव्यऽअदम् । उत । रेरिहम् ।
अरायान् । श्वऽकिष्किणः । वजः । पिङ्गः । अनीनशत् ॥ ६ ॥

अनुजिघ्रम् । अनुजिघ्रतीति अनुजिघ्रः । घ्रा गन्धोपादाने । 'पाघ्राध्माधेट्दृशः शः' ( पा ३,१,१३७ ) इति शः । पाघ्रा' ( पा ७,३,७८ ) इत्यादिना जिघ्रादेशः । आघ्रायैव हिंसकम् इत्यर्थः । तथा प्रमृशन्तम् प्रमृश्यैव हन्तारं क्रव्यादम् मांसभक्षकम् । उत अपि च रेरिहम् लीढ्वैव हन्तारम् उक्तव्यतिरिक्तान् अन्यान् अरायान् अधनान् अलक्ष्मीकान् च[4] । अरायविशेषणं किष्किण[4] इति । किप्किप् इति शब्दं कुर्वन्तस्तान् । यद्वा किष्क हिंसायाम् इति चुरादौ पठ्यते (?) । नित्यं हिंसकान् पिङ्गः पिशङ्गवर्णो वजः सर्षपः अनीनशत् भृशं नाशितवान् । नाशयतु वा । "[5]श्वेताश्च पीताश्च[5] सर्षपान् संपात्य अभिमन्त्र्य गर्भिण्या बध्नीयात्' ( तु. के ३५,२० ) इति विनियोगाभिधानाद् अत्र पीतसर्षपाणां विधानयोग उक्तः ।

यस्त्वा[6] स्वप्ने[7] निपद्यते भ्राता भूत्वा पितेव च ।
वजस्तान्त्सहतामितः क्लीबरूपांस्तिरीटिनः ॥ ७ ॥

यः । त्वा । स्वप्ने । निऽपद्यते । भ्राता । भूत्वा । पिताऽइव । च ।
वजः । तान् । सहताम् । इतः । क्लीबऽरूपान् । तिरीटिनः ॥ ७ ॥

---

१. तुर्डिकः P. २. असुस्याः P. ३. 'याँश्व कि' S'; अरायांन्स्व° Bh; 'क्रिः किणो A,R. ४. वेद्यु. मंत्रा. ५. श्वेतावरपीताश्व S'. ६. यस्त्वा वै १४,७९,८. ७. सुप्तं पै.

हे गर्भिणि यो राक्षसादिः त्वा त्वां स्वप्ने निद्रावस्थायां भ्राता सहोत्पन्न इव भूत्वा विश्वासं जनयन् निपद्यते निपतति अभिगच्छति । तथा यश्च पितेव जनक इव तद्रूपधारी भूत्वा स्वप्ने त्वां निपद्यते । यद्वा तान् इति बहुवचनेन निर्देशात् यः कश्चित् स्वप्ने स्वकीयसहजरूपेण निपद्यते यश्च[1] भ्राता भूत्वा यस्तु पितेव भूत्वेति योज्यम् । भ्रात्रादिरूपेण आगत्य गर्भध्वंसनम् अन्यत्राप्याम्नायते—

"यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥" (ऋ १० १६२,५) इति ।

तान् सर्वान् वजः श्वेतसर्षपः सहताम् अभिभवतु इतः अस्माद् गर्भिणीसकाशात् । तथा क्लीबरूपान् पण्ढरूपं धृत्वा आगतान् तिरीटिनः अन्तर्धानेन अटतश्च । सहताम् इति संबन्धः ।

**'यस्त्वा[2] स्वपन्तीं[3] त्सरति[3] यस्त्वा[4] दिप्सति जाग्रतीम्[5] ।**
**छायामिव प्र तान्त्सूर्यः परिक्रामन्ननीनशत् ॥ ८ ॥**

यः । त्वा । स्वपन्तीम् । त्सरति । यः । त्वा । दिप्सति । जाग्रतीम्[5] ।
छायाम्ऽइव । प्र । तान् । सूर्यः । परिऽक्रामन्[6] । अनीनशत् ॥ ८ ॥

हे गर्भिणि त्वा त्वां यः राक्षसादिः स्वपन्तीम् प्रबोधरहितां स्वापकाले चरति[7] गच्छति । यश्च जाग्रतीम् प्रबुद्धां प्रबोधकाले त्वा दिप्सति दम्भितुम् इच्छति । दम्भु दम्भने । 'सनीवन्तर्ध' (पा ७,२,४९) इत्यादिना इड्विकल्पः । 'दम्भ इच्च' (पा ७,४,५६) "इति अचः स्थाने[8] इत्वम् । अत्र तान् इति बहुवचननिर्देशाद् योयः स्वपन्तीम् योयो जाग्रतीम् इति वीप्सार्थो द्रष्टव्यः । तान् सर्वान् यथा सूर्यः परिक्रामन् आकाशे परिभ्रमन् छायाम् अन्धकारं नाशयति तद्वत् अयं सर्षपः [9]सर्वम् अमङ्गलम्[9] आक्रम्य प्रानीनशत् प्रकर्षेण विनाशितवान् नाशयतु वा ।

**यः कृणोति मृतवत्सामवतोकामिमां स्त्रियम् ।**
**तमोषधे त्वं नाशयास्याः कमलमञ्जिवम् ॥ ९ ॥**

यः । कृणोति । मृतऽवत्साम् । अवऽतोकाम् । इमाम् । स्त्रियम् ।
तम् । ओषधे । त्वम् । नाशय । अस्याः । कमलम् । अञ्जिऽवम् ॥ ९ ॥

यो राक्षसादिः स्त्रियम् इमां गर्भिणीं मृतवत्साम् मृतपुत्रां कृणोति करोति । तथा अवतोकाम् अवपन्नगर्भां वा कृणोति । तं दुष्टम् हे ओषधे सर्षपरूपे त्वं नाशय ।

---

१. यश्च S'. २. यस्त्वां सुप्तां पै १६,७५,७. ३. त्स्परति R; छिनत्ति पै. ४. यश्च पै. ५. जाग्रतिम् WM. ६. °क्रमन् P. ७. संहु. मंपा. ८. इचे- १यचस्थाने S'. ९. मर्वमंगलम् S'.

अस्याः कमलम् गर्भद्वारम् अञ्जिवम् अभिव्यक्तिमत् म्लक्षणोपेतं वा। कुर्विति शेषः।

ये शालाः परिनृत्यन्ति सायं गर्दभनादिनः।
कुसूला ये च कुक्षिलाः ककुभाः करुमाः[1] स्रिमाः[2]।
तानोषधे त्वं गन्धेन विषूचीनान् वि नाशय ॥ १० ॥

ये। शालाः। परिऽनृत्यन्ति[3]। सायम्। गर्दभऽनादिनः।
कुसूलाः। ये। च। कुक्षिलाः। ककुभाः[4]। करुमाः। स्रिमाः।
तान्। ओषधे। त्वम्। गन्धेन। विषूचीनान्। वि। नाशय ॥ १० ॥

ये पिशाचाः सायं समये गर्दभनादिनः गर्दभवद् आक्रोशन्तः सन्तः। 'कर्तर्युपमाने' (पा ३,२,७९) इति णिनिः। शालाः परिनृत्यन्ति शालानां गृहाणां परितो[5] नृत्यन्ति। एवं ये च कुसूलाः कुसूलाकृतयः परिनृत्यन्ति। ये च कुक्षिलाः बृहत्कुक्षयः। ककुभाः अर्जुनवृक्षवद् भयंकराकृतयः। एवं खरुमाः[6] श्रुमाः[6] च नानाकारैर्ध्वनिभिश्च विशिष्टाः सन्तः शालायाः परितो नृत्यन्ति तान् सर्वान् हे ओषधे गौरसर्षप पीतसर्षप वा त्वं गन्धेन तव परिमलेन विषूचीनान् विष्वगञ्चनान् कृत्वा वि नाशय।

इत्यष्टमकाण्डे तृतीयेऽनुवाके तृतीयं सूक्तम्।

'ये कुकन्धाः'[6] इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः।

ये [7]कुकुन्धाः कुकूरभाः कृत्तीर्दूर्शानि[7] बिभ्रति।
क्लीबा इव प्रनृत्यन्तो वने ये कुर्वते[8] घोषं तानितो नाशयामसि ॥११॥

ये। कुकुन्धाः[9]। कुकूरभाः। कृत्तीः। दूर्शानि। बिभ्रति।
क्लीबाःऽइव। प्रऽनृत्यन्तः। वने। ये। कुर्वते। घोषम्। तान्। इतः। नाशयामसि ॥ ११ ॥

ये प्रसिद्धाः कुकन्धाः[6] एतत्संज्ञकाः पिशाचाः। कीदृशाः। कुकूरवाः[6] कुकु इत्येवमात्मकेन रवेण युक्ताः कुक्कुटवद् ध्वानं कुर्वाणाः कृत्यः[6] हिंसाकर्मभिः

---

१. खरुमा S, सा.; °मा D.K,B^b,K^m,S^m,V,Cs,M,W,O. २. स्रिमाः B,I,S^m; स्रमाः A,W; श्रमाः S; श्रुमाः सा. ३. प्रति° P,P^2,J; परि° अपि J ४. ककुभाः P. ५. परि S'. ६. वैतु. मंगा. ७. कुकुन्धाः कल्रभाः कृत्वर्दू° पै १६,८०,१; °दूष्याणि S'. ८. कुर्वतो S'. ९. कुकुर्धाः P^2.

दूष्याणि[1] दूषणीयानि हिंसारूपाणि कर्माणि बिभ्रति धारयन्ति । क्लीबा इव उन्मत्ता इव प्रनृत्यन्तः हस्तपादशिरआदिचालनं कुर्वन्तो ये च पिशाचाः वने अरण्ये घोषम् शब्दं कुर्वते[2] तान् उभयविधानपि इतः गर्भिण्यादेः सकाशात् नाशयामसि नाशयामः ।

ये सूर्यं न तितिक्षन्त आतपन्तममुं दिवः ।
अरायान् बस्तवासिनो दुर्गन्धींल्लोहितास्यान् मर्ककान्[3] नाशयामसि ॥१२॥

ये । सूर्यम् । न । तितिक्षन्ते । आऽतपन्तम् । अमुम् । दिवः ।
अरायान् । बस्तऽवासिनः । दुःऽगन्धीन् । लोहितऽआस्यान् । मर्ककान् । नाशयामसि ॥

ये भूतविशेषा दिवः द्युलोकाद् आतपन्तम् सर्वतस्तापं कुर्वन्तम् अमुं सूर्यं न तितिक्षन्ते न सहन्ते । घूका इव रात्रौ गिरिगुहादौ वा वर्तन्त इत्यर्थः । तान् अरायान् अश्रीकान् बस्तवासिनः अविचर्मवसनान् दुर्गन्धीन् दुष्टेन पुराणकुणपादिसदृशेन गन्धेन उपेतान् लोहितास्यान् सर्वदा नवमांसभक्षणेन लोहितोपेतमुखान् लोहितवर्णमुखान् वा मर्ककान् । मस्कतिर्गत्यर्थः । सलोपश्छान्दसः । कुत्सितगतीन् पिशाचान् । यद्वा मकिरलंकारार्थः[4] । नुमभावः पूर्ववत् । कुत्सितालंकारान्[5] नाशयामसि नाशयामः ।

य आत्मानमतिमात्रमंस[6] आधाय बिभ्रति ।
स्त्रीणां श्रोणिप्रतोदिन इन्द्र रक्षांसि नाशय ॥ १३ ॥

ये । आत्मानम् । अतिऽमात्रम् । अंसे । आऽधाय । बिभ्रति ।
स्त्रीणाम् । श्रोणिऽप्रतोदिनः । इन्द्र । रक्षांसि । नाशय ॥ १३ ॥

ये पिशाचाः स्त्रीणाम् आत्मानम् शरीरम् । कीदृशम् आत्मानम् । अतिमात्रम् गर्भिणीत्वाद् अतिस्थूलम् अंसे आधाय स्थापयित्वा बिभ्रति । अथवा क्रियाविशेषणम् एतत् । अतिवेलं बिभ्रतीत्यर्थः । अथवा वस्तुतः अल्पमपि आत्मानम् अतिमात्रम् आकाशस्पर्शिनम् "अंसे स्वस्कन्धप्रदेशे" आधाय मायाबलेन स्थापयित्वा बिभ्रति सर्वदा धारयन्ति । स्त्रीणां गर्भिणीनां श्रोणिप्रतोदिनः कटिप्रदेशं प्रकर्षेण व्यथयतस्तान् रक्षांसि राक्षसान् हे इन्द्र नाशय घातय ।

---

१. दूष्यानि S'; वैद्र. मंपा. २. कुर्वतो S'. ३. मृपकान् ? पै १६,८०,१. ४. 'कारीत्यर्थः S'. ५. छसिताळङ्कारान् S'. ६. 'मात्रमहिम् ? पै १६,८०,५. ७. भंसेयस्कन्धप्रदेशे S'.

ये पूर्वे वुध्वो३[1] यन्ति हस्ते शृङ्गाणि बिभ्रतः ।
आपाकेष्ठाः[2] प्रहासिनं[3] स्तम्बे ये कुर्वते ज्योतिस्तानितो नाशयामसि ॥१४॥

ये । पूर्वे । वुध्वः[4] । यन्ति । हस्ते । शृङ्गाणि । बिभ्रतः ।
आपाकेऽस्थाः । प्रऽहासिनः । स्तम्बे । ये । कुर्वते । ज्योतिः । तान् । इतः । नाशयामसि ॥१४॥

ये पिशाचाः वध्वः वधूनां स्वस्त्रीणां पूर्वे पूर्वभाविनः सन्तो यन्ति सस्त्रीका[5] गच्छन्ति । कथंभूताः । हस्ते स्वस्वहस्तेषु शृङ्गाणि विषाणानि वादनार्थानि पानार्थानि वा बिभ्रतः धारयन्तः । ये च आपाकेष्ठाः आपाकेषु पाकशालासु कुलालगृहेषु वा तिष्ठन्तीति आपाकेष्ठाः । प्रहासिनः प्रकृष्टहासयुक्ताः अट्टहासं कुर्वन्तः[6] । ये च स्तम्बे आर्द्रेषु व्रीह्यादिस्तम्बेषु गृहस्तम्भेषु वा ज्योतिः अग्निरूपं कुर्वते उत्पादयन्ति तान् सर्वान् इतः अस्माद् गर्भिण्याद्यावासस्थानात् नाशयामसि नाशयामः ।

येषां पश्चात् प्रपदानि[7] पुरः पार्ष्णीः[8] पुरो मुखा[9] ।
खलजाः शकधूमजा उरुण्डा[10] ये च मट्मटाः[11] कुम्भमुष्का अयाशवः ।
तानस्या ब्रह्मणस्पते प्रतीबोधेन नाशय ॥ १५ ॥

येषाम् । पश्चात् । प्रऽपदानि । पुरः । पार्ष्णीः । पुरः । मुखा[12] ।
खलऽजाः । शकधूमऽजाः । उरुण्डाः । ये । च । मट्मटाः । कुम्भऽमुष्काः । अयाशवः ।
तान् । अस्याः । ब्रह्मणः । पते । प्रतिऽबोधेन । नाशय ॥ १५ ॥

येषां रक्षःप्रभृतीनां पश्चात् पश्चाद्भागे प्रपदानि पादाग्रप्रदेशाः पुरः पुरोभागे पार्ष्णीः पार्ष्णयः । ननु पश्चात् प्रपदानि सन्तु मुखान्यपि पश्चाच्चेत् किं वैकृतम् इति तत्राह—पुरः पूर्वस्मिन् देशे मुखा मुखानि प्रपदप्रतिकूलानि मुखानि । उक्तविकारान् तान् । तथा ये खलजाः खलो धान्यशोधनप्रदेशस्तत्र जाताः । ये च शकधूमजाः गवाश्वादिपुरीषपिण्डोत्पन्नाः । ये च अरुण्डाः[13] रुण्डरहिता अशिरस्काः । ये च मुट्मुटाः[13] मुट्मुट् इति शब्दं कुर्वन्तः छिन्नसर्वावयवा इव वर्तमाना वा । कुम्भमुष्काः कुम्भोपमेन मुष्केण उपेताः । अयाशव । अयो वायुः । वायुवद् आशुगामिनः । एवम् उक्तप्रकारा ये सन्ति तान् सर्वान् हे ब्रह्मणस्पते

---

१. वुध्वो॰ A,B^b,D,R,S^m,Cs,WM.RW. २. ॰केस्थाः A,B^b,K,K^m,S^m,V,Cs, RW.; ॰केता ? पै १६,८०,६. ३. ॰सिनः B,K,R. ४. वुध्वःऽ P,P^2,J,Cp. ५. स्वघाका S'. ६. कुर्वते S'. ७. प्रपदं पै १६,८०,२. ८. पार्ष्णीः A,B,B^b,R; पार्ष्णी पै. ९. मुखाः P^3,M,W; मुखम् पै. १०. उरुंडा A,R. ११. मटमटाः ? पै. १२. मुखाः P,J,Cp.Bp^2. १३. वैतु. मंपा.

वृहतो वेदराशेः स्वामिन् एतन्नामक देव अस्या ओषधेर्वजरूपायाः प्रतीबोधेन। प्रतीबोधसाधनेन सामर्थ्येनेत्यर्थः । प्रतिनियतेन ज्ञानेन वा। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' ( पा ६,३,१२२ ) इति दीर्घः। तेन नाशय विनष्टान् कुरु।

पर्यस्ताक्षा अप्रचङ्कशा[1] अस्त्रैणाः सन्तु पण्डगाः ।
अव भेषज पादय[2] य इमां संविवृत्सत्यपतिः स्वपतिं स्त्रियम् ॥ १६ ॥

पर्यस्तऽअक्षाः । अप्रऽचङ्कशाः[3] । अस्त्रैणाः । सन्तु । पण्डगाः ।
अव । भेषज । पादय । यः । इमाम् । समऽविवृत्सति । अपतिः । स्वपतिम् । स्त्रियम् ॥१६॥

पर्यस्ताक्षाः इतस्ततो विप्रकीर्णलोचनाः प्रचङ्कशा[4] प्रक्षीणोरुप्रदेशाः । यद्वा प्रगतमतयः। पन्नगाः[4] पादेन न गच्छन्तः । एवंरूपा ये सन्ति ते अस्त्रैणाः स्त्रीसमूहविरोधिनः स्त्रीरहिताः सन्तु भवन्तु। अथवा पन्नगाः सर्पा भवन्तु। किं च हे भेषज सर्षपरूप त्वम् अव पातय[5] अवाङ्मुखं विनाशय। कम्। यो राक्षसादिः इमां गर्भिणीं स्त्रियं संविवृत्सति संवर्तनं कर्तुम् इच्छति । यच्छब्दनिर्दिष्टं विशिनष्टि — अपतिः इति। न विद्यते पतिः स्वामी यस्य स तथोक्तः[6] अनियन्त्रितः । स्त्रियं विशिनष्टि— स्वपतिम् इति। स्वाधीनपतिकाम्[6] । यद्वा अपतिः पतिराहित्येन स्वपतौ निद्रां कुर्वतीम् इमां स्त्रियं संवर्तितुम् इच्छति। वर्ततेः सनि 'वृद्भ्यः स्यसनोः' (पा १,३,९२) इति परस्मैपदम्।

[7]उद्धर्षिणं मुनिकेशं जम्भयन्तं मरीमृशम् ।
[8]उपेषन्तमुदुम्बलं तुण्डेलमुत शालुडम्[9] ।
पदा प्र विध्य पार्ष्ण्या[10] स्थालीं गौरिव स्पन्दना[11] ॥ १७ ॥

उतऽहर्षिणम् । मुनिऽकेशम् । जम्भयन्तम् । मरीमृशम् ।
उपऽएषन्तम् । उदुम्बलम् । तुण्डेलम् । उत । शालुडम् ।
पदा । प्र । विध्य । पार्ष्ण्या । स्थालीम् । गौःऽइव । स्पन्दना ॥ १७ ॥

उद्धर्षिणम् उत्कृष्टेन अतिप्रवृद्धेन धर्षणेन[12] उपेतं मुनिकेशम् मुनिवज्जटात्मककेशवन्तम् एतन्नामानम् । तथा जम्भयन्तम् हिंसन्तं हिंसकं मरीमृशम् पुनःपुनः मृशन्तम् एतन्नामानं च । तथा उपेषन्तम्[8] सर्वत इच्छन्तम् । गर्भिणीं कुमारस्त

---

१. प्रचं° > धप्रचं° A; भप्रचंकुशा K,K$^{m}$,V. २. पातय पै १६,८०,७ सा.
३. °चङ्काशा- P. ४. पैतु. मेरा. ५. एवं स्वरो न सिध्यति. ६. बहुव्रीही स्वरः।
७. सा. 'उद्धर्षिणम्' इत्यारभ्य 'शालुडम्' इतिपर्यन्तमेकं 'पदा प्रविध्य' इत्यारभ्य 'हृदयाविधम्' इतिपर्यन्तं चापरं मन्त्रं मन्यमानो व्याख्याति. ८. उपेष° S, उपेषन्त°, उपेषन्त° सा°.
९. शालुडम् S. १०. प्रास्थान् S. ११. स्पन्दना K$^{m}$,Cs. १२. पैतु. पदा.

इत्यन्विष्यन्तम्[1] इत्यर्थः। तथाविधम् उदुम्बलम् एतन्नामकं च। उत अपि च तुण्डेलम् प्रकृष्टतुण्डवन्तं शालुडम्[2] एतन्नामानम् असुरम्। अथवा उद्धर्षिप्रभृतीनि[3] प्रत्येकं योगरूढानि असुरनामानि। [4]पदा प्रविध्येत्युत्तरत्र संबन्धः। [5]सर्षपाख्यौ-पधिः पदा पादेन[6] प्रविध्य[2] सम्यक् ताडयित्वा प्रास्यात्[2] प्रास्यतु। तत्र दृष्टान्तः— स्थालीम् दोहनसाधनं मृत्पात्रं गौरिव दुग्धा गौर्यथा [2]स्पन्दनात् पश्चात्पादयोः[6] चालनात्। सा यथा पात्रं भिनत्ति तद्वत्।

[7]यस्ते गर्भं प्रतिमृशाज्जातं वा मारयाति ते।
पिङ्गस्तमुग्रधन्वा कृणोतु हृदयाविधम् ॥ १८ ॥

यः। ते। गर्भम्। प्रतिऽमृशात्। जातम्। वा। मारयाति। ते।
पिङ्गः। तम्। उग्रऽधन्वा। कृणोतु। हृदयाविधम्[7] ॥ १८ ॥

कं प्रति एवम् उच्यत इति तम् आह — यस्ते गर्भम् इति। यो राक्षसादिः हे गर्भिणि ते गर्भं प्रतिमृशात् प्रतिमृशेत् पीडयेत् यथा सजीवो न जायते तथा कुर्याद्। वा अथवा जातम् उत्पन्नं ते पुत्रं मारयाति मारयेत्। तं पदा प्रविध्येति पूर्वत्रान्वयः। किं च पिङ्गः गौरसर्षपः तं गर्भघातकं राक्षसम् उग्रधन्वा। धन्वतिर्गतिकर्मा (तु. निघ २,१४)। उद्गूर्णगतिः सन् हृदयाविधम् हृदयप्रदेशे विद्धं ताडितं कृणोतु करोतु। अथवा वेधलिङ्गात् उग्रधन्वशब्दो भयंकरेण धनुषोपेतम् आचष्टे। सर्षपस्य औषधस्य देवताभिप्रायेण उग्रधन्वत्वं न विरुध्यते।

ये अम्नो जातान् मारयन्ति सूतिका अनुशेरते।
स्त्रीभागान् पिङ्गो गन्धर्वान् वातो अभ्रमिवाजतु ॥ १९ ॥

ये। अम्नः। जातान्। मारयन्ति। सूतिकाः। अनुऽशेरते।
स्त्रीऽभागान्[8]। पिङ्गः। गन्धर्वान्। वातः। अभ्रम्ऽइव। अजतु ॥ १९ ॥

ये रक्षःपिशाचाद्याः अम्नो जातान् अर्धोत्पन्नान् गर्भान् मारयन्ति विनाशयन्ति ये च सूतिकाः अभिनवप्रसवा अनुशेरते स्वयमपि योषिद्रूपेण शयनं कुर्वन्ति तान् स्त्रीभागान्। स्त्रियो गर्भिण्यो भागो येषां ते स्त्रीभागाः। स्त्रीग्रहीतॄन् गन्धर्वान् रक्षःपिशाचादीन् पिङ्गः गौरसर्षपः वातः वायुः अभ्रमिव निरुदकं मेघमिव अजतु निरस्यतु।

---

१. इत्यन्वेष्य° S'. २. वैतु. मंग. ३. उद्धर्पिणं प्रभृ° S°. ४. द्र. पृ. ११२८ टि ५. ५. सर्षपाख्योपपदार्पीडेन S'. ६. द्विः पठति S'. ७. अत्रपा. अवग्रहो भवति। (तु. ऋ. १,२४,८). ८. °भंगान् P².]

परिसृष्टं धारयतु यद्धितं माव पादि तत् ।
गर्भं त उग्रौ रक्षतां भेषजौ नीविभार्यौ ॥ २० ॥

परिऽसृष्टम् । धारयतु । यत् । हितम् । मा । अव । पादि । तत् ।
गर्भम् । ते । उग्रौ । रक्षताम् । भेषजौ । नीविऽभार्यौ ॥ २० ॥

परिशिष्टम्[4] होमादिविनियोगावशिष्टं सर्षपद्वयं धारयतु न परित्यजतु गर्भिणी स्त्री। धारणस्य अभिप्रायम् आह — यत् यत् पुत्रादिलक्षणं वस्तु हितम् अभिमतं तत् माव पादि अवपन्नं विस्रस्तं मा भूत् । अनेन अभिप्रायेण धारयतु । हे गर्भिणि ते गर्भम् उग्रौ उद्गूर्णबलौ भेषजौ भेषजरूपौ श्वेतपीतोभयविधसर्षपौ नीविभार्यौ नीव्यां भर्तव्यौ वस्त्राञ्चलेन धार्यौ रक्षताम् पालयताम् ।

इत्यष्टमकाण्डे तृतीयेऽनुवाके चतुर्थं सूक्तम् ।

'पवीनसात्' इति सूक्तस्य 'यौ ते माता' (अ ८,६,१-१०) इत्यनेन सह उक्तो विनियोगः ।

पवीनसात् तङ्गल्वा३च्छायकादुत नग्नकात् ।
प्रजायै पत्ये त्वा पिङ्गः परि पातु किमीदिनः ॥ २१ ॥

पविऽनसात् । तङ्गल्वात् । छायकात् । उत । नग्नकात् ।
प्रऽजायै । पत्ये । त्वा । पिङ्गः । परि । पातु । किमीदिनः ॥ २१ ॥

पवीनसात् । पविर्वज्रः । वज्रसदृशनासिकोपेतात् किमीदिनः असुरादेः सकाशात् तङ्गल्वात् एतन्नामकाच्च किमीदिनः छायकात्[5] विनाशकारिणः सकाशात् उत अपि च नग्नकात् नग्नात् । एतन्नामकेभ्यः असुरेभ्यः सकाशात् हे गर्भिणि त्वा त्वां पिङ्गः पिङ्गवर्णः सर्षपः परि पातु परितो रक्षतु । कस्मै प्रयोजनायेति उच्यते— प्रजायै प्रजार्थं पुत्रलाभार्थं पत्ये पत्यर्थं पत्युरानुकूल्यार्थं च ।

द्व्यास्याच्चतुरक्षात् पञ्चपादादनङ्गुरेः[6] ।
वृन्तादभि[7] प्रसर्पतः परि पाहि वरीवृतात् ॥ २२ ॥

---

1. धारयताम् पै १९,८१,१. 2. °भार्यौ R 3. मा P. 4. वैदु. मा. 5. नंगनुकात् Sm. 6. °गुलेः पै १९,८१,४. 7. °वृधि पै.

द्विऽआस्यात् । चतुःऽअक्षात् । पञ्चऽपादात् । अनङ्गुरेः[1] ।
वृन्तात् । अभि । प्रऽसर्पतः । परि । पाहि । वरीवृतात् ॥ २२ ॥

द्व्यास्यात् द्वे आस्ये पुरः पश्चाच्चेति वा पुरत एव वा यस्य स्तः स द्व्यास्यः तस्मात् । यत एवम् अतोऽसौ चतुरक्षः अक्षचतुष्टयवान् । तस्मात् । पञ्चपादात् पादपञ्चकोपेतात् अनङ्गुरेः अङ्गुलिरहिताद् वृन्तात् लतापुञ्जात् [2]अभिप्रसर्पतः अभिमुखं गच्छतः । अथवा, वृन्तात् वृन्तवद् वृन्तं शिरः पादाग्रं वा तस्मात् । [3]अवाग्भूयाभिगच्छतः पश्चात् वरीवृतात् भृशं सर्वाङ्गं व्याप्य वर्तमानात् हे ओषधे त्वं परि पाहि परितो रक्ष । वृतु वर्तने । अस्माद् यङ्लुगन्तात् पचाद्यचि 'रीगृदुपधस्य च' (पा ७,४,९०) इत्यभ्यासस्य रीगागमः । 'न धातुलोप आर्धधातुके' (पा १,१,४) इति गुणप्रतिषेधः ।

य आमं मांसमदन्ति पौरुषेयं च ये क्रविः ।
गर्भान् खादन्ति केशवास्तानितो नाशयामसि ॥ २३ ॥

ये । आमम् । मांसम् । अदन्ति । पौरुषेयम् । च । ये । क्रविः ।
गर्भान् । खादन्ति । केशऽवाः । तान् । इतः । नाशयामसि ॥ २३ ॥

ये पिशाचा आमम् अपक्वं मांसम् अदन्ति भक्षयन्ति ये च पौरुषेयम् पुरुषस्य संबन्धि क्रविः । क्रविस्शब्दो मांसवचनः । 'य आमस्य क्रविषो गन्धो अस्ति' (ऋ १,१६२,१०) इति हि मन्त्रान्तरम् । मनुष्यमांसभक्षणं न प्रचुरम् इत्यभिप्रेत्य पृथगभिधानम् । ये च केशवाः प्रकृष्टकेशाः पिशाचविशेषाः गर्भान् मायारूपेण प्रविश्य खादन्ति भक्षयन्ति तान् त्रिविधानपि इतः अस्मात् गर्भिण्यादेः सकाशात् नाशयामसि नाशयामः ।

ये सूर्यात् [4]परिसर्पन्ति स्नुषेव श्वशुरादधि ।
वजश्च तेषां पिङ्गश्च हृदयेऽधि नि विध्यताम् ॥ २४ ॥

ये । सूर्यात् । परिऽसर्पन्ति । स्नुषाऽइव । श्वशुरात् । अधि ।
वजः । च । तेषाम् । पिङ्गः । च । हृदये । अधि । नि । विध्यताम् ॥ २४ ॥

ये पीडयितारः सूर्यात् सर्वस्य प्रेरकाद् देवाद् अनुज्ञाताः सन्तः परिसर्पन्ति परिगच्छन्ति भूलोकं गच्छन्ति पीडयितुम् । तत्र दृष्टान्तम् आह—स्नुषेव यथा

---

१. तु. सा.; वैद्य. P,P³,J,K,Cp,WM. अनम्ऽगुरेः. २. वैद्य. मंपा. ३. अवाङ्भूया° S'. ४. °सर्पन्ति स्नुषेव B^b.

स्नुषा श्वशुरादधि । अधिः पञ्चम्यर्थानुवादी । श्वशुरात् स्वपतेर्जनकाद् अनुज्ञाता त्वं पत्युः सकाशं गच्छ इत्येवम् अनुज्ञाता सती तत्समीपं परिसर्पति तद्वत्। तेषां सूर्याद् आगतानां हृदये हृदयदेशे वजश्च वजः श्वेतसर्षपः स च पिङ्गश्च गौरसर्षपश्च । उभयत्र चशब्दः परस्परापेक्षः । अधि नि विध्यताम् अधिष्ठाय ताडयताम् ।

पिङ्ग॒ रक्ष॒ जाय॑मानं॒ मा पुमां॑सं॒ स्त्रियं॑ क्रन्[1] ।
आ॒ण्डादो॑ ग॒र्भान्मा द॑भन् याध॑स्वे॒तः कि॒मी॒दिनः॑ ॥ २५ ॥

पिङ्ग॑ । रक्ष॑ । जाय॑मानम् । मा । पुमां॑सम् । स्त्रिय॑म् । क्र॒न् ।
आ॒ण्ड॒ऽअदः॑ । ग॒र्भान् । मा । द॒भ॒न्[2] । बाध॑स्व । इ॒तः । कि॒मी॒दिनः॑ ॥ २५ ॥

हे पिङ्ग गौरसर्षप त्वं जायमानम् उत्पद्यमानं शिशुं रक्ष । जायमानम् इति सामान्येन अभिधाय विशेषेणाह—जायमानं पुमांसं जायमानां स्त्रियं वा मा क्रन् मा कुर्वन्तु । पीडायाम्[3] इति शेषः । अथवा जायमानं पुमांसं वस्तुतः पुंगर्भं स्त्रियं मा क्रन् स्त्र्यपत्यं मा कुर्वन्तु। यथा एवं न भवति तथा रक्ष । केचन भूतविशेषाः पुंगर्भं स्त्रीगर्भं कुर्वन्ति स्वसामर्थ्यात् । करोतेर्माङि लुङि 'मन्त्रे घस' (पा २,४,८०) इत्यादिना च्लेर्लुक् । किं च अपरे आण्डादः आण्डप्रदेश-भक्षकाः । 'अदोऽनन्ने' (पा ३,२,६८) इति विट् । ते पिशाचाः गर्भान् मा दभन् मा हिंसन्तु । तान् उभयविधान् किमीदिनः किम् इदं किम् इदम् इति चरतो रक्षःप्रभृतीन् हे पिङ्ग इतः गर्भिणीसकाशाद् बाधस्व पीडय ।

अ॒प्र॒जास्त्वं मार्त॑वत्स॒माद् रोद॑म॒घमा॑व॒यम् ।
वृ॒क्षादि॑व॒ स्रजं॑ कृ॒त्वाऽप्रि॑ये॒ प्रति॑ मुञ्च॒ तत् ॥ २६ ॥

अ॒प्र॒जाःऽत्वम् । मार्त॑ऽवत्सम् । आत् । रोद॑म् । अ॒घम् । आ॒ऽव॒यम् ।
वृ॒क्षात्ऽइ॑व । स्रज॑म् । कृ॒त्वा । अप्रि॑ये । प्रति॑ । मु॒ञ्च॒ । तत् ॥ २६ ॥

हे पिङ्ग त्वम् अस्या गर्भिण्या यद् अप्रजास्त्वम् अपत्यविधुरत्वम् यच्च मार्तवत्सम् मृतवत्सत्वं दौर्भाग्यम् आत् अपि च रोदम् सर्वदा उत्पद्यमानं दुःखं हृद्रोदनं[4] वा । अघमावयम्[5] अघानां पापानां तत्फलभूतानां दुःखानां वा असकृद् चयनम् । एतानि सर्वाणि । वृक्षादिव स्रजं कृत्वा यथा वृक्षाद् बहूनि पुष्पाणि

---

1. करन् Km. 2. दुभव् P¹. 3. पीडयाम् S'. 4. हृद्रोदनं S'. 5. वेङ्. मंत्रा.

आदाय मालां निर्माय प्रियतमे प्रतिमुञ्चति तद्वत् अप्रजास्त्वादिकानां स्रजं कृत्वा तत् माल्यम् अप्रिये द्वेष्ये प्रति मुञ्च संयोजय ।

इत्यष्टमकाण्डे तृतीयेऽनुवाके पञ्चमं सूक्तम् ।

समाप्तश्च तृतीयोऽनुवाकः ।

यक्ष्मादिसर्वव्याधिभैषज्ये कर्मणि 'या बभ्रवः' इत्यर्थसूक्तेन दशवृक्षशकलानां लाक्षाहिरण्येन वेष्टितं मणिं कृत्वा संपात्य अभिमन्त्र्य पुनः सूक्तं जपित्वा बध्नाति । तद् उक्तं कौशिकेन — 'उत्तमेन शाकलम्' ( कौसू २६,४० ) इति । पलाशः उदुम्बरः जम्बुः काम्पीलः स्रक् वङ्गः शिरीषः स्रक्तयः वरणः बिल्वः जङ्गिडः कुटकः गर्हः[1] गलावलः वेतसः शिम्बलः सिपुनः स्यन्दनः अरणिका अश्मयोक्तः तुन्युः पूतदारुरिति शान्ता वृक्षाः । एतेषां कतमेषामपि दशानां शकलैर्निर्मितः शाकलो मणिः ।

तथा सौत्रामणीयागे अनेन सूक्तेन ओषधीभिः संधीयमानां सुराम् अनुमन्त्रयेत । तद् उक्तं वैताने — "रसप्राशन्या (अ ५,२,३) 'या बभ्रवः' (अ ८,७) इत्योषधीभिः सुरां संधीयमानाम्" (वैताश्रौ ३०,६) इति ।

या ब॒भ्रवो॒ याश्च॑ शु॒क्रा रोहि॑णीरु॒त पृश्न॑यः ।
असि॑क्नीः कृ॒ष्णा ओष॑धीः सर्वा॑ अ॒च्छाव॑दामसि ॥ १ ॥

याः । ब॒भ्रवः॑ । याः । च॒ । शु॒क्राः । रोहि॑णीः । उ॒त । पृश्न॑यः ।
असि॑क्नीः । कृ॒ष्णाः । ओष॑धीः । सर्वाः॑ । अ॒च्छ॒ऽआव॑दामसि ॥ १ ॥

त्राय॑न्तामि॒मं पुरु॑षं यक्ष्मा॑द् दे॒वेषि॑तादधि॑[2] ।
यासां॒ द्यौष्पि॒ता[3] पृ॑थि॒वी मा॒ता स॑मु॒द्रो मूलं॑ वी॒रुधां॑ ब॒भूव॑ ॥ २ ॥

त्राय॑न्ताम् । इ॒मम् । पुरु॑षम् । यक्ष्मा॑त् । दे॒वऽइ॑षितात् । अधि॑ ।
यासा॑म् । द्यौः । पि॒ता । पृ॒थि॒वी । मा॒ता । स॒मु॒द्रः । मूल॑म् । वी॒रुधा॑म् । ब॒भूव॑ ॥ २ ॥

आपो॒ अग्रं॑ दि॒व्या ओष॑धयः । तास्ते॒ 'यक्ष्म॑मेनु॒स्यं॑१मङ्गा॑दङ्गादनीनशन्' ॥ ३ ॥

---

१. तु. कौसू ८,१५; वेतु. शंगा. गृह्यः.   २. देवद्वितादधि पै १६,१२,२.   ३. द्यौः पिता A,R,Dc.   ४. 'मेनुस्यं' A; 'मेनस्या' Bᵇ; 'मेनस्या१' Kᵐ; 'मेनुस्य३' D,Sᵐ,Cs, P³,M,W; °नशम् D,K,V; °नशं A,Kᵐ,R,Dc

आर्षः । अग्रम् । दिव्याः । ओषधयः ।
ताः[1] । ते । यक्ष्मम् । एनस्यम् । अज्ञातऽअज्ञात् । अनीनशन्[2] ॥ ३ ॥

प्रस्तृणती[3] स्तम्बिनीरेकशुङ्गाः प्रतन्वतीरोषधीरा वदामि ।
अंशुमतीः काण्डिनीर्या विशाखा[4] ह्वयामि ते वीरुधो वैश्वदेवीरुग्राः पुरुषजीवनीः ॥४॥

प्रऽस्तृणती: । स्तम्बिनीः । एकऽशुङ्गाः । प्रऽतन्वतीः । ओषधीः । आ । वदामि ।
अंशुऽमतीः । काण्डिनीः । याः । विऽशाखाः । ह्वयामि । ते । । वीरुधः । वैश्वऽदेवीः ।
उग्राः । पुरुषऽजीवनीः ॥ ४ ॥

यद् वः सहः सहमाना वीर्यं[5] यच्च वो बलम् ।
तेनेममस्माद् यक्ष्मात् पुरुषं [6]मुञ्चतौषधीरथो कृणोमि भेषजम् ॥ ५ ॥

यत् । वः । सहः । सहमानाः । वीर्यम् । यत् । च । वः । बलम् । तेन । इमम् । अस्मात् ।
यक्ष्मात् । पुरुषम् । मुञ्चत । ओषधीः । अथो इति । कृणोमि । भेषजम् ॥ ५ ॥

जीवलां नघारिषां[7] जीवन्तीमोषधीमहम् ।
अरुन्धतीमुन्नयन्तीं पुष्पां[8] मधुमतीमिह हुवेऽस्मा अरिष्टतातये ॥ ६ ॥

जीवलाम् । नघऽरिषाम्[9] । जीवन्तीम् । ओषधीम् । अहम् ।
अरुन्धतीम् । उत्ऽनयन्तीम् । पुष्पाम् । मधुऽमतीम् । इह । हुवे । अस्मै । अरिष्टऽतातये ॥

इहा यन्तु प्रचेतसो मेदिनीर्वचसो मम ।
यथेमं पारयामसि पुरुषं दुरितादधि ॥ ७ ॥

इह । आ । यन्तु । प्रऽचेतसः । मेदिनीः । वचसः । मम ।
यथा । इमम् । पारयामसि । पुरुषम् । दुःऽइतात् । अधि ॥ ७ ॥

अग्नेर्घासो अपां गर्भो या रोहन्ति पुनर्णवाः[10] ।
ध्रुवाः सहस्रनाम्नीर्भेषजीः सन्त्वाभृताः ॥ ८ ॥

---

१. ता P[a]. २. अनीनशम् P; अनीनशम् P[a],J,Cp. ३. णती: A,B[b],D,K,R,S[m],Cs. ४. °खा: B[b],D,R,K,K[m],Dc,Cs ५. वीर्यं A,B,B[b],D,S[m],Cs. ६. मुञ्चन्त्वोष° मे १६,१२,५. ७. नघारुषां P[a],M,E[a],O. ८. पुष्पां Dc,Cs,RW. ९. नघऽरुषाम् Bp[a],P,P[a],J; नघऽरिषाम् Cp. १०. °र्णवः S[m].

अग्नेः । घासः । अपाम् । गर्भः । याः । रोहन्ति । पुनःऽनवाः[1] ।
ध्रुवाः । सहस्रऽनाम्नीः । भेषजीः[2] । सन्तु । आऽभृताः ॥ ८ ॥

अवकोल्वा[3] उदकात्मान ओषधयः । व्यृषन्तु दुरितं तीक्ष्णशृङ्ग्यः ॥९॥
अवकाऽउल्वाः । उदकऽआत्मानः । ओषधयः । वि । ऋषन्तु । दुःऽइतम् । तीक्ष्णऽशृङ्ग्यः[4] ॥

उन्मुञ्चन्तीर्विवरुणा उग्रा या विषदूषणीः ।
अथो बलासनाशनीः कृत्यादूषणीश्च यास्ता इहा यन्त्वोषधीः ॥ १० ॥
उत्ऽमुञ्चन्तीः[5] । विऽवरुणाः[7] । उग्राः । याः । विषऽदूषणीः ।
अथो इति । बलासऽनाशनीः । कृत्याऽदूषणीः । च । याः । ताः । इह । आ । यन्तु । ओषधीः ॥१०

अपक्रीताः सहीयसीर्वीरुधो या अभिष्टुताः ।
त्रायन्तामस्मिन् ग्रामे[8] गामश्वं पुरुषं पशुम् ॥ ११ ॥
अपऽक्रीताः । सहीयसीः । वीरुधः । याः । अभिऽस्तुताः ।
त्रायन्ताम् । अस्मिन् । ग्रामे । गाम् । अश्वम् । पुरुषम् । पशुम् ॥ ११ ॥

मधुमन्मूलं मधुमदग्रमासां मधुमन्मध्यं वीरुधां बभूव[9] ।
मधुमत् पर्णं मधुमत् पुष्पमासां मधोः संभक्ता[10] अमृतस्य भक्षो घृतमन्नं[11]
दुहतां[12] गोपुरोगवम् ॥ १२ ॥
मधुऽमत् । मूलम् । मधुऽमत् । अग्रम् । आसाम् । मधुऽमत् । मध्यम् । वीरुधाम् । बभूव[9] ।
मधुऽमत् । पर्णम् । मधुऽमत् । पुष्पम् । आसाम् । मधोः । सम्ऽभक्ताः । अमृतस्य । भक्षः ।
घृतम् । अन्नम् । दुहताम् । गोऽपुरोगवम् ॥ १२ ॥

यावतीः कियतीश्चेमाः पृथिव्यामध्योषधीः[13] ।
ता मा[14] सहस्रपर्ण्यो[15] मृत्योर्मुञ्चन्त्वंहसः[16] ॥ १३ ॥

---

१. °नवः P. २. भेषजाः P². ३. °कोल्वा पै १६,१२,९. ४. °शृङ्ग्यः P. ५. उन्मुञ्चतीः K,Km; उन्मुञ्चंतीः > उन्मुञ्चतीः Dc. ६. °मुंचतीः P. ७. °वरुणः P. ८. °न्तामस्माकं पै १६,१३,१. ९. व. R², P², D²; वव. A,B,Bb, D,K,Km,R,Sm,V,Cs,P,J,Cp,WM,RW. बभूवं; बलेन ? पै १६,१३,२. १०. संभृता पै. ११. घृतमद् पै. १२. दुहते पै. १३. °ध्योषधीः A,B,Bb,D,K,Km,R,Sm,V, Dc,Cs,WM. १४. नस् पै १६,१३,३. १५. °पर्ण्यो WM. १६. मुंन्चत्वंहसः A,Bb.

यावतीः । कियतीः । च । इमाः । पृथिव्याम् । अधि । ओषधीः[1] ।
ताः । मा । सहस्रऽपर्ण्यः[2] । मृत्योः । मुञ्चन्तु । अंहसः ॥ १३ ॥

वैयाघ्रो मणिर्वीरुधां त्रायमाणोऽभिशस्तिपाः ।
अमीवाः सर्वा रक्षांस्यप हन्त्वधि दूरमस्मत् ॥ १४ ॥

वैयाघ्रः । मणिः । वीरुधाम् । त्रायमाणः । अभिशस्तिऽपाः ।
अमीवाः । सर्वाः । रक्षांसि । अप । हन्तु । अधि । दूरम् । अस्मत् ॥ १४ ॥

सिंहस्येव स्तनथोः[3] सं विजन्तेऽग्नेरिव[4] विजन्त[5] आभृताभ्यः ।
गवां यक्ष्मः पुरुषाणां वीरुद्भिरतिनुत्तो[5] नाव्या एतु स्रोत्याः ॥ १५॥

सिंहस्यऽइव । स्तनथोः । सम् । विजन्ते । अग्नेःऽइव । विजन्ते । आऽभृताभ्यः ।
गवाम् । यक्ष्मः । पुरुषाणाम् । वीरुत्ऽभिः । अतिऽनुत्तः । नाव्याः । एतु । स्रोत्याः ॥ १५॥

मुमुचाना ओषधयोऽग्नेर्वैश्वानरादधि ।
भूमिं[6] संतन्वतीरित यासां राजा वनस्पतिः ॥ १६ ॥

मुमुचानाः । ओषधयः । अग्नेः । वैश्वानरात् । अधि ।
भूमिम् । सम्ऽतन्वतीः । इत । यासाम् । राजा । वनस्पतिः ॥ १६ ॥

या रोहन्त्याङ्गिरसीः पर्वतेषु समेषु च ।
ता नः पयस्वतीः शिवा ओषधीः सन्तु शं हृदे ॥ १७ ॥

याः । रोहन्ति । आङ्गिरसीः । पर्वतेषु । समेषु । च ।
ताः । नः । पयस्वतीः । शिवाः । ओषधीः । सन्तु । शम् । हृदे ॥ १७ ॥

याश्चाहं वेद वीरुधो याश्च पश्यामि चक्षुषा ।
अज्ञाता जानीमश्च या यासु विद्म च संभृतम् ॥ १८ ॥

याः । च । अहम् । वेद । वीरुधः । याः । च । पश्यामि । चक्षुषा ।
अज्ञाताः । जानीमः । च । याः । यासु । विद्म । च । सम्ऽभृतम् ॥ १८ ॥

---

१. ओषधीः P,P[2],J,Cp,WM. २. °पर्ण्यः P,J,WM. ३. ओषधीनाम् ! अग्ने° पै १६,१३,५. ४. विजन्ते S[m]. ५. °द्भिर्जनभ्यो ? पं. ६. भूमिः R.

सर्वाः[1] समग्रा ओषधीर्बोधन्तु वचसो मम ।
यथेमं पारयामसि पुरुषं दुरितादधि ॥ १९ ॥

सर्वाः । सम्ऽअग्राः । ओषधीः । बोधन्तु । वचसः । मम ।
यथा । इमम् । पारयामसि । पुरुषम् । दुःऽइतात् । अधि ॥ १९ ॥

अश्वत्थो दर्भो वीरुधां सोमो राजाऽमृतं हविः ।
व्रीहिर्यवश्च भेषजौ दिवस्पुत्रावमर्त्यौ ॥ २० ॥

अश्वत्थः । दर्भः । वीरुधाम् । सोमः । राजा । अमृतम् । हविः ।
व्रीहिः । यवः । च । भेषजौ । दिवः । पुत्रौ । अमर्त्यौ ॥ २० ॥

उज्जिहीध्वे स्तनयत्यभिक्रन्दत्योषधीः ।
यदा वः पृश्निमातरः पर्जन्यो रेतसाऽवति ॥२१॥

उत् । जिहीध्वे । स्तनयति । अभिऽक्रन्दति । ओषधीः[2] ।
यदा । वः । पृश्निऽमातरः । पर्जन्यः । रेतसा । अवति ॥ २१ ॥

तस्यामृतस्येमं बलं पुरुषं पाययामसि[3] ।
अथो कृणोमि भेषजं यथाऽसच्छतहायनः ॥२२॥

तस्य । अमृतस्य । इमम् । बलम् । पुरुषम् । पाययामसि ।
अथो इति । कृणोमि । भेषजम् । यथा । असत् । शतऽहायनः ॥ २२ ॥

वराहो वेद[4] वीरुधं नकुलो वेद[5] भेषजीम् ।
सर्पा गन्धर्वा या विदुस्ता 'अस्मा अवसे हुवे' ॥ २३ ॥

वराहः । वेद । वीरुधम् । नकुलः । वेद । भेषजीम् ।
सर्पाः । गन्धर्वाः । याः । विदुः । ताः । अस्मै । अवसे । हुवे ॥ २३ ॥

याः सुपर्णा आङ्गिरसीर्दिव्या या रघटो विदुः ।

---

१. सर्वा Bᵇ,D,Cs.　२. ओषधीः P.　३. पारयामसि W,O; फलयामसि पै १६,१४,१.　४. वेद>वेदं B.　५. वेद Bᵇ; वेद>वेदं B.
६. ददायन्त्योषधीः पै १६,१४,२.

वयांसि हंसा या विदुर्याश्च सर्वे पतत्रिणः ।
मृगा या विदुरोषधीस्ता अस्मा अवसे हुवे ॥ २४ ॥

याः । सुऽपर्णाः । आङ्गिरसीः । दिव्याः । याः । रघटः । विदुः ।
वयांसि । हंसाः । याः । विदुः । याः । च । सर्वे । पतत्रिणः ।
मृगाः । याः । विदुः । ओषधीः । ताः । अस्मै । अवसे । हुवे ॥ २४ ॥

यावतीनामोषधीनां गावः प्राश्नन्त्यघ्न्या यावतीनामजावयः ।
[1]तावतीस्तुभ्यमोषधीः शर्म यच्छन्त्वाभृताः[1] ॥ २५ ॥

यावतीनाम् । ओषधीनाम् । गावः । प्रऽअश्नन्ति । अघ्न्याः । यावतीनाम् । अजऽअवयः[2] ।
तावतीः । तुभ्यम् । ओषधीः । शर्म । यच्छन्तु । आऽभृताः ॥ २५ ॥

यावतीषु मनुष्या भेषजं भिषजो विदुः ।
[3]तावतीर्विश्वभेषजीरा भरामि त्वामभि[3] ॥ २६ ॥

यावतीषु । मनुष्याः । भेषजम् । भिषजः । विदुः ।
तावतीः । विश्वऽभेषजीः । आ । भरामि । त्वाम् । अभि ॥ २६ ॥

पुष्पवतीः प्रसूमतीः[4] फलिनीरफला उत ।
[5]संमातर इव[5] दुह्रामस्मा अरिष्टतातये ॥ २७ ॥

पुष्पऽवतीः । प्रसूऽमतीः । फलिनीः । अफलाः । उत ।
संमातरःऽइव[6] । दुह्राम् । अस्मै । अरिष्टऽतातये ॥ २७ ॥

उत त्वाहार्षं पञ्चशलादथो[7] दशशलादुत ।
अथो[8] यमस्य पड्वीशाद्[9] [10]विश्वस्माद् देवकिल्बिषात्[10] ॥२८॥[11]

उत । त्वा । अहार्षम् । पञ्चऽशलात् । अथो इति । दशऽशलात् । उत ।
अथो इति । यमस्य । पड्वीशात्[12] । विश्वस्मात् । देवऽकिल्बिषात् ॥ २८ ॥

इति चतुर्थेऽनुवाके प्रथमं सूक्तम् ।

---

१. °तीर्विश्वभेषजीरा भरामि त्वामभि पै १६,१४,४. २. पृ ९६५ टि २ द्र. ३. °तीस्तुभ्यमाभृताश्शर्म यच्छन्त्वोषधीः पै १६,१४,५. ४. प्रसूवरीः ऋ १०,९७,३ मा १२,७७ म २,७,१३; प्रसूवतीः तै ४,२,६,१. ५. संमातर° D,R. ६. सम् । मातरः॰> संमातरः॰ Cp. ७. °लाद् उत त्वा पै १६,१४,७. ८. उत त्वा पै. ९. पड्विं° V; पड्वीं° Dc, पड्वीशात् Cp, R,W ऋ. पै. † सर्वस्माद् १०. ओषधीभिरपीपरम् पै. ऋ १०,९७,१६. ११. पृ ७९१ टि. ४-७ द्र. १२. पड्विंशात् P,P².

'इन्द्रो मन्थतु' इति अर्थसूक्तस्य शत्रुक्षयशत्रुभयनाशनशत्रुजयस्वकीयबल-वर्धनकर्मसु विनियोगः। तानि कर्माणि सेनाकर्माणि नाम भवन्ति। तत्र सेनाग्निसिद्ध्यर्थं 'पूतिरज्जुः' (२) इत्यर्धर्चेन अग्निपातदेशे जीर्णां रज्जुम् अवधाय अश्वत्थवधकयोर्नाम पिप्पलकरिमालकयोः काष्ठयोः 'इन्द्रो मन्थतु' इति ऋचा अग्निं मन्थति। धूमं दृष्ट्वा अग्निपदरहितेनार्धर्चेन अनुमन्त्रयते। 'अग्नि पराहृत्य' (२) इत्यादिनार्धर्चेन धूमपदरहितेन अग्निम् अनुमन्त्रयते। तादृशेऽग्नौ सेनाकर्माणि स्युः। तान्येवम्—

'इन्द्रो मन्थतु' इति सूक्तेन प्रत्यृचम् अश्वत्थसमिध आदधाति। शत्रुक्षयो भवति।

तथा अनेन सूक्तेन प्रत्यृचं करिमालकसमिध आदधाति।

तथा अनेन सूक्तेन प्रत्यृचम् एरण्डसमिध आदधाति।

तथा अनेन सूक्तेन प्रत्यृचं पलाशसमिध आदधाति। तिर्णिसमिध इति केशवः।

तथा अनेन सूक्तेन प्रत्यृचं खदिरसमिध आदधाति।

तथा अनेन सूक्तेन प्रत्यृचं शरसमिध आदधाति। शत्रुभयं न भवति। कर्मविकल्पः। सपत्नक्षयणी समाप्ता।

तथा अभ्यातानान्तं कृत्वा अनेन सूक्तेन भाङ्गपाशान् संपात्याभिमन्त्र्य सेनाक्रमेषु वपति। सर्वत्र क्रुद्धेनाभिमन्त्रणं पाशादिषु। तत उत्तरतन्त्रम्।

तथा तन्त्रं कृत्वा अनेन सूक्तेन मौञ्जान् पाशान् संपात्याऽभिमन्त्र्य सेनाक्रमेषु वपति। तन्त्रं च।

तथा अनेन सूक्तेन बाधकदण्डानि आश्वत्थानि कूटानि संपात्याऽभिमन्त्र्य सेनाक्रमेषु वपति।

तथा अनेन सूक्तेन बाधकदण्डानि भाङ्गानि जालानि संपात्याऽभिमन्त्र्य सेनाक्रमेषु वपति। समाप्तानि जयकर्माणि।

उक्तेषु सर्वकर्मसु अङ्गभूतानि वक्ष्यमाणानि त्रीणि कर्माणि भवन्ति। 'स्वाहैभ्यः' (२४) इति पदद्वयेन स्वमित्रबलवृद्ध्यर्थम् आज्यं जुहोति दक्षिणहस्तेन बाधककाष्ठ-प्रज्वालितेऽग्नौ। 'दुराहामीभ्यः' (२४) इति पदद्वयेन परबलविनाशार्थं सव्येन हस्तेन इङ्गिडं जुहोत्युक्ताग्नौ। कर्माग्नेरुत्तरस्मिन् देशे रक्तपिप्पलशाखां भूम्युदरे ऊर्ध्वां कृत्वा नीललोहितवर्णाभ्यां सूत्राभ्यां सर्वां वेष्टयित्वा 'नीललोहितनामूनभ्यवतनोमि' (२४) इत्यनेन दक्षिणा दूरे प्रकर्षेण त्याजयति।

सेनाकर्माणि अरण्ये कार्याणि न ग्रामे। युद्धप्रदेशे वा यथाप्रसङ्गम्।

तद् उक्तं कौशिकेन—"'इन्द्रो मन्थतु' इति। 'पूतिरज्जुः' (२) इति पूतिरज्जुमवधाय। 'अग्निम्' (२) इत्यग्निम्। तस्मिन्नरण्ये अश्वत्थबधकयोरग्निं मन्थति। 'धूमम्' (२) इति धूममनुमन्त्रयते। उक्ताः पाशाः। आश्वत्थानि कूटानि भाङ्गानि सपत्नक्षयणीरादधात्यश्वत्थबधकताजद्भङ्गाह्वखदिरशराणाम्।

जालानि । बाधकदण्डानि । 'स्वाहेभ्यः' (२४) इति मित्रेभ्यो जुहोति । 'दुराहामीभ्यः' (२४) इति सव्येनेङ्गिडममित्रेभ्यो बाधके । उत्तरतोऽभ्रेर्लोहिताश्वत्थस्य शाखां निहत्य नीललोहिताभ्यां सूत्राभ्यां परितत्य 'नीललोहितेनामून्' (२४) इति दक्षिणा प्रहापयति'[1] (कौसू १६,९-२०) इति। ताजद्भङ्ग एरण्डः । कूटं निपादानां प्राणिबन्धनम् । आह्वः पलाश इति दारिलः। तिर्णिरिति केशवः । वृक्षविशेषपर्यायार्थे आह्वपदं सूत्रेऽपपाठो[2] न चेत्, प्राक्तनेन प्रमादेन भवितव्यम् । परुष इत्येव नाम्ना भवितव्यं सूक्ते (मं ४) परुषाह्वपददर्शनात्[1]। परुषाह्वः परुष इति आह्वा यस्य स इति विग्रहः[2]।

इन्द्रो॑ मन्थतु[3] मन्थि॑ता श॒क्रः शूर॑ः पुरं॒द॒रः ।
यथा॑ ह॒नाम॒ सेना॑[4] अ॒मित्रा॑णां सहस्र॒शः ॥ १ ॥

इन्द्र॑ः । मन्थ॒तु । मन्थि॑ता[5] । श॒क्रः । शूर॑ः । पु॒रम्ऽद॒रः ।
यथा॑ । ह॒नाम॑ । सेना॑ः । अ॒मित्रा॑णाम् । स॒ह॒स्र॒शः ॥ १ ॥

पू॒ति॒र॒ज्जु॒रु॑प॒ध्मानी॒ पूतिं॒ सेनां॑ कृणोत्व॒मूम्[6] ।
धू॒मम॒ग्निं प॑रा॒दृश्या॒ऽमित्रा॑ हृ॒त्स्वा द॑धतां[7] भ॒यम् ॥ २ ॥

पू॒ति॒ऽर॒ज्जुः । उ॒प॒ऽध्मानी॑ । पूति॑म् । सेना॑म् । कृ॒णो॒तु॒ । अ॒मूम् ।
धू॒मम् । अ॒ग्निम् । प॒रा॒ऽदृश्य॑ । अ॒मित्रा॑ः । हृ॒त्ऽसु । आ । द॒ध॒ता॒म् । भ॒यम् ॥ २ ॥

अ॒मून॑श्वत्थ निः[8] शृ॑णीहि[9] खादा॒मून् ख॑दिरा॒जि॒रम्[10] ।
[11]ता॒जद्भ॑ङ्ग इव भज्यन्तां॒ हन्त्वे॑नान् वध॑को व॒धैः[11] ॥ ३ ॥

अ॒मून् । अ॒श्व॒त्थ॒ । निः । शृ॒णी॒हि॒ । खाद॑ । अ॒मून् । [12]ख॒दि॒र॒ । अ॒जि॒रम्[12] ।
ता॒जद्भ॑ङ्गःऽइव । भ॒ज्य॒न्ता॒म् । हन्तु॑ । ए॒ना॒न्[13] । वध॑कः । व॒धैः ॥ ३ ॥

[14]प॒रु॒षान॒मून् प॑रुषा॒ह्वः कृ॑णोतु॒ हन्त्वे॑नान्[15] वध॑को व॒धैः ।
क्षि॒प्रं श॒र इ॑व भज्यन्तां बृहज्जा॒लेन॒ संदि॑ताः[16] ॥ ४ ॥

---

१. प्रहावयति Bl. २. वैतु. वैरा १,१५५५ J. ३. मन्थन्तु K,Km.
४. सेना पै १६,२९,१. ५. मन्थिता P. ६ °त्वमुं Km,Sm; °त्विमाम् पै १६,२९,२.
७. दंदतां K ८. नि D,K,Km,Cs, पं १६,२९,४; निः > नि B. ९. मृणीहि.
१०. °राजिरम् A,B,D,R,Sm,V,Dc,Cs. ११. तादित्त ? भङ्गैव भज्यन्तां वृहज्जालेन संधिताः पै. † वैरा. १,१४७२ c d. १२. खदिरऽअजिरम् P,P8,J,Cp. १३. एनाम् P.
१४. परु° K. १५. हन्त्वेनान् पै १६,२९,३. १६. संचिताः पै.

पुरुपान् । अमून् । पुरुषऽआह्वः । कृणोतु । हन्तु । एनान् । वधकः । वधैः ।
क्षिप्रम् । शरःऽइव । भज्यन्ताम् । बृहत्ऽजालेन । सम्ऽदिताः ॥ ४ ॥

अन्तरिक्षं जालमासीज्जालदण्डा दिशो मही: ।
तेनाभिधाय 'दस्यूनां शक्रः सेनामपावपत्' ॥ ५ ॥

अन्तरिक्षम् । जालम् । आसीत् । जालऽदण्डाः । दिशः । महीः ।
तेन । अभिऽधाय[2] । दस्यूनाम् । शक्रः । सेनाम् । अप । अवपत् ॥ ५ ॥

बृहद्धि जालं बृहतः शक्रस्य वाजिनीवतः[3] ।
तेन शत्रूनभि 'सर्वान् न्युब्ज' यथा न 'मुच्यातै' कतमश्चनैषाम् ॥ ६ ॥

बृहत् । हि । जालम् । बृहतः । शक्रस्य । वाजिनीऽवतः ।
तेन । शत्रून् । अभि । सर्वान् । नि । उब्ज । यथा । न । मुच्यातै । कतमः । चन । एषाम् ॥

बृहत् ते जालं बृहत इन्द्र शूर सहस्रार्घस्य शतवीर्यस्य ।
तेन शतं सहस्रमयुतं न्यर्बुदं 'जघान शक्रो' दस्यूनामभिधाय 'सेनया' ॥७॥

बृहत् । ते । जालम् । बृहतः । इन्द्र । शूर । सहस्रऽअर्घस्य । शतऽवीर्यस्य । तेन । शतम् ।
सहस्रम् । अयुतम् । निऽअर्बुदम् । जघान । शक्रः । दस्यूनाम् । अभिऽधाय । सेनया ॥

अयं लोको जालमासीच्छक्रस्य महतो महान् ।
तेनाहमिन्द्रजालेनामूंस्तमसाभि दधामि सर्वान् ॥ ८ ॥

अयम् । लोकः । जालम् । आसीत् । शक्रस्य । महतः । महान् ।
तेन । अहम् । इन्द्रऽजालेन । अमून् । तमसा । अभि । दधामि । सर्वान् ॥ ८ ॥

सेदिरुग्रा 'व्यृद्धिरार्तिश्चानपवाचना' ।
श्रमस्तन्द्रीश्च मोहश्च 'तैरमून्' अभि दधामि सर्वान् ॥ ९ ॥

---

१. सेना इन्द्रो दस्यूनपा° पै १६,२९,५.　२. अभिऽधाय P.　३. रोचनावतः पै १६,२९,७.　४. सर्वान्युं° > सर्वान्युं° B; सर्वान्युं° A,B[b],D,K,K[m],R,S[m],Dc.Cs.　५. मुच्यातै RW.　६. जघानेन्द्रो पै.　७. सेनाम् पै.　८. विवृतिर् ? भर्तिन् पादपवाचिराम् ? पै १६,२९,९.　९. तेनामू° पै.

सेदिः । उग्रा । विऽऋद्धिः[1] । आर्तिः । च । अनपऽवाचना ।
श्रमः । तन्द्रीः । च । मोहः । च । तैः । अमून् । अभि । दधामि । सर्वान् ॥ ९ ॥

मृत्यवेऽमून् प्र यच्छामि मृत्युपाशैरमी सिताः ।
मृत्योर्ये अघला दूतास्तेभ्य एनान् प्रति नयामि बद्ध्वा[2] ॥ १० ॥

मृत्यवे । अमून् । प्र । यच्छामि । मृत्युऽपाशैः । अमी इति । सिताः ।
मृत्योः । ये । अघलाः । दूताः । तेभ्यः । एनान् । प्रति । नयामि । बद्ध्वा[3] ॥ १० ॥

नयतामून् मृत्युदूता यमदूता अपोम्भत ।
परःसहस्रा हन्यन्तां तृणेढ्वेनान् मत्यं भवस्य ॥ ११ ॥

नयत । अमून् । मृत्युऽदूताः । यमऽदूताः । अप । उम्भत ।
परःऽसहस्राः । हन्यन्ताम् । तृणेढु । एनान् । मत्यम् । भवस्य ॥ ११ ॥

साध्या एकं जालदण्डमुद्यत्य यन्त्योजसा ।
रुद्रा एकं[4] वसव[5] एकमादित्यैरेक उद्यतः ॥ १२ ॥

साध्याः । एकम् । जालऽदण्डम् । उत्ऽयत्य । यन्ति । ओजसा ।
रुद्राः । एकम् । वसवः । एकम् । आदित्यैः । एकः । उत्ऽयतः ॥ १२ ॥

विश्वे देवा उपरिष्टादुब्जन्तो यन्त्वोजसा[6] ।
मध्येन घ्नन्तो यन्तु सेनामाङ्गिरसो महीम्[7] ॥ १३ ॥

विश्वे । देवाः । उपरिष्टात् । उब्जन्तः । यन्तु । ओजसा ।
मध्येन । घ्नन्तः । यन्तु । सेनाम् । अङ्गिरसः । महीम् ॥ १३ ॥

वनस्पतीन् वानस्पत्यानोषधीरुत वीरुधः ।
द्विपाच्चतुष्पादिष्णामि यथा सेनाममूं हनन्[8] ॥ १४ ॥

वनस्पतीन् । वानस्पत्यान् । ओषधीः । उत । वीरुधः[9] ।
द्विऽपात्[10] । चतुःऽपात् । इष्णामि । यथा । सेनाम् । अमूम्[11] । हनन् ॥ १४ ॥

---

१. °द्धि P. २. बध्वा WM.; यद्वान् १६,२९,१०. ३. बध्वा P,P³,J,WM. ४. द्वितीयं पै १६,३०,२. ५. तृतीयमादि° पै. ६. यन्त्योजसा K. पै १६,३०,३ [मूको.] ७. वधः पै. ८. हवाम् पै १६,३०,४. ९. वीरुधां P. १०. द्विऽपत् Bp. ११. अमून् P.

गन्धर्वाप्सरसः सर्पान् देवान् पुण्यजनान् पितॄन् ।
दृष्टानदृष्टानिष्णामि यथा सेनाममूं हनन्[1] ॥ १५ ॥

गन्धर्वऽअप्सरसः । सर्पान् । देवान् । पुण्यऽजनान् । पितॄन् ।
दृष्टान् । अदृष्टान् । इष्णामि । यथा । सेनाम् । अमूम् । हनन् ॥ १५ ॥

इम उप्ता[2] मृत्युपाशा यानाक्रम्य न मुच्यसे ।
अमुष्या हन्तु सेनाया इदं कूटं सहस्रशः ॥ १६ ॥

इमे । उप्ताः । मृत्युऽपाशाः । यान् । आऽक्रम्य[3] । न । मुच्यसे ।
अमुष्याः । हन्तु । सेनायाः । इदम् । कूटम् । सहस्रऽशः ॥ १६ ॥

घर्मः समिद्धो अग्निनायं होमः सहस्रहः[4] ।
भवश्च[5] पृश्निबाहुश्च शर्व[6] सेनाममूं हतम् ॥ १७ ॥

घर्मः । सम्ऽइद्धः । अग्निना । अयम् । होमः । सहस्रऽहः ।
भवः । च । पृश्निऽबाहुः । च । शर्व[7] । सेनाम् । अमूम् । हतम् ॥ १७ ॥

मृत्योराषमा[8] पद्यन्तां[9] क्षुधं सेदिं वधं भयम् ।
इन्द्रश्चाक्षुजालाभ्यां[10] शर्व[11] सेनाममूं हतम् ॥ १८ ॥

मृत्योः । आषम् । आ । पद्यन्ताम् । क्षुधम् । सेदिम् । वधम् । भयम् ।
इन्द्रः । च । अक्षुऽजालाभ्याम् । शर्व[12] । सेनाम् । अमूम् । हतम् ॥ १८ ॥

पराजिताः प्र त्रसतामित्रा नुत्ता[13] धावत ब्रह्मणा ।
बृहस्पतिप्रणुत्तानां[14] मामीषां मोचि कश्चन ॥ १९ ॥

पराऽजिताः । प्र । त्रसत । अमित्राः । नुत्ताः[15] । धावत । ब्रह्मणा ।
बृहस्पतिऽप्रनुत्तानाम् । मा । अमीषाम् । मोचि । कः । चन ॥ १९ ॥

---

१. हुत पै १६,२०,५. २. युक्ता पै १६,२०,७. ३. आक्रमस्यं P. ४. सहस्रशः पै १६,२०,८ [मूको.]. ५. भवंश्च मूको. (तु. शंपा. WM.). ६. मर्धं A,R. ७. सर्वे P,P², J. ८. °रोपमा P³,R²,RW. ९. पंचन्तां R,Dc. १०. °क्षुमाजा° पै १६,२०,९. ११. सर्वं Bᵇ,Cs,W.O.T; शर्वं > सर्वं A १२. सर्वं P I-², J. D¹. १३. सिता पै १६,२०,९. १४ बृहस्पतिः प्रणु° R.Sᵐ, पै. १५. नुचा P. P¹,J,Cp.

अव॑ पद्यन्तामेषामायु॑धानि॒ मा श॑कन्[1] प्रति॒धामिषु॑म् ।
अथै॑षां ब॒हु बिभ्य॑तामिष॑वो घ्नन्तु॒ मर्म॑णि ॥ २० ॥

अव॑ । प॒द्य॒न्ता॒म् । ए॒षा॒म् । आयु॑धानि । मा । श॒क॒न् । प्र॒ति॒ऽधाम् । इषु॑म् ।
अथ॑ । ए॒षा॒म् । ब॒हु । बिभ्य॑ताम् । इष॑वः । घ्न॒न्तु॒ । मर्म॑णि ॥ २० ॥

सं क्रो॑शतामेना॒न् द्यावा॑पृथि॒वी सम॒न्तरि॑क्षं स॒ह दे॒वता॑भिः ।
मा ज्ञा॒तारं॒ मा प्र॑ति॒ष्ठां वि॑दन्त मि॒थो वि॑घ्ना॒ना उप॑ यन्तु[2] मृ॒त्युम् ॥२१॥

सम् । क्रो॒श॒ता॒म् । ए॒ना॒न् । द्यावा॑पृथि॒वी इति॑ । सम् । अ॒न्तरि॑क्षम् । स॒ह । दे॒वता॑भिः ।
मा । ज्ञा॒तार॑म् । मा । प्र॒ति॒ऽस्थाम् । वि॒द॒न्त॒ । मि॒थः । वि॒ऽघ्ना॒नाः । उप॑ । य॒न्तु॒ । मृ॒त्युम् ॥२१॥

दिश॒श्चत॑स्रोऽश्वत॒र्यो॑[3] देवर॒थस्य॑ पु॒रोडाशाः॑[4] श॒फा अ॒न्तरि॑क्षमु॒द्धिः ।
द्यावा॑पृथि॒वी[5] पक्ष॑सी ऋ॒तवो॒ऽभीश॑वो॒ऽन्तर्दे॒शाः किंक॒रा वाक् परि॑रथ्यम् ॥२२॥

दिशः॑ । चत॑स्रः । अ॒श्व॒त॒र्यः॑ । दे॒व॒ऽर॒थस्य॑ । पु॒रो॒डाशाः॑ । श॒फाः[6] । अ॒न्तरि॑क्षम् । उ॒द्धिः ।
द्यावा॑पृथि॒वी इति॑ । पक्ष॑सी इति॑ । ऋ॒तवः॑ । अ॒भीश॑वः[7] । अ॒न्तः॒ऽदे॒शाः । कि॒म्ऽक॒राः[8] । वाक् ।
परि॑ऽरथ्यम् ॥ २२ ॥

सं॒व॒त्स॒रो रथः॑ परिवत्स॒रो र॑थोप॒स्थो वि॒राडीषा॒ग्नी र॑थमु॒खम् ।
इन्द्रः॑ स॒व्य॒ष्ठाश्च॒न्द्रमाः॒ सार॑थिः ॥ २३ ॥

स॒म्ऽव॒त्स॒रः । रथः॑ । प॒रि॒ऽव॒त्स॒रः । र॒थ॒ऽउ॒प॒स्थः । वि॒ऽराट् । ईषा॑ । अ॒ग्निः । र॒थ॒ऽमु॒खम् ।
इन्द्रः॑ । स॒व्य॒ऽस्थाः । च॒न्द्रमाः॑ । सार॑थिः ॥ २३ ॥

इ॒तो ज॑येतो॒ वि ज॑य॒[9] सं ज॑य॒ जय॒ स्वाहा॑ ।
इ॒मे ज॑यन्तु॒ परा॒मी ज॑यन्तां॒ स्वाहै॑भ्यो दु॒राहा॒ऽमीभ्यः॑ ।
नी॒ल॒लो॒हि॒तेना॒मून॒भ्यव॑तनोमि ॥ २४ ॥

इ॒तः । ज॒य॒ । इ॒तः । वि । ज॒य॒ । सम् । ज॒य॒ । जय॑ । स्वाहा॑ ।

---

१. लिपन् पै १६,३०,१०. २. यन्ति पै १६,३०,११. ३. °श्चो श्वत° A,B[k],D,R,Cs. ४. °शा B. ५. °पृथिवी D,S[m],V. ६. शफः P. ७. अभीशवः P[s]. ८. किम्ऽकुराः P ९. जयस्व पै १६,३१,८.

इमे । जयन्तु । परा । अमी इति । जयन्ताम् । स्वाहा । एभ्यः[1] । दुराहा । अमीभ्यः ।
नीलऽलोहितेन । अमून् । अभिऽअवतनोमि ॥ २४ ॥

इति चतुर्थेऽनुवाके द्वितीयं सूक्तम् ।

इति चतुर्थोऽनुवाकः ।

'कुतस्तौ' इति सूक्ते विराडादिविषयः संवादो विचारश्च ।

'कुतस्तौ', 'विराड् वै' ( अ ८,१० ) इति सूक्ताभ्यां जपं करोति स्वर्गकाम इति विनियोगमाला ।

कुतस्तौ जातौ कतमः सो अर्धः कस्माल्लोकात्[2] कतमस्याः[3] पृथिव्याः ।
वत्सौ विराजः सलिलादुदैतां तौ त्वा पृच्छामि कतरेण दुग्धा ॥ १ ॥

कुतः । तौ । जातौ । कतमः । सः । अर्धः । कस्मात् । लोकात् । कतमस्याः । पृथिव्याः ।
वत्सौ । विऽराजः[4] । सलिलात् । उत् । ऐताम् । तौ । त्वा । पृच्छामि । कतरेण । दुग्धा ॥१॥

यो अक्रन्दयत् सलिलं महित्वा योनिं कृत्वा त्रिभुजं शयानः ।
वत्सः कामदुघो विराजः स गुहा चक्रे तन्वः पराचैः ॥ २ ॥

यः । अक्रन्दयत् । सलिलम् । महिऽत्वा । योनिम् । कृत्वा । त्रिऽभुजम् । शयानः ।
वत्सः । कामऽदुघः । विऽराजः । सः । गुहा । चक्रे । तन्वः । पराचैः ॥ २ ॥

यानि त्रीणि[5] बृहन्ति येषां चतुर्थं वियुनक्ति[6] वाचम् ।
ब्रह्मैनद् विद्यात् तपसा विपश्चिद् यस्मिन्नेकं युज्यते यस्मिन्नेकम् ॥ ३ ॥

यानि । त्रीणि । बृहन्ति । येषाम् । चतुर्थम् । विऽयुनक्ति । वाचम् ।
ब्रह्म । एनत् । विद्यात्[7] । तपसा । विपःऽचित् । यस्मिन् । एकम् । युज्यते । यस्मिन् । एकम् ॥३॥

बृहतः परि सामानि षष्ठात् पञ्चाधि निर्मिता ।
बृहद् बृहत्या निर्मितं कुतोऽधि बृहती मिता ॥ ४ ॥

बृहतः । परि । सामानि । षष्ठात् । पञ्च । अधि । निःऽमिता ।
बृहत् । बृहत्याः । निःऽमितम् । कुतः । अधि । बृहती । मिता ॥ ४ ॥

---

१. एभ्यः P.  २. कस्माल्लो° B^h,D,K,S^m,Cs; कस्माल्लो° सात्[२].  ३. कतरस्याः पै १६,१८,१ [मूको.].  ४. विराजः P[२].  ५. चत्वारि पै १६,१८,२.
६. °नक्ति पै.  ७. विद्यात् P.

बृ॒ह॒ती परि॒ मात्रा॑या मा॒तुर्मात्राधि॒ निर्मि॑ता ।
मा॒या ह॑[1] ज॒ज्ञे मा॒याया॑ मा॒याया॒ मात॑ली॒ परि॑ ॥ ५ ॥

बृ॒ह॒ती । परि॑ । मात्रा॑याः । मा॒तुः । मात्रा॑ । अधि॑ । निः॒ऽमि॑ता ।
मा॒या[2] । ह॒ । ज॒ज्ञे । मा॒याया॑ः । मा॒याया॑ः । मात॑ली । परि॑ ॥ ५ ॥

वै॒श्वा॒न॒रस्य॑ प्रति॒मोपरि॒ द्यौर्याव॑द् रोद॑सी विबबा॒धे अ॒ग्निः ।
तत॑ः ष॒ष्ठादा॒मुतो॑ य॒न्ति॒[3] स्तोमा॒ उदि॒तो य॒न्त्य॒भि ष॒ष्ठमह्नः॑ ॥ ६ ॥

वै॒श्वा॒न॒रस्य॑ । प्र॒ति॒ऽमा । उ॒परि॑ । द्यौः । याव॑त् । रोद॑सी॒ इति॑ । वि॒ऽब॒बा॒धे । अ॒ग्निः ।
तत॑ः । ष॒ष्ठात् । आ । अ॒मुत॑ः । य॒न्ति॒ । स्तोमा॑ः । उत् । इ॒तः । य॒न्ति॒ । अ॒भि । ष॒ष्ठम् । अह्नः॑ ॥

[4]पद् त्वा॑[4] पृच्छामि॒ ऋष॑यः कश्यपे॒मे[5] त्वं हि यु॒क्तं यु॑यु॒क्षे योग्यं॑ च ।
वि॒राज॑माहु॒र्ब्रह्म॑णः पि॒तरं॒ तां नो॒ वि [6]धे॑हि यति॒धा[6] सखि॑भ्यः ॥ ७ ॥

पद् । त्वा॒ । पृ॒च्छा॒मि॒ । ऋष॑यः । क॒श्य॒प॒ । इ॒मे । त्वम् । हि । यु॒क्तम् । यु॒यु॒क्षे । योग्य॑म् । च॒ ।
वि॒ऽराज॑म् । आ॒हुः । ब्रह्म॑णः । पि॒तर॑म् । ताम् । नः॒ । वि॒ । धे॒हि॒ । य॒ति॒ऽधा । सखि॑ऽभ्यः ॥ ७ ॥

यां प्र॒च्युता॒मनु॑ य॒ज्ञाः प्र॒च्यव॑न्त[7] उप॒तिष्ठ॑न्त उप॒तिष्ठ॑मानाम् ।
यस्या॑ व्र॒ते प्र॑स॒वे [8]य॒क्षमेज॑ति सा॒[9] वि॒राड्ऋष॑यः प॒र॒मे व्यो॑मन् ॥ ८ ॥

याम् । प्र॒ऽच्यु॑ताम् । अनु॑ । य॒ज्ञाः । प्र॒ऽच्यव॑न्ते । उ॒प॒ऽतिष्ठ॑न्ते । उ॒प॒ऽतिष्ठ॑मानाम् ।
यस्या॑ः । व्र॒ते । प्र॒ऽस॒वे । य॒क्षम् । एज॑ति । सा । वि॒ऽराट् । ऋ॒ष॒य॒ः[10] । प॒र॒मे । विऽओ॑मन् ॥ ८ ॥

अ॒प्रा॒णैति॑[11] प्रा॒णेन॑ प्राण॒ती॒नां [12]वि॒राट् स्व॒राज॑म॒भ्ये॑ति[12] प॒श्चात् ।
विश्वं॑ मृ॒शन्ती॑म॒भिरू॑पां वि॒राजं॒ पश्य॑न्ति॒ त्वे न त्वे पश्य॑न्त्येनाम् ॥ ९ ॥

अ॒प्रा॒णा । ए॒ति॒ । प्रा॒णेन॑ । प्रा॒ण॒ती॒नाम् । वि॒ऽराट् । स्व॒ऽराज॑म् । अ॒भि । ए॒ति॒ । प॒श्चात् । विश्व॑म् ।
मृ॒शन्ती॑म् । अ॒भिऽरू॑पाम् । वि॒ऽराज॑म् । पश्य॑न्ति । त्वे इति॑ । न । त्वे इति॑ । पश्य॑न्ति । ए॒नाम् ॥ ९ ॥

---

१. हि पै १६,१८,५. २. मायाः P,P$^5$,J,Cp,WM. ३. यन्तु पै १६,१८,६. ४. पद्वां B,B$^b$,K, पद् त्वां K$^m$,Dc. ५. ॰पेदं पै १६,१८,७. ६. धेमृड-धा पै. ७. ॰र्वन्ते S$^m$. ८. पृक्ष॰ B. ९. स पै १६,१८,८. १०. ऋषयः P,P$^5$. ११. साप्राणैतु पै १६,१८,९. १२. विराट्स्वरा॰ B$^b$,D,S$^m$,Cs, विराट् स्वरा॰ R,Dc.

को विराजो मिथुनत्वं प्र वेद 'क ऋतून् क उ कल्पमस्याः'[1] ।
क्रमान्[2] को अस्याः[3] कतिधा[4] 'विदुग्धान् को अस्या धाम[†] कतिधा व्युष्टीः'[5] ॥१०॥

कः । विऽराजः । मिथुनऽत्वम् । प्र । वेद । कः । ऋतून् । कः । ऊं इति । कल्पम् । अस्याः । क्रमान् । कः । अस्याः । कतिऽधा । विऽदुग्धान्[6] । कः । अस्याः । धाम । कतिऽधा । विऽउष्टीः ॥

इयमेव सा या प्रथमा "व्यौच्छदास्वितरासु चरति"[7] प्रविष्टा ।
महान्तो अस्यां महिमानो अन्तर्वधूर्जिगाय नवगज्जनित्री ॥ ११ ॥[8]

इयम् । एव । सा । या । प्रथमा । विऽऔच्छत् । आसु । इतरासु । चरति । प्रऽविष्टा ।
महान्तः । अस्याम् । महिमानः । अन्तः । वधूः । जिगाय । नवऽगत् । जनित्री ॥ ११ ॥

छन्दःपक्षे[9] उषसा[10] पेपिशाने समानं योनिमनु सं चरेते[11] ।
सूर्यपत्नी सं[12] चरतः प्रजानती केतुमती[13] अजरे भूरिरेतसा[14] ॥१२॥

छन्दःपक्षे[15] इति छन्दःऽपक्षे । उषसा । पेपिशाने इति । समानम् । योनिम् । अनु । सम् । चरेते इति । सूर्यपत्नी इति सूर्यऽपत्नी । सम् । चरतः । प्रजानती इति प्रऽजानती । केतुमती इति केतुऽमती । अजरे इति । भूरिऽरेतसा ॥ १२ ॥

ऋतस्य पन्थामनु तिस्र आगुस्त्रयो घर्मा[16] अनु [17]रेत आगुः[17] ।
प्रजामेका जिन्वत्यूर्जमेका[18] राष्ट्रमेका[19] रक्षति देवयूनाम् ॥ १३ ॥

ऋतस्य । पन्थाम् । अनु । तिस्रः । आ । अगुः । त्रयः । घर्माः[20] । अनु । रेतः । आ । अगुः । प्रऽजाम्[21] । एका । जिन्वति । ऊर्जम्[22] । एका । राष्ट्रम् । एका । रक्षति । देवऽयूनाम् ॥१३॥

[23]अग्नीषोमावदधुर्या तुरीयासीद् यज्ञस्य[‡] पक्षावृषयः कल्पयन्तः[23] ।
गायत्रीं त्रिष्टुभं जगतीमनुष्टुभं बृहदर्कीं यजमानाय स्वराभरन्तीम्[24] ॥१४॥

---

१. ऋतून् को अस्याः क उ वेद रूपम् मै २,१३,१०. २. दोहान् मै. ३. येद मै. † धामानि पै.
४. बहुधा पै १६,१८,१०. ५. विदुग्धाः कति धामानि कति ये विवासाः मै. ६. विऽदुग्धात् P.J. ७. व्युच्छत्सास्वन्तश्च° पै १६,१९,१. ८. पृ २११ टि ८–११ द्र.
९. छन्दस्वती तै ४,३,११,१ मै २,१३,१० काठ ३९,१०. १०. उषसो मै. काठ.
११. चरन्तौ तै. १२. वि तै. मै. काठ. १३. ऋतं दृष्टाने तै. १४. °रेतसौ मै.
१५. छन्दःप° Bp³. १६. घर्मासो तै. मै. काठ १७. ज्योतिषागुः तै.; रेतमागुः मै.
काठ. १८. ऊर्जमेका तै. काठ. १९. प्रतमेका तै ४,३,११,२; क्षत्रमेका मै. काठ.
२०. घर्माः P¹.J. २१. प्रजाम् P¹. २२. ऊर्जाम् P¹. २३. भूयान् पा॰. तै.
मै. काठ. ‡ यज्ञस्य B. २४. °भरन्तः पै १६,१९,४.

अ॒ग्नी॒षोमौ॑ । अ॒द॒धुः॒ । या । तु॒रीया॑ । आसी॑त्[1] । य॒ज्ञस्य॑ । प॒क्षौ । ऋष॑यः । क॒ल्पय॑न्तः । गा॒य॒त्रीम् । त्रि॒ऽस्तुभ॑म् । जग॑तीम् । अ॒नु॒ऽस्तुभ॑म् । बृ॒ह॒त्ऽअ॒र्कीम् । यज॑मानाय । स्वः॑ । आ॒ऽभर॑न्तीम् ॥ १४ ॥

पञ्च॒ व्यु॒ष्टीरनु॒ पञ्च॒ दोहा॒ गां पञ्च॑नाम्नीमृ॒तवोऽनु॒ पञ्च॑ ।
पञ्च॒ दिशः॑[2] पञ्चद॒शेन॒ क्लृ॒प्तास्ता एक॑मूर्ध्नीर॒भि[3] लो॒कमेक॑म् ॥ १५ ॥

पञ्च॑ । वि॒ऽउ॒ष्टीः । अनु॑ । पञ्च॑ । दोहाः॑ । गाम् । पञ्च॑ऽनाम्नीम् । ऋ॒तवः॑ । अनु॑ । पञ्च॑ । पञ्च॑ । दिशः॑ । प॒ञ्च॒ऽद॒शेन॑ । क्लृ॒प्ताः । ताः । एक॑ऽमूर्ध्नीः । अ॒भि । लो॒कम् । एक॑म् ॥१५॥

षड् जा॒ता भू॒ता प्र॑थम॒जर्तस्य॒[4] षडु॒ सामा॑नि[5] षड॒हं व॑हन्ति ।
ष॒ड्यो॒गं सीर॒मनु॒ साम॑साम॒ षडा॑हु॒र्द्यावा॑पृथि॒वीः षडु॒र्वीः ॥ १६ ॥

षट् । जा॒ता । भू॒ता । प्र॒थ॒म॒ऽजा । ऋ॒तस्य॑ । षट् । ऊं॒ इति॑ । सामा॑नि । ष॒ट्ऽअ॒हम्[6] । व॒ह॒न्ति॒ । ष॒ट्ऽयो॒गम् । सीर॑म् । अनु॑ । साम॑ऽसाम । षट् । आ॒हुः॒ । द्यावा॑पृथि॒वीः । षट् । उ॒र्वीः ॥१६॥

षडा॑हुः शी॒तान् षडु॑ मा॒स "उ॒ष्णानृ॒तुं नो॑" ब्रूत यत॒मोऽति॑रिक्तः ।
स॒प्त सु॑प॒र्णाः क॒वयो॒ नि षे॑दुः स॒प्त च्छन्दां॒स्यनु॑ स॒प्त दी॒क्षाः ॥ १७ ॥

षट् । आ॒हुः॒ । शी॒तान् । षट् । ऊं॒ इति॑ । मा॒सः॒ । उ॒ष्णान् । ऋ॒तुम् । नः॒ । ब्रू॒त॒ । य॒त॒मः । अति॑ऽरिक्तः । स॒प्त । सु॒ऽप॒र्णाः । क॒वयः॑ । नि । से॒दुः॒ । स॒प्त । छन्दां॑सि । अनु॑ । स॒प्त । दी॒क्षाः ॥१७॥

स॒प्त होमाः॑ स॒मिधो॑ ह॒ स॒प्त मधू॑नि स॒प्तर्तवो॑[8] ह॒ स॒प्त ।
स॒प्ताज्या॑नि॒ परि॑ भू॒तमा॑य॒न् ताः स॑प्तगृ॒ध्रा इति॑ "शुश्रु॒मा व॒यम्"[9] ॥१८॥

स॒प्त । होमाः॑ । स॒म्ऽइधः॑ । ह॒ । स॒प्त । मधू॑नि । स॒प्त । ऋ॒तवः॑ । ह॒ । स॒प्त । स॒प्त । आज्या॑नि । परि॑ । भू॒तम् । आ॒य॒न्[11] । ताः । स॒प्त॒ऽगृ॒ध्राः । इति॑ । शु॒श्रु॒म॒ । व॒यम् ॥१८॥

स॒प्त च्छन्दां॑सि चतुरुत्त॒राण्य॒न्यो अ॒न्यस्मि॒न्नध्यार्पि॑तानि ।

---

१. आसीन् P. २. °दर्शः K,Km,V. ३. संमानमूर्ध्नीरभि ('रधि पाठ.) तै ब्रा. २,११,४ मै २,१३,१० काठ ३९,१० पार ३,१,५. ४. जरतस्य Bb,D ५. सामानि B,Bb,R,Sm,Cs. ६. षट् । अहम् P,J,WM.; षट् । अहम् Pb; षट्ऽअहम् > षट् । अहम् Cp. ७. 'तुं नो > 'तं नो B,Dc; 'तं नो K,Km,V. ८. तु पै १६,१९,८. ९. नह मतवो पै. १०. शुश्रुवाहम् पै. ११. आयुम् P,Pb,J.

कथं स्तोमाः प्रति तिष्ठन्ति तेषु तानि स्तोमेषु कथमार्पितानि ॥ १९ ॥

सप्त । छन्दांसि । चतुःऽउत्तराणि । अन्यः । अन्यस्मिन् । अधि । आर्पितानि[1] ।
कथम् । स्तोमाः । प्रति । तिष्ठन्ति । तेषु । तानि । स्तोमेषु । कथम् । आर्पितानि[2] ॥१९॥

कथं गायत्री[3] त्रिवृतं व्याप कथं त्रिष्टुप् पञ्चदशेन कल्पते ।
त्रयस्त्रिंशेन जगती कथमनुष्टुप् कथमेकविंशः ॥ २० ॥

कथम् । गायत्री । त्रिऽवृतम् । वि । आप । कथम् । त्रिऽस्तुप् । पञ्चऽदशेन । कल्पते ।
त्रयःऽत्रिंशेन । जगती । कथम् । अनुऽस्तुप् । कथम् । एकऽविंशः ॥ २० ॥

"अष्ट जाता भूता" "प्रथमजर्तस्याष्टेन्द्रर्त्विजो" दैव्या ये ।
अष्टयोनिरदितिरष्टपुत्राष्टमीं रात्रिमभि हव्यमेति ॥ २१ ॥

अष्ट । जाता । भूता । प्रथमऽजा । ऋतस्य । अष्ट । इन्द्र । ऋत्विजः । दैव्याः । ये ।
अष्टऽयोनिः । अदितिः । अष्टऽपुत्रा । अष्टमीम् । रात्रिम् । अभि । हव्यम् । एति ॥२१॥

इत्थं श्रेयो मन्यमानेदमागमं युष्माकं सख्ये अहमस्मि शेवा ।
समानजन्मा क्रतुरस्ति[6] वः[7] शिवः स वः[7] सर्वाः सं चरति प्रजानन् ।२२।

इत्थम् । श्रेयः । मन्यमाना । इदम् । आ । अगमम् । युष्माकम् । सख्ये । अहम् । अस्मि ।
शेवा । समानऽजन्मा । क्रतुः । अस्ति । वः । शिवः । सः । वः । सर्वाः । सम् । चरति । प्रऽजानन् ॥

अष्टेन्द्रस्य षड् यमस्य ऋषीणां सप्त सप्तधा ।
अपो मनुष्या३नोषधीस्ताँ उ पञ्चानु सेचिरे ॥ २३ ॥

अष्ट । इन्द्रस्य । षट् । यमस्य । ऋषीणाम् । सप्त । सप्तऽधा ।
अपः । मनुष्यान् । ओषधीः । तान् । ऊं इति । पञ्च । अनु । सेचिरे ॥ २३ ॥

केवलीन्द्राय दुदुहे हि गृष्टिर्वशं पीयूषं प्रथमं दुहाना ।
अथातर्पयच्चतुरश्चतुर्धा देवान् मनुष्याँ३ 'असुरानुत ऋषीन्' ॥ २४ ॥

---

१. आऽअर्पितानि P,P³,J,Cp. २. अर्पि° P². ३. गायुत्री K. ४. अष्टौ° धामानि पं १६,१९,९. ५. प्रथमज ऋतस्या° सात.²; प्रथमजा ऋतस्याष्टेन्द्र ऋत्विजो पं. ६. °रस्तु पं १६,१९,१०. ७. नः पं. ८. 'नुतर्षीन् O; असुरानथर्षीन् पं १६,२०,१.

केवली । इन्द्राय । दुदुहे । हि । गृष्टिः । वशम् । पीयूषम् । प्रथमम् । दुहाना ।
अर्थ । अतर्पयत् । चतुरः । चतुःऽधा । देवान् । मनुष्यान् । असुरान् । उत । ऋषीन् ॥२४॥

को नु गौः क एकऋषिः किमु धाम का आशिषः ।
यक्षं पृथिव्यामेकवृदेकर्तुः कतमो नु सः ॥ २५ ॥

कः । नु । गौः । कः । एकऽऋषिः । किम् । ऊं इति । धाम । काः । आऽशिषः ।
यक्षम् । पृथिव्याम् । एकऽवृत् । एकऽऋतुः । कतमः । नु । सः ॥ २५ ॥

एको गौरेक एकऋषिरेकं धामैकधाशिषः ।
यक्षं पृथिव्यामेकवृदेकर्तुर्नाति रिच्यते ॥ २६ ॥

एकः । गौः । एकः । एकऽऋषिः । एकम् । धाम । एकऽधा । आऽशिषः ।
यक्षम् । पृथिव्याम् । एकऽवृत् । एकऽऋतुः । न । अति । रिच्यते ॥ २६ ॥

इति पञ्चमेऽनुवाके प्रथमं सूक्तम् ।

'विराड् वै' इति पदपर्यायात्मकं सूक्तम् । तस्य विनियोगविचारादि पूर्वसूक्त उक्तम् ।

विराड् वा इदमग्र आसीत् तस्या जाताया: सर्वमबिभेदियमेवेदं भविष्यतीति ॥१॥

विऽराट् । वै । इदम् । अग्रे । आसीत् । तस्याः । जातायाः । सर्वम् । अबिभेत् । इयम् । एव । इदम् । भविष्यति । इति ॥ १ ॥

सोदक्रामत् सा गार्हपत्ये न्यक्रामत् ॥ २ ॥

सा । उत् । अक्रामत् । सा । गार्हऽपत्ये । नि । अक्रामत् ॥ २ ॥

गृहमेधी गृहपतिर्भवति य एवं वेद ॥ ३ ॥[२]

गृहऽमेधी । गृहऽपतिः । भवति । यः । एवम् । वेद ॥ ३ ॥

सोदक्रामत् साहवनीये न्यक्रामत् ॥ ४ ॥

सा । उत् । अक्रामत् । सा । आऽहवनीये । नि । अक्रामत् ॥ ४ ॥

---

१. धाम पं १६,२०,३. २. 'दंक ऋतु' RW. पं. ३. सामैक' पं १६,२०,४
४. 'मेऽजायत पं १६,१११,१. ५. 'व्याति न चयमिति पं. ६. गृहऽमतिः P[6].

यन्त्यस्य देवा देवहूतिं प्रियो देवानां भवति य एवं वेद ॥ ५ ॥ [३]

यन्ति । अस्य । देवाः । देवऽहूतिम् । प्रियः । देवानाम् । भवति । यः । एवम् । वेद ॥

सोदक्रामत् सा दक्षिणाग्नौ न्यक्रामत् ॥ ६ ॥

सा । उत् । अक्रामत् । सा । दक्षिणऽअग्नौ । नि । अक्रामत् ॥ ६ ॥

यज्ञर्तो दक्षिणीयो वासतेयो भवति य एवं वेद ॥७॥ [४]

यज्ञऽऋतः[१] । दक्षिणीयः । वासतेयः[२] । भवति । यः । एवम् । वेद ॥ ७ ॥

सोदक्रामत् सा सभायां न्यक्रामत् ॥ ८ ॥

सा । उत् । अक्रामत् । सा । सभायाम् । नि । अक्रामत् ॥ ८ ॥

यन्त्यस्य सभां सभ्यो भवति य एवं वेद ॥९॥ [५]

यन्ति । अस्य । सभाम् । सभ्यः । भवति । यः । एवम् । वेद ॥ ९ ॥

सोदक्रामत् सा समितौ न्यक्रामत् ॥ १० ॥

सा । उत् । अक्रामत् । सा । समऽइतौ । नि । अक्रामत् ॥ १० ॥

यन्त्यस्य समितिं सामित्यो भवति य एवं वेद ॥ ११ ॥ [६]

यन्ति । अस्य । समऽइतिम् । साम्ऽइत्यः[३] । भवति । यः । एवम् । वेद ॥ ११ ॥

सोदक्रामत् सामन्त्रणे न्यक्रामत् ॥ १२ ॥

सा । उत् । अक्रामत् । सा । आऽमन्त्रणे । नि । अक्रामत् ॥ १२ ॥

यन्त्यस्यामन्त्रणमामन्त्रणीयो भवति य एवं वेद ॥१३॥ [७]

यन्ति । अस्य । आऽमन्त्रणम् । आऽमन्त्रणीयः । भवति । यः । एवम् । वेद ॥ १३ ॥

इति पञ्चमेऽनुवाके द्वितीयं सूक्तम् ।

सोदक्रामत् साऽन्तरिक्षे चतुर्धा विक्रान्ताऽतिष्ठत् ॥१॥ [८]

---

१. यज्ञऽऋतः P[२],Cp,WM. २. वासतेयाः P. ३. सम्ऽइत्यः J.

सा । उत् । अक्रामत् । सा । अन्तरिक्षे । चतुःऽधा । विऽक्रान्ता । अतिष्ठत् ॥ १ ॥

तां देवमनुष्या अब्रुवन्नियमेव तद् वेद यदुभयं उपजीवेमेमामुप ह्वयामहा इति ।२।[९]

ताम् । देवऽमनुष्याः । अब्रुवन् । इयम् । एव । तत् । वेद । यत् । उभये । उपऽजीवेम । इमाम् । उप । ह्वयामहै । इति ॥ २ ॥

तामुपाह्वयन्त ॥ ३ ॥ [१०]

ताम् । उप । अह्वयन्त ॥ ३ ॥

ऊर्ज एहि स्वध एहि सूनृत[1] एहीरावत्येहीति ॥ ४ ॥ [११]

ऊर्जे । आ । इहि । स्वधे । आ । इहि । सूनृते । आ । इहि । इराऽवति[2] । आ । इहि । इति ॥

तस्या[3] इन्द्रो[4] वत्स आसीद् गायत्र्यभिधान्यभ्रमूधः ॥५॥ [१२]

तस्याः । इन्द्रः । वत्सः । आसीत् । गायत्री । अभिऽधानी । अभ्रम् । ऊधः ॥ ५ ॥

बृहच्च रथंतरं च द्वौ स्तनावास्तां यज्ञायज्ञियं च वामदेव्यं च द्वौ ॥६॥ [१३]

बृहत् । च । रथम्ऽतरम् । च । द्वौ । स्तनौ । आस्ताम्[5] । यज्ञायज्ञियम् । च । वामऽदेव्यम् । च । द्वौ ॥ ६ ॥

ओषधीरेव रथंतरेण[6] देवा अदुह्रन् व्यचो बृहता[7] ॥ ७ ॥ [१४]

ओषधीः । एव । रथम्ऽतरेण । देवाः । अदुह्रन् । व्यचः । बृहता ॥ ७ ॥

अपो वामदेव्येन[8] यज्ञं यज्ञायज्ञियेन[9] ॥ ८ ॥ [१५]

अपः । वामऽदेव्येन । यज्ञम् । यज्ञायज्ञियेन ॥ ८ ॥

ओषधीरेवास्मै रथंतरं दुहे व्यचो बृहत् ॥ ९ ॥ [१६]

ओषधीः । एव । अस्मै । रथम्ऽतरम् । दुहे । व्यचः । बृहत् ॥ ९ ॥

---

१. सुनृत पं १६,१३३,९. २. इरावति P. ३. तस्या वात[?]. ४. अभिद्‌ पै १६,१३३,१०. ५. आस्ताम् P. ६. °तरं पै १६,१३३,११. ७. बृहत् पै. ८. °देव्यं पै. ९. °ज्ञियम् पं.

अपो वामदेव्यं यज्ञं यज्ञायज्ञियं य एवं वेद ॥ १० ॥ [१७]

अपः । वामऽदेव्यम् । यज्ञम् । यज्ञायज्ञियम् । यः । एवम् । वेद ॥ १० ॥

इति पञ्चमेऽनुवाके तृतीयं सूक्तम् ।

सोदक्रामत् सा वनस्पतीनागच्छत् तां वनस्पतयोऽघ्नत सा संवत्सरे समभवत् ॥१॥

सा । उत् । अक्रामत् । सा । वनस्पतीन् । आ । अगच्छत् । ताम् । वनस्पतयः । अघ्नत । सा । समऽवत्सरे । सम् । अभवत् ॥ १ ॥

तस्माद् वनस्पतीनां संवत्सरे वृक्णमपि रोहति वृश्चतेऽस्याप्रियो[1] भ्रातृव्यो य एवं वेद ॥ २ ॥ [१८]

तस्मात् । वनस्पतीनाम् । समऽवत्सरे । वृक्णम् । अपि । रोहति । वृश्चते । अस्य । अप्रियः । भ्रातृव्यः । यः । एवम् । वेद ॥ २ ॥

सोदक्रामत् सा पितॄनागच्छत् तां पितरोऽघ्नत सा मासि[2] समभवत् ॥३॥

सा । उत् । अक्रामत् । सा । पितॄन् । आ । अगच्छत् । ताम् । पितरः । अघ्नत । सा । मासि । सम् । अभवत् ॥ ३ ॥

तस्मात् [3]पितृभ्यो मास्युपमास्यं ददति[3] प्र पितृयाणं पन्थां जानाति[4] य एवं वेद ।४।

तस्मात् । पितृऽभ्यः । मासि । उपऽमास्यम् । ददति । प्र । पितृऽयानम् । पन्थाम् । जानाति । यः । एवम् । वेद ॥ ४ ॥ [१९]

सोदक्रामत् सा देवानागच्छत् तां देवा अघ्नत सार्धमासे समभवत् ॥ ५ ॥

सा । उत् । अक्रामत् । सा । देवान् । आ । अगच्छत् । ताम् । देवाः । अघ्नत । सा । अर्धऽमासे । सम् । अभवत् ॥५॥

तस्माद् देवेभ्योऽर्धमासे [5]वषट् कुर्वन्ति[5] प्र देवयानं पन्थां जानाति[4] य एवं वेद ॥६॥

तस्मात् । देवेभ्यः । अर्धऽमासे । वषट् । कुर्वन्ति । प्र । देवऽयानम् । पन्थाम्[6] । जानाति । यः । एवम् । वेद ॥ ६ ॥ [२०]

---

१. पत्यतेऽस्या° पै १६,१३४,१. २. मासे पै १६,१३४,२. ३. मासे पितृभ्यो ददाति स्वधावान् पितृपु भवति पै. ४. जानाति O,R². ५. जुहोति जुहोत्यग्निहोत्रं पै १६,१३४,३. ६. पथाम् P.

सोद॑क्रामत् सा म॑नुष्या३॒॑नाग॑च्छत् तां म॑नुष्या॒॑ अघ्नत सा स॒द्यः सम॑भवत् ॥७॥
सा । उत् । अक्रामत् । सा । मनुष्यान् । आ । अगच्छत् । ताम् । मनुष्याः । अघ्नत । सा । सद्यः । सम् । अभवत् ॥७॥

तस्मा॑न्मनु॒ष्ये॑भ्य[1] उभ॒यद्यु॑रुप॑ हर॒न्त्युपा॑स्य गृ॒हे ह॑रन्ति[2] य ए॒वं वेद॑ ॥८॥ [२१]
तस्मात् । मनुष्येभ्यः । उभयऽद्युः । उप॑ । हरन्ति । उप॑ । अस्य । गृहे । हरन्ति । यः । एवम् । वेद॑ ॥८॥

इति पञ्चमेऽनुवाके चतुर्थं सूक्तम् ।

सोद॑क्रामत् साऽसु॑रा॒नाग॑च्छत् ताम॑सु॒रा उपा॑ह्वयन्त॒ माय॒ एहीति॑ ॥ १ ॥
सा । उत् । अक्रामत् । सा । असुरान् । आ । अगच्छत् । ताम् । असुराः । उप॑ । अह्वयन्त । माये । आ । इहि । इति॑ ॥१॥

तस्या॑ वि॒रोच॑नः प्राह्रा॑दिर्व॒त्स आसी॑दयस्पा॒त्रं[3] पात्र॑म् ॥ ॥ २ ॥
तस्याः । विऽरोचनः । प्राह्रादिः[4] । वत्सः । आसीत् । अयःऽपात्रम् । पात्र॑म् ॥ २ ॥

तां द्वि॒मू॑र्धाऽऽर्त्व्यो॑ऽधोक् तां मा॒याम॒वाधो॑क् ॥ ३ ॥
ताम् । द्विऽमूर्धा । आर्त्व्यः[5] । अधोक् । ताम् । मायाम् । एव । अधोक् ॥ ३ ॥

तां मा॒याम॑सु॒रा उप॑ जीवन्त्युपजीव॒नीयो॑ भवति॒ य ए॒वं वेद॑ ॥४॥ [२२]
ताम् । मायाम् । असुराः । उप॑ । जीवन्ति । उपऽजीवनीयः । भवति । यः । एवम् । वेद॑ ॥४॥

सोद॑क्राम॒त् सा पि॒तॄनाग॑च्छ॒त् तां पि॒तर॒ उपा॑ह्वयन्त॒ स्वध॒ एहीति॑ ॥ ५ ॥
सा । उत् । अक्रामत् । सा । पितॄन् । आ । अगच्छत् । ताम् । पितरः । उप॑ । अह्वयन्त । स्वधे । आ । इहि । इति॑ ॥ ५ ॥

तस्या॑ य॒मो राजा॑ व॒त्स आसी॑द्[6] रजतपा॒त्रं पात्र॑म् ॥ ६ ॥
तस्याः । यमः । राजा॑ । वत्सः । आसीत् । रजतऽपात्रम् । पात्र॑म् ॥ ६ ॥

---

१. °नुष्याणाम् पै १६,१३४,४. २. भरन्ति पै. ३. आसी° D. ४. प्राह्रादि P². ५. आर्त्व्यं. P³; आर्त्व्यः Cp; आर्त्व्यः J. ६. आसीद् राज°.

तामन्तको 'मार्त्यवोऽधोक् तां स्वधामेवाधोक् ॥ ७ ॥

ताम् । अन्तकः । मार्त्यवः[2] । अधोक् । ताम् । स्वधाम् । एव । अधोक् ॥ ७ ॥

तां स्वधां पितर उप जीवन्त्युपजीवनीयो भवति य एवं वेद ॥ ८ ॥ [२३]

ताम् । स्वधाम् । पितरः । उप । जीवन्ति । उपऽजीवनीयः । भवति । यः । एवम् । वेद ॥ ८ ॥

सोदक्रामत् सा मनुष्याँ३नागच्छत् तां मनुष्या३ उपाह्वयन्तेरावत्येहीति[3] ॥९॥

सा । उत् । अक्रामत् । सा । मनुष्यान् । आ । अगच्छत् । ताम् । मनुष्याः । उप । अह्वयन्त ।
इराऽवति । आ । इहि । इति ॥ ९ ॥

तस्या मनुर्वैवस्वतो वत्स आसीत् पृथिवी[4] पात्रम् ॥ १० ॥

तस्याः । मनुः । वैवस्वतः । वत्सः । आसीत् । पृथिवी । पात्रम् ॥ १० ॥

तां पृथी[5] वैन्योऽधोक् तां कृषिं च सस्यं चाधोक् ॥ ११ ॥

ताम् । पृथी । वैन्यः[6] । अधोक् । ताम् । कृषिम् । च । सस्यम् । च । अधोक् ॥११॥

ते[7] कृषिं च सस्यं च मनुष्या३ उप जीवन्ति 'कृष्टराधिरुपजीवनीयो भवति
य एवं वेद ॥ १२ ॥ [२४]

ते । कृषिम् । च । सस्यम् । च । मनुष्याः । उप । जीवन्ति । कृष्टऽराधिः । उपऽजीवनीयः ।
भवति । यः । एवम् । वेद ॥ १२ ॥

सोदक्रामत् सा सप्तऋषीनागच्छत् तां सप्तऋषय उपाह्वयन्त ब्रह्मण्वत्येहीति ॥१३॥

सा । उत् । अक्रामत् । सा । सप्तऽऋषीन् । आ । अगच्छत् । ताम् । सप्तऽऋषयः । उप । अह्वयन्त ।
ब्रह्मण्ऽवति । आ । इहि । इति ॥ १३ ॥

तस्याः सोमो राजा वत्स 'आसीच्छन्दः पात्रम् ॥ १४ ॥

तस्याः । सोमः । राजा । वत्सः । आसीत् । छन्दः । पात्रम् ॥ १४ ॥

---

१. मार्त्यवो' वा मार्त्यवो° वेति न निश्चिनोति K, तस्योच्चारणे तु मार्त्यौं° इति शंपा.; मार्त्यवो° Sm,RW.; मार्त्यौं R²; मा-मार्त्यौं° Km; मार्त्यवो° Bh,Cs; मार्त्यौं° D,V,P³,M; °र्त्यवो E²,O,K²; मार्त्यवो T. २. मार्त्यवः P². ३. इति नास्ति Dc,Cs,R. ४. पृथिवीपात्रम् पै १६,१३५,२. ५. पृथि B,Bh,K,Km,R; पृथुर् पै [मूको.]. ६. वै-न्यः P²,Cp. ७. तां पै. ८. कृष्टिरा° K. ९. आसी° Bh; °न्दःपात्रं पै १६,१३५,५.

तां बृहस्पतिराङ्गिरसोऽधोक् तां ब्रह्म च तपश्चाधोक् ॥ १५ ॥

ताम् । बृहस्पतिः । आङ्गिरसः । अधोक् । ताम् । ब्रह्म । च । तपः । च । अधोक् ॥१५॥

तद् ब्रह्म च तपश्च सप्तऋषय उप जीवन्ति ब्रह्मवर्चस्युपजीवनीयो[1] भवति य एवं वेद ॥ १६ ॥ [२५]

तत् । ब्रह्म । च । तपः । च । सप्तऽऋषयः । उप । जीवन्ति । ब्रह्मऽवर्चसी । उपऽजीवनीयः । भवति । यः । एवम् । वेद ॥ १६ ॥

इति पञ्चमेऽनुवाके पञ्चमं सूक्तम् ।

सोदक्रामत् सा देवानागच्छत् तां देवा उपाह्वयन्तोर्ज एहीति ॥ १ ॥

सा । उत् । अक्रामत् । सा । देवान् । आ । अगच्छत् । ताम् । देवाः । उप । अह्वयन्त । ऊर्जे । आ । इहि । इति ॥ १ ॥

तस्या इन्द्रो वत्स आसीच्चमसः[2] पात्रम् ॥ २ ॥

तस्याः । इन्द्रः । वत्सः । आसीत् । चमसः । पात्रम् ॥ २ ॥

तां देवः [3]सविताऽधोक् तामूर्जामेवाधोक् ॥ ३ ॥

ताम् । देवः । सविता । अधोक् । ताम् । ऊर्जाम् । एव । अधोक् ॥ ३ ॥

तामूर्जां देवा उप जीवन्त्युपजीवनीयो भवति य एवं वेद ॥ ४ ॥ [२६]

ताम् । ऊर्जाम्[4] । देवाः । उप । जीवन्ति । उपऽजीवनीयः । भवति । यः । एवम् । वेद ॥४॥

सोदक्रामत् सा गन्धर्वाप्सरस आगच्छत् तां गन्धर्वाप्सरस उपाह्वयन्त पुण्यगन्ध एहीति ॥ ५ ॥

सा । उत् । अक्रामत् । सा । गन्धर्वऽअप्सरसः । आ । अगच्छत् । ताम् । गन्धर्वऽअप्सरसः । उप । अह्वयन्त[5] । पुण्यऽगन्धे । आ । इहि । इति ॥ ५ ॥

---

१. 'वर्चस्युप' A,B,B[a],C[s]. २. आसीद् द्रष्टव्यं पै ११,११५,४. ३. सवि॰ तो॰ K,K[m]. ४. ऊर्जम् P. ५. अह्वयत P[s].

तस्यांश्चित्ररंथः सौर्यवर्चसो[1] वृत्स आसींत् पुष्करपुर्ण[2] पात्रम् ॥ ६ ॥

तस्याः । चित्रऽरथः । सौर्यऽवर्चसः । वृत्सः । आसीत् । पुष्करऽपर्णम् । पात्रम् ॥ ६ ॥

तां [3]वसुरुचिः सौर्यवर्चसोऽधोक्[4] तां [5]पुण्यमेव गन्धमधोक्[6] ॥ ७ ॥

ताम् । वसुऽरुचिः । सौर्यऽवर्चसः । अधोक् । ताम् । पुण्यम् । एव । गन्धम् । अधोक् ॥७॥

तं [7]पुण्यं गन्धं[8] गन्धर्वाप्सरस उप [9]जीवन्ति पुण्यगन्धिरुपजीवनीयो[10] भवति य एवं वेद ॥ ८ ॥ [२७]

तम् । पुण्यम् । गन्धम् । गन्धर्वऽअप्सरसः । उप । जीवन्ति । पुण्यऽगन्धिः । उपऽजीवनीयः । भवति । यः । एवम् । वेद ॥ ८ ॥

सोदक्रामत् [7]सेतरजनानागच्छत् तामितरजना[8] उपाह्वयन्त तिरोध एहीति ॥९॥

सा । उत् । अक्रामत् । सा । इतरऽजनान्[9] । आ । अगच्छत् । ताम् । इतरऽजनाः[9] । उप । अह्वयन्त । तिरःऽधे । आ । इहि । इति ॥ ९ ॥

तस्याः कुबेरो[10] वैश्रवणो[11] वृत्स आसीदामपात्रं[12] पात्रम् ॥ १० ॥

तस्याः । कुबेरः । वैश्रवणः । वृत्सः । आसीत्[13] । आमऽपात्रम् । पात्रम् ॥ १० ॥

तां रजतनाभिः[14] काबेरकोऽधोक्[15] तां तिरोधामेवाधोक् ॥ ११ ॥

ताम् । रजतऽनाभिः । काबेरकः[16] । अधोक् । ताम् । तिरःऽधाम् । एव । अधोक् ॥ ११ ॥

तां तिरोधामितरजना उप जीवन्ति तिरो धत्ते सर्वं पाप्मानमुपजीवनीयो भवति य एवं वेद ॥ १२ ॥ [२८]

ताम् । तिरःऽधाम् । इतरऽजनाः[9] । उप । जीवन्ति । तिरः । धत्ते । सर्वम् । पाप्मानम् । उपऽजीवनीयः । भवति । यः । एवम् । वेद ॥ १२ ॥

---

१. तस्याः कुबेरो वैश्रवणो पै १६,१३५,६. २. दारुपात्रं पै. ३. °वर्चसोऽधोक् A,R; रजतनाभिः काबेरकोऽधोक् पै. ४. पुण्यगन्धमधोक् पै. ५. पुण्यगन्धं पै. ६. जीवंति पुण्यगंधि° D. ७. सा पुण्यजना° पै १६,१३५,७. ८. तां पुण्यजना पै. ९. इतरऽज° P. १०. कुबेरो P³,K²; चित्ररथस् पै. ११. सौर्यवर्चसो पै. १२. आसीत्-पुष्करपर्णपात्रं पै. १३. आसीत् > आसीत् Cp. १४. वसुरुचिस् पै. १५. काबेरकोऽधो° A,D,R; काबेरकोऽधो° K²; सौर्यवर्चसोऽधोक् पै. १६. काबेरकः Bp².

सोदक्रामत् सा सर्पानागच्छत् तां सर्पा उपाह्वयन्त विषवत्येहीति ॥ १३ ॥

सा । उत् । अक्रामत् । सा । सर्पान् । आ । अगच्छत् । ताम् । सर्पाः । उप । अह्वयन्त । विषऽवति । आ । इहि । इति ॥ १३ ॥

तस्यास्तक्षको वैशालेयो वत्स आसीदलाबुपात्रं पात्रम् ॥ १४ ॥

तस्याः । तक्षकः । वैशालेयः । वत्सः । आसीत्[1] । अलाबुऽपात्रम् । पात्रम् ॥ १४ ॥

तां धृतराष्ट्र ऐरावतोऽधोक्[2] तां विषमेवाधोक् ॥ १५ ॥

ताम् । धृतऽराष्ट्रः । ऐराऽवतः । अधोक् । ताम् । विषम् । एव । अधोक् ॥ १५ ॥

तद् विषं सर्पा उप जीवन्त्युपजीवनीयो भवति य एवं वेद ॥१६॥ [२९]

तत् । विषम् । सर्पाः । उप । जीवन्ति । उपऽजीवनीयः । भवति । यः । एवम् । वेद ॥ १६ ॥

इति पञ्चमेऽनुवाके षष्ठं सूक्तम् ।

तद्[3] यस्मा एवं विदुषेऽलाबुनाऽभिषिञ्चेत् प्रत्याहन्यात् ॥ १ ॥ [३०]

तत् । यस्मै । एवम् । विदुषे । अलाबुना । अभिऽसिञ्चेत् । प्रतिऽआहन्यात् ॥ १ ॥

न च प्रत्याहन्यान्मनसा त्वा प्रत्याहन्मीति प्रत्याहन्यात् ॥ २ ॥ [३१]

न । च । प्रतिऽआहन्यात् । मनसा । त्वा । प्रतिऽआहन्मि । इति । प्रतिऽआहन्यात् ॥ २ ॥

यत् प्रत्याहन्ति विषमेव तत् प्रत्याहन्ति ॥ ३ ॥ [३२]

यत् । प्रतिऽआहन्ति । विषम् । एव । तत् । प्रतिऽआहन्ति ॥ ३ ॥

विषमेवास्याप्रियं भ्रातृव्यमनुविषिच्यते य एवं वेद ॥ ४ ॥ [३३]

विषम् । एव । अस्य । अप्रियम् । भ्रातृव्यम् । अनुऽविसिच्यते । यः । एवम् । वेद ॥ ४ ॥

इति पञ्चमेऽनुवाके सप्तमं सूक्तम् ।

इति पञ्चमोऽनुवाकः ।

इत्यष्टमं काण्डं समाप्तम् ।

---

१. आसीत् > भासीत् Cp. २. ऐरावतोऽधो A.R. ३. यद् WM,RW.; तस्माद् पै १६,१३५,९.

अथ

# नवमं काण्डम्

'दिवस्पृथिव्याः' इति चतुर्विंशत्यात्मकं सूक्तम् । तत्र प्रथमासु दशर्क्षु मधुकशाया गोरूपेण वर्णनम् । द्वितीये दशके वर्चस आशंसनम् अश्विभ्यां सकाशाद् इतरदेवेभ्यश्च । शिष्टास्वृक्षु कशायाः पुनरपि वर्णनम् ।

सांप्रदायिकास्तु एवं विनियुञ्जते । 'दिवस्पृथिव्याः' इत्यर्थसूक्तस्य मेधाजननकर्मणि वर्चस्यकर्मणि च विनियोगः । एतद्विस्तरः 'प्रातरग्निम्' (अ ३,१६) इति सूक्ते द्रष्टव्यः ।

उत्सर्जनकर्मणि 'यथा सोमः प्रातःसवने' (अ ९,१,११-२४) इति सूक्तम् आज्यहोमे विनियुज्यते । तद् उक्तं कौशिकेन— 'गिरावरगराटेषु' (अ ६,६९), 'यथा सोमः प्रातःसवने' (कौसू १३९,१५) इति ।

तथा 'दिवस्पृथिव्याः' इति सूक्तं सोमयागे सोमसेवने विनियुज्यते । तद् उक्तं वैताने— "'दिवस्पृथिव्याः' इति मधुसूक्तेन राजानं संश्रयति" (वैताश्रौ १६,१२) इति ।

दि॒वस्पृ॑थि॒व्या अ॒न्तरि॑क्षात् समु॒द्राद॒ग्नेर्वाता॑न्मधुक॒शा हि ज॒ज्ञे ।
तां चा॑यि॒त्वाऽमृ॒तं॑ वसा॑नां हृ॒द्भिः प्र॒जाः प्रति॑ नन्दन्ति[1] सर्वाः॑ ॥ १ ॥

दि॒वः । पृ॒थि॒व्याः । अ॒न्तरि॑क्षात् । स॒मु॒द्रात् । अ॒ग्नेः । वाता॑त् । म॒धु॒ऽक॒शा । हि । ज॒ज्ञे ।
ताम् । चा॒यि॒त्वा । अ॒मृत॑म् । वसा॑नाम् । हृ॒त्ऽभिः । प्र॒ऽजाः[2] । प्रति॑ । न॒न्द॒न्ति॒ । सर्वाः॑ ॥१॥

म॒हत् पयो॑ वि॒श्वरू॑पमस्याः समु॒द्रस्य॑ त्वो॒त रेत॑ आहुः ।
यत॒ ऐति॑ मधुक॒शा ररा॑णा तत् प्रा॒णस्तद॒मृत॑ं निवि॑ष्टम् ॥ २ ॥

म॒हत् । पयः॑ । वि॒श्वऽरू॑पम् । अ॒स्याः । स॒मु॒द्रस्य॑ । त्वा॒ । उ॒त । रेतः॑ । आ॒हुः॒ ।
यतः॑ । आ॒ऽएति॑ । म॒धु॒ऽक॒शा । ररा॑णा । तत् । प्रा॒णः । तत् । अ॒मृत॑म् । निऽवि॑ष्टम् ॥२॥

पश्य॑न्त्यस्याश्चरि॒तं पृ॑थि॒व्यां[3] पृथ॒ङ्नरो॑[4] बहु॒धा मीमां॑समानाः ।

---

१. नन्दन्तु पै १६,३२,१.   २. प्रजाः P.   ३. पृथिव्याः D, पै १६,३२,२.
४. पृथग्नरो A,R.

अग्नेर्वातान्मधुकशा हि जज्ञे मरुतामुग्रा नप्तिः ॥ ३ ॥

पश्यन्ति । अस्याः । चरितम् । पृथिव्याम् । । पृथक् । नरः । बहुऽधा । मीमांसमानाः ।
अग्नेः । वातात् । मधुऽकशा । हि । जज्ञे । मरुताम् । उग्रा । नप्तिः ॥ ३ ॥

माता॑दि॒त्याना॑[1] दुहि॒ता वसू॑नां [2]प्रा॒णः प्र॒जाना॑म॒मृत॑स्य[2] नाभिः ।
हिर॑ण्यवर्णा मधुक॒शा घृ॒ताची॑ म॒हान्[3] भर्ग॑श्चरति[4] मर्त्ये॑षु ॥ ४ ॥

माता । आदित्यानाम् । दुहिता । वसूनाम् । प्राणः । प्रऽजानाम् । अमृतस्य । नाभिः ।
हिरण्यऽवर्णा । मधुऽकशा । घृताची । महान् । भर्गः[5] । चरति । मर्त्येषु ॥ ४ ॥

मधोः कशा॑मजनयन्त दे॒वास्तस्या॒ गर्भो॑ अभवद् वि॒श्वरू॑पः ।
तं जा॒तं तरु॑णं पिपर्ति मा॒ता स जा॒तो विश्वा॒ [6]भुव॑ना॒ वि च॑ष्टे[6] ॥ ५ ॥

मधोः । कशाम् । अजनयन्त । देवाः । तस्याः । गर्भः । अभवत् । विश्वऽरूपः ।
तम् । जातम् । तरुणम् । पिपर्ति । माता । सः । जातः । विश्वा । भुवना । वि । चष्टे ॥५॥

कस्तं[7] प्र वे॑द॒ क उ॒ तं चि॑केत॒ यो अ॑स्या हृ॒दः क॒लशः॑ सोम॒धानो॒ अक्षि॑तः[7] ।
ब्र॒ह्मा सु॑मे॒धाः सो अ॑स्मिन् मदेत ॥ ६ ॥

कः । तम् । प्र । वेद । कः । ऊं इति । तम् । चिकेत । यः । अस्याः । हृदः । कलशः ।
सोमऽधानः । अक्षितः । ब्रह्मा । सुऽमेधाः । सः । अस्मिन् । मदेत ॥ ६ ॥

स[8] तौ प्र वे॑द॒ स[9] उ॒ तौ [10]चि॑केत॒ [11]याव॑स्याः॒ स्तनौ॑[11] स॒हस्र॑धारा॒वक्षि॑तौ[12] ।
ऊर्जं॑ दुहा॒ते अन॑पस्फुरन्तौ ॥ ७ ॥

सः । तौ । प्र । वेद । सः । ऊं इति । तौ । चिकेत । यौ । अस्याः । स्तनौ । सहस्रऽधारौ ।
अक्षितौ । ऊर्जम् । दुहाते इति । अनपऽस्फुरन्तौ[13] ॥ ७ ॥

हिङ्करि॑क्रती[14] बृह॒ती व॑यो॒धा उ॒च्चैर्घो॑षा॒भ्येति[15] या व्र॒तम् ।
त्रीन् घ॒र्मान॒भि वा॑वशा॒ना मिमा॑ति मा॒युं पय॑ते॒ पयो॑भिः ॥ ८ ॥

---

१. माता रुद्राणां ऋ ८,१०१,१५ मंत्रा २,८,१५. २. स्वसादित्यानामसृ॰ ऋ. मंत्रा. ३. महद् पै १६,३२,४. ४. गर्भश्च॰ T. ५. गर्भः Bp², Bp³. ६. भुवनाभि चस्टे पै १६,३२,५. ७. अक्षतः पै १६,३२,७ [मूको.]. ८. कस् पै १६,३२,६. ९. क पै. १०. जानाति पै. ११. यावस्यास्तनौ D.S^m. १२. ॰वक्षतौ पै [मूको.]. १३. ॰स्फरन्तौ P. १४. हिङ्कृण्वती पै १६,३२,८. १५. ॰पाभि याति पै.

हिङ्ऽकरिक्रती । बृहती । वयःऽधाः । उच्चैःऽघोषा । अभिऽएति । या । व्रतम् ।
त्रीन् । घर्मान् । अभि । वावशाना । मिमाति । मायुम् । पयते । पयःऽभिः ॥ ८ ॥

यामापीनामुपसीदन्त्यापः शाक्वरा वृषभा[1] ये[2] स्वराजः ।
ते [3]वर्षन्ति ते वर्षयन्ति[3] तद्विदे[4] काममूर्जमापः ॥ ९ ॥

याम् । आऽपीनाम् । उपऽसीदन्ति । आपः । शाक्वराः । वृषभाः । ये । स्वऽराजः ।
ते । वर्षन्ति । ते । वर्षयन्ति । तत्ऽविदे । कामम् । ऊर्जम् । आपः ॥ ९ ॥

स्तनयित्नुस्ते[5] वाक् प्रजापते वृषा शुष्मं क्षिपसि भूम्यामधि[6] ।
अग्नेर्वातान्मधुकशा हि जज्ञे मरुतामुग्रा नप्तिः ॥ १० ॥

स्तनयित्नुः । ते । वाक् । प्रजाऽपते । वृषा । शुष्मम् । क्षिपसि । भूम्याम् । अधि ।
अग्नेः । वातात् । मधुऽकशा । हि । जज्ञे[7] । मरुताम् । उग्रा । नप्तिः ॥ १० ॥

यथा सोमः प्रातःसवने अश्विनोर्भवति प्रियः ।
एवा मे अश्विना वर्च आत्मनि ध्रियताम् ॥ ११ ॥

यथा । सोमः । प्रातःऽसवने । अश्विनोः । भवति । प्रियः ।
एव । मे । अश्विना । वर्चः । आत्मनि । ध्रियताम् ॥ ११ ॥

यथा सोमो [8]द्वितीये सवन[8] इन्द्राग्न्योर्भवति प्रियः ।
एवा मे इन्द्राग्नी वर्च आत्मनि ध्रियताम् ॥ १२ ॥

यथा । सोमः । द्वितीये । सवने । इन्द्राग्न्योः । भवति[9] । प्रियः ।
एव । मे । इन्द्राग्नी इति । वर्चः । आत्मनि । ध्रियताम् ॥ १२ ॥

यथा [10]सोमस्तृतीये सवन[10] ऋभूणां भवति प्रियः ।
एवा म ऋभवो वर्च आत्मनि ध्रियताम् ॥ १३ ॥

यथा । सोमः । तृतीये । सवने । ऋभूणाम् । भवति । प्रियः ।
एव । मे । ऋभवः । वर्चः । आत्मनि । ध्रियताम् ॥ १३ ॥

---

१. ऋषभा लाधौ ३,५,१५. २. यां पै १६,३२,१. ३. अर्षन्तु ते वर्षन्तु ते कृण्वन्तु लाधौ. ४. तद्विदेय लाधौ. ५. °त्नुष्टे O. ६. भूम्यां दिवि अ ९,१,२०. ७. यज्ञे P. ८. °यस° पै १६,३३,२. ९. भवति P. १०. °यस° पै १६,३३,२.

मधु जनिषीय[1] मधु वंसिषीय[2] ।
पयस्वानग्न आगमं[3] तं मा सं सृज वर्चसा ॥ १४ ॥

मधु । जनिषीय । मधु । वंसिषीय । 
पयस्वान् । अग्ने । आ । अगमम् । तम् । मा । सम् । सृज । वर्चसा ॥ १४ ॥

[4]सं माऽग्ने[5] वर्चसा सृज सं प्रजया समायुषा ।
विद्युर्मे अस्य देवा इन्द्रो विद्यात् सह ऋषिभिः ॥ १५ ॥[5]

सम् । मा । अग्ने । वर्चसा । सृज । सम् । प्रऽजया । सम् । आयुषा ।
विद्युः । मे । अस्य । देवाः । इन्द्रः । विद्यात् । सह । ऋषिऽभिः ॥ १५ ॥

यथा मधु मधुकृतः संभरन्ति मधावधि ।
एवा मे अश्विना [6]वर्च आत्मनि[7] ध्रियताम् ॥ १६ ॥

यथा । मधु । मधुऽकृतः । सम्ऽभरन्ति । मधौ । अधि ।
एव । मे । अश्विना । वर्चः । आत्मनि । ध्रियताम् ॥ १६ ॥

यथा मक्षा इदं[7] मधु न्यञ्जन्ति मधावधि[8] ।
एवा मे अश्विना [9]वर्चस्तेजो बलमोजश्च[9] ध्रियताम् ॥ १७ ॥

यथा । मक्षाः । इदम् । मधु । निऽअञ्जन्ति । मधौ । अधि ।
एव । मे । अश्विना । वर्चः । तेजः । बलम् । ओजः । च । ध्रियताम् ॥ १७ ॥

यद् गिरिषु पर्वतेषु गोष्वश्वेषु यन्मधु ।
सुरायां सिच्यमानायां यत् तत्र मधु तन्मयि ॥ १८ ॥

यत् । गिरिषु । पर्वतेषु । गोषु । अश्वेषु । यत् । मधु ।
सुरायाम् । सिच्यमानायाम् । यत् । तत्र । मधु । तत् । मयि ॥ १८ ॥

अश्विना सारघेण मा मधुनाऽङ्क्तं[10] शुभस्पती ।

---

१. जनिष्ये शांश्रौ १,५,९. २. सु. W. पै १८,२९,५; वेसु. शंपा. RW. वंशिषीय; वंसिषीय R; वनिष्ये शांश्रौ. ३. आ गंहि ऋ १,२३,२३. ४. समाग्ने B;B[b],S[m],Cs. ५. द्र १०२२, टि ६;७ द्र. ६. बलमोजश्च पै १६,३३,७. ७. मधुजं पै १६,३३,८. ८. दक्षिणामधि पै. ९. वर्चस्तेजश्च पै. १०. °नाक्तं मूको.

यथा वर्चस्वतीं[1] वाचमावदानि जनाँ[2] अनु ॥ १९ ॥

अश्विना । सारघेण । मा । मधुना । अङ्क्तम्[3] । शुभः । पती इति ।
यथा । वर्चस्वतीम् । वाचम् । आऽवदानि । जनान् । अनु ॥ १९ ॥

स्तनयित्नुस्ते वाक् प्रजापते वृषा शुष्मं क्षिपसि [4]भूम्यां दिवि[4] ।
तां पशव उप जीवन्ति सर्वे तेनो[5] सेषमूर्जं पिपर्ति ॥ २० ॥

स्तनयित्नुः । ते । वाक् । प्रजाऽपते । वृषा । शुष्मम् । क्षिपसि । भूम्याम् । दिवि ।
ताम् । पशवः । उप । जीवन्ति । सर्वे । तेनो इति । सा । इषम् । ऊर्जम् । पिपर्ति ॥ २० ॥

पृथिवी [6]दण्डो३ऽन्तरिक्षं गर्भो द्यौः कशा विद्युत् प्रकशो हिरण्ययो बिन्दुः ॥२१॥

पृथिवी । दण्डः । अन्तरिक्षम् । गर्भः । द्यौः । कशा । विऽद्युत् । प्रऽकशः । हिरण्ययः । बिन्दुः ॥

यो वै कशायाः सप्त मधूनि वेद मधुमान् भवति ।
ब्राह्मणश्च राजा च धेनुश्चानड्वांश्च व्रीहिश्च यवश्च मधु सप्तमम् ॥२२॥

यः । वै । कशायाः । सप्त । मधूनि । वेद । मधुऽमान् । भवति । ब्राह्मणः । च । राजा । च ।
धेनुः । च । अनड्वान् । च । व्रीहिः । च । यवः । च । मधु । सप्तमम् ॥ २२ ॥

मधुमान् भवति मधुमदस्याहार्यं भवति ।
मधुमतो[7] लोकान्[8] जयति य एवं वेद ॥ २३ ॥

मधुऽमान् । भवति । मधुऽमत् । अस्य । आऽहार्यम् । भवति ।
मधुऽमतः । लोकान् । जयति । यः । एवम् । वेद ॥ २३ ॥

यद् वीध्रे स्तनयति[9] प्रजापतिरेव तत् प्रजाभ्यः प्रादुर्भवति ।
तस्मात् प्राचीनोपवीतस्तिष्ठे[10] प्रजापतेऽनु मा बुध्यस्वेति ।
[11]अन्वेनं प्रजा अनु प्रजापतिर्बुध्यते[11] य एवं वेद ॥ २४ ॥

---

१. भर्गस्वतीं अ ६,६९,२. २. जनाँ A. ३. अक्रम् J. ४. भूम्यामधि अ ९,१,१०; भूम्यां दिवो पै १६.३३,१०. ५. तेन वो पै. ६. दण्डो३° D,K,Km,Sm.V. ७. मधुमन्तं पै १६,३४,७. ८. लोकां RW; लोकान् सात°.; लोकं पै. ९. स्तनयित्नु पै १६,३४,८. १०. °स्तिष्ठेद् पै १६,३४,९. ११. अन्वेनं प्रजापतिरनु प्रजा बुध्यन्ते पै १६,३४,१०.

यत्। वीध्रे। स्तनयति। प्रजाऽपतिः। एव। तत्। प्रऽजाभ्यः। प्राद्धुः। भवति।
तस्मात्। प्राचीनऽउपवीतः। तिष्ठे। प्रजाऽपते। अनु। मा। बुध्यस्व। इति।
अनु। एनम्। प्रऽजाः। अनु। प्रजाऽपतिः। बुध्यते। यः। एवम्। वेद ॥ २४ ॥

इति प्रथमेऽनुवाके प्रथमं सूक्तम्।

'सपत्नहनम्' इति सूक्तं कामदेवताकम्। काम इच्छारूपो देवः। तं संबोध्य सपत्नक्षयं प्रार्थयते। तद् एवम्—'सपत्नहनम्' इत्यर्थसूक्तेन अभिचारकर्मणि ऋषभं संपातवन्तं कृत्वा द्वेष्याभिमुखं विसृजति। तथा तत्रैव कर्मणि आश्वत्थीः स्वयंपतिताः समिध आदधाति। तथा च सूत्रम्—"'सपत्नहनम्' इत्यृषभं संपातवन्तम् अतिसृजति। आश्वत्थीरवपन्नाः स्वयम्" (कौसू ४९,१-३) इति।

तथा सोमयागे अनूबन्ध्यायाम् अपराजितायां तिष्ठन्त्यां कामदेवतानमस्कारे अस्य सूक्तस्य विनियोगः। तद् उक्तं वैताने—"अनूबन्ध्यायाम् अपराजितायां तिष्ठन्त्यां 'सपत्नहनम्' इति कामं नमस्करोति" (वैताश्रौ २४,१०) इति।

सपत्नहनमृषभं घृतेन कामं शिक्षामि हविषाज्येन।
नीचैः सपत्नान् मम पादय त्वमभिष्टुतो महता वीर्येण ॥ १ ॥

सपत्नऽहनम्। ऋषभम्। घृतेन। कामम्। शिक्षामि। हविषा। आज्येन।
नीचैः। सऽपत्नान्। मम। पादय। त्वम्। अभिऽस्तुतः। महता। वीर्येण ॥ १ ॥

यन्मे मनसो न प्रियं न चक्षुषो यन्मे बभस्ति[1] नाभिनन्दति।
तद् दुष्वप्न्यं प्रति मुञ्चामि सपत्ने कामं स्तुत्वोदहं[2] भिदेयम् ॥२॥

यत्। मे। मनसः। न। प्रियम्। न। चक्षुषः। यत्। मे। बभस्ति। न। अभिऽनन्दति।
तत्। दुःऽस्वप्न्यम्। प्रति। मुञ्चामि। सऽपत्ने। कामम्। स्तुत्वा। उत्। अहम्। भिदेयम् ॥२॥

दुष्वप्न्यं काम दुरितं च कामाप्रजस्तामस्वगतामवर्तिम्।
उग्र ईशानः प्रति मुञ्च तस्मिन् यो अस्मभ्यमंहूरणा चिकित्सात् ॥ ३ ॥

दुःऽस्वप्न्यम्। काम। दुःऽइतम्। च। काम। अप्रजस्ताम्। अस्वगताम्। अवर्तिम्।
उग्रः। ईशानः। प्रति। मुञ्च। तस्मिन्। यः। अस्मभ्यम्। अंहूरणा। चिकित्सात् ॥ ३ ॥

---

१. इदये पै १६,७६,२. २. उदहान्? उदहं पै.

नुदस्व काम प्र णुदस्व कामावर्तिं[1] यन्तु मम ये सपत्नाः ।
तेषां नुत्तानामधमा तमांस्यग्ने वास्तूनि निर्दह त्वम् ॥ ४ ॥

नुदस्व । काम । प्र । नुदस्व । काम । अवर्तिम् । यन्तु । मम । ये । सऽपत्नाः ।
तेषाम् । नुत्तानाम् । अधमा । तमांसि । अग्ने । वास्तूनि । निः । दह । त्वम् ॥ ४ ॥

सा ते काम दुहिता धेनुरुच्यते यामाहुर्वाचं कवयो विराजम् ।
तया सपत्नान् परि वृङ्ग्धि ये मम पर्येनान्[2] प्राणः पशवो जीवनं वृणक्तु ॥५॥

सा । ते । काम । दुहिता । धेनुः । उच्यते । याम् । आहुः । वाचम् । कवयः । विऽराजम् ।
तया । सऽपत्नान् । परि । वृङ्ग्धि । ये । मम । परि । एनान् । प्राणः । पशवः । जीवनम् । वृणक्तु ॥

कामस्येन्द्रस्य वरुणस्य राज्ञो विष्णोर्बलेन सवितुः सवेन ।
अग्नेर्होत्रेण प्र णुदे [3]सपत्नांछम्बीव[3] नावमुदकेषु धीरः ॥ ६ ॥

कामस्य । इन्द्रस्य । वरुणस्य । राज्ञः । विष्णोः । बलेन । सवितुः । सवेन ।
अग्नेः । होत्रेण । प्र । नुदे । सऽपत्नान् । शम्बीऽइव । नावम् । उदकेषु । धीरः ॥ ६ ॥

अध्यक्षो वाजी मम काम उग्रः कृणोतु मह्यमसपत्नमेव ।
विश्वे देवा मम नाथं भवन्तु सर्वे देवा हवमा यन्तु म इमम् ॥ ७ ॥

अधिऽअक्षः । वाजी । मम । कामः । उग्रः । कृणोतु[4] । मह्यम् । असपत्नम् । एव ।
विश्वे । देवाः । मम । नाथम् । भवन्तु । सर्वे । देवाः । हवम् । आ । यन्तु । मे । इमम् ॥ ७ ॥

[5]इदमाज्यं घृतवज्जुषाणाः[6] कामज्येष्ठा इह मादयध्वम्[5] ।
कृण्वन्तो[7] मह्यमसपत्नमेव ॥ ८ ॥

इदम् । आज्यम् । घृतऽवत् । जुषाणाः । कामऽज्येष्ठाः । इह । मादयध्वम् ।
कृण्वन्तः । मह्यम् । असपत्नम् । एव ॥ ८ ॥

---

१. °र्वर्त्तिं A,B,Bᵇ,Sᵐ,Cs. २. पर्यैणान् O. ३. पिशाचान् शम्बीव पै १६,७६,५; °छिम्बीव D,Sᵐ. ४. कृणोति P. ५. यन्म आज्यं घृतमिन्द्र° पै १६,७६,७. ६. °यन्ताम् पै. ७. कृण्वन्तु पै.

इन्द्राग्नी काम सरथं हि भूत्वा नीचैः सपत्नान् मम पादयाथः ।
तेषां पन्नानामधमा[1] तमांस्यग्ने वास्तून्यनुनिर्दह त्वम् ॥ ९ ॥

इन्द्राग्नी इति । काम । सऽरथम् । हि । भूत्वा । नीचैः । सऽपत्नान् । मम । पादयाथः ।
तेषाम् । पन्नानाम् । अधमा । तमांसि । अग्ने । वास्तूनि । अनुऽनिर्दह । त्वम् ॥ ९ ॥

जहि त्वं काम मम ये सपत्ना अन्धा तमांस्यव पादयैनान् ।
निरिन्द्रिया[2] अरसाः सन्तु सर्वे [3]मा ते जीविषुः कतमच्चनाहः[3] ॥ १० ॥

जहि । त्वम् । काम । मम । ये । सऽपत्नाः[4] । अन्धा । तमांसि । अव । पादय । एनान् ।
निःऽइन्द्रियाः । अरसाः । सन्तु । सर्वे । मा । ते[5] । जीविषुः । कतमत् । चन । अहः ॥१०॥

अवधीत् कामो मम ये सपत्ना उरुं लोकमकरन्मह्यमेधतुम् ।
मह्यं नमन्तां प्रदिशश्चतस्रो मह्यं षडुर्वीर्घृतमा वहन्तु ॥११॥

अवधीत् । कामः । मम । ये । सऽपत्नाः । उरुम् । लोकम् । अकरत् । मह्यम् । एधतुम् ।
मह्यम् । नमन्ताम् । प्रऽदिशः । चतस्रः । मह्यम् । षट् । उर्वीः । घृतम् । आ । वहन्तु ॥११॥

तेऽधराञ्चः[6] प्र प्लवन्तां छिन्ना नौरिव बन्धनात् ।
न सायकप्रणुत्तानां[7] पुनरस्ति निवर्तनम् ॥ १२ ॥

ते । अधराञ्चः । प्र । प्लवन्ताम् । छिन्ना । नौःऽइव । बन्धनात्[8] ।
न । सायकऽप्रनुत्तानाम् । पुनः । अस्ति । निऽवर्तनम् ॥ १२ ॥

अग्निर्यव इन्द्रो यवः सोमो यवः । यवयावानो देवा यावयन्त्वेनम्[9] ॥१३॥
अग्निः । यवः । इन्द्रः । यवः । सोमः । यवः । यवऽयावानः । देवाः । यवयन्तु[10] । एनम् ॥

असर्ववीरश्चरतु प्रणुत्तो द्वेष्यो मित्राणां परिवर्ग्यः[11] स्वानाम् ।
उत पृथिव्यामव स्यन्ति विद्युत उग्रो वो देवः प्र [12]मृणत् सपत्नान्[12] ॥१४॥

---

१. सपत्नानाम° पै १६,७६,८. २. अनिन्द्रिया पै १६,७६,९. ३. यथा न जीवात् कतमच्चनैषाम् पै. ४. °पत्नान् P. ५. तेु P,Cp. ६. तेऽध° A,R. ७. वैबाधप्रणु° अ ३,६,७. ८. वर्धनात् P,P[s]. ९. यंत्रयन्त्वेनम् K[m]; °यन्त्वमुम् पै १६,७७,३. १०. यावयन्तु P. ११. परिवर्ग्यः B[b],D,S[m],Cs. १२. मृणत्° K,K[m],V; मृणतम्° Dc.

अर्स॑र्वऽवीरः । च॒र॒तु॒ । प्रऽनु॑त्तः । द्वेष्यः॑ । मि॒त्राणा॑म् । प॒रि॒ऽव॒र्ग्यः॑ । स्वाना॑म् ।
उ॒त । पृ॒थि॒व्याम् । अव॑ । स्य॒न्ति॒ । वि॒ऽद्युतः॑ । उ॒ग्रः । वः॒ । दे॒वः । प्र । मृ॒ण॒त्[1] । स॒ऽपत्ना॑न् ॥

च्यु॒ता चे॒यं बृ॑ह॒त्यच्यु॑ता च वि॒द्युद् बि॑भर्ति स्तनयि॒त्नूंश्च॒ सर्वा॑न् ।
उ॒द्यन्ना॑दि॒त्यो[2] द्रवि॑णेन॒ तेज॑सा नी॒चैः[3] स॒पत्ना॑न् नुदतां मे॒ सह॑स्वान् ॥१५॥

च्यु॒ता । च॒ । इ॒यम् । बृ॒ह॒ती । अच्यु॑ता । च॒ । वि॒ऽद्युत् । बि॒भ॒र्ति॒ । स्त॒न॒यि॒त्नून् । च॒ । सर्वा॑न् ।
उ॒त्ऽयन् । आ॒दि॒त्यः । द्रवि॑णेन । तेज॑सा । नी॒चैः । स॒ऽपत्ना॑न् । नु॒द॒ता॒म् । मे॒ । सह॑स्वान् ॥१५॥

यत् ते॑ काम॒ शर्म॑ त्रि॒वरू॑थमु॒द्भु[4] ब्रह्म॒ वर्म॒ वित॑तमनति॒व्या॒ध्यं᳡ कृ॒तम् ।
तेन॑ स॒पत्ना॑न् परि॑ वृङ्ग्धि॒ ये मम॒ पर्यै॑नान्[5] प्रा॒णः प॒शवो॒ जीव॑नं वृणक्तु ॥१६॥

यत् । ते॒ । काम॑[6] । शर्म॑ । त्रि॒ऽवरू॑थम् । उ॒त्ऽभु । ब्रह्म॑ । वर्म॑ । विऽत॑तम् । अ॒न॒ति॒ऽव्या॒ध्य᳡म् । कृ॒तम् । तेन॑ । स॒ऽपत्ना॑न् । परि॑ । वृ॒ङ्ग्धि॒ । ये । मम॑ । परि॑ । ए॒ना॒न् । प्रा॒णः ।
प॒शवः॑ । जीव॑नम् । वृ॒ण॒क्तु॒ ॥ १६ ॥

येन॑ दे॒वा असु॑रा॒न् प्राणु॑दन्त॒ येनेन्द्रो॒ दस्यू॑नध॒मं तमो॑ नि॒नाय॑[7] ।
तेन॒ त्वं का॑म॒ मम॒ ये स॒पत्ना॒स्ताना॒स्माल्लो॒कात् प्र णु॑दस्व दू॒रम्[8] ॥ १७ ॥

येन॑ । दे॒वाः । असु॑रान् । प्र॒ऽअनु॑दन्त । येन॑ । इन्द्रः॑ । दस्यू॑न् । अ॒ध॒मम् । तमः॑ । नि॒नाय॑ ।
तेन॑ । त्वम् । का॒म॒ । मम॑ । ये । स॒ऽपत्नाः॑ । तान् । अ॒स्मात् । लो॒कात् । प्र । नु॒द॒स्व॒ । दू॒रम् ॥

यथा॑ दे॒वा असु॑रा॒न् प्राणु॑दन्त॒ यथेन्द्रो॒ दस्यू॑नध॒मं तमो॑ बबा॒धे[9] ।
तथा॒ त्वं का॑म॒ मम॒ ये स॒पत्ना॒स्ताना॒स्माल्लो॒कात् प्र णु॑दस्व दू॒रम् ॥ १८ ॥

यथा॑ । दे॒वाः । असु॑रान् । प्र॒ऽअनु॑दन्त । यथा॑ । इन्द्रः॑ । दस्यू॑न् । अ॒ध॒मम् । तमः॑ । ब॒बा॒धे ।
तथा॑ । त्वम् । का॒म॒ । मम॑ । ये । स॒ऽपत्नाः॑ । तान् । अ॒स्मात् । लो॒कात् । प्र । नु॒द॒स्व॒ । दू॒रम् ॥

कामो॑ ज॒ज्ञे प्र॑थ॒मो नैनं॑ दे॒वा[10] आ॑पुः पि॒तरो॒ न मर्त्याः॑ ।
तत॒स्त्वम॑सि॒ ज्याया॑न् वि॒श्वहा॑ म॒हांस्तस्मै॑ ते काम॒ नम॒ इत् कृ॑णोमि ॥१९॥

---

१. मृणन् P; मृणन् K. २. वेपाना॑ पै १६,७७,५. ३. उयन् पै. ४. °मुदु K; °मुद्भृद् पै १६,७७,१. ५. पर्यैणान् O. ६. काम॒ > कामं P. ७. बबाधे पै १६,७७,६. ८. सर्वान् पै. ९. बबाधे Sm. १०. देवामः पै १६,७७,८.

कार्मः । जज्ञे । प्रथमः । न । एनम् । देवाः । आपुः । पितरः । न । मर्त्याः ।
ततः । त्वम् । असि । ज्यायान् । विश्वहा । महान् । तस्मै । ते । काम । नमः । इत् । कृणोमि ॥

यावती द्यावापृथिवी वरिम्णा यावदापः सिष्यदुर्यावदग्निः[1] ।
ततस्त्वमसि ज्यायान् विश्वहा महांस्तस्मै ते काम नम इत् कृणोमि ॥२०॥

यावती इति । द्यावापृथिवी इति । वरिम्णा । यावत् । आपः । सिस्यदुः[2] । यावत् । अग्निः ।
ततः । त्वम् । असि । ज्यायान् । विश्वहा । महान् । तस्मै । ते । काम । नमः । इत् । कृणोमि ॥२०॥

यावतीर्दिशः प्रदिशो विषूचीर्यावतीराशा अभिचक्षणा दिवः ।
ततस्त्वमसि ज्यायान् विश्वहा महांस्तस्मै ते काम नम इत् कृणोमि ॥२१॥

यावतीः । दिशः । प्रऽदिशः । विषूचीः । यावतीः । आशाः । अभिऽचक्षणाः । दिवः ।
ततः । त्वम् । असि । ज्यायान् । विश्वहा । महान् । तस्मै । ते । काम । नमः । इत् । कृणोमि ॥२१॥

यावतीर्भृङ्गा जत्वः कुरूरवो यावतीर्वघा[3] वृक्षसर्प्यो बभूवुः ।
ततस्त्वमसि ज्यायान् विश्वहा महांस्तस्मै ते काम नम इत् कृणोमि ॥२२॥

यावतीः । भृङ्गाः । जत्वः[4] । कुरूरवः । यावतीः । वघाः । वृक्षऽसर्प्यः । बभूवुः ।
ततः । त्वम् । असि । ज्यायान् । विश्वहा । महान् । तस्मै । ते । काम । नमः । इत् । कृणोमि ॥

ज्यायान् निमिषतोऽसि[5] तिष्ठतो ज्यायान्त्समुद्रादसि काम मन्यो ।
ततस्त्वमसि ज्यायान् विश्वहा महांस्तस्मै ते काम नम इत् कृणोमि ॥२३॥

ज्यायान् । निऽमिषतः । असि । तिष्ठतः । ज्यायान् । समुद्रात् । असि । काम । मन्यो इति ।
ततः । त्वम् । असि । ज्यायान् । विश्वहा । महान् । तस्मै । ते । काम । नमः । इत् । कृणोमि ॥

न वै वातश्चन काममाप्नोति[6] नाग्निः[7] सूर्यो नोत चन्द्रमाः ।
ततस्त्वमसि ज्यायान् विश्वहा महांस्तस्मै ते काम नम इत् कृणोमि ॥२४॥

न । वै । वातः । चन । कामम् । आप्नोति । न । अग्निः । सूर्यः । न । उत । चन्द्रमाः ।
ततः । त्वम् । असि । ज्यायान् । विश्वहा । महान् । तस्मै । ते । काम । नमः । इत् । कृणोमि ॥

---

१. सिस्यदु° O,R². २. सिस्यदुः P. ३. °वघा A,Kᵐ,R; °यघा Bᵇ. ४. जुत्वः J,Bpᵇ. ५. निमिषतो° A,R. ६. काममाप पै १६,६८,१. ७. नाग्निः A,B,Bᵇ,K.

यास्ते शिवास्तन्वः काम भद्रा याभिः सत्यं भवति यद् वृणीषे ।
ताभिष्ट्वमस्माँ[1] अभिसंविशस्वान्यत्र[2] पापीरप वेशया धियः ॥ २५ ॥

याः । ते । शिवाः । तन्वः । काम । भद्राः । याभिः । सत्यम् । भवति । यत् । वृणीषे ।
ताभिः । त्वम् । अस्मान् । अभिऽसंविशस्व । अन्यत्र । पापीः । अप । वेशय । धियः ॥ २५ ॥

इति प्रथमेऽनुवाके द्वितीयं सूक्तम् ।

इति प्रथमोऽनुवाकः ।

'उपमिताम्' इति सूक्तेन शालासवं ददाति सवयज्ञविधानेन स्वर्गकामः इति विनियोगमाला । सूत्रमपि—"'उपमिताम्' इति यच्छालया सह दास्यन्भवति तदन्तर्भवत्यपिहितम्" ( कौसू ६६,२२ ) इत्यादि ।

वंशसंदंशादिबद्धां शालां दाता प्रतिग्रहीत्रे उद्घाटय प्रददाति । शाला नाम गृहम् ।

उपमितां[3] प्रतिमितामथो[4] परिमितामुत[5] ।
शालाया विश्ववाराया नद्धानि वि चृतामसि[6] ॥ १ ॥

उपऽमिताम् । प्रतिऽमिताम् । अथो इति । परिऽमिताम् । उत ।
शालायाः । विश्वऽवारायाः । नद्धानि[7] । वि । चृतामसि[8] ॥ १ ॥

यत् ते नद्धं विश्ववारे पाशो ग्रन्थिश्च यः कृतः ।
बृहस्पतिरिवाहं बलं वाचा वि स्रंसयामि[9] तत् ॥ २ ॥

यत् । ते । नद्धम् । विश्वऽवारे । पाशः । ग्रन्थिः । च । यः । कृतः ।
बृहस्पतिःऽइव । अहम् । बलम् । वाचा । वि । स्रंसयामि[10] । तत्[11] ॥ २ ॥

आ ययाम सं ववर्ह ग्रन्थींश्चकार ते दृढान् ।
परूंषि विद्वांछस्तेवेन्द्रेण[12] वि चृतामसि ॥ ३ ॥

आ । ययाम । सम् । ववर्ह । ग्रन्थीन् । चकार । ते । दृढान् ।
परूंषि । विद्वान् । शस्ताऽइव । इन्द्रेण । वि । चृतामसि ॥ ३ ॥

---

१. °मस्मान् पै १६,७८,८. २. अपसंविश° पै. ३. °मितः पै १६,३९,१. ४. °मितोऽथो पै. ५. °मितश्च यः पै. ६. चृतामसि R,Sm ७. प्रद्धानि P¹. ८. चृतामसि P¹. ९. स्रंशयामि B,Bb,Cs; ध्वंसयामि Km,Dc. १०. स्रंशयामि Cp, Bp¹. ११. तन् Bp¹. १२. विद्वान्छ° D,Sm; विद्वान्छ° R; विद्वान् न° पै १६,३९,२.

वंशानां ते नहनानां प्राणाहस्य तृणस्य च ।
पक्षाणां विश्ववारे ते नद्धानि वि चृतामसि ॥ ४ ॥

वंशानाम् । ते । नहनानाम् । प्राणाहस्य । तृणस्य । च ।
पक्षाणाम् । विश्वऽवारे । ते । नद्धानि । वि । चृतामसि ॥ ४ ॥

संदंशानां पलदानां परिष्वञ्जल्यस्य[1] च ।
[2]इदं मानस्य पत्न्या[2] नद्धानि वि चृतामसि ॥ ५ ॥

सम्ऽदंशानाम् । पलदानाम् । परिऽस्वञ्जल्यस्य[1] । च ।
इदम् । मानस्य । पत्न्याः । नद्धानि । वि । चृतामसि ॥ ५ ॥

यानि तेऽन्तः शिक्यान्याबेधू रण्याय कम् ।
प्र ते तानि[3] चृतामसि शिवा[4] [5]मानस्य पत्नि[5] न उद्धिता तन्वे भव ॥६॥

यानि । ते । अन्तः । शिक्यानि[6] । आऽबेधुः । रण्याय । कम् ।
प्र । ते । तानि । चृतामसि । शिवा । [5]मानस्य । पत्नि[5] । नः । उद्धिता । तन्वे । भव ॥६॥

हविर्धानमग्निशालं पत्नीनां सदनं सदः । सदो देवानामसि देवि शाले ॥७॥

हविःऽधानम् । अग्निऽशालम् । पत्नीनाम् । सदनम् । सदः ।
सदः । देवानाम् । असि । देवि । शाले ॥ ७ ॥

अक्षुमोपशं[7] विततं सहस्राक्षं विषूवति ।
अवनद्धमभिहितं[8] ब्रह्मणा वि चृतामसि ॥ ८ ॥

अक्षुम् । ओपशम् । विऽततम् । सहस्रऽअक्षम् । विषुऽवति ।
अवऽनद्धम् । अभिऽहितम् । ब्रह्मणा । वि । चृतामसि ॥ ८ ॥

[9]यस्त्वा शाले[9] प्रतिगृह्णाति येन चासि मिता त्वम् ।
उभौ [10]मानस्य पत्नि[10] तौ जीवतां जरदष्टी ॥ ९ ॥

---

१. °ल्पस्य A.B[b],K.K[m],Cs,J; °ल्य° अथवा °ल्प° इति संदेहः D,R,S[m],P,P[1]. २. सर्वा मानस्य पत्नि ते पै १६,३९,४. ३. ता वि पै १६,३९,६. ४. सर्वा पै. ५. तु.RW, WI, पं; वैतु. A,B,B[b],D,K,K[m],R,S[m] V,Dc,Cs,WM P,P[1],J मानस्य पत्नि, Cp (संशो·य), शंपा. मानस्य पत्नी. ६. शिक्यानि P,J. ७. अक्षमोपशं K,K[m],V, Dc. ८. अविनद्धमपिहितं पै १६,३९,८. ९. यश्च त्वा पै १६,३९,९. १०. मानस्य पत्नि मूको. (तु. शंपा. WM).

यः । त्वा । शाले । प्रतिऽगृह्णाति । येन॑ । च । असि॑ । मिता । त्वम् ।
उभौ । [1]मानस्य । पत्नि[1] । तौ । जीव॑ताम् । जरदष्टी इति॑ जरत्ऽअष्टी ॥ ९ ॥

अमुत्रैनमा[2] गच्छताद् दृढा[3] [4]नद्धा परिष्कृता[4] ।
यस्यास्ते [5]विचृतामस्यङ्गमङ्गं परुष्परुः ॥ १० ॥

अमुत्र॑ । एनम् । आ । गच्छतात् । दृढा । नद्धा । परिष्कृता ।
यस्याः । ते । विऽचृतामसि । अङ्गम्ऽअङ्गम् । परुःऽपरुः ॥ १० ॥

यस्त्वा शाले निमिमाय संजभार वनस्पतीन् ।
प्रजायै चक्रे त्वा शाले परमेष्ठी प्रजापतिः ॥ ११ ॥

यः । त्वा । शाले । निऽमिमाय । सम्ऽजभार । वनस्पतीन् ।
प्रऽजायै । चक्रे । त्वा । शाले । परमेऽस्थी । प्रजाऽपतिः ॥ ११ ॥

नमस्तस्मै नमो दात्रे शालापतये च कृण्मः[7] ।
नमोऽग्नये प्रचरते पुरुषाय च ते नमः ॥ १२ ॥

नमः । तस्मै । नमः । दात्रे । शालाऽपतये । च । कृण्मः ।
नमः । अग्नये । प्रऽचरते । पुरुषाय । च । ते । नमः ॥ १२ ॥

गोभ्यो अश्वेभ्यो नमो यच्छालायां विजायते ।
विजावति प्रजावति वि ते पाशांश्चृतामसि ॥ १३ ॥

गोभ्यः । अश्वेभ्यः । नमः । यत् । शालायाम् । विऽजायते ।
विजाऽवति । प्रजाऽवति । वि । ते । पाशान् । चृतामसि ॥ १३ ॥

अग्निमन्तश्छादयासि पुरुषान्[8] पशुभिः सह ।
विजावति प्रजावति वि ते पाशांश्चृतामसि ॥ १४ ॥

---

1. मानस्य । पत्नि P,P², J,Cp. 2. अनुर्येणमा Bᵇ,K,Cs,O 3. त्रिधा पै १६,३९,१० [मूको.]. 4. नद्धापिनिह्विता पै. 5. विचृताम॰ Sᵐ. 6. पूर्वां पै १६,४०,३. 7. कृण्मसि पै १६,४०,४. 8. परुंशान् K,Kᵐ.

अग्निम् । अन्तः । छादयसि[1] । पुरुषान्[2] । पशुऽभिः । सह ।
विजाऽवति । प्रजाऽवति । वि । ते । पाशान् । चृतामसि ॥ १४ ॥

अन्तरा द्यां च पृथिवीं च यद् व्यचस्तेन शालां प्रति गृह्णामि[3] त इमाम् ।
यदन्तरिक्षं रजसो विमानं तत् कृण्वेऽहमुदरं शेवधिभ्यः ।
[4]तेन शालां[4] प्रति गृह्णामि तस्मै ॥ १५ ॥

अन्तरा । द्याम् । च । पृथिवीम् । च । यत् । व्यचः । तेन । शालाम् । प्रति । गृह्णामि । ते[5] । इमाम् ।
यत् । अन्तरिक्षम् । रजसः । विऽमानम् । तत् । कृण्वे । अहम् । उदरम् । शेवधिऽभ्यः ।
तेन । शालाम् । प्रति । गृह्णामि । तस्मै ॥ १५ ॥

ऊर्जस्वती पयस्वती[6] पृथिव्यां निमिता मिता ।
विश्वान्नं बिभ्रती शाले मा हिंसीः प्रतिगृह्णतः[7] ॥ १६ ॥

ऊर्जस्वती । पयस्वती । पृथिव्याम् । निऽमिता । मिता ।
विश्वऽअन्नम् । बिभ्रती । शाले । मा । हिंसीः । प्रतिऽगृह्णतः ॥ १६ ॥

तृणैरावृता पलदान् वसाना रात्रीव शाला जगतो निवेशनी ।
मिता पृथिव्यां तिष्ठसि हस्तिनीव पद्वती ॥ १७ ॥

तृणैः । आऽवृता । पलदान् । वसाना । रात्रीऽइव । शाला । जगतः । निऽवेशनी ।
मिता । पृथिव्याम् । तिष्ठसि । हस्तिनीऽइव । पत्ऽवती ॥ १७ ॥

इटस्य[8] ते वि चृताम्यपिनद्धमपोर्णुवन्[9] ।
वरुणेन समुब्जितां मित्रः प्रातर्व्युब्जतु ॥ १८॥

इटस्य । ते । वि । चृतामि । अपिऽनद्धम् । अपऽऊर्णुवन्[10] ।
वरुणेन । समऽउब्जिताम् । मित्रः । प्रातः । वि । उब्जतु ॥ १८ ॥

[11]ब्रह्मणा शालां निमितां[11] कविभिर्निमितां[12] मिताम् ।

---

१. छादयासि P. २. परुषान् P,J; पुरुषान् Cp. ३. गृह्णामि A.B.B[1],D, K,K[m],R,S[m],V,Cs. ४. पर्यौ छाक्षौ पं १६,४०,६. ५. तं P[s],J. ६. पुयवती पै १६,४०,२. ७. °गृह्णतः पं. ८. इटस्य A; इटस्य K[m],Dc ९. °मुपोर्णुवन् K. १०. उपऽऊर्णुवन् J. ११. चतुरर्धानि परिपद्यते पं १६,४१,१. १२. °निर्मितां P[s].

'इन्द्राग्नी रक्षतां' शालाममृतौ सोम्यं' सदः ॥ १९ ॥

ब्रह्मणा । शालाम् । निऽमिताम् । कविऽभिः । निऽमिताम् । मिताम् ।
इन्द्राग्नी इति । रक्षताम् । शालाम् । अमृतौ । सोम्यम् । सदः ॥ १९ ॥

कुलायेऽधि कुलायं कोशे कोशः समुब्जितः ।
तत्र मर्तो' वि जायते यस्माद् विश्वं प्रजायते ॥ २० ॥

कुलाये । अधि । कुलायम् । कोशे । कोशः । समऽउब्जितः ।
तत्र । मर्तः । वि । जायते । यस्मात् । विश्वम् । प्रऽजायते ॥ २० ॥

या 'द्विपक्षा चतुष्पक्षा' षट्पक्षा या निमीयते ।
अष्टापक्षां दशपक्षां शालां मानस्य पत्नीमग्निर्गर्भ इवा शये ॥ २१ ॥

या । द्विऽपक्षा । चतुःऽपक्षा । षट्ऽपक्षा । या । निऽमीयते ।
अष्टाऽपक्षाम् । दशऽपक्षाम् । शालाम् । मानस्य । पत्नीम् । अग्निः । गर्भःऽइव । आ । शये ॥

प्रतीचीं त्वा प्रतीचीनः शाले प्रैम्यहिंसतीम् ।
अग्निर्ह्य१न्तरापश्चर्तस्य' प्रथमा द्वाः ॥ २२ ॥

प्रतीचीम् । त्वा । प्रतीचीनः । शाले । प्र । एमि । अहिंसतीम् ।
अग्निः । हि । अन्तः । आपः । च । ऋतस्य । प्रथमा । द्वाः ॥ २२ ॥

इमा आपः प्र भराम्ययक्ष्मा' यक्ष्मनाशनीः ।
गृहानुप' प्र सीदाम्यमृतेन सहाग्निना ॥ २३ ॥

इमाः । आपः । प्र । भरामि । अयक्ष्माः । यक्ष्मऽनाशनीः ।
गृहान् । उप । प्र । सीदामि । अमृतेन । सह । अग्निना ॥ २३ ॥

मा नः पाशं' प्रति मुचो' गुरुर्भारो लघुर्भव[10] ।
वधूमिव त्वा शाले[11] यत्रकामं भरामसि ॥ २४ ॥

---

१. विधाबं विभर्ता पै १६,४१,१. २. सौम्यो P³. ३. मर्त्यो पै १६,४०,१०. ४. °क्षाध° R; °क्षाघ° A; °क्षां च° Kᵐ,V,Dc. ५. °पंश्च ऋतस्यं RW. पै १६,४१,४. ६. हराम्य° पै १६,४१,३. ७. गृहानभि पै. ८. पाशान् पै १६,४१,२. ९. मुचो Bᵏ,Cs. १०. °भंरः पै. ११. शाले Sᵐ.

मा । नः । पाशम् । प्रति । मुचः[1] । गुरुः । भारः । लघुः । भव ।
वधूम्ऽइव । त्वा । शाले । यत्रऽकामम् । भरामसि ॥ २४ ॥

प्राच्या दिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः[2] ॥२५॥

प्राच्याः । दिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥२५॥

दक्षिणाया[3] दिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः ॥२६॥

दक्षिणायाः । दिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ २६ ॥

प्रतीच्या दिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः ॥२७॥

प्रतीच्याः । दिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ २७ ॥

उदीच्या दिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः ॥२८॥

उदीच्याः । दिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ २८ ॥

ध्रुवाया दिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः ॥ २९ ॥

ध्रुवायाः । दिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ २९ ॥

ऊर्ध्वाया दिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः ॥ ३० ॥

ऊर्ध्वायाः । दिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ ३० ॥

दिशोदिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः ॥ ३१ ॥

दिशःऽदिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ ३१ ॥

इति द्वितीयेऽनुवाके प्रथमं सूक्तम् ।

ब्राह्मणो वृषभं हत्वा तन्मांसं भिन्नभिन्नदेवताभ्यो जुहोति । तत्र वृषभस्य प्रशंसा तदङ्गानां च कतमानि कतमदेवेभ्यः प्रियाणि भवन्ति तद्विवेचनम् । वृषभवलिहवनस्य महत्त्वं च वर्ण्यते । तदुत्पन्नं श्रेयश्च स्तूयते । सांप्रदायिकास्तु एवं विनियुञ्जते सूक्तम् । तद्यथा — वृषोत्सर्गे 'साहस्रः' इत्यर्धसूक्तेन ऋषभं संपात्य अभिमन्त्र्य विसृजेत् । 'रेतोधार्यं' (कौसू २४,२०) इत्यंतः पञ्चभिः सौत्रमन्त्रैः 'एतं वो युवानम्' ( अ ९,४,२४ ) इत्यृचा च वत्सस्याभिमन्त्रणं कृत्वा प्रोक्षणं कुर्यात् ।

---

१. मुच्यः P,P[1].    २. स्वाहेभ्यः एवमुत्तरत्र B.    ३. दक्षिणस्या पै १९,४१,१.

**तथा अनेन सूक्तेन पुष्टिकामो वशाविधानेन** (तु. कौसू ४४) **ऋषभेण इन्द्रं यजते ।**

**तथा अनेन सूक्तेन संपत्कामः पौर्णमास्यां वशाविधानेन श्वेतेन ऋषभेण इन्द्रं यजते ।**

**तद् उक्तं कौशिकेन—** " 'इन्द्रस्य कुक्षिः' ( अ ७,१११ ), 'साहस्रः' इत्यृषभं संपातवन्तमतिसृजति । रेतोधायै त्वाऽतिसृजामि वयोधायै त्वाऽतिसृजामि यूथत्वायै त्वाऽतिसृजामि गणत्वायै त्वाऽतिसृजामि सहस्रपोषायै त्वाऽतिसृजाम्यपरिमितपोषायै त्वाऽतिसृजामि । 'एतं वो युवानम्' ( अ ९,४,२४ ) इति पुराणं प्रचृत्य[१] नवमुत्सृजति[२] संप्रोक्षति । उत्तरेण पुष्टिकाम ऋषभेणेन्द्रं यजते । संपत्कामः श्वेतेन पौर्णमास्याम्" ( कौसू २४,१९-२३ ) **इति ।**

**तथा ऋषभसवे अनेन सूक्तेन निरुप्तहविरभिमर्शनं संपातं दातृवाचनं दानं च कुर्यात् । तद् आह कौशिकः—** " 'साहस्रः' इत्यृषभम्" ( कौसू ६६,१८ ) **इति । अभिमर्शनादिषु सूत्रं तु** 'आशानाम्' ( अ १,३१ ) **इति सूक्त उदाहृतम् ।**

**परिशिष्टेऽपि वृषोत्सर्गे अस्य सूक्तस्य विनियोगः कृतः । तथा चोक्तम्—** " 'साहस्रस्त्वेषः' इति ऋषभं संपातवन्तं कृत्वा" ( अप १८³,१,७ ) **इति ।**

**साहस्रस्त्वेष ऋषभः पयस्वान् विश्वा रूपाणि वक्षणासु बिभ्रत् ।**
**भद्रं दात्रे यजमानाय शिक्षन् बार्हस्पत्य उस्रियस्तन्तुमातान् ॥ १ ॥**

साहस्रः[३] । त्वेषः । ऋषभः । पयस्वान् । विश्वा । रूपाणि । वक्षणासु । बिभ्रत् ।
भद्रम् । दात्रे । यजमानाय । शिक्षन् । बार्हस्पत्यः । उस्रियः । तन्तुम् । आ । अतान् ॥१॥

**अपां यो अग्रे प्रतिमा बभूव प्रभूः सर्वस्मै पृथिवीव देवी ।**
**पिता वत्सानां पतिरघ्न्यानां[४] साहस्रे पोषे अपि नः कृणोतु ॥ २ ॥**

अपाम् । यः । अग्रे । प्रतिऽमा । बभूव । प्रऽभूः । सर्वस्मै । पृथिवीऽइव । देवी ।
पिता । वत्सानाम् । पतिः । अघ्न्यानाम् । साहस्रे । पोषे[५] । अपि । नः । कृणोतु ॥ २ ॥

**पुमानन्तर्वान्त्स्थविरः पयस्वान् वसोः[६] कबन्धमृषभो बिभर्ति ।**
**तमिन्द्राय पथिभिर्देवयानैर्हुतमग्निर्वहतु जातवेदाः ॥ ३ ॥**

पुमान् । अन्तःऽवान् । स्थविरः । पयस्वान् । वसोः । कबन्धम्[७] । ऋषभः । बिभर्ति ।
तम्[८] । इन्द्राय । पथिऽभिः । देवऽयानैः । हुतम् । अग्निः । वहतु । जातऽवेदाः ॥ ३ ॥

---

१. प्रवृत्य Bl. २. °जते Bl. ३. सहस्रः P. ४. °रघ्न्यानां K^m.
५. पोषे P. ६. वसोष्क° W. ७. कबंधम् P. ८. तद् P.

पिता वत्सानां पतिरघ्न्यानामथो[1] पिता महतां गर्गराणाम् ।
वत्सो[2] जरायु[3] प्रतिधुक् पीयूषं आमिक्षा [4]घृतं तद् वस्य[4] रेतः[5] ॥ ४ ॥

पिता । वत्सानाम् । पतिः । अघ्न्यानाम् । अथो इति । पिता । महताम् । गर्गराणाम् ।
वत्सः । जरायु[3] । प्रतिऽधुक् । पीयूषः । आमिक्षा । घृतम् । तत् । ऊं इति । अस्य । रेतः ॥४॥

देवानां भाग[6] उपनाह [7]एषोऽपां रस ओषधीनां घृतस्य[7] ।
सोमस्य भक्षमवृणीत[8] शक्रो[9] बृहन्नद्रिरभवद् यच्छरीरम्[10] ॥ ५ ॥

देवानाम् । भागः । उपऽनाहः । एषः । अपाम् । रसः । ओषधीनाम् । घृतस्य ।
सोमस्य । भक्षम् । अवृणीत । शक्रः । बृहन्[11] । अद्रिः । अभवत् । यत् । शरीरम् ॥ ५ ॥

सोमेन[12] पूर्णं कलशं बिभर्षि त्वष्टा रूपाणां जनिता पशूनाम् ।
शिवास्ते सन्तु प्रजन्व[13] इह या इमा न्य१स्मभ्यं[14] स्वधिते यच्छ या अमूः ॥६॥

सोमेन । पूर्णम् । कलशम् । बिभर्षि । त्वष्टा । रूपाणाम् । जनिता । पशूनाम् । शिवाः । ते । सन्तु ।
[15]प्रऽजन्वः । इह । याः । इमाः । नि । अस्मभ्यम् । स्वऽधिते । यच्छ । याः । अमूः ॥ ६ ॥

आज्यं बिभर्ति घृतमस्य रेतः [16]साहस्रः पोषस्तमु[16] यज्ञमाहुः ।
इन्द्रस्य रूपमृषभो[17] वसानः सो अस्मान् देवाः शिव ऐतु दत्तः ॥ ७ ॥

आज्यम् । बिभर्ति । घृतम् । अस्य । रेतः । साहस्रः । पोषः । तम् । ऊं इति । यज्ञम् । आहुः ।
इन्द्रस्य । रूपम् । ऋषभः । वसानः । सः । अस्मान् । देवाः । शिवः । आ । एतु । दत्तः ॥७॥

इन्द्रस्यौजो वरुणस्य बाहू अश्विनोरंसौ मरुतामियं ककुत् ।
बृहस्पतिं संभृतमेतमाहुर्ये धीरासः कवयो ये मनीषिणः ॥ ८ ॥

इन्द्रस्य । ओजः । वरुणस्य । बाहू इति । अश्विनोः । अंसौ । मरुताम् । इयम् । ककुत् ।
बृहस्पतिम् । सम्ऽभृतम्[18] । एतम् । आहुः । ये । धीरासः । कवयः । ये । मनीषिणः ॥८॥

---

१. °रघ्नियाना° तै ३,३,९,२; °नामुतायं मै २,५,१०. २. गर्भो काठ १३,९. ३. जरायुः B,B[b], R,S[m],Cs,Cp; काठ. पै १६,२४,५. ४. मस्तु घृतमस्य तै. मै. काठ. ५. योनिः मै. काठ. ६. एष तै ३,३,९,१ मै. काठ. ७. आसीदपां गर्भ ओषधीषु न्यक्तः तै.; आसीदपां पतिर्वृषभ ओषधीनाम् मै.; आसीदपां पतिरोषधीनाम् काठ. ८. द्रप्सम° तै. मै. काठ. पै १६,२४,४. ९. पूषा तै. मै. काठ. १०. वर्ष्मपाम् तै ३,३,९,२; यत्तदासीत् मै. काठ. ११. बृहन् P,J. १२. सोमस्य पै १६,२४,६. १३. प्रदर्मा पै. १४. न्य१° B,B[b],Dc,Cs १५. प्रऽजन्वः J. १६. सहस्रपोष° पै १६,२४,८ [मूको.]. १७. रूपं वृषभो पै. १८. सम्ऽभृतम् P[a].

दैवीर्विशः पर्यस्वाना तनोषि त्वामिन्द्रं त्वां सरस्वन्तमाहुः ।
सहस्रं स एकमुखा[1] ददाति यो ब्राह्मण ऋषभमाजुहोति ॥ ९ ॥

दैवीः । विशः । पर्यस्वान् । आ । तनोषि । त्वाम् । इन्द्रम् । त्वाम् । सरस्वन्तम् । आहुः ।
सहस्रम् । सः । एकऽमुखाः । ददाति । यः । ब्राह्मणे । ऋषभम् । आऽजुहोति ॥ ९ ॥

बृहस्पतिः सविता ते वयो[2] दधौ त्वष्टुर्वायोः पर्यात्मा त[3] आभृतः ।
अन्तरिक्षे मनसा त्वा जुहोमि बर्हिष्टे द्यावापृथिवी [4]उभे स्ताम्[4] ॥१०॥

बृहस्पतिः । सविता । ते । वयः । दधौ । त्वष्टुः । वायोः । परि । आत्मा । ते । आऽभृतः ।
अन्तरिक्षे । मनसा । त्वा । जुहोमि । बर्हिः । ते । द्यावापृथिवी इति । उभे इति । स्ताम् ॥

य इन्द्र इव देवेषु गोष्वेति विवावदत् ।
[5]तस्य ऋषभस्याङ्गानि[5] ब्रह्मा सं स्तौतु भद्रया ॥ ११ ॥

यः । इन्द्रःऽइव । देवेषु । गोषु । एति । विऽवावदत् ।
तस्य । ऋषभस्य । अङ्गानि । ब्रह्मा । सम् । स्तौतु । भद्रया ॥ ११ ॥

पार्श्वे आस्तामनुमत्या भगस्यास्तामनूवृजौ[6] ।
अष्ठीवन्तावब्रवीन्मित्रो[7] ममैतौ केवलाविति ॥ १२ ॥

पार्श्वे इति । आस्ताम् । अनुऽमत्याः । भगस्य । आस्ताम् । अनुऽवृजौ ।
अष्ठीवन्तौ । अब्रवीत् । मित्रः । मम । एतौ । केवलौ । इति ॥ १२ ॥

भसदासीदादित्यानां श्रोणी आस्तां बृहस्पतेः ।
पुच्छं वातस्य देवस्य तेन धूनोत्योषधीः ॥ १३ ॥

भसत् । आसीत् । आदित्यानाम् । श्रोणी इति । आस्ताम् । बृहस्पतेः ।
पुच्छम् । वातस्य । देवस्य । तेन । धूनोति । ओषधीः ॥ १३ ॥

गुदा आसन्त्सिनीवाल्याः सूर्यायास्त्वचमब्रुवन् ।
उत्थातुरब्रुवन् पद [8]ऋषभं यदकल्पयन्[8] ॥ १४ ॥

---

१. एकमेखा Km.　२. मनो पै १६,२४,१०.　३. न K.　४. भभूताम् पै.
५. तस्यर्षभ° O.　६. °मनूवृजौ Bb,K,Km,V,Dc.　७. °न्मृत्युर् पै १६,२५,२.
८. यदृषभं व्यकल्पयन् पै १६,२५,४.

गुदाः । आसन् । सिनीवाल्याः । सूर्यायाः । त्वचम् । अब्रुवन् ।
उत्थातुः । अब्रुवन् । पदः । ऋषभम् । यत् । अकल्पयन् ॥ १४ ॥

क्रोड आसीज्जामिशंसस्य सोमस्य कलशो धृतः ।
[1]देवाः संगत्य[1] यत् सर्व ऋषभं व्यकल्पयन्[2] ॥ १५ ॥

क्रोडः । आसीत् । जामिऽशंसस्य । सोमस्य । कलशः । धृतः ।
देवाः । सम्ऽगत्य । यत् । सर्वे । ऋषभम् । विऽअकल्पयन् ॥ १५ ॥

ते कुष्ठिकाः[3] सरमायै कूर्मेभ्यो अदधुः शफान् ।
ऊबध्यमस्य[4] कीटेभ्यः श्ववर्तेभ्यो[5] अधारयन् ॥ १६ ॥

ते । कुष्ठिकाः[3] । सरमायै । कूर्मेभ्यः । अदधुः । शफान् ।
ऊबध्यम् । अस्य । कीटेभ्यः । श्वऽवर्तेभ्यः[5] । अधारयन् ॥ १६ ॥

शृङ्गाभ्यां रक्ष ऋषत्यवर्तिं[6] हन्ति चक्षुषा ।
शृणोति[7] भद्रं कर्णाभ्यां गवां यः पतिरघ्न्यः[8] ॥ १७ ॥

शृङ्गाभ्याम् । रक्षः । ऋषति । अवर्तिम् । हन्ति । चक्षुषा ।
शृणोति । भद्रम् । कर्णाभ्याम् । गवाम् । यः । पतिः । अघ्न्यः ॥ १७ ॥

शतयाजं स यजते नैनं दुन्वन्त्यग्नयः[9] ।
[10]जिन्वन्ति विश्वे[10] तं देवा यो ब्राह्मण ऋषभमाजुहोति ॥ १८ ॥

शतऽयाजम् । सः । यजते । न । एनम् । दुन्वन्ति । अग्नयः ।
जिन्वन्ति । विश्वे । तम् । देवाः । यः । ब्राह्मणे । ऋषभम् । आऽजुहोति ॥ १८ ॥

[11]ब्राह्मणेभ्य ऋषभं[11] दत्त्वा वरीयः कृणुते मनः ।
पुष्टिं सो अघ्न्यानां स्वे [12]गोष्ठेऽव पश्यते[12] ॥ १९ ॥

---

१. देवास्सं° Bh,Cs, पै १६,२५,५. २. व्यंकल्पयन् A,B,Bh,D,Km,Cs; यदकल्पयन् K. ३. कुष्ठिकाः A,B,Bh,D,Cs,P,J. ४. ऊर्वध्य° Km. ५. शु. E², R², Sm, Bp², Cp; वैद्. A,Bh,D,K,Km,R,V,Dc,Cs,P³,I,O,T,P,P²,J,D²,Kp,RW. पै १६,२५,६ शवर्तेभ्यो, W शशवर्तेभ्यो, M श्वसवर्तेभ्यो; श्वशवर्तेभ्यो > शवर्तेभ्यो P³; शवर्तेभ्यो > श्ववर्तेभ्यो Sm,R²; शुऽवर्तेभ्यः D²,Kp. ६. ऋषदरातिं पै १६,२५,७. ७. शृणोतु पै. ८. °घ्न्युः A,B,Bh,R,Cs,I,K²,P J,Bp²,Cp. ९. घ्नन्त्यग्नयः पै १६,२५,८. १०. जिन्वन्तु सर्वे पै. ११. ब्राह्मणाय वृषभं पै १६,२५,९. १२. गोष्ठे वि पश्यतु पै.

ब्राह्मणेभ्यः । ऋषभम् । दत्त्वा । वरीयः । कृणुते । मनः ।
पुष्टिम् । सः । अघ्न्यानाम् । स्वे । गोऽस्थे । अव । पश्यते ॥ १९ ॥

**गावः सन्तु प्रजाः सन्त्वथो अस्तु तनूबलम् ।**
**तत् सर्वमनु मन्यन्तां देवा ऋषभदायिने[1] ॥ २० ॥**

गावः । सन्तु । प्रऽजाः । सन्तु । अथो इति । अस्तु । तनूऽबलम् ।
तत् । सर्वम् । अनु । मन्यन्ताम् । देवाः । ऋषभऽदायिने ॥ २० ॥

**अयं पिपान [2]इन्द्र इद् रयिं दधातु चेतनीम्[2] ।**
**अयं धेनुं सुदुघां नित्यवत्सां वशं दुहां[3] विपश्चितं परो दिवः ॥ २१ ॥**

अयम् । पिपानः । इन्द्रः । इत् । रयिम् । दधातु । चेतनीम् । अयम् ।
धेनुम् । सुऽदुघाम् । नित्यऽवत्साम् । वशम् । दुहाम् । विपःऽचितम् । परः । दिवः ॥२१॥

**पिशङ्गरूपो नभसो वयोधा ऐन्द्रः शुष्मो विश्वरूपो न आगन् ।**
**आयुरस्मभ्यं[4] दधत्[5] प्रजां[6] च रायश्च पोषैरभि नः सचताम्[7] ॥ २२ ॥**

पिशङ्गऽरूपः । नभसः । वयःऽधाः । ऐन्द्रः । शुष्मः । विश्वऽरूपः । नः । आ । अगन् ।
आयुः । अस्मभ्यम् । दधत् । प्रऽजाम् । च । रायः । च । पोषैः । अभि । नः । सचताम् ॥

**उपेहोपपर्चनास्मिन्[8] [9]गोष्ठ उप[9] [10]पृञ्च नः[10] ।**
**[11]उप ऋषभस्य[11] [12]यद् रेत उपेन्द्र[12] तव वीर्यम्[13] ॥ २३ ॥**

उप । इह । उपऽपर्चन । अस्मिन् । गोऽस्थे । उप । पृञ्च । नः ।
उप । ऋषभस्य । यत् । रेतः । उप । इन्द्र । तव । वीर्यम् ॥ २३ ॥

**एतं वो युवानं प्रति[14] [15]दध्मो अत्र[15] तेन क्रीडन्तीश्चरत[16] [17]वशाँ अनु[17] ।**
**मा नो हासिष्ट[18] जनुषा सुभागा[19] [20]रायश्च पोषैरभि नः सचध्वम्[20] ॥२४॥**

---

२. इन्द्रियं गयां बिभर्ति तेजनीम् ? पै १६,२६,१.   ३. दुहे पै
१. ऋषभ॰ B,Bᵇ.   ६. रयिं पै.   ७. सच-
४. प्रजामस्मभ्यं पै १६,२६,२.   ५. दर्धतः अ १८,४,६२. पै.
न्ताम् P³,W; सचध्वम् अ.   ८. उपेदमुपपर्चनमासु ऋ ६,२८,८ तैब्रा २,८,८,१२ लाश्री
३,३,४; ॰नमस्मिन् पै १६,२६,४.   ९. गोपूर्व ऋ. तैब्रा. लाश्री.   १०. पृच्यताम् ऋ. तैब्रा.
लाश्री.; पृञ्चतु पै.   ११. उपर्षभ॰ तैब्रा. लाश्री.   १२. रेतस्तु॰ ऋ. तैब्रा. लाश्री.   १३. वीर्यं
ऋ. तैब्रा. लाश्री.   १४. परि तै ३,३,९,१ पै १६,२६,३; पति पाग्र. ३,९,६.   १५. ददामि
ते. पाग्र.   १६. क्रीडन्ति॰ B,Bᵇ,Cs; ॰श्चरथा पाग्र.   १७. प्रियेण ते. पाग्र.   † वर्शाँ
A,Bᵇ,Cs.   १८. हास तै.; हिंसिष्ट पै.; हापत पाग्र.   १९. सुभगा K,Kᵐ,V,Dc,R²,
पाग्र.   २०. रायस्पोषेण समिषा मदेम तै. पाग्र.

एतम् । वः । युवानम् । प्रति । दध्मः । अत्र । तेन । क्रीडन्तीः । चरत । वशान् । अनु ।
मा । नः । हासिष्ट । जनुषा । सुऽभागाः[1] । रायः । च । पोषैः । अभि । नः । सचध्वम् ॥

इति द्वितीयेऽनुवाके द्वितीयं सूक्तम् ।

इति द्वितीयोऽनुवाकः ।

अस्मिन् सूक्ते पञ्चौदने नाम सवे हूयमानस्याजस्य जीवतो मारितस्य च प्रशंसा । अपराजिताया आनीयमानोऽजः प्रोक्तप्रकारेण हतः संस्कृतश्च इन्द्रं तर्पयित्वा तृतीयनाके नाम स्वर्गभागे यद्वा सुकृतां पुण्यलोके गच्छति । तत्र गतपूर्वस्य यजमानादेश्च तमोहन्ता भवतीत्यादि वर्णनम् ।

सांप्रदायिका अप्येवमेव । पञ्चौदनसवे 'आ नयैतम्' इत्यर्थसूक्तस्य विनियोगः । एतत्सूक्तेन निरुप्तहविरभिमर्शनं संपातं दातृवाचनं दानं च कुर्यात् । तथा च सूत्रम्— "'आ नयैतम्' इत्यपराजिताद् अजमानीयमानमनुमन्त्रयते" इत्यादि "'आ नयैतम्' इति सूक्तेन संपातवन्तम् । आञ्जनान्तम्" (कौसू ६४,६–२८) इत्यन्तम् इति ।

तथा पशौ अनेन सूक्तेन अपराजिताद् आनीयमानम् अजम् अनुमन्त्रयेत । तद् उक्तं वैताने— "'आ नयैतम्' इत्याद्याञ्जनान्तम्" ( वैताश्रौ १०,१४ ) इति ।

तथा अग्निचयने पुनश्चितौ 'येना सहस्रम्' इत्यनया गार्हपत्ये चीयमाना इष्टका ब्रह्मा अनुमन्त्रयेत । तद् उक्तं वैताने—"गार्हपत्य उक्तम्[2] । 'अयमग्निः सत्पतिः' (अ ७,६४), 'येना सहस्रम्' ( अ ९,५,१७ ) इति" ( वैताश्रौ २९,८;९ ) इति ।

तथा तत्रैव वैश्वकर्मणहोमानुमन्त्रणे तस्या एव विनियोगः । तद् उक्तं वैताने— "'ये भक्षयन्तः' (अ २,३५), 'एतं सधस्थाः' (अ ६,१२३) इति द्वे । 'येना सहस्रम्' (अ ९,५,१७) इति वैश्वकर्मणहोमान्" ( वैताश्रौ २९,२२;२३ ) इति ।

आ नयैतमा रभस्व सुकृतां लोकमपि गच्छतु प्रजानन् ।
तीर्त्वा तमांसि बहुधा महान्त्यजो[3] नाकमा क्रमतां तृतीयम् ॥ १ ॥

आ । नय । एतम् । आ । रभस्व । सुऽकृताम् । लोकम् । अपि । गच्छतु । प्रऽजानन् ।
तीर्त्वा । तमांसि । बहुऽधा । महान्ति । अजः । नाकम् । आ । क्रमताम् । तृतीयम् ॥१॥

इन्द्राय भागं [4]परि त्वा नयाम्यस्मिन् यज्ञे यजमानाय सूरिम्[4] ।
ये नो द्विषन्त्यनु तान् [5]रभस्वानागसो यजमानस्य वीराः[5] ॥ २ ॥

---

१. सुऽभगाः P,P², J, Bp². २. उक्थम् RG. ३. विपश्यन्नजो पै १६,९७,१. ४. नमिता शृणोतु यज्ञं यज्ञपतिश्च सूरिः पै १६,१००,२. ५. द्रवस्वारिष्टा वीरा यजमानस्य सर्वे पै.

इन्द्राय । भागम् । परि । त्वा । नयामि । अस्मिन् । यज्ञे । यजमानाय । सूरिम् ।
ये । नः । द्विषन्ति । अनु । तान् । रभस्व । अनागसः । यजमानस्य । वीराः ॥ २ ॥

प्र पदोऽव नेनिग्धि दुश्चरितं यच्चचार शुद्धैः शफैरा क्रमतां प्रजानन् ।
तीर्त्वा तमांसि बहुधा विपश्यन्नजो नाकमा क्रमतां तृतीयम् ॥ ३ ॥

प्र । पदः । अव । नेनिग्धि । दुःऽचरितम् । यत् । चचार । शुद्धैः । शफैः । आ । क्रमताम् । प्रऽजानन् । तीर्त्वा । तमांसि । बहुऽधा । विऽपश्यन् । अजः । नाकम् । आ । क्रमताम् । तृतीयम् ॥३॥

अनु च्छ्य श्यामेन त्वचमेतां विशस्तर्यथापर्व१सिना[1] माभि मंस्थाः[2] ।
माभि द्रुहः [3]परुशः कल्पयैनं[3] [4]तृतीये नाके[4] अधि वि श्रयैनम्[5] ॥ ४ ॥

अनु । छ्य । श्यामेन । त्वचम् । एताम् । विऽशस्तः । यथाऽपरु । असिना । मा[6] । अभि । मंस्थाः[2] ।
मा । अभि । द्रुहः । परुऽशः[7] । कल्पय । एनम् । तृतीये । नाके । अधि । वि । श्रय । एनम् ॥४॥

ऋचा कुम्भीमध्यग्नौ श्रयाम्या सिञ्चोदकमव धेह्येनम् ।
पर्याधत्ताग्निना शमितारः शृतो[8] गच्छतु सुकृतां यत्र लोकः ॥ ५ ॥

ऋचा । कुम्भीम् । अधि । अग्नौ । श्रयामि । आ । सिञ्च । उदकम् । अव । धेहि । एनम् ।
परिऽआधत्त । अग्निना । शमितारः । शृतः । गच्छतु । सुऽकृताम् । यत्र । लोकः ॥ ५ ॥

उत्क्रामातः[9] परि [10]चेदतप्तस्तप्ताच्चरोरधि[10] नाकं तृतीयम् ।
अग्नेरग्निरधि[11] सं बभूविथ [12]ज्योतिष्मन्तमभि लोकं जयैतम्[12] ॥ ६ ॥

उत् । क्राम । अतः । परि । च । इत् । अतप्तः[13] । तप्तात् । चरोः । अधि । नाकम् । तृतीयम् ।
अग्नेः । अग्निः । अधि । सम् । बभूविथ । ज्योतिष्मन्तम् । अभि । लोकम् । जय । एतम् ॥ ६ ॥

[14]अजो अग्निरजमु[14] ज्योतिराहुरजं जीवता ब्रह्मणे देयमाहुः ।
अजस्तमांस्यप हन्ति[15] दूरमस्मिंल्लोके श्रद्दधानेन दत्तः ॥ ७ ॥

---

१. पर्व३सिना B,Bʰ,D,Sᵐ,Cs. २. मांस्थाः A,B,Bʰ,D,K,Kᵐ,R,Sᵐ,V,P,P²,J. ३. परुश्यः क° Bʰ; परुपः क° B; परुशऽः क° A,D,R; परुशुः क° K; परुश्यऽः क° Cs. ४. सुकृतां मध्ये पै १६,१७,३. ५. श्रयेमम् पै. ६. मा P. ७. परुशऽः P,J; परुश्यऽः Cp. ८. श्रितो D,Sᵐ. ९. उत्क्रामातः सात². १०. °दतप्ता° A,D,K, Kᵐ,R,Sᵐ,V,Dc,Cs; °दतप्ता° Bʰ; °ददप्ता° B; °दतप्त° P³M; °श्चरोरधि K. ११. °रपि पै १६,९७,५. १२. ज्योतिष्मान् गच्छ सुकृतां यत्र लोकः पै. १३. अतप्ताः P,P²,J,Cp. १४. अजमेवाग्निमजमु पै १६,९७,७. १५. हन्तु पै.

अजः । अग्निः । अजम् । ऊं इति । ज्योतिः । आहुः । अजम् । जीवता । ब्रह्मणे । देयम् । आहुः ।
अजः । तमांसि । अप । हन्ति । दूरम् । अस्मिन् । लोके । श्रत्ऽदधानेन । दत्तः ॥ ७ ॥

पञ्चौदनः पञ्चधा वि [1]क्रमतामाक्रंस्यमानस्त्रीणि[2] ज्योतींषि ।
ईजानानां सुकृतां प्रेहि मध्यं [3]तृतीये नाके अधि वि श्रयस्व[3] ॥ ८ ॥

पञ्चऽओदनः । पञ्चऽधा । वि । क्रमताम् । आऽक्रंस्यमानः । त्रीणि । ज्योतींषि ।
ईजानानाम् । सुऽकृताम् । प्र । इहि । मध्यम् । तृतीये । नाके । अधि । वि । श्रयस्व ॥ ८ ॥

अजा रोह[1] सुकृतां यत्र लोकः शरभो[4] न चत्तोऽति[5] दुर्गाण्येषः[6] ।
पञ्चौदनो ब्रह्मणे दीयमानः [7]स दातारं तृप्त्या तर्पयाति[7] ॥ ९ ॥

अज । आ । रोह । सुऽकृताम् । यत्र । लोकः । शरभः । न । चत्तः । अति । दुःऽगानि । एषः[8] ।
पञ्चऽओदनः । ब्रह्मणे । दीयमानः । सः । दातारम् । तृप्त्या । तर्पयाति ॥ ९ ॥

अजस्त्रिनाके त्रिदिवे त्रिपृष्ठे [9]नाकस्य पृष्ठे[9] ददिवांसं दधाति ।
पञ्चौदनो ब्रह्मणे दीयमानो [10]विश्वरूपा धेनुः कामदुघाऽस्येका[10] ॥ १० ॥

अजः । त्रिऽनाके । त्रिऽदिवे । त्रिऽपृष्ठे । नाकस्य । पृष्ठे । ददिऽवांसम् । दधाति ।
पञ्चऽओदनः । ब्रह्मणे । दीयमानः । विश्वऽरूपा । धेनुः । कामऽदुघा । असि । एका ॥ १० ॥

एतद् वो ज्योतिः पितरस्तृतीयं पञ्चौदनं ब्रह्मणेऽजं ददाति ।
अजस्तमांस्यप हन्ति [11]दूरमस्मिल्लोके श्रद्दधानेन दत्तः[11] ॥ ११ ॥

एतत् । वः । ज्योतिः । पितरः । तृतीयम् । पञ्चऽओदनम् । ब्रह्मणे । अजम् । ददाति ।
अजः । तमांसि । अप । हन्ति । दूरम् । अस्मिन् । लोके । श्रत्ऽदधानेन । दत्तः ॥ ११ ॥

ईजानानां[12] सुकृतां लोकमीप्सन् पञ्चौदनं ब्रह्मणेऽजं ददाति ।
स व्याप्तिमभि[13] लोकं जयैतं[14] शिवो३स्मभ्यं[15] प्रतिगृहीतो अस्तु[16] ॥ १२ ॥

ईजानानाम् । सुऽकृताम् । लोकम् । ईप्सन् । पञ्चऽओदनम् । ब्रह्मणे । अजम् । ददाति ।
सः । विऽआप्तिम् । अभि । लोकम् । जय । एतम् । शिवः । अस्मभ्यम् । प्रतिऽगृहीतः । अस्तु ॥ १२ ॥

---

१. क्रमस्वाक्रंस्यमानः पञ्च पै १६,९७,६. २. ज्योतिष्मन्तमभि लोकं जयास्मै पै. ३. क्रमस्व पै १६,९७,१०. ४. शरभो पै. ५. चत्तो अति पै. ६. दुर्गाण्येषः Dc,K,Km,V. ७. विश्वरूपा धेनुः कामदुघास्येका पै. ८. एषः P.J. ९. सुकृतां लोके पै १६,९८,२. १० स दातारं तृप्त्या तर्पयाति पै. ११. दूरं पञ्चौदनो ब्रह्मणे दीयमान. पै १६,९७,८. १२. प्र ज्योतिष्मन्तं पै १६,९८,१. १३. व्याप्तो नेष्यभि पै. १४. जयास्मै पै. १५. शिवो३° B,Km. १६. भुवि पै.

अजो ह्य१ग्नेरजनिष्ट[1] शोकाद् विप्रो विप्रस्य सहसो विपश्चित्[2] ।
[3]इष्टं पूर्तमभिपूर्तं[3] वषट्कृतं तद् देवा [4]ऋतुशः कल्पयन्तु[4] ॥ १३ ॥
अजः । हि । अग्नेः । अजनिष्ट । शोकात् । विप्रः । विप्रस्य । सहसः । विपःऽचित् ।
इष्टम् । पूर्तम् । अभिऽपूर्तम् । वषट्ऽकृतम् । तत् । देवाः । ऋतुऽशः[5] । कल्पयन्तु ॥ १३ ॥

अमोतं वासो दद्याद्धिरण्यमपि दक्षिणाम् ।
तथा लोकान्त्समाप्नोति[6] ये दिव्या ये च पार्थिवाः ॥ १४ ॥
अमाऽउतम् । वासः । दद्यात् । हिरण्यम् । अपि । दक्षिणाम् ।
तथा । लोकान् । सम् । आप्नोति । ये । दिव्याः । ये । च । पार्थिवाः ॥ १४ ॥

[7]एतास्त्वाजोप यन्तु धाराः[7] सोम्या[8] देवीर्घृतपृष्ठा मधुश्चुतः ।
स्तभान [9]पृथिवीमुत द्यां नाकस्य †पृष्ठेऽधि[9] सप्तरश्मौ ॥ १५ ॥
एताः । त्वा । अज[10] । उप । यन्तु । धाराः । सोम्याः । देवीः । घृतऽपृष्ठाः । मधुऽश्चुतः ।
स्तभान । पृथिवीम् । उत । द्याम् । नाकस्य । पृष्ठे । अधि । सप्तऽरश्मौ ॥ १५ ॥

अजो३स्यज स्वर्गोऽसि त्वया लोकमङ्गिरसः प्राजानन्[11] ।
तं लोकं पुण्यं[12] प्र ज्ञेषम् ॥ १६ ॥
अजः । असि । अज[13] । स्वःऽगः । असि । त्वया । लोकम् । अङ्गिरसः । प्र । अजानन् ।
तम् । लोकम् । पुण्यम् । प्र । ज्ञेषम् ॥ १६ ॥

येना[14] सहस्रं वहसि येनाग्ने[15] सर्ववेदसम् ।
तेनेमं यज्ञं नो वह[16] [17]स्वर्देवेषु‡ गन्तवे[17] ॥ १७ ॥
येन । सहस्रम् । वहसि । येन । अग्ने । सर्वऽवेदसम् ।
तेन । इमम् । यज्ञम् । नः । वह । स्वः । देवेषु । गन्तवे ॥ १७ ॥

---

१. ह्य३ग्ने° A,B^h,D,R,S^m,Dc,Cs. २. वयोधाः पै १६,९८,३. ३. इष्टं वीतमभिगूर्तं ऋ १,१६२,१५; हुतमिष्टमभि° पै. ४. ऋतुशः क° A,B^h,D,R,Cs,WM. ५. ऋतुशः P,J. ६. °माप्नुयात् पै १६,९८,४. ७. °स्त्वाजोप° A,B,K,K^m,Dc,Cs,WM; °स्त्वा धाराश् शमयन्ति विश्वतस् पै १६,९८,५. ८. सौम्या K^m. ९. °वीं दिवं सदस्व नाके तिष्ठास्यधि पै. † पृष्ठे अधि WM,RW. १०. अजं P,P^2,J,Cp. ११. प्रजानन् अनु पै ३,३८,९. १२. [see below] १३. अज P, अजः P^2,J. १४. .येन B,K,K^m,V,Dc. १५. येन वा पै. १६. नय मा. १७. देवयानो वा पै ३,३८,१०; येन मा १५,५५. ‡ सुवर्देवेषु तै ५,७,७,३. य उत्तमः तै ४,७,१३,४.

अजः पुक्वः स्वुर्गे लोके देधाति पञ्चौदनो निर्ऋतिं बाधमानः ।
तेनं लोकान्त्सूर्यवतो जयेम ॥ १८ ॥

अजः । पुक्वः । स्वःऽगे । लोके । दधाति । पञ्चऽओदनः । निःऽऋतिम् । बाधमानः ।
तेनं । लोकान् । सूर्यऽवतः । जयेम ॥ १८ ॥

यं ब्राह्मणे निदधे यं च विक्षु या विप्रुष ओदनानामजस्यं ।
सर्वं तदंग्ने सुकृतस्यं लोके जानीतान्नः संगमने पथीनाम् ॥ १९ ॥

यम् । ब्राह्मणे[1] । निऽदधे । यम् । च । विक्षु । याः । विऽप्रुषः । ओदनानाम् । अजस्यं ।
सर्वम् । तत् । अग्ने । सुऽकृतस्यं । लोके । जानीतात् । नः । समऽगमने । पथीनाम् ॥

[2]अजो वा इदमग्रे व्यक्रमत तस्योरं इयमभवद्[3] [4]द्यौः पृष्ठम्[5] ।
अन्तरिक्षं मध्यं दिशः पार्श्वे संमुद्रौ कुक्षी ॥ २० ॥

अजः । वै । इदम् । अग्रे । वि । अक्रमत । तस्यं । उरः । इयम् । अभवत् । द्यौः । पृष्ठम् ।
अन्तरिक्षम् । मध्यम् । दिशः । पार्श्वे इति । समुद्रौ । कुक्षी इति ॥ २० ॥

सत्यं चर्तं[6] च चक्षुषी [7]विश्वं सत्यं श्रद्धा प्राणो विराट् शिरः[8] ।
एष वा अपरिमितो यज्ञो यदजः पञ्चौदनः ॥ २१ ॥

सत्यम् । च । ऋतम् । च । चक्षुषी इति । विश्वम् । सत्यम् । श्रद्धा । प्राणः । विऽराट् । शिरः ।
एषः । वै । अपरिऽमितः[9] । यज्ञः । यत् । अजः । पञ्चऽओदनः ॥ २१ ॥

अपरिमितमेव यज्ञमाप्नोत्यपरिमितं लोकमवं रुन्द्धे[10] ।
योर्जं[11] पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥ २२ ॥

अपरिऽमितम् । एव । यज्ञम् । आप्नोति । अपरिऽमितम् । लोकम् । अवं । रुन्द्धे ।
यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ २२ ॥

नास्यास्थीनि भिन्द्यान्न मुज्ज्ञो[12] निर्धयेत्[13] ।
सर्वमेनं[14] समादायेदमिदं प्र वेशयेत् ॥ २३ ॥

---

१. ब्रह्मणे P. २. अजः पञ्चौदनो पै १६,९९,६. ३. °भवद् सात°. ४. उर-रमन्तरिक्षम् पै. ५. द्यौस्ते पृष्ठं पै. ६. चं ऋतं RW. पै १६,९९,७. ७. विश्वरूपं पै. ८. परः पै. ९. °मिताः P. १०. रुधे B; रुन्धे RW. सात°. ११. योर्जं B,V. १२. मुज्ञो B,Bb,D,Cs; मज्ञो A,K,Km,R,Sm,V,Dc. १३. निर्दहेत् पै १६,१००,१. १४. सर्वाणि पै.

न । अस्य[1] । अस्थीनि । भिन्द्यात् । न । मज्ज्ञः[2] । निः । धयेत् ।
सर्वम् । एनम् । सम्ऽआदाय । इदम्ऽइदम् । प्र । वेशयेत् ॥ २३ ॥

इदमिदमेवास्य रूपं भवति तेनैनं[3] सं गमयति ।
इषं[4] मह ऊर्जमस्मै दुहे योऽ३जं[5] पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥२४॥

इदम्ऽइदम् । एव । अस्य । रूपम् । भवति । तेन । एनम् । सम् । गमयति । इषम् । महः ।
ऊर्जम् । अस्मै । दुहे । यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥२४॥

पञ्च रुक्मा पञ्च नवानि वस्त्रा पञ्चास्मै धेनवः कामदुघा भवन्ति ।
योऽ३जं[6] पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥ २५ ॥

पञ्च । रुक्मा । पञ्च । नवानि । वस्त्रा । पञ्च । अस्मै । धेनवः । कामऽदुघाः । भवन्ति ।
यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ २५ ॥

पञ्च रुक्मा ज्योतिरस्मै भवन्ति वर्म वासांसि तन्वे भवन्ति ।
स्वर्गं लोकमश्नुते योऽ३जं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥२६॥

पञ्च । रुक्मा । ज्योतिः । अस्मै । भवन्ति । वर्म । वासांसि । तन्वे । भवन्ति ।
स्वःऽगम् । लोकम् । अश्नुते । यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥

या पूर्वं पतिं वित्त्वाऽथान्यं[7] विन्दतेऽपरम् ।
पञ्चौदनं च तावजं ददातो न वि योषतः[8] ॥ २७ ॥

या । पूर्वम् । पतिम् । वित्त्वा । अथ । अन्यम्[9] । विन्दते । अपरम् ।
पञ्चऽओदनम् । च । तौ । अजम् । ददातः । न । वि । योषतः ॥ २७ ॥

समानलोको भवति [10]पुनर्भुवाऽपरः पतिः[10] ।
योऽ३जं[11] पञ्चौदनं दक्षिणाज्योतिषं ददाति[12] ॥ २८ ॥

---

१. अस्य J. २. मन्यः J; मज्ञः P,P²,Cp. ३. तेनेदं पै १६,१००,२. ४. इपं B,P. ५. योऽ३जं B,K,V. ६. योऽ३जं B,V. ७. °थान्यं A,Bᵇ,D, P,J,Bp². ८. पचतो न व्यञ्चतः पै. ९. अन्यऽम् Kᵐ,R,Sᵐ,V,Cs; वित्त्वा यथान्यं पै ८,१९,१०. १०. °पंरापतिः A. ११. अजं च पै ८,१९,११. १२. ददत् पै.

समान॑ऽलोकः । भव॑ति । पुन॒ःऽभुवा॑ । अप॑रः । पति॑ः ।
यः । अ॒जम् । पञ्च॑ऽओदनम् । दक्षि॑णाऽज्योतिषम् । ददा॑ति ॥ २८ ॥

अ॒नु॒पू॒र्वव॑त्सां धे॒नुम॑न॒ड्वाह॑मुप॒बर्ह॑णम् ।
वासो॒ हिर॑ण्यं द॒त्त्वा ते य॑न्ति॒ दिव॑मुत्त॒माम्[1] ॥ २९ ॥

अ॒नु॒पू॒र्वऽव॑त्साम् । धे॒नुम् । अ॒न॒ड्वाह॑म्[2] । उ॒प॒ऽबर्ह॑णम् ।
वास॑ः । हिर॑ण्यम् । द॒त्त्वा । ते । य॒न्ति॒ । दिव॑म् । उ॒त्ऽत॒माम्[3] ॥ २९ ॥

आ॒त्मानं॑ पि॒तरं॑ पु॒त्रं पौत्रं॑ पिताम॒हम् ।
जा॒यां जनि॑त्रीं मा॒तरं॒ ये प्रि॒यास्तानुप॑ ह्वये ॥ ३० ॥

आ॒त्मान॑म् । पि॒तर॑म् । पु॒त्रम् । पौत्र॑म् । पि॒ता॒म॒हम् ।
जा॒याम् । जनि॑त्रीम् । मा॒तर॑म् । ये । प्रि॒याः । तान् । उप॑ । ह्व॒ये ॥ ३० ॥

यो वै नैदा॑घं॒ नाम॒र्तुं[4] वेद॑ । ए॒ष वै नैदा॑घो॒ नाम॒र्तुर्यद॒जः[5] पञ्चौ॑दनः ।
नि॒रे॒वाप्रि॑यस्य॒ भ्रातृ॑व्यस्य॒ श्रियं॑ दहति॒ भव॑त्य॒ात्मना॑ ।
यो॒३॒ जं पञ्चौ॑दनं॒ दक्षि॑णाज्योतिषं॒ ददा॑ति ॥ ३१ ॥

यः । वै । नैदा॑घम् । नाम॑ । ऋ॒तुम् । वेद॑ । ए॒षः । वै । नैदा॑घः । नाम॑ । ऋ॒तुः । यत् ।
अ॒जः । पञ्च॑ऽओदनः । निः । ए॒व । अप्रि॑यस्य । भ्रातृ॑व्यस्य । श्रिय॑म् । द॒ह॒ति॒ । भव॑ति ।
आ॒त्मना॑ । यः । अ॒जम् । पञ्च॑ऽओदनम् । दक्षि॑णाऽज्योतिषम् । ददा॑ति ॥ ३१ ॥

यो वै कु॒र्वन्तं॒ नाम॒र्तुं वेद॑ । कु॒र्व॒तींकु॑र्वतीमे॒वाप्रि॑यस्य॒ भ्रातृ॑व्यस्य॒ श्रिय॒मा द॑त्ते ।
ए॒ष वै कु॒र्वन्नाम॒र्तुर्यद॒जः ० । ० । ० ॥ ३२ ॥

यः । वै । कु॒र्वन्त॑म् । नाम॑ । ० । कु॒र्व॒तीम्ऽकु॑र्वतीम् । ए॒व । अप्रि॑यस्य । भ्रातृ॑व्यस्य । श्रिय॑म् ।
आ । द॒त्ते॒ । ए॒षः । वै । कु॒र्वन् । नाम॑ । ० ॥ ३२ ॥

यो वै सं॒यन्तं॒ नाम॒र्तुं वेद॑ । सं॒य॒तींसं॑यतीमे॒वाप्रि॑यस्य॒ भ्रातृ॑व्यस्य॒ श्रिय॒मा द॑त्ते ।
ए॒ष वै सं॒यन्ना॒म ० । ० । ० ॥ ३३ ॥

---

१. °त्तमम् Km,V. २. °ड्वाहम् P. ३. °त्तमम् P. ४. ऊ. A,B,B^b,D,K,Km,R,Sm,V,Dc,Cs, दाना., पैड. WM,RW. नाम ऋतुं° एवमुत्तरत्र. ५. नाम ऋतुर्° एवमुत्तरत्र RW.

यः । वै । सम्ऽयन्तम् । नाम । ० । संयतीम्ऽसंयतीम् । एव । ० ।
एषः । वै । सम्ऽयन् । नाम । ० ॥ ३३ ॥

यो वै पिन्वन्तं नामर्तुं वेद । पिन्वतींपिन्वतीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते ।
एष वै पिन्वन्नाम ० । ० । ० ॥ ३४ ॥

यः । वै । पिन्वन्तम् । नाम । ० । पिन्वतीम्ऽपिन्वतीम् । एव । ० ।
एषः । वै । पिन्वन् । नाम । ० ॥ ३४ ॥

यो वा उद्यन्तं नामर्तुं वेद । उद्यतींमुद्यतीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते ।
एष वा उद्यन्नाम ० । ० । ० ॥ ३५ ॥

यः । वै । उत्ऽयन्तम् । नाम । ० । उद्यतीम्ऽउद्यतीम् । एव । ० ।
एषः । वै । उत्ऽयन् । नाम । ० ॥ ३५ ॥

यो वा अभिभुवं नामर्तुं वेद ।
अभिभवन्तीमभिभवन्तीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते ।
एष वा अभिभूर्नामर्तुर्यदजः पञ्चौदनः ।
निरेवाप्रियस्य भ्रातृव्यस्य श्रियं दहति भवत्यात्मना ।
योऽजं[1] पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥३६॥

यः । वै । अभिऽभुवम् । नाम । ऋतुम् । वेद ।
अभिभवन्तीम्ऽअभिभवन्तीम् । एव । अप्रियस्य । भ्रातृव्यस्य । श्रियम् । आ । दत्ते ।
एषः । वै । अभिऽभूः । नाम । ऋतुः । यत् । अजः । पञ्चऽओदनः ।
निः । एव । अप्रियस्य । भ्रातृव्यस्य । श्रियम् । दहति । भवति । आत्मना ।
यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ ३६ ॥

अजं च पचत पञ्च चौदनान् ।
सर्वा दिशः संमनसः[2] सध्रीचीः सान्तर्देशाः प्रति गृह्णन्तु[3] त एतम्[4] ॥३७॥

---

१. योऽजं B,V. २. संविदानाः पै १६,९९,४. ३. तु. D[2],P,P[2]; वैतु. A, B[h],D,K[m],R,S[m],V,Dc,Cs,J,Cp,WM गृह्णन्तु. ४. तेजसम् पै.

अजम् । च । पचत । पञ्च । च । ओदनान् ।
सर्वाः । दिशः । सम्ऽमनसः । सध्रीचीः । सऽअन्तर्देशाः । प्रति । गृह्णन्तु । ते । एतम् ॥३७॥

**तास्ते रक्षन्तु तव तुभ्यमेतं ताभ्य आज्यं हविरिदं जुहोमि ॥ ३८ ॥**
ताः । ते । रक्षन्तु । तव । तुभ्यम् । एतम् । ताभ्यः । आज्यम् । हविः । इदम् । जुहोमि ॥३८॥

**इति तृतीयेऽनुवाके प्रथमं सूक्तम् ।**

'यो विद्याद्' इति सूक्तेन जपं करोति स्वर्गकामः इति विनियोगमाला संप्रदायानुसारेण । वस्तुतस्तु 'यो विद्यात्' इत्यारभ्य 'यत्क्षत्तारम्' ( अ ९,११ ) इत्यन्तेषु पद्सु पर्यायेषु अतिथेर्माहात्म्यं तथा तस्य सभाजनं तत्सभाजनस्य च यज्ञफलतुल्यं फलं चेति आतिथ्यस्य प्रशंसा वर्ण्यते ।

**यो विद्याद् ब्रह्म प्रत्यक्षं परूंषि यस्य संभारा ऋचो यस्यानूक्यम् ॥१॥**
यः । विद्यात् । ब्रह्म । प्रतिऽअक्षम् । परूंषि । यस्य । सम्ऽभाराः । ऋचः । यस्य । अनूक्यम् ॥

**सामानि यस्य लोमानि यजुर्हृदयमुच्यते परिस्तरणमिद्धविः ॥ २ ॥**
सामानि । यस्य । लोमानि । यजुः । हृदयम् । उच्यते । परिऽस्तरणम् । इत् । हविः ॥२॥

**यद् वा अतिथिपतिरतिथीन् प्रतिपश्यति देवयजनं प्रेक्षते ॥ ३ ॥**
यत् । वै । अतिथिऽपतिः । अतिथीन् । प्रतिऽपश्यति । देवऽयजनम् । प्र । ईक्षते ॥ ३ ॥

**यदभिवदति दीक्षामुपैति यदुदकं याचत्यपः प्र णयति ॥ ४ ॥**
यत् । अभिऽवदति । दीक्षाम् । उप । एति । यत् । उदकम् । याचति । अपः । प्र । नयति ॥

**या एव यज्ञ आपः प्रणीयन्ते ता एव ताः ॥ ५ ॥**
याः । एव । यज्ञे । आपः । प्रऽनीयन्ते । ताः । एव । ताः ॥ ५ ॥

**यत् तर्पणमाहरन्ति य एवाग्नीषोमीयः पशुर्बध्यते स एव सः ॥ ६ ॥**
यत् । तर्पणम् । आऽहरन्ति । यः । एव । अग्नीषोमीयः । पशुः । बध्यते । सः । एव । सः ॥

---

१. ते J,Cp,WM. २. जुहोमि हविषा घृतेन पै १६,९९,८. ३. ऋचो B[b].
४. प्रणयामि पै १६,१११,२. ५. प्रणयति S[m]. ६. एवं R

यदा॑वसथान् क॒ल्पय॑न्ति सदोहविर्धा॒नान्ये॒व तत् क॑ल्पयन्ति ॥ ७ ॥

यत् । आ॒ऽव॒स॒थान् । क॒ल्पय॑न्ति । स॒दः॒ऽह॒वि॒र्धा॒नानि॑ । ए॒व । तत् । क॒ल्प॒य॒न्ति॒ ॥ ७ ॥

यदु॑पस्तृ॒णन्ति॑[1] ब॒र्हिरे॒व तत् ॥ ८ ॥

यत् । उ॒प॒ऽस्तृ॒णन्ति॑ । ब॒र्हिः । ए॒व । तत् ॥ ८ ॥

यदु॑परिश॒यन॑मा॒हर॑न्ति स्व॒र्गमे॒व तेन॑ लो॒कमव॑ रुन्द्धे[2] ॥ ९ ॥

यत् । उ॒प॒रि॒ऽश॒यन॑म् । आ॒ऽहर॑न्ति । स्वः॒ऽगम् । ए॒व । तेन॑ । लो॒कम् । अव॑ । रु॒न्द्धे॒ ॥ ९ ॥

यत् [3]क॑शिपूपब॒र्हण॑मा॒हर॑न्ति[3] परि॒धय॑ ए॒व ते ॥ १० ॥

यत् । क॒शि॒पु॒ऽउ॒प॒ब॒र्ह॒णम् । आ॒ऽहर॑न्ति । प॒रि॒ऽधय॑ः । ए॒व । ते ॥ १० ॥

[4]यदा॑ञ्जनाभ्यञ्ज॒नमा॒हर॒न्त्याज्य॑मे॒व[4] तत् ॥ ११ ॥

यत् । आ॒ञ्ज॒न॒ऽअ॒भ्य॒ञ्ज॒नम् । आ॒ऽहर॑न्ति । आज्य॑म् । ए॒व । तत् ॥ ११ ॥

यत् पु॒रा प॑रिवे॒षात् खा॒दमा॒हर॑न्ति पु॒रोडाशा॑वे॒व तौ ॥ १२ ॥

यत् । पु॒रा । प॒रि॒ऽवे॒षात् । खा॒दम् । आ॒ऽहर॑न्ति । पु॒रो॒डाशौ॑ । ए॒व । तौ ॥ १२ ॥

यद॑शन॒कृतं॒ ह्वय॑न्ति हवि॒ष्कृत॑मे॒व तद्ध्वयन्ति ॥ १३ ॥

यत् । अ॒श॒न॒ऽकृत॑म् । ह्वय॑न्ति[5] । ह॒वि॒ःऽकृत॑म् । ए॒व । तत् । ह्व॒य॒न्ति॒ ॥ १३ ॥

ये[6] व्री॒हयो॒ यवा॑ नि॒रुप्यन्ते॒ऽशव॑[7] ए॒व ते ॥ १४ ॥

ये । व्री॒हय॑ः । यवा॑ः । नि॒ःऽउ॒प्यन्ते॑ । अं॒शव॑ः । ए॒व । ते ॥ १४ ॥

[8]यान्यु॑लूखलमु॒सला॒नि॑[8] ग्रावा॑ण ए॒व ते ॥ १५ ॥

यानि॑ । उ॒लू॒ख॒ल॒ऽमु॒स॒लानि॑ । ग्रावा॑णः । ए॒व । ते । १५ ॥

शू॒र्पं॑ प॒वित्रं॒ तुषा॑ ऋजी॒षाभि॒षव॑णी॒राप॑ः ॥ १६ ॥

---

१. यत्परिस्तृ° पै १६,१११,९. २. रुन्धे RW. ३. °र्हणान्याह° पै १६,१११,१०. ४. यदभ्यञ्जनमा° पै १६,१११,१२. ५. ह्वयन्ति P. ६. यद् पै १६,१११,१४. ७. निरूप्य° B,B^b,Cs. ८. उलूखलं मुसलं पै १६,११२,१.

शूर्पम् । पवित्रम् । तुर्षाः । ऋजीषा । अभिऽसवनीः । आपः ॥ १६ ॥

**स्रुग्[1] दर्विर्नेक्षणमायवनं द्रोणकलशाः कुम्भ्यो वायव्यानि पात्राणीयमेव कृष्णाजिनम् ॥ १७ ॥**

स्रुक् । दर्विः । नेक्षणम् । आऽयवनम् । द्रोणऽकलशाः । कुम्भ्यः । वायव्यानि । पात्राणि । इयम् । एव । कृष्णऽअजिनम् ॥ १७ ॥

इति तृतीयेऽनुवाके द्वितीयं सूक्तम् ।

**यजमानब्राह्मणं [2]वा एतदतिथिपतिः[2] कुरुते[3] यदाहार्याणि प्रेक्षत[4] इदं भूया३[5] इदा३मिति ॥१॥ [१८]**

यजमानऽब्राह्मणम् । वै । एतत् । अतिथिऽपतिः । कुरुते । यत् । आऽहार्याणि । प्रऽईक्षते । इदम् । भूया३ः[6] । इदा३म् । इति ॥ १ ॥

**यदाह भूय उद्धरेति प्राणमेव तेन वर्षीयांसं कुरुते ॥ २ ॥ [१९]**

यत् । आह । भूयः । उत् । हर । इति । प्राणम् । एव । तेन । वर्षीयांसम् । कुरुते ॥२॥

**उप हरति हवींष्या सादयति ॥३॥ [२०]**

उप । हरति । हवींषि । आ । सादयति ॥ ३ ॥

**[7]तेषामासन्नानामतिथिरात्मन् जुहोति[7] ॥ ४ ॥ [२१]**

तेषाम् । आऽसन्नानाम् । अतिथिः । आत्मन् । जुहोति ॥ ४ ॥

**स्रुचा हस्तेन प्राणे यूपे स्रुक्कारेण वषट्कारेण ॥ ५ ॥ [२२]**

स्रुचा । हस्तेन । प्राणे । यूपे । स्रुक्ऽकारेण । वषट्ऽकारेण ॥ ५ ॥

**एते वै प्रियाश्चाप्रियाश्चर्त्विजः स्वर्गं लोकं गमयन्ति यदतिथयः ॥६॥ [२३]**

---

१. स्रग् Bᵇ. २. वै यदतिथि° पै १६,११२,४. ३. कृणुते पै. ४. अवेक्षते पै. ५. द्र॰ Wi, Kᵐ,Sᵐ,V,Dc; चंद्र शंपा. सात. RW. भूया३; भूया I; भूया O,R². ६. द्र॰ D¹,P¹; चंद्र॰ शंपा. J,Cp भूया३ः; भूयाः P. ७. °रात्मं जु° Bᵇ,Kᵐ,Cs,RW.; °रात्मंन्त्र° R,Dc; °रात्मनि जु° पै १६,११२,१०.

एते। वै। प्रियाः। च। अप्रियाः। च। ऋत्विजः। स्वःऽगाम्। लोकम्। गमयन्ति[१]। यत्। अतिथयः ॥ ६ ॥

'स य एवं विद्वान्[२] न द्विषन्नश्नीयान्न[३] द्विषतोऽन्नमश्नीयान्न[४] मीमांसितस्य न मीमांसमानस्य[५] ॥ ७ ॥ [२४]

सः। यः। एवम्। विद्वान्[२]। न। द्विषन्। अश्नीयात्। न। द्विषतः। अन्नम्। अश्नीयात्। न। मीमांसितस्य। न। मीमांसमानस्य[५] ॥ ७ ॥

सर्वो वा एष जग्धपाप्मा यस्यान्नमश्नन्ति ॥ ८ ॥ [२५]

सर्वः। वै। एषः। जग्धऽपाप्मा। यस्य। अन्नम्। अश्नन्ति ॥ ८ ॥

सर्वो वा एषोऽजग्धपाप्मा यस्यान्नं नाश्नन्ति ॥ ९ ॥ [२६]

सर्वः। वै। एषः। अजग्धऽपाप्मा। यस्य। अन्नम्। न। अश्नन्ति[७] ॥ ९ ॥

सर्वदा वा एष युक्तग्रावार्द्रपवित्रो[८] विततध्वर आहृतयज्ञक्रतुर्य[९] उपहरति ॥ १० ॥ [२७]

सर्वदा। वै। एषः। युक्तऽग्रावा। आर्द्रऽपवित्रः। विततऽअध्वरः। आहृतऽयज्ञक्रतुः। यः। उपऽहरति ॥ १० ॥

प्राजापत्यो वा एतस्य यज्ञो विततो य उपहरति ॥ ११ ॥ [२८]

प्राजाऽपत्यः। वै। एतस्य। यज्ञः। विऽततः। यः। उपहरति ॥ ११ ॥

प्रजापतेर्वा एष विक्रमाननुविक्रमते य उपहरति ॥ १२ ॥ [२९]

प्रजाऽपतेः। वै। एषः। विऽक्रमान्। अनुऽविक्रमते। यः। उपऽहरति ॥ १२ ॥

योऽतिथीनां स आहवनीयो यो वेश्मनि स गार्हपत्यो[१०]यस्मिन् पचन्ति[१०] स दक्षिणाग्निः ॥ १३ ॥ [३०]

यः। अतिथीनाम्। सः। आऽहवनीयः। यः। वेश्मनि। सः। गार्हऽपत्यः। यस्मिन्। पचन्ति। सः। दक्षिणऽअग्निः ॥ १३ ॥

इति तृतीयेऽनुवाके तृतीयं सूक्तम्।

---

१. गमयति P. २. तस्मात् पै १६,११३,१. ३. °श्नाय पं. ४. °मश्नाय पं. ५. स्वरः ? °मांस्यमानस्य इति न्याय्यम् (द्र. पै. मूको.). ६. द्विषात् Bp¹. ७. अश्नन्ति P. ८. सुतसोम आर्द्र° पै १६,११३,५. ९. °यज्ञः क्र° B. १०. योऽग्निकरणम् प १६,११३,६.

इष्टं च वा एष पूर्तं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥१॥ [३१]

इष्टम् । च । वै । एषः । पूर्तम् । च । गृहाणाम् । अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥

पयश्च वा एष रसं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥२॥ [३२]

पयः । च । वै । एषः । रसम् । च । गृहाणाम् । अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥२॥

ऊर्जां[1] च वा एष स्फातिं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥३॥ [३३]

ऊर्जाम् । च । वै । एषः । स्फातिम् । च । गृहाणाम् । अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥ ३ ॥

प्रजां च वा एष पशूंश्च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥४॥ [३४]

प्रऽजाम् । च । वै । एषः । पशून् । च । गृहाणाम् । अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥ ४ ॥

कीर्तिं च वा एष यशश्च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥५॥ [३५]

कीर्तिम् । च । वै । एषः । यशः । च । गृहाणाम् । अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥ ५ ॥

श्रियं च वा एष संविदं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥६॥ [३६]

श्रियम् । च । वै । एषः । सम्ऽविदम् । च । गृहाणाम् । अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥ ६ ॥

एष वा अतिथिर्यच्छ्रोत्रियस्तस्मात् पूर्वो नाश्नीयात् ॥७॥ [३७]

एषः । वै । अतिथिः । यत् । श्रोत्रियः । तस्मात् । पूर्वः । न । अश्नीयात् ॥ ७ ॥

अशितावत्यतिथावश्नीयाद् यज्ञस्य सात्मत्वाय यज्ञस्याविच्छेदाय तद् व्रतम् ॥८॥

अशितऽवति । अतिथौ । अश्नीयात् । यज्ञस्य । सात्मऽत्वाय । यज्ञस्य । अविऽछेदाय । तत् । व्रतम् ॥ ८ ॥ [३८]

---

१. ऊर्जं पै १६,११३,९.

एतद् वा उ स्वादीयो यदधिगवं क्षीरं वा मांसं वा तदेव नाश्नीयात् ॥९॥ [३९]

एतत् । वै । ऊं इति । स्वादीयः । यत् । अधिऽगवम् । क्षीरम् । वा । मांसम् । वा । तत् । एव । न । अश्नीयात् ॥ ९ ॥

इति तृतीयेऽनुवाके चतुर्थं सूक्तम् ।

स य एवं विद्वान् क्षीरमुपसिच्योपहरति ॥ १ ॥

सः । यः । एवम् । विद्वान् । क्षीरम् । उपऽसिच्य । उपऽहरति ॥ १ ॥

यावदग्निष्टोमेनेष्ट्वा सुसमृद्धेनावरुन्द्धे[1] तावदेनेनाव रुन्द्धे[2] ॥२॥ [४०]

यावत् । अग्निऽस्तोमेन । इष्ट्वा । सुऽसमृद्धेन । अवऽरुन्द्धे । तावत् । एनेन । अव । रुन्द्धे ॥

स य एवं विद्वान्त्सर्पिरुपसिच्योपहरति ॥ ३ ॥

सः । यः । एवम् । विद्वान् । सर्पिः । उपऽसिच्य । उपऽहरति ॥ ३ ॥

यावदतिरात्रेणेष्ट्वा० ॥ ४ ॥ [४१]

यावत् । अतिऽरात्रेण । इष्ट्वा । ० ॥ ४ ॥

स य एवं विद्वान् मधूपसिच्योपहरति ॥ ५ ॥

सः । यः । एवम् । विद्वान् । मधु । उपऽसिच्य । उपऽहरति ॥ ५ ॥

यावत् सत्रसद्येनेष्ट्वा ० ॥ ६ ॥ [४२]

यावत् । सत्रऽसद्येन । इष्ट्वा । ० ॥ ६ ॥

स य एवं विद्वान् मांसमुपसिच्योपहरति ॥ ७ ॥

सः । यः । एवम् । विद्वान् । मांसम् । उपऽसिच्य । उपऽहरति ॥ ७ ॥

यावद् द्वादशाहेनेष्ट्वा सुसमृद्धेनावरुन्द्धे तावदेनेनाव रुन्द्धे ॥ ८ ॥ [४३]

यावत् । द्वादशऽअहेन । इष्ट्वा । सुऽसमृद्धेन । अवऽरुन्द्धे । तावत् । एनेन । अव । रुन्द्धे ॥

---

१. 'रुन्धे एवमुत्तरत्र RW. सात.'    २. रुन्धे एवमुत्तरत्र RW. मात.'

स य एवं विद्वानुदकमुपसिच्योपहरति ॥ ९ ॥

सः । यः । एवम् । विद्वान् । उदकम् । उपऽसिच्य । उपऽहरति ॥ ९ ॥

प्रजानां प्रजननाय गच्छति प्रतिष्ठां प्रियः प्रजानां भवति य एवं विद्वानुदकमुपसिच्योपहरति ॥ १० ॥ [४४]

प्रऽजानाम् । प्रऽजननाय । गच्छति । प्रतिऽस्थाम् । प्रियः । प्रऽजानाम् । भवति । यः । एवम् । विद्वान् । उदकम् । उपऽसिच्य । उपऽहरति ॥ १० ॥

इति तृतीयेऽनुवाके पञ्चमं सूक्तम् ।

तस्मा उषा हिङ्कृणोति सविता प्र स्तौति ॥ १ ॥

तस्मै । उषाः । हिङ् । कृणोति । सविता । प्र । स्तौति ॥ १ ॥

बृहस्पतिरूर्जयोद्गायति[1] त्वष्टा पुष्ट्या प्रति हरति विश्वे देवा निधनम् ॥२॥

बृहस्पतिः । ऊर्जया । उत् । गायति । त्वष्टा । पुष्ट्या । प्रति । हरति । विश्वे । देवाः । निऽधनम् ॥ २ ॥

निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद ॥ ३ ॥ [४५]

निऽधनम् । भूत्याः । प्रऽजायाः । पशूनाम् । भवति । यः । एवम् । वेद ॥ ३ ॥

तस्मा उद्यन्त्सूर्यो हिङ्कृणोति संगवः प्र स्तौति ॥ ४ ॥

तस्मै । उत्ऽयन् । सूर्यः । हिङ् । कृणोति । सम्ऽगवः । प्र । स्तौति ॥ ४ ॥

मध्यन्दिन उद्गायत्यपराह्णः प्रति हरत्यस्तंयन्निधनम् । निधनं० ॥५॥ [४६]

मध्यन्दिनः । उत् । गायति । अपरऽअह्नः । प्रति । हरति । अस्तम्ऽयन् । निऽधनम् । निऽधनम् । ० । ॥ ५ ॥

तस्मा अभ्रो भवन् हिङ्कृणोति स्तनयन्[2] प्र स्तौति ॥ ६ ॥

तस्मै । अभ्रः । भवन् । हिङ् । कृणोति । स्तनयन् । प्र । स्तौति ॥ ६ ॥

---

१. 'रूर्जोद्गा' पै १६,११५,१. २. विद्योतमानः पै १६,११५,३.

'विद्योतमानः प्रति हरति वर्षन्नुद्गायत्युद्गृह्णन्' निधनम् । निधनं० ॥७॥ [४७]

विऽद्योतमानः । प्रति । हरति । वर्षन्[2] । उत् । गायति । उत्ऽगृह्णन् । निऽधनम् । निऽधनम् । ०॥

अतिथीन् प्रति पश्यति हिङ्कृणोत्यभि वदति[3] प्र स्तौत्युदकं याचत्युद्गायति[4] ॥८॥

अतिथीन् । प्रति । पश्यति । हिङ् । कृणोति । अभि । वदति । प्र । स्तौति । उदकम् । [5]याचति । उत् । गायति ॥ ८ ॥

उप हरति प्रति हरत्युच्छिष्टं निधनम् ॥ ९ ॥

उप । हरति । प्रति । हरति । उत्ऽशिष्टम् । निऽधनम् ॥ ९ ॥

निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद ॥ १० ॥ [४८]

निऽधनम् । भूत्याः । प्रऽजायाः । पशूनाम् । भवति । यः । एवम् । वेद ॥ १० ॥

इति तृतीयेऽनुवाके षष्ठं सूक्तम्।

यत् क्षत्तारं ह्वयत्या श्रावयत्येव तत् ॥ १ ॥ [४९]

यत् । क्षत्तारम् । ह्वयति । आ । श्रावयति । एव । तत् ॥ १ ॥

यत् प्रतिशृणोति प्रत्याश्रावयत्येव तत् ॥ २ ॥ [५०]

यत् । प्रतिऽशृणोति । प्रतिऽआश्रावयति । एव । तत् ॥ २ ॥

यत् परिवेष्टारः 'पात्रहस्ताः पूर्वे चापरे च' प्रपद्यन्ते चमसाध्वर्यव एव ते ।३। [५१]

यत् । परिऽवेष्टारः । पात्रऽहस्ताः । पूर्वे । च । अपरे । च । प्रऽपद्यन्ते । चमसऽअध्वर्यवः[7] । एव । ते ॥ ३ ॥

तेषां न कश्चनाहोता ॥ ४ ॥ [५२]

तेषाम् । न । कः[8] । चन । अहोता ॥ ४ ॥

यद् वा अतिथिपतिरतिथीन् परिविष्य गृहानुपोदैत्यवभृथमेव तदुपावैति ॥५॥ [५३]

---

१. स्तनयन्नुद्गायत्यपराह्णः प्रतिहरत्यस्तंयन् पै १६,११५,१. २. वर्षन् P,P[2],D[2], Bp[2],Bp[3]. ३. वदति B. ४. तु. B,K,K[m],R,V,Dc; वैतु. शंपा. RW.Wi. याचु°. ५. तु. मंत्रा.; वैतु. शंपा. यार्चति. ६. आवसथान् पै १६,११६,४. ७. चमसुऽअध्व° Bp[2]. ८. कः P,J.

यत् । वै । अतिथिऽपतिः । अतिथीन् । परिऽविष्य । गृहान् । उपऽउदैति[२] । अवऽभृथम् । एव । तत् । उपऽअवैति ॥ ५ ॥

**यत् [१]सभागयति दक्षिणाः सभागयति[२] यदनुतिष्ठत[३] उदवस्यत्येव[४] तत् ॥६॥ [५४]**

यत् । सभागयति । दक्षिणाः । सभागयति । यत् । अनुऽतिष्ठते[३] । उत्ऽअवस्यति । एव । तत् ॥

**स उपहूतः पृथिव्यां भक्षयत्युपहूतस्तस्मिन् यत् पृथिव्यां विश्वरूपम् ॥७॥ [५५]**

सः । उपऽहूतः । पृथिव्याम् । भक्षयति । उपऽहूतः । तस्मिन् । यत् । पृथिव्याम् । विश्वऽरूपम् ॥

**स उपहूतोऽन्तरिक्षे भक्षयत्युपहूतस्तस्मिन् यदन्तरिक्षे विश्वरूपम् ॥८॥ [५६]**

सः । उपऽहूतः । अन्तरिक्षे । भक्षयति । उपऽहूतः । तस्मिन् । यत् । अन्तरिक्षे । विश्वऽरूपम् ।

**स उपहूतो दिवि भक्षयत्युपहूतस्तस्मिन् यद् दिवि विश्वरूपम् ॥९॥ [५७]**

सः । उपऽहूतः । दिवि । भक्षयति । उपऽहूतः । तस्मिन् । यत् । दिवि । विश्वऽरूपम् ॥ ९ ॥

**स उपहूतो देवेषु भक्षयत्युपहूतस्तस्मिन् यद् देवेषु विश्वरूपम् ॥ १० ॥ [५८]**

सः । उपऽहूतः । देवेषु । भक्षयति । उपऽहूतः । तस्मिन् । यत् । देवेषु । विश्वऽरूपम् ॥१०॥

**स उपहूतो लोकेषु भक्षयत्युपहूतस्तस्मिन् यल्लोकेषु विश्वरूपम् ॥११॥ [५९]**

सः । उपऽहूतः । लोकेषु । भक्षयति । उपऽहूतः । तस्मिन् । यत् । लोकेषु । विश्वऽरूपम् ॥

**स उपहूत उपहूतः ॥ १२ ॥ [६०]**

सः । उपऽहूतः । उपऽहूतः ॥ १२ ॥

**आप्नोतीमं लोकमाप्नोत्यमुम् ॥ १३ ॥ [६१]**

आप्नोति । इमम् । लोकम् । आप्नोति । अमुम् ॥ १३ ॥

**ज्योतिष्मतो [५]लोकान् जयति य एवं वेद ॥ १४ ॥ [६२]**

---

१. °उदैति P,P². २. °गयतु दक्षिणामेव तत् सभागयतु पै १६,११६,१०.
३. °तिष्ठति पै. P,P²,J. ४. °स्यत्येव पै. ५. लोका जं° RW.; लोकाअं° सात°.

ज्योतिष्मतः । लोकान् । जयति । यः । एवम् । वेद ॥ १४ ॥

इति तृतीयेऽनुवाके सप्तमं सूक्तम् ।

इति तृतीयोऽनुवाकः ।

'प्रजापतिश्च' इति सूक्तस्य गोष्ठकर्मणि विनियोगः । " 'प्रजापतिः' इति गोष्ठकर्माणि" ( कौसू १९,१४ ) इत्यादिसूत्रात् । विस्तरस्तु 'एह यन्तु पशवः' ( अ २,२६ ) इति सूक्ते द्रष्टव्यः ।

तथा अनडुत्सवे अनेन सूक्तेन निरुप्तहविरभिमर्शनं संपातं दात्रवाचनं दानं च कुर्यात् । " 'प्रजापतिश्च' इत्यनड्वाहम्" ( कौसू ६६,१९ ) इति सूत्रात् ।

वस्तुतस्तु मेध्यवृषभस्य यानि भिन्नभिन्नान्यङ्गानि तानि भिन्नभिन्नदेवतारूपाणि भवन्तीति तस्य प्रशंसा ।

प्रजापतिश्च परमेष्ठी च शृङ्गे इन्द्रः शिरो अग्निर्ललाटं यमः कृकाटम् ॥१॥

प्रजाऽपतिः । च । परमेऽस्थी । च । शृङ्गे इति । इन्द्रः । शिरः । अग्निः । ललाटम्[1] । यमः । कृकाटम् ॥ १ ॥

सोमो राजा मस्तिष्को द्यौरुत्तरहनुः पृथिव्यधरहनुः ॥ २ ॥

सोमः । राजा । मस्तिष्कः । द्यौः । उत्तरऽहनुः । पृथिवी । अधरऽहनुः ॥ २ ॥

विद्युज्जिह्वा मरुतो दन्ता रेवतीर्ग्रीवाः कृत्तिका[2] स्कन्धा घर्मो वहः ॥ ३ ॥

विऽद्युत् । जिह्वा । मरुतः । दन्ताः । रेवतीः । ग्रीवाः । कृत्तिकाः । स्कन्धाः । घर्मः । वहः ॥

विश्वं वायुः स्वर्गो लोकः कृष्णद्रं विधरणी निवेष्यः[3] ॥ ४ ॥

विश्वम् । वायुः । स्वःऽगः । लोकः । कृष्णऽद्रम् । विऽधरणी । निऽवेष्यः ॥ ४ ॥

श्येनः क्रोडो३ऽन्तरिक्षं[4] पाजस्यं१[5] बृहस्पतिः ककुद् बृहतीः कीकसाः ॥५॥

श्येनः । क्रोडः । अन्तरिक्षम् । पाजस्यम् । बृहस्पतिः । ककुत् । बृहतीः । कीकसाः ॥५॥

---

१. ललाटम् P. २. कृत्तिकाः A,B,B[b],K[m],R,V,Dc,Cs. ३. निवेष्यः R,RW. ४. क्रोडो३न्त° D,K,K[m],S[m]; क्रोडो३न्त° साव[c]. ५. °स्यं३ D,S[m] °स्यं३ Dc.

देवानां पत्नीः पृष्टय उपसदः पर्शवः ॥ ६ ॥

देवानाम् । पत्नीः । पृष्टयः[1] । उपऽसदः । पर्शवः ॥ ६ ॥

मित्रश्च वरुणश्चांसौ त्वष्टा चार्यमा च दोषणी महादेवो बाहू ॥ ७ ॥

मित्रः । च । वरुणः । च । अंसौ । त्वष्टा । च । अर्यमा । च । दोषणी इति । महाऽदेवः । बाहू इति ॥ ७ ॥

इन्द्राणी भसद् वायुः पुच्छं पवमानो बालाः[2] ॥ ८ ॥

इन्द्राणी । भसत् । वायुः । पुच्छम् । पवमानः । बालाः ॥ ८ ॥

ब्रह्म च क्षत्रं च श्रोणी बलमूरू ॥ ९ ॥

ब्रह्म । च । क्षत्रम् । च । श्रोणी इति । बलम् । ऊरू इति[3] ॥ ९ ॥

धाता च सविता[4] चाष्ठीवन्तौ जङ्घा गन्धर्वा अप्सरसः कुष्ठिका अदितिः शफाः ॥१०॥

धाता । च । सविता[4] । च । अष्ठीवन्तौ । जङ्घाः । गन्धर्वाः । अप्सरसः । कुष्ठिकाः । अदितिः । शफाः ॥ १० ॥

चेतो हृदयं यकृन्मेधा व्रतं पुरीतत् ॥ ११ ॥

चेतः । हृदयम् । यकृत् । मेधा । व्रतम् । पुरिऽतत् ॥ ११ ॥

क्षुत् कुक्षिरिरा वनिष्ठुः[5] पर्वताः प्लाशयः ॥ १२ ॥

क्षुत् । कुक्षिः । इरा । वनिष्ठुः । पर्वताः । प्लाशयः ॥ १२ ॥

क्रोधो वृक्कौ[6] मन्युराण्डौ[7] प्रजा[8] शेपः ॥ १३ ॥

क्रोधः । वृक्कौ[6] । मन्युः । आण्डौ । प्रऽजा । शेपः ॥ १३ ॥

नदी सूत्री वर्षस्य पतय स्तना स्तनयित्नुरूधः ॥ १४ ॥

---

१. पृष्ट्यः K,P. २. बालाः R,RW. ३. उरू इति P. ४. विधाता K,K^m,S^m,V,Dc. ५. वनिष्ठुः ? K^m; वनिष्ठुः अन्ये. ६. वृक्कौ A,K^m,R,S^m,Dc, P^2,J. ७. °रण्डौ K^m. ८. प्रजाः पै १६,१३९,१६ [मूको.].

नदी । सूत्री । वर्षस्य । पतयः । स्तनाः । स्तनयित्नुः । ऊधः ॥ १४ ॥

विश्वव्यचाश्चर्मौषधयो लोमानि[1] नक्षत्राणि रूपम् ॥ १५ ॥

विश्वऽव्यचाः । चर्म । ओषधयः । लोमानि । नक्षत्राणि । रूपम् ॥ १५ ॥

देवजना गुदा मनुष्या आन्त्राण्यत्रा उदरम् ॥ १६ ॥

देवऽजनाः । गुदाः । मनुष्याः । आन्त्राणि । अत्राः । उदरम् ॥ १६ ॥

रक्षांसि लोहितमितरजना ऊबध्यम्[2] ॥ १७ ॥

रक्षांसि । लोहितम् । इतरऽजनाः । ऊबध्यम् ॥ १७ ॥

अभ्रं पीबो[3] मज्जा निधनम् ॥ १८ ॥

अभ्रम् । पीबः । मज्जा । निऽधनम् ॥ १८ ॥

अग्निरासीन उत्थितोऽश्विना ॥ १९ ॥

अग्निः । आसीनः । उत्थितः । अश्विना ॥ १९ ॥

इन्द्रः प्राङ् तिष्ठन् दक्षिणा तिष्ठन् यमः ॥ २० ॥

इन्द्रः । प्राङ् । तिष्ठन् । दक्षिणा[4] । तिष्ठन् । यमः ॥ २० ॥

प्रत्यङ् तिष्ठन् धातोदङ् तिष्ठन्त्सविता ॥ २१ ॥

प्रत्यङ् । तिष्ठन् । धाता । उदङ् । तिष्ठन्[5] । सविता ॥ २१ ॥

तृणानि प्राप्तः सोमो राजा ॥ २२ ॥

तृणानि । प्रऽआप्तः[6] । सोमः । राजा ॥ २२ ॥

[7]मित्र ईक्षमाण[7] आवृत्त आनन्दः ॥ २३ ॥

मित्रः । ईक्षमाणः । आऽवृत्तः । आऽनन्दः ॥ २३ ॥

---

१. रोमाणि पै १६,१३९,१८. २. ऊवध्यम् Km. ३. पीवों D.K,Km, पै १६,१३९,१९. ४. दक्षिणा P. ५. तिष्ठन् P[1]. ६. °आप्ताः P; प्रऽआप्तः WM. ७. ईक्षमाणो मित्रावरुणौ पै १६,१३९,२४.

युज्यमा॑नो वैश्वदे॒वो॑ यु॒क्तः प्र॒जाप॑ति॒र्विमु॑क्त॒ः सर्व॑म् ॥ २४ ॥

यु॒ज्यमा॑नः । वै॒श्व॒ऽदे॒वः । यु॒क्तः । प्र॒जाऽप॑तिः । वि॒ऽमु॑क्तः । सर्व॑म् ॥ २४ ॥

ए॒तद् वै वि॒श्वरू॑पं स॒र्वरू॑पं गो॒रू॒पम् ॥ २५ ॥

ए॒तत् । वै । वि॒श्व॒ऽरू॒पम् । स॒र्व॒ऽरू॒पम् । गो॒ऽरू॒पम् ॥ २५ ॥

उपै॑नं वि॒श्वरू॑पाः स॒र्वरू॑पाः प॒शव॑स्तिष्ठन्ति॒ य ए॒वं वेद॑ ॥ २६ ॥

उप॑ । ए॒न॒म् । वि॒श्व॒ऽरू॒पाः । स॒र्व॒ऽरू॒पाः । प॒शवः॑ । ति॒ष्ठ॒न्ति॒ । यः । ए॒वम् । वेद॑ ॥ २६ ॥

इति चतुर्थेऽनुवाके प्रथमं सूक्तम् ।

शिरोरोगादिसर्वभैषज्ये कर्मणि 'शीर्षक्तिम्' इत्यर्थसूक्तेन व्याधितशरीरम् अभिमृशति। ततः 'पादाभ्यां ते' (२१;२२) इति द्वाभ्याम् ऋग्भ्याम् आदित्यम् उपतिष्ठते। तथा च सूत्रम्—" 'शीर्षक्तिम्' इत्यभिमृशति । उत्तमाभ्याम् आदित्यमुपतिष्ठते" (कौसू ३२,१८;१९) इति।

तथा अस्य सूक्तस्य अंहोलिङ्गगणे पाठात् तस्य गणस्य यत्रयत्र सर्वव्याधिभैषज्यादिषु विनियोग उक्तस्तत्र सर्वत्रास्य विनियोगोऽनुसंधेयः। विस्तरस्तु 'अक्षीभ्याम्' इति सूक्ते (अ २,३३) द्रष्टव्यः।

शी॒र्ष॒क्तिं॑ शी॑र्षाम॒यं क॑र्णशू॒लं वि॑लोहि॒तम्॑ ।
सर्वं॑ शीर्ष॒ण्यं॑ ते॒ रोगं॑ ब॒हिर्निर्मन्त्रयामहे ॥ १ ॥

शी॒र्ष॒क्तिम् । शी॒र्ष॒ऽआ॒म॒यम् । क॒र्ण॒ऽशू॒लम् । वि॒ऽलो॒हि॒तम् ।
सर्व॑म् । शी॒र्ष॒ण्य॑म् । ते॒ । रोग॑म् । ब॒हिः । निः । म॒न्त्र॒या॒म॒हे॒ ॥ १ ॥

कर्णा॑भ्यां ते॒ कङ्कू॑षेभ्यः क॑र्णशू॒लं॑ विस॒ल्पक॑म् । सर्वं॑ ० ॥ २ ॥

कर्णा॑भ्याम् । ते॒ । कङ्कू॑षेभ्यः । क॒र्ण॒ऽशू॒लम् । वि॒ऽस॒ल्पक॑म् । ० ॥ २ ॥

यस्य॑ हे॒तोः प्र॒च्यव॑ते॒ यक्ष्म॑ः क॒र्ण॒त॑ आ॒स्य॒तः । सर्वं॑ ० ॥ ३ ॥

---

१. वैश्वानरो पै १६,१३९,२५. २. रूपवन्तः पै १६,१३९,२७. ३. शीर्षक्तं पै १९,७४,१. ४. शूर्षायकम् पै. ५. विऽलोहितम् P². ६. कङ्कूलेभ्यः पै १९,७४,२. ७. मुक्तिवन्तं ? पै. ८. विसर्ल्पकम् RW.; विलोहितम् पै. ९. मासव पै १९,७४,४.

यस्य । हेतोः । प्रऽच्यवते । यक्ष्मः । कर्णतः । आस्यतः । ० ॥ ३ ॥

यः कृणोति[1] प्रमोतमन्धं कृणोति[2] पूरुषम् । सर्वं ० ॥ ४ ॥

यः । कृणोति । प्रऽमोतम् । अन्धम् । कृणोति । पुरुषम् । ० ॥ ४ ॥

[3]अङ्गभेदमङ्गज्वरं विश्वाङ्ग्यं[4] विसल्पकम्[5] ।
सर्वं शीर्षण्यं ते रोगं बहिर्निर्मन्त्रयामहे ॥ ५ ॥

अङ्गऽभेदम् । अङ्गऽज्वरम् । विश्वऽअङ्ग्यम् । विऽसल्पकम् ।
सर्वम् । शीर्षण्यम् । ते । रोगम् । बहिः । निः । मन्त्रयामहे ॥ ५ ॥

यस्य भीमः प्रतीकाश उद्वेपयति पूरुषम् ।
तक्मानं [6]विश्वशारदं बहिर्निर्मन्त्रयामहे[6] ॥ ६ ॥

यस्य । भीमः । प्रतिऽकाशः । उत्ऽवेपयति । पुरुषम् ।
तक्मानम् । विश्वऽशारदम् । बहिः । निः । मन्त्रयामहे ॥ ६ ॥

य ऊरू [7]अनुसर्पत्यथो एति[7] गवीनिके ।
[8]यक्ष्मं ते[8] अन्तरङ्गेभ्यो बहिर्निर्मन्त्रयामहे ॥ ७ ॥

यः । ऊरू इति । अनुऽसर्पति । अथो इति । एति । गवीनिके इति ।
यक्ष्मम् । ते । अन्तः । अङ्गेभ्यः । बहिः । निः । मन्त्रयामहे ॥ ७ ॥

यदि[9] कामादपकामाद्धृदयाज्जायते परि ।
हृदो बलासमङ्गेभ्यो बहिर्निर्मन्त्रयामहे ॥ ८ ॥

यदि । कामात् । अपऽकामात् । हृदयात् । जायते । परि ।
हृदः । बलासम् । अङ्गेभ्यः । बहिः । निः । मन्त्रयामहे ॥ ८ ॥

हरिमाणं ते [9]अङ्गेभ्योऽप्वामन्तरोदरात्[9] ।
यक्ष्मोधामन्तरात्मनो[10] बहिर्निर्मन्त्रयामहे ॥ ९ ॥

---

१. कृणोति K,Km,V,Dc,P; कृणोतु पै १६,७४,३. २. कृणोतु पै. ३. शीर्षरोगमङ्गरोगं विश्वाङ्गीनम् पै १६,७४,५. ४. विसल्यकम् RW.; विशल्यकम् पै [मूको.]. ५. शीर्षं रूपं च यं ते नि° पै १६,७४,६. ६. °सर्पत्यथो येऽनु पै १६,७४,७. ७. बलासम् पै. ८. यद् पै १६,७४,८. ९. °भ्यो यक्ष्मोधामन्तरात्मनः पै १६,७४,९; यक्ष्मो° B,D, Km. १०. यक्ष्मं ते सर्वमङ्गेभ्यो पै.

हरिमाणम् । ते । अङ्गेभ्यः । अप्वाम् । अन्तरा । उदरात् ।
यक्ष्मःऽधाम् । अन्तः । आत्मनः । बहिः । निः । मन्त्रयामहे ॥ ९ ॥

आसो बलासो भवतु[1] मूत्रं भवत्वामयत् ।
यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥ १० ॥

आसः । बलासः । भवतु । मूत्रम् । भवतु । आमयत् ।
यक्ष्माणाम् । सर्वेषाम् । विषम् । निः । अवोचम् । अहम् । त्वत् ॥ १० ॥

बहिर्बिलं निर्द्रवतु[2] काहाबाहं[3] तवोदरात् । यक्ष्माणां० ॥ ११ ॥

बहिः । बिलम् । निः । द्रवतु । काहाबाहम् । तव । उदरात् । ० ॥ ११ ॥

उदरात् ते क्लोम्नो नाभ्या हृदयादधि ।
[4]यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत्[4] ॥ १२ ॥

उदरात् । ते । क्लोम्नः । नाभ्याः । हृदयात् । अधि ।
यक्ष्माणाम् । सर्वेषाम् । विषम् । निः । अवोचम् । अहम् । त्वत् ॥ १२ ॥

याः सीमानं विरुजन्ति मूर्धानं प्रत्यर्षणीः ।
अहिंसन्तीरनामया निर्द्रवन्तु[5] बहिर्बिलम् ॥ १३ ॥

याः । सीमानम् । विऽरुजन्ति । मूर्धानम् । प्रति । अर्षणीः[6] ।
अहिंसन्तीः । अनामयाः । निः । द्रवन्तु । बहिः । बिलम् ॥ १३ ॥

या हृदयमुपर्षन्त्यनुतन्वन्ति[7] कीकसाः । अहिं० ॥ १४ ॥

याः । हृदयम् । उपऽऋषन्ति । अनुऽतन्वन्ति । कीकसाः । ० ॥ १४ ॥

याः पार्श्वे उपर्षन्त्यनुनिक्षन्ति पृष्टीः[8] । अहिं० ॥ १५ ॥

याः । पार्श्वे इति । उपऽऋषन्ति । अनुऽनिक्षन्ति । पृष्टीः[8] । ० ॥ १५ ॥

---

१. भवन् पै १६,७४,१०. २. निर्धावतु पै १६,७५,१. ३. कहाबलं ? पै. ४. यक्ष्मोधामन्तरात्मनो बहिर्निर्मन्त्रयामहे पै १६,७५,२. ५. निर्द्रवन्ति एवमुत्तरत्र पै १६, ७५,२. ६. अर्षणीः P. ७. °प ऋष° एवमुत्तरत्र मन्त्रद्वये A,D,R,K^m,P^1, पै १६,७५, ८-९. ८. पृष्टीः B,D,K,K^m,V,Cs,P,Cp; पृष्टीः > पृष्टीः S^m,Dc.

'यास्तिरश्चीरुपर्षन्त्यर्षणीर्वक्षणासु ते' । अहिं० ॥ १६ ॥

याः । तिरश्चीः । उपऽऋषन्ति । अर्षणीः । वक्षणासु । ते । ० ॥ १६ ॥

या गुदा अनुसर्पन्त्यान्त्राणि मोहयन्ति' च । अहिं० ॥ १७ ॥

याः । गुदाः । अनुऽसर्पन्ति । आन्त्राणि । मोहयन्ति । च । ० ॥ १७ ॥

या 'मज्ज्ञो निर्धयन्ति' परूंषि विरुजन्ति च ।
अहिंसन्तीरनामया निर्द्रवन्तु बहिर्बिलम् ॥ १८ ॥

याः । मज्ज्ञः' । निःऽधयन्ति । परूंषि । विऽरुजन्ति । च ।
अहिंसन्तीः । अनामयाः । निः । द्रवन्तु । बहिः । बिलम्' ॥ १८ ॥

'ये अङ्गानि' मदयन्ति यक्ष्मासो रोपणास्तव' ।
यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥ १९ ॥

ये । अङ्गानि । मदयन्ति । यक्ष्मासः । रोपणाः । तव ।
यक्ष्माणाम् । सर्वेषाम् । विषम् । निः । अवोचम् । अहम् । त्वत् ॥ १९ ॥

'विसल्पस्य' विद्रधस्य वातीकारस्य' वालजेः ।
यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥ २० ॥

विऽसल्पस्य । विऽद्रधस्य । वातीऽकारस्य । [१०]वा । अलजेः[१०] ।
यक्ष्माणाम् । सर्वेषाम् । विषम् । निः । अवोचम् । अहम् । त्वत् ॥ २० ॥

पादाभ्यां ते जानुभ्यां श्रोणिभ्यां परि भंससः ।
अनूकादर्षणीरुष्णिहाभ्यः शीर्ष्णो रोगमनीनशम् ॥ २१ ॥

पादाभ्याम् । ते । जानुऽभ्याम् । श्रोणिऽभ्याम् । परि । भंससः ।
अनूकात् । अर्षणीः । उष्णिहाभ्यः । शीर्ष्णः । रोगम् । अनीनशम् ॥ २१ ॥

---

१. °वेक्षणाभ्यः पै १६,७५,६. २. यापयन्ति पै १६,७५,७. ३. मज्ञो° A,B, Bb,D,K,Km,R,Sm,V,Dc,Cs; मज्ज्ञोऽनुसर्पन्ति पै १६,७५,८. ४. मज्ञः P,P², J,Cp ५. बलम् P. ६. येऽङ्गानि B,D,Sm,P³,M,O. ७. °णास्सह पै १६,७५,९. ८. विसल्यस्य RW.; विशल्यस्य पै १६,७५,१० [मूको.]. ९. °कालस्य पै [मूको.]. १०. वैप १,४३५ a द्र.

सं ते॑ शी॒र्ष्णः क॒पाला॑नि॒ हृद॑यस्य च॒ यो वि॒धुः[1] ।
उ॒द्यन्ना॑दित्य र॒श्मिभि॑ः शी॒र्ष्णो रोग॑मनीनशोऽङ्ग॒भेद॑मशीशमः ॥ २२ ॥

सम् । ते॒ । शी॒र्ष्णः । क॒पाला॑नि । हृद॑यस्य । च॒ । यः । वि॒धुः[2] । उ॒त्ऽयन् । आ॒दि॒त्य॒ । र॒श्मिऽभि॑ः । शी॒र्ष्णः । रोग॑म् । अ॒नी॒न॒शः । अ॒ङ्ग॒ऽभे॒दम् । अ॒शी॒श॒मः ॥ २२ ॥

इति चतुर्थेऽनुवाके द्वितीयं सूक्तम् ।

इति चतुर्थोऽनुवाकः ।

'अस्य वामस्य' इत्यनुवाकस्य सलिलगणमध्ये पाठः । अतः 'सलिलैः क्षीरौदनम् अश्नाति । मन्थान्तानि' ( कौसू १८,२५;२६ ) इति 'सलिलैः सर्वकामः' ( कौसू २४,४६ ) इत्यादावस्य विनियोगः । सलिलगणश्च 'आपो हि ष्ठा' ( अ १,५ ) इति सूक्ते द्रष्टव्यः ।

'अस्य वामस्य' इति सूक्तमन्त्रा ऋगन्तर्भूते तस्मिन्नेव सूक्ते ( ऋ १,१६४ ) दृष्टाः । तत्र तद्भाष्यं सायणीयं द्रष्टव्यम् ।

अ॒स्य वा॒मस्य॑ पलि॒तस्य॒ होतु॒स्तस्य॒ भ्राता॑ मध्य॒मो अ॒स्त्यश्न॑ः ।
तृ॒तीयो॒ भ्राता॑ घृ॒तपृ॑ष्ठो अ॒स्यात्रा॑पश्यं वि॒श्पतिं॑ स॒प्तपु॑त्रम् ॥ १ ॥

अ॒स्य । वा॒मस्य॑ । प॒लि॒तस्य॑ । होतु॑ः । तस्य॑ । भ्राता॑ । म॒ध्य॒मः । अ॒स्ति॒[3] । अश्न॑ः । तृ॒तीय॑ः । भ्राता॑ । घृ॒तऽपृ॑ष्ठः । अ॒स्य॒ । अत्र॑ । अ॒प॒श्य॒म् । वि॒श्पति॑म् । स॒प्तऽपु॑त्रम् ॥ १ ॥

स॒प्त यु॑ञ्जन्ति॒ रथ॒मेक॑चक्र॒मेको॒ अश्वो॑ वहति स॒प्तना॑मा ।
त्रि॒नाभि॑ च॒क्रम॒जर॑मन॒र्वं[4] यत्रे॒मा[5] विश्वा॒ भुव॒नाधि॑[6] त॒स्थुः ॥ २ ॥

स॒प्त । यु॒ञ्ज॒न्ति॒ । रथ॑म् । एक॑ऽचक्रम् । एक॑ः । अश्व॑ः । व॒ह॒ति॒ । स॒प्तऽना॑मा । त्रि॒ऽनाभि॑ । च॒क्रम् । अ॒जर॑म् । अ॒न॒र्वम् । यत्र॑ । इ॒मा । विश्वा॑ । भुव॑ना । अधि॑ । त॒स्थुः ॥

इ॒मं रथ॒मधि॒ ये स॒प्त त॒स्थुः स॒प्तच॑क्रं स॒प्त व॑हन्त्यश्वा॑ः ।
स॒प्त स्वसा॑रो अ॒भि सं न॑वन्त॒[7] यत्र॒ गवां॒ निहि॑ता स॒प्त नाम॑[8] ॥३॥

---

१. विदुः W,O. पै १६,७५,१२ [मूको.]. २. विदुः D[१],P,P[१],J,Kp; विऽधुः Cp. ३. अस्ति P. ४. °नवां तैआ ३,११,९. ५. येनेमा तैआ. ६. भुवनानि तैआ. ७. नवन्ते ऋ १,१६४,३ पै १६,६६,३; नमन्ते पै [मूको.]. ८. सप्तनामा B; सप्त नामा सात[१]; °नाम ऋ. पै.

इमम् । रथम् । अधि । ये । सप्त । तस्थुः । सप्तऽचक्रम् । सप्त । वहन्ति । अश्वाः ।
सप्त । स्वसारः । अभि । सम् । नवन्त । यत्र । गवाम् । निऽहिता । सप्त । नाम[1] ॥ ३ ॥

को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था विभर्ति[2] ।
भूम्या असुरसृगात्मा क्व स्वित् को विद्वांसमुप गात् प्रष्टुमेतत् ॥ ४ ॥

कः । ददर्श । प्रथमम् । जायमानम् । अस्थन्ऽवन्तम् । यत् । अनस्था । विभर्ति[3] ।
भूम्याः । असुः । असृक् । आत्मा । क्व । स्वित् । कः । विद्वांसम् । उप । गात् । प्रष्टुम् । एतत् ॥

इह ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वेः ।
शीर्ष्णः क्षीरं दुह्रते गावो अस्य वव्रिं वसाना उदकं पदाऽपुः ॥ ५ ॥

इह । ब्रवीतु । यः । ईम् । अङ्ग । वेद । अस्य । वामस्य । निऽहितम् । पदम् । वेः ।
शीर्ष्णः । क्षीरम् । दुह्रते । गावः । अस्य । वव्रिम् । वसानाः । उदकम् । पदा । अपुः[4] ॥ ५ ॥

पाकः पृच्छामि मनसाऽविजानन्[5] देवानामेना निहिता पदानि ।
वत्से बष्कयेऽधि सप्त तन्तून् वि तत्निरे[6] कवय ओतवा उ ॥ ६ ॥

पाकः । पृच्छामि । मनसा । अविऽजानन् । देवानाम् । एना । निऽहिता । पदानि ।
वत्से । बष्कये । अधि । सप्त । तन्तून् । वि । तत्निरे । कवयः । ओतवै । ऊं इति ॥ ६ ॥

"अचिकित्वांश्चिकितुषश्चिदत्र"[7] कवीन् पृच्छामि विद्मनो[8] न विद्वान् ।
वि यस्तस्तम्भ षडिमा रजांस्यजस्य रूपे किमपि स्विदेकम् ॥ ७ ॥

अचिकित्वान् । चिकितुषः । चित् । अत्र । कवीन् । पृच्छामि । विद्मनः । न । विद्वान् ।
वि । यः । तस्तम्भ । षट् । इमा । रजांसि । अजस्य । रूपे । किम् । अपि । स्वित् । एकम् ॥

माता पितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे ।
सा बीभत्सुर्गर्भरसा निविद्धा नमस्वन्त इदुपवाकमीयुः ॥ ८ ॥

---

१. नाम P,J,Cp.
२. बिभर्ति Bb,Km,Sm,Cs; बिभर्ति>विभर्ति Dc.
३. विभर्ति P; बिभर्ति>बिभर्ति J.
४. आपुः K; आपुः>अपुः J.
५. °विजानन् Bb,Sm.
६. तन्विरे पै १६,६६,५.
७. °कित्वाश्चिकि° ऋ १,१६४,६; °कित्वान् चिकि° पै १६,६६,६; °कित्वां चिकि° पै [मूको.].
८. विद्मने ऋ.

मा॒ता । पि॒तर॑म् । ऋ॒ते । आ । ब॒भा॒ज॒ । धी॒ती । अग्रे॑ । मन॑सा । सम् । हि । ज॒ग्मे ।
सा । बी॒भ॒त्सुः । गर्भ॑ऽरसा । निऽवि॑द्धा । नम॑स्वन्तः । इत् । उ॒प॒ऽवा॒कम् । ई॒यु॒ः ॥ ८ ॥

यु॒क्ता मा॒तासी॑द्धु॒रि दक्षि॑णाया॒ अति॑ष्ठ॒द् गर्भो॑ वृ॒ज॒नीष्व॒न्तः ।
अमी॑मेद् व॒त्सो अनु॒ गाम॑पश्यद् वि॒श्वरू॒प्यं॒ त्रि॒षु योज॑नेषु ॥ ९ ॥

यु॒क्ता । मा॒ता । आ॒सी॒त् । धु॒रि । दक्षि॑णायाः । अति॑ष्ठत् । गर्भः॑ । वृ॒जनी॑षु । अ॒न्तः ।
अमी॑मेत् । व॒त्सः । अनु॑ । गाम् । अ॒प॒श्य॒त् । वि॒श्व॒ऽरू॒प्य॒म् । त्रि॒षु । योज॑नेषु ॥ ९ ॥

ति॒स्रो मा॒तॄस्त्रीन् पि॒तॄन् बि॒भ्रदेक॑ ऊ॒र्ध्वस्त॑स्थौ॒ नेम॑व॒ ग्लापयन्त[1] ।
म॒न्त्रय॑न्ते दि॒वो अ॒मुष्य॑ पृ॒ष्ठे वि॑श्व॒विदो॑[2] वाच॒मवि॑श्वविन्नाम्[3] ॥ १० ॥

ति॒स्रः । मा॒तॄः । त्रीन् । पि॒तॄन् । बि॒भ्र॑त् । एकः॑ । ऊ॒र्ध्वः । त॒स्थौ॒ । न । ई॒म् । अव॑ । ग्ल॒प॒य॒न्त॒ ।
म॒न्त्रय॑न्ते । दि॒वः । अ॒मुष्य॑ । पृ॒ष्ठे । वि॒श्व॒ऽविदः॑ । वाच॑म् । अवि॑श्वऽविन्नाम् ॥ १० ॥

पञ्चा॑रे च॒क्रे प॑रि॒वर्त॑माने॒ [4]यस्मि॑न्नात॒स्थुर्भुव॑नानि॒[4] विश्वा॑ ।
तस्य॒ नाक्ष॑स्तप्यते॒ भूरि॑भारः स॒नादे॑व न च्छिद्यते॒[5] सना॑भिः ॥ ११ ॥

पञ्च॑ऽअरे । च॒क्रे । प॒रि॒ऽवर्त॑माने । यस्मि॑न् । आ॒ऽत॒स्थुः । भुव॑नानि । विश्वा॑ ।
तस्य॑ । न । अक्षः॑ । त॒प्य॒ते॒ । भूरि॑ऽभारः । स॒नात् । ए॒व । न । छि॒द्य॒ते॒ । स॒ऽना॑भिः ॥ ११ ॥

पञ्च॑पादं पि॒तरं॒ द्वाद॑शाकृतिं दि॒व आ॑हुः॒ परे॒ अर्धे॑ पुरी॒षिण॑म् ।
अथे॒मे अ॒न्य उप॑रे विचक्ष॒णे[6] स॒प्तच॑क्रे॒ षड॑र आहु॒रर्पि॑तम् ॥ १२ ॥

पञ्च॑ऽपादम् । पि॒तर॑म् । द्वाद॑शऽआकृतिम् । दि॒वः । आ॒हुः॒ । परे॑ । अर्धे॑ । पु॒री॒षिण॑म् ।
अथ॑ । इ॒मे । अ॒न्ये । उप॑रे । वि॒ऽच॒क्ष॒णे । स॒प्तऽच॑क्रे । षट्ऽअ॑रे । आ॒हुः॒ । अर्पि॑तम् ॥ १२ ॥

द्वाद॑शारं न॒हि तज्जरा॑य॒ वर्व॑र्ति च॒क्रं परि॒ द्याम्‌ऋ॒तस्य॑ ।
आ पु॒त्रा अ॑ग्ने मिथु॒नासो॒ अत्र॑ स॒प्त श॒तानि॑ विंश॒तिश्च॑ तस्थुः ॥ १३ ॥

---

१. ग्लापयन्ति ऋ १,१६४,१० पै १६,६६,१०. २. °विदं ऋ. पै. ३. °अविश्वमिन्वां ऋ. पै. ४. तस्मिन्ना तस्थुर्° ऋ १,१६४,१३; समारोहन्ति भुव° पै १६,६७,१. ५. शीर्यते ऋ. ६. विचक्षणं ऋ १,१६४,१२ पै १६,६७,२.

द्वादशऽअरम् । नहि । तत् । जराय । वर्वर्ति । चक्रम् । परि । द्याम् । ऋतस्य ।
आ । पुत्राः । अग्ने । मिथुनासः । अत्र । सप्त । शतानि । विंशतिः । च । तस्थुः ॥१३॥

सनेमि चक्रमजरं वि वावृत उत्तानायां दश युक्ता वहन्ति[1] ।
सूर्यस्य चक्षू[2] रजसैत्यावृतं यस्मिन्नातस्थुर्भुवनानि[3] विश्वा ॥ १४ ॥

सऽनेमि । चक्रम् । अजरम् । वि । ववृते । उत्तानायाम् । दश । युक्ताः । वहन्ति ।
सूर्यस्य । चक्षुः । रजसा । एति । आऽवृतम् । यस्मिन् । आऽतस्थुः । भुवनानि । विश्वा ॥१४॥

स्त्रियः सतीस्ताँ[4] उ मे पुंस आहुः [5]पश्यदक्षण्वान्न वि चेतदन्धः[5] ।
कविर्यः पुत्रः स ईमा[6] चिकेत यस्ता विजानात् [7]स पितुष्पिताऽसत्[7] ॥१५॥

स्त्रियः । सतीः । तान् । ऊं इति । मे । पुंसः । आहुः । पश्यत् । अक्षण्ऽवान् । न ।
वि । चेतत् । अन्धः । कविः । यः । पुत्रः । सः । ईम् । आ । चिकेत । यः । ता ।
विऽजानात् । सः । पितुः । पिता । असत्[8] ॥ १५ ॥

साकंजानां सप्तथमाहुरेकजं षडिद्यमा[9] ऋषयो देवजा इति ।
तेषामिष्टानि विहितानि[10] धामश[11] स्थात्रे रेजन्ते विकृतानि रूपशः ॥१६॥

साकम्ऽजानाम् । सप्तथम् । आहुः । एकऽजम् । षट् । इत् । यमाः । ऋषयः । देवऽजाः ।
इति । तेषाम् । इष्टानि । विऽहितानि । धामऽशः । स्थात्रे । रेजन्ते । विऽकृतानि । रूपऽशः ॥

अवः परेण पर एनाऽवरेण पदा वत्सं बिभ्रती गौरुदस्थात् ।
सा कद्रीची कं स्विदर्धं परागात् क्व स्वित् सूते नहि यूथे अस्मिन्[12] ॥१७॥

अवः । परेण । परः । एना । अवरेण । पदा । वत्सम् । बिभ्रती । गौः । उत् । अस्थात् ।
सा । कद्रीची । कम् । स्वित् । अर्धम् । परा । अगात् । क्व । स्वित् । सूते । नहि ।
यूथे । अस्मिन् ॥ १७ ॥

---

१. व्रजन्ति पै १६,६७,४. २. चक्षु B,Bᵇ,Kᵐ; चक्षू > चक्षु Dc. ३. तस्मिन्नार्पिता भु° ऋ १,१६४,१४; °न्नार्पिता भु° पै. ४. ता तैआ १,११,४. ५. °ण्वान् अभितो विददन्धः पै १६,६७,६; °विच्चेतदन्धः तैआ. ६. इमा B; इमाः तैआ. ७. सवितुः पि° तैआ.; पितुः पि° P³,O,K²,T. ८. आसत P. ९. षड्यमा तैआ १,३,१. १०. निहि° पै १६,६७,५. ११. धामशः B,Kᵐ, ऋ १,१६४,१५ पै. तैआ. १२. अन्तः ऋ १,१६४,१७.

अवः परेण पितरं यो 'अस्य वेदावः परेण' पर एनावरेण ।
'कवीयमानः क इह' प्र वोचद् देवं मनः कुतो अधि प्रजातम् ॥ १८ ॥

अवः । परेण । पितरम् । यः । अस्य । वेद । अवः । परेण । परः । एना । अवरेण ।
कविऽयमानः । कः । इह । प्र । वोचत् । देवम् । मनः । कुतः । अधि । प्रऽजातम् ॥

ये अर्वाञ्चस्ताँ उ पराच आहुर्ये पराञ्चस्ताँ उ अर्वाच आहुः ।
इन्द्रश्च[3] या चक्रथुः सोम तानि धुरा 'न युक्ता' रजसो वहन्ति ॥१९ ॥

ये । अर्वाञ्चः । तान् । ऊं इति । पराचः । आहुः । ये । पराञ्चः । तान् । ऊं इति । अर्वाचः ।
आहुः । इन्द्रः । च । या । चक्रथुः । सोम । तानि । धुरा । न । युक्ताः । रजसः । वहन्ति ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि षस्वजाते ।
तयोरन्यः पिप्पलं[5] स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥ २० ॥

द्वा । सुऽपर्णा । सऽयुजा । सखाया । समानम् । वृक्षम् । परि । सस्वजाते इति ।
तयोः । अन्यः । पिप्पलम्[5] । स्वादु । अत्ति । अनश्नन् । अन्यः । अभि । चाकशीति ॥२०॥

यस्मिन् वृक्षे मध्वदः सुपर्णा निविशन्ते सुवते चाधि विश्वे ।
'तस्य यदाहुः' पिप्पलं[7] स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद ॥ २१ ॥

यस्मिन् । वृक्षे । मधुऽअदः । सुऽपर्णाः । निऽविशन्ते । सुवते । च । अधि । विश्वे । तस्य ।
यत् । आहुः[8] । पिप्पलम्[7] । स्वादु । अग्रे । तत् । न । उत् । नशत् । यः । पितरम् । न । वेद ॥

यत्रा सुपर्णा अमृतस्य भक्षमनिमेषं[9] विदथाऽभिस्वरन्ति ।
एना[10] विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ॥ २२ ॥

यत्र । सुऽपर्णाः । अमृतस्य । भक्षम् । अनिऽमेषम् । विदथा । अभिऽस्वरन्ति ।
एना । विश्वस्य । भुवनस्य । गोपाः । सः । मा । धीरः । पाकम् । अत्र । आ । विवेश ॥

इति पञ्चमेऽनुवाके प्रथमं सूक्तम् ।

---

१. अस्यानुवेद ऋ १,१६४,१८ पै १६,६७,८. २. गुह्यमानो गुहा पै. ३. सोमश्च जैब्रा १,२७९. ४. नियुक्ता पै १६,६७,९ [मूको]. जैब्रा. ५. पिप्प° A,B[1],R,S[p], J,WM. ६. तस्येदाहुः ऋ १,१६४,२२ पै १६,६७,११. ७. पिप्प° A,R,J,Cp. ८. आहुः P. ९. भागमनि° ऋ १,१६४,२१. १०. इनो ऋ. पै १६,६७,१२.

'यद् गायत्रे' इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ।

यद् गा॑य॒त्रे अधि॑ गाय॒त्रमाहि॑तं॒ त्रैष्टु॑भं॒ वा॒ त्रैष्टु॑भान्नि॒रत॑क्षत ।
यद्वा॒ जग॒ज्जग॒त्याहि॑तं प॒दं य इत् तद् वि॒दुस्ते अ॑मृत॒त्वमा॑नशुः ॥ १ ॥

यत् । गा॒य॒त्रे । अधि॑ । गा॒य॒त्रम् । आऽहि॑तम् । त्रैस्तु॑भम् । वा॒ । त्रैस्तु॑भात् । निःऽअत॑क्षत । यत् । वा॒ । जग॑त् । जग॑ति । आऽहि॑तम् । प॒दम् । ये । इत् । तत् । वि॒दुः । ते । अ॒मृ॒त॒ऽत्वम् । आ॒न॒शुः[1] ॥ १ ॥

गा॒य॒त्रेण॒ प्रति॑ मिमीते अ॒र्कम॒र्केण॒ साम॒ त्रैष्टु॑भेन वा॒कम् ।
वा॒केन॑ वा॒कं द्वि॒पदा॒ चतु॑ष्पदा॒ऽक्षरे॑ण मिमते स॒प्त वाणीः॑ ॥ २ ॥

गा॒य॒त्रेण॑ । प्रति॑ । मि॒मी॒ते॒ । अ॒र्कम् । अ॒र्केण॑ । साम॑ । त्रैस्तु॑भेन । वा॒कम् । वा॒केन॑ । वा॒कम् । द्वि॒ऽपदा॑ । चतु॑ःऽपदा । अ॒क्षरे॑ण । मि॒म॒ते॒ । स॒प्त । वाणीः॑ ॥ २ ॥

जग॑ता॒ सिन्धुं॑ दि॒व्य॑स्कभाय॒द्[2] रथं॑त॒रे सूर्यं॒ पर्य॑पश्यत् ।
गा॒य॒त्रस्य॑ स॒मिध॑स्ति॒स्र आ॑हु॒स्ततो॑ म॒ह्ना प्र रि॑रिचे महि॒त्वा ॥ ३ ॥

जग॑ता । सिन्धु॑म् । दि॒वि । अ॒स्क॒भा॒य॒त् । र॒थ॒म्ऽत॒रे । सूर्य॑म् । परि॑ । अ॒प॒श्य॒त् । गा॒य॒त्रस्य॑ । स॒म्ऽइध॑ः । ति॒स्रः । आ॒हुः॒ । तत॑ः । म॒ह्ना । प्र । रि॒रि॒चे॒ । म॒हि॒ऽत्वा ॥ ३ ॥

उप॑ ह्वये सु॒दुघां॑ धे॒नुमे॒तां सु॒हस्तो॑ गो॒धुगु॒त दो॑हदेनाम् ।
श्रेष्ठं॑ स॒वं स॑वि॒ता सा॑विषन्नो॒ऽभीद्धो॑ घ॒र्मस्तदु॒ षु प्र वो॑चत्[3] ॥ ४ ॥

उप॑ । ह्व॒ये॒ । सु॒ऽदुघा॑म् । धे॒नुम् । ए॒ताम् । सु॒ऽहस्त॑ः । गो॒ऽधुक् । उ॒त । दो॒ह॒त् । ए॒ना॒म् । श्रेष्ठ॑म् । स॒वम् । स॒वि॒ता । सा॒वि॒ष॒त् । नः॒ । अ॒भिऽइ॑द्धः । घ॒र्मः । तत् । ऊं॒ इति॑ । सु । प्र । वो॒च॒त् ॥ ४ ॥

हि॒ङ्कृ॒ण्व॒ती व॑सु॒पत्नी॒ वसू॑नां व॒त्समि॒च्छन्ती॒ मन॑सा॒ऽभ्याग॑त्[4] ।
दु॒हाम॒श्विभ्यां॒ पयो॑ अ॒घ्न्येयं सा व॑र्धतां मह॒ते सौभ॑गाय ॥ ५ ॥

हि॒ङ्ऽकृ॒ण्व॒ती । व॒सु॒ऽपत्नी॑ । वसू॑नाम् । व॒त्सम् । इ॒च्छन्ती॑ । मन॑सा । अ॒भि॒ऽआगा॑त्[5] । दु॒हाम् । अ॒श्वि॒ऽभ्या॑म् । पय॑ः । अ॒घ्न्या । इ॒यम् । सा । व॒र्ध॒ता॒म् । म॒ह॒ते । सौभ॑गाय ॥ ५ ॥

---

1. आनशुः P. 2. दिव्यंस्तभा° ऋ १,१६४,२५. 3. वोचत् ऋ १,१६४,२६ पै १६,६८,४. 4. °सा न्यागन् अ ७,७७,८. 5. अभि । आ । अगात् ऋ. पा १,१६४,२७.

गौरमीमेदभि[1] वत्सं मिषन्तं मूर्धानं [2]हिङ्ङकृणोन्मातवा उ ।
सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥ ६ ॥

गौः । अमीमेत् । अभि । वत्सम् । मिषन्तम् । मूर्धानम् । हिङ् । अकृणोत् । मातवै । ऊं इति ।
सृक्वाणम् । घर्मम् । अभि । वावशाना । मिमाति । मायुम् । पयते । पयःऽभिः ॥ ६ ॥

अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता ।
सा चित्तिभिर्नि हि चकार मर्त्यान्[3] विद्युद्भवन्ती प्रति वव्रिमौहत[4] ॥७॥

अयम् । सः । शिङ्क्ते । येन । गौः । अभिऽवृता । मिमाति । मायुम् । ध्वसनौ । अधि । श्रिता ।
सा । चित्तिऽभिः । नि । हि । चकार । मर्त्यान् । विऽद्युत् । भवन्ती । प्रति । वव्रिम् । औहत ॥

अनच्छये तुरगातु जीवमेजद् ध्रुवं मध्य[5] आ पस्त्यानाम् ।
जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ॥ ८ ॥

अनत् । शये । तुरऽगातु । जीवम् । एजत् । ध्रुवम् । मध्ये । आ । पस्त्यानाम् ।
जीवः । मृतस्य । चरति । स्वधाभिः । अमर्त्यः । मर्त्येन । सऽयोनिः ॥ ८ ॥

विधुं दद्राणं [6]सलिलस्य पृष्ठे युवानं सन्तं पलितो जगार[7] ।
देवस्य पश्य काव्यं महित्वाऽद्या ममार [8]स ह्यः समान ॥९॥

विऽधुम् । दद्राणम् । सलिलस्य । पृष्ठे । युवानम् । सन्तम् । पलितः । जगार ।
देवस्य । पश्य । काव्यम् । महिऽत्वा । अद्य । ममार । सः । ह्यः । सम् । आन ॥ ९ ॥

य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात् ।
स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिरा[9] विवेश ॥ १० ॥

---

१. °मेदनु ऋ १,१६४,२८; °मेदप पै १६,२८,६ [मूको.]. २. हिङ्क° मूको (द्र. सपा.). ३. मर्त्यै ऋ १,१६४,२९ पै १६,६८,७. ४. °मौहत B,D.; °मौहत् > °मौहत R,Dc, Cs. ५. मध्यम् पै १६,६८,९. ६. समने बहूनां ऋ १०,५५,५ मै ४,९,१२ कौ १,३२५ नआ ४,२०,१. ७. जगार मं.; चकार पै १६,६८,८ [मूको.]. ८. संह्यः समानः? मं. पाठो भ्रष्टः [द्र. तत्रैव पपा. ऋ. प्रभृ. च.] ९. निर्ऋतिमा ऋ १,१६४,३२ पै.

यः। ईम्। चकार। न। सः। अस्य। वेद। यः। ईम्। ददर्श। हिरुक्। इत्। नु। तस्मात्।
सः। मातुः। योना। परिऽवीतः। अन्तः। बहुऽप्रजाः। निःऽऋतिः। आ। विवेश ॥१०॥

अपश्यं गोपामनिपद्यमानमा[1] च परा च पथिभिश्चरन्तम्।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥ ११ ॥

अपश्यम्। गोपाम्। अनिऽपद्यमानम्। आ। च। परा। च। पथिऽभिः। चरन्तम्।
सः। सध्रीचीः। सः। विषूचीः। वसानः। आ। वरीवर्ति। भुवनेषु। अन्तः ॥ ११ ॥

द्यौर्नः[2] पिता जनिता नाभिरत्र बन्धुर्नो[3] माता पृथिवी महीयम्।
[4]उत्तानयोश्चम्वो३र्योनिरन्तरत्रा[5] पिता दुहितुर्गर्भमाधात् ॥ १२ ॥

द्यौः। नः। पिता। जनिता। नाभिः। अत्र। बन्धुः। नः। माता। पृथिवी। मही। इयम्।
उत्तानयोः। चम्वोः। योनिः। अन्तः। अत्र। पिता। दुहितुः। गर्भम्। आ। अधात् ॥ १२ ॥

पृच्छामि[5] त्वा परमन्तं पृथिव्याः पृच्छामि[5] वृष्णो अश्वस्य रेतः।
पृच्छामि[5] विश्वस्य[6] भुवनस्य नाभिं[7] पृच्छामि[5] वाचः परमं व्योम ॥१३॥

पृच्छामि। त्वा। परम्। अन्तम्। पृथिव्याः। पृच्छामि। वृष्णः। अश्वस्य। रेतः।
पृच्छामि। विश्वस्य। भुवनस्य। नाभिम्। पृच्छामि। वाचः। परमम्। विऽओम ॥१३॥

[8]इयं वेदिः परो अन्तः[8] पृथिव्या [9]अयं सोमो[9] वृष्णो अश्वस्य रेतः।
[10]अयं यज्ञो विश्वस्य[10] भुवनस्य [11]नाभिर्ब्रह्मायं[11] वाचः परमं व्योम ॥१४॥

इयम्। वेदिः। परः। अन्तः। पृथिव्याः। अयम्। सोमः। वृष्णः। अश्वस्य। रेतः।
अयम्। यज्ञः। विश्वस्य। भुवनस्य। नाभिः। ब्रह्मा। अयम्। वाचः। परमम्। विऽओम ॥

न वि जानामि यदिवेदमस्मि निण्यः संनद्धो मनसा[12] चरामि।
यदा मागन् प्रथमजा ऋतस्यादिद्[13] वाचो अश्नुवे भागमस्याः ॥ १५ ॥

---

1. 'मनिपद्य' ऋ १,१६४,३१ मा ३७,१७ मै ४,९,६ तैआ ४,७,१. 2. °र्मे ऋ १,१६४,३३. 3. °र्मे ऋ. 4. °इचम्वो३° K,Km. 5. पृच्छामः लाश्रौ ९,१०,११. 6. यत्र ऋ १,१६४,३४ मा २३,६१ लाश्रौ.; त्वा ते ७,४,१८,२ वै १६,६१,२. 7. नाभिः ऋ. मा. लाश्रौ. 8. वेदिमाहुः परमन्तं तं. 9. सोममाहुर् तं. 10. यज्ञमाहुर् तं. 11. नाभिम्। ब्रह्मैव तं. 12. वनिना वै १६,६१,६. 13. ऋतस्या° D,Db.

न । वि । जानामि । यत्ऽइव । इदम् । अस्मि । निण्यः । सम्ऽनद्धः । मनसा । चरामि ।
यदा । मा[1] । आऽअगन्[2] । प्रथमऽजाः । ऋतस्य । आत् । इत् । वाचः । अश्नुवे । भागम् । अस्याः ॥

अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो[3] मर्त्येना सयोनिः ।
ता शश्वन्ता विषूचीना वियन्ता न्यं१न्यं[4] चिक्युर्न नि चिक्युरन्यम् ॥१६॥

अपाङ् । प्राङ् । एति । स्वधया । गृभीतः । अमर्त्यः । मर्त्येन । सऽयोनिः ।
ता । शश्वन्ता । विषूचीना । विऽयन्ता । नि । अन्यम् । चिक्युः[5] । न । नि । चिक्युः । अन्यम् ॥

सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति[6] प्रदिशा[7] विधर्मणि ।
ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवन्ति विश्वतः ॥ १७ ॥

सप्त । अर्धऽगर्भाः । भुवनस्य । रेतः । विष्णोः । तिष्ठन्ति । प्रऽदिशा[8] । विऽधर्मणि ।
ते । धीतिऽभिः । मनसा । ते । विपःऽचितः । परिऽभुवः । परि । भवन्ति । विश्वतः ॥

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत् तद् विदुस्ते[9] अमी[10] समासते ॥१८॥

ऋचः । अक्षरे । परमे । विऽओमन् । यस्मिन् । देवाः । अधि । विश्वे । निऽसेदुः ।
यः । तत् । न । वेद । किम् । ऋचा । करिष्यति । ये । इत् । तत् । विदुः । ते । अमी इति ।
सम् । आसते ॥ १८ ॥

ऋचः पदं मात्रया कल्पयन्तोऽर्धर्चेन चाक्लृपुर्विश्वमेजत् ।
त्रिपाद्[11] ब्रह्म पुरुरूपं वि तष्ठे[12] तेन जीवन्ति प्रदिशश्चतस्रः ॥ १९ ॥

ऋचः । पदम् । मात्रया । कल्पयन्तः । अर्धऽऋचेन । चक्लृपुः । विश्वम् । एजत् ।
त्रिऽपात् । ब्रह्म । पुरुऽरूपम् । वि । तस्थे । तेन । जीवन्ति । प्रऽदिशः । चतस्रः ॥१९॥

सूयवसाद् भगवती[13] हि भूया अधा[14] वयं भगवन्तः स्याम ।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥ २० ॥

---

१. मा P,P², Cp. २. आ । अगन् ऋपा १,१६४,३७. ३. °तो अमर्त्यो Sᵐ. ४. न्यं१न्यं B, Bᵇ, D, Sᵐ, Cs. ५. चिक्युः P. ६. विष्णोस्तिष्ठन्ति K. ७. प्रदिशो पै १६,६९,५. ८. प्रऽदिशः P ९. विदुष्टे O १०. इमे ऋ १,१६४, ३९. पै १६,६९,८ तैब्रा ३,१०,९,१४ तैआ २,११,१. ११. त्रिपादं पै १६,६९,९. १२. चंष्ठे B,W,E¹,O,J पै.; थंष्ठे Bᵇ,D,K,Kᵐ,Sᵐ,Cs. १३. भगवति काश्री २५,१,१८. १४. अथो ऋ १,१६४,४० पै १६,६९,१० आपश्री ९,५,४, काश्री.

सुयवसऽअत् । भगऽवती । हि । भूयाः । अर्थ । वयम् । भगऽवन्तः । स्याम ।
अद्धि । तृणम् । अघ्न्ये । विश्वऽदानीम् । पिब । शुद्धम् । उदकम् । आऽचरन्ती ॥२०॥

गौरिन्मिमाय[1] सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा [2]भुवनस्य पङ्क्तिस्तस्याः[3] समुद्रा
अधि वि क्षरन्ति ॥ २१ ॥

गौः । इत् । मिमाय । सलिलानि । तक्षती । एकऽपदी । द्विऽपदी । सा । चतुःऽपदी ।
अष्टाऽपदी । नवऽपदी । बभूवुषी । सहस्रऽअक्षरा । भुवनस्य । पङ्क्तिः । तस्याः । समुद्राः ।
अधि । वि । क्षरन्ति ॥ २१ ॥

[3]कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति ।
त आववृत्रन्त्सदनादृतस्यादिद् घृतेन पृथिवीं व्यू[†]दुः[3] ॥ २२ ॥

कृष्णम् । निऽयानम् । हरयः । सुऽपर्णाः । अपः । वसानाः । दिवम् । उत् । पतन्ति ।
ते । आ । अववृत्रन् । सदनात् । ऋतस्य । आत् । इत् । घृतेन । पृथिवीम् । वि । ऊदुः ॥

अपादेति[4] प्रथमा पद्वतीनां कस्तद् वां मित्रावरुणा चिकेत ।
गर्भो भारं भरत्या चिदस्या[5] ऋतं पिपर्त्यनृतं नि पाति[6] ॥ २३ ॥

अपात् । एति । प्रथमा । पत्ऽवतीनाम् । कः । तत् । वाम् । मित्रावरुणा । आ । चिकेत ।
गर्भः । भारम् । भरति । आ । चित् । अस्याः । ऋतम् । पिपर्ति । अनृतम् । नि । पाति ॥

विराड् वाग् विराट् पृथिवी विराडन्तरिक्षं विराट् प्रजापतिः ।
विराण्मृत्युः साध्यानामधिराजो बभूव तस्य भूतं भव्यं वशे स मे भूतं
भव्यं वशे कृणोतु ॥ २४ ॥

विऽराट् । वाक् । विऽराट् । पृथिवी । विऽराट् । अन्तरिक्षम् । विऽराट् । प्रजाऽपतिः ।
विऽराट् । मृत्युः । साध्यानाम् । अधिऽराजः । बभूव । तस्य । भूतम् । भव्यम् । वशे । सः । मे ।
भूतम् । भव्यम् । वशे । कृणोतु ॥ २४ ॥

---

१. गौरीर्मि° ऋ १,१६४,४१; गौरी मि° तैब्रा २,४,६,११. तैब्रा., °तस्यां तैब्रा.
२. परमे व्योमन् व° ऋ.
३. पृ ६७२ टि ३-८ द्र.
† व्योदुः पै १६,६९,१२.
४. अथापादेति पै १६,६९,१२.
५. °स्य ऋ १,१५२,३.
६. तारीत् ऋ. पै.

शकमयं धूममारादपश्यं विषूवता पर एनाऽवरेण ।
उक्षाणं पृश्निमपचन्त वीरास्तानि धर्माणि प्रथमान्यासन् ॥ २५ ॥

शकऽमयम् । धूमम् । आरात् । अपश्यम् । विषुऽवता । परः । एना । अवरेण ।
उक्षाणम् । पृश्निम् । अपचन्त । वीराः । तानि । धर्माणि । प्रथमानि । आसन् ॥ २५ ॥

त्रयः केशिनं ऋतुथा वि चक्षते संवत्सरे वपत एकं एषाम् ।
'विश्वमन्यो अभिचष्टे' शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ॥ २६ ॥

त्रयः । केशिनः । ऋतुऽथा । वि । चक्षते । समऽवत्सरे । वपते । एकः । एषाम् ।
विश्वम् । अन्यः । अभिऽचष्टे । शचीभिः । ध्राजिः । एकस्य । ददृशे । न । रूपम् ॥२६॥

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा[2] ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ २७ ॥

चत्वारि । वाक् । परिऽमिता । पदानि । तानि । विदुः[3] । ब्राह्मणाः । ये । मनीषिणः ।
गुहा । त्रीणि । निऽहिता । न । इङ्गयन्ति[4] । तुरीयम् । वाचः । मनुष्याः । वदन्ति ॥ २७॥

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गुरुत्मान् ।
एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ २८ ॥

इन्द्रम् । मित्रम् । वरुणम् । अग्निम् । आहुः । अथो इति । दिव्यः । सः । सुऽपर्णः । गुरुत्मान् ।
एकम् । सत् । विप्राः । बहुऽधा । वदन्ति । अग्निम् । यमम् । मातरिश्वानम् । आहुः ॥२८॥

इति पञ्चमेऽनुवाके द्वितीयं सूक्तम् ।
इति पञ्चमोऽनुवाकः ।
इति नवमं काण्डं समाप्तम् ।

---

१. विश्वमेको अभिचष्टे ऋ १,१६४,४४. २. °ब्रह्मणा R. ३. विदुः P.
४. सु. सायणः वेद. मूको. इंङ्ग°

अथ

# दशमं काण्डम्

'यां कल्पयन्ति' इत्यर्थसूक्तस्य कृत्याप्रतिहरणगणे पाठात् कृत्यानिर्हरणार्थं शान्त्युदक एतत् सूक्तं विनियुज्यते । तद् उक्तं कौशिकेन — "'यां कल्पयन्ति' इति महाशान्तिमावपते" (कौ० ३९,७) इति । कृत्याप्रतिहरणगणः 'दूष्या दूषिरसि' (अ २,११) इति सूक्ते द्रष्टव्यः । विनियोगान्तरं च तत्रैव द्रष्टव्यम् ।

यां कल्पयन्ति वहतौ वधूमिव विश्वरूपां हस्तकृतां चिकित्सवः ।
सारादेत्वप नुदाम एनाम् ॥ १ ॥

याम् । कल्पयन्ति । वहतौ । वधूम्ऽइव । विश्वऽरूपाम् । हस्तऽकृताम् । चिकित्सवः ।
सा । आरात् । एतु । अप । नुदामः । एनाम् ॥ १ ॥

शीर्षण्वती नस्वती कर्णिनी कृत्याकृता संभृता विश्वरूपा ।
सारादेत्वप नुदाम एनाम् ॥ २ ॥

शीर्षण्ऽवती । नस्वती । कर्णिनी । कृत्याऽकृता । सम्ऽभृता । विश्वऽरूपा ।
सा । आरात् । एतु । अप । नुदामः । एनाम् ॥ २ ॥

शूद्रकृता राजकृता स्त्रीकृता ब्रह्मभिः कृता ।
जाया पत्या नुत्तेव कर्तारं बन्ध्वृच्छतु ॥ ३ ॥

शूद्रऽकृता । राजऽकृता । स्त्रीऽकृता । ब्रह्मऽभिः । कृता ।
जाया । पत्या । नुत्ताऽइव । कर्तारम् । बन्धु । ऋच्छतु ॥ ३ ॥

अनयाहमोषध्या सर्वाः कृत्या अदूदुषम् ।
यां क्षेत्रे चक्रुर्यां गोषु यां वा ते पुरुषेषु ॥ ४ ॥

अनया । अहम् । ओषध्या । सर्वाः । कृत्याः । अदुदुषम् ।
याम् । क्षेत्रे । चक्रुः । याम् । गोषु । याम् । वा । ते । पुरुषेषु ॥ ४ ॥

अघमस्त्वघकृते[1] शपथः शपथीयते ।
प्रत्यक् [2]प्रतिप्रहिण्मो यथा कृत्याकृतं हनत्[2] ॥ ५ ॥

अघम् । अस्तु । अघऽकृते । शपथः । शपथिऽयते ।
प्रत्यक् । प्रतिऽप्रहिण्मः । यथा । कृत्याऽकृतम् । हनत् ॥ ५ ॥

प्रतीचीन आङ्गिरसोऽध्यक्षो नः पुरोहितः ।
प्रतीचीः कृत्या आकृत्यामून् कृत्याकृतो जहि ॥ ६ ॥

प्रतीचीनः । आङ्गिरसः । अधिऽअक्षः । नः । पुरःऽहितः ।
प्रतीचीः । कृत्याः । आऽकृत्य । अमून् । कृत्याऽकृतः । जहि ॥ ६ ॥

यस्त्वोवाच परेहीति प्रतिकूलमुदाय्यम्[3] ।
तं कृत्येऽभिनिवर्तस्व माऽस्मानिच्छो अनागसः ॥ ७ ॥

यः । त्वा । उवाच । परा । इहि । इति । प्रतिऽकूलम् । उत्ऽआय्यम्[4] ।
तम् । कृत्ये । अभिऽनिवर्तस्व । मा । अस्मान् । इच्छः । अनागसः ॥ ७ ॥

यस्ते परूंषि संदधौ रथस्येवर्भुर्धिया[5] ।
तं गच्छ तत्र तेऽयनमज्ञातस्तेऽयं जनः ॥ ८ ॥

यः । ते । परूंषि । सम्ऽदधौ । रथस्यऽइव । ऋभुः । धिया ।
तम् । गच्छ । तत्र । ते । अयनम् । अज्ञातः । ते । अयम् । जनः ॥ ८ ॥

ये त्वा कृत्वालेभिरे विद्वला अभिचारिणः ।
शंभ्वी३दं[6] कृत्यादूषणं प्रतिवर्त्म पुनःसरं[7] तेन त्वा स्नपयामसि ॥ ९ ॥

ये । त्वा । कृत्वा । आऽलेभिरे । विद्वलाः । अभिऽचारिणः ।
शम्ऽभु । इदम् । कृत्याऽदूषणम् । प्रतिऽवर्त्म । पुनःऽसरम् । तेन । त्वा । स्नपयामसि ॥९॥

---

१. कृत्यास्सन्तु कृत्याकृते पै १६,३५,५. २. प्रतिप्रवर्तय यथकार तमृच्छतु पै. ३. °मुदाय्यम् RW.; °मुदार्य्यम् P³; °मुदाव्यम् W. ४. °आय्यम् D². ५. °व ऋभु° Dc, WM,RW. पै १६,३५,८. ६. विघ्रं पै १६,३५,९. ७. प्रतिसरं पै.

यद् दुर्भगां प्रस्नपितां मृतवत्साम्रुपेयिम ।
अपैतु सर्वं मत् पापं द्रविणं मोप तिष्ठतु ॥ १० ॥

यत् । दुःऽभगाम् । प्रऽस्नपिताम् । मृतऽवत्साम् । उपऽएयिम ।
अप । एतु । सर्वम् । मत् । पापम् । द्रविणम् । मा । उप । तिष्ठतु ॥ १० ॥

यत् ते पितृभ्यो ददतो यज्ञे वा नाम जगृहुः ।
संदेश्या३त् सर्वस्मात् पापादिमा मुञ्चन्तु त्वौषधीः[1] ॥ ११ ॥

यत् । ते । पितृऽभ्यः । ददतः । यज्ञे । वा । नाम । जगृहुः ।
सम्ऽदेश्यात् । सर्वस्मात् । पापात् । इमाः । मुञ्चन्तु । त्वा । ओषधीः ॥ ११ ॥

देवैनसात् पित्र्यान्नामग्राहात् संदेश्यादभिनिष्कृतात् ।
मुञ्चन्तु त्वा वीरुधो वीर्येण ब्रह्मण ऋग्भिः पयस[3] ऋषीणाम् ॥ १२ ॥

देवऽएनसात् । पित्र्यात्[4] । नामऽग्राहात् । सम्ऽदेश्यात् । अभिऽनिष्कृतात् ।
मुञ्चन्तु । त्वा । वीरुधः । वीर्येण । ब्रह्मणा । ऋक्ऽभिः । पयसा[5] । ऋषीणाम् ॥ १२ ॥

यथा वातश्च्यावयति भूम्या रेणुमन्तरिक्षाच्चाभ्रम् ।
एवा मत्[6] सर्वं दुर्भूतं ब्रह्मनुत्तमपायति ॥ १३ ॥

यथा । वातः । च्यवयति । भूम्याः । रेणुम् । अन्तरिक्षात् । च । अभ्रम् ।
एव । मत् । सर्वम् । दुःऽभूतम् । ब्रह्मऽनुत्तम् । अप । अयति ॥ १३ ॥

अप क्राम नानदती विनद्धा गर्दभीव ।
कर्तॄन्[7] नक्षस्वेतो नुत्ता ब्रह्मणा वीर्यावता ॥ १४ ॥

अप । क्राम । नानदती । विऽनद्धा । गर्दभीऽइव ।
कर्तॄन्[7] । नक्षस्व । इतः । नुत्ता । ब्रह्मणा । वीर्यऽवता[8] ॥ १४ ॥

---

१. त्वोषधीः B,Bᵇ,K,Sᵐ,Cs. २. पित्र्या॰ Sᵐ; पितृ्या॰ A,K,Kᵐ,O,R,R²,T,K²; ॰ग्रहात् B,K. ३. पयस A,Bᵇ,R,Sᵐ; पयसा E². ४. पितृ्याऽत् P,J,Cp,Bp². ५. पयसा Bp²,P,J. ६. मत् A,Sᵐ. ७. कुर्त्रैन् A,D,R,Sᵐ,Cs,O,K²,P,P²,J. ८. वीर्यऽवता P.

अयं 'पन्थाः कृत्येति त्वा नयामोऽभिप्रहितां' प्रति त्वा प्र हिण्मः ।
तेनाभि याहि 'भञ्जत्यनस्वतीव वाहिनी विश्वरूपा कुरूटिनी' ॥ १५ ॥

अयम् । पन्थाः । कृत्ये । इति । त्वा । नयामः । अभिऽप्रहिताम् । प्रति । त्वा । प्र । हिण्मः ।
तेन । अभि । याहि । भञ्जती । अनस्वतीऽइव । वाहिनी । विश्वऽरूपा । कुरूटिनी ॥१५॥

पराक् ते ज्योतिरपथं ते अर्वागन्यत्रास्मदयना कृणुष्व ।
परेणेहि नवतिं नाव्याऽ३ अति दुर्गाः स्रोत्या मा क्षणिष्ठाः परेहि ॥१६॥

पराक् । ते । ज्योतिः । अपथम् । ते । अर्वाक् । अन्यत्र । अस्मत् । अयना । कृणुष्व ।
परेण । इहि । नवतिम् । नाव्याः । अति । दुःगाः । स्रोत्याः । मा । क्षणिष्ठाः । परा । इहि ॥

वात इव वृक्षान् नि मृणीहि पादय मा गामश्वं पुरुषमुच्छिष एषाम् ।
कर्तॄन् निवृत्येतः कृत्येऽप्रजास्त्वाय बोधय ॥ १७ ॥

वातःऽइव । वृक्षान् । नि । मृणीहि । पादय । मा । गाम् । अश्वम् । पुरुषम् । उत् ।
शिषः । एषाम् । कर्तॄन् । निऽवृत्य । इतः । कृत्ये । अप्रजाःऽत्वाय । बोधय ॥ १७ ॥

यां ते बर्हिषि यां श्मशाने क्षेत्रे कृत्यां वलगं वा निचख्नुः ।
अग्नौ वा त्वा गार्हपत्येऽभिचेरुः पाकं सन्तं धीरतरा अनागसम् ॥१८॥

याम् । ते । बर्हिषि । याम् । श्मशाने । क्षेत्रे । कृत्याम् । वलगम् । वा । निऽचख्नुः ।
अग्नौ । वा । त्वा । गार्हऽपत्ये । अभिऽचेरुः । पाकम् । सन्तम् । धीरऽतराः । अनागसम् ॥

उपाहृतमनुबुद्धं निखातं वैरं त्सार्यन्वविदाम कर्त्रम् ।
तदेतु यत आभृतं तत्राश्व इव वि वर्तताम् हन्तु कृत्याकृतः प्रजाम् ॥१९॥

उपऽआहृतम् । अनुऽबुद्धम् । निऽखातम् । वैरम् । त्सारि । अनु । अविदाम । कर्त्रम् । तत् ।
एतु । यतः । आऽभृतम् । तत्र । अश्वःऽइव । वि । वर्तताम् । हन्तु । कृत्याऽकृतः । प्रऽजाम् ॥

---

१. पन्थादि नयामस्त्वा कृत्ये प्रहितां पै १६,३६,५. † कृत्य इति RW. २. भञ्जत्य K$^{m}$.
३. कुरूटिनी K. ४. दुर्गा A.B,B$^{a}$,D,K,K$^{m}$,R,S$^{m}$,V,Cs. ५. घानिष्ठाः? परेमेहि पै १६,३६,६. ६. वृक्षं पै १६,३६,७. ७. कर्त्रैन् A.D,R S$^{m}$.Cs.T,K$^{a}$,W,I,O,D' P,P$^{a}$,J. ८. पूर्णं पै १६,३६,८. ९. निखातं पै १६,३६,९. १०. कर्मं R.
११. भागद् पै. १२. वर्तन्तां B; 'र्त' > 'र्त' K$^{m}$. १३. 'म् > 'त् P; 'त् J.

स्वायसा असयः सन्ति[1] नो गृहे विद्मा[2] ते कृत्ये यतिधा परूंषि ।
उत्तिष्ठैव परेहीतोऽज्ञाते किमिहेच्छसि ॥ २० ॥

सुऽआयसाः । असयः । सन्ति । नः । गृहे । विद्म । ते । कृत्ये । यतिऽधा । परूंषि ।
उत् । तिष्ठ । एव । परा । इहि । इतः । अज्ञाते । किम् । इह । इच्छसि ॥ २० ॥

ग्रीवास्ते कृत्ये पादौ चापि कर्त्स्यामि निर्द्रव ।
इन्द्राग्नी[3] अस्मान् रक्षतां[3] यौ प्रजानां प्रजावती[4] ॥ २१ ॥

ग्रीवाः । ते । कृत्ये । पादौ । च । अपि । कर्त्स्यामि । निः । द्रव ।
इन्द्राग्नी इति । अस्मान् । रक्षताम् । यौ । प्रऽजानाम् । प्रजावती इति प्रजाऽवती ॥२१॥

सोमो राजाऽधिपा मृडिता च भूतस्य नः पतयो मृडयन्तु ॥ २२ ॥
सोमः । राजा । अधिऽपाः । मृडिता । च । भूतस्य । नः । पतयः । मृडयन्तु ॥ २२ ॥

भवाशर्वावस्यतां पापकृते[5] कृत्याकृते[6] । दुष्कृते[7] विद्युतं देवहेतिम् ॥ २३ ॥
भवाशर्वौ । अस्यताम् । पापऽकृते । कृत्याऽकृते । दुःऽकृते । विऽद्युतम् । देवऽहेतिम् ॥२३॥

यद्येयथ द्विपदी चतुष्पदी कृत्याकृता संभृता विश्वरूपा ।
सेतोऽष्टापदी[8] भूत्वा पुनः परेहि दुच्छुने ॥ २४ ॥

यदि । आऽइयथ । द्विऽपदी । चतुःऽपदी । कृत्याऽकृता । सम्ऽभृता । विश्वऽरूपा ।
सा । इतः । अष्टाऽपदी । भूत्वा । पुनः । परा । इहि । दुच्छुने ॥ २४ ॥

अभ्य[9]क्ताक्ता[1] स्वरंकृता सर्वं भरन्ती दुरितं परेहि ।
जानीहि कृत्ये कर्तारं दुहितेव पितरं स्वम् ॥ २५ ॥

अभिऽअक्ता । आऽअक्ता । सुऽअरंकृता । सर्वम् । भरन्ती । दुःऽइतम् । परा । इहि ।
जानीहि । कृत्ये । कर्तारम् । दुहिताऽइव । पितरम् । स्वम् ॥ २५ ॥

---

१. भवन्ति पै १६,२६,१०. २. विघ्न पै. ३. पुनान्न वृश्चतां पै १६,२७,१. ४. प्रजापती पै.; वैप १,२१२२ g द्र. ५. पापकृत्वने पै १६,२७,२. ६. नात्र विरमन्ति A,D,R,S^m,Dc,Cs. ७. दुःकृते D,S^m; दुकृते Cs. ८. सेतोऽष्टा° B^b,K,K^m,V; सेतोष्टा° K,Dc,WM. ९. अभ्युइक्ता° B,B^b,D,K,K^m,S^m,V,Dc,Cs.

परेहि कृत्ये मा तिष्ठो विद्धस्येव पदं नय ।
मृगः स मृगयुस्त्वं 'न त्वा निकर्तुमर्हति' ॥ २६ ॥

परा । इहि । कृत्ये । मा । तिष्ठः । विद्धस्यऽइव । पदम् । नय ।
मृगः । सः । मृगऽयुः । त्वम् । न । त्वा । निऽकर्तुम् । अर्हति ॥ २६ ॥

उत हन्ति पूर्वासिनं प्रत्यादायापर इष्वा ।
उत पूर्वस्य निघ्नतो नि[2] हन्त्यपरः प्रति ॥ २७ ॥

उत । हन्ति । पूर्वऽआसिनम् । प्रतिऽआदाय । अपरः । इष्वा ।
उत । पूर्वस्य । निऽघ्नतः । नि । हन्ति । अपरः । प्रति ॥ २७ ॥

एतद्धि शृणु मे वचोऽथेहि[3] यत एयथ । यस्त्वा चकार तं प्रति[4] ॥२८॥

एतत् । हि । शृणु । मे । वचः । अथ । इहि । यतः । आऽइयथ ।
यः । त्वा । चकार । तम् । प्रति ॥ २८ ॥

अनागोहत्या वै भीमा कृत्ये मा नो गामश्वं पुरुषं वधीः ।
यत्रयत्रासि निहिता ततस्त्वोत्थापयामसि पर्णाल्लघीयसी भव ॥ २९ ॥

अनागःऽहत्या । वै । भीमा । कृत्ये । मा । नः । गाम् । अश्वम् । पुरुषम् । वधीः ।
यत्रऽयत्र । असि । निऽहिता । ततः । त्वा । उत् । स्थापयामसि । पर्णात् । लघीयसी । भव ॥

यदि स्थ तमसावृता[6] जालेनाभिहिता इव[7] ।
सर्वाः संलुप्येतः कृत्याः पुनः कर्त्रे प्र हिण्मसि ॥ ३० ॥

यदि । स्थ । तमसा । आऽवृताः[6] । जालेन । अभिहिताःऽइव ।
सर्वाः । सम्ऽलुप्य । इतः । कृत्याः । पुनः । कर्त्रे । प्र । हिण्मसि ॥ ३० ॥

'कृत्याकृतो वलगिनोऽभिनिष्कारिणः' प्रजाम् ।
मृणीहि कृत्ये मोच्छिषोऽमून्[9] कृत्याकृतो[10] जहि ॥ ३१ ॥

---

१. नक्यात् कर्तुं° पै १६,३७,६. २. वि पै १६,३७,८. ३. वचो अथेहि पै १६,३७,९. ४. पुनः पै. ५. °साभृता पै १६,३८,२. ६. वृतम् पै. ७. इ. Wl: पैप्पु. मूको. °ता. ८. °कृतां मूलकृतामभि° पै १६,३८,३. ९. °षो अमुं पै. १०. °कृतं पै.

कृत्याऽकृतः । वलगिनः । अभिऽनिष्कारिणः । प्रऽजाम् ।
मृणीहि । कृत्ये । मा । उत् । शिषः । अमून् । कृत्याऽकृतः । जहि ॥ ३१ ॥

यथा सूर्यो मुच्यते तमसस्परि रात्रिं जहात्युषसश्च केतून्[1] ।
एवाहं सर्वं दुर्भूतं कर्त्रं कृत्याकृता कृतं हस्तीव रजो दुरितं जहामि ॥३२॥

यथा । सूर्यः । मुच्यते । तमसः । परि । रात्रिम् । जहाति । उषसः । च । केतून् । एव । अहम् । सर्वम् । दुःऽभूतम् । कर्त्रम् । कृत्याऽकृता । कृतम् । हस्तीऽइव । रजः । दुःऽइतम् । जहामि ॥

## इति प्रथमेऽनुवाके प्रथमं सूक्तम् ।

अस्मिन् सूक्ते पुरुषस्य अर्थात् मनुष्यस्य माहात्म्यं वर्ण्यते । तच्च तद्भिन्नभिन्नावयवान् को देवोऽकरोद् इत्यादिप्रश्नरूपेण तत्प्रश्नानाम् उत्तररूपेण च ।

यज्ञलम्पटाः सांप्रदायिकास्तु एतत् सूक्तं पुरुषमेधे विनियोजयन्ति । तद् यथा— पुरुषमेधे स्नातालंकृतम् उत्सृज्यमानं पुरुषपशुं 'केन पार्ष्णी' इत्यर्थसूक्तेन अनुमन्त्रयते । तद् उक्तं वैताने—"तं ह स्नातम् अलंकृतम् उत्सृज्यमानं 'सहस्रबाहुः पुरुषः' ( अ १९,६ ), 'केन पार्ष्णी' इत्यनुमन्त्रयते" ( वैताश्रौ ३७,१९ ) इति ।

तथा अस्य सूक्तस्य शनैश्चरग्रहदेवत्यहविराज्यहोमे समिदाधानोपस्थानयोश्च विनियोगः । "अथाज्यभागान्ते 'विषासहिम्' ( अ १७,१ ) इत्यादित्याय हविषो हुत्वाज्यं जुहुयात् 'सहस्रबाहुः पुरुषः', 'केन पार्ष्णी', 'प्राणाय नमः' ( अ ११,६ ) इति शनैश्चराय" ( शांक १५ ? ) इति । "समिध आधायोपतिष्ठते" इति प्रक्रम्य शान्तिकल्पे सूत्रितम्—

केन पार्ष्णी आभृते पूरुषस्य केन मांसं संभृतं केन गुल्फौ ।
केनाङ्गुलीः पेशनीः केन खानि केनोच्छ्लङ्खौ[2] मध्यतः कः प्रतिष्ठाम् ॥१॥

केन । पार्ष्णी इति । आभृते इत्याऽभृते । पुरुषस्य । केन । मांसम् । सम्ऽभृतम् । केन । गुल्फौ । केन । अङ्गुलीः । पेशनीः । केन । खानि । केन । उत्ऽश्लङ्खौ[3] । मध्यतः । कः । प्रतिऽस्थाम् ॥

कस्मान्नु गुल्फावधरावकृण्वन्नष्ठीवन्तावुत्तरौ पूरुषस्य ।
जङ्घे निर्ऋत्य[4] न्यदधुः क्व स्विज्जानुनोः संधी क उ तच्चिकेत[5] ॥ २ ॥

---

१. केतुम् पै १६,३८,४.
२. °च्छ्लङ्खौ K; °च्छ्लुखौ RW.; केनौश्छिंनकौ? पै १६,५९,१.
३. °श्लङ्खौ WM.
४. °त्यं A,B,Bb,D,K,Km,Sm,Dc,Cs.
५. तज्जजान पै १६,५९,२.

कस्मात् । नु । गुल्फौ । अधरौ । अकृण्वन् । अष्ठीवन्तौ । उतऽतरौ । पुरुषस्य । जङ्घे इति । निःऽऋत्य । नि । अदधुः । क्व । स्वित् । जानुनोः । संधी इति सम्ऽधी । कः । ऊं इति । तत् । चिकेत ॥ २ ॥

चतुष्टयं युज्यते संहितान्तं जानुभ्यामूर्ध्वं शिथिरं कबन्धम् ।
श्रोणी यदूरू क उ तज्जजान याभ्यां कुसिन्धं सुदृढं[1] बभूव ॥ ३ ॥

चतुष्टयम् । युज्यते । संहितऽअन्तम् । जानुऽभ्याम् । ऊर्ध्वम् । शिथिरम् । कबन्धम् । श्रोणी इति । यत् । ऊरू इति । कः । ऊं इति । तत् । जजान । याभ्याम् । कुसिन्धम्[2] । सुऽदृढम् । बभूव ॥ ३ ॥

कति देवाः कतमे त आसन् [3]य उरो ग्रीवाश्चिक्युः[3] पूरुषस्य ।
कति स्तनौ व्यदधुः[4] [5]कः कफोडौ[5] कति स्कन्धान् पृष्टीरचिन्वन्[6] ॥४॥

कति । देवाः । कतमे । ते[7] । आसन् । ये । उरः । ग्रीवाः । चिक्युः[8] । पुरुषस्य । कति । स्तनौ । वि । अदधुः । कः । कफोडौ[9] । कति । स्कन्धान् । कति । पृष्टीः[10] । अचिन्वन् ॥

को अस्य बाहू समभरद्[11] वीर्यं करवादिति[12] ।
अंसौ को अस्य तद् देवः कुसिन्धे अध्या दधौ[13] ॥ ५ ॥

कः । अस्य । बाहू इति । सम् । अभरत् । वीर्यम् । करवात् । इति । अंसौ । कः । अस्य । तत् । देवः । कुसिन्धे । अधि । आ । दधौ ॥ ५ ॥

कः सप्त खानि वि ततर्द शीर्षणि[14] कर्णाविमौ नासिके चक्षणी मुखम् ।
येषां पुरुत्रा विजयस्य मह्मनि चतुष्पादो द्विपदो[15] यन्ति यामम् ॥ ६ ॥

कः । सप्त । खानि । वि । ततर्द । शीर्षणि । कर्णौ । इमौ । नासिके इति । चक्षणी इति । मुखम् । येषाम् । पुरुऽत्रा । विऽजयस्य । मह्मनि । चतुःऽपादः । द्विऽपदः । यन्ति । यामम्[16] ॥

---

१. सुदृढं पै १६,५९,१. २. कुसिंधम् P. ३. नीळहवक्रोरप्रियं पै १६,५९,४. ४. न्यदधुः पै. ५. कक्कं° P²,M,T,O,R¹; °कंफोडौ W,RW.; कंकूडौ P³,M,R¹; कंकूौडौ I. ६. पृष्टीर° D,K,Km,V,Dc,Cs. ७. ते P. ८. चिक्युः P. ९. कफौडौ D⁶,Bp¹. १०. पृष्टीः P,J,Cp. ११. °भवद् K,V १२. कृणवादिति पै १६,५९,५. १३. दधाम् पै. १४. शीर्षाणि K,V. १५. द्विपादो पै १६,५९,७. १६. यार्मन् Bp².

हन्वोर्हि जिह्वामदधात् पुरूचीमधा महीमधि शिश्राय वाचम् ।
स आ वरीवर्ति 'भुवनेष्वन्तरपो' वसानः क उ 'तच्चिकेत' ॥ ७ ॥

हन्वोः । हि । जिह्वाम् । अदधात् । पुरूचीम् । अध । महीम् । अधि । शिश्राय । वाचम् ।
सः । आ । वरीवर्ति । भुवनेषु । अन्तः । अपः । वसानः । कः । ऊं इति । तत् । चिकेत ॥

मस्तिष्कमस्य यतमो ललाटं ककाटिका' प्रथमो यः कपालम् ।
चित्वा चित्यं 'हन्वोः पूरुषस्य' दिवं रुरोह कतमः स देवः ॥ ८ ॥

मस्तिष्कम् । अस्य । यतमः । ललाटम् । ककाटिकाम् । प्रथमः । यः । कपालम् ।
चित्वा । चित्यम्' । हन्वोः । पुरुषस्य । दिवम् । रुरोह । कतमः । सः । देवः ॥ ८ ॥

प्रियाप्रियाणि बहुला स्वप्नं संबाधतन्द्यः ।
आनन्दानुग्रो नन्दांश्च कस्माद्' वहति पूरुषः ॥ ९ ॥

प्रियऽअप्रियाणि । बहुला । स्वप्नम् । संबाधऽतन्द्यः ।
आऽनन्दान् । उग्रः । नन्दान् । च । कस्मात् । वहति । पुरुषः ॥ ९ ॥

आर्तिरवर्तिर्निर्ऋतिः कुतो नु' पुरुषेऽमतिः' ।
राद्धिः 'समृद्धिरव्यृद्धिर्मतिरुदितयः कुतः ॥ १० ॥

आर्तिः । अवर्तिः । निःऽऋतिः । कुतः । नु । पुरुषे । अमतिः ।
राद्धिः । सम्ऽऋद्धिः । अविऽऋद्धिः । मतिः । उत्ऽइतयः । कुतः ॥ १० ॥

को अस्मिन्नापो व्यदधात् विषूवृतः पुरूवृतः[१०] सिन्धुसृत्याय[११] जाताः ।
तीव्रा अरुणा लोहिनीस्ताम्रधूम्रा ऊर्ध्वा अवाचीः पुरुषे तिरश्चीः ॥ ११ ॥

कः । अस्मिन् । आपः । वि । अदधात् । विषुऽवृतः । पुरुऽवृतः । सिन्धुऽसृत्याय । जाताः ।
तीव्राः । अरुणाः । लोहिनीः । ताम्रऽधूम्राः । ऊर्ध्वाः । अवाचीः । पुरुषे । तिरश्चीः ॥ ११ ॥

---

१. महिना व्योमन्नपो पै १६,५९,८.
२. चित् प्र वेद पै.
३. कुकाटिकां A,R.
४. पुरुषस्य मह्रो पै १६,५९,६.
† पुरुषस्य Bᵇ,Cs.
५. चित्यम् D²,P.
६. तानुद् पै १६,६०,१.
७. ऽधि पै १६,६०,२.
८. पुरुषमतिः A
९. प्रवृद्धिर° K; °द्धिरति-वृद्धि° पै.
१०. पुरुवृतः Bᵇ,Kᵐ,R,V; पुरूच्युतः पै १६,६०,३.
११. सिन्धुभृत्याय Kᵐ.

को अस्मिन् रूपमदधात् को मह्मानं च नाम च ।
गातुं को अस्मिन्[1] कः केतुं कश्चरित्राणि पूरुषे ॥ १२ ॥

कः । अस्मिन् । रूपम् । अदधात् । कः । मह्मानम् । च । नाम । च ।
गातुम् । कः । अस्मिन् । कः । केतुम् । कः । चरित्राणि । पुरुषे ॥ १२ ॥

को अस्मिन् प्राणमवयत्[2] को अपानं व्यानमुं ।
समानमस्मिन् को देवोऽधि शिश्राय पूरुषे ॥१३॥

कः । अस्मिन् । प्राणम् । अवयत् । कः । अपानम् । विऽआनम् । ऊं इति ।
समऽआनम् । अस्मिन् । कः । देवः । अधि । शिश्राय । पुरुषे ॥ १३ ॥

को अस्मिन्[3] यज्ञमदधादेको देवोऽधि[4] पूरुषे ।
को अस्मिन्त्सत्यं[5] कोनृतं[5] 'कुतो मृत्युः कुतोमृतम्[6] ॥ १४ ॥

कः । अस्मिन् । यज्ञम् । अदधात् । एकः । देवः । अधि । पुरुषे ।
कः । अस्मिन् । सत्यम् । कः । अनृतम् । कुतः । मृत्युः । कुतः । अमृतम् ॥ १४ ॥

को [7]अस्मै वासः[7] पर्यदधात् को अस्यायुरकल्पयत् ।
बलं को अस्मै[8] प्रायच्छत् को [9]अस्याकल्पयज्जवम् ॥ १५ ॥

कः । अस्मै । वासः । परि । अदधात् । कः । अस्य । आयुः । अकल्पयत् ।
बलम् । कः । अस्मै । प्र । अयच्छत् । कः । अस्य । अकल्पयत् । जवम् ॥ १५ ॥

केनापो [10]अन्वतनुत केनाहरकरोद्[11] रुचे ।
उपसं केनान्वैन्द्र केन सायंभवं ददे ॥ १६ ॥

केन । आपः । अनु । अतनुत । केन । अहः । अकरोत् । रुचे ।
उपसम । केन । अनु । ऐन्द्र । केन । सायम्ऽभवम् । ददे ॥ १६ ॥

को अस्मिन्[12] रेतो न्यदधात् तन्तुरा तायतामिति ।
मेधां को [12]अस्मिन्नध्यौहत् को बाणं को नृतो[13] दधौ ॥ १७ ॥

---

१. ऽस्मिन् पै १६,६०,४. २. °मदधात् पै १६,६०,७. ३. ऽस्मि° पै १६,६०,८. ४. ऽस्मेऽधि पै. ५. को अनृतं पै. ६. को मृत्युं को अमृतं दधौ पै. ७. वाससा पै १६,६०,६. ८. ऽस्मै पै. ९. ऽस्या° पै. १०. ऽन्वत° पै १६,६०,१. ११. °रहणोद् पै. १२. ऽस्मि° पै १६,६०,५. १३. नृतं पै.

कः । अस्मिन् । रेतः । नि । अदधात् । तन्तुः । आ । तायताम् । इति ।
मेधाम् । कः । अस्मिन् । अधि । औहत् । कः । बाणम् । कः । नृतः । दधौ ॥ १७ ॥

केनेमां भूमिमौर्णोत् केन पर्यभवद् दिवम् ।
केनाभि मह्ना पर्वतान् केन कर्माणि पूरुषः ॥ १८ ॥

केन । इमाम् । भूमिम् । और्णोत् । केन । परि । अभवत् । दिवम् ।
केन । अभि । मह्ना । पर्वतान् । केन । कर्माणि । पुरुषः ॥ १८ ॥

केन पर्जन्यमन्वेति[1] केन सोमं विचक्षणम्[2] ।
केन यज्ञं च श्रद्धां च केनास्मिन् निहितं मनः ॥ १९ ॥

केन । पर्जन्यम् । अनु । एति । केन । सोमम् । विऽचक्षणम् ।
केन । यज्ञम् । च । श्रद्धाम् । च । केन । अस्मिन् । निऽहितम् । मनः ॥ १९ ॥

केन श्रोत्रियमाप्नोति केनेमं परमेष्ठिनम्[3] ।
केनेममग्निं पूरुषः[3] केन संवत्सरं ममे ॥ २० ॥

केन । श्रोत्रियम् । आप्नोति । केन । इमम् । परमेऽस्थिनम् ।
केन । इमम् । अग्निम् । पुरुषः । केन । सम्ऽवत्सरम् । ममे ॥ २० ॥

ब्रह्म श्रोत्रियमाप्नोति ब्रह्मेमं परमेष्ठिनम् ।
ब्रह्मेममग्निं पूरुषो ब्रह्म संवत्सरं ममे ॥ २१ ॥

ब्रह्म । श्रोत्रियम् । आप्नोति । ब्रह्म । इमम् । परमेऽस्थिनम् ।
ब्रह्म । इमम् । अग्निम् । पुरुषः । ब्रह्म । सम्ऽवत्सरम् । ममे ॥ २१ ॥

केन देवाँ[4] अनु क्षियति[5] केन दैवजनीर्विशः[6] ।
केनेदमन्यन्नक्षत्रं केन सत् क्षत्रमुच्यते ॥ २२ ॥

केन । देवान् । अनु । क्षियति । केन । दैवऽजनीः । विशः ।
केन । इदम् । अन्यत् । नक्षत्रम् । केन । सत् । क्षत्रम् । उच्यते ॥ २२ ॥

---

१. °न्यमाप्नोति पै १६,६१,२.　२. केन सोमं विचक्षणम् पै १६,६१,५.　३. केनेदमग्निं पुरुषः पै. १६,६१,१.　४. देवँ A,R.　५. क्षियन्ति K.　६. देवीरजनयद् दिशः पै

ब्रह्म॑ दे॒वाँ॑ अनु॑ क्षियति॒ ब्रह्म॒ दैव॑जनी॒र्विश॑: ।
ब्र॒ह्मेदम॒न्यन्नक्ष॑त्रं॒ ब्रह्म॒ सत् क्ष॒त्रमु॑च्यते ॥ २३ ॥

ब्रह्म॑ । दे॒वान् । अनु॑ । क्षि॒यति॒ । ब्रह्म॑ । दैव॑ऽजनीः । विश॑: ।
ब्रह्म॑ । इ॒दम् । अ॒न्यत् । नक्ष॑त्रम् । ब्रह्म॑ । सत् । क्ष॒त्रम् । उ॒च्य॒ते ॥ २३ ॥

केने॒यं भूमि॒र्विहि॑ता॒ केन॒ द्यौरुत्त॑रा हि॒ता ।
केने॒दमू॒र्ध्वं ति॒र्यक् चा॒न्तरि॑क्षं॒ व्यचो॑ हि॒तम् ॥ २४ ॥

केन॑ । इ॒यम् । भूमि॑: । विऽहि॑ता । केन॑ । द्यौः । उत्ऽत॑रा । हि॒ता ।
केन॑ । इ॒दम् । ऊ॒र्ध्वम् । ति॒र्यक् । च॒ । अ॒न्तरि॑क्षम् । व्यच॑: । हि॒तम् ॥ २४ ॥

ब्रह्म॑णा॒ भूमि॒र्विहि॑ता॒ ब्रह्म॒ द्यौरुत्त॑रा हि॒ता ।
ब्र॒ह्मेदमू॒र्ध्वं ति॒र्यक् चा॒न्तरि॑क्षं॒ व्यचो॑ हि॒तम् ॥ २५ ॥

ब्रह्म॑णा । भूमि॑: । विऽहि॑ता । ब्रह्म॑ । द्यौः । उत्ऽत॑रा । हि॒ता ।
ब्रह्म॑ । इ॒दम् । ऊ॒र्ध्वम् । ति॒र्यक् । च॒ । अ॒न्तरि॑क्षम् । व्यच॑: । हि॒तम् ॥ २५ ॥

मू॒र्धान॑मस्य सं॒सीव्याथ॑र्वा॒ हृद॑यं च॒ यत् ।
म॒स्ति॒ष्कादू॒र्ध्वः प्रैर॑य॒त् पव॑मा॒नोऽधि॑ शी॒र्ष॒तः ॥ २६ ॥

मू॒र्धान॑म् । अ॒स्य॒ । स॒म्ऽसीव्य॑ । अथ॑र्वा । हृद॑यम् । च॒ । यत् ।
म॒स्ति॒ष्कात् । ऊ॒र्ध्वः । प्र । ऐ॒र॒य॒त् । पव॑मानः । अधि॑ । शी॒र्ष॒तः ॥ २६ ॥

तद् वा अथ॑र्व॒णः शिरो॑ देवको॒शः समु॑ब्जितः ।
तत् प्रा॒णो अ॒भि र॑क्षति॒ शिरो॒ अन्न॒मथो॒ मन॑: ॥ २७ ॥

तत् । वै । अथ॑र्वणः । शिर॑: । दे॒व॒ऽको॒शः । स॒म्ऽउ॑ब्जितः ।
तत् । प्रा॒णः । अ॒भि । र॒क्ष॒ति॒ । शिर॑: । अन्न॑म् । अथो॒ इति॑ । मन॑: ॥ २७ ॥

ऊ॒र्ध्वो नु सृ॒ष्टा३स्ति॒र्यङ् नु सृ॒ष्टा३ः सर्वा॒ दिश॒: पुरु॑ष॒ आ ब॑भू॒वाँ३ ।

---

१. देवाँ A,R,Sᵐ. २. क्षयति K. ३. °र्विहिता पै १६,६१,२. ४. °र्विहिता पै १६,६१,८. ५. द्यामुत्तरां दधौ पै. ६. °र्ध्वं प्रेरयत् पै १६,५९,९. ७. शीर्ष्णः पै. ८. ऽभि पै १६,५९,१०. ९. °उब्जितः P. १०. बभूवाँ३ RW.

पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ॥ २८ ॥

ऊर्ध्वः । नु । सृष्टा३ः । तिर्यङ् । नु । सृष्टा३ः । सर्वाः । दिशः । पुरुषः । आ । बभूवाँ३[1] ।
पुरम् । यः । ब्रह्मणः । वेद । यस्याः । पुरुषः । उच्यते ॥ २८ ॥

यो वै तां ब्रह्मणो वेदामृतेनावृतां पुरम्[2] ।
तस्मै ब्रह्म च ब्राह्माश्च[3] चक्षुः[4] प्राणं[5] प्रजां ददुः ॥ २९ ॥

यः । वै । ताम् । ब्रह्मणः । वेद । अमृतेन । आऽवृताम् । पुरम् ।
तस्मै । ब्रह्म । च । ब्राह्माः[6] । च । चक्षुः । प्राणम् । प्रऽजाम् । ददुः ॥ २९ ॥

· न वै तं[7] चक्षुर्जहाति न प्राणो जरसः पुरा ।
पुरं यो ब्रह्मणो वेद यस्याः[8] पुरुष उच्यते ॥ ३० ॥

न । वै । तम् । चक्षुः । जहाति । न । प्राणः । जरसः । पुरा ।
पुरम् । यः । ब्रह्मणः । वेद । यस्याः । पुरुषः । उच्यते ॥ ३० ॥

अष्टाचक्रा नवद्वारा देवानां पूरयोध्या[9] ।
तस्यां हिरण्ययः[10] कोशः स्वर्गो ज्योतिषावृतः ॥ ३१ ॥

अष्टाऽचक्रा । नवऽद्वारा । देवानाम् । पूः । अयोध्या ।
तस्याम् । हिरण्ययः । कोशः । स्वःऽगः । ज्योतिषा । आऽवृतः ॥ ३१ ॥

तस्मिन् [11]हिरण्यये कोशे त्र्यरे[11] त्रिप्रतिष्ठिते ।
तस्मिन् यद् यक्षमात्मन्वत्[12] तद् वै ब्रह्मविदो विदुः ॥ ३२ ॥

तस्मिन् । हिरण्यये । कोशे । त्रिऽअरे । त्रिऽप्रतिस्थिते ।
तस्मिन् । यत् । यक्षम् । आत्मन्ऽवत् । तत् । वै । ब्रह्मऽविदः । विदुः ॥३२ ॥

प्रभ्राजमानां[13] हरिणीं यशसा संपरीवृताम् ।

---

१. °वाँम् ॥ ४ । J; °वाँ ४ । Cp. २. पुरीम् तैआ १,२७,३. ३. ब्रह्मा च तैआ. ४. आयुः पै १६,६२,२ तैआ. ५. कीर्त्ति तैआ. ६. ब्रह्माः P. ७. नैनं पै १६,६२,१. ८. यस्मात् पै. ९. °ध्या या पै १६,६२,३. १०. हिरण्मयः पै. तैआ. ११. हिरण्मये कोशे त्रिदिवे पै १६,६२,४. १२. अन्तरात्म° पै. १३. विभ्रा° तैआ.

पुरं हिरण्ययीं[1] ब्रह्मा विवेशापराजिताम् ॥ ३३ ॥

प्रऽभ्राजमानाम् । हरिणीम् । यशसा । सम्ऽपरिवृताम् ।
पुरम् । हिरण्ययीम् । ब्रह्म । आ । विवेश । अपराऽजिताम् ॥ ३३ ॥

इति प्रथमेऽनुवाके द्वितीयं सूक्तम् ।

इति प्रथमोऽनुवाकः ।

अस्मिन् सूक्ते वरणस्य नाम मणेः प्रतापो वीर्यं शत्रुक्षयसामर्थ्यं धारयितृसर्वदुःखपरिहरणं च वर्ण्यते । तदनुसारेणैव सांप्रदायिकास्तद् विनियोजयन्ति । तद् यथा ।

शत्रुक्षयादिकामः 'अयं मे वरण.' इत्यर्थसूक्तेन दध्नि मधुनि च त्रिरात्रं वासितं वरणमणिं संपात्य अभिमन्त्र्य बध्नीयात् । सूत्रितं हि — "'अयं मे वरणः (अ १०,३) अरातीयोः (अ १०,६) इति मन्त्रोक्तान् वासितान् बध्नाति" (कौ . १९,२२) इति ।

तथा 'अभयां भयार्तस्य' ( शांक १७,५ ) इति . विहितायाम् अभयाख्यायां महाशान्तौ वरणमणिबन्धनेऽपि एतत् सूक्तम् । उक्तं शान्तिकल्पे — "'अयं मे वरणो मणिरिति वारणम् अभयायाम्' ( शांक १९,८ ) इति ।

अयं मे वरणो मणिः सपत्नक्षयणो वृषा ।
तेना रभस्व त्वं शत्रून् प्र मृणीहि दुरस्यतः ॥१॥

अयम् । मे । वरणः । मणिः । सपत्नऽक्षयणः । वृषा ।
तेन । आ । रभस्व । त्वम् । शत्रून् । प्र । मृणीहि । दुरस्यतः ॥ १ ॥

प्रैणाञ्छृणीहि[2] प्र मृणा रभस्व मणिस्ते[3] अस्तु पुरएता पुरस्तात् ।
अवारयन्त वरणेन देवा अभ्याचारमसुराणां श्वःश्वः[4] ॥ २ ॥

प्र । एनान् । शृणीहि । प्र । मृण । आ । रभस्व । मणिः । ते । अस्तु । पुरःऽएता । पुरस्तात् ।
अवारयन्त । वरणेन । देवाः । अभिऽआचारम् । असुराणाम् । श्वःऽश्वः ॥ २ ॥

---

१. हिरण्मयीं K; हिरण्ययीं > हिरण्मयीं Km; हिरण्मयीं पै १६,६२,५. तआ १,२७,१. २ हृवः पै १६,६३,१. ३. प्रैणाञ्छृ॰ A,Km,R,Dc; प्रैणान्छृ॰ D,Cs; प्रैनां शृ॰ पै १६, ६३,२. ४. मणिस्ते > मणिष्टे R,Sm. ५. श्वश्वः A,B,Bb,D,K,Km,R,Sm,V,Cs.

अयं मणिर्वरणो विश्वभेषजः सहस्राक्षो हरितो हिरण्ययः ।
'स ते' शत्रूनधरान् पादयाति' पूर्वस्तान् दम्नुहि' ये त्वा द्विषन्ति ॥३॥

अयम् । मणिः । वरणः । विश्वऽभेषजः । सहस्रऽअक्षः । हरितः । हिरण्ययः ।
सः । ते । शत्रून् । अधरान् । पादयाति । पूर्वः । तान् । दम्नुहि । ये । त्वा । द्विषन्ति ॥ ३ ॥

अयं ते कृत्यां विततां 'पौरुषेयादयं भयात्' ।
अयं 'त्वा सर्वस्मात् पापाद्' वरणो वारयिष्यते ॥ ४ ॥

अयम् । ते । कृत्याम् । विऽतताम् । पौरुषेयात् । अयम् । भयात् ।
अयम् । त्वा । सर्वस्मात् । पापात् । वरणः । वारयिष्यते ॥ ४ ॥

वरणो वारयाता अयं' देवो वनस्पतिः ।
'यक्ष्मो यो अस्मिन्नाविष्टस्तमु' देवा अवीवरन् ॥ ५ ॥

वरणः । वारयाते । अयम् । देवः । वनस्पतिः ।
यक्ष्मः । यः । अस्मिन् । आऽविष्टः । तम् । ऊं इति । देवाः । अवीवरन् ॥ ५ ॥

स्वप्नं सुप्त्वा यदि पश्यासि' पापं मृगः 'सृतिं यति धावादजुष्टाम्' ।
परिक्षवाच्छकुनेः पापवादादयं मणिर्वरणो वारयिष्यते" ॥ ६ ॥

स्वप्नम् । सुप्त्वा । यदि । पश्यासि । पापम् । मृगः । सृतिम् । यति । धावात् । अजुष्टाम् ।
परिऽक्षवात् । शकुनेः । पापऽवादात् । अयम् । मणिः । वरणः । वारयिष्यते ॥ ६ ॥

अरात्यास्त्वा" निर्ऋत्या अभिचारादथो भयात् ।
मृत्योरोजीयसो वधाद् "वरणो वारयिष्यते" ॥ ७ ॥

अरात्याः । त्वा । निःऽऋत्याः । अभिऽचारात् । अथो इति । भयात् ।
मृत्योः । ओजीयसः । वधात् । वरणः । वारयिष्यते ॥ ७ ॥

यन्मे माता यन्मे पिता भ्रातरो यच्च मे स्वा यदेनश्चकृमा वयम् ।

---

१. यस्ते पै १६,६३,३. २. यातयाति पै. ३. दभ पै. ४. पौरुषेयमयं वधम् पै १६,६३,४. ५. ते सर्वं पाप्मानं पै. ६. इदं पै १६,६३,५. ७. यक्ष्मः प्रतिष्ठो योऽस्मिन् तमु पै. ८. पश्यामि पै १६,६३,६. ९. सुतं यदि धावादजुष्टम् पै. १०. वारयातै पै. ११. त्या मा पै १६,६३,७. १२. त्वं वरण वारय पै.

ततो[1] नो वारयिष्यतेऽयं[2] देवो वनस्पतिः[3] ॥ ८ ॥

यत् । मे । माता । यत् । मे । पिता । भ्रातरः । यत् । च । मे । स्वाः । यत् । एनः । चकृम । वयम् ।
ततः । नः । वारयिष्यते । अयम् । देवः । वनस्पतिः ॥ ८ ॥

वरणेन प्रव्यथिता भ्रातृव्या मे सबन्धवः[4] ।
असूर्तं रजो अप्यगुस्ते यन्त्वधमं तमः ॥ ९ ॥

वरणेन । प्रऽव्यथिताः । भ्रातृव्याः । मे । सऽबन्धवः ।
असूर्तम् । रजः । अपि । अगुः । ते । यन्तु । अधमम् । तमः ॥ ९ ॥

अरिष्टोऽहमरिष्टगुरायुष्मान्त्सर्वपूरुषः ।
तं माऽयं वरणो मणिः परि पातु दिशोदिशः ॥ १० ॥

अरिष्टः । अहम् । अरिष्टऽगुः । आयुष्मान् । सर्वऽपुरुषः ।
तम् । मा । अयम् । वरणः[5] । मणिः । परि । पातु । दिशःऽदिशः ॥१०॥

अयं मे वरण उरसि राजा देवो वनस्पतिः ।
स मे शत्रून् वि बाधतामिन्द्रो दस्यूनिवासुरान् ॥ ११ ॥

अयम् । मे । वरणः । उरसि । राजा । देवः । वनस्पतिः ।
सः । मे । शत्रून् । वि । बाधताम् । इन्द्रः । दस्यून्ऽइव । असुरान् ॥ ११ ॥

इमं बिभर्मि वरणमायुष्मान्छतशारदः[6] ।
स मे राष्ट्रं च क्षत्रं[7] च पशूनोजश्च मे दधत् ॥ १२ ॥

इमम् । बिभर्मि । वरणम् । आयुष्मान् । शतऽशारदः ।
सः । मे । राष्ट्रम् । च । क्षत्रम् । च । पशून् । ओजः । च । मे । दधत् ॥ १२ ॥

यथा वातो वनस्पतीन् वृक्षान्[8] भनक्त्योजसा ।
एवा सपत्नान् मे[9] भङ्ग्धि पूर्वान्[10] "जाताँ उतापरान्[11] वरणस्त्वाऽभि रक्षतु ॥१३॥

---

१. वस्मान् पै १९,६३,९. २. 'ष्यत इदं पै. ३. बृहस्पतिः पै. ४. सबन्धवाः Sᵐ. ५. वरुणः P. ६. 'युष्मां छत' A.Kᵐ,R,Dc. ७. क्षेत्रं पै १९,६४,१; क्षत्रं पै [मूको.]. ८. जीर्णान् पै १९,६४,३. ९. त्वं पै. १०. पूर्वी Kᵐ. ११. उताप- नुणा K.

यथा॑ । वात॑ः । व॒नस्पती॑न् । वृ॒क्षान् । भ॒नक्ति॑ । ओज॑सा । ए॒व । स॒ऽपत्ना॑न् । मे॒ ।
भ॒ङ्ग्धि॒ । पूर्वा॑न् । जा॒तान् । उ॒त । अप॑रान् । व॒र॒णः । त्वा॒ । अ॒भि । र॒क्ष॒तु॒ ॥ १३ ॥

यथा॒ वात॑श्चा॒ग्निश्च॑ वृ॒क्षान्॑ प्सा॒तो व॒नस्पती॑न् ।
ए॒वा स॒पत्ना॑न् मे॑ प्सा॒हि॒ पूर्वा॑न्० ॥ १४ ॥

यथा॑ । वात॑ः । च॒ । अ॒ग्निः । च॒ । वृ॒क्षान् । प्सा॒तः[3] । व॒नस्पती॑न् ।
ए॒व । स॒ऽपत्ना॑न् । मे॒ । प्सा॒हि॒ । पूर्वा॑न् । ०॥ १४ ॥

यथा॒ वाते॑न॒ प्रक्षी॑णा वृ॒क्षाः शेरे॑[4] न्य॑र्पिताः ।
ए॒वा स॒पत्नां॒स्त्वं॑[5] मम॒[6] प्र क्षि॑णीहि॒ न्य॑र्पय
पूर्वा॑न् जा॒ताँ॑[7] उ॒ताप॑रान् व॒र॒णस्त्वा॒ऽभि र॑क्षतु ॥ १५ ॥

यथा॑ । वाते॑न । प्रऽक्षी॑णाः । वृ॒क्षाः । शेरे॑ । निऽअ॑र्पिताः । ए॒व । स॒ऽपत्ना॑न् । त्वम् । मम॑ । प्र ।
क्षि॒णी॒हि॒ । नि । अ॒र्प॒य॒ । पूर्वा॑न् । जा॒तान् । उ॒त । अप॑रान् । व॒र॒णः । त्वा॒ । अ॒भि । र॒क्ष॒तु॒ ॥ १५ ॥

तांस्त्वं प्र च्छि॑न्द्धि वरण पु॒रा दि॒ष्टात् पु॒राायु॑षः ।
य ए॑नं प॒शुषु॒ दिप्स॑न्ति॒ ये चा॑स्य[8] राष्ट्र॒दि॒प्स॑वः ॥ १६ ॥

तान् । त्वम् । प्र । छि॒न्द्धि॒ । व॒र॒ण॒ । पु॒रा । दि॒ष्टात् । पु॒रा । आयु॑षः ।
ये । ए॒न॒म् । प॒शुषु॑ । दिप्स॑न्ति । ये । च॒ । अ॒स्य॒ । रा॒ष्ट्र॒ऽदि॒प्स॑वः ॥ १६ ॥

यथा॒ सूर्यो॑ अ॒ति॒भाति॒[9] यथा॒ऽस्मि॒न्[10] तेज॒ आहि॑तम् ।
ए॒वा मे॑ व॒र॒णो म॒णिः की॒र्तिं भू॒तिं नि य॑च्छतु
तेज॑सा मा॒ सम्मु॑क्षतु यश॑सा॒ सम॑नक्तु मा[11] ॥ १७ ॥

यथा॑ । सूर्यः॑ । अ॒ति॒ऽभाति॑ । यथा॑ । अ॒स्मि॒न्[12] । तेज॑ः । आऽहि॑तम् । ए॒व । मे॒ । व॒र॒णः । म॒णिः ।
की॒र्तिम् । भू॒तिम् । नि । य॒च्छ॒तु॒ । तेज॑सा । मा॒ । सम् । उ॒क्ष॒तु॒ । यश॑सा । सम् । अ॒न॒क्तु॒ । मा॒ ॥
॥ १८ ॥

यथा॒ यश॑श्च॒न्द्रम॑स्यादि॒त्ये च॑ नृ॒चक्ष॑सि । ए॒वा मे॑० ॥ १८ ॥

---

१. सर्वान् पै १६,६४,५. २. त्वं पै. ३. प्शा॒तः P. ४. श्येरे॒ D. ५. स॒पत्नं॑° D,S^m,Cs. ६. सर्वान् पै १६,६४,४. ७. जा॒ताँ A,R. ८. वास्य पै १६,६४,६. ९. ऽति° पै १६,६४,७. १०. य॒था॒स्मिन् B,P³,M. ११. माम् पै १६,६४,८ एवं सर्वत्र. १२. अ॒स्मिन् D².

यथा । यशः । चन्द्रमसि । आदित्ये । च । नृऽचक्षसि । एव । मे ॥०॥१८॥

यथा यशः पृथिव्यां यथाऽस्मिन्[1] जातवेदसि । एवा० ॥ १९ ॥

यथा । यशः । पृथिव्याम् । यथा । अस्मिन् । जातऽवेदसि ॥०॥ १९ ॥

यथा यशः कन्यायां यथाऽस्मिन्त्संभृते रथे । एवा० ॥ २० ॥

यथा । यशः । कन्यायाम् । यथा । अस्मिन् । समऽभृते । रथे ॥०॥ २० ॥

यथा यशः सोमपीथे मधुपर्के यथा यशः । एवा० ॥ २१ ॥

यथा । यशः । सोमऽपीथे । मधुऽपर्के । यथा । यशः । ० ॥ २१ ॥

यथा यशोऽग्निहोत्रे[2] वषट्कारे यथा यशः । एवा० ॥ २२ ॥

यथा । यशः । अग्निऽहोत्रे । वषट्ऽकारे । यथा । यशः । ० ॥ २२ ॥

यथा यशो यजमाने यथाऽस्मिन् यज्ञ आहितम् । एवा० ॥ २३ ॥

यथा । यशः । यजमाने । यथा । अस्मिन् । यज्ञे । आऽहितम् ॥ ० ॥ २३ ॥

यथा यशः प्रजापतौ यथास्मिन् परमेष्ठिनि[1] । एवा० ॥ २४ ॥

यथा । यशः । प्रजाऽपतौ । यथा । अस्मिन् । परमेऽस्थिनि ॥ ० ॥ २४ ॥

यथा देवेष्वमृतं यथैषु सत्यमाहितम् ।
एवा मे वरणो मणिः कीर्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ॥ २५ ॥

यथा । देवेषु । अमृतम् । यथा । एषु । सत्यम् । आऽहितम् ।
एव । मे । वरणः । मणिः । कीर्तिम् । भूतिम् । नि । यच्छतु ।
तेजसा । मा । सम् । उक्षतु । यशसा । सम् । अनक्तु । मा ॥ २५ ॥

इति द्वितीयेऽनुवाके प्रथमं सूक्तम् ।

---

१. यथास्मिं° Km. २. यशो अग्नि° P², M O, R W. पै १९, ६४, ९. ३. जातवेदसि पै १९, ६५, १.

अस्मिन् सूक्ते नानासर्पास्तेषां च विषाणि तत्तत्प्रतीकाराश्च कविवाग्विषयः। सर्पविषभैषज्ये च मन्त्राः । सर्पविषहारिकाश्च काश्चिदोषधयः । सांप्रदायिका एवं विनियोजयन्ति । तद् यथा —

विषभैषज्ये कर्मणि 'इन्द्रस्य प्रथमः' इत्यर्थसूक्तस्य 'ब्राह्मणो जज्ञे' ( अ ४,६ ) इति सूक्तवद् विनियोगोऽवगन्तव्यः ।

तथा तत्रैव कर्मणि अनेन सूक्तेन पैद्वं पिन्द्वा अभिमन्त्र्य दक्षिणेनाङ्गुष्ठेन दक्षिणनासापुटे नस्यं ददाति। 'पैद्वं कीटकम् । तालिणीति[1] लोकप्रसिद्धा[2] । तं पिन्द्वा' ( कौसू३२,२१ ) इति केशवः, 'पैद्वम्[3] । हिरण्यवर्णसदृशः कीटाश्विमितो वा स पैद्व इत्युच्यते' (कौसू ३२,२२) इति च ।

तथा 'अहिभये अनेन सूक्तेन श्वेतवस्त्रवेष्टितं पैद्वम् अभिमन्त्र्य 'यत्र सर्पभयं[4] तत्र निखनति' ( कौसू ३२,२२ ) इति केशवः । 'सर्पाद्रये पैद्वं वस्त्रे बद्ध्वा स्थापयति तस्मिन् वेश्मनि' इति दारिलः ।

शङ्काविषभैषज्ये कर्मणि 'अङ्गादङ्गात् प्र च्यावय' ( २५ ) इति ऋचा सर्पदष्टं शिरःप्रभृति आप्रपदान्तं हस्तेन मार्ष्टि ।

तत्रैव कर्मणि 'आरे अभूत्' ( २६ ) इति ऋचा उल्मुकं प्रताप्य अभिमन्त्र्य ततो विषव्रणं दृष्ट्वा तत्संमुखं क्षिपति । सर्पादर्शने यतो दष्टस्ततो निरस्यति उल्मुकम् । पैद्वं प्रकर्ष्य

तद् उक्तं कौशिकेन — " 'इन्द्रस्य प्रथमः' इति तक्षकायेत्युक्तम् । पैद्वं प्रकर्ष्य दक्षिणेनाङ्गुष्ठेन दक्षिणस्यां नस्तः । अहिभये सिच्यवगूहयति । 'अङ्गादङ्गात्' इत्या प्रपदात् । दंशमोत्तमया निताप्यादिमभि निरस्यति यतो दष्टः' (कौसू ३२,२०-२५) इति ।

इन्द्रस्य प्रथमो रथो देवानामपरो रथो वरुणस्य तृतीय इत् ।
अहीनामपमा[5] रथ[6] स्थाणुमारदथार्षत्[7] ॥ १ ॥

इन्द्रस्य । प्रथमः । रथः । देवानाम् । अपरः । रथः । वरुणस्य । तृतीयः । इत् ।
अहीनाम् । अपऽमा[8] । रथः । स्थाणुम् । आरत् । अथ । अर्षत्[9] ॥ १ ॥

दर्भः शोचिस्तरूणकमश्वस्य वारः परुषस्य[10] वारः । रथस्य बन्धुरम् ॥ २ ॥

दर्भः । शोचिः । तरूणकम् । अश्वस्य । वारः । परुषस्य[11] । वारः । रथस्य । बन्धुरम् ॥ २ ॥

अव[12] [13]श्वेत पदा जहि[13] पूर्वेण चापरेण च ।

---

१. तलि° शंपा. २. लोके प्र° शंपा. ३. पैद्वः हि° शंपा. ४. यत्राहिभयं शंपा. ५. °मुपमा पै [मूको.]. ६. रथः B,$B^h$,D,$S^m$,Cs. ७. °थारिषत् A,D,R,$S^m$,$P^3$,M, I,$K^2$, पै १६,१५,१ [मूको.]; °थारषत् Cs. ८. वैप १,२८० g द्र. ९. अद्रर्षत् Kp. १०. पुरुषस्य K; पुरुपस्य O,$E^2$ पै १६,१५,२. ११. पुरु° K. १२. अप आगृ २,३,२ पागृ २,१४,४ शांगृ ४,१८ हिगृ २,१६,८; अपः मागृ २,७,१. १३. श्वेतपदागहि मागृ.

उदप्लुतमिव दार्वहीनामरसं विषं वारुग्रम्[1] ॥ ३ ॥

अयं । श्वेत । पदा । जहि । पूर्वेण । च । अपरेण । च ।
उदप्लुतम्ऽइव । दारु । अहीनाम् । अरसम् । विषम् । वाः[2] । उग्रम् ॥ ३ ॥

अरंघुषो[3] निमज्योन्मज्य पुनरब्रवीत् ।
उदप्लुतमिव दार्वहीनामरसं विषं वारुग्रम्[1] ॥ ४ ॥

अरम्ऽघुषः । निऽमज्य । उत्ऽमज्य । पुनः । अब्रवीत् ।
उदप्लुतम्ऽइव । दारु । अहीनाम् । अरसम् । विषम् । वाः[2] । उग्रम् ॥ ४ ॥

पैद्वो हन्ति कसर्णीलं[4] पैद्वः [5]श्वित्रमुतासितम् ।
पैद्वो रथर्व्याः शिरः सं बिभेद पृदाक्वाः[6] ॥ ५ ॥

पैद्वः । हन्ति । कसर्णीलम् । पैद्वः । श्वित्रम्[7] । उत । असितम् ।
पैद्वः । रथर्व्याः । शिरः । सम् । बिभेद । पृदाक्वाः[6] ॥ ५ ॥

पैद्व प्रेहि प्रथमोऽनु त्वा वयमेमसि ।
अहीन् व्यस्यतात् पथो येन स्मा वयमेमसि ॥ ६ ॥

पैद्व । प्र । इहि । प्रथमः । अनु । त्वा । वयम् । आ । ईमसि ।
अहीन् । वि । अस्यतात् । पथः । येन । स्म । वयम् । आऽईमसि ॥ ६ ॥

इदं पैद्वो अजायतेदमस्य परायणम् ।
इमान्यर्वतः पदाऽहिघ्न्यो[8] वाजिनीवतः ॥ ७ ॥

इदम् । पैद्वः । अजायत । इदम् । अस्य । पराऽअयनम् ।
इमानि । अर्वतः । पदा[9] । अहिऽघ्न्यः[10] । वाजिनीऽवतः ॥ ७ ॥

संयतं न वि ष्परद्[11] व्यात्तं न सं यमत् ।
अस्मिन् क्षेत्रे द्वावही स्त्री च पुमांश्च तावुभावरसा ॥ ८ ॥

---

१. वांरुग्रम् A.D.R,Cs,WM. RW ; वारिदुग्रम् पै १६,१५,४. २. वा: P,J,WM. ३. उदाङ्घको पै १६,१५,२. ४. कषर्ण्णालि पै १६,१५,५. ५. श्वित्र °A,B[a],K,K[m],R,V,Dc. ६. पै० १,३३०५ k ह. ७. श्वित्रम् J; चित्रम् Cp. ८. पदा अहि° R; °हिघ्न्यो A. ९. पदा P. १०. °घ्न्यः P,J; अहिऽघ्न्यः D[s],P[s]. ११. दावद् पै १६,९,१२.

समूऽर्यतम् । न । वि । स्परत् । विऽआत्तम् । न । सम् । यमत् ।
अस्मिन् । क्षेत्रे । द्वौ । अही इति । स्त्री । पुमान् । च । तौ । उभौ । अरसा ॥ ८ ॥

अरसास इहाहयो ये अन्ति[1] ये च दूरके ।
घनेन हन्मि वृश्चिकमहिं दण्डेनागतम् ॥ ९ ॥

अरसासः । इह । अहयः । ये । अन्ति[2] । ये । च । दूरके[3] ।
घनेन । हन्मि । वृश्चिकम् । अहिम् । दण्डेन । आऽगतम् ॥ ९ ॥

अघाश्वस्येदं भेषजमुभयोः स्वजस्य[4] च ।
इन्द्रो मेहिमघायन्तमहिं पैद्वो अरन्धयत् ॥ १० ॥

अघऽअश्वस्य । इदम् । भेषजम् । उभयोः । स्वजस्य । च ।
इन्द्रः । मे । अहिम् । अघऽयन्तम् । अहिम् । पैद्वः । अरन्धयत् ॥ १० ॥

पैद्वस्य मन्महे वयं स्थिरस्य स्थिरधाम्नः ।
इमे पश्चा[5] पृदाकवः प्रदीध्यत आसते ॥ ११ ॥

पैद्वस्य । मन्महे । वयम् । स्थिरस्य । स्थिरऽधाम्नः ।
इमे । पश्चा । पृदाकवः । प्रऽदीध्यतः । आसते ॥ ११ ॥

नष्टासवो नष्टविषा हता इन्द्रेण वज्रिणा ।
जघानेन्द्रो जघ्निमा[6] वयम् ॥ १२ ॥

नष्टऽअसवः । नष्टऽविषाः । हताः । इन्द्रेण । वज्रिणा ।
जघान । इन्द्रः । जघ्निम । वयम् ॥ १२ ॥

हतास्तिरश्चिराजयो निपिष्टासः पृदाकवः ।
दर्विं करिक्रतं श्वित्रं[7] दर्भेष्वसितं जहि ॥ १३ ॥

हताः । तिरश्चिऽराजयः । निऽपिष्टासः । पृदाकवः ।
दर्विम् । करिक्रतम् । श्वित्रम्[8] । दर्भेषु । असितम् । जहि ॥ १३ ॥

---

१. अन्ति > अंती B, अंति A $B^b$,D,K,$K^m$,R,Cs,WM. २. अंति P,J; अति $D^2$. ३. दुरके P. ४. वृश्चिकस्य पै १६, १५, १०. ५. पश्चात् पै १६,१६,१. ६. जघ्निमा R. ७. श्वित्रं A,B,K,$K^m$,V,Dc. ८. श्चित्रम् P,$P^2$,J.

कैरातिका कुमारिका सका खनति[1] भेषजम् ।
हिरण्ययीभिरभ्रिभिर्गिरीणामुप सानुषु ॥ १४ ॥

कैरातिका । कुमारिका । सका । खनति । भेषजम् ।
हिरण्ययीभिः । अभ्रिऽभिः । गिरीणाम् । उप । सानुषु ॥ १४ ॥

आयमगन् युवा भिषक् पृश्निहापराजितः ।
स वै स्वजस्य जम्भन[2] उभयोर्वृश्चिकस्य च ॥ १५ ॥

आ । अयम् । अगन् । युवा । भिषक् । पृश्निऽहा । अपराऽजितः ।
सः । वै । स्वजस्य । जम्भनः । उभयोः । वृश्चिकस्य । च ॥ १५ ॥

इन्द्रो [3]मेहिमरन्धयन्मित्रश्च वरुणश्च । वातापर्जन्योभा[4] ॥१६॥

इन्द्रः । मे । अहिम् । अरन्धयत् । मित्रः । च । वरुणः । च । वातापर्जन्या । उभा ॥१६॥

इन्द्रो [5]मेहिमरन्धयत् पृदाकुं च †पृदाकम्[5] ।
स्वजं[5] तिरश्चिराजिं कसर्णीलं दशोनसिम् ॥ १७ ॥

इन्द्रः । मे । अहिम् । अरन्धयत् । पृदाकुम् । च । पृदाकम् ।
स्वजम् । तिरश्चिऽराजिम् । कसर्णीलम् । दशोनसिम् ॥ १७ ॥

इन्द्रो जघान प्रथमं जनितारमहे तव ।
तेषामु[6] तृह्यमाणानां कः स्वित् तेषामसद् रसः ॥ १८ ॥

इन्द्रः । जघान । प्रथमम् । जनितारम् । अहे । तव ।
तेषाम् । ऊं इति । तृह्यमाणानाम् । कः । स्वित् । तेषाम् । असत् । रसः ॥ १८ ॥

सं हि शीर्षाण्यग्रभं पौञ्जिष्ठ[8] इव कर्वरम् ।
सिन्धोर्मध्यं परेत्य व्यनिजमहेर्विषम् ॥ १९ ॥

सम् । हि । शीर्षाणि । अग्रभम् । पौञ्जिष्ठःऽइव[9] । कर्वरम् ।
सिन्धोः । मध्यम् । पराऽइत्य । वि । अनिजम् । अहेः । विषम् ॥ १९ ॥

---

१. खनतु पै १६,१६,४. २. °नम् D. पै १६,१६,५ [मूको]. ३. मेऽहीनजम्भय° पै १६,१६,६. ४. † ह्. RW., W. WI; वैङ्. दां.ग. °न्योऽभा (पा. °न्यौ । उभा ।); °न्यो । भा D,K. ५. पैद्रो मेऽहीनजम्भयम् पृदाकुंश्च पृदाकवः पै १६,१६,७. † वेर १, २१०५ j ड. ६. हतास्? पै. ७. तेषां वः पै १६,१६,८. ८. पौञ्जिष्ट A.B[a],D,R,S[m], V,Dc. ९. पौञ्जिष्ठ.° P.

अहीनां सर्वेषां विषं परा वहन्तु सिन्धवः ।
हतास्तिरश्चिराजयो निपिष्टासः पृदाकवः ॥ २० ॥

अहीनाम् । सर्वेषाम् । विषम् । परा । वहन्तु । सिन्धवः ।
हताः । तिरश्चिऽराजयः । निऽपिष्टासः । पृदाकवः ॥ २० ॥

ओषधीनामहं वृण उर्वरीरिव साधुया ।
नयाम्यर्वतीरिवाहे निरैतु ते विषम् ॥ २१ ॥

ओषधीनाम् । अहम् । वृणे । उर्वरीःऽइव । साधुऽया ।
नयामि । अर्वतीःऽइव । अहे । निःऽऐतु । ते । विषम् ॥ २१ ॥

यदग्नौ सूर्ये विषं पृथिव्यामोषधीषु यत् ।
कान्दाविषं कनक्नकं निरैत्वैतु ते विषम् ॥ २२ ॥

यत् । अग्नौ । सूर्ये । विषम् । पृथिव्याम् । ओषधीषु । यत् ।
कान्दाऽविषम् । कनक्नकम् । निःऽऐतु । आ । एतु । ते । विषम् ॥ २२ ॥

ये अग्निजा ओषधिजा अहीनां ये अप्सुजा विद्युत आबभूवुः ।
येषां जातानि बहुधा महान्ति तेभ्यः सर्पेभ्यो नमसा विधेम ॥ २३ ॥

ये । अग्निऽजाः । ओषधिऽजाः । अहीनाम् । ये । अप्सुऽजाः । विऽद्युतः । आऽबभूवुः ।
येषाम् । जातानि । बहुऽधा । महान्ति । तेभ्यः । सर्पेभ्यः । नमसा । विधेम ॥ २३ ॥

तौदी नामासि कन्या घृताची नाम वा असि ।
अधस्पदेन ते पदमा ददे विषदूषणम् ॥ २४ ॥

तौदी । नाम । असि । कन्या । घृताची । नाम । वै । असि ।
अधःऽपदेन । ते । पदम् । आ । ददे । विषऽदूषणम् ॥ २४ ॥

अङ्गादङ्गात् प्र च्यावय हृदयं परि वर्जय ।

अधा[1] विषस्य यत् तेजोऽवाचीनं[2] तदेतु ते ॥ २५ ॥

अज्ञातऽअज्ञात् । प्र । च्यवय । हृदयम् । परि । वर्जय ।
अध[3] । विषस्य । यत् । तेजः । अवाचीनम् । तत् । एतु । ते ॥ २५ ॥

आरे अभूद् विषमरौद् विषे विषमप्रागपि[4] ।
अग्निर्विषमहेर्निरधात् सोमो निरणयीत् ।
दंष्टारमन्वगाद् विषमहिरमृत ॥ २६ ॥

आरे । अभूत् । विषम् । अरौत् । विषे । विषम् । अप्राक्[5] । अपि ।
अग्निः । विषम् । अहेः । निः । अधात् । सोमः । निः । अनयीत् ।
दंष्टारम् । अनु । अगात् । विषम् । अहिः । अमृत ॥ २६ ॥

इति द्वितीयेऽनुवाके द्वितीयं सूक्तम् ।

इति द्वितीयोऽनुवाकः ।

अभिचारकर्मैतत् । शत्रुनाशनसमर्थं बलम् उदके प्रवेश्य तदुदके वज्रत्वं कल्पयित्वा शत्रुम् अभिलक्ष्य तत् प्रक्षिपति । तद् एवम् । आदावपः संबोध्य यस्माद् यूयम् इन्द्रस्यौजो भवथ इन्द्रस्य सहआदि भवथ तस्माद् इन्द्रबलैर्युष्मान् युक्ताः करोमीत्याह । अनन्तरम् इन्द्रस्य भागः अर्थाद् अंशो भवथ सोमस्य भागः स्थ वरुणस्य भागः स्थ मित्रावरुणयोर्भागः स्थ यमस्य भागः स्थ पितॄणां सवितुश्च भागः स्थेत्याह । अनन्तरं योऽपां त्रैलोक्यस्थसकलजलानां भागः पूजनीयोऽशो युष्मासु अर्थात् पूर्वोक्तास्वप्सु भवति यश्च तादृश ऊर्मिः यश्च तादृशो वत्सः अर्थाद् अपां नपान्नाम वैद्युतोऽग्निः यश्च तादृशो वृषभः महाबलः कश्चित् पशुः यश्च अपां मध्य उदपद्यतेति वेदप्रसिद्धो हिरण्यगर्भ इति बलवान् आद्यो देवः यश्च अप्सु वर्तमानो नानावर्णाश्मप्रतीको मेघः ये च अपां मध्ये वर्तमाना अग्नयस्तान् सर्वान् प्रत्येकं शत्रुं प्रति क्षिपामि तं शत्रुम् अहं हन्यां तम् अनेन मन्त्रेण अनेन कर्मणा अनेन उदवज्रेण विदारयाणीत्याह । अनन्तरं स्वकृतात् त्रैहायणाद् अनृतवचनपापाद् रक्षणं याचते । अनन्तरं शत्रोरुपरि उदवज्रं प्रक्षेप्तुं प्रक्रामति यश्च प्रकामति स्वक्रमं संबोध्य तम् आह त्वं विष्णोः क्रमोसि अर्थाद् येन

---

१. अधा K.  २. तेजो अवा° पै १६,१७,३.  ३. अध K.  ४. विषमप्रागपि > विषमप्रागपि Dc; विषमप्रागपि A,B,B[b],D,K,K[m],R,S[m],V,Cs. P[a],Cp.  ५. अप्राक्

क्रमेण विष्णुस्त्रीन् लोकान् आक्रमत तादृशो बलवान् असि स्वयं पृथ्व्या च तीक्ष्णीकृतं शस्त्रम् असि तेन त्वया शत्रुं पृथिव्याः सकाशान्निर्णोदयामीति। तथैव त्वम् अन्तरिक्षतीक्ष्णीकृतोऽसि द्यौसंशितोऽसि दिक्संशितोऽसि आशासंशितोऽसि ऋक्संशितोऽसि यज्ञसंशितोऽसि ओषधीसंशितोऽसि अप्संशितोऽसि कृपिसंशितोऽसि प्राणसंशितोऽसि तस्मात् तत्तदभिमानिप्रदेशात् तं शत्रुं निर्णोदयानीति। एतदुक्त्वा जितमस्माभिर्जिताः शत्रुसेना इत्याह । अनन्तरं दक्षिणां दिशं सरति किंचित्सृत्वा ताम् अभिमुखो भवतीत्यर्थः । तथैव इतरदिशश्च सप्तर्षिनाम नक्षत्रं ब्राह्मणांश्च अभिमुखो भवति प्रत्येकं च तेभ्यः सकाशाद् द्रविणं याचते । यं च शत्रुम् अन्विष्यामि तं हनानि इयं समित् तं हेतिर्भूत्वा भक्षतु इत्याह। अनन्तरं भुवस्पतिमग्निं याचते तथैव अग्निं वर्चः प्रजाम् आयुश्च याचते । अग्निं च यातुधानभेदनं याचते । अन्ते च पूर्वोक्तानि यान्युदकानि तान्येव चतुर्भृष्टिं वज्रं कल्पयित्वा शत्रुशिरश्छेदाय प्रक्षिपति स च शत्रोरङ्गानि भिनत्तु देवाश्च तत् सर्वं मेऽनुजानन्त्वित्याशास्ते।

सांप्रदायिकास्तु वक्ष्यमाणप्रकारेण तस्मिन्नेव कर्मणि विनियुञ्जते सूक्तम्।

अभिचारकर्मणि उदवज्राणां विधानम् उच्यते— 'इन्द्रस्यौजः' इति सूक्तस्य आद्यानां षण्णाम् ऋचाम् पूर्वार्धर्चैः कांस्यघटं प्रक्षालयति। 'जिष्णवे योगाय' इति उत्तरार्धर्चैः षड्भिः कांस्यघटम् उदकसमीपे निदधाति । 'इदमहं यो मा प्राच्या दिशः' इत्यष्टर्चेन कल्पजेन सूक्तेन उदकमध्ये निदधाति घटम् । 'इदमहम्' इति सूक्तेन उदकमध्ये घटस्य मुखं करोति। 'इदमहं यो मा प्राच्या दिशः' इति सूक्तेन घटम् उदकपूर्णं कृत्वा अपक्रामति। 'इदमहम्' इति सूक्तेन उदकपूर्णं घटं मण्डपे स्थापयति । एतद् अभिचारे उदकाहरणम् । तदनन्तरं वज्रप्रहरणविधिः— 'इन्द्रस्यौजः' इति सर्वं कृत्वा 'इदमहम्' इति स्थापनान्तं कृत्वा 'अग्नेर्भागः' ( ७-१४ ) इत्याद्यष्टाभिर्ऋग्भिः आनीतोदकस्य द्विधाकरणम्। अर्धं घटे कृत्वा अर्धं भाजने करोति। तद्भाजनम् अग्नौ तापयति। घटम् अन्यस्मै पुरुषाय प्रदापयति । 'अग्नेर्भागः' इत्याद्योऽष्टौ तापने मन्त्राः । ततो बहिर्दक्षिणामुख उपविश्य भाजनम् अग्रे कृत्वा 'वातस्य रंहितस्य' इति सौत्रमन्त्रेण उदकं संगृह्य 'शमभये' इति कल्पजेन सूक्तेन सर्वेभ्यो भूतेभ्योऽभयं दद्यात् । 'यो व आपोऽपाम्' ( १५ ) इत्यृचा वज्रप्रक्षेपः। पुनरपि 'वातस्य रंहितस्य' इत्यादि कृत्वा 'यो व आपोऽपामूर्मिः' ( १६ ) इति ऋचा वज्रप्रक्षेपः । एवम् उत्तराभिर्ऋग्भिः ( १७-२१ ) वज्रप्रक्षेपः। 'एनानधरान् दराव:' इति कल्पजया ऋचा भाजनस्थम् उदकं भूमौ निनयति। एवमेव 'यं वयम्' ( ४२ ) इति सूक्तेन अन्वृचम् 'अपामस्मै वज्रम्' ( ५० ) इति ऋचा च वज्रक्षेपः । 'विष्णोः क्रमोऽसि' ( २५-३६ ) इति द्वादशाभिर्विष्णुक्रमान् क्रमते

**शत्रोरभिमुखम् । तद् उक्तं कौशिकेन—**" 'इन्द्रस्यौजः' इति प्रक्षालयति । 'जिष्णवे योगाय' इत्यपो युनक्ति । 'वातस्य रंहितस्यामृतस्य योनिः' इति प्रतिगृह्णाति । उत्तमाः प्रताप्याधराः प्रदाय 'एनमेनानधरान्[1] 'पराचोऽवाग्वस्तपसस्तमूनयत' देवाः पितृभिः संविदानः प्रजापतिः प्रथमो देवतानाम्' इत्यतिसृजति । 'इदम् अहं यो मा प्राच्या दिशोऽघायुरभिदासादपवादीदिपुगृहः[2] । तस्येमौ प्राणापानावपक्रामामि ब्रह्मणा । दक्षिणायाः प्रतीच्या उदीच्या ध्रुवाया व्यध्वाया ऊर्ध्वायाः । इदम् अहं यो मा दिशाम् अन्तर्देशेभ्यः' इत्यपक्रामामीति । एवम् [3]अभिष्ठानापोहननिवेष्टनानि[3] । सर्वाणि खलु शश्वद् भूतानि ब्राह्मणाद् वज्रम् उद्यच्छमानाच्छङ्कन्ते मां हनिष्यसि मां हनिष्यसीति । तेभ्योऽभयं वदेत् 'शम् अग्नये शं पृथिव्यै शम् अन्तरिक्षाय शं वायवे शं दिवे शं सूर्याय शं चन्द्राय शं नक्षत्रेभ्यः शं गन्धर्वाप्सरोभ्यः शं सर्वेतर-जनेभ्यः शिवं मह्यम्' इति । 'यो व आपोऽपां यं वयमपामस्मै वज्रम्' इत्यन्वृचमुदवज्रान् । 'विष्णोः क्रमोऽसि' इति विष्णुक्रमान्" ( कौसू ४९,३–१४ ) **इति ।**

'यदर्वाचीनम्' ( २३ ) **इति ऋचा आचामयति अनृतभाषणसंजातपापापनोदनकामम् ।**

'समुद्रं वः प्र हिणोमि' ( २२ ) **इति ऋचा पत्न्यञ्जलावुदपात्रं निनयति सर्वेषु तन्त्रेषु ।** "'बर्हिषि पत्न्यञ्जलौ[4] निनयति 'समुद्रं वः प्र हिणोमि' इति" (कौसू ६,१७) **इति सूत्रात् ।**

'सूर्यस्यावृतम्' **इति पञ्चभिः ( ३७–४१ ) प्रदक्षिणम् आवर्तते सर्वेषु ।** " 'सूर्यस्यावृतम्' इत्यभिदक्षिणमावर्तते' ( कौसू ६,१५ ) **इति सूत्रात् ।**

**इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं स्थेन्द्रस्य वीर्यं[5] स्थेन्द्रस्य नृम्णं स्थ । जिष्णवे योगाय ब्रह्मयोगैर्वो[6] युनज्मि ॥ १ ॥**

इन्द्रस्य । ओजः । स्थ । इन्द्रस्य । सहः । स्थ । इन्द्रस्य । बलम् । स्थ । इन्द्रस्य । वीर्यम् । स्थ । इन्द्रस्य । नृम्णम् । स्थ । जिष्णवे । योगाय । ब्रह्मऽयोगैः । वः । युनज्मि ॥ १ ॥

**इन्द्रस्यौज० । जिष्णवे योगाय क्षत्रयोगैर्वो युनज्मि ॥ २ ॥**

इन्द्रस्य । ओजः । ०। जिष्णवे । योगाय । क्षत्रऽयोगैः । वः । युनज्मि ॥ २ ॥

**इन्द्रस्यौज० । जिष्णवे योगायेन्द्रयोगैर्वो[7] युनज्मि ॥ ३ ॥**

इन्द्रस्य । ओजः । ०। जिष्णवे । योगाय । इन्द्रऽयोगैः । वः । युनज्मि ॥ ३ ॥

**इन्द्रस्यौज० । जिष्णवे योगाय सोमयोगैर्वो[8] युनज्मि ॥ ४ ॥**

---

१. °वाचस्तपसस्तमुन्नयत Bl.; वाचस्तमस° Bc. २. °दिगुगुदः Bl. ३. अभिष्ट्वा । मार्गे° Bl ४. पत्न्या° Bl. ५. वीर्यं एवमुत्तरत्रापि B. ६. इन्द्रयो° पै १९,१२७,१. ७. 'याम्ययोगै° पै १९,१२७,३. ८. महायो° पै १९,१२७,४.

इन्द्रस्य । ओजः ।०। जिष्णवे । योगाय । सोमऽयोगैः । वः । युनज्मि ॥ ४॥

इन्द्रस्यौज० । जिष्णवे योगायाप्सुयोगैर्वो युनज्मि ॥ ५ ॥

इन्द्रस्य । ओजः । ०। जिष्णवे । योगाय । अप्सुऽयोगैः । वः । युनज्मि ॥ ५ ॥

इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं स्थेन्द्रस्य वीर्य१ स्थेन्द्रस्य नृम्णं स्थ ।
जिष्णवे योगाय विश्वानि मा भूतान्युप तिष्ठन्तु युक्ता मे आप स्थ ॥ ६ ॥

इन्द्रस्य । ओजः । स्थ । इन्द्रस्य । सहः । स्थ । इन्द्रस्य । बलम् । स्थ । इन्द्रस्य । वीर्यम् । स्थ । इन्द्रस्य । नृम्णम् । स्थ । जिष्णवे । योगाय । विश्वानि । मा । भूतानि । उप । तिष्ठन्तु । युक्ताः । मे । आपः । स्थ ॥ ६ ॥

अग्नेर्भाग स्थ । अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्नाऽस्मै लोकाय सादये ॥ ७ ॥

अग्नेः । भागः । स्थ । अपाम् । शुक्रम् । आपः । देवीः । वर्चः । अस्मासु । धत्त । प्रजाऽपतेः । वः । धाम्ना । अस्मै । लोकाय । सादये ॥ ७ ॥

इन्द्रस्य भाग स्थ । ० । ० ॥ ८ ॥

इन्द्रस्य । भागः । ० ॥ ८ ॥

सोमस्य भाग स्थ । ० । ० । ॥ ९ ॥

सोमस्य । भागः । ० ॥ ९ ॥

वरुणस्य भाग स्थ ।०।० ॥ १० ॥

वरुणस्य । भागः ।० ॥ १० ॥

मित्रावरुणयोर्भाग स्थ ।०।० ॥ ११ ॥

मित्रावरुणयोः । भागः ।० ॥ ११ ॥

यमस्य भाग स्थ० ।०।० ॥ १२ ॥

---

१. 'धाम्ना मो' पै १६,१२७,५.

यमस्य । भागः ।० ॥ १२ ॥

**पितॄणां भाग स्थ ।०।० ॥ १३ ॥**

पितॄणाम् । भागः ।० ॥ १३ ॥

**देवस्य सवितुर्भाग स्थ । अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त ।**
**प्रजापतेर्वो धाम्नाऽस्मै लोकाय सादये ॥ १४ ॥**

देवस्य । सवितुः । भागः । स्थ । अपाम् । शुक्रम् । आपः । देवीः । वर्चः । अस्मासु । धत्त । प्रजाऽपतेः । वः । धाम्ना । अस्मै । लोकाय । सादये ॥ १४ ॥

**यो व आपोऽपां [1]भागो३प्स्व१न्तर्यजुष्यो॑ देवयजनः ।**
**इदं तमति सृजामि तं माभ्यवनिक्षि[2] ।**
**तेन तमभ्यतिसृजामो[3] यो३स्मान्[4] द्वेष्टि यं वयं द्विष्मः ।**
**तं वधेयं तं स्तृषीयानेन ब्रह्मणाऽनेन कर्मणाऽनया मेन्या ॥ १५ ॥**

यः । वः । आपः । अपाम् । भागः । अप्ऽसु । अन्तः । यजुष्यः । देवऽयजनः । इदम् । तम् । अति । सृजामि । तम् । मा[5] । अभिऽअवनिक्षि । तेन । तम् । अभिऽअतिसृजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः । तम् । वधेयम् । तम् । स्तृषीय । अनेन । ब्रह्मणा । अनेन । कर्मणा । अनया । मेन्या ॥ १५ ॥

**यो व आपोऽपामूर्मिरप्स्व१० ।०।०।० ॥ १६ ॥**

यः । वः । आपः । अपाम् । ऊर्मिः । अप्ऽसु ।० ॥ १६ ॥

**यो व आपोऽपां [6]वत्सो३प्स्व१० ।०।०।० ॥ १७ ॥**

यः । वः । आपः । अपाम् । वत्सः । अप्ऽसु ।० ॥ १७ ॥

**यो व आपोऽपां [7]वृषभो३प्स्व१०।०।०।० ॥ १८ ॥**

यः । वः । आपः । अपाम् । वृषभः । अप्ऽसु ।० ॥ १८ ॥

---

१. भागो१प्स्व॰ K,Km. २. माभ्यव॰ B. ३. तमस्यासृजामि एतदुत्तरत्रापि वै १६,१२१,१. ४. यो३स्मा॰ K,Km,V. ५. मा P. ६. वत्सो१ Bb,K,Km,V,Cs. ७. वृषभो१ Bb,K,Km,Sm.

यो व आपोऽपां 'हिरण्यगर्भो३प्स्वं१० ।०।०।० ॥ १९ ॥

यः । वः । आपः । अपाम् । हिरण्यऽगर्भः । अप्ऽसु ।० ॥ १९ ॥

यो व आपोऽपामश्मा पृश्निर्दिव्यो३प्स्वं१ ०।०।०।० ॥ २० ॥

यः । वः । आपः । अपाम् । अश्मा । पृश्निः । दिव्यः । अप्ऽसु । अन्तः । यजुष्याः । देवऽयजनः ।
इदम् । तम् । अति । सृजामि । तम् । मा । ।० ॥ तेन । तम् ।० ॥ २० ॥

ये व आपोऽपामग्नयोऽप्स्वं१न्तर्यजुष्या३ देवयजनाः ।
इदं 'तानति सृजामि' तान् माऽभ्यवनिक्षि ।
तैस्तमभ्यतिसृजामो 'यो३स्मान् द्वेष्टि यं वयं द्विष्मः ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणाऽनेन कर्मणाऽनया मेन्या ॥ २१ ॥

ये । वः । आपः । अपाम् । अग्नयः । अप्ऽसु । अन्तः । यजुष्याः । देवऽयजनाः ।
इदम् । तान् । अति । सृजामि । तान् । मा । अभिऽअवनिक्षि ।
तैः । तम् । अभिऽअतिसृजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः ।
तम् । वधेयम् । तम् । स्तृषीय । अनेन । ब्रह्मणा । अनेन । कर्मणा । अनया । मेन्या ॥२१॥

यदर्वाचीनं त्रैहायणादनृतं' किं चोदिम ।
आपो मा तस्मात् 'सर्वस्माद् दुरितात् †पान्त्वंहसः' ।

यत् । अर्वाचीनम् । त्रैहायनात् । अनृतम् । किम् । च । ऊदिम ।
आपः । मा । तस्मात् । सर्वस्मात् । दुःऽइतात् । पान्तु । अंहसः ॥ २२ ॥

समुद्रं 'वः प्र हिणोमि' स्वां योनिमपीतन' ।
अरिष्टाः सर्वहायसो मा च नः किं चनाममत् ॥ २३ ॥

समुद्रम् । वः । प्र । हिणोमि । स्वाम् । योनिम् । अपि । इतन ।
अरिष्टाः । सर्वऽहायसः । मा । च । नः । किम् । चन । आममत् ॥ २३ ॥

---

१. °गर्भो१° K.Km,V.   २. मा P.   ३. तमस्याप्सृजामि पै १६,१२९,९.   ४. योऽ१स्मा° K.Km,V.   ५. ऐकहायनात्° पै १६,१३०,१.   ६. एनसो दुरितात् पान्तु विश्वतः पै.   ७. यो अपसृजामि पै १६,१३०,२.   † पान्त्वंहसः B.D.Km,R,Cp.   ८. °मपि गच्छत आश्रौ ३,११,६ आश्रौ १२,१८,१। °मभिगच्छत शांश्री ४,११,६ माश्रौ २,१,७ मागृ २,११,१८ वागृ १,२,१४.

अरिप्रा आपो अप रिप्रमस्मत् ।
प्रास्मदेनो दुरितं सुप्रतीकाः प्र दुष्वप्न्यं प्र मलं वहन्तु ॥ २४ ॥

अरिप्राः । आपः । अप । रिप्रम् । अस्मत् । प्र । अस्मत् । एनः ।
दुःऽइतम् । सुऽप्रतीकाः । प्र । दुःऽस्वप्न्यम् । प्र । मलम् । वहन्तु ॥ २४ ॥

विष्णोः क्रमोऽसि सपत्नहा पृथिवीसंशितोऽग्नितेजाः ।
पृथिवीमनु वि क्रमेऽहं पृथिव्यास्तं निर्भजामो [1]योऽस्मान् द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत् तं प्राणो जहातु ॥ २५ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । पृथिवीऽसंशितः । अग्निऽतेजाः ।
पृथिवीम् । अनु । वि । क्रमे । अहम् । पृथिव्याः । तम् । निः । भजामः । यः । अस्मान् ।
द्वेष्टि । यम् । वयम् । द्विष्मः । सः । मा । जीवीत् । तम् । प्राणः । जहातु ॥ २५ ॥

विष्णोः क्रमोऽसि सपत्नहाऽन्तरिक्षसंशितो वायुतेजाः ।
अन्तरिक्षमनु वि क्रमेऽहमन्तरिक्षात् तं निर्भजामो ०।० ॥ २६ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । अन्तरिक्षऽसंशितः । वायुऽतेजाः ।
अन्तरिक्षम् । अनु । वि । क्रमे । अहम् । अन्तरिक्षात् । तम् ।० ॥ २६ ॥

विष्णोः क्रमोऽसि सपत्नहा द्यौसंशितः[2] सूर्यतेजाः ।
दिवमनु वि क्रमेऽहं दिवस्तं ०।० ॥ २७ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । द्यौऽसंशितः । सूर्यऽतेजाः ।
दिवम् । अनु । वि । क्रमे । अहम् । दिवः । तम् ।० ॥ २७ ॥

विष्णोः क्रमोऽसि सपत्नहा दिक्संशितो मनस्तेजाः[3] ।
दिशोऽनु[4] वि क्रमेऽहं दिग्भ्यस्तं ०।० ॥ २८ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । दिक्ऽसंशितः । मनःऽतेजाः ।
दिशः । अनु । वि । क्रमे । अहम् । दिक्ऽभ्यः । तम् ।० ॥ २८ ॥

---

१. योऽस्मा॰ K,Km,V. २. द्यौःसं॰ R¹, वै १६,१२१,२ [मूको.]. ३. वायुतेजाः वै १६,१२१,४. ४. द्विशो॰ R.

विष्णोः क्रमोऽसि सपत्नहाशासंशितो वाततेजाः[1] ।
आशा अनु वि क्रमेऽहमाशाभ्यस्तं ०।० ॥ २९ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । आशाऽसंशितः । वातऽतेजाः ।
आशाः । अनु । वि । क्रमे । अहम् । आशाभ्यः । तम् ।० ॥ २९ ॥

विष्णोः क्रमोऽसि सपत्नह[2] ऋक्संशितः सामतेजाः ।
ऋचोऽनु वि क्रमेऽहमृग्भ्यस्तं ०।० ॥ ३० ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । ऋक्ऽसंशितः । सामऽतेजाः ।
ऋचः । अनु । वि । क्रमे । अहम् । ऋक्ऽभ्यः । तम् ।० ॥ ३० ॥

विष्णोः क्रमोऽसि सपत्नहा यज्ञसंशितो ब्रह्मतेजाः ।
यज्ञमनु वि क्रमेऽहं यज्ञात् तं ०।० ॥ ३१ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । यज्ञऽसंशितः । ब्रह्मऽतेजाः ।
यज्ञम् । अनु । वि । क्रमे । अहम् । यज्ञात् । तम् ।० ॥ ३१ ॥

विष्णोः क्रमोऽसि सपत्नहौषधीसंशितः सोमतेजाः ।
ओषधीरनु वि क्रमेऽहमोषधीभ्यस्तं ०।० ॥ ३२ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । ओषधीऽसंशितः । सोमऽतेजाः ।
ओषधीः । अनु । वि । क्रमे । अहम् । ओषधीभ्यः । तम् ।० ॥ ३२ ॥

विष्णोः क्रमोऽसि सपत्नहाऽप्सुसंशितो वरुणतेजाः ।
अपोऽनु वि क्रमेऽहमद्भ्यस्तं ०।० ॥ ३३ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । अप्सुऽसंशितः । वरुणऽतेजाः ।
अपः[3] । अनु । वि । क्रमे । अहम् । अत्ऽभ्यः । तम् ।० ॥ ३३ ॥

विष्णोः क्रमोऽसि सपत्नहा कृषिसंशितोऽन्नतेजाः[4] ।
कृषिमनु वि क्रमेऽहं कृष्यास्तं[5] ०।० ॥ ३४ ॥

---

१. वरुणतेजाः पै १६,१२१,५. २. सपत्नहा B.K.Km,R.V.Dc.E1.R1.K1, पै १६,१२१,६ [मूको.]. ३. अपः J; अर्पः P. ४. °शितः पुरुतेजाः पै १६,१२१,९. ५. कृष्यास्तं K.V.

विष्णोः । क्रमः । असि । सपत्नऽहा । कृषिऽसंशितः । अन्नऽतेजाः ।
कृषिम् । अनु । वि । क्रमे । अहम् । कृष्याः[1] । तम् । ० ॥३४॥

विष्णोः क्रमोऽसि सपत्नहा [2]प्राणसंशितः पुरुषतेजाः[2] ।
प्राणमनु वि क्रमेऽहं प्राणात् तं निर्भजामो योऽस्मान् द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत् तं प्राणो जहातु ॥ ३५ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । प्राणऽसंशितः । पुरुषऽतेजाः । प्राणम् । अनु । वि । क्रमे ।
अहम् । प्राणात् । तम् । निः । भजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः ।
सः । मा । जीवीत् । तम् । प्राणः । जहातु ॥ ३५ ॥

जितमस्माकमुद्भिन्नमस्माकमभ्यष्ठां[3] विश्वाः पृतना अरातीः ।
इदमहमामुष्यायणस्यामुष्याः पुत्रस्य वर्चस्तेजः प्राणमायुर्नि वेष्टयामी-
दमेनमधराञ्चं पादयामि ॥ ३६ ॥

जितम् । अस्माकम् । उत्ऽभिन्नम् । अस्माकम् । अभि । अस्थाम् । विश्वाः । पृतनाः ।
अरातीः । इदम् । अहम् । आमुष्यायणस्य । अमुष्याः । पुत्रस्य । वर्चः । तेजः । प्राणम् ।
आयुः । नि । वेष्टयामि । इदम् । एनम् । अधराञ्चम् । पादयामि ॥ ३६ ॥

सूर्यस्यावृतमन्वावर्ते दक्षिणामन्वावृतम् ।
सा मे द्रविणं यच्छतु सा मे ब्राह्मणवर्चसम् ॥ ३७ ॥

सूर्यस्य । आऽवृतम् । अनुऽआवर्ते । दक्षिणाम् । अनु । आऽवृतम् ।
सा । मे । द्रविणम् । यच्छतु । सा । मे । ब्राह्मणऽवर्चसम् ॥ ३७ ॥

दिशो ज्योतिष्मतीरभ्यावर्ते[4] ।
ता मे द्रविणं यच्छन्तु ता मे ब्राह्मणवर्चसम् ॥ ३८ ॥

दिशः । ज्योतिष्मतीः । अभिऽआवर्ते ।
ताः । मे । द्रविणम् । यच्छन्तु । ताः । मे । ब्राह्मणऽवर्चसम् ॥ ३८ ॥

---

१. कृष्यात् V. २. °शितो ब्रह्मतेजाः पै १६,१११,१०. ३. °कमुम्य° A,R; °म्यष्ठां B,B². ४. °रभिपर्यावर्ते एवमुत्तरत्र पै १६,११२,१.

'सप्तऋषीनभ्यावर्ते ।
ते मे द्रविणं यच्छन्तु ते मे ब्राह्मणवर्चसम् ॥ ३९ ॥

सप्तऽऋषीन् । अभिऽआवर्ते ।
ते । मे । द्रविणम् । यच्छन्तु । ते । मे । ब्राह्मणऽवर्चसम् ॥ ३९ ॥

ब्रह्माभ्यावर्ते ।
तन्मे द्रविणं यच्छतु तन्मे ब्राह्मणवर्चसम् ॥ ४० ॥

ब्रह्म । अभिऽआवर्ते ।
तत् । मे । द्रविणम् । यच्छतु । तत् । मे । ब्राह्मणऽवर्चसम् ॥ ४० ॥

ब्राह्मणाँ[2] अभ्यावर्ते ।
ते मे द्रविणं यच्छन्तु ते मे ब्राह्मणवर्चसम् ॥ ४१ ॥

ब्राह्मणान् । अभिऽआवर्ते । ते । मे । द्रविणम् । यच्छन्तु । ते । मे । ब्राह्मणऽवर्चसम् ॥४१॥

यं वयं मृगयामहे तं वधैः स्तृणवामहै ।
व्यात्ते परमेष्ठिनो ब्रह्मणापीपदाम तम् ॥ ४२ ॥

यम् । वयम् । मृगयामहे । तम् । वधैः । स्तृणवामहै ।
विऽआत्ते । परमेऽस्थिनः । ब्रह्मणा । आ । अपीपदाम । तम् ॥ ४२ ॥

वैश्वानरस्य दंष्ट्राभ्यां हेतिस्तं समधादभि ।
इयं तं प्सात्वाहुतिः समिद् देवी सहीयसी ॥ ४३ ॥

वैश्वानरस्य । दंष्ट्राभ्याम् । हेतिः । तम् । सम् । अधात् । अभि ।
इयम् । तम् । प्सातु । आऽहुतिः । समऽइत् । देवी । सहीयसी ॥ ४३ ॥

राज्ञो वरुणस्य बन्धोऽसि ।
'सो३मुमामुष्यायणममुष्याः पुत्रमन्ने प्राणे बधान ॥ ४४ ॥

राज्ञः । वरुणस्य । बन्धः । असि ।
सः । अमुम् । आमुष्यायणम्[४] । अमुष्याः । पुत्रम् । अन्ने । प्राणे । बधान ॥ ४४ ॥

---

१. सप्तर्षी° D,S^m Cs. २ °णाँ A.D.R. ३. सो३ K,K^m,V. ४. इत आरभ्य १०,६,६ इत्यत्र 'बृहस्पतिः' इति यावत् स्वरान् नाङ्कयति P.

यत् ते अन्नं भुवस्पत[1] आक्षियति[2] पृथिवीमनु ।
तस्य नस्त्वं भुवस्पते संप्रयच्छ प्रजापते ॥ ४५ ॥

यत् । ते । अन्नम् । भुवः । पते । आऽक्षियति । पृथिवीम् । अनु ।
तस्य । नः । त्वम् । भुवः । पते । सम्ऽप्रयच्छ । प्रजाऽपते ॥ ४५ ॥

अपो[3] [4]दिव्या अचायिषं[4] रसेन समपृक्ष्महि[5] ।
पयस्वानग्न आगमं[6] तं मा सं सृज वर्चसा ॥ ४६ ॥

अपः । दिव्याः । अचायिषम् । रसेन । सम् । अपृक्ष्महि ।
पयस्वान् । अग्ने । आ । अगमम् । तम् । मा । सम् । सृज । वर्चसा ॥ ४६ ॥

सं माऽग्ने वर्चसा सृज सं प्रजया समायुषा ।
विद्युर्मे अस्य[7] देवा इन्द्रो विद्यात् [8]सह ऋषिभिः[8] ॥ ४७ ॥

सम् । मा । अग्ने । वर्चसा । सृज । सम् । प्रऽजया । सम् । आयुषा ।
विद्युः । मे । अस्य । देवाः । इन्द्रः । विद्यात् । सह । ऋषिऽभिः ॥ ४७ ॥

यदग्ने अद्य मिथुना शपातो यद्वाचस्तृष्टं जनयन्त रेभाः ।
मन्योर्मनसः शरव्या३ जायते या तया विध्य हृदये यातुधानान् ॥४८॥

यत् । अग्ने । अद्य । मिथुना । शपातः । यत् । वाचः । तृष्टम् । जनयन्त । रेभाः ।
मन्योः । मनसः । शरव्या । जायते । या । तया । विध्य । हृदये । यातुऽधानान् ॥ ४८ ॥

परा शृणीहि तपसा यातुधानान् पराऽग्ने रक्षो हरसा शृणीहि ।
पराऽर्चिषा [9]मूरदेवां छृणीहि[9] पराऽसुतृपः [10]शोशुचतः शृणीहि[10] ॥४९॥

परा । शृणीहि । तपसा । यातुऽधानान् । परा । अग्ने । रक्षः । हरसा । शृणीहि ।
परा । अर्चिषा । मूरऽदेवान् । शृणीहि । परा । असुऽतृपः । शोशुचतः । शृणीहि ॥ ४९ ॥

---

१. भुवनस्प° K. २. आक्षियति K,Km; °मं° > °म° B. ३. आपो अद्य ऋ १,२३,२३; पै १,११,१. ४. अन्वचारिषं ऋ. मा २०,२२; मै १,३,३९; काठ ४,१३; कपी ४,१२,१३; अद्यान्वचारिषं तैब्रा.; अन्वचारिषं पै १,८,४५,१. ५. समगस्महि ऋ.; समगस्महि मा.; समगन्महि काठ ४,१३; आश्री. ६. आगहि ऋ. ७. अस्य ऋ १,२३,२४. ८. पर्षि° पै १,११,२. ९. 'देवान् कृ' ऋ ८,३,११; 'देवान्यू' ऋ १०,८७,१४; 'देवान् म' पै १६,७,१. १०. अर्चिषा शोशुचानः ऋ.

अपामस्मै वज्रं प्र हरामि चतुर्भृष्टिं शीर्षभिद्याय विद्वान् ।
सो अस्याङ्गानि[1] प्र शृणातु सर्वा तन्मे देवा अनु जानन्तु विश्वे ॥ ५० ॥

अपाम् । अस्मै । वज्रम् । प्र । हरामि । चतुःऽभृष्टिम् । शीर्षऽभिद्याय । विद्वान् ।
सः । अस्य । अङ्गानि । प्र । शृणातु । सर्वा । तत् । मे । देवाः । अनु । जानन्तु । विश्वे ॥५०॥

इति तृतीयेऽनुवाके प्रथमं सूक्तम् ।

खदिरकाष्ठफालविकारं मणिं शत्रुनाशाय सर्वकामाप्तये च बध्नाति सूक्तेनानेन । सांप्रदायिका हि वक्ष्यमाणप्रकारेण विनियुञ्जते ।

सर्वकामसिद्ध्यर्थं खदिरफालमणिं त्रिवासितं कृत्वा हिरण्यवेष्टितं कृत्वा 'एतमिध्मम्' (३५) इत्यृचा इध्मम् उपसमाधाय 'तमिमं देवताः' (२९) इति वासितम् उल्लुप्य आसाद्य 'अरातीयोः' इत्यर्थसूक्तेन संपात्याभिमन्त्र्य 'ब्रह्मणा तेजसा' (३०) इति ऋचा बध्नाति । यस्मात् सर्वे कामाः संपद्यन्तेऽनेन मणिना तस्माद् अयं मणिः सर्वकामः । तथा च सूत्रम्— " 'आयमगन्' (अ ३,५), 'अयं प्रतिसरः' (अ ८,५), 'अयं मे वरणः' (अ १०,३), 'अरातीयोः' इति मन्त्रोक्तान् वासितान् बध्नाति । उत्तमस्य चतुरो जातरूपशकलेनानुसूत्रं गमयित्वाऽवभुज्य त्रैधं पर्यस्यति । 'एतमिध्मम्' इत्युपसमाधाय 'तमिमं देवताः' इति वासितमुल्लुप्य 'ब्रह्मणा तेजसा' इति बध्नाति" (कौसू १९,२२–२५) इति । "मन्त्रोक्तान् मन्त्रोक्तद्रव्यविकारान् । वासितान् त्रयो-दश्यादयस्तिस्रो यास्तिथयस्तासु विधिवद् दधिमधुनि वासितान् । बन्धनस्थानं च मन्त्रस्थम् । उत्तमस्य 'अरातीयोः' इति सूक्तस्य । अवभुज्य कुटिलो कृत्वा । त्रैधं पर्यस्यति त्रिरावेष्टयति । पार्श्वे सर्वतो वेष्टनम् आयसेन । शिरसि बन्धनकरणम् अधिरोहत्विति लिङ्गात्" इत्यादि दारिलः ।

तथा पशौ वृश्च्यमानयूपानुमन्त्रणे इदं सूक्तं विनियुक्तम् । तद् उक्तं वैताने— " 'अरातीयोः' इति यूपं वृश्च्यमानमनुमन्त्रयते" (वैताश्री १०,२) इति ।

तथा 'पार्थिवीं भूमिकामस्य' (शांक १७,५) इति विहितायां पार्थिव्यां महा-शान्तौ खदिरफालमणिबन्धनेऽपि एतत् सूक्तं विनियुज्यते । तद् उक्तं शान्तिकल्पे— " 'अरातीयोः' इति फालं पार्थिव्याम्" (शांक १९,८) इति ।

अरातीयोर्भ्रातृव्यस्य दुर्हार्दो द्विषतः शिरः ।
अपि वृश्चाम्योजसा ॥ १ ॥

---

1. ऽस्य पर्वाणि पै १६,११२,११.

अ॒रा॒ति॒ऽयोः । भ्रातृ॑व्यस्य । दुः॒ऽहार्दः॑ । द्वि॒ष॒तः । शिरः॑ ।
अपि॑ । वृ॒श्चा॒मि॒ । ओज॑सा ॥ १ ॥

वर्म॒ मह्य॑म॒यं म॒णिः फा॒लाज्जा॒तः क॑रिष्यति ।
पू॒र्णो[1] म॒न्थेन॒[2] माग॑मद् रसे॑न स॒ह वर्च॑सा ॥ २ ॥

वर्म॑ । मह्य॑म् । अ॒यम् । म॒णिः । फा॒लात्[3] । जा॒तः । क॒रि॒ष्य॒ति॒ ।
पू॒र्णः । म॒न्थेन॑ । मा॒ । आ । अ॒ग॒म॒त् । रसे॑न । स॒ह । वर्च॑सा ॥ २ ॥

यत् त्वा॑[4] शि॒क्वः प॒रा॒ऽव॑धी॒त् त॒क्षा हस्ते॑न॒ वास्या॑[5] ।
[6]आप॑स्त्वा॒ तस्मा॑ज्जीव॒लाः[6] पु॒न॒न्तु॒[7] शु॒च॑यः॒ शुचि॑म् ॥ ३ ॥

यत् । त्वा॒ । शि॒क्वः । प॒रा॒ऽअव॑धीत् । त॒क्षा । हस्ते॑न । वास्या॑ ।
आपः॑ । त्वा॒ । तस्मा॑त् । जी॒व॒लाः । पु॒न॒न्तु॒ । शु॒च॑यः । शुचि॑म् ॥ ३ ॥

हिर॑ण्यस्र॒ग॒यं[8] म॒णिः श्र॒द्धां य॒ज्ञं मह्यो॑[9] दध॑त् । गृ॒हे व॑सतु[10] नोऽति॑थिः ॥४॥

हिर॑ण्यऽस्रक् । अ॒यम् । म॒णिः । श्र॒द्धाम् । य॒ज्ञम् । महः॑ । दध॑त् ।
गृ॒हे । व॒स॒तु॒ । नः॒ । अति॑थिः ॥ ४ ॥

तस्मै॑ घृ॒तं सुरां॑[11] मध्वन्न॑मन्नं क्षदामहे[12] ।
स नः॑ पि॒तेव॑ पु॒त्रेभ्य॒ः श्रेयः॑श्रेयश्चिकित्स॒तु भूयो॑भूयः॒ श्वःश्वो॑[13] दे॒वेभ्यो॑ म॒णिरेत्य॑ ॥५॥

तस्मै॑ । घृ॒तम् । सुरा॑म् । मधु॑ । अन्न॑म्ऽअन्नम् । क्ष॒दा॒म॒हे॒ । सः । नः॒ । पि॒ताऽइ॑व । पु॒त्रेभ्यः॑ ।
श्रेयः॑ऽश्रेयः । चि॒कि॒त्स॒तु॒ । भूयः॑ऽभूयः । श्वःऽश्वः॑ । दे॒वेभ्यः॑ । म॒णिः । आ॒ऽइत्य॑ ॥ ५ ॥

यम॑बध्ना॒द्[14] बृ॒ह॒स्पति॑र्म॒णिं फा॒ले घृ॒त॒श्चुत॑मु॒ग्रं[15] ख॑दि॒रमोज॑से ।
तम॒ग्निः प्रत्य॑मुञ्चत॒ सो अ॑स्मै दुह॒ आज्यं॒ भूयो॑भूयः॒ श्वःश्व॒स्तेन॒ त्वं द्वि॑ष॒तो ज॑हि ॥६॥

---

१. पूर्णो पै १९,६२,२. २. मंथेन B^a S^m. ३. फलात् P. ४. वे आरभी [illegible] ५. वास्या पै १९,६२,३. ६. "परावधीत् त्वा" आरभी. ७. पुनन्तु [illegible] ८. हिरण्यस्रगोऽयं पै १९,६२,४. ९. मंहो B. १०. वसति पै. ११. सुरां A.D.R.Dc.WM १२. क्षदामहे पै १९,६२,४ [मू.पे.]. १३. [illegible] (मू. पा.). १४. इमं बध्नातु [illegible] पै १९,६२,६. १५. [illegible] R.

यम् । अबध्नात् । बृहस्पतिः[1] । मणिम् । फालम्[2] । घृतऽश्चुतम्[3] । उग्रम् । खदिरम् । ओजसे । तम् । अग्निः । प्रति । अमुञ्चत । सः । अस्मै । दुहे । आज्यम्[4] । भूयःऽभूयः । श्वःऽश्वः । तेन । त्वम् । द्विषतः । जहि ॥ ६ ॥

**यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।**
**तमिन्द्रः प्रत्यमुञ्चतौजसे वीर्याय कम् । सो अस्मै बलमिद् दुहे भूयोभूयः०॥७॥**

यम् । अबध्नात् । बृहस्पतिः । मणिम् । फालम् । घृतऽश्चुतम् । उग्रम् । खदिरम् । ओजसे । तम् । इन्द्रः । प्रति । अमुञ्चत । ओजसे । वीर्याय । कम् । सः । अस्मै । बलम् । इत् । दुहे । भूयःऽभूयः ।० ॥ ७ ॥

**यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।**
**तं सोमः प्रत्यमुञ्चत 'महे श्रोत्राय चक्षसे' ।**
**सो अस्मै 'वर्च इद्' दुहे भूयोभूयः० ॥ ८ ॥**

यम् । अबध्नात् । बृहस्पतिः । मणिम् । फालम् । घृतऽश्चुतम् । उग्रम् । खदिरम् । ओजसे । तम् । सोमः । प्रति । अमुञ्चत । महे । श्रोत्राय । चक्षसे । सः । अस्मै । वर्चः । इत् ।०॥

**यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।**
**तं सूर्यः[7] प्रत्यमुञ्चत तेनेमा अजयद् दिशः[8] । सो अस्मै भूतिमिद्[9] दुहे भूयोभूयः०॥९**

यम् । अबध्नात् । बृहस्पतिः । मणिम् । फालम् । घृतऽश्चुतम् । उग्रम् । खदिरम् । ओजसे । तम् । सूर्यः । प्रति । अमुञ्चत । तेन । इमाः । अजयत् । दिशः । सः । अस्मै । भूतिम् । इत् । ० ॥

**यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं[10] खदिरमोजसे ।**
**तं बिभ्रच्चन्द्रमा मणिमसुराणां पुरोऽजयद् दानवानां हिरण्ययीः ।**
**सो अस्मै श्रियमिद्[11] दुहे भूयोभूयः० ॥१०॥**

यम् । अबध्नात् । बृहस्पतिः । मणिम् । फालम् । घृतऽश्चुतम्[12] । उग्रम् । खदिरम् । ओजसे । तम् । बिभ्रत् । चन्द्रमाः । मणिम् । असुराणाम् । पुरः । अजयत् । दानवानाम् । हिरण्ययीः । सः । अस्मै । श्रियम् । इत् । दुहे ।० ॥ १० ॥

---

१. १०,५,६४ इत्यत्र 'आमुष्यायणम्' इत्यारभ्य एतत्पर्यन्तं स्वरान् नाङ्कयति P.　२. फलम् P.　३. °श्चुतम् J.P.　४. आज्याम् P.　५. द्रविणाय रसाय कम् पै १६,४१,१.　६. मह इद् पै.　७. सूर्यं B[b],S[m],Cs.　८. दिशः पै १६,६२,८.　९. वर्च इद् पै.　१०. °श्चुतं° R.　११. तेज इद् पै १६,४३,२.　१२. °श्चुतम् P,J.Cp.

यमबध्नाद् बृहस्पतिर्वाताय मणिमाशवे । सो 'अस्मै वाजिनं' दुहे भूयोभूयः० ॥११॥

यम् । अबध्नात् । बृहस्पतिः । वाताय । मणिम् । आशवे ।
सः । अस्मै । वाजिनम्' । दुहे ।० ॥ ११ ॥

यमबध्नाद् बृहस्पतिर्वाताय मणिमाशवे ।
तेनेमां मणिना कृपिमश्विनावभि रक्षतः ।
स भिषग्भ्यां महो' दुहे भूयोभूयः ० ॥ १२ ॥

यम् । अबध्नात् । बृहस्पतिः । वाताय । मणिम् । आशवे । तेन । इमाम् । मणिना ।
कृपिम् । अश्विनौ । अभि । रक्षतः । सः । भिषक्ऽभ्याम् । महः । दुहे ।० ॥१२॥

यमबध्नाद् बृहस्पतिर्वाताय मणिमाशवे ।
तं बिभ्रत् सविता मणिं 'तेनेदमजयत् स्वः' ।
सो अस्मै सूनृतां दुहे भूयोभूयः० ॥ १३ ॥

यम् । अबध्नात् । बृहस्पतिः । वाताय । मणिम् । आशवे । तम् । बिभ्रत् ।
सविता । मणिम् । तेन । इदम् । अजयत् । स्वरिति । सः । अस्मै । सूनृताम् । दुहे ।० ॥१३॥

यमबध्नाद् बृहस्पतिर्वाताय मणिमाशवे ।
तमापो बिभ्रतीर्मणिं सदा धावन्त्यक्षिताः ।
स आभ्योऽमृतमिद् दुहे भूयोभूयः० ॥ १४ ॥

यम् । अबध्नात् । बृहस्पतिः । मणिम् । वाताय । आशवे । तम् । आपः । बिभ्रतीः ।
मणिम् । सदा । धावन्ति । अक्षिताः । सः । आभ्यः । अमृतम् । इत् । दुहे ।० ॥ १४ ॥

यमबध्नाद् बृहस्पतिर्वाताय मणिमाशवे ।
तं राजा वरुणो मणिं प्रत्यमुञ्चत शंभुवम् ।
सो अस्मै सत्यमिद्' दुहे भूयोभूयः० ॥ १५ ॥

---

१. अस्मै वाजिनं A,R. २. वाजिनम् P,J. ३. पयो पै १६,४१,५
४. °जयुन्स्वः B,K™. ५. राज्यमिद् पै १६,४१,२.

यम् । अर्वध्नात् । बृहुस्पतिः । वार्ताय । मुणिम् । आशवे । तम् । राजा ।
वरुणः । मुणिम् । प्रति । अमुञ्चत । शम्ऽभुवम् । सः । अस्मै । सत्यम् । इत् । दुहे ।० ॥ १५॥

यमबध्नाद् बृहस्पतिर्वाताय मुणिमाशवे ।
तं देवा बिभ्रतो मुणिं सर्वांल्लोकान् युधाऽजयन्[1] ।
स एभ्यो जितिमिद् दुहे भूयोभूयः० ॥ १६ ॥

यम् । अर्वध्नात् । बृहुस्पतिः । वार्ताय । मुणिम् । आशवे । तम् । देवाः ।
बिभ्रतः । मुणिम् । सर्वान् । लोकान् । युधा । अजयन्[1] । सः । एभ्यः । जितिम्[2] । इत् । दुहे ।०॥

यमबध्नाद् बृहस्पतिर्वाताय मुणिमाशवे ।
तमिमं देवता मुणिं प्रत्यमुञ्चन्त[3] शंभुवम् ।
स आभ्यो विश्वमिद् दुहे भूयोभूयः [4]श्वःश्वस्तेन त्वं द्विषतो जहि ॥१७॥

यम् । अर्वध्नात् । बृहुस्पतिः । वार्ताय । मुणिम् । आशवे ।
तम् । इमम् । देवताः । मुणिम् । प्रति । अमुञ्चन्त[5] । शम्ऽभुवम् ।
सः । आभ्यः । विश्वम् । इत् । दुहे । भूयःऽभूयः । श्वःऽश्वः । तेन । त्वम् । द्विषतः । जहि ॥

ऋतवस्तमबध्नतार्तवास्तमबध्नत ।
संवत्सरस्तं बद्ध्वा सर्वं भूतं वि रक्षति[6] ॥ १८ ॥

ऋतवः । तम् । अबध्नत । आर्तवाः । तम् । अबध्नत ।
सम्ऽवत्सरः । तम् । बद्ध्वा[7] । सर्वम् । भूतम् । वि । रक्षति ॥ १८ ॥

अन्तर्देशा अबध्नत प्रदिशस्तमबध्नत ।
प्रजापतिसृष्टो मुणिर्द्विषतो मेऽधरां[8] अकः ॥ १९ ॥

अन्तःऽदेशाः । अबध्नत । प्रऽदिशः । तम् । अबध्नत ।
प्रजापतिऽसृष्टः । मुणिः । द्विषतः । मे । अधरान् । अकः ॥ १९ ॥

---

१. अजयन् > अर्जयन् J,P; अर्जयन् Cp. २. जितिम् P. ३. °मुंचत B,B^b, K,K^m,R,V,Dc,Cs,P^3,W,I,K^4. ४. इवस्व° A,B,B^b,D,K,K^m,R,S^m,V,Dc,Cs. ५. अमुंचत P,P^1,Cp,Bp^2,D^2. ६. राजवि पै १६,४४,२. ७. बध्वा P. ८. मेधर्रे A,R; सोधरो पै १६,४४,१.

अर्थर्वाणो अबध्नताथर्वणा अबध्नत ।
'तैर्मेदिनो अङ्गिरसो'[1] दस्यूनां बिभिदुः पुरस्तेन त्वं द्विषतो जहि ॥२०॥

अर्थर्वाणः । अबध्नत । आथर्वणाः । अबध्नत ।
तैः । मेदिनः । अङ्गिरसः । दस्यूनाम् । बिभिदुः । पुरः । तेन । त्वम् । द्विषतः । जहि ॥२०॥

तं धाता प्रत्यमुञ्चत स भूतं व्यकल्पयत् ।
तेन त्वं द्विषतो जहि ॥ २१ ॥

तम् । धाता । प्रति । अमुञ्चत । सः । भूतम् । वि । अकल्पयत् ।
तेन । त्वम् । द्विषतः । जहि ॥ २१ ॥

यमबध्नाद्[2] बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स माऽयं मणिरागमद् रसेन सह वर्चसा ॥ २२ ॥

यम् । अबध्नात् । बृहस्पतिः । देवेभ्यः । असुरऽक्षितिम् ।
सः । मा । अयम् । मणिः । आ । अगमत् । रसेन । सह । वर्चसा ॥ २२ ॥

यमबध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स माऽयं[3] मणिरागमत् सह गोभिरजाविभिरन्नेन प्रजया सह ॥ २३ ॥

यम् । अबध्नात् । बृहस्पतिः । देवेभ्यः । असुरऽक्षितिम् । सः । मा । अयम् ।
मणिः । आ । अगमत् । सह । गोभिः । अजाविऽभिः । अन्नेन । प्रऽजया । सह ॥२३॥

यमबध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स माऽयं मणिरागमत् सह व्रीहियवाभ्यां महसा भूत्या सह ॥ २४ ॥

यम् । अबध्नात् । बृहस्पतिः । देवेभ्यः । असुरऽक्षितिम् । सः । मा । अयम् । मणिः ।
आ । अगमत् । सह । व्रीहिऽयवाभ्याम् । महसा । भूत्या । सह ॥ २४ ॥

यमबध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स माऽयं मणिरागमन्मधोर्घृतस्य धारया कीलालेन मणिः[4] सह ॥२५॥

---

१. अङ्गिरसस्तं बध्नन्ति पै १६,४४,३. २. इमं बध्नातु एवमुत्तरत्र पै १६,४४,५
३. स्वाय एवमुत्तरत्र पै. ४. श्रिया पै १६,४४,६.

यम्। अवध्नात्। बृहस्पतिः। देवेभ्यः। असुरऽक्षितिम्। सः। मा। अयम्।
मणिः। आ। अगमत्। मधोः। घृतस्य। धारया। कीलालेन। मणिः। सह ॥ २५ ॥

यमबध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम्।
स माऽयं मणिरागमदूर्जया पयसा सह द्रविणेन श्रिया सह ॥ २६ ॥

यम्। अवध्नात्। बृहस्पतिः। देवेभ्यः। असुरऽक्षितिम्। सः। मा। अयम्।
मणिः। आ। अगमत्। ऊर्जया। पयसा। सह। द्रविणेन। श्रिया। सह ॥ २६ ॥

यमबध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम्।
स माऽयं मणिरागमत् तेजसा त्विष्या सह यशसा कीर्त्या[1] सह ॥२७॥

यम्। अवध्नात्। बृहस्पतिः। देवेभ्यः। असुरऽक्षितिम्। सः। मा। अयम्।
मणिः। आ। अगमत्। तेजसा। त्विष्या। सह। यशसा। कीर्त्या[1]। सह ॥ २७ ॥

यमबध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम्।
स माऽयं मणिरागमत् सर्वाभिर्भूतिभिः सह ॥ २८ ॥

यम्। अवध्नात्। बृहस्पतिः। देवेभ्यः। असुरऽक्षितिम्।
सः। मा। अयम्। मणिः। आ। अगमत्। सर्वाभिः। भूतिऽभिः। सह ॥ २८ ॥

तमिमं देवता मणिं मह्यं ददतु पुष्टये।
अभिभुं क्षत्रवर्धनं सपत्नदम्भनं मणिम् ॥ २९ ॥

तम्। इमम्। देवताः। मणिम्। मह्यम्। ददतु। पुष्टये।
अभिऽभुम्। क्षत्रऽवर्धनम्। सपत्नऽदम्भनम्। मणिम् ॥ २९ ॥

ब्रह्मणा तेजसा सह प्रति मुञ्चामि मे[2] शिवम्।
असपत्नः सपत्नहा सपत्नान् मेऽधराँ[3] अकः ॥ ३० ॥

ब्रह्मणा। तेजसा। सह। प्रति। मुञ्चामि। मे। शिवम्।
असपत्नः[4]। सपत्नऽहा। सऽपत्नान्। मे। अधरान्। अकः ॥ ३० ॥

---

१. कीर्त्यां B[a],K,K[m],S[m],V,Dc,P[a],Cp,D[1]; कीर्त्या P[a],M,T. २. तै ३ १६,४५,२.
३. °धरं A,R. ४. पुत्राः P.

उत्तरं द्विषतो मामयं[1] मणिः कृणोतु[2] देवजाः ।
यस्य लोका इमे त्रयः पयो दुग्धमुपासते ।
स[3] माऽयमधि रोहतु[3] मणिः श्रैष्ठ्याय मूर्धतः ॥३१॥

उत्ऽतरम् । द्विषतः । माम् । अयम् । मणिः । कृणोतु । देवऽजाः ।
यस्य । लोकाः[4] । इमे । त्रयः । पयः । दुग्धम् । उपऽआसते ।
सः । मा । अयम् । अधि । रोहतु । मणिः । श्रैष्ठ्याय । मूर्धतः ॥ ३१ ॥

यं देवाः पितरो मनुष्या उपजीवन्ति[5] सर्वदा ।
स मायमधि रोहतु मणिः श्रैष्ठ्याय मूर्धतः ॥ ३२ ॥

यम् । देवाः । पितरः । मनुष्याः । उपऽजीवन्ति । सर्वदा ।
सः । मा । अयम् । अधि । रोहतु । मणिः । श्रैष्ठ्याय । मूर्धतः ॥ ३२ ॥

यथा बीजमुर्वरायां कृष्टे फालेन रोहति ।
[6]एवा मयि[6] प्रजा पशवोऽन्नमन्नं वि रोहतु ॥ ३३ ॥

यथा । बीजम् । उर्वरायाम् । कृष्टे । फालेन । रोहति ।
एव । मयि । प्रऽजा । पशवः । अन्नम्ऽअन्नम् । वि । रोहतु ॥ ३३ ॥

यस्मै त्वा यज्ञवर्धन मणे प्रत्यमुंचं[7] शिवम् ।
तं त्वं शतदक्षिण मणे श्रैष्ठ्याय जिन्वतात् ॥ ३४ ॥

यस्मै । त्वा । यज्ञऽवर्धन । मणे । प्रतिऽअमुंचम्[7] । शिवम् ।
तम् । त्वम् । शतऽदक्षिण । मणे । श्रैष्ठ्याय । जिन्वतात् ॥ ३४ ॥

एतमिध्मं समाहितं[8] जुषाणो अग्ने[9] प्रति हर्य होमैः[10] ।
तस्मिन् विदेम सुमतिं स्वस्ति प्रजां चक्षुः पशून्त्समिद्धे जातवेदसि ब्रह्मणा ॥३५॥

एतम् । इध्मम् । समऽआहितम् । जुषाणः । अग्ने[11] । प्रति । हर्य । होमैः ।

---

१. त्वा पै १९,४५,१. २. मणिर्कृं° Bh,Sm,Cs. ३. स्वाऽयमभि रक्षतु पै १९,४४,३. ४. लोकः P. ५. °यन्तु पै १९,४४,९. ६. एवास्मिन् पै १९,४५,१. ७. °मुंच K,Km,V,Dc,Cs,P,J,Cp. ८. समाभृतं पै १९,४५,४. ९. अग्ने B,K,Dc,R[1],T. १०. होमम् पै. ११. अग्ने P[1],D[1].

तस्मिन् । विदेम । सुऽमतिम् । स्वस्ति । प्रऽजाम् । चक्षुः । पशून् । समऽइद्धे । जातऽवेदसि । ब्रह्मणा ॥ ३५ ॥

इति तृतीयेऽनुवाके द्वितीयं सूक्तम् ।

इति तृतीयोऽनुवाकः ।

'कस्मिन्नङ्गे' इति स्कम्भसूक्तम् । स्कम्भ इति सनातनतमो देवो ब्रह्मणोऽप्याद्यभूतः । अतो ज्येष्ठं ब्रह्मेति तस्य संज्ञा । तस्मिन् सर्वमेतत् तिष्ठति । एतत्सर्वम् तेनाविष्टम् । विराडपि तस्मिन्नेव समाहितः । तस्मिन्नेव देवादयः सर्वे समाहिता इत्यादि वर्णनम् ।

कस्मि॒न्नङ्गे॒ तपो॑ अ॒स्याधि॑ तिष्ठति॒ कस्मि॒न्नङ्ग॑ ऋ॒तम॒स्याध्याहि॑तम् ।
क्व॒ व्र॒तं क्व॑ श्र॒द्धाऽस्य॑ तिष्ठति॒ कस्मि॒न्नङ्गे॑ स॒त्यम॑स्य॒ प्रति॑ष्ठितम् ॥ १ ॥

कस्मि॑न् । अङ्गे॑ । तप॑ः । अ॒स्य॒ । अधि॑ । ति॒ष्ठ॒ति॒ । कस्मि॑न् । अङ्गे॑ । ऋ॒तम् । अ॒स्य॒ । अधि॑ । आऽहि॑तम् । क्व॑ । व्र॒तम् । क्व॑ । श्र॒द्धा । अ॒स्य । ति॒ष्ठ॒ति॒ । कस्मि॑न् । अङ्गे॑ । स॒त्यम् । अ॒स्य॒ । प्रति॑ऽस्थितम् ॥१॥

कस्मा॒दङ्गा॑द् दीप्यते अ॒ग्निर॑स्य॒ कस्मा॒दङ्गा॑त् पवते मात॒रिश्वा॑ ।
कस्मा॒दङ्गा॒द् वि मि॑मी॒तेऽधि॑ च॒न्द्रमा॑ म॒ह॑[1] स्क॒म्भस्य॒ मिमा॑नो[2] अङ्ग॑म् ॥२॥

कस्मा॑त् । अङ्गा॑त् । दी॒प्य॒ते॒ । अ॒ग्निः । अ॒स्य॒ । कस्मा॑त् । अङ्गा॑त् । प॒व॒ते॒ । मा॒त॒रिश्वा॑ । कस्मा॑त् । अङ्गा॑त् । वि । मि॒मी॒ते॒ । अधि॑ । च॒न्द्रमा॑ः । म॒हः । स्क॒म्भस्य॑ । मिमा॑नः[3] । अङ्ग॑म् ॥

कस्मि॒न्नङ्गे॑ तिष्ठति॒ भूमि॑रस्य॒ कस्मि॒न्नङ्गे॑ तिष्ठ॒त्यन्तरि॑क्षम् ।
कस्मि॒न्नङ्गे॑ तिष्ठ॒त्याहि॑ता द्यौः कस्मि॒न्नङ्गे॑ तिष्ठ॒त्युत्त॑रं दि॒वः ॥ ३ ॥

कस्मि॑न् । अङ्गे॑ । ति॒ष्ठ॒ति॒ । भूमि॑ः । अ॒स्य॒ । कस्मि॑न् । अङ्गे॑ । ति॒ष्ठ॒ति॒ । अ॒न्तरि॑क्षम् । कस्मि॑न् । अङ्गे॑ । ति॒ष्ठ॒ति॒ । आऽहि॑ता । द्यौः । कस्मि॑न् । अङ्गे॑ । ति॒ष्ठ॒ति॒ । उत्ऽत॑रम् । दि॒वः ॥

क्व॑ प्रेप्स॑न् दीप्यत ऊ॒र्ध्वो अ॒ग्निः क्व॑[4] प्रेप्स॑न् पवते मात॒रिश्वा॑ ।
यत्र॒ प्रेप्स॑न्तीरभि॒यन्त्या॒वृत॑ः स्क॒म्भं तं ब्रू॑हि कत॒मः स्वि॑दे॒व[5] सः ॥ ४ ॥

---

१. महद् वै १०,७,४.  २. वि मिमानो पै.; वेदपद १,२४८४ [?] द.  ३. क्व A,R.
४. क्व A,B[a],R,S[m],Cs.  ५. स्विदेव A,B,B[a],K,R,S[m],W,M.

क्व॑। प्र॒ऽई॒प्सन्। दी॒प्य॒ते॒। ऊ॒र्ध्वः। अ॒ग्निः। क्व॑। प्र॒ऽई॒प्सन्। प॒व॒ते॒। मा॒त॒रिश्वा॑। यत्र॑। प्र॒ऽई॒प्सन्तीः। अ॒भि॒ऽयन्ति॑। आ॒ऽवृतः॑। स्क॒म्भम्। तम्। ब्रू॒हि॒। क॒त॒मः। स्वि॒त्[1]। ए॒व। सः ॥४॥

क्वा॑र्धमा॒साः क्व॑ यन्ति॒ मासाः॑ संवत्स॒रेण॑ स॒ह सं॑वि॒दा॒नाः।
यत्र॒ यन्त्यृ॒तवो॒ यत्रा॑र्त॒वाः[2] स्क॒म्भं तं ब्रू॑हि कत॒मः स्वि॑दे॒व सः ॥ ५ ॥

क्व॑। अ॒र्ध॒ऽमा॒साः। क्व॑। य॒न्ति॒। मासाः॑। स॒म्ऽव॒त्स॒रेण॑। स॒ह। स॒म्ऽवि॒दा॒नाः। यत्र॑। यन्ति॑। ऋ॒तवः॑। यत्र॑। आ॒र्त॒वाः। स्क॒म्भम्। तम्। ब्रू॒हि॒। क॒त॒मः। स्वि॒त्। ए॒व। सः ॥५॥

क्व॑१[3] प्रेप्स॑न्ती युव॒ती विरू॑पे अहोरा॒त्रे द्र॑वतः संवि॒दा॒ने।
यत्र॒ प्रेप्स॑न्तीरभि॒यन्त्यापः॑ स्क॒म्भं तं ब्रू॑हि कत॒मः स्वि॑दे॒व सः ॥ ६ ॥

क्व॑। प्रेप्स॑न्ती॒ इति॑ प्र॒ऽई॒प्सन्ती। यु॒व॒ती इति॑। विरू॑पे इति॑ वि॒ऽरू॑पे। अ॒हो॒रा॒त्रे इति॑। द्र॒व॒तः। सं॒वि॒दा॒ने इति॑ स॒म्ऽवि॒दा॒ने। यत्र॑। प्र॒ऽई॒प्सन्तीः[4]। अ॒भि॒ऽयन्ति॑। आपः॑। स्क॒म्भम्। तम्। ब्रू॒हि॒। क॒त॒मः। स्वि॒त्। ए॒व। सः ॥६॥

यस्मि॑न्त्स्त॒ब्ध्वा[5] प्र॒जाप॑तिर्लो॒कान्त्सर्वाँ॑[6] अधा॑रयत्[7]।
स्क॒म्भं तं ब्रू॑हि कत॒मः स्वि॑दे॒व[8] सः ॥ ७॥

यस्मि॑न्। स्त॒ब्ध्वा[9]। प्र॒जाऽप॑तिः। लो॒कान्। सर्वा॑न्। अधा॑रयत्। स्क॒म्भम्। तम्। ब्रू॒हि॒। क॒त॒मः। स्वि॒त्[9]। ए॒व। सः ॥ ७ ॥

यत् प॑र॒मम॑व॒मं[10] यच्च॑ मध्य॒मं प्र॒जाप॑तिः ससृ॒जे वि॒श्वरू॑पम्।
किय॑ता स्क॒म्भः प्र वि॑वेश॒ तत्र॒ यन्न प्रावि॑श॒त् किय॒त् तद् ब॑भूव ॥ ८ ॥

यत्। प॒र॒मम्। अ॒व॒मम्। यत्। च॒। म॒ध्य॒मम्। प्र॒जाऽप॑तिः। स॒सृ॒जे। वि॒श्वऽरू॑पम्। किय॑ता। स्क॒म्भः। प्र। वि॒वे॒श॒। तत्र॑। यत्। न। प्र॒ऽअवि॑शत्। किय॑त्। तत्। ब॒भू॒व ॥८॥

किय॑ता स्क॒म्भः प्र वि॑वेश भू॒तं किय॑द् भवि॒ष्यद॒न्वाशये॑ऽस्य।
एकं॒ [11]यद॒ङ्गम॑कृ॒णोत् स॑हस्र॒धा किय॑ता स्क॒म्भः प्र वि॑वेश॒ तत्र॑ ॥ ९ ॥

---

१. स्वित P,P², J, Cp, WM. २ °ब्धा Bʰ, D, Sᵐ, Cs. ३. क्व॑१ A, Bʰ, R, Sᵐ, Cs. ४. प्रऽई॒प्स° P², J. ५. °ब्धा A, B, D, K, Kᵐ, R, Sᵐ, V, Dc, Cs, P, P², J, Cp, WM. ६. °सर्वा॑ A, R. ७. °रयत्र K, Kᵐ. ८. स्विदे॒व A B, Bʰ, K, Kᵐ R, Sᵐ, WM. ९. स्वित् P, J, Cp, WM. १०. प॒र॒मं यद॑व॒मं K, V. ११. यद॑ K.

कियता । स्कम्भः । प्र । विवेश । भूतम् । कियत् । भविष्यत् । अनुऽआशये । अस्य ।
एकम् । यत् । अङ्गम् । अकृणोत् । सहस्रऽधा । कियता । स्कम्भः । प्र । विवेश । तत्र ॥

यत्र लोकांश्च कोशांश्चापो ब्रह्म जना विदुः ।
असंच्च यत्र सच्चान्त[1] स्कम्भं तं ब्रूहि कतमः स्विदेव[2] सः ॥ १० ॥

यत्र । लोकान् । च । कोशान् । च । आपः । ब्रह्म । जनाः । विदुः । असत् । च ।
यत्र । सत् । च । अन्तः । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित्[3] । एव । सः ॥१०॥

यत्र तपः पराक्रम्य व्रतं[4] धारयत्युत्तरम् ।
ऋतं[5] च यत्र श्रद्धा चापो ब्रह्म समाहिताः[6] स्कम्भं तं० ॥ ११ ॥

यत्र । तपः । पराऽक्रम्य । व्रतम् । धारयति । उत्ऽतरम् ।
ऋतम् । च । यत्र । श्रद्धा । च । आपः । ब्रह्म । सम्ऽआहिताः । स्कम्भम् ।० ॥ ११ ॥

यस्मिन् भूमिरन्तरिक्षं द्यौर्यस्मिन्नध्याहिता[7] ।
यत्राग्निश्चन्द्रमाः सूर्यो वातस्तिष्ठन्त्यार्पिताः[1] स्कम्भं तं० ॥ १२ ॥

यस्मिन् । भूमिः । अन्तरिक्षम् । द्यौः । यस्मिन् । अधि । आऽहिता ।
यत्र । अग्निः । चन्द्रमाः । सूर्यः । वातः । तिष्ठन्ति । आर्पिताः । स्कम्भम् । ० ॥१२॥

यस्य त्रयस्त्रिंशद् देवा अङ्गे सर्वे समाहिताः । स्कम्भं तं० ॥ १३ ॥

यस्य । त्रयःऽत्रिंशत् । देवाः । अङ्गे । सर्वे । सम्ऽआहिताः । स्कम्भम् । तम्० ॥ १३ ॥

यत्र ऋषयः प्रथमजा[8] ऋचः साम यजुर्मही ।
एकर्षिर्यस्मिन्नार्पितः[9] स्कम्भं तं० ॥ १४ ॥

यत्र । ऋषयः । प्रथमऽजाः । ऋचः । साम । यजुः । मही ।
एकऽऋषिः । यस्मिन् । आर्पितः । स्कम्भम् ।० ॥ १४ ॥

---

१. °न्तः K,Km,R,Dc. २. स्विदेव A,K,R,Sm. ३. स्विद् P,J,Cp. ४. ऋतं पै १७,८,२ ५. व्रतं पै. ६. °ता V. ७. °हिताः D,R,Cs,P,P², J. ८. भूतकृत पै १७,८,५ ९. एक ऋषि° पै.; °र्पित D,K,Sm,V.

यत्रामृतं च मृत्युश्च 'पुरुषेऽधि समाहिते'।
समुद्रो यस्य नाड्यः[2] पुरुषेऽधि समाहिताः[3] स्कम्भं तं० ॥ १५ ॥

यत्र । अमृतम् । च । मृत्युः । च । पुरुषे । अधि । समाहिते इति सम्ऽआहिते ।
समुद्रः । यस्य । नाड्यः । पुरुषे । अधि । सम्ऽआहिताः । स्कम्भम् ।० ॥ १५ ॥

यस्य चतस्रः प्रदिशो नाड्यः[2]स्तिष्ठन्ति[4] प्रथमाः[5] ।
यज्ञो यत्र[6] पराक्रान्तः[7] स्कम्भं तं ब्रूहि कतमः स्विदेव[8] सः ॥ १६ ॥

यस्य । चतस्रः । प्रऽदिशः । नाड्यः । तिष्ठन्ति । प्रथमाः[9] ।
यज्ञः । यत्र । पराऽक्रान्तः । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित्[10] । एव । सः ॥ १६ ॥

ये पुरुषे ब्रह्म विदुस्ते विदुः परमेष्ठिनम् ।
यो वेद परमेष्ठिनं यश्च वेद प्रजापतिम् ।
ज्येष्ठं ये ब्राह्मणं विदुस्ते स्कम्भमनुसंविदुः ॥ १७ ॥

ये । पुरुषे । ब्रह्म । विदुः । ते । विदुः । परमेऽस्थिनम् ।
यः । वेद । परमेऽस्थिनम् । यः । च । वेद । प्रजाऽपतिम् ।
ज्येष्ठम् । ये । ब्राह्मणम् । । विदुः । ते । स्कम्भम् । अनुऽसंविदुः ॥ १७ ॥

यस्य शिरो वैश्वानरश्चक्षुरङ्गिरसोऽभवन् ।
अङ्गानि यस्य यातवः[11] स्कम्भं तं ब्रूहि कतमः स्विदेव[8] सः ॥ १८ ॥

यस्य । शिरः । वैश्वानरः । चक्षुः । अङ्गिरसः । अभवन् ।
अङ्गानि । यस्य । यातवः । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित्[10] । एव । सः ॥१८॥

यस्य ब्रह्म मुखमाहुर्जिह्वां मधुकशामुत ।
विराजमूधो यस्याहुः[12] स्कम्भं तं० ॥ १९ ॥

---

१. पुरुषस्य समाहिताः पै १७,८,७. २. नाड्यः B,D,S^m,Cs. ३. °ता D,S^m,V. ४. °न्तु पै १७,८,९. ५. प्रथ्थमाः A,B,B^b,D,K,K^m,R,S^m,V,Dc,Cs WM,WI,; प्रथमाः P^j; वैप १,२१७१ j द्र. ६. यस्मिन् पै. ७ °न्ता D,S^m,V. ८. स्विदेव B,D,S^m,R. ९. प्रऽथ्थमाः मूको. १०. स्विद् P,P^s,J। स्वित्>स्विद् Cp. ११. °वं A,D,K,K^m,R,S^m,V; कतमः पै १७,८,९. १२. °हु D,S^m,V.

यस्य । ब्रह्म । मुखम् । आहुः । जिह्वाम् । मधुऽकशाम् । उत ।
विऽराजम् । ऊधः । यस्य । आहुः । स्कम्भम् ।० ॥ १९ ॥

यस्मादृचो अपातक्षन् यजुर्यस्मादपाकषन् ।
सामानि[1] यस्य लोमान्यथर्वाङ्गिरसो मुखं स्कम्भं तं ब्रूहि कतमः स्विदेव[2] सः ॥२०॥
यस्मात् । ऋचः । अपऽअतक्षन् । यजुः । यस्मात् । अपऽअकषन् । सामानि । यस्य ।
लोमानि । अथर्वऽअङ्गिरसः । मुखम् । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित्[3] । एव । सः ॥

असच्छाखां प्रतिष्ठन्तीं परममिव जना विदुः[4] ।
उतो सन्मन्यन्तेऽवरे[5] [6]ये ते[6] शाखामुपासते ॥ २१ ॥
असत्ऽशाखाम् । प्रऽतिष्ठन्तीम् । परमम्ऽइव । जनाः । विदुः[7] ।
उतो इति । सत् । मन्यन्ते । अवरे । ये । ते । शाखाम् । उपऽआसते ॥ २१ ॥

यत्रादित्याश्च रुद्राश्च वसवश्च समाहिताः ।
भूतं च यत्र भव्यं च सर्वे लोकाः प्रतिष्ठिताः[8] स्कम्भं तं ब्रूहि कतमः स्विदेव[9] सः ॥२२॥
यत्र । आदित्याः । च । रुद्राः । च । वसवः । च । सम्ऽआहिताः । भूतम् । च । यत्र ।
भव्यम् । च । सर्वे । लोकाः । प्रतिऽस्थिताः । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित्[10] । एव । सः ॥

यस्य त्रयस्त्रिंशद् देवा निधिं रक्षन्ति[11] सर्वदा ।
निधिं तमद्य को वेद यं देवा अभिरक्षथ ॥ २३ ॥
यस्य । त्रयःऽत्रिंशत् । देवाः । निऽधिम् । रक्षन्ति । सर्वदा ।
निऽधिम् । तम् । अद्य । कः । वेद । यम् । देवाः । अभिऽरक्षथ ॥ २३ ॥

यत्र देवा ब्रह्मविदो ब्रह्म ज्येष्ठमुपासते ।
यो वै तान् विद्यात् प्रत्यक्षं स ब्रह्मा वेदिता स्यात् ॥ २४ ॥

---

१. छन्दांसि पै १०,९,१. २. स्विद्देव B,R,Sᵐ,V. ३. स्विद् P,J. ४. विदुः K,Kᵐ,R,Sᵐ,V. ५. मन्यन्ते K,Kᵐ. ६. यस्य पै १०,९,२. ७. विदुः P, Cp. ८. °ता Bᵇ,D,Sᵐ,V,Cs. ९. स्विद्देव B,R,Sᵐ. १०. स्विद् P,Pᵘ,J; स्विद् > स्विद् ११. रक्षन्तु पै १०,९,४.

यत्र । देवाः । ब्रह्मऽविदः । ब्रह्म । ज्येष्ठम् । उपऽआसते ।
यः । वै । तान् । विद्यात् । प्रतिऽअक्षम् । सः । ब्रह्मा । वेदिता । स्यात् ॥ २४ ॥

बृहन्तो नाम ते देवा येऽसतः परि[1] जज्ञिरे ।
एकं तदङ्गं स्कम्भस्यासदाहुः परो जनाः ॥ २५ ॥

बृहन्तः । नाम । ते[2] । देवाः । ये । असतः । परि । जज्ञिरे ।
एकम् । तत् । अङ्गम् । स्कम्भस्य । असत् । आहुः । परः । जनाः ॥ २५ ॥

यत्र स्कम्भः प्रजनयन् पुराणं व्यवर्तयत्[3] ।
एकं तदङ्गं स्कम्भस्य पुराणमनुसंविदुः[4] ॥ २६ ॥

यत्र । स्कम्भः । प्रऽजनयन् । पुराणम् । विऽअवर्तयत् ।
एकम् । तत् । अङ्गम् । स्कम्भस्य । पुराणम् । अनुऽसंविदुः ॥ २६ ॥

यस्य त्रयस्त्रिंशद् देवा अङ्गे गात्रा विभेजिरे[5] ।
तान् वै त्रयस्त्रिंशद्देवानेके ब्रह्मविदो विदुः[6] ॥ २७ ॥

यस्य । त्रयःऽत्रिंशत् । देवाः । अङ्गे । गात्रा । विऽभेजिरे ।
तान् । वै । त्रयःऽत्रिंशत् । देवान् । एके । ब्रह्मऽविदः । विदुः[6] ॥ २७ ॥

हिरण्यगर्भं परममनत्युद्यं जना विदुः ।
स्कम्भस्तदग्रे प्रासिञ्चद्धिरण्यं लोके[7] अन्तरा ॥ २८ ॥

हिरण्यऽगर्भम् । परमम् । अनतिऽउद्यम्[8] । जनाः । विदुः[6] ।
स्कम्भः । तत् । अग्रे । प्र । असिञ्चत् । हिरण्यम् । लोके । अन्तरा ॥ २८ ॥

स्कम्भे लोकाः[9] स्कम्भे तपः[10] स्कम्भेऽध्यृतमाहितम् ।
स्कम्भ[11] त्वा वेद[12] प्रत्यक्षमिन्द्रे सर्वं समाहितम् ॥ २९ ॥

---

१. °संतस्परि WM. २. ते P,Cp. ३. व्यवर्तयत् B,K. ४. °नुमसंविदुः पै १०,९,७ [मूद्रो.]. ५. गात्राणि भेजिरे पै १७,९,८. ६. विदुः R,S<sup>m</sup>,P. ७. लोकम् पै १७,९,९. ८. °द्यम् P,J. ९. °का B<sup>b</sup>,D,S<sup>m</sup>,V,Cs. १०. तपे B,D,S<sup>m</sup>,V,Cs. ११. स्कम्भं A,B,B<sup>b</sup>,D,K,K<sup>m</sup>,R,S<sup>m</sup>,Cs,WM. पै १७,९,१०; स्कुंभं V,Dc,O. १२. विद्म पै.

स्कम्भे । लोकाः । स्कम्भे । तपः । स्कम्भे । अधि । ऋतम् । आऽहितम् ।
स्कम्भं[1] । त्वा । वेद । प्रतिऽअक्षम् । इन्द्रे । सर्वम् । सम्ऽआहितम् ॥ २९ ॥

इन्द्रे लोका इन्द्रे तप इन्द्रेऽध्यृतमाहितम् ।
इन्द्रं[2] त्वा वेद[3] प्रत्यक्षं स्कम्भे सर्वं प्रतिष्ठितम्[4] ॥ ३० ॥

इन्द्रे । लोकाः । इन्द्रे । तपः । इन्द्रे । अधि । ऋतम् । आऽहितम् ।
इन्द्रम्[2] । त्वा । वेद । प्रतिऽअक्षम् । स्कम्भे । सर्वम् । प्रतिऽस्थितम् ॥ ३० ॥

नाम नाम्ना[5] जोहवीति[6] पुरा सूर्यात् पुरोपसः ।
यदजः प्रथमं संबभूव स ह तत् स्वराज्यमियाय[7] यस्मान्नान्यत् परमस्ति[8] भूतम् ॥ ३१ ॥

नाम । नाम्ना । जोहवीति । पुरा । सूर्यात् । पुरा । उषसः । यत् । अजः । प्रथमम् ।
सम्ऽबभूव । सः । ह । तत् । स्वऽराज्यम् । इयाय । यस्मात् । न । अन्यत् । परम् । अस्ति । भूतम् ॥

यस्य भूमिः प्रमाऽन्तरिक्षमुतोदरम् ।
दिवं यश्चक्रे मूर्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ ३२ ॥

यस्य । भूमिः । प्रऽमा । अन्तरिक्षम् । उत । उदरम् ।
दिवम् । यः । चक्रे । मूर्धानम् । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ ३२ ॥

यस्य सूर्यश्चक्षुश्चन्द्रमाश्च पुनर्णवः ।
अग्निं यश्चक्र आस्यं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ ३३ ॥

यस्य । सूर्यः । चक्षुः । चन्द्रमाः । च । पुनःऽनवः ।
अग्निम् । यः । चक्रे । आस्यम् । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ ३३ ॥

यस्य वातः प्राणापानौ चक्षुरङ्गिरसोऽभवन् ।
[9]दिशो यश्चक्रे प्रज्ञानीस्तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ ३४ ॥

यस्य । वातः । प्राणापानौ । चक्षुः । आङ्गिरसः । अभवन् ।
दिशः । यः । चक्रे । प्रऽज्ञानीः । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ ३४ ॥

---

१. स्कुंभम् > स्कंभं P; स्कुंभम् P², D³; स्कंभं J, Cp.　२. इन्द्रं W. Gri. च.
३. विद्म पै　४. समाहितम् पै.　५. नाम्नो K.　६. °वीमि पै १०,१०,१.
७. °ज्यं जगाम पै. १०,१०,२.　८. °मस्तु पै.　९. दिवं यश्चक्रे मूर्धानं च° पै १०,१०,५.

स्कम्भो दाधार 'द्यावापृथिवी उभे इमे' स्कम्भो दाधारोर्व१न्तरिक्षम्' ।
स्कम्भो दाधार प्रदिशः षडुर्वीः' स्कम्भ इदं विश्वं भुवनमा विवेश ॥ ३५॥
स्कम्भः । दाधार । द्यावापृथिवी इति । उभे इति । इमे इति । स्कम्भः । दाधार । उरु । अन्तरिक्षम् ।
स्कम्भः । दाधार । प्रऽदिशः । षट् । उर्वीः । स्कम्भे । इदम् । विश्वम् । भुवनम् । आ । विवेश ॥३५॥

यः श्रमात् तपसो जातो लोकान्त्सर्वान्त्समानशे ।
सोमं यश्चक्रे केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ ३६ ॥
यः । श्रमात् । तपसः । जातः । लोकान् । सर्वान् । सम्ऽआनशे ।
सोमम् । यः । चक्रे । केवलम् । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ ३६ ॥

कथं वातो नेलयति कथं न रमते मनः ।
किमापः सत्यं 'प्रेप्सन्तीर्नेलयन्ति कदा चन' ॥ ३७ ॥
कथम् । वातः । न । इलयति[5] । कथम् । न । रमते । मनः ।
किम् । आपः । सत्यम् । प्रऽईप्सन्तीः । न । इलयन्ति । कदा । चन ॥ ३७ ॥

महद् यक्षं भुवनस्य मध्ये तपसि क्रान्तं सलिलस्य पृष्ठे' ।
तस्मिन्' छ्र्यन्ते य उ के च देवा वृक्षस्य स्कन्धः परित' इव शाखाः ॥३८॥
महत् । यक्षम् । भुवनस्य । मध्ये । तपसि । क्रान्तम् । सलिलस्य । पृष्ठे' । तस्मिन् ।
श्रयन्ते । ये । ऊं इति । के । च । देवाः । वृक्षस्य । स्कन्धः । परितःऽइव । शाखाः ॥ ३८ ॥

यस्मै हस्ताभ्यां पादाभ्यां वाचा श्रोत्रेण चक्षुषा ।
यस्मै देवाः सदा बलिं प्रयच्छन्ति 'विमितेऽमितं' स्कम्भं तं ब्रूहि कतमः स्विदेव[10] सः ॥ ३९ ॥
यस्मै । हस्ताभ्याम् । पादाभ्याम् । वाचा । श्रोत्रेण । चक्षुषा । यस्मै । देवाः । सदा । बलिम् ।
प्रऽयच्छन्ति । विऽमिते । अमितम् । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित्[11] । एव । सः ॥

अप तस्य हतं तमो व्यावृत्तः[12] स पाप्मना ।

---

१. पृथिवीं द्यामुतामूं पै १७,१०,७. २. °रोर्व१° B,Bʰ,D,Sᵐ,Cs. ३. °र्वी Bʰ,D,Sᵐ,V,Cs. ४. °न्तीः प्र चकमति? सर्वदा पै १७,१०,८. ५. इलयति P,J. ६. पृष्टे A,Bʰ,R,Sᵐ,Cs,P². ७. तस्मि A,Kᵐ,R,Dc; यस्मिन् पै १७,१०,९. ८. परित D,Sᵐ. ९. मितेऽमितं पै १७,१०,१०. १०. स्विदेव A,B,K,R,Sᵐ. ११. स्वित् P,P²,J. १२. °वृत्तः Bʰ,D,K,Kᵐ,R,Cs.

सर्वाणि तस्मिन् ज्योतींषि यानि त्रीणि प्रजापतौ ॥ ४० ॥

अप । तस्य । हतम् । तमः । विऽआवृत्तः । सः । पाप्मना ।
सर्वाणि । तस्मिन् । ज्योतींषि । यानि । त्रीणि । प्रजाऽपतौ ॥ ४० ॥

यो वेतसं हिरण्ययं तिष्ठन्तं सलिले वेद । स वै गुह्यः[1] प्रजापतिः ॥४१॥

यः । वेतसम् । हिरण्ययम् । तिष्ठन्तम् । सलिले । वेद । सः । वै । गुह्यः[1] । प्रजाऽपतिः ॥

तन्त्रमेके युवती विरूपे अभ्याक्रामं वयतः षण्मयूखम्[2] ।
प्रान्या[3] तन्तूंस्तिरते धत्ते अन्या नाप वृञ्जाते न गमातो अन्तम् ॥ ४२ ॥

तन्त्रम् । एके इति । युवती इति । विरूपे इति विऽरूपे । अभिऽआक्रामम् । वयतः । षट्ऽमयूखम्[2] । प्र । अन्या[4] । तन्तून् । तिरते । धत्ते । अन्या । न । अप । वृञ्जाते इति । न । गमातः । अन्तम् ॥ ४२ ॥

तयोरहं परिनृत्यन्त्योरिव न वि जानामि यतरा परस्तात् ।
पुमानेनद्[5] वयत्युद्गृणत्ति[6] [7]पुमानेनद् वि जभाराधि नाके[8] ॥ ४३ ॥

तयोः । अहम् । परिनृत्यन्त्योःऽइव । न । वि । जानामि । यतरा । परस्तात् ।
पुमान् । एनत् । वयति । उत् । गृणत्ति । पुमान् । एनत् । वि । जभार । अधि । नाके ॥

इमे मयूखा[9] उप [10]तस्तभुर्दिवं[11] सामानि [12]चक्रुस्तसराणि वातवे[13] ॥४४॥

इमे । मयूखाः[11] । उप । तस्तभुः[12] । दिवम् । सामानि । चक्रुः[13] । तसराणि । वातवे[14] ॥

इति चतुर्थेऽनुवाके प्रथमं सूक्तम् ।

'यो भूतम्' इति सूक्तमपि स्कम्भदेवताकम् । अत्रापि स्कम्भस्य ज्येष्ठत्वं श्रेष्ठत्वं सर्वेषामाश्रयभूतत्वं च दृश्यते ।

यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति ।
स्व१र्यस्य[15] च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ १ ॥

---

१. तु. Cp; पै १७,११,२; वैदु. शिद्या मूको. पै. [मूको.] गुह्यं. २. °यूपम् A,B^b,D,S^m,V,Dc,Cs,Cp. ३. प्राज्ञा D,Cs. ४. अज्ञा J. ५. °नेनद् S^m; पुमाँ एनं ऋ १०,१३०,२. ६. °दुर्गृह्णन्ति K; वनुत उत्कृणत्ति ऋ. ७. पुमान्वितत्ने अधि नाके अस्मिन् ऋ. ८. मयूपा R,S^m,Cc. ९. सेदुरु सदः ऋ. १०. °गाण्योतवे ऋ. ११. मयूपाः Cp. १२. तस्थुः P. १३. चक्रुः P,P¹. १४. पातवे Bp². १५. स्वः° B^b,D,S^m, Cs; स्वः° > स्वः° B.

यः । भूतम् । च । भव्यम् । च । सर्वम् । यः । च । अधिऽतिष्ठति ।
स्वः । यस्य । च । केवलम् । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ १ ॥

स्कम्भेनेमे विष्टभिते[1] द्यौश्च भूमिश्च तिष्ठतः ।
स्कम्भ इदं सर्वमात्मन्वद् यत् प्राणन्निमिषच्च[2] यत् ॥

स्कम्भेन । इमे इति । विस्तभिते इति विऽस्तभिते । द्यौः । च । भूमिः । च । तिष्ठतः ।
स्कम्भे । इदम् । सर्वम् । आत्मन्ऽवत् । यत् । प्राणत् । निऽमिषत् । च । यत् ॥ २ ॥

तिस्रो ह प्रजा अत्यायमायन्[3] न्य१न्या[4] अर्कमभितोऽविशन्त[5] ।
बृहन्[6] ह[6] तस्थौ "रजसो विमानो[7] 'हरितो हरिणीरा[8] विवेश ॥ ३ ॥

तिस्रः । ह । प्रऽजाः । अतिऽआयम् । आयन् । नि । अन्याः । अर्कम् । अभितः । अविशन्त ।
बृहन् । ह । तस्थौ । रजसः । विऽमानः । हरितः । हरिणीः । आ । विवेश ॥ ३ ॥

द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत ।
तत्राहतास्त्रीणि शतानि शङ्कवः षष्टिश्च[9] खीला अविचाचला ये ॥ ४ ॥

द्वादश । प्रऽधयः । चक्रम् । एकम् । त्रीणि । नभ्यानि । कः । ऊं इति । तत् । चिकेत ।
तत्र । आऽहताः । त्रीणि । शतानि । शङ्कवः । षष्टिः[10] । च । खीलाः । अविऽचाचलाः । ये ॥

इदं सवितर्वि जानीहि षड् यमा एक एकजः ।
तस्मिन् हापित्वमिच्छन्ते य एषामेक एकजः ॥ ५ ॥

इदम् । सवितः । वि । जानीहि । षट् । यमाः । एकः । एकऽजः[11] ।
तस्मिन् । ह । अपिऽत्वम्[12] । इच्छन्ते । यः । एषाम् । एकः । एकऽजः ॥ ५ ॥

आविः सन्निहितं "गुहा जरन्नाम[13] महत् पदम् ।
"तत्रेदं सर्वमार्पितमेजत्[14] प्राणत् प्रतिष्ठितम्[15] ॥ ६ ॥

आविः । सत् । निऽहितम् । गुहा । जरत् । नाम । महत् । पदम् ।

---

१. विष्कभिते पै १६,१०१,१. २. °मिषयच्च K. ३. अत्यायमीयुर ऋ ८,१०१,१४ जैब्रा १,२२९ ऐआ २,१,१. ४. न्यु१न्या B,$B^{b}$,D,$S^{m}$,Cs. ५. °तो विविश्रे ऋ. ऐआ.; विविश्युः जैब्रा. ६. बृहद्ध ऋ. जैब्रा. ऐआ. ७. भुवनेष्वन्तः ऋ. ऐआ. † विमाने जैब्रा. ८. पवमानो हरित आ ऋ. जैब्रा. ऐआ. ९. षष्टिश्च A,$B^{b}$,K,$S^{m}$,Dc,Cs. १०. षष्टिः P,$P^{1}$. ११. एकऽजाः P. १२. आपिऽत्वम् WI. १३. °हाचर° मुंउ २,२,१. १४. अत्रैतत्समर्पि° मुंउ. १५. निमिषच्च यत् पै १६,१०१,५.

तत्रे । इदम् । सर्वम् । आर्पितम् । एजत् । प्राणत् । प्रतिऽस्थितम् ॥ ६ ॥

एकचक्रं[1] वर्तत एकनेमि सहस्राक्षरं प्र पुरो नि पश्चा[2] ।
अर्धेन विश्वं भुवनं जजान यदस्यार्धं 'कं३ तद् बभूव'[3] ॥ ७ ॥

एकऽचक्रम् । वर्तते । एकऽनेमि । सहस्रऽअक्षरम् । प्र । पुरः । नि । पश्चा ।
अर्धेन । विश्वम् । भुवनम् । जजान । यत् । अस्य । अर्धम् । क्व । तत् । बभूव ॥ ७ ॥

पञ्चवाही वहत्यग्रमेषां[4] प्रष्टयो[5] युक्ता अनुसंवहन्ति[6] ।
अयातमस्य ददृशे न यातं परं नेदीयोऽवरं दवीयः ॥ ८ ॥

पञ्चऽवाही । वहति । अग्रम् । एषाम् । प्रष्टयः[7] । युक्ताः । अनुऽसंवहन्ति ।
अयातम् । अस्य । ददृशे । न । यातम् । परम् । नेदीयः । अवरम् । दवीयः ॥ ८ ॥

तिर्यग्बिलश्चमस[8] ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम् ।
तदासत[9] ऋषयः सप्त साकं[10] ये अस्य[11] गोपा महतो बभूवुः ॥ ९ ॥

तिर्यक्ऽबिलः । चमसः । ऊर्ध्वऽबुध्नः । तस्मिन् । यशः । निऽहितम् । विश्वऽरूपम् ।
तत् । आसते । ऋषयः । सप्त । साकम् । ये । अस्य[12] । गोपाः । महतः । बभूवुः ॥ ९ ॥

या पुरस्ताद् युज्यते "या च"[13] पश्चाद् या विश्वतो युज्यते "या च"[13] सर्वतः ।
यया यज्ञः प्राङ् तायते तां त्वा पृच्छामि कतमा सर्चाम्[14] ॥ १० ॥

या । पुरस्तात् । युज्यते । या । च । पश्चात् । या । विश्वतः । युज्यते । या । च । सर्वतः ।
यया । यज्ञः । प्राङ् । तायते । ताम् । त्वा । पृच्छामि । कतमा । सा । ऋचाम् ॥ १० ॥

यदेजति पतति[15] यच्च तिष्ठति प्राणदप्राणन्निमिषच्च "यद् भुवत्"[16] ।
तद् दाधार पृथिवीं "विश्वरूपं"[17] तत् संभूय भवत्येकमेव ॥ ११ ॥

यत् । एजति । पतति । यत् । च । तिष्ठति । प्राणत् । अप्राणत् । निऽमिषत् । च । यत् ।
भुवत् । तत् । दाधार । पृथिवीम् । विश्वऽरूपम् । तत् । समऽभूय । भवति । एकम् । एव ॥ ११ ॥

---

१. अष्टाचक्रं अ ११,४,२२. २. पश्चात् पै १६,१०१,२. ३. कॅ३ R; कतमः स केतुः अ.; किमु तस्य केतुः पै. ४. °ग्रमस्य पै १६,१०१,३. ५. पृष्ठयो K,K^m,S^m, Dc,WM. ६. अनुस° R,S^m. ७. पृष्ठ्यः V,J,Cp,WM; प्रष्ठ्यः P; प्रष्टर्यः P². ८. अर्वाग्बिं° माश १४,५,२,४ बृउ २,२,३. ९. तस्यासत माश. बृउ.; अत्रासत पै १६, १०१,५. १०. तीरे माश. बृउ. ११. अंस्य D.K^m. १२. अस्य P. १३. योत पै १६,१०२,३. १४. सर्चा A; सुचाम् B; स ऋचाम् K^m,R²,RW., पै. १५. चरति पै १,१०२,४. १६. तिष्ठत् पै. १७. धामुतामूं पै.

अनन्तं विततं पुरुत्राऽनन्तमन्तवच्चा समन्ते ।
ते नाकपालश्चरति विचिन्वन्[1] विद्वान् भूतमुत[2] भव्यमस्य ॥ १२ ॥
अनन्तम् । विऽततम् । पुरुऽत्रा । अनन्तम् । अन्तऽवत् । च । समन्ते इति सम्ऽअन्ते ।
ते इति । नाकऽपालः । चरति । विऽचिन्वन् । विद्वान् । भूतम् । उत । भव्यम् । अस्य ॥

प्रजापतिश्चरति गर्भे अन्तरदृश्यमानो[3] बहुधा वि[4] जायते ।
[5]अर्धेन विश्वं भुवनं जजान[5] यदस्यार्धं [6]कतमः स केतुः[6] ॥ १३ ॥
प्रजाऽपतिः । चरति । गर्भे । अन्तः । अदृश्यमानः । बहुऽधा । वि । जायते ।
अर्धेन । विश्वम् । भुवनम् । जजान । यत् । अस्य । अर्धम् । कतमः । सः । केतुः ॥

ऊर्ध्वं भरन्तमुदकं कुम्भेनेवोदहार्यम् ।
पश्यन्ति[7] सर्वे चक्षुषा न सर्वे मनसा विदुः[8] ॥ १४ ॥
ऊर्ध्वम् । भरन्तम् । उदकम् । कुम्भेनऽइव । उदऽहार्यम् ।
पश्यन्ति । सर्वे । चक्षुषा । न । सर्वे । मनसा । विदुः ॥ १४ ॥

दूरे पूर्णेन वसति दूर ऊनेन हीयते ।
महद् यक्षं भुवनस्य मध्ये तस्मै बलिं राष्ट्रभृतो भरन्ति ॥ १५ ॥
दूरे । पूर्णेन । वसति । दूरे । ऊनेन । हीयते ।
महत् । यक्षम् । भुवनस्य । मध्ये । तस्मै । बलिम् । राष्ट्रऽभृतः । भरन्ति ॥ १५ ॥

यतः सूर्य उदेत्यस्तं यत्र [9]च गच्छति[9] ।
[10]तदेव मन्येऽहं ज्येष्ठं तदु[10] नात्येति [11]किं चन[11] ॥ १६ ॥
यतः । सूर्यः । उत्ऽएति । अस्तम् । यत्र । च । गच्छति ।
तत् । एव । मन्ये । अहम् । ज्येष्ठम् । तत् । ऊं इति । न । अति । एति । किम् । चन ॥

ये अर्वाङ्[12] मध्य उत वा पुराणं[12] वेदं विद्वांसमभितो वदन्ति[13] ।
आदित्यमेव ते परि वदन्ति सर्वे अग्निं द्वितीयं त्रिवृतं[14] च हंसम् ॥ १७ ॥

---

१. प्रजानन् पै १६,१०१,८. २. भूतं यदि पै. ३. रजायमानो मा ३१,१९ तैआ ३,१३,११. ४. प्र पै १६,१०२,२. ५. अर्धेनेदं परि बभूव विश्वं पै. ६. किमु तज्जज्ञान पै. ७. पश्यन्तु पै १६,१०१,१०. ८. विदुः P³,M,I. ९. निगोपति पै १६,१०२,५. १०. तं देवाः सर्वेऽर्पिता स्तदु कउ २,१,९. † वतो पै. ११. कश्चन कउ. १२. पुराणे तैआ २,१५,८. १३. वदन्ति तैआ. १४. तृतीयं तैआ.

ये । अर्वाक् । मध्ये । उत । वा । पुराणम् । वेदम् । विद्वांसम् । अभितः । वदन्ति । आदित्यम् ।
एव । ते । परि । वदन्ति । सर्वे । अग्निम् । द्वितीयम् । त्रिऽवृतम् । च । हंसम् ॥ १७ ॥

सहस्राह्णयं वियतावस्य[1] पक्षौ हरेर्हंसस्य पततः[3] स्वर्गम् ।
स देवान्त्सर्वानुरस्युपदद्य[4] संपश्यन् याति भुवनानि विश्वा ॥ १८ ॥

सहस्रऽअह्न्यम् । विऽयतौ । अस्य । पक्षौ । हरेः । हंसस्य । पततः । स्वःऽगम् ।
सः । देवान् । सर्वान् । उरसि । उपऽदद्य । सम्ऽपश्यन् । याति । भुवनानि । विश्वा ॥१८॥

सत्येनोर्ध्वस्तपति ब्रह्मणार्वाङ् वि पश्यति ।
प्राणेन तिर्यङ् प्राणति यस्मिन् ज्येष्ठमधि श्रितम् ॥ १९ ॥

सत्येन । ऊर्ध्वः । तपति । ब्रह्मणा । अर्वाङ् । वि । पश्यति ।
प्राणेन । तिर्यङ् । प्र । अनति[5] । यस्मिन् । ज्येष्ठम् । अधि । श्रितम् ॥ १९ ॥

यो वै ते विद्यादरणी याभ्यां निर्मथ्यते वसु ।
स विद्वान् ज्येष्ठं मन्येत स विद्याद् ब्राह्मणं महत् ॥ २० ॥

यः । वै । ते इति । विद्यात् । अरणी इति । याभ्याम् । निःऽमथ्यते । वसु ।
सः । विद्वान् । ज्येष्ठम् । मन्येत । सः । विद्यात् । ब्राह्मणम् । महत् ॥ २० ॥

अपादग्रे समभवत् सो अग्रे [6]स्वर्[7]राभरत् ।
चतुष्पाद् भूत्वा भोग्यः सर्वमादत्त भोजनम् ॥ २१ ॥

अपात् । अग्रे । सम् । अभवत् । सः । अग्रे । स्वः । आ । अभरत् ।
चतुःऽपात् । भूत्वा । भोग्यः । सर्वम् । आ । अदत्त । भोजनम् ॥ २१ ॥

भोग्यो भवदथो अन्नमदद् बहु । यो देवमुत्तरावन्तमुपासातै सनातनम् ॥२२॥

भोग्यः । भवत्[8] । अथो इति । अन्नम् । अदत् । बहु ।
यः । देवम् । उत्तरऽवन्तम् । उपऽआसातै । सनातनम् ॥ २२ ॥

सनातनमेनमाहुरुताद्य स्यात् पुनर्णवः ।

---

१. अर्वाङ् मूको. ( द्र. शंपा. WM ). २. युतावस्य पै १८,२४,६. ३. हरतः पै.; °त Bᵇ,D,Sᵐ,V,Cs. ४. विश्वान् देवान् ? तिनस्ससथुः पै. ५. अनंति P,J. ६. स्वर्३° B,Bᵇ,D,Sᵐ,Cs. ७. इह पादविभागचिह्नम् Bp².

अहोरात्रे प्र जायेते अन्यो अन्यस्य रूपयोः ॥ २३ ॥

सनातनम् । एनम् । आहुः । उत । अद्य । स्यात् । पुनःऽनवः ।
अहोरात्रे इति । प्र । जायेते इति । अन्यः । अन्यस्य । रूपयोः ॥ २३ ॥

शतं सहस्रमयुतं न्यर्बुदमसंख्येयं स्वमस्मिन् निविष्टम् ।
तदस्य घ्नन्त्यभिपश्यत एव तस्माद् देवो रोचत एष एतत् ॥ २४ ॥

शतम् । सहस्रम् । अयुतम् । निऽअर्बुदम् । असम्ऽख्येयम् । स्वम् । अस्मिन् । निऽविष्टम् ।
तत् । अस्य । घ्नन्ति । अभिऽपश्यतः । एव । तस्मात् । देवः । रोचते । एषः । एतत् ॥ २४ ॥

बालादेकमणीयस्कमुतैकं नेव दृश्यते ।
ततः परिष्वजीयसी देवता सा मम प्रिया ॥ २५ ॥

बालात् । एकम् । अणीयःऽकम् । उत । एकम् । नऽइव । दृश्यते ।
ततः । परिऽस्वजीयसी । देवता । सा । मम । प्रिया ॥ २५ ॥

इयं कल्याण्यजरा मर्त्यस्यामृता गृहे ।
यस्मै कृता शये स यश्चकार जजार सः ॥ २६ ॥

इयम् । कल्याणी । अजरा । मर्त्यस्य । अमृता । गृहे ।
यस्मै । कृता । शये । सः । यः । चकार । जजार । सः ॥ २६ ॥

त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥२७॥

त्वम् । स्त्री । त्वम् । पुमान् । असि । त्वम् । कुमारः । उत । वा । कुमारी ।
त्वम् । जीर्णः । दण्डेन । वञ्चसि । त्वम् । जातः । भवसि । विश्वतःऽमुखः ॥ २७ ॥

उतैषां पितोत वा पुत्र एषामुतैषां ज्येष्ठ उत वा कनिष्ठः ।
एको ह देवो मनसि प्रविष्टः प्रथमो जातः स उ गर्भे अन्तः ॥२८॥

उत । एषाम् । पिता । उत । वा । पुत्रः । एषाम् । उत । एषाम् । ज्येष्ठः । उत । वा । कनिष्ठः ।
एकः । ह । देवः । मनसि । प्रऽविष्टः । प्रथमः । जातः । सः । ऊं इति । गर्भे । अन्तः ॥

[1]पूर्णात् पूर्णमुदचति [2]पूर्णं पूर्णेन सिच्यते[3] ।
[4]उतो तदद्य विद्याम[5] यतस्तत् परिषिच्यते ॥ २९ ॥

पूर्णात् । पूर्णम् । उत् । अचति । पूर्णम् । पूर्णेन । सिच्यते ।
उतो इति । तत् । अद्य । विद्याम । यतः । तत् । परिऽसिच्यते ॥ २९ ॥

एषा सनत्नी[4] सनमेव जातैषा पुराणी परि सर्वं बभूव[5] ।
मही देव्यु१षसो[6] विभाती सैकेनैकेन[7] मिषता वि चष्टे ॥ ३० ॥

एषा । सनत्नी । सनम् । एव । जाता । एषा । पुराणी । परि । सर्वम् । बभूव ।
मही । देवी । उषसः । विऽभाती । सा । एकेनऽएकेन । मिषता । वि । चष्टे ॥ ३० ॥

अविर्वै नाम [8]देवतर्तेनास्ते[8] परीवृता ।
तस्या रूपेणेमे वृक्षा हरिता हरितस्रजः ॥ ३१ ॥

अविः । वै । नाम । देवता । ऋतेन । आस्ते । परिऽवृता ।
तस्याः । रूपेण । इमे । वृक्षाः । हरिताः । हरितऽस्रजः ॥ ३१ ॥

अन्ति सन्तं न जहात्यन्ति सन्तं न पश्यति ।
देवस्य पश्य काव्यं न ममार न जीर्यति ॥ ३२ ॥

अन्ति । सन्तम् । न । जहाति । अन्ति । सन्तम् । न । पश्यति ।
देवस्य[9] । पश्य । काव्यम् । न । ममार । न । जीर्यति ॥ ३२ ॥

अपूर्वेणेषिता[10] वाचस्ता वदन्ति यथायथम् ।
वदन्तीर्यत्र गच्छन्ति तदाहुर्ब्राह्मणं महत् ॥ ३३ ॥

अपूर्वेण । इषिताः । वाचः । ताः । वदन्ति । यथाऽयथम् ।
वदन्तीः । यत्र । गच्छन्ति । तत् । आहुः । ब्राह्मणम् । महत् ॥ ३३ ॥

---

१. ऊनात् पै १६,१०२,१. २. पूर्णाद्दूनमुदच्यते पै. ३. कविस्तद् ब्रह्मणा वेद पै.
४. सपत्नी $K^m$. ५. बभूवं B. ६. देव्यु१° सात°.; देव्युर् $B^b$,D,$K^m$,$S^m$,Dc,Cs.
७. °केनि (?) K. ८. देवतं ऋते° RW. ९. देव्यस्य P. १०. अपूर्वे° B.

यत्र॑ दे॒वाश्च॑ मनु॒ष्या॑श्चा॒रा नाभा॑विव श्रि॒ताः ।
अ॒पां त्वा॑ पु॒ष्पं॑ पृच्छामि॒ यत्र॒ तन्मा॒यया॑ हि॒तम् ॥ ३४ ॥

यत्र॑ । दे॒वाः । च॒ । म॒नु॒ष्याः॑ । च॒ । अ॒राः । नाभौ॑ऽइव । श्रि॒ताः ।
अ॒पाम् । त्वा॒ । पु॒ष्पम् । पृ॒च्छा॒मि॒ । यत्र॑ । तत् । मा॒यया॑ । हि॒तम् ॥ ३४ ॥

येभि॒र्वात॑ इषि॒तः प्र॒वाति॒ ये दद॑न्ते॒ पञ्च॒ दिशः॑ स॒ध्रीचीः॑[1] ।
य [2]आहु॑तिम॒त्यम॑न्यन्त दे॒वा अ॒पां ने॒तारः॑ कत॒मे त आ॑सन् ॥ ३५ ॥

येभिः॑ । वातः॑ । इ॒षि॒तः । प्र॒ऽवाति॑ । ये । दद॑न्ते । पञ्च॑ । दिशः॑ । स॒ध्रीचीः॑ ।
ये । आऽहु॑तिम् । अ॒ति॒ऽअम॑न्यन्त । दे॒वाः । अ॒पाम् । ने॒तारः॑ । क॒त॒मे । ते । आ॒स॒न् ॥

इ॒माम॑षां पृ॑थि॒वीं वस्त॒ एको॒ऽन्तरि॑क्षं॒ पर्येको॑ बभूव ।
दिव॑मेषां[3] ददते॒ यो वि॑ध॒र्ता विश्वा॒ आशाः॒ प्रति॑ रक्षन्त्येके॑[4] ॥ ३६ ॥

इ॒माम् । ए॒षा॒म् । पृ॒थि॒वीम् । वस्ते॑ । एकः॑ । अ॒न्तरि॑क्षम् । परि॑ । एकः॑ । ब॒भू॒व॒ ।
दिव॑म् । ए॒षा॒म् । द॒द॒ते॒ । यः । वि॒ऽध॒र्ता । विश्वाः॑ । आशाः॑ । प्रति॑ । र॒क्ष॒न्ति॒ । एके॑ ॥

यो वि॒द्यात् सू॒त्रं वित॑तं॒ यस्मि॒न्नोताः॑ प्र॒जा इ॒माः ।
सू॒त्रं सू॒त्रस्य॒ यो वि॒द्यात् स वि॑द्या॒द् ब्राह्म॑णं म॒हत् ॥ ३७ ॥

यः । वि॒द्यात् । सू॒त्रम् । वि॒ऽत॑तम् । यस्मि॑न् । आऽउ॑ताः । प्र॒ऽजाः । इ॒माः ।
सू॒त्रम् । सू॒त्रस्य॑ । यः । वि॒द्यात् । सः । वि॒द्यात् । ब्राह्म॑णम् । म॒हत् ॥ ३७ ॥

वे॒दाहं सू॒त्रं वित॑तं॒ यस्मि॒न्नोताः॑ प्र॒जा इ॒माः ।
सू॒त्रं सू॒त्रस्या॒हं वे॒दाथो॑[5] यद् ब्राह्म॑णं म॒हद् ॥ ३८ ॥

वेद॑ । अ॒हम् । सू॒त्रम् । वि॒ऽत॑तम् । यस्मि॑न् । आऽउ॑ताः । प्र॒ऽजाः । इ॒माः ।
सू॒त्रम् । सू॒त्रस्य॑ । अ॒हम् । वे॒द॒ । अथो॒ इति॑ । यत् । ब्राह्म॑णम् । म॒हत् ॥ ३८ ॥

यद॑न्त॒रा द्यावा॑पृथि॒वी अ॒ग्निरैत् प्र॒दह॑न् वि॒श्वदा॒व्यः॑ ।
यत्राति॑ष्ठ॒न्नेक॑पत्नीः प॒रस्ता॒त् क्वे॒वासी॑न्मात॒रिश्वा॑ त॒दानी॑म् ॥ ३९ ॥

---

१. समीचीः जैउब्रा १,३४,६. २. आहुतीरत्य° जैउब्रा. ३. दिवमेको जैउब्रा १,३४,७. ४. °न्त्यन्ये जैउब्रा. ५. वेदाथो B,K",V.

यत् । अन्तरा । द्यावापृथिवी इति । अग्निः । ऐत् । प्रऽदहन् । विश्वऽदाव्यः ।
यत्रं । अतिष्ठन् । एकऽपत्नीः । पुरस्तात् । क्व॑ऽइव[1] । आसीत् । मातरिश्वा । तदानीम् ॥३९॥

अप्स्वा॑सीन्मातरिश्वा प्रविष्टः प्रविष्टा देवाः सलिलान्यासन् ।
'बृहन् ह तस्थौ रजसो विमानः[2] पवमानो हरित आ विवेश ॥ ४० ॥

अप्ऽसु । आसीत् । मातरिश्वा । प्रऽविष्टः । प्रऽविष्टाः । देवाः । सलिलानि । आसन् ।
बृहन् । ह । तस्थौ । रजसः । विऽमानः । पवमानः । हरितः । आ । विवेश ॥ ४० ॥

उत्तरेणेव गायत्रीममृतेऽधि वि चक्रमे ।
साम्ना ये साम संविदुरजस्तद् ददृशे क्व ॥ ४१ ॥

उत्तरेणऽइव । गायत्रीम् । अमृते । अधि । वि । चक्रमे ।
साम्ना । ये । साम । समऽविदुः । अजः । तत् । ददृशे । क्व ॥ ४१ ॥

निवेशनः[3] संगमनो वसूनां देव इव सविता सत्यधर्मा ।
इन्द्रो न तस्थौ समरे धनानाम्[4] ॥ ४२ ॥

निऽवेशनः । समऽगमनः[5] । वसूनाम् । देवःऽइव । सविता । सत्यऽधर्मा ।
इन्द्रः । न । तस्थौ । समऽअरे । धनानाम् ॥ ४२ ॥

पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम् ।
तस्मिन् यद् यक्षमात्मन्वत् तद् वै ब्रह्मविदो विदुः ॥ ४३ ॥

पुण्डरीकम् । नवऽद्वारम् । त्रिऽभिः । गुणेभिः । आऽवृतम् ।
तस्मिन् । यत् । यक्षम् । आत्मन्ऽवत् । तत् । वै । ब्रह्मऽविदः । विदुः ॥ ४३ ॥

अकामो धीरो अमृतः स्वयंभू रसेन तृप्तो न कुतश्चनोनः ।
तमेव विद्वान् न बिभाय मृत्योरात्मानं धीरमजरं युवानम् ॥ ४४ ॥

अकामः । धीरः । अमृतः । स्वयम्ऽभूः । रसेन । तृप्तः । न । कुतः । चन । ऊनः ।

---

१. क्वऽइव P,J. २. बृहद्ध तस्थौ भुवनेष्वन्तः ऋ ८,१०१,१४. ३. रायो बुध्नः ऋ १०,१३९,३. ४. वसूनाम् A: पथीनाम् मा १२,६६ तै ४,२,५,५ मै २,७,१२ काठ १६,१२. ५. सुऽगमनः P,

तम् । एव । विद्वान् । न । बिभाय । मृत्योः । आत्मानम् । धीरम् । अजरम् । युवानम् ॥ ४४ ॥

इति चतुर्थेऽनुवाके द्वितीयं सूक्तम् ।

इति चतुर्थोऽनुवाकः ।

'अघायताम्' इति सूक्तम् आहुत्यर्थगोवधे विनियुज्यते । सा च वन्ध्या गौः शतौदनेत्युच्यते । तस्या वधेन तस्या मांसाहुत्या च यद्यजनं तद् अग्निष्टोमादपि अतिरात्रादपि च श्रेष्ठम् इत्यादिरूपा प्रशंसा । यैवं हन्यते तां प्रति हन्तृभ्यो मा भैषीस्त्वं देवी भविष्यसि त्वां स्वर्गं देवा गोप्स्यन्तीत्यादि प्रोत्साहनम् । यस्त्वां हन्ति यो वा पचति यो वा जुहोति स उत्तमं स्वर्गं गच्छतीत्यादिका गोभिवचनेन प्रशंसा च क्रियते गोमेधस्य ।

सांप्रदायिकास्तु एवम्—

'अघायताम्' इत्यर्थसूक्तेन शतौदनसवे निरुप्तहविरभिमर्शनं संपातं दातृवाचनं दानं च कुर्यात् । तथा च सूत्रम्—" 'अघायताम्' (१) इत्यत्र मुखम् अपिनह्यमानम् अनुमन्त्रयते । 'सपत्नेषु वज्रम्' (१), 'ग्रावा त्वेषः' (२) इति निपतन्तम् । 'वेदिष्टे' (२) इति मन्त्रोक्तम् आस्तृणाति । विंशत्योदनासु श्रयणीषु शतम् अवदानानि वध्रिसंनद्धानि[1] पृथगोदनेषूपर्यादधाति । मध्यमायाः प्रथमे रन्ध्रिण्यामिक्षां दशमेऽभितः सप्तसप्तापूपान् परिश्रयति । पञ्चदशे पुरोडाशौ । अग्रे हिरण्यम् । 'अपो देवीः' (२७) इत्यग्रत उदकुम्भान् । 'वालास्ते' (३) इति सूक्तेन संपातवतीम् । प्रदक्षिणम् अग्निम् अनुपरिणीयोपवेशनप्रक्षालनाचमनम् उक्तम् । पाणावुदकमानीय । अथामुष्यौदनस्यावदानानां च मध्यात् पूर्वार्धाच्च द्विरवदायोपरिष्टाद् उदकमभिघार्य जुहोति 'सोमेन पूतो जठरे सीद ब्रह्मणाम्' 'आर्षेयेषु नि दध ओदन त्वा' इति । अथ प्राश्नाति । 'अग्नेष्ट्वास्येन प्राश्नामि बृहस्पतेर्मुखेन इन्द्रस्य त्वा जठरे सादयामि वरुणस्योदरे तद्यथाहुतम् इष्टं प्राश्नीयाद् दवात्मा[2] त्वा प्राश्नाम्यात्मास्यात्मन्नात्मानं मे मा हिंसीः' इति । प्राशितम् अनुमन्त्रयते 'योऽग्निर्नृमणा नाम ब्राह्मणेषु प्रविष्टः । तस्मिन्म एष सुहुतोऽस्त्वोदनः स मा मा हिंसीत् परमे व्योमन्' । सो अस्मभ्यम् अस्तु परमे व्योमन्' इति । दातारं वाचयति । दीक्षणान्तं शतौदनायाः प्रातर्जपेन व्याख्यातम्" ( कौसू. ६५,१–१६ ) इति ।

अघायतामपि नह्या मुखानि सपत्नेषु वज्रमर्पयैतम्[3] ।
इन्द्रेण दत्ता प्रथमा शतौदना भ्रातृव्यघ्नी यजमानस्य[4] गातुः ॥ १ ॥

अघऽयताम् । अपि । नह्य । मुखानि । सऽपत्नेषु । वज्रम् । अर्पय । एतम्[5] ।
इन्द्रेण । दत्ता । प्रथमा । शतऽओदना । भ्रातृव्यऽघ्नी । यजमानस्य । गातुः ॥ १ ॥

---

१. वध्रीसं° Bl. २. देवा शंपा. ३. °मेतम् R. ४. यजमानाय पै १६,१३६,१. ५. एतम् P.

वेदिष्टे[1] चर्म भवतु[2] बर्हिर्लोमानि यानि ते ।
एषा त्वा रशनाग्रभीद्[3] ग्रावा त्वैषोऽधि[4] नृत्यतु ॥ २ ॥

वेदिः । ते । चर्म । भवतु । बर्हिः । लोमानि । यानि । ते ।
एषा । त्वा । रशना । अग्रभीत् । ग्रावा । त्वा । एषः । अधि । नृत्यतु ॥ २ ॥

वालास्ते प्रोक्षणीः सन्तु जिह्वा सं माष्ट्र्वघ्न्ये[5] ।
शुद्धा त्वं यज्ञिया भूत्वा दिवं प्रेहि शतौदने ॥ ३ ॥

बालाः । ते । प्रऽउक्षणीः । सन्तु । जिह्वा । सम् । मार्ष्टु । अघ्न्ये ।
शुद्धा । त्वम् । यज्ञिया । भूत्वा । दिवम् । प्र । इहि । शतऽओदने ॥ ३ ॥

यः शतौदनां पचति कामप्रेण स कल्पते ।
प्रीता ह्यस्यर्त्विजः[6] सर्वे यन्ति[7] यथायथम् ॥ ४ ॥

यः । शतऽओदनाम् । पचति । कामऽप्रेण । सः । कल्पते ।
प्रीताः । हि । अस्य । ऋत्विजः । सर्वे । यन्ति । यथाऽयथम् ॥ ४ ॥

स स्वर्गमा रोहति[8] यत्रादस्त्रिदिवं दिवः ।
अपूपनाभिं[12] कृत्वा यो ददाति[10] शतौदनाम् ॥ ५ ॥

सः । स्वःऽगम् । आ । रोहति । यत्र । अदः । त्रिऽदिवम् । दिवः ।
अपूपऽनाभिम् । कृत्वा । यः । ददाति । शतऽओदनाम् ॥ ५ ॥

स तांल्लोकान्त्समाप्नोति "ये दिव्या ये च पार्थिवाः"[11] ।
हिरण्यज्योतिषं[9] कृत्वा यो ददाति शतौदनाम् ॥ ६ ॥

सः । तान् । लोकान् । सम् । आप्नोति । ये । दिव्याः । ये । च । पार्थिवाः ।
हिरण्यऽज्योतिषम् । कृत्वा । यः । ददाति । शतऽओदनाम् ॥ ६ ॥

ये ते देवि शमितारः पक्तारो ये च ते जनाः ।
ते त्वा सर्वे गोप्स्यन्ति मैभ्यो भैषीः शतौदने ॥ ७ ॥

---

१. वेदिस्ते पै १६,१३६,२. २. भवति पै. ३. °ग्रहीद् पै. ४. °पो अधि पै.
५. मार्ष्ट्वघ्न्ये B; माष्ट्र्वघ्न्ये पै १६,१२६,३. ६. °स्य ऋत्विज° RW. पै १६,१२६,४.
७. यन्तु पै. ८. रोहतु पै १६,१२६,६. ९. हिरण्यज्योतिषं पै. १०. ददातु पै.
११. येऽत्र देवास्समासते पै १६,१२६,७. १२. अपूपनाभिं पै.

ये । ते । देवि । शमितारः । पक्तारः । ये । च । ते । जनाः ।
ते । त्वा । सर्वे । गोप्स्यन्ति । मा । एभ्यः । भैषीः । शतऽओदने ॥ ७ ॥

वसवस्त्वा दक्षिणत उत्तरान्मरुतस्त्वा ।
आदित्याः पश्चाद् गोप्स्यन्ति साग्निष्टोममति द्रव ॥ ८ ॥

वसवः । त्वा । दक्षिणतः । उत्तरात् । मरुतः । त्वा ।
आदित्याः । पश्चात् । गोप्स्यन्ति । सा । अग्निऽस्तोमम् । अति । द्रव ॥ ८ ॥

'देवाः पितरो मनुष्या गन्धर्वाप्सरसश्च ये'।
ते त्वा सर्वे गोप्स्यन्ति सातिरात्रमति द्रव ॥ ९ ॥

देवाः । पितरः । मनुष्याः । गन्धर्वऽअप्सरसः । च । ये ।
ते । त्वा । सर्वे । गोप्स्यन्ति । सा । अतिऽरात्रम् । अति । द्रव ॥ ९ ॥

अन्तरिक्षं दिवं भूमिमादित्यान् मरुतो दिशः ।
लोकान्त्स[2] सर्वानाप्नोति यो ददाति[3] शतौदनाम् ॥ १० ॥

अन्तरिक्षम् । दिवम् । भूमिम् । आदित्यान् । मरुतः । दिशः ।
लोकान् । सः । सर्वान् । आप्नोति । यः । ददाति । शतऽओदनाम् ॥ १० ॥

घृतं प्रोक्षन्ती सुभगा देवी देवान् गमिष्यति ।
पक्तारमघ्न्ये मा हिंसीर्दिवं प्रेहि शतौदने ॥ ११ ॥

घृतम् । प्रऽउक्षन्ती । सुऽभगा । देवी । देवान् । गमिष्यति ।
पक्तारम् । अघ्न्ये । मा । हिंसीः । दिवम् । प्र । इहि । शतऽओदने ॥ ११ ॥

'ये देवा' दिविषदो 'अन्तरिक्षसदश्च ये' ये चेमे भूम्यामधि ।
तेभ्यस्त्वं धुक्ष्व' सर्वदा क्षीरं सर्पिरथो मधु ॥ १२ ॥

ये । देवाः । दिविऽसदः । अन्तरिक्षऽसदः । च । ये । ये । च । इमे । भूम्याम् । अधि ।
तेभ्यः । त्वम् । धुक्ष्व[8] । सर्वदा । क्षीरम् । सर्पिः । अथो इति । मधु ॥ १२ ॥

---

१. गन्धर्वाप्सरसो देवा रुद्रान्निरसदश्च ये पै १८,११६,९. २. लोकांश्च पै. ३. ददाति पै. ४. पितरो पै १९,११७,२. ५. ऽन्त' पै. ६. यं । Bᵇ,Kᵐ,V,Dc. ७. धुक्ष्व (!) K; धुंक्ष Bᵇ,Kᵐ,Sᵐ,Dc,Cs. ८. धुक्ष Cp.

[1]यत् ते[1] शिरो यत् [2]ते मुखं यौ कर्णौ ये च ते हनू[2] ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥ १३ ॥

यत् । ते । शिरः । यत् । ते । मुखम् । यौ । कर्णौ । ये इति । च । ते । हनू इति ।
आमिक्षाम् । दुह्रताम् । दात्रे । क्षीरम् । सर्पिः । अथो इति । मधु ॥ १३ ॥

यौ त ओष्ठौ ये नासिके ये शृङ्गे ये च तेऽक्षिणी । आमिक्षां० ॥१४॥

यौ । ते । ओष्ठौ । ये इति । नासिके इति । ये इति । शृङ्गे इति । ये इति । च । ते ।
अक्षिणी इति । आमिक्षाम् । ० ॥ १४ ॥

[3]यत् ते[3] क्लोमा[4] यद्धृदयं पुरीतत् सहकण्ठिका । आमिक्षां० ॥१५॥

यत् । ते । क्लोमा । यत् । हृदयम् । पुरिऽतत् । सहऽकण्ठिका । आमिक्षाम् ।०॥१५॥

यत् ते यकृद् ये मतस्ने[5] यदान्त्रं[6] याश्च ते गुदाः । आमिक्षां० ॥१६॥

यत् । ते । यकृत् । ये इति । मतस्ने[5] इति । यत् । आन्त्रम् । याः । च । ते । गुदाः । आमिक्षाम् ।०।

यस्ते प्लाशियों[7] वनिष्ठुर्यौ[8] कुक्षी [9]यच्च चर्म ते[9] । आमिक्षां० ॥१७॥

यः । ते । प्लाशिः । यः । वनिष्ठुः । यौ । कुक्षी इति । यत् । च । चर्म । ते । आमिक्षाम् ।०।

[3]यत् ते[3] मज्जा [10]यदस्थि[10] यन्मांसं यच्च लोहितम् । आमिक्षां० ॥१८॥

यत् । ते । मज्जा । यत् । अस्थि । यत् । मांसम् । यत् । च । लोहितम् । आमिक्षाम् ।०॥

यौ ते बाहू ये दोषणी[11] यावंसौ या च ते ककुत् । आमिक्षां० ॥ १९ ॥

यौ । ते । बाहू इति । ये इति । दोषणी[11] इति । यौ । अंसौ । या । च । ते । ककुत् । आमिक्षाम् ।०।

यास्ते ग्रीवा ये स्कन्धा याः [12]पृष्टीर्याश्च पर्शवः । आमिक्षां० ॥२० ॥

याः । ते । ग्रीवाः । ये । स्कन्धाः । याः । पृष्टीः[12] । याः । च । पर्शवः । आमिक्षाम् ।०॥

---

१. येत्ते (?) B.　२. ये शृङ्गे यौ कर्णौ यौ च ते अक्ष्यौ पै १६,१२७,२.　३. यस्ते kW.　४. क्लोमा K.　५. मतस्ने A,B,Km,R,Dc,P,P^s,J.　६. °न्त्राणि पै १६,१२७,६.　७. प्लाशियों > प्लाशुर्यो Sm; प्लाशुर्यो पै १६,१२७,७.　८. °ष्ठु > °ष्ठु° — Dc; °ष्ठु° A,B^b,D,K,R,Sm,V,P,P^s,J.　९. यच्चोदरम् पै.　१०. यान्यस्थीनि पै १६,१२७,८.　११. दोषणी A,P,J,Cp.　१२. पृष्ठी° K,Km,Sm,Dc,Cp; पृष्ठीः P.

यौ ते ऊरू अष्ठीवन्तौ[1] ये श्रोणी या च ते भसत् । आमिक्षां० ॥ २१ ॥

यौ । ते । ऊरू इति । अष्ठीवन्तौ[2] । ये इति । श्रोणी इति । या । च । ते । भसत् । आमिक्षाम् ।०।

यत् ते पुच्छं ये ते बाला यदूधो ये च ते स्तनाः । आमिक्षां० ॥ २२ ॥

यत् । ते । पुच्छम् । ये । ते । बालाः । यत् । ऊधः । ये । च । ते । स्तनाः । आमिक्षाम् ।०।

यास्ते जङ्घाः याः कुष्ठिका ऋच्छरा[3] ये च ते शफाः ।
आमिक्षां दुहृतां दात्रे क्षीरं सर्पिरथो मधु ॥ २३ ॥

याः । ते । जङ्घाः । याः । कुष्ठिकाः[4] । ऋच्छराः । ये । च । ते । शफाः ।
आमिक्षाम् । दुहृताम् । दात्रे । क्षीरम् । सर्पिः । अथो इति । मधु ॥ २३ ॥

यत् ते चर्म शतौदने यानि लोमान्यघ्न्ये ।
आमिक्षां दुहृतां दात्रे क्षीरं सर्पिरथो मधु ॥ २४ ॥

यत् । ते । चर्म । शतऽओदने । यानि । लोमानि । अघ्न्ये ।
आमिक्षाम् । दुहृताम् । दात्रे । क्षीरम् । सर्पिः । अथो इति । मधु ॥ २४ ॥

क्रोडौ ते स्तां पुरोडाशावाज्येनाभिघारितौ ।
तौ पक्षौ देवि कृत्वा सा [5]पक्तारं[5] दिवं वह ॥ २५ ॥

क्रोडौ । ते । स्ताम् । पुरोडाशौ । आज्येन । अभिऽघारितौ ।
तौ । पक्षौ । देवि । कृत्वा । सा । पक्तारम् । दिवम् । वह ॥ २५ ॥

उलूखले मुसले यश्च चर्मणि यो वा शूर्पे तण्डुलः कणः ।
यं वा वातो मातरिश्वा पवमानो ममाथाग्निष्टद्धोता सुहुतं कृणोतु ॥२६॥

उलूखले । मुसले । यः । च । चर्मणि । यः । वा । शूर्पे । तण्डुलः । कणः ।
यम् । वा । वातः । मातरिश्वा । पवमानः । ममाथ । अग्निः । तत् । होता । सुऽहुतम् । कृणोतु ॥२६॥

[6]अपो देवीर्मधुमतीर्घृतश्चुतो[6] ब्रह्मणां हस्तेषु प्रपृथक् सादयामि ।
यत्काम इदमभिषिञ्चामि वोऽहं [7]तन्मे सर्वं सं पद्यतां वयं स्याम पतयो रयीणाम् ।२७।

---

१. अष्ठीव॰ B,B^b,R. २. अष्ठीव॰ P^1. ३. ऋतसरा E^2,O. ४. कुष्ठिकाः P^1. ५. दातारं पै १९,१३८,९. ६. इमा अपो मधु॰ पै १९,१३८,८. ७. तथा पै.

अपः । देवीः । मधुऽमतीः । घृतऽश्चुतः । ब्रह्मणाम्[1] । हस्तेषु । प्रऽपृथक् । सादयामि ।
यत्ऽकामः । इदम् । अभिऽसिञ्चामि[2] । वः । अहम् । तत् । मे । सर्वम् । सम् । पद्यताम् ।
वयम् । स्याम । पतयः । रयीणाम् ॥ २७ ॥

इति पञ्चमेऽनुवाके प्रथमं सूक्तम् ।

'नमस्ते जायमानायै' इति सूक्ते पूर्वसूक्तोक्तवशा न केवलं मेध्यमांसात्मिका गौर्भवति अपितु सा विशसनादनन्तरं महती काचिद् देवी भूत्वा देवेषु मध्ये सर्वात्मिका भवति यज्ञियेषु च यज्ञिया भवतीत्यादि तस्या माहात्म्यं प्रशंसा चोक्ता ।

सांप्रदायिकास्तु एवम्—'नमस्ते जायमानायै' इत्यर्थसूक्तेन 'वशासवे निरुप्त-हविरभिमर्शनसंपातदातृवाचनदानानि कुर्यात् । तद् उक्तं कौशिकेन—" 'नमस्ते जायमानायै' (अ १०,१०), 'ददामि' (अ १२,४) इति वशाम् उदपात्रेण संपातवता संप्रोक्ष्याभिमन्त्र्याभिनिगद्य दद्याद् दाता वाच्यमानो 'भूमिष्ट्वा' (अ ३,२९,८) इत्येनां प्रतिगृह्णाति" (कौसू ६६,२०;२१) इति ।

नम॑स्ते जाय॑मानायै जा॒ताया॑ उ॒त ते॒ नम॑: ।
वाले॑भ्यः श॒फेभ्यो॑ रू॒पाया॑घ्न्ये ते॒ नम॑: ॥ १ ॥

नम॑: । ते॒ । जाय॑मानायै । जा॒तायै॑ । उ॒त । ते॒ । नम॑: ।
वाले॑भ्यः । श॒फेभ्य॑: । रू॒पाय॑ । अ॒घ्न्ये॒ । ते॒ । नम॑: ॥ १ ॥

यो वि॒द्यात् स॒प्त प्र॒वत॑: स॒प्त वि॒द्यात् प॑रा॒वत॑: ।
शिरो॑ य॒ज्ञस्य॒ यो वि॒द्यात् स व॒शां प्रति॑ गृह्णीयात् ॥ २ ॥

यः । वि॒द्यात् । स॒प्त । प्र॒ऽवत॑: । स॒प्त । वि॒द्यात्[3] । प॒रा॒ऽवत॑: ।
शिर॑: । य॒ज्ञस्य॑ । यः । वि॒द्यात् । सः । व॒शाम् । प्रति॑ । गृ॒ह्णी॒या॒त् ॥ २ ॥

वे॒दा॒हं स॒प्त प्र॒वत॑: स॒प्त वे॑द प॒रा॒वत॑: ।
शिरो॑ य॒ज्ञस्या॒हं वे॑द॒ सोमं॑ चा॒स्यां वि॒च॒क्ष॒णम् ॥ ३ ॥

वेद॑ । अ॒हम् । स॒प्त । प्र॒ऽवत॑: । स॒प्त । वे॒द॒ । प॒रा॒ऽवत॑: ।
शिर॑: । य॒ज्ञस्य॑ । अ॒हम् । वे॒द॒ । सोम॑म् । च॒ । अ॒स्याम् । वि॒ऽच॒क्ष॒णम् ॥ ३ ॥

---

१. ब्राह्मणाम् P. २. 'सिञ्चामि P[a]. ३. विद्वान् P.

यथा द्यौर्यया पृथिवी यथापो गुपिता इमाः ।
वशां सहस्रधारां ब्रह्मणाच्छावदामसि ॥ ४ ॥

यर्था । द्यौः । यथा । पृथिवी । यर्था । आपः । गुपिताः । इमाः ।
वशाम् । सहस्रऽधाराम् । ब्रह्मणा । अच्छऽआवदामसि ॥ ४ ॥

शतं कंसाः शतं दोग्धारः शतं गोप्तारो अधि पृष्ठे अस्याः ।
ये देवास्तस्यां प्राणन्ति ते वशां विदुरेकधा ॥ ५ ॥

शतम् । कंसाः । शतम् । दोग्धारः । शतम् । गोप्तारः । अधि । पृष्ठे । अस्याः ।
ये । देवाः । तस्याम् । प्राणन्ति । ते । वशाम् । विदुः[1] । एकऽधा ॥ ५ ॥

यज्ञपदीराक्षीरा[2] स्वधाप्राणा महीलुका ।
वशा पर्जन्यपत्नी देवाँ अप्येति[3] ब्रह्मणा ॥ ६ ॥

यज्ञऽपदी । इराऽक्षीरा । स्वधाऽप्राणा । महीलुका ।
वशा । पर्जन्यऽपत्नी । देवान् । अपि । एति । ब्रह्मणा ॥ ६ ॥

अनु त्वाग्निः प्राविशदनु सोमो वशे त्वा ।
ऊधस्ते भद्रे पर्जन्यो विद्युतस्ते स्तना वशे ॥ ७ ॥

अनु । त्वा । अग्निः । प्र । अविशत् । अनु । सोमः । वशे । त्वा ।
ऊधः । ते । भद्रे । पर्जन्यः । विऽद्युतः । ते । स्तनाः । वशे ॥ ७ ॥

अपस्त्वं धुक्षे[4] प्रथमा उर्वरा अपरा वशे ।
तृतीयं राष्ट्रं धुक्षेऽन्नं[5] क्षीरं वशे त्वम् ॥ ८ ॥

अपः । त्वम् । धुक्षे । प्रथमाः । उर्वराः । अपराः । वशे ।
तृतीयम् । राष्ट्रम् । धुक्षे[6] । अन्नम् । क्षीरम् । वशे । त्वम् ॥ ८ ॥

यदादित्यैर्हूयमानोपातिष्ठ[7] ऋतावरि ।
इन्द्रः सहस्रं पात्रान्त्सोमं त्वापाययद् वशे ॥ ९ ॥

१. विदुः P. २. °क्षीरा B^b,R,Cs. ३. अप्येतु पै १६,१०७,६. ४. धुक्षे K. ५. धुक्षे° K; धुक्षे अन्न पै १६,१०७,८. ६. धुक्षे K; धुक्षे P,J,Cp. ७. °पातिष्ठ K.

यत् । आदित्यैः । हूयमाना । उपऽअतिष्ठः । ऋतऽवरि ।
इन्द्रः । सहस्रम् । पात्रान् । सोमम् । त्वा । अपाययत् । वशे ॥ ९ ॥

यदनूचीन्द्रमैरात् 'त्वं ऋषभोह्वयत्' ।
तस्मात् ते वृत्रहा पयः क्षीरं क्रुद्धोहरद् वशे ॥ १० ॥

यत् । अनूची । इन्द्रम् । ऐः । आत् । त्वा । ऋषभः । अह्वयत् ।
तस्मात् । ते । वृत्रऽहा । पयः । क्षीरम् । क्रुद्धः । अहरत् । वशे ॥ १० ॥

यत् ते क्रुद्धो धनपतिरा क्षीरमहरद् वशे ।
इदं तदद्य नाकस्त्रिषु पात्रेषु रक्षति ॥ ११ ॥

यत् । ते । क्रुद्धः । धनऽपतिः । आ । क्षीरम् । अहरत् । वशे ।
इदम् । तत् । अद्य । नाकः । त्रिषु । पात्रेषु । रक्षति ॥ ११ ॥

त्रिषु पात्रेषु तं सोममा देव्यहरद् वशा ।
अथर्वा यत्र दीक्षितो बर्हिष्यास्त हिरण्यये ॥ १२ ॥

त्रिषु । पात्रेषु । तम् । सोमम् । आ । देवी । अहरत् । वशा ।
अथर्वा । यत्र । दीक्षितः । बर्हिषि । आस्त । हिरण्यये ॥ १२ ॥

सं हि सोमेनागत समु सर्वेण पद्वता ।
वशा समुद्रमध्यष्ठाद् गन्धर्वैः कलिभिः सह ॥ १३ ॥

सम् । हि । सोमेन । अगत । सम् । ऊं इति । सर्वेण । पत्ऽवता ।
वशा । समुद्रम् । अधि । अस्थात् । गन्धर्वैः । कलिऽभिः । सह ॥ १३ ॥

सं हि वातेनागत समु सर्वैः पतत्रिभिः ।
वशा 'समुद्रे प्रानृत्यदृचः सामानि बिभ्रती ॥ १४ ॥

---

१. त्वर्ष° A,Bᵇ,K,R,V,Dc; त्वंवृषभो° Cs; °भोर्ह्व° A,B,Bᵇ,D,K,Kᵐ,R,Sᵐ,V,Dc,Cs. २. अह्वयत् D⁴, P². ३. क्रुद्धोर्ह° A,Bᵇ,D,K,R,Dc,Cs,W.M.; क्रुद्धोऽभर° पै १६,१०७,१०. ४. °मंहरद् Kᵐ,Sᵐ; °मभरद् पै १६,१०८,१. ५. देव्यहरद् B; °व्यभरद् पै १६,१०८,२. ६. °ध्याद् K; °द्रमुचिष्ठाद्° पै १६,१०८,४. ७. अर्गतः P¹; आगत > अगत P. ८. समुद्रमत्यच्यद् भद्रा ज्योतींषि पै १६,१०८,५.

सम् । हि । वातेन । अगत । सम् । ऊं इति । सर्वैः । पतत्रिऽभिः ।
वशा । समुद्रे । प्र । अनृत्यत् । ऋचः । सामानि । बिभ्रती ॥ १४ ॥

सं हि सूर्येणागत समु सर्वेण चक्षुषा ।
वशा 'समुद्रमत्यख्यद्' भद्रा ज्योतींषि' बिभ्रती ॥ १५ ॥

सम् । हि । सूर्येण । अगत । सम् । ऊं इति । सर्वेण । चक्षुषा ।
वशा । समुद्रम् । अति । अख्यत् । भद्रा । ज्योतींषि । बिभ्रती ॥ १५ ॥

अभीवृता हिरण्येन यदतिष्ठ ऋतावरि ।
अश्वः समुद्रो भूत्वाऽध्यस्कन्दद् वशे त्वा ॥ १६ ॥

अभिऽवृता । हिरण्येन । यत् । अतिष्ठः । ऋतऽवरि ।
अश्वः । समुद्रः । भूत्वा । अधि । अस्कन्दत् । वशे । त्वा ॥ १६ ॥

तद् भद्राः समगच्छन्त वशा देष्ट्र्यथो स्वधा ।
अथर्वा यत्र दीक्षितो बर्हिष्यास्त हिरण्यये ॥ १७ ॥

तत् । भद्राः । सम् । अगच्छन्त । वशा । देष्ट्री । अथो इति । स्वधा ।
अथर्वा । यत्र । दीक्षितः । बर्हिषि । आस्त । हिरण्यये ॥ १७ ॥

वशा माता राजन्य॑स्य वशा माता स्वधे तव ।
वशाया यज्ञ' आयुधं ततश्चित्तमजायत ॥ १८ ॥

वशा । माता । राजन्य॑स्य । वशा । माता । स्वधे । तव ।
वशायाः । यज्ञे । आयुधम् । ततः । चित्तम् । अजायत ॥ १८ ॥

ऊर्ध्वो बिन्दुरुदचरद् ब्रह्मणः ककुदादधि ।
ततस्त्वं जज्ञिषे वशे ततो होताऽजायत ॥ १९ ॥

ऊर्ध्वः । बिन्दुः । उत् । अचरत् । ब्रह्मणः । ककुदात् । अधि ।
ततः । त्वम् । जज्ञिषे । वशे । ततः । होता । अजायत ॥ १९ ॥

---

१. समुद्रे प्रानृत्यदृचः सामानि पै १६,१०८,३. † 'त्यक्षद् P², M,E¹; 'त्यख्यद् K¹.

२. पै १,२५५० a इ.

आस्नस्ते गाथा अभवन्नुष्णिहाभ्यो[1] बलं वशे[2] ।
पाजस्याज्जज्ञे यज्ञ स्तनेभ्यो रश्मयस्तव[3] ॥ २० ॥

आस्नः । ते । गाथाः । अभवन्[4] । उष्णिहाभ्यः । बलम् । वशे ।
पाजस्यात् । जज्ञे । यज्ञः । स्तनेभ्यः । रश्मयः । तव ॥ २० ॥

ईर्माभ्यामयनं जातं सक्थिभ्यां च वशे तव ।
आन्त्रेभ्यो जज्ञिरे अत्रा उदरादधि वीरुधः ॥ २१ ॥

ईर्माभ्याम् । अयनम् । जातम् । सक्थिऽभ्याम् । च । वशे । तव ।
आन्त्रेभ्यः । जज्ञिरे । अत्राः । उदरात् । अधि । वीरुधः ॥ २१ ॥

यदुदरं वरुणस्यानुप्राविशथा वशे ।
ततस्त्वा ब्रह्मोदह्वयत् स हि नेत्रमवेत् तव ॥ २२ ॥

यत् । उदरम् । वरुणस्य । अनुऽप्राविशथाः । वशे ।
ततः । त्वा । ब्रह्मा । उत् । अह्वयत् । सः । हि । नेत्रम् । अवेत् । तव ॥ २२ ॥

सर्वे गर्भादवेपन्त जायमानादसूस्वः ।
ससूव हि तामाहुर्वशेति ब्रह्मभिः[5] क्लृप्तः 'स ह्यस्या बन्धुः[6] ॥ २३ ॥

सर्वे । गर्भात् । अवेपन्त । जायमानात् । असूस्वः ।
ससूव । हि । ताम् । आहुः । वशा । इति । ब्रह्मऽभिः । क्लृप्तः । सः । हि । अस्याः । बन्धुः ॥ २३ ॥

युध एकः सं सृजति यो अस्या एक इद् वशी ।
तरांसि यज्ञा अभवन्[7] तरसां चक्षुरभवद् वशा ॥ २४ ॥

युधः । एकः । सम् । सृजति[8] । यः । अस्याः । एकः । इत् । वशी ।
तरांसि । यज्ञाः । अभवन् । तरसाम् । चक्षुः । अभवत् । वशा ॥ २४ ॥

वशा यज्ञं[9] प्रत्यगृह्णाद् वशा सूर्यमधारयत्[10] ।
वशायामन्तराविशदोदनो[11] ब्रह्मणा सह ॥ २५ ॥

---

१. अभवदुष्णि° K. २. बलं वशे K.Km. † तव पै १६,१०८,१०. ३. °यो वशे पै. ४. °यम् P². ५. ब्रह्मणा पै १६,१०९,२. ६. उत बन्धुरस्याः पै. ७. °युत् A,B^b, D,S^m,V. ८. सृजाति P. ९. सूर्यं पै १६,१०९,५. १०. यज्ञम° पै. ११. °मन्तरावि° पै.; °विशद्° K^m.

सम् । हि । वातेन । अगत । सम् । ऊं इति । सर्वैः । पतत्रिऽभिः ।
वशा । समुद्रे । प्र । अनृत्यत् । ऋचः । सामानि । बिभ्रती ॥ १४ ॥

सं हि सूर्येणागत समु सर्वेण चक्षुषा ।
वशा 'समुद्रमत्यख्यद्' भद्रा ज्योतींषि' बिभ्रती ॥ १५ ॥

सम् । हि । सूर्येण । अगत । सम् । ऊं इति । सर्वेण । चक्षुषा ।
वशा । समुद्रम् । अति । अख्यत् । भद्रा । ज्योतींषि । बिभ्रती ॥ १५ ॥

अभीवृता हिरण्येन यदतिष्ठ ऋतावरि ।
अश्वः समुद्रो भूत्वाऽध्यस्कन्दद् वशे त्वा ॥ १६ ॥

अभिऽवृता । हिरण्येन । यत् । अतिष्ठः । ऋतऽवरि ।
अश्वः । समुद्रः । भूत्वा । अधि । अस्कन्दत् । वशे । त्वा ॥ १६ ॥

तद् भद्राः समगच्छन्त वशा देष्ट्र्यथो स्वधा ।
अथर्वा यत्र दीक्षितो बर्हिष्यास्त हिरण्यये ॥ १७ ॥

तत् । भद्राः । सम् । अगच्छन्त । वशा । देष्ट्री । अथो इति । स्वधा ।
अथर्वा । यत्र । दीक्षितः । बर्हिषि । आस्त । हिरण्यये ॥ १७ ॥

वशा माता राजन्यस्य वशा माता स्वधे तव ।
वशाया यज्ञ' आयुधं ततश्चित्तमजायत ॥ १८ ॥

वशा । माता । राजन्यस्य । वशा । माता । स्वधे । तव ।
वशायाः । यज्ञे । आयुधम् । ततः । चित्तम् । अजायत ॥ १८ ॥

ऊर्ध्वो बिन्दुरुदचरद् ब्रह्मणः ककुदादधि ।
ततस्त्वं जज्ञिषे वशे ततो होताऽजायत ॥ १९ ॥

ऊर्ध्वः । बिन्दुः । उत् । अचरत् । ब्रह्मणः । ककुदात् । अधि ।
ततः । त्वम् । जज्ञिषे । वशे । ततः । होता । अजायत ॥ १९ ॥

---

१. समुद्रे प्रानृत्यदृचः सामानि पै १६,१०८,१. † 'स्यक्षद् P², M,E¹; 'स्यंयद् K¹.
२. वर १,२५५० a ह.

आस्नस्ते गाथा अभवन्नुष्णिहाभ्यो[1] 'बलं वशे[2] ।
पाजस्याज्जज्ञे युज्ञ स्तनेभ्यो रुश्मयुस्तवं[3] ॥ २० ॥

आस्नः । ते । गाथाः । अभवन्[†] । उष्णिहाभ्यः । बलम् । वशे ।
पाजस्यात् । जज्ञे । यज्ञः । स्तनेभ्यः । रुश्मयः । तवं ॥ २० ॥

ईर्माभ्यामयनं जातं सक्थिभ्यां च वशे तवं ।
आन्त्रेभ्यो जज्ञिरे अत्रा उदरादधि वीरुधः ॥ २१ ॥

ईर्माभ्याम् । अयनम् । जातम् । सक्थिऽभ्याम् । च । वशे । तवं ।
आन्त्रेभ्यः । जज्ञिरे । अत्राः । उदरात् । अधि । वीरुधः ॥ २१ ॥

यदुदरं वरुणस्यानुप्राविशथा वशे ।
ततस्त्वा ब्रह्मोदंह्वयत् स हि नेत्रमवेत् तवं ॥ २२ ॥

यत् । उदरम् । वरुणस्य । अनुऽप्राविशथाः । वशे ।
ततः । त्वा । ब्रह्मा । उत् । अह्वयत् । सः । हि । नेत्रम् । अवेत् । तवं ॥ २२ ॥

सर्वे गर्भादवेपन्त जायमानादसूस्वः ।
ससूव हि तामाहुर्वशेति ब्रह्मभिः[5] क्लृप्तः 'स ह्यस्या बन्धुः[6] ॥ २३ ॥

सर्वे । गर्भात् । अवेपन्त । जायमानात् । असूस्वः ।
ससूव । हि । ताम् । आहुः । वशा । इति । ब्रह्मऽभिः । क्लृप्तः । सः । हि । अस्याः । बन्धुः ॥ २३ ॥

युध एकः सं सृजति यो अस्या एक इद् वशी ।
तरांसि युज्ञा अभवन्[7] तरसां चक्षुरभवद् वशा ॥ २४ ॥

युधः । एकः । सम् । सृजति[8] । यः । अस्याः । एकः । इत् । वशी ।
तरांसि । यज्ञाः । अभवन् । तरसाम् । चक्षुः । अभवत् । वशा ॥ २४ ॥

वशा यज्ञं[9] प्रत्यगृह्णाद् वशा सूर्यमधारयत्[10] ।
वशायामन्तरविशदोदनो[11] ब्रह्मणा सह ॥ २५ ॥

---

१. अभवदुष्णि° K. २. बलं वशे K.Km. † तव पै १६,१०८,१०. ३. °यो वशे पै. ४. °वम् P[b]. ५. ब्रह्मणा पै १६,१०९,२. ६. उत बन्धुरस्याः पै. ७. °यन् A,B[b], D,S[m],V. ८. सृजाति P. ९. सूर्यं पै १६,१०९,५. १०. यज्ञम° पै. ११. °मन्तरावि° पै.; °विशुदो° K[m].

वशा । यज्ञम् । प्रति । अगृह्णात् वशा । सूर्यम् । अधारयत् ।
वशायाम् । अन्तः । अविशत् । ओदनः । ब्रह्मणा । सह ॥ २५ ॥

वशामेवामृतमाहुर्वशां मृत्युमुपासते ।
वशेदं सर्वमभवद् देवा मनुष्याः असुराः पितर ऋषयः ॥ २६ ॥

वशाम् । एव । अमृतम् । आहुः । वशाम् । मृत्युम् । उप । आसते ।
वशा । इदम् । सर्वम् । अभवत् । देवाः । मनुष्याः । असुराः । पितरः । ऋषयः ॥ २६ ॥

य एवं विद्यात् स वशां प्रति गृह्णीयात् ।
तथा हि यज्ञः सर्वपाद् दुहे दात्रेऽनपस्फुरन् ॥ २७ ॥

यः । एवम् । विद्यात् । सः । वशाम् । प्रति । गृह्णीयात् ।
तथा । हि । यज्ञः । सर्वऽपात् । दुहे । दात्रे । अनपऽस्फुरन् ॥ २७ ॥

तिस्रो जिह्वा वरुणस्यान्तर्दीद्यत्यासनि ।
तासां या मध्ये राजति सा वशा दुष्प्रतिग्रहा[1] ॥ २८ ॥

तिस्रः । जिह्वाः । वरुणस्य । अन्तः । दीद्यति । आसनि ।
तासाम् । या । मध्ये । राजति । सा । वशा । दुःऽप्रतिग्रहा ॥ २८ ॥

चतुर्धा रेतो अभवद् वशायाः ।
आपस्तुरीयममृतं तुरीयं यज्ञस्तुरीयं पशवस्तुरीयम् ॥ २९ ॥

चतुःऽधा । रेतः । अभवत् । वशायाः ।
आपः । तुरीयम । अमृतम् । तुरीयम् । यज्ञः । तुरीयम् । पशवः । तुरीयम् ॥ २९ ॥

वशा द्यौर्वशा पृथिवी वशा विष्णुः प्रजापतिः ।
वशाया दुग्धमपिबन्त्साध्या वसवश्च ये ॥ ३० ॥

वशा । द्यौः । वशा । पृथिवी । वशा । विष्णुः । प्रजाऽपतिः ।
वशायाः । दुग्धम् । अपिबन् । साध्याः । वसवः । च । ये ॥ ३० ॥

---

1. दुःप्र° A,B[a],D,K,K[m],R,S[m],Cs,WM.

वशायां दुग्धं पीत्वा साध्या वसवश्च ये ।
ते वै[1] ब्रध्नस्य विष्टपि पयो अस्या[2] उपासते ॥ ३१ ॥

वशायाः । दुग्धम् । पीत्वा । साध्याः । वसवः । च । ये ।
ते । वै । ब्रध्नस्य[3] । विष्टपि । पयः । अस्याः । उप । आसते ॥ ३१ ॥

सोममेनामेके दुह्रे घृतमेक उपासते ।
य एवं विदुषे वशां ददुस्ते[4] गतास्त्रिदिवं दिवः ॥ ३२ ॥

सोमम् । एनाम् । एके । दुह्रे । घृतम् । एके । उप । आसते ।
ये[5] । एवम् । विदुषे । वशाम् । ददुः । ते । गताः । त्रिऽदिवम् । दिवः ॥ ३२ ॥

ब्राह्मणेभ्यो वशां दत्त्वा सर्वांल्लोकान्त्समश्नुते ।
ऋतं ह्यस्यामार्पितमपि[6] ब्रह्माथो तपः ॥ ३३ ॥

ब्राह्मणेभ्यः । वशाम् । दत्त्वा । सर्वान् । लोकान् । सम् । अश्नुते ।
ऋतम् । हि । अस्याम् । आर्पितम् । अपि । ब्रह्म । अथो इति । तपः ॥ ३३ ॥

वशां देवा उप जीवन्ति वशां मनुष्या उत ।
वशेदं सर्वमभवद् यावत् सूर्यो विपश्यति ॥ ३४ ॥

वशाम् । देवाः । उप । जीवन्ति । वशाम् । मनुष्याः । उत ।
वशा । इदम् । सर्वम् । अभवत् । यावत् । सूर्यः । विऽपश्यति ॥ ३४ ॥

इति पञ्चमेऽनुवाके द्वितीयं सूक्तम् ।

इति पञ्चमोऽनुवाकः ।

इति दशमं काण्डं समाप्तम् ।

---

1. इमे पै १६,११०,१. 2. पयोऽस्या पै. 3. ब्रुध्नस्य P. 4. ददुस्ते पै १६,११०,२. 5. यः P,P[a],J,V,Cp,WM. 6. °माहितमपि पै १६,११०,२.